89, 188, 212

॥ श्रीः ॥

# ...द्धान्तचन्द्रिका ।

(...पाणिनिप्रणीतव्याकरणसूत्रवृत्तिः )

...पंडितरामाश्रमप्रणीता ।

(...र्वार्धोत्तरार्धभागद्वयात्मिका )



...ज्ञानसदानन्दकृतया सुबोधिन्या, श्रीमे-
...लूनुपण्डितलोकेशकरकृतया तत्त्वदी-
पिकाख्यया व्याख्यया च सहिता ।



...रानिवासि पं. नन्दलालशास्त्रिणा
संशोधिता ।

---

सेयं

...राज श्रीकृष्णदास श्रेष्ठिना
मुम्बय्यां
...ीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालये
मुद्रयित्वा प्रकाशिता ।

संवत् १९६४, शके १८२९.

...ब्दिक २५ तम राजनियमानुसारेण स्वाधीने स्थापितोऽयं ग्रन्थः ।

# प्रास्ताविकं किंचित्—

नाङ्गीकृतव्याकरणौषधानामपाटवं वाचि सुगूढमास्ते ।
कस्मिंश्चिदुक्ते तु पदे कथंचित्स्वैरं वपुः स्विद्यति वेपते च ॥ १ ॥

जयति जगज्जालेऽस्मिन् आ गीर्वाणेभ्य उत चा जगद्गुरुवृत्तेः प्राक्तना श्रीमज्जयिनी गीर्वाणवाणी । तत्सिद्धौ चाद्यपर्यन्तं महान्त्यनन्तानि व्याकरणान्यकार्षुर्महर्षयो वैयाकरणाः । व्याकरणं नाम व्याक्रियन्ते सिद्धिं प्राप्यन्ते प्रकृतिप्रत्ययादिभिः शब्दा येन शास्त्रेण तत् । तत्र प्रसिद्धा व्याकरणशास्त्रकर्तारः—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥

एतेष्वष्टासु व्याकरणकर्तृरूपवर्यशाब्दिकेष्वेकतमः पाणिनिर्ऋषिः शिवप्रसादाल्लब्धाक्षरसमाम्नायोऽष्टाध्यायीसूत्रपाठादिभिर्व्याकरणं प्रणिनाय । तदेव कात्यायनेन पूर्तं भुजङ्गमभूपतिना महर्षिणा पतञ्जलिना व्याख्यातं च । अत एवेदं त्रिमुनिव्याकरणं लोके प्रचार्यते । तच्चास्माकमिदानीं प्रमाणम् । उक्तं च—

इति लौकिकवाक्येषु व्यभिचारोऽतिपुष्कलः । विशेषः पाणिनेरिष्टः
सामान्यमनुधार्यते ॥ सामान्यमनुगृह्णाति तत्राचार्यपरंपरा ॥

अत एव पाणिनीयव्याकरणे बहवो ग्रन्था अद्य समुल्लसन्ति । तस्य सामान्येन वाचनमपि शतवर्षमानेनायुष्येण न भवेदितीदं ज्ञात्वा श्रीमदनुभूतिस्वरूपाचार्यैरेतदुक्तव्याकरणसरणिसारभूतं सरस्वतीप्रसादतो लब्धं सप्तशतसूत्रात्मकं सारस्वतं नाम व्याकरणं वृत्त्यादिभिः विशदार्थकं विधाय लोकेष्वध्ययनाध्यापनेषु प्रचालितम् । तस्यापीदानींतनजनमनीषाकुंचनाल्लघुभाष्याकारानकुर्वन्महान्तः पाणिनीये महाभाष्यवत् । तत्र व्याकरणे यथा भट्टोजिदीक्षितप्रणीता वैयाकरणसिद्धांतकौमुदी तथैवात्र वाणीप्रणीतव्याकरणे तत्कुलतिलकश्रीरामाश्रमाचार्यकृता वैयाकरणसिद्धान्तचन्द्रिकाऽऽर्यावर्ते वरीवर्ति । यथा च तत्र सरलतया व्याख्यानं ज्ञानेन्द्रसरस्वतीकृतं तत्त्वबोधिनी तथैवात्र सुखानन्दकृतं सुबोधिनी । एतयैव साकं पूर्वमस्माभिः शिलाक्षरैः पुनःसीसकाक्षरैश्चाङ्किता सिद्धान्तचन्द्रिका लोकाश्रयपात्रीभूता संजाता । अतोऽन्यापि च काचिदध्ययनाध्यापनतत्त्वज्ञानकारिका टीका मुद्रणीयेति विचारयतामस्माकं तत्त्वदीपिकापुस्तकं काशीस्थं लेखनसंस्कारेण मुद्राशिलासंस्कारितमतीवाशुद्धं लब्धम् । तत एव महतायासेन शुद्धीकृत्य सिद्धान्तचन्द्रिकाधस्तात्सुबोधिन्या साकं च तत्रतत्र मुद्रिता तत्त्वदीपिका । अस्याः प्रणेता पण्डितो लोकप्रसिद्धो लोकेशकरषडागमनिपुण इति तद्व्याख्यातो ज्ञायत एव । अन्वर्थनाम्नी सुगमा सुबोधि[illegible] प्रसिद्धपूर्वैव तत्प्रणेता सदानन्दः सदानन्दः पण्डितोऽपि । एतस्य पुस्तकस्येत्थं मुद्र[illegible]याऽऽवृत्तिर्जाता ।

तथैवाधुना तृतीया[illegible]तेयं सिद्धान्तचन्द्रिका शास्त्रिद्वारा भूरिश्रमेण संशोध्य मुद्रिता सती [illegible] पूर्व[illegible]क्रयेऽपि सुबोधिन्या साकमङ्कितायाः सिद्धान्तचन्द्रिकाया यन्मूल्यं तदेव[illegible]टीकाद्वयोपेतायाः सुपुष्टस्वच्छपत्रेष्वङ्किताया इति प्रार्थयामः पण्डितानामाश्रयायेत्यलं प[illegible]शेषमतिमङ्गलम् ।

विद्वज्जनकृपाभिलाषी—

खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" मुद्रणालयः—मुंबई.

॥ श्रीः ॥

# सिद्धान्तचन्द्रिकापूर्वार्द्धस्थ–सूत्रादीनामकारादिवर्णक्रमः ।

पृष्ठाङ्काः सूत्रादि.



पृष्ठाङ्काः सूत्रादि.



पृष्ठाङ्काः सूत्रादि.

इति सिद्धान्तचन्द्रिकापूर्वार्द्धस्थसूत्रादीनामकारादिवर्णक्रमः समाप्तः॥



व
२३९






# सिद्धान्तचन्द्रिका ।

## सुबोधिनी-तत्त्वदीपिका-टीकाद्वयोपेता ।

## ( पूर्वार्द्धम् )

॥ श्रीगणेशाय नमः ॥ ॥ श्रीसरस्वत्यै नमः ॥

नमस्कृत्य महेशानं मतं बुद्ध्वा पतञ्जलेः ॥
वाणीप्रणीतसूत्राणां कुर्वे सिद्धान्तचन्द्रिकाम् ॥ १ ॥

सुबोधिनी-

पुराणपुरुषं ध्यात्वा नत्वा चार्हंतनायकम् ॥
सिद्धान्तचन्द्रिकावृत्तिं चर्करीमितरामहम् ॥ १ ॥
विद्यारत्नपयोनिधौ खरतराम्नाये जगत्पूज्यके
श्रीभट्टारकसंपदं गुणगणैः स्तुत्यां धरन्पुण्यवान् ॥
पूज्यश्रीजिनभक्तिसूरिरधिपो वर्वर्ति विद्यानिधिः
सोऽयं शीतकरायते च यशसा सूरायते तेजसा ॥ २ ॥
श्रीकीर्तिरत्नः सूर्यार्हो यतीन्द्रोऽभूत्तरां ततः ॥
श्रीमत्सुमतिरङ्गाख्यः पाठकप्रवरस्ततः ॥ ३ ॥
श्रीपाठकाः श्रीसुखलाभसंज्ञा जाग्रत्प्रभावा विलसत्प्रतिज्ञाः ॥
तच्छिष्यवर्याः कृतिराजिधुर्याः श्रीपाठकाः पाठकवारणेन्द्राः ॥ ४ ॥
श्रीभागचन्द्रा गणिसंप्रवर्हाः संवेगरङ्गांगनिमग्नगात्राः ॥
श्रीभक्तिपूर्वं विनयं हि येषां तन्नामधेयं गुरवो वदन्ति ॥ ५ ॥
तेषां हितेषां विनयप्रधानोऽनवद्यविद्याभ्यसनैकतानः ॥
प्राज्ञः सदानन्दगणिः सुशिष्यः सुबोधिनीं संविदधाति वृत्तिम् ॥ ६ ॥

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मंगलमाचरणीयमिति शिष्टाचारः । तत्र मंगलं त्रिविधम् । आशीर्वादात्मकं नमस्कारात्मकं वस्तुनिर्देशात्मकं चेति । अथ ग्रन्थादौ ग्रन्थ-

कर्ता रामाश्रमो नमस्कारात्मकं मंगलं शिष्यशिक्षायै निबध्नाति ॥ नमस्कृत्येति ॥ अहं सिद्धान्तचन्द्रिकांकुर्वे। प्रमाणेन प्राप्तोऽर्थः सिद्धान्तः। 'षिधू शास्त्रादौ' अस्माद्गत्यर्थादिति क्तः। सिद्धो निष्पन्नोऽन्तो निश्चयोऽत्रेति सिद्धान्तः। सिद्धान्ते चन्द्रिकेव चन्द्रिका शाकपार्थिवादित्वान्मध्यमपदलोपः सिद्धान्तचन्द्रिका ताम्। चन्द्रज्योतिरिव प्रकाशिकामित्यर्थः। सकलजनाह्लादकत्वसाम्येन चन्द्रिकाशब्दप्रयोगः। चन्द्रोऽस्त्यस्यामिति चन्द्रिका। 'अइकौ च मत्वर्थे' इति इकः। चन्द्रं कायति प्रतिपादयतीति वा चन्द्रिका। आतोडः। चन्द्रमाचष्टे इति वा चन्द्रिका। ण्यन्ताद्वुञ्। "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः॥ कुर्वे इति लट् उत्तमपुरुषस्यैकवचनम्। आख्यातप्रत्ययस्तु कर्तर्यस्ति। कर्तुराख्यातेनोक्तत्वादाख्यातवाच्यकारकवाचकः प्रथमान्तोऽहमिति कर्ता संगृह्यते। कुर्वे इत्यत्र य्वोर्विहसे इति दीर्घस्तु न भवति कुरुछुरोर्नेति निषेधात्॥ ननु करिष्यमाणायाश्चन्द्रिकायाः कथं कुर्वे इति वर्तमाननिर्देशः। उच्यते। वर्तमानसमीपे भूते भविष्यति चेति भविष्यदर्थे लट्। केषां सिद्धान्त इत्यतआह॥ वाणीप्रणीतसूत्राणामिति॥ वाण्या प्रणीतानि वाणीप्रणीतानि वाणीप्रणीतानि सूत्राणि वाणीप्रणीतसूत्राणि तेषाम्। 'वण शब्दे' पचाद्यः। वणो ब्रह्मा। 'देवतेदमर्थे' इत्यण्। ततो त्रण ईबितीप। वाणी। वाणयति प्रेरयति जीवानिति ण्यन्तात्पचाद्यः। नदादेरितीब्वा नियः कर्मणि क्तः। 'सूत्र वेष्टने' चुरादिः। सूत्रयन्ति बहूनर्थानल्पाक्षरैरिति सूत्राणि। पचाद्यः। "गीर्वाग्वाणी सरस्वती"इत्यमरः। किं कृत्वा। महेशानं नमस्कृत्य। महांश्चासावीशानश्चेति महेशानः शम्भुस्तम्। सहादित्वान्महच्छब्दस्य महादेशः। ईष्टे इतीशानः। कर्तरि शानः॥ नमस्कृत्येति॥ पूर्वकाले क्त्वेति क्त्वास्थाने समासे क्यबिति भावे क्यप्। वाचस्पत्यादित्वाद्विसर्गस्य सः। अनुक्तत्वात्कर्मणि द्वितीया। महेशानमिति एककर्तृकयोर्द्वयोः कृत्ययोः कर्तरि प्रथमास्ति। विशेष्यया आख्यातक्रियया कर्तुरुक्तत्वात् 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायादाख्यातक्रियया कर्तुरभिसंबंधः॥ ननु महेशानमित्यत्र 'नमआदियोगे' इति चतुर्थी स्यात्। मैवं वद। नमस्करोति देवानित्यत्रेव द्वितीयैव युक्ता। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इत्युक्तत्वात्। स्वयंभुवे नमस्कृत्येत्यत्र तु स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां 'तुमोऽप्रयुक्तस्य कर्मणि' इत्यनेन चतुर्थी। किं च जहत्स्वार्थावृत्तिपक्षे नमःशब्दस्यात्र निरर्थकत्वान्नमोयोगे चतुर्थी न भवति 'अर्थवद्ग्रहणे नानर्थकस्यग्रहणम्' इत्युक्तत्वात्। पुनः किं कृत्वा। पतञ्जलेर्मतं बुद्ध्वा ज्ञात्वा। पतञ्जलिना मन्यते यत्तन्मतम्। 'मतिबुद्धि' इति वर्तमाने कर्मणि क्तः। वर्तमानाधारार्थस्य क्तस्य इत्यनेन पतञ्जलेरिति कर्तरि षष्ठी। 'बुध अवगमने' भावे क्त्वाप्रत्ययः। पतंतोऽञ्जलयो यस्मिन् स पतञ्जलिः शेषनागः तस्य पतञ्जलेः। 'हलादेरीषादौ' इति टिलोपः। किं च "आसनं ब्रह्मणस्तस्य तपसामुत्तमं तपः॥ प्रथमं छंदसामंगमाहुर्व्याकरणं बुधाः॥ १॥ अर्थप्रवृत्तितत्त्वानां शब्दा एव निबंध-

नम् ॥ तत्त्वावबोधशब्दानां नास्ति व्याकरणादृते ॥ २ ॥" इत्युक्तत्वात्सर्वत उत्तमं व्याकरणम् । तद्व्याकरणं सूत्रं, सूत्रव्याख्यानं,वाक्याध्याहारः, उदाहरणं, प्रत्युदाहरणं, चेति समुदितं भवति । तस्यैकदेशः सूत्रम् । तद्व्याख्यानं पञ्चधा । यथा । "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चधा स्मृतमिति ॥१॥"

**तत्त्वदीपिका-**

**प्रणम्य जगतां नाथं महेशं साम्बमव्ययम् ॥**
**सिद्धान्तचंद्रिकाव्याख्या क्रियते तत्त्वदीपिका ॥ १ ॥**

प्रारिप्सितनिरन्तरायपरिसमाप्तये विहितं मङ्गलं शिष्याशिक्षायै निबध्नन् चिकीर्षितं प्रतिजानीते ॥ **नमस्कृत्ये**त्यादिना ॥ अहं रामचन्द्राश्रमः वाणीप्रणीतसूत्राणां सिद्धान्तचन्द्रिकां कुर्वे । किं कृत्वा । महेशानं नमस्कृत्य । पुनः पतञ्जलेर्मतं बुद्ध्वेत्यन्वयः । नमो नतिं कृत्वा इति नमस्कृत्य । 'कृञः समासे क्यप्' इति पूर्वकाले क्यप् । ह्रस्वस्येति तुक् । वाचस्पत्यादित्वाद्विसर्गस्य सः । नतिजन्यप्रीत्याश्रयत्वेन महेशानस्य कर्मत्वम् । ईष्टे इति ईशानः । ईश ऐश्वर्ये । शतृशानाविति शानप्रत्ययः । शिति चतुर्वदिति चतुर्वत्त्वादप्कर्तरीत्यप् । तस्यादादेरिति लुक् । ईशानाः सातिशयाः बहवः सन्ति तद्व्यावृत्त्यर्थं विशेषणं महांश्चासावीशानश्चेति महेशानः । सहादित्वान्महत आत्वम् । सर्वापेक्षयोत्तमो यः परमेश्वरस्तम् । अनेन व्याकरणस्य सिद्धान्तः सूचितः । ध्वनिविशेषावच्छिन्नं ब्रह्मैव प्रतिपाद्यमिति । मन्यते इति मतम् । मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने मन्यतेः कर्मणि तक् । इच्छाविषयभूतं ज्ञानविषयभूतं वा बुद्ध्वाज्ञात्वेत्यर्थः । बुध अवगमने । पूर्वकालेक्त्वा । पूर्वकालत्वं च क्त्वाक्यपोः कुर्वेक्रियापेक्षया । खले कपोतन्यायेन द्वयोस्तत्र संबन्धः । विशेषणानां परस्परं संबन्धानभ्युपगमात् आख्यातान्तवाच्यायाः क्रियाया विशेष्यत्वस्वीकारात् । पतञ्जलिर्यस्मिन् सर्वेषां नमस्कार्यत्वात् पतञ्जलिः तस्य पतञ्जलेरिति । मननक्रियापेक्षया कर्तृकार्ययोरिति कर्तरि षष्ठी । न क्तादाविति निषेधः क्तस्य स निषेधो न तु तकः । अनेन प्रक्रियामात्रं दृष्ट्वायं ग्रन्थो न दृष्यः किं तु भाष्यपर्यन्तं ज्ञात्वेति सूचितम् । वणति वेदशब्दमुच्चारयति इति वणो ब्रह्मा । 'वण शब्दे' पचाद्यः । तस्येयं शक्तिर्वाणी सरस्वती । 'देवतेदमर्थे' इत्यण् । त्रण ईप् । यद्वा वाणयति सर्वान् जीवान् शब्दोच्चारेण प्रेरयतीति । ण्यन्तात्पचाद्यः । नदादेरितीप् । प्रणीयन्ते इति प्रणीतानि । णीञः कर्मणि क्तः । वाण्या प्रणीतानि वाणीप्रणीतानि अमादाविति तत्पुरुषः । सीव्यन्तेऽन्तर्भाव्यन्ते त्वस्मिन्नर्था यैस्तानि सूत्राणि । षिवु तन्तुसंताने । सिवेरुच्चेत्यौणादिकत्रप्रत्ययः । यद्वा सूत्रयन्ति वेष्टयन्ति अल्पाक्षरैर्बहूनर्थानिति सूत्राणि । 'सूत्र वेष्टने' चुरादिः । पचाद्यः । अल्पाक्षरैर्बह्वर्थसूचकानि । वाणीप्रणीतानि च तानि सूत्राणि चेति कर्मधारयस्तेषाम् । संबन्धसामान्ये षष्ठी । कुर्वे इति कृञो वर्तमाने ञित्त्वादात्मनेपदम् । उत्तमपुरुषस्यैकवचनम् । तनादेरुप् । गुणः । ङित्यदुरित्युत्वम् । य्वोर्विहस इति दीर्घस्तु न संभवति संज्ञापूर्वकत्वात् । संज्ञापूर्वको विधिरनित्यः । द्विमात्रो दीर्घ इति संज्ञा । असेधीदिति सिद्धः । षिधू शास्त्रादौ । गत्यर्थेति क्तः । सिद्धो निष्पन्नोऽन्तो निश्चयोऽत्रेति सिद्धान्तः । अन्यार्थे बहुव्रीहिः । चन्द्रोऽस्त्याश्रयत्वेनास्या इति चन्द्रिका । अइकावितीकः । सिद्धान्तानां चन्द्रिका सिद्धा-

न्तचन्द्रिका । सा यथा कुमुदानां प्रकाशिका तथेयं सरस्वतीसूत्रार्थप्रकाशिकेति सादृश्याद्गौणप्रयोगः सिद्धान्तशब्दः संबन्धित्वात्सूत्राणामिति विशेषणसापेक्षोऽपि चन्द्रिकाशब्देन समस्यते । देवदत्तस्य गुरुकुलमित्यत्र गुरुशब्दो यथा । एतेन पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति नियमात्तत्रशब्दस्य कथं सिद्धान्तशब्देनान्वय इत्युक्तिः परास्ता । वस्तुतस्तु साकाङ्क्षत्वनिराकाङ्क्षत्वे एवान्वयानन्वयप्रयोजके न तु पदार्थतदेकदेशत्वे । ननु नमस्कृत्य महेशानमित्यत्र नम आदियोगे चतुर्थीति सूत्रेण चतुर्थ्या भवितव्यमिति चेन्न उपपदविभक्तेः कारकविभक्तिर्बलीयसीति वचनात् द्वितीयैव । अथ कथं स्वयंभुवे नमस्कृत्येति चतुर्थीति चेत्स्वयंभुवमनुकूलयितुमित्यर्थे तुमोऽप्रयुक्तस्य कर्मणीति कर्मणि चतुर्थीदर्शनादित्यवेहि । यत्तु कुर्वे इत्यत्र आत्मगामिफलाभावात्कथमात्मनेपदमित्याशङ्क्य ग्रन्थकरणोत्पन्नपुण्यस्य दानफलवदात्मगामित्वादात्मनेपदमिति समाहितं तन्न आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्फलं परस्मैपदमित्यस्यासार्वत्रिकत्वात् । तथा च मयूरभट्टः । 'कमलवनोद्घाटनं कुर्वते ये ।' मयूखा इति शेषः । कमलवनोद्घाटनरूपफलस्य कर्तृभूतमयूखागामित्वेऽपि कुर्वत इत्यात्मनेपदमुदाजहार ॥ १ ॥

# अथ संज्ञाप्रकरणम् ।

**अइउऋऌसमानाः॥अनेन क्रमेणैते वर्णा ज्ञेयाः । ते च समानसंज्ञाः स्युः ॥ नैतेषु सूत्रेषु संधिरनुसंधेयोऽविवक्षितत्वात् । विवक्षितस्तु संधिर्भवतीति नियमात् ॥**

( सुबोधिनी )–अइउऋऌसमानाः ॥ संज्ञासूत्रमिदम् । आद्यन्ताभ्यामित्यनेन संज्ञाविधायकसूत्रेण सहैकवाक्यत्वात् । तेनावेल इत्यादिप्रत्याहारसंज्ञा सिध्यति । अत्राकारादिष्वर्थवत्सु सत्स्वपि स्वरूपग्रहणस्येष्टत्वेनार्थवत्त्वस्याविवक्षितत्वमस्ति । अर्थवत्त्वाभावान्न प्रातिपदिकसंज्ञा । प्रातिपदिकत्वाभावान्न स्यादिविभक्त्युत्पत्तिः । अविभक्तिकानां समासो न भवति पदानामेव समास इत्युक्तत्वात् । समासाभावाद्वाक्यमात्रतः सांकेतिकं षट्पदमिदं सूत्रम् ॥ ननु संधिः कथं न कृतः । उच्यते । वर्णानामसंदिग्धत्वेन बोधनायाविवक्षितत्वादेतेष्वसंधिः । उक्तं च । "संहितैकपदे नित्या नित्या धातूपसर्गयोः ॥ नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥" इति ॥ संहितात्र संधिः । एकमेव पदमित्येकपदम् । तत्र संहिता नित्या । यथा । देवौ ॥ धातूपसर्गयोरुभयोः संहिता नित्या । प्रेक्ष्यते ॥ समासे संहिता नित्या अवान्तरपदविभागाभावात् समासे ह्येकपदत्वात् । यथा । देवेन्द्रः ॥ सा संहिता वाक्ये विवक्षां वक्तुमिच्छामपेक्षते । यथा । 'हे रोहिणि त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि दुर्विनीतम् ।' इत्यादिषु विवक्षाधीना संहिता ज्ञेया । तेन वाक्ये विवक्षितः संधिर्भवति न त्वविवक्षित इति ॥ स्वराणां चादिषु पाठान्निपातसंज्ञा । औनिपात इति प्रकृतिभावान्न संधिरित्यन्ये वदन्ति ॥ ननु वर्णात्कारः इत्यनेनैभ्यः कारप्रत्ययः कथं न स्यात् । उच्यते । वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्यसंभवान्न कारप्रत्ययः ॥ ननु अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां

लाभात्पृथगाकारादयो नोपदिष्टास्तथा ऋऌवर्णयोरपि सावर्ण्यात् ऋकारोपदेशेनैवोभयग्रहणसिद्धेः किं पृथगुपदेशः । उच्यते । ऋऌवर्णयोः सावर्ण्यस्यानित्यतां ज्ञापयितुमुभयोरुद्देशः । तत्फलं तु क्लृप्ता शिखा यस्य स क्लृप्तशिखस्तस्य दूरात्संबोधने क्लृप्तशिखेत्यत्र प्लुतभवनम् । ऋऌवर्णयोः सावर्ण्यस्य नित्यत्वे तु गुरोरनृतोऽनन्त्यस्यापीत्यत्रानृत इति निषेधादृकारस्येव ऌकारस्यापि प्लुतो न स्यादित्यर्थः । इदं सूत्रं कार्यद्वयं वक्ति । तत्किम् । अकारादिक्रमं तेषां समानसंज्ञां च । समानं मानं परिमाणं येषां ते समानाः समानशब्दः संज्ञा । अकारादयः संज्ञिन इति । इह प्रत्येकमकारादीनां संज्ञा न समुदायस्य तस्य युगपल्लक्ष्ये प्रयोगाभावात् । समानसंज्ञाप्रदेशाः समानाद्धेर्लोपो धातोरित्यादयः । किं च एतेषूक्तवक्ष्यमाणेषु सूत्रेषु संधिः संहिता नानुसंधेयो न कर्तव्यः । कस्मात् वक्तुमिच्छा विवक्षा विवक्षा जाताऽस्येति विवक्षितः । वक्तुमिष्टो विवक्षित इति वा । विवक्षितस्य भावो विवक्षितत्वं न विवक्षितत्वं अविवक्षितत्वं तस्मादविवक्षितत्वात् वक्तुरनिष्टत्वात् । तथाहि । वाक्ये तु सा विवक्षामपेक्षते इति ॥

( तत्त्वदी० )–प्रकृतोपयुक्तमाह ॥ **अइउऋऌसमानाः** ॥ अत्र प्राञ्चः । षट्पदमिदम् न तु द्विपदम् । द्विपदत्वे हि पूर्वपदं पञ्चवर्णात्मकम् । तथा च समाहारद्वन्द्वः । स च अश्च इश्च उश्च आ च आ च अइउऋऌ । एवं समासे संहिता स्यादिति । तथा चोक्तम् । "संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्यासमासे वाक्ये तु सा विवक्षामपेक्षते ॥" इति समासे वाक्यत्वाभावेन विवक्षाया असंभवादविवक्षितत्वादित्यादिकमनर्थकं संपद्येत । अतो न द्विपदमित्याहुः । वस्तुतस्तु नैतेषु संधिः सूत्रत्वादित्येव वक्तुमुचितम् । तथा च द्विपदत्वेऽपि न दोषः । उक्तं च । भोभगोअघोअपूर्वस्य योऽशीति पाणिनिसूत्रे असंधिः सौत्रः इति भट्टोजिदीक्षितैः । औ निपात इति सूत्रेण संधिविरहात् । अत्राहुः । अत्राकारादीनां स्वरूपेणानुकार्येण वार्थस्य सतोऽप्यविवक्षणान्नामत्वाभावाद्विभक्त्यनुत्पादादसमासेनैकपदत्वाभावात्पञ्चपदानीति । तत्रेदमवधेयम् । पञ्चपदानीति तावद्व्याहतम् । विभक्तेरनुत्पादेन पदत्वासंभवात् । विभक्त्यन्तं पदमिति पदसंज्ञाविधानात् । किं तु सूत्रत्वादेव विभक्तेर्लुक् । वर्णपरिगणनस्य संज्ञोपयोगित्वेन तत्पूर्वकं संज्ञाविधानमिति दर्शयति । **अनेने**ति ॥ अमि पूर्व इत्यादाविवार्थद्वयकथनेन विभागः ॥

**ह्रस्वदीर्घप्लुतभेदाः सवर्णाः** ॥ एतेषां ह्रस्वदीर्घप्लुताः सजातीयाः परस्परं सवर्णा भण्यन्ते ॥

( सुबोधिनी )–**ह्रस्वदीर्घप्लुतभेदाः सवर्णाः** ॥ एतेषाम् अइउऋऌवर्णानां ये भेदा विशेषव्यक्तयो ह्रस्वदीर्घप्लुतरूपाः सजातीयाः समाना चासौ जातिश्च सजातिः सहादित्वात्समानस्य सादेशः सजातौ भवाः सजातीयास्ते मिथः सवर्णसंज्ञका आचार्येण कथ्यन्ते ॥ ह्रस्वश्च दीर्घश्च प्लुतश्च ते ह्रस्वदीर्घप्लुताः ह्रस्वदीर्घप्लुताश्च ते भेदाश्च ह्रस्वदीर्घप्लुतभेदाः जातिस्थानाभ्यां समानाः वर्णाः । सहादित्वात्समानस्य सः ।

( तत्त्वदी० )—**ह्रस्वदीर्घप्लुतभेदा** इति ॥ ह्रस्वश्च दीर्घश्च प्लुतश्च तेषां ये भेदा उदात्तादयस्तेषां सवर्णसंज्ञा इत्यर्थः ॥ ह्रस्वादिभिर्भेदशब्दस्य कर्मधारयो वा । यत्तु वासुदेवेन ह्रस्वादिभेदान्तस्य द्वन्द्वं कृत्वा व्याख्यातम् । तदसत् । अनन्तरग्रहणस्य वैयर्थ्यप्रसंगात् ॥ **एतेषामिति** ॥ अनन्तरोक्तानाम् अइउऋऌवर्णानामेवांगुल्या निर्देशः । समानो वर्णो येषां ते सवर्णा इत्यन्वर्थसंज्ञाश्रयणात्सजातीया इति । तथा चाकारस्याकारेणैव सावर्ण्यं न तु विजातीयैरीकारादिभिरिति बोध्यम् ॥ ननु अन्वर्थसंज्ञाबलादेवात्र सवर्णसंज्ञासिद्धौ तद्विधायकं सूत्रं किमर्थमिति चेन्न । सन्ध्यक्षराणामप्यन्वर्थसंज्ञया सवर्णसंज्ञा स्यादिति तन्निरासार्थमिदं सूत्रम् । यदि त्वैऔ इति पृथङ्निर्देशो ज्ञापकस्तदिदं मन्दप्रयोजनम् ॥

## ऋऌवर्णौ च ॥ एकमात्रो ह्रस्वः। द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः ॥

( सुबोधिनी )—**ऋऌवर्णौ च** ॥ जातिस्थानाभ्यां भिन्नत्वेन सावर्ण्याप्राप्तौ विध्यर्थं वचनम् । पदान्तानां समानानामिति प्रकृतिभावः । एतावपि सवर्णसंज्ञकावाचार्येण कथ्येते । सवर्णसंज्ञाप्रदेशाः सवर्णे दीर्घः सहेत्यादयः ॥ तेषां भेदानाह ॥ **एकमात्रो ह्रस्व इति** ॥ मात्राशब्देनाऽक्षिस्पन्दनप्रमाणः काल उच्यते । "मात्रं त्ववधृतौ स्वार्थे कार्त्स्न्ये मात्रापरिच्छदे । अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे॥ काले वृत्ते च"इति हेमचन्द्रः । एका मात्रोच्चारणकालो यस्य स एकमात्रो ह्रस्वसंज्ञः कथ्यते । ह्रसति ह्रसते वा दीर्घापेक्षयेति ह्रस्वः ॥ **द्विमात्रो दीर्घः** ॥ द्वे मात्रे उच्चारणकालो यस्य स द्विमात्रो दीर्घसंज्ञः कथ्यते । दृणाति दीर्यते वा मुखमिति दीर्घः ॥ **त्रिमात्रः प्लुतः** ॥ तिस्रो मात्रा उच्चारणकालो यस्य स त्रिमात्रः प्लुतसंज्ञः कथ्यते। प्लवते लङ्घते ह्रस्वदीर्घाविति प्लुतः ॥

( तत्त्वदी०.)—**ऋऌवर्णावि**ति ॥ अ च आ च रलौ तौ च तौ वर्णाविति । यद्वा आ च ऌवर्णश्च तौ ॥ ननु ऋऌवर्णावित्यनेनैव ऋवर्णऌवर्णयोः सावर्ण्यादेव ऋकारोपदेशेनैव ऌकारोपदेशे सिद्धे 'अइउऋऌसमानाः' इति सूत्रे ऌकारग्रहणं व्यर्थमिति चेत्सत्यम् । ऋवर्णऌवर्णयोः सावर्ण्यस्यानित्यत्वज्ञापनाय पृथक् ऌकारग्रहणात् इत्यवधेयम् । तत्फलं तु 'हे३क्लृप्तशिख' इत्यत्र 'गुरोरनृतः' इत्यनेन प्लुतत्वे कर्तव्ये ऋकारपर्युदासेन ऌकारस्य न पर्युदासः । ह्रस्वादिसंज्ञाश्च लोकप्रसिद्धा इत्याह ॥ **एकमात्र** इति ॥ मीयते इति मात्रा उच्चारणकालः । एका मात्रा यस्येति विग्रहः । एवमन्यदपि ॥

## एऐओऔ संध्यक्षराणि ॥

( सुबोधिनी )—**एऐओऔ संध्यक्षराणि** ॥ पूर्वपदवाक्यत्वात्पञ्चपदमिदं सूत्रम् ॥ अत्रापिसंध्यभावोऽविवक्षितत्वात् । इदमपि कार्यद्वयं वक्ति । तत्किम् । एकारादिक्रमं संध्यक्षरसंज्ञां च । संधौ जातान्यक्षराणि सन्ध्यक्षराणि । संध्यक्षरसंज्ञाप्रदेशा संध्यक्षराणामित्यादयः ॥

( तत्त्वदी० )—**एऐओऔ संध्यक्षराणी**ति ॥ ननु सन्धेर्जातान्यक्षराणि सन्ध्यक्षराणीत्यन्वर्थसंज्ञाबलादेव सन्ध्यक्षरसंज्ञासिद्धौ तत्संज्ञाविधायकं सूत्रं व्यर्थमिति चेन्न । यकारादीनामपि संधिजत्वाविशेषेण सन्ध्यक्षरसंज्ञा स्यादिति तन्निरासार्थमिदं सूत्रम् । एषु च भागद्वयसत्त्वेऽपि नरसिंहवत्जा-

त्यन्तराक्रान्तत्वेन न भागकार्यम् । तेनाग्ने इदं वायो उदकमित्यत्र सवर्णदीर्घत्वं न । अत्र वर्णपरिगणन-संज्ञाविधानरूपकार्यद्वयस्य वृद्धकुमारीवरन्यायेन सिद्धेर्न वाक्यद्वयम् । एवं पूर्वसूत्रेऽपि बोध्यम् ॥

## उभये स्वराः ॥ अकारादय एकारादयश्च स्वरा उच्यन्ते ॥

( सुबोधिनी )—उभये स्वराः ॥ उभाववयवौ येषां ते उभये तयडयटौ संख्याया अवयवे इत्ययट् । "स्वरो नासासमीरे स्यान्मध्यमादित्रिकस्वरे । उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान् ॥" इत्याद्यकारादिभिन्नार्थान्तरवारणायेदम् । ह्रस्वदीर्घप्लुता भेदा विशेषव्यक्तयो येषां ते ह्रस्वदीर्घप्लुतभेदाः एतादृशा अकारादय एकारादयश्चाचार्येण स्वरसंज्ञकाः कथ्यन्ते । स्वयं राजन्ते शोभन्ते इति स्वराः । 'राजृ दीप्तौ' अस्मान्नाम्नीति डप्रत्ययः ।एकाकिनोऽपि प्रायोऽर्थप्रतिपादने समर्था इत्यर्थः ॥ स्वरा इति बहुवचनं तु प्रत्येकं संज्ञाविधानार्थं ज्ञेयम् ॥ ननु 'उभये' इति ग्रहणं व्यर्थम् । अकरादीनामेकारादीनां चानुवृत्त्यैव लब्धत्वात् । उच्यते । 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायोऽनेन ज्ञाप्यते । अनन्तरत्वादेकारादीनामेवानुवृत्तिः स्यात् न त्वकारादीनामन्तरितत्वादिति । स्वरसंज्ञाप्रदेशा 'इ यं स्वरे' इत्यादयः ॥

( तत्त्वदी० )—उभय इति ॥ ननु ते स्वरा इत्येव किमिति न सूत्रितम् तच्छब्दस्य पूर्वपरामर्शित्वेनाकारादीनामेव लाभादिति चेन्न अनन्तरोक्तसंध्यक्षराणामेव तच्छब्देन परामर्शः स्यादिति शङ्काया निवृत्तये उभयग्रहणस्यावश्यकत्वात् । यद्वा स्वरा इत्येवास्तु अकारादीनामनुवृत्त्यैव लाभादितिचेन्न उक्तयुक्तेः । यदि तूत्तरसूत्रेऽवर्णपर्युदासेनाकाराद्यनुवृत्तिस्तदोभयग्रहणे सर्वादिप्रयोजनार्थमेवेति ध्येयम् । बहुवचनं प्रत्येकंसंज्ञार्थमपि त्यक्तुमुचितं समुदायस्य युगपल्लक्ष्ये प्रयोगाभावादेव तल्लाभात् । एवं पूर्वोत्तरसूत्रेष्वपि बोध्यम् । यत्तु अकारादयः पञ्च चत्वार एकारादय इति तन्न अकारादिषु न्यूनाधिकसंख्याया असंभवेन तद्ग्रहणस्यानर्थकत्वात् ॥

## अवर्जा नामिनः ॥ अवर्णवर्जाः स्वरा नामिन उच्यन्ते ॥

(सुबोधिनी)—अवर्जा नामिनः ॥ अश्च आश्च तयोः समाहारः अमिति केचित्तन्मन्दम् । अइत्यनेनात्वजातेरेवाभिमतत्वात् । अवर्जयन्तीत्यवर्जाः । 'वृजि वर्जने' चुरादिः । अस्मात् कार्येऽणित्यणप्रत्ययः । पूर्वसूत्रादुभये इत्यनुवर्तनीयम् । अवर्णवर्जा उभये अकारादय एकारादयश्च स्वरा नामिसंज्ञका आचार्येण कथ्यन्ते ॥ नमनं नामः । भावे घञ् । नामो विद्यतेऽस्यास्तीति नामी । नामिसंज्ञाप्रदेशा नामिनो र इत्यादयः । किं च स ह्रस्वदीर्घप्लुतरूपः स्वरः प्रत्येकमुदात्तादिभेदन त्रिधास्ति । ह्रस्वस्वर उदात्तः १ ह्रस्वस्वरोऽनुदात्तः २ ह्रस्वस्वरः स्वरितः ३ । दीर्घस्वर उदात्तः १ दीर्घस्वरोऽनुदात्तः २ दीर्घस्वरः स्वरितः ३ । प्लुतस्वर उदात्तः १ प्लुतस्वरोऽनुदात्तः २ प्लुतस्वरः स्वरितः ३ । एवं नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकभेदाभ्यां पुनः स द्विधास्ति । तदित्थम् । अ इ उ ऋ एषां चतुर्णां वर्णानां प्रत्येकमष्टादशभेदाः सन्ति । ऌवर्णस्य द्वादश भेदास्तस्य

दीर्घाभावात् । संध्यक्षराणामपि प्रत्येकं द्वादश भेदास्तेषां ह्रस्वाभावात् । अ इत्यष्टादशानां संज्ञा । तथैवेकारोकारौ । ऋकारस्त्रिंशतः संज्ञा ऋऌवर्णयोः सावर्ण्यात् । एवम् ऌकारोऽपि । ए इति द्वादशानां संज्ञा । तथैकारोकारौकाराः । एदैतोरोदौतोश्च न मिथः सावर्ण्यं भिन्नजातित्वात् ॥

( तत्त्वदी० )–**अवर्जा नामिन** इति॥अं वर्जयन्तीत्यवर्जाः कार्येण ॥ ननु यौ नामिन इत्येव किमिति नोक्तमौनिपात इतिवत् इकारमारभ्य औकारान्तस्य प्रत्याहारेण ग्रहणादवर्णवर्जानां लाभात् । न च यकारौकारयोः संज्ञाशङ्कानिरासाय तदिति चेन्न । पूर्वसूत्रोक्तस्वरानुवृत्त्या तन्निरासात् इति चेत्सत्यम्। नामिसंज्ञायाः पूर्वं प्रत्याहारसंज्ञाया अनुक्तत्वेन यावित्येनेनेकाराद्यौकारान्तस्वरबोधस्यानुदयात् । यदि तु व्याकरणस्यानादितामाश्रित्य प्रत्याहारादिसिद्धिस्तदैवमेव न्याय्यमित्यलं पल्लवितेन॥

**हयवरल ॥ ञणनङम ॥ झढधघभ ॥ जडदगब ॥ खफछठथ ॥ चटतकप ॥ शषस ॥**

( सुबोधिनी )–हयवरल १ ञणनङम २ झढधघभ ३ जडदगब ४ खफछठथ ५ चटतकप ६ शषस ७ एतेऽपि वर्णा उक्तक्रमेणैव ज्ञेयाः । अन्यथा प्रत्याहारासिद्धेः । एतानि नव संज्ञासूत्राणि सन्ति । आद्यन्ताभ्यामित्यनेनैकवाक्यत्वात् । एषां वर्णानामर्थस्याविवक्षितत्वादेभ्यो विभक्तेरनुत्पत्तिर्ज्ञेया । किं च सवर्णा इत्यनुवर्त्य वाक्यभेदेन व्याख्यातव्यम् । तद्यथा । भिन्नजातीया अप्येते वर्णास्तुल्यस्थानप्रयत्नाः सन्तः सवर्णा आचार्येण कथ्यन्ते इत्यर्थः॥ हकारादिष्वकार उच्चारणार्थः न तु प्रयोजनार्थः ॥ ननु रेफस्य यपप्रत्याहारान्तर्भावात् कुण्डं रथेनेत्यादौ वा पदान्तस्येति पक्षे रेफः स्यात् । भद्रह्रद इत्यत्र च रहाद्यपो द्विरिति द्वित्वम् । उच्यते । भद्रह्रद इत्यत्र रहाद्यपो द्विरित्यनेन रस्य द्वित्वे कृते रिलोपो दीर्घश्चेति रलोपे च पूर्वस्य हकारस्य स्वरत्वाभावान्न दीर्घ इति । कुण्डं रथेनेत्यत्र त्वनुनासिकस्यानुस्वारस्य स्थानेऽनुनासिका एव यमा भवन्ति इत्यर्थकथनात् रेफस्याननुनासिकत्वादननुनासिकस्यानुस्वारस्य रकारो न भवतीत्यर्थः ॥

( तत्त्वदी० )–**हयवरलेत्यादि** ॥ हकारादिष्वकार उच्चारणार्थः ॥

**आद्यन्ताभ्याम् ॥ आद्यन्तौ वर्णौ मध्यगानामाभ्यां सहितानां संज्ञाः स्युः ॥ अव इल जब झभ चप । एवमन्येऽपि ॥**

( सुबोधिनी )–आद्यन्ताभ्याम् ॥ संज्ञासूत्रमेतत् । आदिश्च अन्तश्च आद्यन्तौ ताभ्याम् आद्यन्ताभ्यां कृत्वा मध्यस्था अक्षरा ग्राह्या इत्युक्तेः । अद्यन्तवर्णरूपा मध्यगानां संज्ञा भवतीत्याद्यन्तयोरप्राप्तायां तत्र वृत्त्यान्यतरस्य ग्रहणमाश्रित्य व्याख्येयम् । तद्यथा । आद्यन्ताभ्यां सहितानामिति । किं च आद्यन्तौ तावदवयवौ ताभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती संज्ञा मध्यगेषु विश्राम्यति न त्वाद्यन्तयोः । संज्ञास्वरूपान्तर्भावेन तयोः पारार्थ्यनिर्णयादित्याशये-

नाह ॥ **आभ्यां सहितानामिति** ॥ आद्यन्ताभ्यां वर्णाभ्यां सहितानां मध्यगानामाद्यन्तवर्णरूपाः संज्ञा भवन्तीत्यर्थः ॥ एतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्र स प्रत्याहारः । साधनाधारयोर्युडिति युटि प्राप्ते संज्ञायामकर्तरि चेति अधिकरणे घञ्प्रत्ययः ॥

( तत्त्वदी० )—**आद्यन्ताभ्या**मिति ॥ आदिश्च अन्तश्च आद्यन्तौ । आवादेशे वकारस्य 'व्योर्लोपश्' इति सूत्रस्य छन्दस्त्वात्पुनः संधिरित्यभिप्रेत्याह ॥ **आद्यन्तौ वर्णा**विति ॥ सांकेतिकं वा पदम् ॥

**कार्यायेत् ॥ कार्यं विधातुमुच्चार्यमाणो वर्ण इत्संज्ञो भवति ॥ या या संज्ञा सासा फलवती । यस्येत्संज्ञा तस्य लोपः ॥**

( सुबोधिनी )—**कार्यायेत्** ॥ वर्णानामाद्योच्चारणं द्विधा । कार्यार्थं श्रवणार्थं चेति। कार्यं विधातुं कर्तुमुच्चार्यमाण आचार्येण कथ्यमानो वर्ण इत्संज्ञकोऽस्ति ॥ क्रियते संपाद्यते तत्कार्यं प्रयोजनमित्यर्थः । कार्यार्थो यथा । ङेङसिङसूङीनां ङकारो ङिति, ङितां यडित्यादिकार्यार्थः । श्रवणार्थो यथा । हकारादिष्वकार इति । एति गच्छतीति इत् । आशुविनाशीत्यर्थः । तुमोऽप्रयुक्तस्य कर्मणीत्यनेन कार्यायेति चतुर्थी ॥

( तत्त्वदी० )—**कार्यायेदि**ति ॥ 'तुमोऽप्रयुक्तस्य कर्मणि' इति कर्मणि चतुर्थीत्याशयेनाह ॥ **कार्यं विधातु**मिति ॥ यत्तु प्रत्ययाद्यतिरिक्त इति प्रत्ययादयः प्रत्ययागमादेशास्तदतिरिक्त इति तद्विवरणं च तत्सर्वमापाततः । यत्तु प्रत्ययः परस्य बोधस्तदादिकारणमुत्तमवृद्धवाक्यप्रयोगस्तदतिरिक्त इति तदपि प्रकृतानुपयुक्तत्वादुपेक्षितम् । यद्याग्रहस्तदेत्थं योज्यः । प्रत्ययादिषु अतिरिक्तः लौकिक, सिद्धप्रयोगोच्चारणादाधिक इति कथंचित्प्राचो ग्रन्थः ॥ **यस्येदि**ति ॥ एति गच्छति प्रयोमेण समवैति 'इण् गतौ' अस्मात्क्विपि 'ह्रस्वस्य पिति कृति' इति तुक् । इत् । आशुविनाशीत्यर्थः । इदिति महासंज्ञाकरणादितो लोपः ॥

## ( प्रसक्तादर्शनं लोपः )

( सुबोधिनी )—**प्रसक्तादर्शनं लोपः** ॥ अदर्शनं सामान्यं लोप इत्यस्यार्थः । प्रसक्तानुच्चारणरूपविशेषस्तु लक्षणया ज्ञातव्यः । प्रसक्तस्य प्रसंगप्राप्तस्य वर्णस्यादर्शनमश्रवणमनुच्चारणं लोपसंज्ञं भवति ॥ लोपसंज्ञाप्रदेशाः हसेपः सेर्लोप इत्यादयः । लोपसंज्ञाफलं तु प्रत्ययलोपे प्रत्ययलक्षणम् न यातीति ॥ प्रसक्तस्येति किम् । दधि मध्वित्यादौ ह्रस्वस्य पिति कृति तुगिति तुक् मा भूत् । अस्ति हि तत्र क्विपोऽदर्शनम् । तत्र लोप इति प्रसक्तविशेषणाभावे प्रत्ययलक्षणेन तुक् स्यादेवेति ॥

( तत्त्वदी० )—लोपस्वरूपमाह ॥ **प्रसक्ते**ति ॥ प्रसक्तस्य प्राप्तस्यादर्शनमनुच्चारणं लोप इत्यर्थः ॥ प्रसक्तेति किम् । दधि अत्रापि क्विपोऽनुच्चारणस्य सत्त्वात्तस्य लोपत्वे प्रत्ययलक्षणेन तुक् प्रसज्येत ॥

## ( प्रत्ययादर्शनं लुक् )

( सुबोधिनी )—प्रत्ययादर्शनं लुक् ॥ प्रत्ययस्यादर्शनमश्रवणमनुच्चारणं लुक्संज्ञं भवति ॥ लुगिति पूर्वाचार्यसंज्ञा । लुक्संज्ञाप्रदेशाः 'नपुंसकात्स्यमोर्लुक्' इत्यादयः । लुक्संज्ञाफलं तु लुकि न तन्निमित्तमिति ॥

## ( वर्णविरोधो लोपश् )

(सुबोधिनी)—वर्णविरोधो लोपश्॥स्वानुच्चारणप्रवृत्त्यनन्तरं कार्यान्तरप्रवृत्तिप्रतिबन्धको वर्णविरोधो लोपश्संज्ञो भवति ॥ वर्णं विरुणद्धीति वर्णविरोधः लोपश्संज्ञाप्रदेशाः 'य्वोर्लोपश् वा पदान्ते' इत्यादयः । लोपश्संज्ञाफलं तु लोपशि पुनर्न संधिरिति । नस्य लोपशि न विभक्तिकार्यमिति च ॥

( तत्त्वदी० )—लोपश्स्वरूपमाह ॥ वर्णेति ॥ वर्णं विरुणद्धीति स तथा । स्वप्रवृत्त्यनन्तरं कार्यान्तरप्रवृत्तिप्रतिबन्धकरूपमुच्चारणमित्यर्थः ॥

## स्वरानन्तरिता हसाः संयोगः ॥

( सुबोधिनी )—स्वरानन्तरिता हसाः संयोगः ॥ अन्तर्मध्यमगुरित्यन्तरिताः नान्तरिता अनन्तरिताः स्वरा अनन्तारिता येषां ते स्वरानन्तरिताः । अथवा अन्तरमवकाशो जातो येषां तेऽन्तरिताः तद्भिन्ना अनन्तरिताः स्वरैरनन्तरिताः अव्यवहिताः स्वरानन्तरिताः । स्वररहितानां हसानां संयोगसंज्ञा भवतीत्यर्थः ॥ संयुज्यन्तेऽस्मिन् समुदाये हसा इति संयोगः । तेनात्र समुदाये वाक्यपरिसमाप्तिर्न तु गुणवृद्ध्यादिसंज्ञावत् प्रत्येकम् । यदि प्रत्येकं स्यात्तर्हि दृषद्भिर्भर्तोत्यत्र बकारसंनिधौ दकारस्य संयोगत्वात् संयोगान्तस्य लोपः स्यात् । स्वरानन्तारिता इति किम् ॥ पनसमित्यत्राकारेण व्यवधानेऽपि सकारमकारयोः संयोगसंज्ञा स्यात्तदा स्कोराद्योश्चेत्यनेन सस्य लोपः स्यादिति । हसा इति बहुवचनं तेन द्वयोरपि संयोगसंज्ञास्ति । अतः 'शिक्ष शिक्षणे' अस्माद् गुरोर्हसादित्यङ्प्रत्यये शिक्षेति सिद्ध्यति ॥

( तत्त्वदी० )—स्वरानन्तरिताइति ॥ अन्तरम् इतः अन्तारितः न अन्तारितः अनन्तारितः स्वरोऽनन्तरितो येषां ते । अत्र स्वरशब्द इति शब्दश्च व्यर्थः अनन्तरा इत्यनेनैव तद्बोधात् । तथाहि । न अन्तरं छिद्रं येषां ते हसाः संयोगः । छिद्रं तु विजातीयस्वरस्य प्रवेशेन भवति । संयोग इत्येकवचनं तु वृक्षा वनमिति तत्समुदायस्य संज्ञालाभार्थम् ॥

## कुचुटुतुपुवर्गाः ॥

( सुबोधिनी )—कुचुटुतुपुवर्गाः ॥ एषूकार 'उदित्'सवर्णं गृह्णाति न तु वर्णमात्रम् इति परिभाषाज्ञापनार्थः । अस्यार्थस्त्वयम् । उत् उकार इत् यस्य स उदित् स्वसवर्णस्य ग्राहका भवति । तेन चोः कुरित्युक्ते पञ्चानां ग्रहणमस्ति ॥ ननु कादीनां पञ्चानां सव-

र्णसंज्ञा केनेति चेच्छृणु अस्मादेवोदित्करणात् ज्ञापकाज्जानीहि । त एते वर्गसंज्ञाः स्युः। वर्गसंज्ञाप्रयोजनं तु वर्ग्यो वर्ग्येण सवर्ण इति ॥

( तत्त्वदी० )–कुचुटुतुपु इति ॥ "अकारात्पञ्चमो वर्णस्तमाहुः पञ्चकग्रहे । उकारस्तत्र विख्यातो नान्यो भवितुमर्हति ॥"

**अरेदो नामिनो गुणः ॥ अर् ए ओ गुणसंज्ञकाः । ते च नामिस्थाने भवन्ति ॥**

( सुबोधिनी )–अरेदो नामिनो गुणः ॥ अर् च एच्च ओच्च एषां समाहारः अरेदो । समाहारस्यैकत्वादेकत्वे द्विगुद्वन्द्वाविति नपुंसकत्वेऽपि ह्रस्वो न भवत्यत्र 'संज्ञापूर्वको विधिरनित्यः' इत्युक्तत्वात् ॥ अर् ए ओ इति ॥ नामिन इति षष्ठ्यन्तमस्ति । नामिनः स्थाने गुणो भवतीत्यर्थः ॥ ननु गायति ग्लायतीत्यादौ संध्यक्षराणां गुणः स्यात् ॥ उच्यते । ऐकारोपदेशसामर्थ्यान्न भवति । अन्यथा एकारमेवोपदिशेत् । एकारस्यैकारस्य च सत्यसति वा गुणे विशेषो नास्ति । औकारान्तस्तु धातुर्नास्ति अस्तु वा औकारोपदेशसामर्थ्यान्न भविष्यतीति । न चैवमायादेशोऽपि न स्यादिति वाच्यम् । 'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' इति न्यायात् । गुणं प्रति हि ऐकारोपदेशोऽनर्थकः ग्ले इत्यस्यापि सुपठत्वात् । आयादेशस्य तु निमित्तमेवास्ति अतः परिशेषात् ऋवर्णेवर्णोवर्णानां स्थाने अर् ए ओ यथाक्रमं गुणसंज्ञका भवन्ति । तपरत्वं तु स्पष्टार्थमिति । गुणसंज्ञाप्रदेशाः गुणः, नूपः, इत्यादयः ॥

( तत्त्वदी० )–अरेदो नामिनो गुण इति ॥ विपरीतनिर्देशादकारावधिकास्त्रय एव नामिनो गृह्यन्ते । अत्र प्राञ्चः । नामिषु इउऋ इति त्रयाणामेव ग्रहणं लृकारस्य तु सावर्ण्यात् । अन्यथा गायतीत्यत्र गुणः स्यादित्याहुः । वस्तुतस्तु 'गै शब्दे' इत्यैकारोच्चारणसामर्थ्यादेव गुणो न। न च भवतीत्यादावपि गुणो न भवेदिति भ्रमितव्यं तस्य बभूवेत्यादिषु चरितार्थत्वात् ॥

**आरैऔ वृद्धिः ॥ आ आर् ऐ औ वृद्धिसंज्ञाः स्युः ॥**

( सुबोधिनी )–आरैऔ वृद्धिः ॥ आश्च आर् च ऐश्च औश्च एषां समाहारः आरैऔ समाहारस्यैकत्वादेकत्वे द्विगुद्वन्द्वाविति नपुंसकत्वेऽपि ह्रस्वो न संज्ञापूर्वकत्वेन तस्यानित्यत्वात् । समासेऽपि संहिताभावोऽत्र 'अइकौ च मत्वर्थे' इति लिङ्गात् । अथवा असमासेऽविभक्तिकोऽयं निर्देशः । तद्भिन्नत्वे सति तत्सदृशकरणमनुकरणम् । अनुकरणात् विभक्तिर्नास्तीति समासाभावाच्चत्वारि पदानि । एवमरेदो इत्यत्रापि त्रीणि पदानि । अकारस्य आ वृद्धिः । ऋवर्णस्य आर् वृद्धिः । इवर्णस्य एकारस्य चैकारो वृद्धिः । उवर्णस्य ओकारस्य च औवृद्धिः । एते वृद्धिसंज्ञकाः । वृद्धिसंज्ञायाः प्रदेशाः 'धातोर्नामिनः' इत्यादयः ॥

( तत्त्वदी० )—औरै औवृद्धिरिति ॥ ननु मास्तु वृद्धिसज्ञां आदिस्वरस्य ञ्णित्यारैऔ इति सूत्र्यताम् । तदेवोत्तरत्राप्यनुवर्त्यतामिति चेन्न संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येतदर्थं संज्ञाविधानम् । तत्फलं तु अभवीदित्यादौ पाक्षिको वृद्ध्यभाव इति ॥

**अन्त्यस्वरादिष्टिः ॥ अन्त्यो यः स्वरस्तदादिवर्णष्टिसंज्ञको भवति ॥**

( सुबोधिनी )—अन्त्यस्वरादिष्टिः॥ अन्ते भवोऽन्त्यः । ण्यः । अन्त्यश्चासौ स्वरश्चेत्यन्त्यस्वरः अन्त्यस्वर आदिर्यस्य सः अन्त्यस्वरादिः । स्वराणां मध्येऽन्त्यस्वर आदिर्यस्य समुदायस्य स टिसंज्ञो भवति ॥ यत्र तु तदादिरन्यो वर्णो नास्ति तत्र स्वरस्यैवान्त्यत्वं व्यपदेशिवद्भावेन भवति । यत्र चैक एव स्वरस्तत्रापि व्यपदेशिवद्भावादन्त्यत्वमस्ति । यथा त्यदादिषु । व्यपदेशिवद्भावस्तु लौकिको न्यायः । तथा यस्य बहवः पुत्रास्तस्य तास्मिन्तस्मिन् ज्येष्ठमध्यमकनिष्ठव्यपदेशोऽस्ति यस्य त्वेकः पुत्रस्तस्य ज्येष्ठादिव्यपदेशस्तस्मिन्नेवेति । टिसंज्ञाप्रदेशा यथा 'पथां टेः' इत्यादयः ॥ सोऽन्त्यस्वर आदिर्वर्णो यस्य स तदादिवर्ण इति ॥ .

( तत्त्वदी० )—अन्त्यस्वरादिरिति ॥ अन्त्यस्वर आदिर्यस्य स तथा । नन्वेवं हलीपेत्यादौ कथं टिसंज्ञाऽन्त्यस्वरस्यादित्वाभावादिति चेत्सत्यम् । व्यपदेशिवद्भावेनेति गृहाण ॥

**अन्त्यात्पूर्व उपधा ॥ अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञो भवति ॥**

( सुबोधिनी )—अन्त्यात्पूर्व उपधा ॥ अन्ते भवोऽन्त्यस्तस्माद् अन्त्याद्वर्णात्पूर्वो वर्ण उपधासंज्ञोऽस्ति ॥ वर्ण इति कस्मात् लब्धं न्यायात् । तद्यथा अवध्यवधिमद्भावः सजातीयानामेव भवतीत्युत्सर्गः । लोके हि अमीषां ब्राह्मणानामन्त्यात्पूर्वमानयेत्युक्ते एक एवान्त्यादव्यवहितपूर्व आनीयते न तु समुदायः तथेहापि वर्णादव्यवहितः पूर्वो वर्ण एव संज्ञी न तु समुदाय इति । उपाधासंज्ञाप्रदेशाः 'नोपधायाः' इत्यादयः ॥

( तत्त्वदी० ) अन्त्यात्पूर्व उपधेति ॥ ननु वर्णादिति सूत्रे अनुक्तं कस्माल्लब्धमिति चेन्न पराण्यादिति ज्ञापकाद्गृहाण । अन्त्यादुपधेत्युक्तेऽपि पूर्वशब्दस्याक्षेपः संभवति न च परशब्दस्याक्षेपः संभवति इति वाच्यम् अन्त्यत्वभङ्गप्रसंगात् । न हि परस्मिन्वर्णे सति पूर्वस्य अन्त्यत्वं संभवति । एवं सिद्धे यत्पूर्वग्रहणं तदव्यवहितपूर्वस्यैव ग्रहणार्थम् ॥

**ह्रस्वो लघुः ।**

( सुबोधिनी )—ह्रस्वो लघुः ॥ ह्रस्वस्वरो लघुसंज्ञो भवति ॥ लघुसंज्ञाप्रदेशाः उपधाया लघोरित्यादयः ॥

**विसर्गानुस्वारसंयोगपरो गुरुर्दीर्घश्च ।**

( सुबोधिनी )—विसर्गानुस्वारसंयोगपरो गुरुर्दीर्घश्च ॥ विसर्गश्चानुस्वारश्च

संयोगश्च ते विसर्गानुस्वारसंयोगाः विसर्गानुस्वारसंयोगाः परे यस्माद्ध्रस्वात्स विसर्गानुस्वारसंयोगपरो ह्रस्वो गुरुसंज्ञः । दीर्घश्च गुरुसंज्ञः ॥

( तत्त्वदी० )–विसर्गेति ॥ विसर्गश्च अनुस्वारश्च संयोगश्च ते परे यस्य स तथा । वस्तुतस्तु विसर्गानुस्वारयोरत्रानुपयोगात्संयोगपर इत्येव वक्तुमुचितम् ॥

## मुखनासिकावचनोऽनुनासिकः ॥

( सुबोधिनी )–मुखनासिकावचनोऽनुनासिकः ॥ मुखेन सहिता नासिक मुखनासिका । शाकपार्थिवादित्वान्मध्यमपदलोपः । उच्यतेऽसाविति वचनः युट् ॥ मुखनासिकया वचनः यस्य स मुखनासिकावचनो वर्णोऽनुनासिकसंज्ञो भवति ॥

( तत्त्वदी० )–मुखनासिकेति ॥ मुखसहिता नासिका मुखनासिका । अन्यथा मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यात् । वस्तुतस्तु एकवद्भावेऽपि न क्षतिः आङः प्रश्लेषेण तथा सिद्धेः । मुखनासिकावचनमस्यास्तीति सः । तथा 'अर्शआद्यच्' इति अप्रत्ययः ॥

## विभक्त्यन्तं पदम् ॥

( सुबोधिनी )–विभक्त्यन्तं पदम् ॥ विभक्तिरन्ते यस्य तद्विभक्त्यन्तं पदसंज्ञमस्ति ॥ पद्यतेऽनेनेति पदम् । विभक्त्यन्तामित्यन्तग्रहणात् 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञाप्यते ॥

( तत्त्वदी० )–विभक्त्यन्तमिति ॥ विभक्तिरन्ते यस्य तत् ॥

## ( तपरः ) स्वसमानकालस्य सवर्णस्य ग्राहकः ॥

( सुबोधिनी )–तपरः ॥ स्वसमानकालस्य सवर्णस्य ग्राहकः । तकारः परो यस्मात्स तपरः । तकारात्परो यः स तपरश्चेति ॥ तत्रादिनोभयं विवक्षितम् । अत्र उच्चार्यमाणस्तपरः स्वसमानकालस्य सवर्णस्यैव संज्ञा भवति । स्वेनात्मना सह समानस्तुल्यकाल उच्चारणकालो यस्य स स्वसमानकालस्तस्येति । तेनादिदित्यादयः षण्णां षण्णां संज्ञा । ऌदिति द्वादशानां संज्ञा । ह्रस्वतपरस्तु ह्रस्वभेदानेव गृह्णाति । दीर्घतपरस्तु दीर्घभेदानेव गृह्णाति नान्यानित्यर्थः ॥

( तत्त्वदी० )–तपर इति ॥ तः परो यस्मात्तात्परश्च तपरः । यत्तु संध्युपयोगीति कैश्चिदुक्तं तन्न संधिभिन्नोपयोगितया संकोचे मानाभावात् । अथवा संधिपदमुपलक्षकम् ॥

**विरामोऽवसानम् ॥** वर्णानामभावोऽवसानसंज्ञः स्यात् ॥ इति संज्ञाप्रकरणम् ॥

( सुबोधिनी )–(कादयो मावसानाः स्पर्शाः ॥ ) लोकप्रसिद्धपाठापेक्षमिदं सूत्रे मावसानत्वायोगात् कादयः पञ्चविंशतिर्वर्णाः स्पर्शसंज्ञकाः सन्ति ॥ (ञमङणना अनुनासिकाः ॥ ) एते पञ्च वर्णा अनुनासिकसंज्ञकाः सन्ति । नासिकामनुगता

इत्यनुनासिकाः ॥ ( **यरलवा अन्तस्थाः** ॥ ) एते चत्वारो वर्णा अन्तस्थसंज्ञकाः सन्ति ॥ ( **शषसहा ऊष्माणः** ॥ ) एते चत्वारो वर्णा ऊष्मसंज्ञकाः सन्ति ॥ ( **ॅक इति ॅप इति कपाभ्यां खफाभ्यां प्रागर्द्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयसंज्ञकौ भवतः** ॥ ) अर्द्धविसर्गसादृश्यमुच्चारणे लेखने च बोध्यम् ॥ ( **अं इति अः इति स्वरात्परावनुस्वारविसर्गसंज्ञकौ भवतः** ॥ ) ( **अकुहविसर्जनीयानां कण्ठः** ॥ ) एषामष्टानां वर्णानामुत्पत्तेः स्थानं कण्ठोऽस्ति । द्वन्द्वसमासो बोध्यः सर्वत्र ॥ ( **इचुयशानां तालु** ॥ ) एषामष्टानामुत्पत्तेः स्थानं तालु भवति ॥ ( **उपूपध्मानीयानामोष्ठौ** ॥ ) एषां सप्तानामुत्पत्तेः स्थानमोष्ठौ भवतः ॥ ( **ऋटुरषाणां मूर्द्धा** ॥ ) एषामष्टानामुत्पत्तेः स्थानं मूर्द्धा मस्तकोऽस्ति ॥ ( **लृतुलसानां दन्ताः** ॥ ) एषामष्टानामुत्पत्तेः स्थानं दन्ताः सन्ति ॥ ( **एदैतोः कण्ठतालु** ॥ ) इत्यादौ तपरत्वमसंदेहार्थं न स्वसमानकालसवर्णग्रहणार्थम् ॥ तेन प्लुतस्यापि ग्रहणमत्र भवति । एकारैकारयोरुत्पत्तेः स्थानं कण्ठश्च तालु च कण्ठतालु भवति। प्राणितूर्यसेनाङ्गानामित्येकवद्भावः ॥ ( **ओदौतोः कण्ठोष्ठम्** ॥ )तपरत्वमसंदेहार्थम् । अनयोरुत्पत्तेः स्थानं कण्ठश्च ओष्ठौ च कण्ठोष्ठमस्ति । प्राण्यङ्गत्वादेकवद्भावः ॥ ( **वकारस्य दन्तोष्ठम्** ॥ ) वस्योत्पत्तेः स्थानं दन्ताश्च ओष्ठौ च दन्तोष्ठमस्ति । ओत्वोष्ठयोः समासे वेत्योकारः ॥ ( **जिह्वामूलीयस्य जिह्वामूलम्** ॥ ) जिह्वामूलीयवर्णस्य जिह्वाया मूलमुत्पत्तेः स्थानमस्ति ॥ ( **नासिकानुस्वारस्य** ॥ ) अनुस्वारस्योत्पत्तेः स्थानं नासिकास्ति ॥ "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । औरस्यं तं विजानीयाः कण्ठ्यमाहुरसंयुतम् ॥ " तं हकारमुरसि भवमुरस्यम् । भवार्थे ण्यः । णितो वेति न वृद्धिः ॥ त्वं विजानीयाः बुध्याः ॥ कीदृशं तम् । पञ्चमैर्ञमङणनैर्युक्तम् ॥ पुनः कीदृशं तम् । अन्तस्थाभिर्यरलवैः संयुतं मिलितम् ॥ पञ्चमैरसंयुतमन्तस्थाभिश्चासंयुक्तं हकारमाचार्याः कण्ठे भवं कण्ठ्यं कण्ठस्थानोद्भवमाहुर्ब्रुवन्ति ॥१॥ वर्णानामुत्पत्तेरष्टौ स्थानानि सन्ति । तद्यथा ॥ "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ॥ :जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ २ ॥ मातृकायामेवमनेन प्रकारेण द्विपञ्चाशद्वर्णा आचार्येणोदाहृता दर्शिताः । ते के । 'व्यञ्जनानि त्रयस्त्रिंशत्'इत्यादयः ॥ ३–४ ॥ इति **स्थानानि** ॥ प्रयत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आभ्यन्तरः पञ्चधा। तद्यथा । स्पर्शानां स्पृष्टं प्रयतनम् १ अन्तस्थानामीषत्स्पृष्टं प्रयतनम् । २ । स्वराणां विवृतं प्रयतनम् । ३ । ऊष्माणामीषद्विवृतं प्रयतनम् । ४ । ह्रस्वस्याकारस्य संवृतं प्रयतनम् । ५ । बाह्यस्त्वष्टधा । ॅक ॅप विसर्गशषसा विवारः श्वासोऽघोषश्च ३ प्रयत्नः॥हवानां संवारो नादो घोषश्च ६ प्रयत्नः

१ व्यञ्जनानि त्रयस्त्रिंशत्स्वराश्चैव चतुर्दश । अनुस्वारो विसर्गश्च जिह्वामूलीय एव च ॥ गजकुम्भाऽऽकृतिर्वर्णः प्लुतश्च परिकीर्तितः । एवं वर्णा द्विपञ्चाशन्मातृकायामुदाहृताः ॥

वर्गाणां प्रथमतृतीयमझमानामन्तस्थानां चाल्पप्राणः७प्रयत्नः॥वर्गाणां द्वितीयचतुर्थानामूष्मणां महाप्राणः ८ प्रयत्नः॥ इति प्रयत्नाः ॥ विरामोऽवसानम्॥ विरम्यतेऽनेनेति विरामः । बाहुलकात्करणे घञ् ।यदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते सोऽन्त्यवर्णो विरामोऽवसानसंज्ञको भवतीत्यर्थः॥ सम्यक् ज्ञायते शब्दादिव्यवहारो यया सा संज्ञा ॥ ॥ इति सुबोधिन्यां संज्ञाप्रकरणम् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । विहितायां हि टीकायां संज्ञासंधिरगात्सुखम् ॥

[ अथ परिभाषाः ] ( षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः ॥ ) स्थानषष्ठ्या निर्दिष्टस्य शब्दस्य य आदेश उच्यते स आदेशोऽन्त्यस्य वर्णस्य स्थाने भवतीत्यर्थः ॥ ऐ सख्युरित्यैकारः सखिशब्दस्यान्तस्येकारस्य भवति ॥ स्थानषष्ठीति किम् । कृत इति इडागमस्तृप्रत्ययस्य ऋवर्णात्पूर्वो मा भूदिति जश्शसोः शिरित्यादीनां शित्त्वं परिभाषां ज्ञापयति।तद्यथा। तत्र हि शित्त्वमन्त्यादेशं बाधित्वा सर्वादेशो यथा स्यादित्येतदर्थं कृतम् यदि षष्ठीनिर्दिष्टस्यादेशोऽन्त्यस्य न स्यात्तर्ह्यन्तरेणापि शित्त्वं सर्वादेशः सिद्धः किं तेनेति व्यर्थेन सता शित्त्वेन ज्ञापितेति ॥ ( ङिदन्तस्य वक्तव्यः ॥ ) ङिदादेशोऽप्यन्तस्य स्यात् ॥ गुरुः शिच्च सर्वस्येत्यस्यापवादोऽयम् ॥ 'त्रेरयङ्' इत्ययङ्ङादेशोऽन्त्यस्येकारस्य भवति । त्रयाणाम् अयङ् ।असुङ्ङादीनां ङित्त्वेन ज्ञापितेयम् । ङित्त्वस्य फलान्तरादर्शनात् ॥ ( गुरुः शिच्च सर्वस्य ॥ ) अनेकवर्ण आदेशः शिदादेशश्च सर्वस्य स्यात् ॥ षष्ठीनिर्दिष्टस्येत्यस्यापवादोऽयम् । अनटौसोरित्यनादेशस्त्रिवर्णात्मको गुरुरस्ति स सर्वस्येदमः स्थाने भवति । यथा अनेनेति ॥ जश्शसोः शिरिति शिदादेशः सर्वस्य जसः शसश्च स्थाने भवति । यथाः वारीणीति ॥ उच्चरितप्रध्वंसिनोऽनुबन्धाः स्मर्यमाणाः सन्त एव कार्यं निर्वाहयन्तीति ॥ ततः ( अनुबन्धकृतमनेकवर्णत्वं न स्वीक्रियते ॥ ) अत्र संध्यक्षराणि पराणीत्यादिनिर्देशेन शिदंशे ज्ञाप्यते इयं परिभाषा । तथा हि । जश्शसोः शिश्चेत् सर्वस्य न स्यात्तदोक्तनिर्देशोऽनुपपन्नः स्यादिति ॥ 'साधनाधारयोर्युट्'। 'कारकात्क्रियायुक्ते' इत्यादिनिर्देशेनानेकवर्णांशे ज्ञाप्यते इयम् ॥( टित्कितावाद्यन्तयोर्वक्तव्यौ ॥ ) टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ भवतः ॥ सिसतासीस्यपामिडितीट् स्यादीनामाद्यवयवो भवति ॥ अभविष्टेति । रातो ञ्णौ पुगिति पुक् आत इत्यस्यान्तावयवो भवति । यापयतीति । अन्यार्थटित्कित्स्वियं परिभाषा न प्रवर्तते । यथा । अटाविति टकारस्य ष्ट्विति इतीप् प्रयोजनमस्ति । कुरुचरीति । यक् चतुर्ष्विति ककारस्य गुणाप्रवृत्तिः प्रयोजनमस्ति। भूयते इति ।प्रत्ययविधौ नेयं प्रवर्तते इति । वा टिदंशे तस्मादित्यत्रात इति स्मट् । रः संख्याया इत्यत्र यट् । नवानामित्यत्र नुट् । किदंशे तु कार्यायेत्यत्र'ङे अक्' इत्यक्।ऐ सख्युरित्यत्र'ऋङ्ङे'इत्यृक् । वर्तमाने इत्यत्र मुगानेत इति मुगिमां परिभाषां ज्ञापयति ॥ ( मिदन्त्यात्स्वरात्परो वक्तव्यः ॥ ) स्वराणां मध्ये योऽन्त्यस्वरस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् ॥ नुमयम

इति नुमः पूर्वान्तत्वान्नोपधाया इति दीर्घः सिध्यति । कुलानि, यशांसीति । नुमः परादित्वे तु नोपधाया इति दीर्घो न स्यात् । वारिणे इत्यादौ ङितीत्येकारश्च स्यादिति । अस्याः संध्यक्षराणीति निर्देशो ज्ञापकः ॥ ( **सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्यैव वक्तव्यम् ॥** ) नियमार्थेयम् । 'इ यं स्वरे' इत्यत्र स्वरे इति भावे सप्तमी । अश्रूयमाणक्रियत्वाच्चान्तरङ्गस्यास्त्यर्थस्य लाभो भवति । तेन स्वरे सति यकारो भवतीत्यर्थः ॥ व्यवहितेऽव्यवहिते च प्राप्तमव्यवहिते एवेति पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते ॥ पूर्वस्येति किम् । ननु इदमत्रेकारस्यमा भूत् ॥ अव्यवहितस्येति किम् । अग्निचिदत्रेत्यत्र सान्तरस्य मा भूत् । अस्याः प्वादेः नृणः लितुषादेः सखिपत्योरित्यादिनिर्देशो ज्ञापकः ( **पञ्चमीनिर्देशेन क्रियमाणं कार्यमव्यवहितस्य परस्य वक्तव्यम् ॥** ) उदः स्थास्तम्भोः सलोपः । इत्यत्रोद इति पञ्चमीनिर्देशेन क्रियमाणो लोपः सोऽव्यवहितस्य परस्य स्थास्तम्भोः सकारस्य भवति ॥ उत्थानम् उत्तम्भनमिति ॥ अव्यवहितस्येति किम् । उत्संस्थानम् उत्संस्तम्भनमित्यादौ मा भूत् ॥ परस्येति किम् । अस्था उदासने स्तम्भ उद्गच्छत्यत्र मा भूत् ॥ अस्या ज्ञापकः सनपुंसकं सधातुरित्यादिनिर्देशः ॥ तत्र हि सैषादिति विसर्गलोपः कृतोऽकृतो ज्ञाप्यते ॥ ( **ह्रस्वदीर्घप्लुतशब्दैर्यत्र स्वरो विधीयते तत्र स्वरेति षष्ठ्यन्तं पदमुपतिष्ठते ॥** ) षष्ठीनिर्दिष्टस्येत्यस्य नायमपवादः किं तु तच्छेष एव ॥ स्वरस्येति षष्ठ्यन्तं पदं सति संभवे सामानाधिकरण्येनैव संबध्यते न वैयधिकरण्येन । तेन नपुंसकस्येत्यत्र स्वरान्तस्यैव नाम्नो ह्रस्वो भवति । सोमपमिति । नेह सुवाक् ब्राह्मणकुलम् । स्वरान्तत्वाभावान्न ह्रस्व इत्यर्थः ॥ शमां दीर्घ इत्यत्र तु सामानाधिकरण्यस्यासंभवात् शमादीनां स्वरस्येति संबद्ध्यते । तेन शाम्यतीत्यादि सिद्धम् ॥ से दीर्घ इत्यत्र स्वरान्तस्य धातोर्दीर्घः । संजिगीषतीति । नेह । बीभित्सतीति ॥ दूरादाह्वाने टेः प्लुतः इत्यत्र सामानाधिकरण्यस्य संभवेऽपि टिग्रहणसामर्थ्यात् टेरवयवस्य स्वरस्य प्लुतो भवति । आयुष्मान् एधीन्द्रवर्मन् । ज्ञापकसिद्धेयम् । तथा हि । यजां यवराणाम् रुदादेश्चतुर्णामित्यत्र नामीति दीर्घस्य प्रवृत्त्यप्रवृत्तिभ्यां स्वरान्तेषु नामीति दीर्घो भवति न हसान्तेषु इति ज्ञापितम् ॥ एकदेशानुमितिद्वारा ह्रस्वप्लुतयोरप्येवम् ॥ ( **वर्णानां प्रसङ्गे सति सदृशतम आदेशो वक्तव्यः ॥** ) सादृश्यं चतुर्विधमस्ति स्थानार्थगुणप्रमाणभेदात् । स्थानतो यथा । दध्यानयेत्यत्र तालुस्थानस्येकारस्य तालुस्थानो यकारः ॥ अर्थतो यथा । रूपवती भार्या यस्येत्यत्र पुंवद्भेत्यनेन पूर्वपदस्य स्थानेऽतिदिश्यमानः ॥ पुंशब्दो रूपवत्त्ववाचिनो रूपवतो शब्दस्य स्थाने तदर्थवाची एव रूपवच्छब्दो भवतीत्यर्थः । गुणतो यथा वाग्घरिरित्यत्र घोषवतो नादवतो महाप्राणस्य संवारवतो हस्य तादृशो वर्गचतुर्थो घकारो भवतीत्यर्थः ॥ प्रमाणतो यथा । अमुम्, अमू, अमून् इत्यत्र मात्

इत्यनेन पूर्वपदस्य स्थाने ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उवर्णो भवतीत्यर्थः ॥ न्यायसिद्धेयम् । तथाहि । सभायामास्यतामित्युक्ते हि पण्डिताः पण्डितैः सहासते शूराः शूरैः कवयः कविभिर्न तु संकरेण । किं च गवां संघं प्रति गौर्धावति अश्वोऽश्वानामित्यादिव्यवस्था तिर्यक्ष्वपि दृश्यते ॥ ( **लोपशि पुनर्न संधिर्वक्तव्यः ॥** ) लोपशि कृते सति संधिर्न भवति ॥ यथा । त आगताः ॥ ( **नस्य लोपशि तु संधिर्वक्तव्यः ॥** ) श्वादेरिति निर्देशात् । यथा राजाश्वः ॥ ( **नस्य लोपशि न विभक्तिकार्यम् ॥** ) पश्चास्विति निर्देशात् ॥ किलात्वः स इति षत्वं तु भवत्येव तस्य वर्णमात्राश्रितत्वात् । यथा पथिषु । अस्याः ज्ञापक आचार उपमानात् अत उपधाया इत्यादिनिर्देशः ॥ ( **विशेषणं तदन्तस्य स्वस्य च रूपस्योपस्थापकं वक्तव्यम् ॥** ) अप्रधानमात्मान्तरस्य रूपस्य ग्राहकं भवति । स्वस्य रूपस्य चेत्यर्थः ॥ स्वराद् इत्यत्र धातोरिति विशेष्यं स्वरादिति विशेषणं तदन्तग्राहकं भवति ॥ स्वरान्ताद्धातोरप्रत्ययो भवतीति स्वस्य रूपस्य च ग्राहकं स्वररूपाद्धातोश्चाप्रत्यय इति ॥ चयः, अयः । अस्यां ज्ञापकोऽतिशये हसादेः अन्वये नाम्नामित्यादिनिर्देशः । न ह्यत्र तदन्तविधिं विना स्वराद् इति विधीयमानोऽप्रत्ययः शीङो भवेत् । स्वरग्रहणं विना च इधातोरप्रत्ययो न लभ्येतेति इयं परिभाषा ॥ ( **यदादेशस्तद्वद्भवति ॥** ) न तु वर्णमात्रविधौ आदेशे कृते स्वरूपभेदात् । स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते । आदेशः स्थानिवद्भवति । यथा लक्ष्म्यामित्यत्र ङेरामादेशे कृते तस्यामो ङित्त्वात् ङितामडित्यट् भवति । वर्णमात्रविधौ स्थानिवद्भावो न भवति । वर्णश्च स्थान्यवयव एवात्र गृह्यते । यश्च वर्णमात्रेण विधिः यश्च वर्णमात्रात् परस्य विधिर्यश्च वर्णमात्रं स विधिर्यस्य वर्णमात्रे विधिस्तत्र मा भूत् । तत्र वर्णमात्रेण विधौ यथा । व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवत्त्वेन विसर्गत्वमाश्रित्यावकुप्वन्तरेऽपीति णत्वं प्राप्तमिति तन्न भवति ॥ वर्णमात्रात्परस्य यथा । द्यौरित्यत्र दिव औरित्यौकारस्य स्थानिवत्त्वेन पन्था इत्यत्राऽऽसावित्याकारस्य स्थानिवत्त्वेन च हसत्वमाश्रित्य हसेप इति सिलोपो न भवतीति ॥ वर्णमात्रस्य विधौ यथा । द्युकाम इत्यत्र ऊरसे इत्युकारस्य स्थानिवत्त्वेन यवयोर्वसे हकारे च लोपो न भवतीति ॥ वर्णमात्रे विधौ यथा । क इष्ट इत्यत्र 'यज् देवपूजादौ' इति धातोः क्तप्रत्यये परतः संप्रसारणस्य स्थानिवत्त्वेन यकारमाश्रित्य 'हवे' इत्युकारो न भवतीति ॥ क्रियायां क्रियामित्यादिनिर्देशो ज्ञापकः ॥ इति परिभाषाः ॥

# अथ स्वरसन्धिः ।

**इ यं स्वरे ॥** इवर्णो यत्वमाप्यते स्वरे परे ॥

( सुबोधिनी )—इ यं स्वरे ॥ इत्यनेन इत्वजातिर्निर्दिश्यते न तु ह्रस्वव्यक्तिरेव । प्लुत इति निषेधसामर्थ्यात् । यमिति द्वितीयान्तं कर्म । तस्य योग्यत्वात् । प्राप्नोतीत्य-

स्याध्याहारः कर्तव्यः । इ इति क्लीबे कर्तृपदमस्ति । अथ यमिति प्रथमान्तं क्लीबे । अकार उच्चारणार्थः । तदा सत्तार्थवाचकं क्रियापदमध्याहार्यमिति । स्वरे इति किम् । दधि पश्य । स्थानी आदेशो निमित्तं चेति त्रयं सर्वत्र बोध्यम् ॥ किं च अर्थवद्ग्रहणे नानर्थकस्येति परिभाषया अस्यापत्यमिः स्त्री च ई इत्यत्रैव यकारः स्यात् न तु दध्यानयेत्यादौ । उच्यते । स्यादावित्यादिनिर्देशेन तस्यानित्यत्वज्ञापनान्न निषेधः । दध्यानयेत्यत्र नामिनः स्वरे इति नुम् न स्यादिस्वरत्वाभावात् । दध्य् इति स्थिते ॥

( तत्त्वदी० )–**इ यं स्वर** इति ॥ इश्च ईश्चेति समाहारद्वन्द्वे एकवद्भावे नपुंसकत्वे च इति । एतेन सांकेतिकत्वनिर्विभक्तिकत्वाद्युक्तिः परास्ता । ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण प्रदर्शनायोगात् । अर्थवद्ग्रहणेनानर्थकस्य इति परिभाषया केवलाया इव्यक्तेरेव ग्रहणं न तु दध्यादिस्थाया इति नाशङ्कनीयं स्यादावित्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् । यमिति भावप्रधानो निर्देशः द्व्येकयोरितिवत् इत्याशयेनाह ॥ **इवर्णो यत्वमापद्यत** इति ॥ ननु 'इ यं स्वरे' इत्यत्र इकारग्रहणं किमर्थमिति । उकारादीनां यत्ववारणायेति चेन्न उवमित्यादिसूत्रप्राबल्यात् । न च षडत्रेत्यादौ टकारादीनां यत्वनिषेधार्थं तदिति चेत् तत्रापि पूर्ववत् 'चपा अबे जबाः' इत्यादिसूत्रप्राबल्यात् । अथ पचतीत्यत्र चकारस्य तद्वारणायेति चेत् ङ्णो ह्रस्वात्, दीर्घात्, इति सूत्राभ्यां ह्रस्वदीर्घग्रहणमनुवर्त्य ह्रस्वदीर्घयोरेव यत्वविधानात् इति चेत्सत्यम् । चिनुह्यत्रेत्यादौ प्लुतस्यापि पक्षे यत्वविधानार्थमिग्रहणस्यावश्यकत्वात् दद्ध्यानयेत्यत्र स्यादिस्वरत्वाभावात् 'नामिनः स्वरे' इतिनुमागमो न । तद्धितस्वरत्वाभावात् यस्य लोप इति यस्य लोपोऽपि न । नन्वत्र संयोगान्तस्य लोपः इत्येनन यलोपः कथं न स्यादिति चेत्सत्यम् आसिद्धं बहिरङ्गमन्तरङ्गे इति न्यायेनान्तरङ्गं लोपं प्रति बहिरङ्गस्य यादेशस्य असिद्धत्वादिति गृहाण ॥

**हसेऽर्हे हसः ॥ स्वरात्परो रेफहकारवर्जितो हसो हसे परे अवसाने च वा द्विर्भवति ॥**

( सुबोधिनी )–हसेऽर्हे हसः ॥ र् च ह् च र्हौ न र्हौ यस्मिन् सोऽर्ह् अत्र संयोगान्तस्येति हलोपो न सभिन्नस्येति निषेधात् । रकारहकारभिन्नः स्वरात्परो हसो द्विर्वा स्यात् अवसाने हसे च ॥ स्वरादिति किम् । तस्मिन् स्नातः । हसि किम् । भवानत्र । हसः किम् । तितउच्छत्रम् । अर्हेति किम् । हर्य्यनुभवः । नह्यस्ति । अवसाने यथा । वाक्–वाग् । दध्य् इत्यत्र यकारस्य स्थानिवद्भावेन स्वरत्वमाश्रित्य हसेऽर्हे हस इति द्वित्वनिषेधो नाशङ्क्यो न तु वर्णमात्रविधाविति स्थानिवद्भावनिषेधात् ॥

( तत्त्वदी० )–**हसेऽर्हे हस** इति ॥ अत्र ङ्णो ह्रस्वात् इति पूर्वसूत्रात् ह्रस्वादित्यस्यानुवृत्तस्य च लक्षणया स्वपरत्वं बोध्यम् । यत्तु दात्रं पात्रमित्यादौ दीर्घाद्द्वित्वनिवृत्त्यर्थं ह्रस्वादित्येव वक्तुं योग्यमिति तन्न तत्र विकल्पेनैव तद्वारणसंभवात् । अत्र 'संयोगान्तस्य लोपः' इत्यनेन हलोपो न रात्सस्यैव लोप इति नियमात् । र् च ह् च र्हौ ताभ्यामन्यः स तथा । अस्वरेर्हस इति तु सुवचम् ॥

**झबे जबाः ॥** झसानां झबे परे जबा भवन्ति ॥

( सुबोधिनी )—झबे जबाः ॥ झसानां जबाः स्युर्झबे ॥ झसानामिति किम् गीर्भ्याम् ॥ झबे किम् ॥ खञ्जौ ॥ दध्ध्य इत्यत्रानेन धस्य दः ॥

( तत्त्वदी० )—झबे जबा इति ॥ यत्तु झभे जबा इति तन्न भृज्जते भृज्जतीत्यादावव्याप्तेः ॥

**वर्ग्यो वर्ग्येण सवर्णः ॥** स्वरहीनं परेण संयोज्यम् ॥ दद्ध्यानय ॥

( सुबोधिनी )—वर्ग्यो वर्ग्येण सवर्णः ॥ वर्गे भवो वर्ग्यो वर्णो वर्ग्येण वर्णेन सह सवर्णो भवतीत्युक्तत्वात् संयोगान्तस्येति यलोपे प्राप्ते अन्तःस्थानां प्रतिषेधो वाच्य इति असिद्धं बहिरङ्गम् इति परिभाषया वा यलोपाभावः ॥ स्वरेण हीनं स्वरहीनं व्यञ्जनं परेण वर्णेन सह संयुज्यते इत्यर्थः ॥

( तत्त्वदी० )—वर्ग्यो वर्ग्येणेत्यादि ॥ वर्गे भवो वर्ग्यः ॥

**( अपाद्यवला वा द्विर्वाच्याः )** दध्यानय ॥ द्वित्वं धस्यैव यस्यैव नोभयोरुभयोरपि । दध्यानयादिषु प्राज्ञैर्बोध्यं रूपचतुष्टयम् ॥

( सुबोधिनी )—अपाद्यवला वा द्विर्वाच्याः ॥ अपप्रत्याहारात्परा यवला वा द्विः स्युः ॥ धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ॥ इह धकारस्य द्वित्वे जबत्वे च कृते पुनर्दस्य द्वित्वं न भवति सकृच्छात्रं प्रवर्तते इत्युक्तत्वात् । अन्यथा द्वित्वानन्त्यापत्तिः ॥ द्धिधं द्धियम् १ एकधं द्धियम् २ द्धिधमेकयम् ३ एकधमेकयम् ४ । दद्ध्य्यानय १ दध्य्यानय २ दद्ध्यानय ३ दध्यानय ४ ॥

( तत्त्वदी० )—अपादिति ॥इति यकारस्य द्वित्वम् । तथा च धययोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ॥ यत्तु नरोत्तमः । वाणीप्रणीतसूत्राणामिति प्रतिज्ञाय तदतिरिक्तविधानेन प्रतिज्ञाभङ्ग इत्याशङ्क्यात्र रामो बभ्रामेत्युक्तवान् तत्स्वमतिभ्रमादेव । यतः पतञ्जलेर्मतं बुद्ध्वेत्युक्त्वा पतञ्जलिमतावबोधपूर्वकत्वेन पतञ्जलिमतानुसरणविशिष्टवाणीप्रणीतसूत्रसंबन्धिसिद्धान्तचन्द्रिकाकरणप्रतिज्ञाया उद्देश्यत्वेन प्रतिज्ञाभङ्गाभावात् ॥ तथा च "रामाभिप्रायमज्ञात्वा तदुक्तौ दूषणार्पणम् । चकारानवबोधेन स्वयं भ्रान्तो नरोत्तमः ॥ नरोत्तमतया तस्य न नाम विहितं बुधैः । तृणोत्तमतया किं तु रलयोरैक्यभावनात् ॥" -

**रहाद्यपो द्विः ॥** स्वरपूर्वाद्रेफात् हकाराच्च परो यपो वा द्विर्भवति ॥ जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् ॥ गौर्य्यत्र । नह्य्यस्ति । हर्य्यनुभवः । व्यवस्थितविभाषया शसस्यापि द्वित्वम् ॥ पार्श्श्वम् । पर्श्वा ड्वण् । सस्स्यं वष्र्मेत्यादौ ॥

( सुबोधिनी )—रहाद्यपो द्विः ॥ स्वरात्पराभ्यां रेफहकाराभ्यां परो यपो द्विर्वा स्यात् ॥ स्वरादिति किम् । किह्नुते ॥ ननु मद्रह्नद इत्यत्र स्वरात्परात् हकाराद्रेफस्यापि द्वित्वप्रसंगः स्यादिति चेन्न विशेषेण सामान्यस्य बाधात् । विशेषे हि रस्य निमित्तत्वं

सामान्ये तु कार्यित्वम् माठरकौण्डिन्यन्यायेन । तद्यथा । ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामिति ब्राह्मणभोजने निमित्तभूतयोस्तयोर्भोजनं बाध्यते । तद्वद्यपस्य द्विरुक्तौ निमित्तस्य द्वित्वं बाध्यते । व्यवस्थितविभाषया शसस्यापि द्वित्वम् । कुत्रचिद्भवति कुत्रचिन्न भवतीयं व्यवस्थितविभाषा । तया स्वरात्पराभ्यां रहाभ्यां परः शसो द्विः स्यादित्यर्थः ॥ पाश्र्श्वम् । वष्र्ष्म ॥

( तत्त्वदी० )–रहाद्यपो द्विरिति ॥ रश्च हश्चेति द्वन्द्वः । हकाराधिक्यं तु 'अचो रहाभ्यां द्वे' इति पाणिनिसूत्रानुसारात् ॥ मद्ह्रद इत्यादौ स्वरात्पराद्धात्परस्यापि रेफस्य न द्वित्वं माठरकौण्डिन्यन्यायेन तद्बाधात् । तद्यथा । ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामिति ब्राह्मणभोजने निमित्तभूतयोस्तयोर्भोजनं बाध्यते । एवमत्रापि यब्द्वित्वनिमित्तस्य रेफस्य न यपान्तर्गतत्वेन द्वित्वकार्यित्वात् । व्यवस्थितविभाषया शसस्यापि द्वित्वम् । पार्श्श्वंवर्ष्ष्मेत्यादौ । पर्शौ ड्वण् । णित्वाद्वृद्धिः । द्वित्वाट्टिलोपः ॥

**उ वम् ॥ मद्ध्व्त्र–मध्व्त्र–मद्ध्वत्र–मध्वत्र ॥ सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयम् ॥**

( सुबोधिनी )–उ वम् ॥ चपा अवे जबा इत्यतः प्राक् स्वरे इत्यनुवर्तते । सूत्रेषु यत्पदं न दृष्टं तत् पदमन्यत्सूत्रं सूत्रान्तरं तस्मात्सूत्रान्तरादनुवर्तनीयमित्युक्तत्वात् पूर्वसूत्राद् ग्रहणमनुवृत्तिः ॥ उ वत्वं प्राप्नोति स्वरे परे ॥ एवम् ऋरम् ऌलमत्रापि पूर्ववत्सर्वं व्याख्येयम् । धस्य द्वित्वं जवत्वं च । मद्ध्वत्र ॥

( तत्त्वदी० )–उ वमिति॥ वत्वमापद्यत इति पूर्ववत्॥ मध्वेति ॥ अत्रापि धकारवकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ॥

**ऋ रम् ॥ पित्त्रर्थः ॥ ऌ लम् ॥ लनुबंधः ॥**

( सुबोधिनी )–ऋ रम् । ऋ रत्वं प्राप्नोति स्वरे ॥ रत्वं तकारस्य द्वित्वम् ॥ पित्त्रर्थः ॥ ऌ लम् ॥ ऌ लत्वं प्राप्नोति स्वरे परे ॥

( तत्त्वदी० )–ऋरमित्यादिपूर्ववत् ॥ पित्त्रर्थ इति ॥ अत्रापि तकारस्य द्वित्वविकल्पाद्रूपद्वयम् ॥ ऌ लमिति ॥ लनुबन्ध इति ॥ ऌ अनुबन्धो यस्येति विग्रहः ॥

**ए अय् ॥ नयनम् ॥ ओ अव् ॥ भवनम् ॥**

( सुबोधिनी )–ए अय् ॥ एरय् स्यात्स्वरे ॥ ओ अव् ॥ ओरव् स्यात्स्वरे ॥

( तत्त्वदी० )–ए अयिति ॥ प्रथमान्तं पदद्वयमपि । एवमुत्तरसूत्रेऽपि ॥ नयनमिति ॥ 'णीञ् प्रापणे' इत्यस्माद्युटि 'युवोरनाकौ' इति अनादेशे । एवं भवनमपि भूधातोः ॥

**( गोरग्वा पदांते स्वरे ) टित्किताबाद्यंतयोर्वक्तव्यौ ॥ गोअग्रम गोग्रम् गवाग्रम् । पदांते किम् । गवि । स्वरे किम् । गोहितम् ॥**

( सुबोधिनी )—गोरग् वा पदान्ते स्वरे ॥ पदान्ते ओदन्तस्य गोरग् वा स्यात् स्वरे ॥ कित्वादन्ते ॥ पदान्ते किम् । गवि ॥ ओदन्तस्य किम् । चित्रग्वग्रम् ॥

( तत्त्वदी० )—गोरग्वेति ॥ पदान्ते किम् । गवि ॥ स्वरे किम् । गोहितम् ॥ तथा च पाणिनिसूत्रे 'अवङ् स्फोटायनस्य' इत्यत्र अकृस्फोटायनस्य इत्युचितम् अगागमे कृते सति 'एचोऽयवायावः' इत्यवादेशे गवाग्रमित्यादिरूपासिद्धेः ॥

**( इन्द्राक्षयोः परतो गोरङ्नित्यम् )** गवेन्द्रः । गवाक्षः ॥

( सुबोधिनी )—इन्द्राक्षयोः परतो गोरङ् नित्यम् ॥ पदान्ते ओदन्तस्य गोर्नित्यमङ् स्यात् इन्द्रेऽक्षे च परे ॥ गवां किरणानामक्षीव यः स गवाक्षः । टाडका इत्यप्रत्ययः । वातायने रूढोऽयम् । पुंस्त्वं लोकात् ॥

( तत्त्वदी० )—व्यवस्थितविभाषा चेयमित्याशयेनाह ॥ इन्द्राक्षयोः परत इति ॥

**ऐ आय् ॥ नायकः ॥ औ आव् ॥ पावकः ॥**

( सुबोधिनी )—ऐ आय् ॥ ऐराय् स्यात् स्वरे ॥ औ आव् ॥ औराव् स्यात् स्वरे ॥

( तत्त्वदी० )—नायकः पावक इत्यत्र णीञ्पूञ्धातुभ्यां तृवुणाविति वुणि णित्वाद्वृद्धौ अकादेशे च रूपासिद्धिः ॥

## ( क्वचित्स्वरवद्यकारः )

**गव्यूतिः स्त्री क्रोशयुगम् । अन्यत्र गोयूतिः ॥**

( सुबोधिनी )—क्वचित्स्वरवद्यकारः ॥ क्वचित्स्वरेण तुल्यं स्वरवद्यकारः स्यात् स्वरे परे ॥ यत्कार्यं स्वरे भवति तद्यकारे परेऽपीत्यर्थः ॥ तेन गव्यूतिः इत्यत्राध्वनः परिमाण एवाव् । "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः ॥ अध्वपरिमाणाभावे गोयूतिर्गवां मिश्रीभाव इत्यर्थः ॥ ननु गव्यूतिरित्यत्र य्वोर्लोपशित्यनेन वकारस्य लोपश्च कस्मान्न । उच्यते । व्यवस्थितविभाषाश्रयणात् संज्ञापूर्वकविधेरनित्यत्वाद्वा ॥

( तत्त्वदी० )—गव्यूतिरिति ॥ "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः ॥ य्वोर्लोपश् वा पदान्ते इत्यत्र व्यवस्थितविभाषायाः श्रयणात् गव्यूतिरित्यादौ वलोपो न ॥

**( क्षय्यं जय्यं शक्यार्थे )** क्षेतुं शक्यं क्षय्यं जेतुं शक्यं जय्यं सैन्यम् ॥ अन्यत्र क्षेयं पापम् । जेयं मनः ॥

( सुबोधिनी )—क्षय्यं जय्यं शक्यार्थे ॥ सामर्थ्यार्थे क्षय्यं जय्यमित्यत्राय् निपात्यते । क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् ॥ 'क्षि क्षये' 'जि जये' आभ्यां तव्यादयोऽर्हेऽर्थे विधौ शक्तौ चेति यः प्रत्ययः । शक्यार्थाभावे तु क्षेतुं योग्यं क्षेयं जेतुं योग्यं जेयम् । नात्राय् ॥

( तत्त्वदी० )–क्षय्यमित्यादि ॥ क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । क्षि क्षये । जि जये इत्यतः स्वराद्यः इति यप्रत्यये गुणे च क्षेयं जेयमिति ॥

**( क्रयार्थे प्रसारितं क्रय्यम् ) क्रेयमन्यत् ॥**

( सुबोधिनी )–**क्रयार्थे प्रसारितं क्रय्यम् ॥** द्रव्यविनिमयार्थेऽयं निपात्यते ॥ अत्र ग्राहका गृह्णीयुरिति बुद्धया हट्टे प्रसारितं वस्तु क्रय्यम् । द्रव्यविनिमयाभावे तु क्रेतुं योग्यं क्रेयं क्रयणार्हमित्यर्थः ॥ 'डुक्रीञ्, द्रव्यविनिमये' इत्यस्मात्तव्यादयोऽर्हेऽर्थे इति यः ॥

(तत्त्वदी० )–**क्रयार्थे प्रसारितं क्रय्य**मिति ॥ क्रेतारः क्रीणीयुरिति बुद्धया आपणे प्रसारितं क्रय्यं क्रेयमन्यत् क्रयणार्हमित्यर्थः ॥

**( अक्षादेरूहिन्यादावग्वक्तव्यः ) अक्षौहिणी सेना । प्रौढिः । स्वैरम । स्वैरी । स्वैरिणी ॥**

( सुबोधिनी )–**अक्षादेरूहिन्यादावग् वक्तव्यः ॥** अक्षादेरक् स्यादूहिन्यादौ परतः ॥ ऊहः समूहोऽस्त्यस्याः सा ऊहिनी अक्षाणामूहिनी अक्षौहिणी । परिमाणविशेषविशिष्टा सेना । संज्ञायां णत्वम् । "सा सेनाक्षौहिणी नाम खागाष्टैकद्विकै २१८७० र्गजैः । रथैश्चै २१८७० भाद्र्यैस्त्रिघ्नैः ६५६१० पञ्चघ्नैश्च पदातिभिः १०९३५० ॥ प्रमाणमिति ॥ प्रौढः । प्रौढिः । अर्थवद्ग्रहणे नानर्थकस्येति ऊढग्रहणे क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशस्तेन प्रोढवानत्र नाक् । स्वैरम् । स्वेन ईरितुं शीलमस्येति स्वैरी । णिन्यन्तः । अथवा ईरणमीरो घञन्तः । ततो मत्वर्थीय इनिः । स्वैरिणी ईबन्तः ॥

( तत्त्वदी० )–**अक्षादेरूहिन्यादा**विति ॥ अक्ष प्र स्व इत्यक्षादयः । ऊहिनी ईर ईरिणी ऊढ ऊढि ऊठ इत्यूहिन्यादयः । अग्विधिसामर्थ्यादादौ सवर्णदीर्घो न ॥ **अक्षौहिणी**ति ॥ सेनाविशेषस्य संज्ञा । तथा हि । "अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संयुक्तानि सहस्राणि गजानामेकविंशतिः ॥ २१८७० ॥ एवमेव रथानां तु संख्यानं कीर्तितं बुधैः २१८७० । पञ्चषष्टिसहस्राणि षट्शतानि दशैव तु ॥ संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरंगमैः ६५६१० । नृणां शतसहस्राणि सहस्राणि नवैव तु ॥ शतानि त्रीणि चान्यानि पञ्चाशत्तु पदातयः १०९३५० ॥" सप्ततिसहिताष्टशताधिकैकविंशतिसहस्राणि गजाः । इत्यन्त एव रथाः । दशोत्तरषट्शताधिकानि पञ्चषष्टिसहस्राणि अश्वाः । पञ्चाशदुत्तरशतत्रयसाहितं नवसहस्राधिकमेकलक्षं पदातय इत्यक्षौहिणीलक्षणम् ॥

**व्योर्लोपश् वा पदान्ते ॥** पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति ॥ त आगताः–तयागताः । पट इह–पटविह । हे सखयिति–हे सख इति । तस्मा इदम्–तस्मायिदम् । ता इह–ताविह ॥ लोपशि न संधिः । नलोपशि तु भवति छन्दसि च श्वादेरिति निर्देशात् ॥ दामोदरः । राजाश्वः ॥

( सुबोधिनी )—य्वोर्लोपश्च वा पदान्ते ॥ य् च व् च य्वौ तयोर्य्वोः । पदस्यान्तः पदान्तः । अन्तशब्दोऽवयववाची । पदं तु विभक्त्यन्तमेव गृह्यते । पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्तेः । पूर्वसूत्रेभ्योऽय् अव् आय् आव् इत्यनुवर्तते । अनुवृत्तं च षष्ठ्या विपरिणम्यते । पदान्ते स्थितानामयादीनां य्वोर्लोपश्च वा स्यात् ॥ दाम उदरे यस्य स दामोदरः । राज्ञोऽश्वः राजाश्वः । नाम्नो नलोपशिति लोपशिं कृतेऽपि पुनः संधिर्जातः । समासे नलोपशि तु भवतीत्युक्तत्वात् ॥ पदान्ते किम् । नायकः । पावकः ॥ अयादीनां किम् । दध्यानय । मध्वत्र ॥ ननु वृक्षं वाति वेति वा वृक्षवाः, वृक्षवीः । वा, गतिगन्धनयोः । वी, गतिव्याप्तिप्रजननादौ । आभ्यां क्विप्, वृक्षवां वृक्षव्यं वा करोतीति ञिर्डित्करणे इति ञिप्रत्यये टिलोपे च सति स धातुरिति धातुत्वम् । ततः क्विपि ञिलोपे च वृक्षव् इति । वृक्षव् इहेत्यादावव्रूपस्य सत्त्वात् वकारस्य लोपश्च कस्मान्न । उच्यते । अव् इति रूपस्य लाक्षणिकत्वान्न । अयादीनां रूपमव्युत्पन्नमेव ॥

( तत्त्वदी० )—य्वोर्लोपश्च वेति ॥ य् च व् च य्वौ तयोः । अनन्तरोक्तत्वादयादीनामेव यकारवकारौ गृह्येते इत्याशयेनाह ॥ **अयादीना**मिति ॥ अयादयश्च अय् आय् अव् आव् । पदस्यान्तः पदान्तः । अन्तशब्दोऽत्रयववाची । पदं च विभक्त्यन्तमेव । अयादयश्चैतत्सूत्रभाषिता एव गृह्यन्ते । तेन वृक्षं वातीति वृक्षवाः तं करोति ञिर्डित्करणे इति 'ञिप्रत्यये' टिलोपे च सति सधातुः इति धातुत्वम् । ततः क्विपि ञिलोपे च वृक्षविति भवति वृक्षविहेत्यत्र लोपो न ॥ पदान्ते किम् नयनम् ॥ **श्वा**रीति ॥ श्वा आदिर्यस्य सः श्वादिः तस्य । बहुव्रीहिरन्यार्थ इति समासे 'नाम्नो नो लोपशधौ' इति नलोपशि सवर्णे दीर्घः ॥

**एदोतोऽतः ॥ पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपश्च भवति ॥ तेऽत्र । पटोऽत्र ॥**

( सुबोधिनी )—एदोतोतः ॥ अयवोरपवादः । एच्च ओच्च तयोः समाहारः एदोत् तस्मात् एदोतः । तपरकरणं स्पष्टार्थम् । प्लुतव्यावृत्तिः प्लुत इत्यादिना बोध्या । तेन आगच्छाग्ने ३ अत्र तिष्ठ । एहि विष्णो ३ अत्र हविर्भुङ्क्ष्वेत्यादौ न संधिः । प्लुतस्य निषेधादिति ॥ पदान्ते एदोतः परस्यातो लोपश्च स्यात् ॥ पदान्ते किम् । नयनम् । भवनम् ॥ एदोतः किम् । तस्मै अन्नम् । तौ अत्र ॥ अतः किम् । ते आगताः ॥

( तत्त्वदी० )—एदोतोऽत इति एच्च ओच्च एदोत् तस्मात् । तपरकरणं सुखमुखोच्चारणार्थम् ॥ अत इति तपरकरणं दीर्घादिनिवृत्त्यर्थम् । तेन हरे आगच्छेत्यादौ लोपो न ॥ **तेऽत्रेति** ॥ अत्रापवादत्वाल्लोप एव न त्वयादयः ॥

**( गोर्वा ) तेन गोअजिनम्–गोजिनम्–गवाजिनम् ॥** पदान्ते ओदन्तात् गोशब्दात् परस्यातो लोपश्च पक्षे प्रकृतिभावश्च ॥

( सुबोधिनी )—गोर्वा ॥ पदान्ते किम् । चित्रग्वग्रम् ॥ पदान्ते किम् । गोः ॥ प्रकृतिभावे गो अजिनम् ॥ अल्लोपे गोजिनम् ॥ गोरग्वेत्यगागमे गवाजिनम् ॥

( तत्त्वदी० )–गोर्वेति ॥ गोशब्दादकारस्य लोपो वेत्यर्थः ॥ तेन गोजिनमित्यत्र रूपत्रयम् ॥

**सवर्णे दीर्घः सह ॥ समानस्य सवर्णे परे सह दीर्घो भवति ॥ दैत्यारिः । श्रद्धात्र । दधीह । भानूदयः । श्रीशः । होतॄकारः होतॄकारः ॥ "सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् । परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥"**

( सुबोधिनी ) **सवर्णे दीर्घः सह ॥** सवर्णशब्दस्य च ससंबन्धिकत्वात्सवर्णादिति लभ्यते । वर्णशब्दोऽक्षरेऽस्ति । "वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे ॥" इत्यभिधानात् ॥ सशब्देन तु समानशब्दो लक्ष्यते । नामैकदेशेनापि नामग्रहणस्य संमतत्वात् सगोत्रः सनामेत्यादाविव समानशब्दस्यादेशः स इति वा । ततः समानं च तद्वर्णं च सवर्णं तस्मात् । सवर्णसंज्ञकस्य सवर्णस्यात्र ग्रहणं नास्ति किं तु यौगिकस्य ग्रहणं तेन समानसंज्ञात्मको वर्णः समानशब्देन ग्राह्यो न तु तुल्यार्थकः ॥ समानसंज्ञकाद्वर्णात्सवर्णे परे सह दीर्घो भवतीत्यर्थः ॥ सहग्रहणं तूभयोः स्थानित्वलाभार्थं कृतम् । तच्च नामी इति यावदनुवर्तते ॥ ननु विना सहेत्यनेन सहशब्दयोगे तृतीया किं न स्यात् । उच्यते । उपपदविभक्तेः कारकविभक्तिर्बलीयसीत्युक्तत्वात् सहशब्दयोगे विधीयमाना तृतीयोपपदविभक्तिः सवर्णे इति सप्तमी तु भावे सामीपिकाधारे वा विहिता कारकविभक्तिः क्रियान्वयित्वात् क्रियापदं अध्याहृतं भवति नोयोगे। दीर्घ इत्यत्रान्योक्ते इत्यनेन प्रथमापि कारकविभक्तिः॥सवर्णे किम्॥दध्यत्र मध्वेतत् दधीह भानूदयः श्रीशः वधूपमेत्यादौ उकारे वकारादिप्राप्तिः सवर्णे दीर्घ इत्यस्य प्राप्तिश्चास्ति तत्र किं भवतीत्यत आह ॥ **सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्॥** नूनमित्यव्ययं निश्चये विचारे वा । बहुव्यापकं शास्त्रं सामान्यशास्त्रम् । शासनाच्छास्त्रं लक्षणं सूत्रमित्यर्थः ॥ तस्मादल्पव्यापको भवतीत्यर्थः ॥ यथा रामोऽत्रेत्यादौ लोपशोऽपवाद उत्वम् ॥सर्वस्मै इत्यादौ ङेरगित्यस्यापवादः स्मट् ॥ कार्येऽणित्युत्सर्गः आतो ड इत्यपवादः ॥ नुडागम इत्युत्सर्गः सुडागम इत्यपवादः ॥ एवं यत्ववत्वरत्वादिविधिरुत्सर्गः दीर्घविधिरपवादः ॥ पुनः परिहारान्तरमाह ॥ **परेण पूर्वबाधो वा ॥** वेति पक्षान्तरे । सूत्रपाठे परेण परपठितेन विधिना पूर्वबाधः क्रियते पूर्वपठितो विधिर्बाध्यत इत्यर्थः ॥इदं परिहारान्तरं च नित्यान्तरङ्गापवादव्यातिरिक्तस्थले एव द्रष्टव्यम् । तत्र नित्यं बाधकं आवश्यकत्वात् ॥ अन्तरङ्गं तु बाधकं लाघवात् । अपवादस्तु बाधको भवति वचनप्रामाण्यात् । नुमागम इआदेशयोः यथा प्रधीनीत्यादौ परेण नु य्वौ वेति यत्वं बाध्यते तथा दीर्घविधिना यत्वादिविधिर्बाध्यते॥ ननु वारीणां स्त्रीणामित्यादौ परत्वान्नुमियोः सतोर्नुडागमो न स्यादित्यत आह ॥ **प्रायशो दृश्यतामिह ॥** प्रायश इत्यव्ययं बाहुल्येऽर्थे । इह शास्त्रे पूर्वोक्तो न्यायो

१ सहयोगाभावादित्यर्थः ।

बाहुल्येन भवद्भिर्दृश्यतां ज्ञायतां न सर्वत्र । दृशिर्ज्ञापनार्थः । दृशिर्ज्ञानेऽक्षिण दर्शने इत्युक्तत्वात्। कर्मणि लोट । प्रायश इति कथनात् क्वचित्पूर्वेणापि परविधिर्बाध्यते इति दृश्यताम् । यथा स्त्रीणाम् वारीणामित्यादावियनुमौ परावपि पूर्वेण नुटा बाध्येते ॥

(तत्त्वदी० )—**सवर्णे दीर्घः सहेति** ॥ सवर्णशब्दस्य ससंबन्धिकत्वात्सवर्णस्येति लब्धम् । सवर्णसंज्ञा च समानस्यैव नान्यस्येति स्पष्टार्थम् ॥ **समानस्येति** ॥ सहयोगे तृतीया तु न उपपदविभक्तित्वात् । सप्तम्यास्तु सामीपिकाधारे विहितत्वात्कारकविभक्तित्वम् । दीर्घ इति प्रथमायाश्चाव्याहृतं भवति नायोगादन्योक्त इत्यनेन विहितत्वात्कारकविभक्तित्वम् ॥ उपपदविभक्तेः कारकविभक्तिर्बलीयसी इति वचनात् । सामान्यस्येति किम् । हरये ॥ **श्रद्धात्रेति** ॥ पर्जन्यवल्लक्षणप्रवृत्तिरिति दीर्घस्यापि दीर्घः ॥ 'यत्तु अदीर्घो दीर्घतां याति' इत्यादिकलापानुसारिभिरुक्तं तद्भाष्यविरोधादुपेक्ष्यम् । अलोलि दीर्घ इत्येव सुवचम् ॥ **सामान्यशास्त्रत** इत्यादि ॥ बहुव्यापकं सामान्यम् । अल्पव्यापको विशेषः ॥

**( हलादेरीषादौ टेर्लोपो वक्तव्यः )हलीषा।लाङ्गलीषा।मनीषा।अद्योम्। शकन्धुः।कर्कन्धुः । कुलटा । पटत् इति पटिति ॥ ( सारङ्गः पशुपक्षिणोः )—साराङ्गोऽन्यः ॥ ( सीमन्तः केशवेशे)—सीमान्तोऽन्यः ॥**

( सुबोधिनी )—**हलादेरीषादौ टेर्लोपो वक्तव्यः**॥हलादेष्टेर्लोपः स्यादीषादौ परे॥ 'ईष उञ्छे' 'ईष गत्यादिषु' च।आभ्यां गुरोर्हसादित्यङ्प्रत्यये ईषाशब्दः।हलस्य ईषा हलीषा। लाङ्गलदंडः । लाङ्गलस्य ईषा लांगलीषा॥मनसः ईषा मनीषा ॥ शकानां देशविशेषाणामन्धुः कूपः शकन्धुः॥कर्काणां राज्ञामन्धुः कर्कन्धुः॥अटतीत्यटा पचाद्यप्रत्ययः। कुलस्या टाकुलटा । यदा तु कुलमटतीति विगृह्येत तदा कार्येऽणित्यण्प्रत्यये ईपि च कुलटीति स्यात् ॥ अन्यस्मिन् अर्थे साराणि प्रधानान्यङ्गानि यस्य स साराङ्गः । टिलोपो न ॥ केशवेशे केशरचनायामर्थे टिलोपो भवति।सीमन्तः।अन्यस्मिन्नर्थे सीमाया अन्तः सवर्णे दीर्घः । सीम्नो अन्तः सीमान्त इति वा नाम्नोलो नोपाशिवि नलोपे कृते दीर्घोऽत्र । 'सीमसीमे स्त्रियामुभे' इत्यमरः ॥

( तत्त्वदी० )—**हलादेरिति** ॥ हलादेरीषादेश्च आकृतिगणत्वं बोध्यम् । तेन पतञ्जलिर्मार्तण्ड इत्यादिसिद्धम्॥ **हलीषेति**॥ 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः॥ **मनीषेति**॥ 'बुद्धिर्मनीषा धिषणा' इत्यपि च ॥ **शकन्धुरिति** ॥ शकानां देशविशेषाणामन्धुः कूप इत्यर्थ ॥ **सीमान्तोऽन्य** इति ॥ सीम्नः अन्तः सीमान्तः ॥

**ओत्वोष्ठयोः समासे वा॥ओऔ औ॥**अवर्णादोकारे औकारे च परे सह औकारो भवति ॥ **बिम्बोष्ठः**—बिम्बौष्ठः । **स्थूलोतुः**—स्थूलौतुः । समासे इति किम् । तवौष्ठः ॥

(सुबोधिनी)–**ओत्वोष्ठयोः समासे वा**।समासे अकारस्य लोपो वा स्यादोतुशब्दे ओष्ठशब्दे च परे ॥ बिम्बवदोष्ठौ यस्य स बिम्बोष्ठः । स्थूलश्चासौ ओतुश्च स्थूलोतुः । 'ओतुर्बिडालो मार्जारः' इत्यमरः ॥ एकस्मिन्समासे इदं प्रवर्तते । तेनेह न । हे वृषल-सुतौष्ठव्रणस्ते इति पक्षे औत्वम्॥**ओ औ औ**॥आद्यौ सप्तम्यन्तौ प्रथमान्तोऽन्त्यः ॥

( तत्त्वदी० )–**ओत्वोष्ठयो**रिति ॥ ओतुश्च ओष्ठश्च तौ तयोः । अत्र स्वराद्यदन्तत्वादोष्ठ-शब्दस्य पूर्वनिपाते न्याय्ये स्वराद्यदन्तम् इत्यस्यानित्यत्वज्ञापनायेदम् **स्थूलोतु**रिति ॥ स्थूलश्चासौ ओतुश्च स तथा । ओतुर्मार्जारः ॥ ननु वृषलसुतौष्ठव्रणस्ते इत्यत्र कथं न टिलोपः स्यादिति चेत्सत्यम् । ओत्वोष्ठयोश्चैकत्र समासे स्थिताविदं वोध्यम् ॥

**( एदोदादौ धातौ )** अवर्णान्तोपसर्गस्य लोपः ॥ प्रेजते । उपोषति ॥

( सुबोधिनी )–**एदोदादौ धातौ**॥अवर्णोऽन्ते यस्य स अवर्णान्तः अवर्णान्तश्चासौ उपसर्गश्च अवर्णान्तोपसर्गस्तस्य अवर्णान्तोपसर्गस्य लोपः स्यात् ॥ एच्च ओच्च एदोतौ एदोतावादौ यस्य स एदोदादिस्तस्मिन् एदोदादौ धातौ परे ॥ राजृ, दीप्तौ कम्पने च । कम्पनार्थस्तु परस्मैपदी प्रेजतीति । प्रेजते इति दीप्त्यर्थः ॥

( तत्त्वदी० )–**एदोदा**दाविति ॥ एच्च ओच्च एदोत् स आदिर्यस्य सः तथा तस्मिन् ॥ **प्रेजत** इति ॥ एजृ, दीप्तौ । न तु एजृ कम्पने भ्वादिः तस्य परस्मैपदित्वात् ॥ **उपोषती**ति ॥ उष, दाहे । एदोदादिकं च कृत्रिममकृत्रिमं च ग्राह्यं विशेषानुपादानात् एत्येधत्योरिति निषेधज्ञापनाच्च ॥

**( एदोदादौ नामधातौ वा )** उपेडकीयति-उपैडकीयति । प्रोघीय-ति-प्रौघीयति ॥

( सुबोधिनी )–**एदोदादौ नामधातौ वा** ॥ अवर्णान्तोपसर्गस्य वा लोपः स्यात् एदोदादौ नामधातौ परे ॥ आत्मन एडकमिच्छतीत्येडकीयति । नाम्नो य ईचास्येति य आत्मन ओघमिच्छतीत्योघीयति ॥

( तत्त्वदी० )–**उपेडकीयति** इति ॥ एकडमिच्छति इति वाक्ये 'नाम्नो य इचास्य' इति सूत्रेण यप्रत्ययेऽकारस्येकारादेशे रूपसिद्धिः । एवं प्रोघीयतीत्यादि ॥

**( एत्येधत्योर्न )** उपैति। उपैधते ॥

( सुबोधिनी )–**एत्येधत्योर्न** ॥ अवर्णान्तोपसर्गस्य लोपो न भवति एतिश्च एध-तिश्च इति एत्येधती तयोरेत्येधत्योः परतः ॥ संध्यक्षराद्योरेत्येधत्योरेव । तेनेह न । उपेति । मा भवान्प्रेदिधदिति ॥ प्रपूर्वस्य एधतेर्ण्यन्तस्य लुङि परे अङि परे । अङि लघाविति ह्रस्वे कृते पश्चाद् द्वित्वे मेट इत्यडागमाभावे चेदं रूपम् ॥

( तत्त्वदी० )–**एत्येधत्यो**रिति ॥ इण गतौ । एध वृद्धौ ॥

**( प्रस्यैष्यैषयोर्न )** एषः–एष्यः । प्रैषः–प्रैष्यः । प्रस्य किम्। अपेषः ॥

( सुबोधिनी )—प्रस्यैष्यैषयोर्न ॥ प्रोपसर्गस्याकारस्य लोपो न स्यादेष्यशब्दे एषशब्दे च परे ॥ एदोदादौ धाताविति प्राप्तेऽयं निषेधः। इषु, इच्छायां तुदादिः। इष, गतौ दिवादिः। इष आभीक्ष्ण्ये क्र्यादिः। एषां धातूनां घञ्प्रत्यये घ्यण्प्रत्यये च एष एष्य इति रूपे भवतः। किं च एषसाहचर्यादेष्योऽप्यनव्ययं गृह्यते। तेन ञ्यन्तादिषेः क्यः क्यपि कृते एष्येत्यव्ययम्। तत्राकारस्य लोपो भवतीत्यर्थः। प्रेष्य गत इति ॥

( तत्त्वदी० )—प्रैष इति॥ इषु इच्छायां तुदादिः। इष गतौ दिवादिः। इष आभीक्ष्ण्ये क्र्यादिः। घञि घ्यणि च एष एष्य इति रूपे सिद्धे तत्र लोपे प्राप्तेऽनेन निषेधः॥ यत्तु ईष उञ्छे यश्च ईष, गतिहिंसादानेषु तयोर्दीर्घोपधत्वादीप ईष्यस्तत्रैत्वे प्रेष्यः॥

## ( एवेऽनवधारणे ) अद्येव। अवधारणे त्वद्यैव॥

( सुबोधिनी )—एवेऽनवधारणे॥ अकारस्य लोपः स्यादनिर्धारणे एवशब्दे परे॥ अद्येव कुरु। अनिश्चयार्थे एवशब्दोऽत्र निश्चयेऽर्थे त्वकारस्य लोपो न। अद्यैव॥

( तत्त्वदी० )—एवेऽनवधारणे इति॥ एवशब्दे परे अनवधारणेऽर्थे अकारान्तपूर्वपदस्य लोप इत्यर्थः॥

## अ इ ए॥ अवर्णादिवर्णे परे सह ए भवति॥ ममेदम्॥

( सुबोधिनी )—अ इ ए॥ अ इति पञ्चम्यन्तम्। इ इति सप्तम्यन्तम्। ए इति प्रथमान्तं संकेतितम्॥

( तत्त्वदी० )—अ इ ए इति॥ अ इति पञ्चम्यन्तमित्यभिप्रेत्याह॥ अवर्णादिति॥ इ इति सप्तम्यन्तम्। यत्तु प्राचा अ इत्यस्य प्रथमान्तत्वमंगीकृत्य अवर्ण इवर्णे पर इति विवृतं तत्पाणिनीयग्रन्थाननुसारित्वादुपेक्षितम्॥

## उ ओ॥ अवर्णादुवर्णे परे सह ओ भवति॥ गङ्गोदकम्॥

( सुबोधिनी )—उ ओ॥ उ इति सप्तम्यन्तम्। ओ इति प्रथमान्तं संकेतितम्॥

( तत्त्वदी० )—उ ओ इति॥ उ इति सप्तम्यन्तम्॥

## ऋ अर्॥ अवर्णादृवर्णे परे सह अर् भवति॥

( सुबोधिनी )—ऋ अर्॥ ऋ इति सप्तम्यन्तम्। अर् इति प्रथमान्तं संकेतितम्॥

( तत्त्वदी० )—ऋ अरिति॥ ऋ इति सप्तम्यन्तम्॥

## ( हसात्परस्य झसस्य लोपो वा सवर्णे झसे ) तवर्धिः तवर्द्धिः॥

( सुबोधिनी )—हसात्परस्य झसस्य लोपो वा सवर्णे झसे॥ हसात्किम्। प्रत्तम्॥ झसस्येति किम्। शार्ङ्गम्॥ झसे इति किम्। प्रियपञ्चानाम्॥ सवर्णे किम्। तृप्ता॥ तव ऋद्धिरित्यत्रार ततो 'रहाद्यपो द्विः' इत्यनेन पक्षे ऋद्धेर्धस्य द्वित्वम्। द्वित्वा-

भावे लोपे सति एकधम् । तवर्धिः । लोपाभावपक्षे द्वित्वलोपयोरसतोर्वा द्विधम्। तवर्द्धिः। द्वित्वे सति लोपे वासति त्रिधम् । तवर्द्धिः । यवलाद्यपो द्विर्वेति लक्षणान्तरेण पुनर्द्वित्वे चतुर्द्धमपि बोध्यम् ॥

( तत्त्वदी० )—तवर्द्धिरिति ॥ रूपत्रयम् । तथा च द्वित्वाभावे लोपे सत्येकधम् । असति-लोपे द्वित्वलोपयोर्वा द्विधम् । सति द्वित्वे लोपे चासति त्रिधम् ॥

**ऌ अल् ॥ आर्णात् ऌवर्णे परे सह अल् भवति ॥**

( सुबोधिनी )—ऌ अल् ॥ ऌ इति सप्तम्यन्तम् । अल् इति प्रथमान्तम् ॥ 'हसेर्हसः' इत्यनेन लस्य द्वित्वम् ॥

( तत्त्वदी० )—ऌ अलिति ॥ ऌ इति सप्तम्यन्तम् ॥

**( यवलाद्यपो द्विर्वा ) तवल्कारः—तवल्ल्कारः तवल्क्कारः तवल्ल्क्कारः।**

( सुबोधिनी ) यवलाद्यपो द्विर्वा ॥ अर्थवशाद्विभक्तिविपरिणाम इत्यनेन यपाद् यवला वा द्विरित्यस्य स्थाने यवलादिति पञ्चमी । यप इति प्रथमेति पक्षे ककारस्यापि द्वित्वे तवल्कार इत्यत्र रूपचतुष्टयं भवति ॥ "द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि । तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ॥"

( तत्त्वदी० )—यवलाद्यपो द्विर्वेति ॥ हसेर्हसः इति द्वित्वविकल्पाच्चत्वारि रूपाणि । एवं प्राल्कारयितीत्यादावपि बोध्यम् ॥

**एऐ ऐ ॥ अवर्णादेकारे ऐकारे च परे सह ऐकारो भवति ॥ तवैषा । देवैश्वर्यम् ॥**

( सुबोधिनी )—एऐ ऐ ॥ आद्यौ सप्तम्यन्तौ प्रथमान्तोऽन्त्यः ॥

**( प्रवत्सतरकम्बलवसनार्णदशभ्य ऋणे ) प्रार्णम् । वत्सतरार्णम् । कम्बलार्णम् । ऋणार्णम् । दशार्णः ॥**

( सुबोधिनी )—प्रवत्सतरकम्बलवसनार्णदशभ्य ऋणे ॥ एषामृणशब्दे परे आर् भवति ॥ इह केचित् वत्सशब्दं प्रक्षिपन्ति । भाष्ये तु वत्सशब्दो नोक्तः । ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम् । वत्सतरस्य ऋणं वत्सतरार्णमित्यत्र हसेर्हसः इत्यनेन तकारसकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । रेफात्परस्य णस्य तु 'रहाद्यपो द्विः' इत्यनेन द्वित्वे 'यवलाद्यपो द्विर्वा' इति वचनान्तरेण पुनर्द्वित्वे एकणं द्विणं त्रिणमिति द्वादश । खपात् शसस्य द्विः इति वार्तिकेन वा सकारद्वित्वे चतुर्विंशतिः ॥ दशार्णो देशः ॥ दशार्णा नदी च ॥

( तत्त्वदी० )—प्रवत्सतरेत्यादि ॥ प्रादिभ्यः षड्भ्यः ऋणशब्दे परे सह आर् भवतीत्यर्थः ॥ **प्रार्ण**मित्यादि ॥ प्रकृष्टं ऋणमिति विग्रहः ॥ **वत्सतरार्ण**मित्यादि ॥ वत्सतरेण देयमृणमित्यादि । एवं कम्बलार्णमित्याद्यपि ॥ **ऋणार्ण**मिति ॥ ऋणस्यापनयनाय यदृणं क्रियते तदृणार्णमित्यर्थः ॥

दशार्णो देशः। नदी च दशार्णा। ऋणशब्दो दुर्गभूमौ जले च। अत्र कालापानुसारिणः वत्सतरशब्द-मपि पठित्वा वत्सतरेण देयमृणं वत्सतरार्णमित्युदाहरन्ति। अपरे तु वत्सतरशब्दमपि पठन्ति तत्सर्वं भाष्यादिविरुद्धम्॥

**( ऋदादौ नामधातौ वा ) प्रार्षभीयति-प्रर्षभीयति॥**

(सुबोधिनी)—**ऋदादौ नामधातौ वा॥** अवर्णान्तादुपसर्गादृकारादौ नामधातौ परे सह वार् भवति॥ आत्मानम् ऋषभमिच्छतीति ऋषभीयति। यप्रत्ययः॥

(तत्त्वदी०)—**ऋदादा**वित्यादि॥ **प्रार्षभीयती**त्यादि। ऋषभमिच्छति ऋषभीयति। नाम्नो य ई चास्येति यप्रत्ययः। अवर्णस्येकारः॥

**( अवर्णान्तादुपसर्गादृकारादौ धातावार् ) उपार्छति॥**

(सुबोधिनी)—**अवर्णान्तादुपसर्गादृकारादौ धातावार्॥** उपसर्गादिति किम्। खट्वर्छति॥ ऋकारादौ किम्। उपेतः॥ धातौ किम्। उपर्कारः॥

(तत्त्वदी०)—**उपार्छती**ति॥ ऋ, गतौ भ्वादिः। दृशादेः पश्यादिरित्यनेनास्य ऋच्छादेशः। ननूपार्च्छतीत्यत्र 'र्लोर्विसर्गः' इत्यनेन रेफस्य विसर्गोऽस्त्विति चेन्न पदान्तत्वाभावान्। न चोपेत्य-स्यान्त्यावयवेन सहार्विधानात्कथं न पदान्ततेति वाच्यम् ऋच्छतीत्यस्याप्याद्यावयवत्वेन पदान्तत्वाभा-वात्॥ ननूपसर्गग्रहणेनैव धातोराक्षेपे सिद्धे धाताविति ग्रहणं व्यर्थमिति चेन्न पदान्तानां समानाना-मृति लृति वा ह्रस्वः इति पाक्षिकह्रस्वस्यापि बाधनार्थं धातुग्रहणम्॥

**( अवर्णादृते परे तृतीयासमासे ) सुखार्तः। शीतार्तः॥ तृतीया-समासे किम्। परमर्तः॥**

(सुबोधिनी)—**अवर्णादृते परे तृतीयासमासे॥** अवर्णादृते परे सह आर् स्यात्॥ सुखेन ऋतः सुखार्तः। शीतेन ऋतः शीतार्तः॥ तृतीयासमासाभावे तु परम-श्चासौ ऋतश्च परमर्तः॥ "ऋतं शिलोञ्छे पानीये पूजिते दीप्तिसत्ययोः" इति हेम-चन्द्रः॥ तृतीयासमासार्थवाक्येऽपि न। तृतीयासमासोऽर्थः प्रयोजनं यस्य तत् तृतीया-समासार्थं तृतीयासमार्थं च तद्वाक्यं च तृतीयासमासार्थवाक्यं तस्मिन् तृतीयासमासार्थ-वाक्ये अवर्णादृकारे सह आर् न भवति किं त्वर्॥

(तत्त्वदी०)—**अवर्णादृते पर** इति॥ अवर्णादृते शब्दे परे तृतीयासमासे आर् भवति इत्यर्थः॥ **सुखार्त** इति॥ सुखेन ऋत इति विग्रहः॥ समासे किम्। सुखेनर्तः॥ तृतीयेति किम्। परमर्तः॥

**( लृदादौ नामधातौ वाल् ) प्राल्कारीयति-प्राल्कारीयति-प्रा-ल्कारीयति-प्राल्ल्कारीयति॥ ॥ इति स्वरसंधिः॥**

( सुबोधिनी )—ऌदादौ नामधातौ वाऌ ॥ अवर्णान्तादुपसर्गाद् ऌकारादौ नामधातौ सह आऌ वा स्यात् ॥ आत्मनः ऌकारमिच्छतीति ऌकारीयति । यप्रत्ययः । प्राऌकारीयति इत्यादावपि पूर्ववद्रूपचतुष्टयं बोध्यमिति ॥ ॥ इति सुबोधिन्यां स्वरसंधिः ॥

( तत्त्वदी० )—श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । विहितायां हि टीकायां स्वरसंधिरगादयम् ॥ इति तत्त्वदीपिकायां स्वरसंधिः ॥

# अथ प्रकृतिभावः ।

**नामी ॥ अदसोऽमीशब्दः संधिं न प्राप्नोति ॥ अमी आदित्याः । अदसः किम् । अम्यत्र ॥**

( सुबोधिनी )—**नामी** ॥ आदस इति वक्तव्यमत्र व्यवस्थार्थं वानुवृत्तेः । अदस्शब्दस्यामीरूपं स्वरे परे संधिं न प्राप्नोति ॥ अदस इति वचनादमो रोगोऽस्यास्तीत्यमी इत्यत्र संधिर्भवत्येव । नामीति ज्ञापकादकारस्य न निषेधः ॥

( तत्त्वदी० )—**नामी** ॥ अदसोऽमीशब्दस्येकार एव संधिं न प्राप्नोति न त्वकारोऽपि नामीति सूत्रज्ञापकादिति भावः ॥ अमू आसाते इत्यत्र ख्ये द्वित्वे इत्यनेनैव संधिनिषेधः ॥ अदसः किम् । अम्यत्र ॥ अर्थवद्ग्रहणपरिभाषयाप्येतद्वारयितुं शक्यते तदा अम्यत्रेति प्रत्युदाहरणं बोध्यम् ॥ अमो रोगः सोऽस्यास्तीत्यमी । अदस एवेति तु वेत्यस्य व्यवस्थितस्यानुवृत्तेः ॥

**ख्ये द्वित्वे ॥ ईकारान्त ऊकारान्त एकारान्तश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति ॥ अग्नी अत्र । पटू अत्र । माले आनय । पचेते इमौ ॥**

( सुबोधिनी )—**ख्ये द्वित्वे** ॥ ईश्च ऊश्च एश्च एषां समाहारो ख्ये । 'एकत्वे द्विगुद्वन्द्वौ' इति नपुंसकस्येति ह्रस्वो न द्विग्वादिसंज्ञापूर्वकत्वेनानित्यत्वात् ॥ अथ वा भिन्नमेवेदं पदम् ॥ सर्वत्राविभक्तिकनिर्देशश्च ॥ ननु ईदूतोः स्थाने यवयोः कृतयोः संदेहो भवति किं ह्रस्वयोर्निर्देश उत दीर्घयोरिति । उच्यते । दीर्घयोरेवात्र ग्रहणं न ह्रस्वयोः दीर्घस्यैकारस्य साहचर्यात् । तेनाकुर्वह्यावामित्यादौ प्रकृतिभावो न । पदग्रहणमित्यनुवर्त्यते । तस्य ख्ये इति विशेषणं तदन्तविधिराश्रीयते ईदूदेदन्तं पदमिति । तेन पचेते इमावित्यादौ प्रकृतिभावः सिद्ध्यति । न ह्यत्रैद् द्वित्वेऽस्ति द्वित्वे इति तु ख्ये इत्यस्य विशेषणम् । किंभूतम् ईदूदेदन्तम् । द्वित्वे वर्तमानम् ॥ ननु कुमार्योरगारं कुमार्यगारं वध्वोरगारं वध्वगारमित्यत्रौसि लुप्ते ईदूदन्तं द्वित्वे वर्तते ततः प्रकृतिभावः स्यात् । उच्यते । ईकारादीनां प्रत्ययत्वस्यासिद्धेर्न प्रकृतिभावः । न ह्यत्र प्रत्ययत्वोपस्थापकं किंचिदस्तीति । यद्वा । समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वोत्तरपदयोरनर्थकत्वान्न प्रकृतिभावः ॥ "मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इति भारतप्रयोगे तु इवार्थे वशब्दो वाशब्दो वा बोध्यः ॥ 'वाविकल्पोपमानयोः' इति । "वं प्रचेतासि जानीयादिवार्थे च तदव्ययम् ।" इति मेदिनी ॥

( तत्त्वदी० )–**य्वे द्वित्वे** इति ॥ ईकारान्तत्वादिकं च परिनिष्ठितत्वे सति बोध्यम् ॥ ननु कुमार्योरगारं कुमार्यगारं वध्वगारमित्यत्रापि संधिनिषेधः प्राप्नोति ॥ इकाराद्यन्तस्य द्वित्वे वर्तमानत्वात् प्रत्ययलक्षणेनेति चेन्न। ईकारादिभिर्द्विवचनस्य विशेषितत्वात् इकाराद्यन्तं द्विवचनमिति निष्कर्षात्। समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वोत्तरपदयोरनर्थकत्वाद्वा ॥ नन्वेवमपि अशुक्ले वस्त्रे शुक्ले संपद्येतां शुक्ल्यास्तां वस्त्रे अत्र प्राप्नोति। अत्र हि ईकारादिवत् द्विवचनान्तत्वं च भवति प्रत्ययलक्षणं नेति चेत्सत्यम्। अत्राप्यकृते ईभावे लुग्भविष्यति च्व्यन्तस्याव्ययत्वेनासंख्यत्वादद्वित्वार्थत्वाद्वा। यत्तु मणीवादिवर्ज्यमिति पठित्वा मणीवाद्युदाहृतं प्राचा तन्न मुनित्रयानुक्तत्वादप्रमाणमिति सन्तः।एवं"मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम"इति भारतप्रयोगसमर्थनाय इवार्थे वशब्दो वाशब्दो वा बोध्यः। "व वा यथातथैवैवं साम्ये" इत्यमरग्रन्थव्याख्यावसरे ॥ "शात्रवं व पपुर्यशः" इति कालिदासप्रयोगस्याभियुक्तैरुदाहृतत्वात्। "कादम्बखण्डितदलानि व पङ्कजानि" इत्यादिदर्शनाच्चेति भावः ॥

**औ निपातः॥ स्वरो निपातश्च संधिं न प्राप्नोति॥ अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। आ एवं मन्यसे॥**

( सुबोधिनी )–**औ निपातः** ॥ औ इति आकारादारभ्य औकारेण प्रत्याहारो ग्राह्यः। ततो निपातसंज्ञकः स्वरे परे संधिं न प्राप्नोति ॥ अ अपेहि। अ इति निषेधाक्षेपयोः ॥ इ इन्द्रं त्वं पश्य। इ इति विस्मये ॥ उ उत्तिष्ठ। उ इति जुगुप्सासंतापान्वर्थाप्यर्थेषु॥आ एवं त्वं मन्यसे।पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः।पूर्वमित्थं न त्वममंस्था इदानीं त्वेवं मन्यसे इत्यर्थः ॥ आ एवं किल तत्। स्मरणद्योतकोऽयमाकारः॥ ङित आकारस्य तु निपातसंज्ञा नास्ति प्रादिषूपसर्गेषु आङः पाठात् निपातसंज्ञादीनामेवास्ति न तु प्रादीनाम्। ततो ङित आकास्य प्रकृतिभावो न। आ ईषदुष्णं ओष्णम्। किं च "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" इनि भाष्ये उक्तम् ॥ आङनाङोरर्थ एव भेदकोऽस्ति। स्वराणामपि निपातानिपातविवेकोऽर्थाधीन एव ॥ निपातग्रहणं किम्। अकारो वासुदेवस्तस्य धौ अ इति रूपम्। अ आगच्छ आगच्छेति। उः शंभुस्तस्य धौ ओ इति रूपम्। ओ आगच्छ अवागच्छेति। इः कामस्तस्य धौ ए इति रूपम्। ए आगच्छ अयागच्छेति। स्वररूपनिपातस्य परेण स्वरेण सह संधिनिषेधोऽस्ति। पूर्वेण स्वरेण सह तु संधिर्भवत्येव। जातु उ अस्य रुजतीत्यत्र उकाराकारयोः सवर्णे दीर्घे कृते निपातस्य विकृतत्वात् परेणापि संधिर्भवत्येव जात्वस्येति।

( तत्त्वदी० )–**औ निपात** इति ॥ अकारादिरौकारन्त औप्रत्याहार इत्यभिप्रेत्याह ॥ **स्वर** इति ॥ स्वरोऽप्येक एव बोध्यः न तु स्वरान्तः। चार्थे वेङ्योः इत्यादिनिर्देशात्। तेन प्रेदं ब्रह्मेत्यत्र न संधिनिषेधः ॥ निपात इति किम्। चकारात्र जहारात्राङो न निषेधः। तस्य प्रादिषु पाठे वा निपातत्वात्। चादिर्निपातः इति चादेरेव तत्त्वात् ङित्त्वं च भाष्यात्। "ईषदर्थे क्रियायोगे मर्यादाभिविधौ

च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥" इति ॥ आ एवमिति॥ पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः । पूर्वमित्थं नामंस्थाः इदानीं त्वेवं मन्यसे इत्यर्थः ॥

**( ओदन्तो निपातश्च ) अहो ईशाः । अहो आगताः ॥**

**( सुबोधिनी )–ओदन्तो निपातश्च ॥ ओदन्तो निपातः संधिं न प्राप्नोति ॥ निपातः किम् । देवोऽसि ।**

( तत्त्वदी० )–**ओदन्त** इति ॥ अत्र भाष्यम् । ओतश्च प्रतिषेधः । ओदन्तो निपात इत्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः । अनदः अदः अभवत् अदोभवत् । तिरोभवत् । इह यथा न स्यात् । स च वक्तव्यो न वक्तव्यः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य इत्येवं न भविष्यति । एवमपि अगौर्गौः समपद्यत गोऽभवत् । अत्र प्राप्नोति । एवं तर्हि गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति । तद्यथा । गौरनुबध्यते इत्यत्र न वाहीकोऽनुबध्यते । च्व्यन्तस्य क्त्वाद्यन्तर्गतत्वेन निपातत्वाभावान्नेत्यपरे ॥ निपातः किम् । सुद्योम्रम् । यत्तु मनोरमायां निपातः किम् । देवोऽसि वायवायाहि इति प्रत्युदाहृतं तद्भाष्यविरोधादुपेक्ष्यम् ॥

**( ओदन्ता धौ वेतौ ) विष्णो इति–विष्णविति ॥**

**( सुबोधिनी )–ओदन्तो धौ वेतौ ॥ संबोधननिमित्तक ओकारः संधिं वा प्राप्नोति इतिशब्दे परे ॥ इतौ किम् पटोऽत्र ॥ धौ किम् । अहो इति ॥ प्रकृतिभावे विष्णो इति । पक्षे अवादेशः । य्वोर्लोपाशिति वलोपे विष्ण इति । पक्षे विष्णविति ॥**

( तत्त्वदी० )–**ओदन्तो धा**विति ॥ अवैदिके इतौ बोध्यम् ॥ धाविति किम् । अहो इति । अत्र विकल्पो मा भूत् ॥

**( य्वृणामसवर्णे स्वरेऽसमासे पदान्ते वा ह्रस्वः ) चक्रि अत्र–चक्यत्र । मधु एतत–मध्वेतत् । कर्तृ इदम्–कर्त्रिदम् । ह्रस्वविधानसामर्थ्यान्न संधिः । समासे तु हर्यर्थः । पदान्ते किम् । गौर्यौ ॥**

**( सुबोधिनी ) य्वृणामसवर्णे स्वरे समासे पदान्ते वा ह्रस्वः ॥ इश्च उश्च आ च ते य्वरस्तेषां य्वृणाम् । असमासे पदान्ते स्थितानामिवर्णोवर्णऋवर्णानां प्रकृतिभावो ह्रस्वश्च वा भवत्यसवर्णे स्वर परे ॥ ह्रस्वपक्षे चाक्रि अत्र । प्रकृतिभावे चक्री अत्र । पक्षे यत्वम् चक्र्यत्र । इह स्कोरिति कस्य लोपो न यत्वस्य बहिरङ्गपरिभाषयासिद्धत्वात् । स्थानिवद्भावाच्च । हरेरर्थमिति हर्यर्थः । समासत्वादत्र ह्रस्वप्रकृतिभावौ न ॥**

( तत्त्वदी० )–**य्वृणा**मिति ॥ इश्च उश्च आ च य्वरस्तेषाम ॥

**( पदान्तानां समानानामृति ऌति च वा ह्रस्वः ) ब्रह्म ऋषिः–ब्रह्मर्षिः । दण्डि ऋषिः–दण्डचर्षिः । वधु ऋकारः–वध्वृकारः । होतृ ऋकारः–होतृऌकारः–होतृकार ॥ पदान्तानां किम् । आर्च्छत् ॥**

( सुबोधिनी )–पदान्तानां समानानामृति लृति च वा ह्रस्वः ॥ पदान्ते स्थितानां समानानां प्रकृतिभावो ह्रस्वश्च वा भवति ऋकारे लृकारे च परे ॥ होतृ लृकारः ब्रह्मा ऋषिरित्यादौ प्रकृतिभावार्थमिदम् । इ णां तु पूर्वेणैव प्रकृतिभावः सिद्ध्यति समासेऽप्ययं प्रकृतिभावोऽस्ति । तेन सप्त ऋषीणामिति । प्रकृतिभावे ब्रह्मा ऋषिः । ह्रस्वे ब्रह्म ऋषिः । संधौ ब्रह्मर्षिः ॥ पदन्ते किम् । आ ऋच्छदित्यत्र आ इत्यस्य ह्रस्वो न ऋकारे परेऽपि पदान्ताभावात् । ऋच्छ गत्यादावित्यस्य लङि तुदादेरित्यप्रत्यये दिवादावडिति स्वरादेरिवाडागमयोश्च कृतयो रूपम् ॥

( ञयादुञो वो वा स्वरे ) किम्वुक्तम्–किमु उक्तम् ॥

( सुबोधिनी )–ञयादुञो वो वा स्वरे ॥ ञयात्परस्य उञ्निपातस्य वो वा स्यात्स्वरे परे ॥ किमु उक्तम् । वत्वपक्षे किम्वुक्तम् । वस्यासिद्धत्वान्नानुस्वारोऽत्र ॥

( तत्त्वदी० )–ञयादुञ इति ॥ किम्वुक्तमिति ॥ वत्वस्यासिद्धत्वान्नानुस्वारः । ओदन्तो निपात इत्यारभ्यैतत्पर्यन्तं वेत्यस्य व्यवस्थितस्यानुवृत्तेर्लभ्यत इति बोध्यम् ॥

दूरादाह्वाने टेः प्लुतः ॥ दूरात्संबोधने यद्वाक्यं तस्य टेः प्लुतो वा ॥ प्लुतः संधिं न प्राप्नोति । एहि देवदत्त ३ अत्राधीष्व ॥

( सुबोधिनी )–दूरादाह्वाने टेः प्लुतः ॥ दूरत्वमिहाह्वानापेक्षं बोध्यते न देशापेक्षं पुरुषापेक्षं च गृह्यते । आह्वाने इति संबोधनमात्रोपलक्षणम् । तेनाह्वानादन्यत्रापि भवति। सक्तून्पिब देवदत्त ३ इति । आह्वाने इत्याधारे सप्तमी । आधारश्चाधेयमपेक्षते । आधेयं च वाक्यमेव । तेनैवाह्वानसंभवात् । संबोधने वाक्यस्य टेः प्लुतः स्यादित्यर्थः । ह्रस्वदीर्घव्यक्त्योरुच्चारणात्स्वरूपलिखनाच्च भानं प्लुतव्यक्तेरुच्चारणादेव ॥

( तत्त्वदी० )–दूरादाह्वान इति ॥ दूरत्वमिहाह्वानापेक्षं न तु देशापेक्षं पुरुषापेक्षं वा । वाक्यस्य टेरिति ॥ वाक्यं च सामर्थ्याल्लभ्यते । आह्वाने इत्याधारे सप्तमी । आधारश्चाधेयमपेक्षते । आधेयं च वाक्यमेव । तेनैवाह्वानसंभवात् इति नव्याः । संबोधनमात्रोपलक्षकम् इत्यभिप्रेत्याह ॥ दूरात्संबोधन इति ॥

( हैहेप्रयोगे हैहयोः प्लुतो वा ) है अम्ब–हाय्म्ब । हे ईश–हयीश ॥

( सुबोधिनी )–हैहेप्रयोगे हैहयोः प्लुतो वा ॥ हैहेप्रयोगे दूरात्संबोधने यद्वाक्यं तत्र हैहयोरेव प्लुतो वा स्यात् ॥ प्लुताभावे आय् । हायम्ब । हयीशेत्यत्र अय् ॥

( सप्तम्यर्थे ईत् संधिं न याति ) वातप्रमी आस्ते । ययी इदम् । पपी एषः ॥

( सुबोधिनी)–सप्तम्यर्थे ईत्संधिं न याति॥सप्तम्यर्थे संसिद्धमीकारान्तं पदं संधिं न प्राप्नोति ॥ अर्थग्रहणात्समासे मा भूत् । वाप्यामश्वो वाप्यश्व इत्यत्र वापीशब्दो

वाप्यधिकरणकद्रव्ये उपसंक्रान्तो न तु सप्तम्यर्थे । वातप्रमीययीपपीशब्दा औणादिके-कारान्ताः सन्ति तेषां सप्तम्येकवचनेन सवर्णे दीर्घे रूपम् ॥

( तत्त्वदी० )–सप्तम्यर्थे इति ॥ अर्थग्रहणं किम् । वाप्यामश्वो वाप्यश्वः । इह यथा न स्यात् । अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति जहत्स्वार्थावृत्तिरिति सप्तम्यर्थाभावात् । अथाजहत्स्वार्थायां वृत्तौ दोष एवेति चेन्न । समुदायार्थोऽभिधीयते ।

**( इतौ वा उञ् ) उ इति–विति ॥**

( सुबोधिनी )–इतौ वा उञ् ॥ उञ् निपातः सन्धिं वा प्राप्नोति इतिशब्दे परे ॥ औनिपात इति नित्यं प्राप्ते विकल्पोऽयम् ॥

( तत्त्वदी० )–इतौ वेति ॥ उभयत्र सानुबन्धक एव गृह्यते ॥

**( अप्लुतवदितौ ) देवदत्तेति ॥**

( सुबोधिनी )–अप्लुतवदितौ ॥ प्लुतोऽप्लुतवद्भवति इति शब्दे परे ॥ अप्लुतवत्कार्यं यत्वादिकं करोतीत्यर्थः ॥

( तत्त्वदी० )–अप्लुतवदिति ॥ अत्रापि अवैदिके इतौ बोध्यम् ॥ वत्किम् । अग्नी इति इत्यत्र यथा न स्यात् ॥

**( गुरोरनृतोऽनन्त्यस्यापि वा पर्यायेण प्लुतः ) दे ३ वदत्त–देवद ३ त्त । अपिशब्दादन्त्यस्याप्यगुरोर्वा पर्यायेण प्लुतः । देवदत्त ३ ॥ गुरोः किम । वकारादकारस्य मा भूत् ॥ अनृतः किम् । कृष्ण ३ गौश्चरति ॥ इति प्रकृतिभावः ॥**

( सुबोधिनी )–गुरोरनृतोऽनन्त्यस्यापि वा पर्यायेण प्लुतः ॥ दूरात्संबोधने यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा पर्यायेणानुक्रमेण प्लुतः स्यात् ॥ एकत्र दे इत्येकारस्य प्लुतता । अन्यत्र द इत्यकारस्य प्लुतता । त इत्यकारस्य तु 'दूराद्धाने टः प्लुतः' इत्यनेन प्लुतसंज्ञा । प्रकृतेर्मूलरूपस्य भवनं प्रकृतिभावः ॥ ॥ इति सुबोधिन्यां प्रकृतिभावः ॥

( तत्त्वदी० )–गुरोरनृत इति ॥ अपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थः ॥

श्रीविद्यानगरस्थायिक्षेमंकरसुतोऽकरोत् । श्रीलोकेशकरो व्याख्यां संध्यभावस्य सत्तमाम् ॥

इति तत्त्वदीपिकायां प्रकृतिभावः ॥

---

# अथ हससन्धिः ।

**चपा अबे जबाः ॥ पदान्ते वर्तमानाश्चपा जबा भवन्त्यबे परे षडत्र । वाग्यथा ॥**

( सुबोधिनी )–चपा अबे जबाः ॥ पदान्त इत्यनुवर्तते । पदान्ते वर्गप्रथमास्तृतीया भवन्त्यबे परे ॥ पदान्ते किम् । वाचौ । भवन्तौ । बहुवचनं सर्वव्यक्तिषु तात्पर्यबोधनार्थम् ॥

(तत्त्वदी०)–चपा अबे जबाः ॥ अत्र लघुभाष्यम् । झपा इति पाठ्यम् । समिदत्र ककुबत्र अग्निमदासनमित्यादावव्याप्तिर्यथा न स्यात् । यद्वा अवे जबा इत्येव कर्त्तव्यम् । पदान्त इत्यनुवर्तते । पदान्ते वर्तमानस्य जबा भवन्त्यबे परे इत्यर्थः ॥ स्वराणां पूर्वविधयो बाधकाः । हसानां तूत्तरविधय इति । अत्रोच्यते । तयागताः पटविहेत्यादौ अतिप्रसंगवारणाय तावत् अन्यतर-द्वक्तव्यम् । तत्र व्यक्तिलाघवाच्चपग्रहणमेव कर्तव्यम् । न चोक्तदोषः 'वावसाने' इतीष्टसिद्धेः । अव-सानं किमिति चेत् अत्र एवेति गृहाण ॥ विद्यावसानमित्यादिप्रयोगदर्शनात् । अत्रार्थे चपग्रहण-स्यापि मानत्वात् इति । अत्रेदमवधेयम् । 'वावसाने' इत्यत्रावसानशब्दस्यान्तवाचकता नोचिता । 'विरामोऽवसानम्'इत्यनेन वर्णाभावस्यावसानसंज्ञां कुर्वता सूत्रकारेण विरुद्धत्वात् । किं चैवं भवत्पुत्रः बृह-त्फणी महत्खण्डन इत्यादिषु 'वावसाने' इत्यनेन पक्षे दकारश्रवणापत्तेः । न चेष्टापत्तिः तदसाधुत्वस्य सर्वत्र दर्शनात् । न च ककुबत्रेत्यादौ अव्याप्तिपरिहारः कथमिति चेत् । इत्थम् । 'ञमे ञमा वा' इत्यत्र व्यवस्थितविभाषाश्रयणात् झपानामपि जबा ञमाश्च भवन्तीति व्याख्यानात् । तन्मयमित्यादौ ञमकरणार्थं प्रत्यये ञमे जबस्यापीति भवद्भिरपि व्यवस्थितविभाषाश्रयणस्य स्वीकृतत्वात् । अथ भव-त्पुत्र इत्यादौ 'खसे चपा झसानाम्' इति सूत्रेण पाक्षिकदकारस्यापि तत्वेन रूपसिद्धिरिति चेत्स-त्यम् । 'खसे चपा झसानाम्' इति सूत्रं प्रति तु 'वावसाने' इत्यस्य बहिरंगत्वेनासिद्धत्वात् । किं च तच्छिव इत्यत्र तदो 'वावसाने' इति चर्त्वे कृते पश्चाच्छिव इत्यनेन संबन्धे 'झलां जशोऽन्ते' इति जस्त्वे 'खरि च' इति चर्त्वमिति व्याकुर्वतां कृष्णपण्डितानां मते भाविन्यवसानभंगे अकृतव्यूह-परिभाषया कृतमपि शास्त्रं वा निवर्तयन्तीत्यनया 'वावसाने' इत्यस्याप्रवृत्तेरित्युक्त्या दूषयतां भट्टोजि-दीक्षितानां मते नातिविरोधात् इति दिक् ॥ अवग्रहणं किम् । जगत्सर्वमित्यादौ खसे मा भूत् । अथ तत्र 'खसे चपा झसानाम्' इत्यस्यैव प्रवृत्तिरिति चेत्तर्हि उत्तरार्थमवग्रहणं स्पष्टार्थमिहैव कृतम् ॥ पदान्त इति किम् । त्वचौ ॥

**ञमे ञमा वा ॥ पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति ॥ षण् मम–षड् मम । वाङ् मधुरा–वाग्मधुरा ॥**

**(सुबोधिनी)–ञमे ञमा वा ॥ पदान्ते इत्यनुवर्तते । पदान्ते वर्गप्रथमाः पञ्चमाः स्युः पञ्चमे परे ॥पदान्ते किम् । वच्मि । पाप्मा । यत्नः । पक्षे तृतीयाश्चपा अबे जबा इत्यनेनैव ॥**

(तत्त्वदी०)–ञमे ञमा वेति ॥ अत्रापि पदान्त इत्यनुवर्तते । तेन वच्मीत्यादौ न । वाशब्दोऽत्र व्यवस्थावाची । तेन क्वचित् झपानामपि ञमा भवन्ति । प्रत्यये च नित्यतालाभः । यत्तु कैश्चिन्मयटि नित्यमित्युक्तं तद्भाष्यविरोधादुपेक्ष्यम् ॥ चपा इति किम् । विष्णो मां रक्षेत्यादौ स्वरस्य मा भूत् ॥

**(प्रत्यये ञमे जबस्यापि नित्यम्) तन्मयम् । चिन्मात्रम् ॥**

**(सुबोधिनी)–प्रत्यये ञमे जबस्यापि नित्यम् ॥ वर्गतृतीयानां पञ्चमा भव-**

न्ति प्रत्ययसंबन्धिनि ञमे परे ॥ अपिशब्दाद्वर्गप्रथमानामपि ॥ कथं तर्हि रघुकाव्ये 'मदोदग्राः ककुद्मन्तः' इति । उच्यते । यवादिगणे दकारस्य निपातनान्न ञमो भवतीति कौमुदी ॥ क्वचिज्जबस्यापि ञमो भवति 'त्वन्मदेकत्वे' इति ज्ञापकात् ॥ तत्स्वरूपमस्येति तन्मयम् । प्राचुर्यविकारप्राधान्यादिष्विति मयट् ॥ चित्प्रमाणमस्येति चिन्मात्रम् । प्रमाणे द्वयसट् दघ्नट् मात्रट् इति मात्रट् ॥

**चपाच्छः शः ॥ पदान्ते वर्तमानाच्चपादुत्तरस्य शकारस्य छो वा भवत्यवे परे ॥ वाक्छूरः-वाक्शूरः ॥ अवे किम् । वाक् श्च्योतति ॥**

( सुबोधिनी ) चपाच्छः शः ॥ चपादुत्तरः शकारः छकारो वा भवत्यवे परे ॥ चपादिति किम् । प्रशान् शेते ॥ अवे इति किम् । वाक्श्च्योतति ॥ शः किम् । वाक्साधुः॥ननु चपाच्छः श इत्युक्ते संदेहो भवति किं शस्य छः शो वेति । लोकाच्छेषस्येति निर्देशान्न संदेह इति ॥

(तत्त्वदी०)—चपाच्छः श इति॥पदान्त इति किम्। विरप्शम्। रपेर्विपूर्वादौणादिकशप्रत्यये रूपमेतत् इति प्राञ्चः । तच्चिन्त्यम् । विरप्शमित्यस्य छान्दसत्वलाभात् । छन्दसि दृष्टानुविधिस्वीकारात् इत्युक्तं लघुभाष्ये । तत्रेदमवधेयम् । विरप्शमित्यस्य पदान्तप्रत्युदाहरणत्वमेवोचितं पतञ्जलिसंमतत्वात् ॥ किं च 'शच्छोटि' इत्यस्य हि पदान्ताज्झयः परस्य शस्य छ इत्यर्थे आकरे स्थितः । विपूर्वाद्रपेरौणादिकशप्रत्यये 'मध्वश्च्योतन्त्यभितो विरप्शम्' इत्यादौ यथेति मनोरमायामुक्तवतां दीक्षितानां मतेन विरोधात् छान्दसत्वादित्यस्यागतित्वेनोपेक्षितत्वात् ॥ चपादिति किम् । प्रशान् शेते ॥ अवे इति किम् । वाक्श्च्योतति ॥ शः किम् । वाक्साधुः ॥ ननु चपा इत्यनुवर्त्यार्थवशाद्विभक्तिविपरिणामं कृत्वा चपादिति व्याख्याऽऽश्रीयेत इति चेत् तर्ह्युत्तरार्थं तच्च 'हो झभाः' इत्यत्र वक्ष्यते । इहार्थे च अत्र तंत्रादिना वाक्यद्वयमाश्रीयते । तत्राद्य उक्त एव । द्वितीयस्तु चपमततीति चपात् तेन सहितः छः तस्य शो ञमे । तेन च पाप्रश्मीत्यादौ सत्वम् । विधेयस्य पूर्वनिर्देशास्त्वसंदेहार्थः । 'चपाच्छः छः' इत्युक्ते संदेहः स्यात् ॥

**हो झभाः ॥ चपादुत्तरस्य हकारस्य झभा वा भवन्ति ॥ यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति ॥ तद्धविः-तद् हविः । वाग्घरिः-वाग्हरिः ॥**

( सुबोधिनी )—हो झभाः ॥ 'चपाच्छः शः' इत्यतश्चपादित्यनुवर्तते । चपात्परस्य हस्य स्थाने झभाः स्युर्वा ॥ निमित्तादेशयोश्चपझभयोः समसंख्ययोर्यथाक्रमं वक्ति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवतीति ॥ चात्परस्य हस्य झः टात्परस्य हस्य ढः । तात्परस्य हस्य धः । कात्परस्य हस्य घः । पात्परस्य हस्य भः इति । चपादिति किम् । भगवन् हरे ॥ हस्येति किम् । तत् षष्ठम् ॥ वाग्घरिः । 'वर्गचतुर्थाभावे' वाग्हरिः । भउयत्र जवत्वम् ॥

( तत्त्वदी० )—**हो झभा** इति ॥ चपादित्यनुवृत्तेर्नेह भगवन् हरे ॥ हकारस्येति किम् ? तत्त्वष्ठम् ॥ चपानां झभानां यथाक्रमं प्रवृत्तिरित्याह ॥ **यद्धर्गग** इति ॥ ननु उद्दिश्यमानाविधियमानयोर्यथाक्रमं प्रवृत्तिर्भवतीति वचनं विना कथं यथाक्रमं लभ्यत इति चेन्न ज्ञापकाद्वचनमस्तीति अनुमानात् । ज्ञापकं तु 'सेधाद्धसे' इति सूत्रे तकारात्परस्य धकारकरणम् ॥

**स्तोः श्चुभिः श्चुः ॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ भवतः ॥ उद्दिश्यमानप्रतिनिर्दिश्यमानयोर्यथाक्रममिति वाच्यम् ॥ कश्चरति । कः शूरः तच्चित्रम् । तच्छादयति ॥**

( सुबोधिनी )—**स्तोः श्चुभिः श्चुः** ॥ स् च तुश्चानयोः समाहारः स्तु तस्य स्तोः । आगमजमनित्यम् इत्युक्तत्वान्न नुम् । अथवा सा सहितः तुः स्तुः तस्य स्तोः । शाकपार्थिवादित्वान्मध्यमपदलोपः श् च चवश्च श्चवस्तैः श्चुभिः । श्चुरिति पुंल्लिङ्गनिर्देशोऽयमित्येके । नपुंसकनिर्देशोऽयमित्यन्ये । श्चुभिरिति सहादियोगं विनापि सहार्थे तृतीया । सिनोति निर्देशात् । अत्र स्थान्यादेशयोर्यथासंख्यमस्ति । निमित्तस्थानिनोस्तु न यथासंख्यम् 'न शात्' इति ज्ञापकात् । उद्दिश्यते इति उद्दिश्यमानः स्थानी । निर्दिश्यते विधीयते यः स निर्दिश्यमानः आदेशस्तयोर्यथाक्रमं यथासंख्यं वक्तव्यम् । चवर्गयोगे कश्चरतीति ॥ कश्शूर इत्यत्र शसे वेत्यस्य पाक्षिकत्वाद्विसर्जनीयस्य सस्तस्य शकारेण योगे शः । तच्चित्रमित्यत्र चवर्गयोगे तवर्गस्य चुत्वम् । तच्शिव इत्यत्र शकारेण योगे तोश्चुत्वम् ।

( तत्त्वदी० )—**स्तोः श्चुभिः** श्चुरिति ॥ स् च तुश्च अनयोः समाहारः स्तुः तस्य स्तोः । एकत्वे द्विगुद्वन्द्वावित्यस्यानित्यत्वान्न क्लीवत्वम् । तज्ज्ञापकं चेदमेव । सा सहित इति वा शाकपार्थिवादिः । श् च चवश्च श्चवः तैश्चुभिः श्चुना इत्यत्रार्द्धमात्रागौरवाद्बहुवचनम् । अत्र स्थान्यादेशयोर्यथासंख्यं निमित्तकार्यिणोस्तु न 'न शात्' इति ज्ञापकात् इत्यभिप्रेत्याह ॥ **संख्यासाम्य** इति॥ समस्य भावः साम्यं संख्यायाः साम्यं संख्यासाम्यम् तस्मिन् ॥ क्रममनतिक्रम्य यथाक्रमम् । यावत्संख्याकस्योद्दिश्यमानस्य तावत्संख्याकमेव प्रतिनिर्दिश्यमानं भवतीत्यर्थः । स्तोः श्चौ श्चुरित्येव सुवचम् ॥ न च 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिद्ध्येत 'न शात्' इति लिङ्गेन तस्यानुपस्थानाभ्युपगमात् ॥

**न शात् ॥ शकारात्परस्य तवर्गस्य चुत्वं न भवति ॥ प्रश्नः । विश्नः ॥**

( सुबोधिनी )—**न शात्** ॥ स्तोः श्चुरित्यनुवर्तते । शात्परस्य सस्य शकारप्रसंगे नास्त्यतः शात्परस्य तोश्चुत्वं न ॥ 'प्रच्छ, ज्ञीप्सायां' 'विच्छ, गतौ' आभ्यां नङ्कीति नङ्प्रत्ययः । क्ङिति झसे कौ ञमे चेति छस्य शत्वम् । नङो ङित्वाद्गुणाभावः । प्रच्छेरत्र संप्रसारणं न भाष्येऽनुक्तत्वात् ॥

( तत्त्वदी० )–न शादिति ॥ शात्परस्य सस्य शकारप्रसंगो नास्ति अतः शात्परस्य तवर्गस्य चवर्गो निषिध्यते ॥ शादिति किम् । याच्ञा ॥

**ष्टुभिः ष्टुः ॥ सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ भवतः ॥ कृष्षष्ठः । तट्टीकते ।**

( सुबोधिनी )–ष्टुभिः ष्टुः ॥ स्तोरित्यनुवर्तते । षु च टवश्च ष्टवस्तैः ष्टुभिः । षु च टुश्चानयोः समाहारः ष्टुः । नपुंसकनिर्देशोऽयमित्येके । षा सहितः टुः ष्टुः । शाकपार्थिवादित्वान्मध्यमपदलोपः । इति पुँल्लिङ्गनिर्देशोऽयमित्यन्ये । इहापि स्थान्यादेशयोर्यथासंख्यम् । निमित्तस्थानिनोस्तु न 'न षि' इति निषेधात् । स्तोः ष्टुभिर्योगे ष्टुः स्यादिति ॥

( तत्त्वदी० )–ष्टुभिः ष्टुरिति ॥ स्तोरित्यनुवर्तते । समासः पूर्ववत् । अत्रापि ष्टौ ष्टुरित्येव सुवचम् ॥

**न षि ॥ षकारे परे तवर्गस्य टुत्वं न भवति ॥ भवान्षष्ठः ।**

( सुबोधिनी )–न षि ॥ तोष्टुर्न स्यात् षकारे परे ॥ तोरिति किम् । कृष्षष्ठः ॥ षीति किम् । तट्टीका ॥ षीति सप्तमीनिर्देशात्पूर्वे षकारे ष्टुत्वं स्यादेव । रोष्टि ॥

( तत्त्वदी० )–न षीति ॥ अत्र तोरित्यनुवर्तते ॥ षीति किम् । तट्टीकते । षीति सप्तमीनिर्देशात्पूर्वस्य षकारस्य योगे ष्टुत्वं स्यादेव । क्रोष्टा ॥

**टोरन्त्यात् ॥ पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोष्टुर्न भवति ॥ षण्नरः-षड्नरः । षट् सीदन्ति ॥**

( सुबोधिनी )–टोरन्त्यात् ॥ स्तोरित्यनुवर्तते । अन्ते भवोऽन्त्यस्तस्मादन्त्यात् । अन्त्यशब्देन पदान्तं कथ्यते । भवार्थे ण्यः । 'णितो वा' इति णित्त्वविकल्पाद्वृद्ध्यभावः । पदान्ते स्थिताट्टोः परस्य स्तोः ष्टुत्वं न भवति ॥ पदान्तात् टोः किम् । ईट्टे ॥ टोः किम् । सर्पिष्टमम् ॥ 'ञमे ञमा वा' इति ञमे षण्नरः । ञभावपक्षे षड् नरः । नर इति बहुवचनम् ॥

( तत्त्वदी० )–टोरन्त्यादिति ॥ स्तोरित्यत्रानुवर्तते न तोरिति ॥ टोरिति किम् । सर्पिष्टमम् ॥ अन्त्यः । भवार्थे ण्यः । 'णितो वा' इति वृद्धिविकल्पाद्वृद्ध्यभावः ॥

**( नवतिनगर्योर्न ) षण्णवतिः । षण्णगर्यः ॥**

( सुबोधिनी )–नवतिनगर्योर्न ॥ पदान्ताट्टवर्गात्परयोर्नवतिनगरीशब्दयोर्न ष्टुत्वनिषेधो भवति ॥ टोरन्त्यादिति निषेधो न प्रवर्तते इत्यर्थः ॥ षड्भिरधिका नवतिरित्यत्र षस्य डत्वे कृते तस्य ष्टुत्वम् । ततः षण्णवतिः ॥ षट् नगर्यः इत्यत्र नस्य ष्टुत्वम् षण्णगर्यः ॥

( तत्त्वदी० )–पदान्त इत्यनुवृत्तेः पदान्तादिति लब्धे अन्त्यादिग्रहणमस्यानित्यत्वज्ञापनार्थेत्यभि-प्रेत्याह–**नवतिनगर्योर्नेति** ॥ **षण्णवतिरिति** ॥ षट् च नवतिश्च षडधिका नवतिरिति वा ॥

**( सुपो न ) लिट्सु । टनात्सस्य वा धुट् । लिट्त्सु ॥**

**( सुबोधिनी ) सुपो न॥ टवर्गात्परस्य स्यादीनां सुपः सकारस्य ष्टुत्वं न भवति॥**

( तत्त्वदी )–'न शात्' 'न षि' इत्यत्र नञ्द्वयोपादानं ष्टुत्वस्यानित्यत्वज्ञापनार्थमित्याशयेनाह-**सुपो नेति** ॥ सुपः सकारस्य ष्टुत्वं नेत्यर्थः ॥

**तोर्लि लः ॥ तवर्गस्य लकारे परे लकारः स्यात् ॥ तल्लुनाति । भवाँल्लिखति । अनुनासिकाननुनासिकत्वेन द्विधा यवलाः । तत्र नकारस्यानुनासिको लकारः ॥**

**( सुबोधिनी )–तोर्लि लः ॥ तोरिति किम् । शक्नोतीति शक् लुनातीति ॥ लि इति किम् । तदन्नम् ॥ यकारवकारलकाराः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिकस्य नकारस्य स्थाने सानुनासिक एव लो भवतीत्यर्थः ॥**

( तत्त्वदी० )–**तोर्लि ल** इति ॥ अत्र लघुभाष्यम् । स्तोरित्यनुवर्तमाने तोर्ग्रहणं सकारनिवृत्त्यर्थमित्येके । तन्न लकारपरस्य सकारस्याभावात् । न च को लुनातीत्यादावन्तरङ्गेण विसर्गेण भाव्यं स्लब्रवक इत्यत्रापि परत्वादन्तरङ्गत्वाच्च दत्वे कृते लः। तोर्ल्लि इति द्विलकारं पाठ्यम् । ल् लि चेति छेदः एवं सार्द्धमात्रा न्यूना भवति । अत्रेदमवधेयम् । तोर्लि इत्युक्ते लकारात्परत्वात्तन्निमित्तकद्वित्वमाशङ्क्य विधेयसंदेहस्यानिवार्यत्वात् । किं च स्तोः श्चुभिः श्चुरित्यत्र प्रकृतस्य श्चुरित्यस्य विधेयत्वेनोपन्यासाद्वा॥ **भवाँल्लिखति** इति ॥ अत्रानुनासिको लकारः ॥

**( उदः स्थास्तम्भोः सलोपः ) उत्थानम् । उत्तम्भनम् ॥**

**( सुबोधिनी )–उदः स्थास्तम्भोः सलोपः ॥ उदः परयोः स्थास्तम्भोः सकारस्य लोपो भवति ॥ ष्ठा, गतिनिवृत्तौ । स्तम्भु, निरोधने । सलोपे कृते 'खसे चपा झसानाम्' इति दस्य तः । उत्थानम् ॥**

( तत्त्वदी० )–**उदः स्थास्तम्भोरिति** ॥ उदः परयोः स्थास्तम्भोः सलोपः स्यादित्यर्थः ॥ **उत्थानम् । उत्तम्भनमिति** ॥ स्थीयत इति स्थानम् । भावे युट् । युवोरनाकावित्यनादेशः । सलोपेकृते 'खसे चपा झसानाम्' इति दकारस्य तकारः ॥

**नः सक् छते ॥ नान्तस्य पदस्यावपरे छते सगागमो भवति ॥ राजँश्चित्रम् । भवाँस्तनोति । अवपरे किम् । सन्सरुः ॥**

**( सुबोधिनी )–नः सक् छते ॥ नान्तस्य पदस्य सक् स्यात् अवः परो यस्मात्सः अवपरस्तस्मिन् अवपरे छते ॥ किस्वादन्ते । सकोऽकारस्तूच्चारणार्थः । कस्यान्ते इत्याकांक्षायां पदस्यान्ते भवति । नस्यापदान्तत्वात् 'नश्चापदान्ते झसे' इत्यनुस्वारः । तस्य सगागमो भवतीति वचने तु नस्यानुस्वारो न स्यात् । सको नकारस्य भक्तत्वात् तस्य**

पदान्तत्वानपायात्। आगमाष्टित्कित्मितस्ते यस्य गुणीभूता यद्गुणीभूताः यस्य विशेषणीकृतास्तद्ग्रहणेन विशेष्यग्रहणेन कृत्वा ते आगमाः आचार्यैर्गृह्यन्ते अभ्युपगम्यन्ते । तद्यथा । सगागमः पदस्य विहितः । पदं विशेष्यम् । सगागमो विशेषणम् । पदग्रहणेन सक् गृह्यते । सक्पर्यन्तं पदमित्यर्थः ॥ पदस्येति किम् । हन्ति ॥ नान्तस्येति किम् । तट्टीकते ॥ छते किम् । भगवन् कुरु ॥ अवपरे छते किम् । सन्त्सरुः खड्गमुष्टिः ॥

( तत्त्वदी० )—नः सक् छते इति ॥ अत्र पदस्य सगागमः न तु नस्य । तथा सति नस्यानुस्वारो न स्यात् अपदान्तत्वाभावात् इत्याशयेनाह-नान्तस्येत्यादि ॥ पदस्येति किम् । हन्ति ॥ न इति किम् । तट्टकिते॥ छते किम् । भगवन्कुरु॥ अवपरे किम् । सन्त्सरुः। 'त्सरुः खड्गादिमुष्टिः स्यात्' इत्यमरः ॥

**( न प्रशानः ) प्रशान्तनोति ॥**

( सुबोधिनी )—न प्रशानः ॥ प्रशानिति नान्तस्य पदस्य सग् न भवत्यवपर छते ॥ प्रपूर्वात् शाम्यतेः क्विप् । 'अमान्तस्योपधाया दीर्घः' इत्यनेन दीर्घः । 'मो नो धातोः' इति नः । नस्यासिद्धत्वान्नलोपो न । प्रशाम्यतीति प्रशान् ॥

( तत्त्वदी० )—अत्र इत्याकृष्य तस्य व्यवस्थितत्वाश्रयणात् मस्थानिकस्य नस्य सग्नेत्याशयेनाह—न प्रशान इति ॥ प्रशान्तनोतीति ॥ 'शमु, उपशमे' इत्यस्मात् क्विपि 'अमान्तस्य क्वौ' इति दीर्घे 'मो नो धातोः' इत्यनेन नत्वे रूपम् ॥

**शे चक् वा ॥ नान्तस्य पदस्यावपरे शे वा चगागमो भवति ॥ भवाञ्छूरः-भवाञ्च्छूरः-भवाञ्च्शूरः भवाञ्शूरः ॥**

( सुबोधिनी )—शे चक् वा ॥ न इत्यनुवर्तते । नान्तस्य पदस्य चक् स्याद्वा शे ॥ पदस्येति किम् दंशः ॥ शे इति किम्। भवांश्चिनोति ॥ चक् वा इत्यत्र 'वाक्ये तु सा विवक्षामपेक्षते'इत्युक्तत्वाजवाभावः ॥ भवान् शूर इत्यत्र चगागमस्य कित्त्वात् पूर्वान्तत्वेन 'चपाच्छः शः' इति छत्वविकल्पः । पक्षे हसात्परस्य झसस्येति चलोपः । नकारस्यानुस्वारपरसवर्णौ अपदान्तत्वात् ॥ भवाञ्छूरः-भवाञ्च्छूरः भवाञ्च्शूरः-भवाञ्शूरः ॥ "ञ्छौ ञ्चछा ञ्चशा ञशाविति चतुष्टयम् । रूपाणामिह चक्छत्वचलोपानां विकल्पनात्॥" कुर्वंस्तिष्ठ । कुर्वञ्च्छेते। इत्यत्रापदान्तनकारस्य स्थानेऽनुस्वारचुत्वाभ्यां परत्वात्प्राप्तं णत्वं न । कस्मात् । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया बहिरङ्गयोः सक्चकोरसिद्धत्वात् ॥ अनंते इत्यन्तरङ्गे णत्वनिषेधे सति तच्छास्त्रम् सञ्च्शंभुरित्यादौ चोः कुरिति कुत्वमपि न । अन्तरङ्गे कुत्वे कर्तव्ये चुत्वचकारासिद्धत्वात् । कुत्वविधिस्तु वाग्भ्यां वक्ष्यतीत्यादावेकपदस्थे चवर्गे सावकाशः । 'चपाच्छः शः' अम्वयुक्ताच्छसादौ' इत्यादिनिर्देशात् ॥

(तत्त्वदी०)—शे चक्र वेति ॥ भवाञ्छूर इत्यादि ॥ "ञ्छौ ञचछा ञचशा ञशा-विति चतुष्टयम्। रूपाणामिह चकुछत्वचलोपानां विकल्पनात्॥" पदस्येति किम्। दंशः ॥ नान्तस्य किम्। पञ्चशः ॥ शे इति किम्। भवांश्चिनोति ॥ अत्र शीत्येव वक्तुमुचितम् मात्रालाघवात्। ननु कुर्वैस्तिष्ठ कुर्वञ्छेते इत्यत्र अपदान्तत्वान्नस्य चुत्वादनुस्वाराच्च परत्वाच्च णत्वं प्राप्नोति। सत्यम्। अनन्त इत्यन्तरंगं निषेधं प्रति वहिरंगयोश्चकुसकोरसिद्धत्वाश्रयणात् तच्छात्रमित्यत्रापि चुत्वे कृते कुत्वमप्यसिद्धत्वादेव न॥

**ङ्णनो ह्रस्वाद् द्विः स्वरे ॥ ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे पदान्ते ॥ प्रत्यङ्ङिदम् ॥ सुगण्णिह । राजन्निह ॥ ह्रस्वात्किम् । प्राङास्ते ॥ पदान्ते किम् । परमदण्डिनौ ॥**

(सुबोधिनी)—ङ्णनो ह्रस्वाद द्विः स्वरे ॥ ङ् च ण् च न् च ते ङ्णनः। पदान्ते इत्यनुवर्तते। ह्रस्वात्पराः पदान्ते स्थिताः ङ्णनः द्विः स्युः स्वरे परे ॥ ह्रस्वादिति किम्। प्राङ्आस्ते। प्राण् आस्ते। भवान् आस्ते॥ ङ्णन इति किम् आस्ते ॥ स्वरे किम्। प्रत्यङ् करोति। सुगण वदति। पचन्वदति॥ पदान्ते किम्। दण्डिनौ॥ ननु समिद्दण्डिनावित्यादा पूर्वपदस्येव चोत्तरखण्डस्यापि प्रत्ययलक्षणेन पदत्वात् नस्य द्वित्वं स्यात्। उच्यते। उत्तरखण्डस्य प्रत्ययलक्षणेन पदान्तकार्यं न 'एदोतोतः' 'वत्विनौ' इत्यादिनिर्देशात्। अत एव परमवाचौ परमगोदुहौ परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न भवन्ति॥ ननु अनश्च इत्यादौ नस्य द्वित्वं स्यात्। उच्यते। अनन्ते अनपीत्यादिज्ञापनान्न द्वित्वम्॥

(तत्त्वदी०)—ङ्णनो ह्रस्वाद् द्विः स्वरे इति ॥ ङ् च ण् च न् च ते ङ्णनः। ह्रस्वादिति किम्। प्राङ्आस्ते॥ स्वरे इति किम्। प्रत्यङ् करोति॥ पदान्ते इति किम्। दण्डिनौ॥ ननु समिद्दण्डिनावित्यत्र पूर्वपदस्येवोत्तरखण्डस्यापि प्रत्ययलक्षणत्वेन पदत्वात् नस्य द्विर्वचनं प्राप्नोतीति चेन्न। उत्तरपदस्य प्रत्ययलक्षणेन न पदान्तकार्यतेति 'एदोतोतः' इति ज्ञापनात्। अत एव नलोपोऽपि न। अनश्च इत्यादौ तु अनपीत्यादिज्ञापकाद्द्वित्वं न। नलोपस्तु अम्विधिसामर्थ्यान्न। द्विरिति क्रियावृत्तौ 'द्वित्रिचतुर्भ्यः सुः इति स्वन्तत्वादव्ययम्। क्रिया चात्रोच्चारणमेव। तथा च द्विरुच्चार्या इत्यर्थो बोद्धव्यः॥

**छः ॥ ह्रस्वात्परश्छकारो द्विर्भवति॥**

(सुबोधिनी)—छः॥ ह्रस्वादित्यनुवर्तते। छकारे अकार उच्चारणार्थः। तेन विच्छिन्नमित्यादि सिद्धयति॥

(तत्त्वदी०)—छ इति॥ अत्र स्वरे इत्यनुवर्त्य विभक्तिव्यत्ययेन स्वरात् इति बोध्यम्। पदान्ते वेत्यनुवर्तते। तच्च वाक्यभेदेन संबध्यते। विकल्पस्तु व्यवस्थितः। तेन पदान्ते दीर्घादाङ्माङ्वर्जे

ताद्वा ॥ स्वरादिति किम् । छत्रम् ॥ ' संयोगान्तस्य लोपः' इत्यत्र 'वावसाने' इत्यतो वेत्यपकृष्य तस्य व्यवस्थितत्वाश्रयणात् ।

**खसे चपा झसानाम्** ॥ तव छत्रम्-तव च्छत्रम् ॥

( सुबोधिनी )-खसे चपा झसानाम् ॥ झसानां चपाः स्युः खसे परे ॥ झसानामिति किम् । खन्सु ॥ खसे किम् । वेद्मि ॥

**( दीर्घाच्च )** ह्रीच्छः ॥

( सुबोधिनी )-दीर्घाच्च ॥ दीर्घात्परश्छकारो द्विः स्यात् ॥

**( पदान्ताद्दीर्घाद्वा )** लक्ष्मीछाया-लक्ष्मीच्छाया ॥

( सुबोधिनी )-पदान्ताद्दीर्घाद्वा ॥ पदान्ताद्दीर्घात्परश्छो वा द्विः स्यात् ॥

**( आङ्माङ्भ्यां नित्यम् )** आच्छादयति । माच्छिदत् ॥

( सुबोधिनी )-आङ्माङ्भ्यां नित्यम् ॥ पदान्ताद्दीर्घादित्यस्यापवादोऽयम् । आङ्माङ्भ्यां परश्छो द्विः स्यान्नित्यम् ॥

**( पुंसोऽवपरे खपे संयोगान्तस्य लोपो न )** पुंस्कोकिलः । पुंस्पुत्रः ॥ अवपरे किम् । पुङ्क्षीरम् ॥ खपे किम् । पुन्दासः ॥

( सुबोधिनी )-पुंसोऽवपरे खपे संयोगान्तस्य लोपो न ॥ पुंस्शब्दस्य सस्य लोपो न भवति । अवः परो यस्मात्सः अवपरस्तस्मिन् अवपरे खप ॥ 'संयोगान्तस्य लोपः' इति प्राप्तावयं निषेधः ॥ अवपरे किम् । पुंक्षीरम् । सलोपोऽत्र ॥ खपे किम् । पुंदासः । अत्रापि सलोपः ॥

( तत्त्वदी० )-कचिन्न इत्याशयेनाह ॥ **पुंसोऽवपर** इत्यादि ॥ तेन ख्यातौ वा सभिन्नस्य रान्न इत्यादि सिद्धम् ॥ **पुंस्कोकिल** इति ॥ पुमांश्चासौ कोकिलश्च सः ॥

**( ख्याधातौ वा )** पुंख्यानम्-पुङ्ख्यानम् ॥

( सुबोधिनी )-ख्याधातौ वा ॥ पुंस्शब्दस्य सकारस्य लोपो वा भवति । ' चक्षिङः ख्याञ्' इति ख्याधातौ परे ॥ पुंख्यानमिति । चक्षिङो ल्युटि रूपम् ॥

**मोऽनुस्वारः** ॥ मकारस्यानुस्वारो भवति हसे पदान्ते ॥ तं हसति । पटुं वृथा ॥ पदान्ते किम । गम्यते ॥ हसे किम् । किमत्र ॥

( सुबोधिनी )-मोऽनुस्वारः ॥ पदान्ते इत्यनुवर्तते । पदान्ते मोऽनुस्वारः स्यात् हसे परे ॥ पदान्ते किम् । गम्यते ॥ म इति किम् । भवान्हसति ॥ हसे किम् । फलमस्ति ॥ म इत्यत्राकार उच्चारणार्थः ॥ अनुस्वार इति पूर्वाचार्याणां संज्ञा ॥

( तत्त्वदी० )-**मोऽनुस्वार** इति ॥ पदान्ते किम् । गम्यते ॥ मकारस्य किम् ॥ भवान् हसति ॥ हसे इति किम् । फलमस्ति ॥ अत्र लघुभाष्यम् । ननु 'मोम्' इति सूत्र्यताम् । अत्राकार उच्चार-

णार्थः । ततः परस्यादेशः स्यादिति चेत् सत्यम् । संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येवमर्थमिदम् ॥ अनुस्वार इति प्राचां संज्ञा । तेन सम्राडिति सिद्धम् । वस्तुतस्तु 'मोम्' इति कर्तुं शक्यम् 'अम्शसोः इत्यादिनिर्देशेनास्यानित्यत्वज्ञापनात् सम्राडित्यादिसिद्धम् ॥ अत्रेदमवधेयम् । 'मोम्' इति कृते ओ अवित्यादिष्विव म इत्यस्य प्रथमान्तत्वमाशंक्य ओकारस्य विधेयत्वशंकाया अनिवार्यत्वादनुस्वारस्य तत्संदेहनिराकरणायावश्यं वक्तव्यत्वात् । यत्तु अत्र म् इति योगं विभज्य तत्र सकं चानुवर्त्य क्वचिन्मस्य समागम इति व्याख्येयम् । तेन पुंस्कोकिलः पुंस्पुत्र इत्यादि सिध्यतीत्युक्तम् ।तत्तु पुंसोऽवपरे खपे संयोगान्तस्यालोप इति त्वोक्त्या विरोधादुपेक्ष्यम् ॥

**नश्चापदान्ते झसे ॥** नस्य मस्य चापदान्ते वर्तमानस्यानुस्वारो भवति झसे हकारे च परे ॥ यशांसि । पुंभ्याम् । स्वनड्वांहि ॥ अपदान्ते किम् । ब्रह्मन् पाहि ॥ झसे किम् । तन्यते ॥

( सुबोधिनी )–**नश्चापदान्ते झसे ॥** चकारो मकारस्य समुच्चयार्थः। अपदान्ते नस्य मस्य चानुस्वारः स्यात् झसे परे ॥ अपदान्ते किम् । भवान् भाति॥झसे किम् । मन्यते । यम्यते ॥

( तत्त्वदी० )–**नश्चापदान्ते झस** इति ॥ चकारो मकारस्य समुच्चयार्थः । अन्यथा अपदान्ते नस्यैव स्यात् ॥ अपदान्ते किम् । भवान् याति । अत्रापदान्तग्रहणादेतत्सूत्रपर्यन्तः पदान्त इत्यधिकारो बोध्यः ॥ झस इति किम् । मन्यते । यम्यते । अत्र हो झभा इत्यतो हकारोऽनुवर्त्यः स च विभक्तिविपरिणामेन सप्तम्यन्तो बोध्य इत्याशयेनाह–**हकारे** चेति ॥

**यमा यपेऽस्य ॥** अपदान्ते वर्तमानस्यानुस्वारस्य यमा भवन्ति यपे परे ॥ अस्य यपस्य सवर्णाः ॥ शान्तः । अङ्कितः । अञ्चितः । कुण्ठितः । गुम्फितः ॥

( सुबोधिनी )–**यमा यपेऽस्य ॥** अस्येति यपपरामर्शार्थम् । अनुस्वारस्यानुवृत्त्यैव लाभात्।अपदान्ते अनुस्वारस्य यमा भवन्ति यपे परे॥ते यमा अस्य यपस्य सवर्णा भवन्तीत्यर्थः। सानुनासिकस्यानुस्वारस्य सानुनासिका एव यमाः स्युः । यमा इति बहुवचनं जातौ ज्ञेयम् । कुण्डं रथेनेत्यत्रानुस्वारस्य पाक्षिको यमो न रकारस्यानुनासिकत्वाभावात् ॥ यपे किम् । आक्रंस्यते।स्वनड्वांहि॥अनुस्वारस्येति किम् । राजन् गच्छ । गम्यते ॥ 'अकि, पदे लक्षणे च' इति चुरादिण्यन्तात् क्तः । 'सेटोः क्तक्त्वोर्ञिलोपः' । इति ञेर्लोपः । अनेनानुस्वारस्य ङः । 'अकि, लक्षणे' इत्यस्माद्वाक्तः । नुमोऽनुस्वारे परसवर्णेन ङः । अङ्कितः ॥ अञ्चेः पूजायामिट् इतीट् । पूजार्थस्याञ्चतर्नेति नलोपो न । अञ्चितः ॥ 'कुठि, प्रतिघाते' क्तः । नुमोऽनुस्वारे परे परसवर्णेन णः। कुण्ठितः ॥'शमु उपशमे' क्तः । 'दान्तादयो वा निपात्यन्ते' इति निपातनादिडभावः । 'ञमान्तस्योपधाया दीर्घः।''क्कौ' इति दीर्घः । मस्यानुस्वारे परसवर्णेन नकारः । शान्तः ॥ 'गुम्फ-

ग्रन्थे' क्तः । मस्यानुस्वारे परसवर्णेन मः । गुम्फितः ॥ ननु कुर्वन्तीत्यत्रानेन कृतस्य नस्य णत्वं कस्मान्न । उच्यते । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परसवर्णस्यासिद्धत्वान्नणत्वम् ॥

( तत्त्वदी० )—**यमा यपेऽस्येति** ॥ अस्येति किमर्थम् । अनुस्वारपरामर्शार्थं चेन्न । तस्यानुवृत्त्यैव लाभात् । न च प्रथमान्तस्यानुवृत्तस्य अनुस्वारे इत्यस्य षष्ठीविपरिणामार्थमिति वाच्यम् । यमा इत्यादेशापेक्षया अर्थात् षष्ठीविपरिणामसंभवात् । एवं तर्हि यपपरामर्शार्थम् इत्यभिप्रेत्याह—**अस्य यपस्य सवर्णा** इति ॥ अनुनासिकस्यानुस्वारस्य सदृशयपस्य सवर्णा ञमा भवन्तीत्यर्थः॥ तेन रेफो न भवति अनुस्वारसादृश्याभावात् । न च सादृश्याभावेऽपि वचनात् स्यादिति वाच्यम् । यपे इत्यस्य जातिपरत्वेन यपजातीये सवर्णे यमजातीयस्यानुस्वारसदृशस्य विधानेन वचनस्य चरितार्थत्वात् ॥ यत्तु यमोऽस्येति सूत्रं युक्तम् । अनुस्वारेण झसे हसे इति वाक्षेपणीयम् । अनुस्वारस्य सदृशझसहसयोः सवर्णे आदेशो भविष्यतीति व्यर्थमिह यपे इति । शषसहेषु तु नातिव्याप्तिः तेषां यमे सवर्णाभावादिति । तत्रेदमवधेयम् । हसाक्षेपेणैव तदन्तर्गतस्य झसस्याक्षेपस्याशक्यत्वात् । किं च अनुवृत्तिलब्धेनानुस्वारेण हसाक्षेपे पदान्तस्याक्षेपाच्च ॥

**वा पदान्तस्य ॥ पदान्ते वर्तमानस्यानुस्वारस्य यमा वा भवन्ति यपे परे॥अस्य यपस्य सवर्णाः ॥ त्वङ्करोषि–त्वं करोषि । तन्तनोति–तं तनोति । सँय्यन्ता–संयंता । सव्ँवत्सरः संवत्सरः । यल्ँलोकम्-यं लोकम् ॥**

( सुबोधिनी )—**वा पदान्तस्य** ॥ अत्रानुस्वारस्यानुनासिका एव यमा वा स्युः ॥

( तत्त्वदी० )—**वेति** ॥ द्वितीयसूत्रोपन्यासासामर्थ्यादेतत्पदान्तविषयमित्याशयेनाह—**पदान्ते वर्तमानस्येति** ॥

**( मो राजि समः क्वौ ) क्विबन्ते राजतौ परे समो मस्य म एव स्यात् सम्राट् ॥**

( सुबोधिनी )—**मो राजि समः क्वौ**॥क्विबन्ते राजतौ परे समो मस्य म एव ॥ मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम् ॥ राजतौ किम् । गमादीनां ञमस्य इति मलोपे ह्रस्वस्य इति तुक् । संपत् ॥ सम इति किम् । इदं राट् ॥ क्विबन्ते इति किम्। संराजितव्यम् । संराजते इति । राजृ दीप्तौ । संपूर्वादस्माद्वर्तमाने क्विप् । षत्वडत्वचपत्वानि । सम्राट् ॥

**( यवलमनपरे हकारे मस्य यवलमना वा ) किं ह्यः-किय्ँह्यः । किं ह्वलयति–किव्ँह्वलयति । किं ह्लादयति–किल्ँह्लादयति।किं ह्मलयति-किम् ह्मलयति । किं ह्नुते किन् ह्नुते ॥**

( सुबोधिनी )-यवलमनपरे हकारे मस्य यवलमना वा ॥ यश्च वश्च लश्च मश्च नश्च ते यवलमनाः यवलमनाः परे यस्मात् सः यवलमनपरस्तास्मिन्यवलमनपरे हकारे मस्य यवलमना वा भवन्ति ॥ 'ह्वल, ह्मल, संचलने' । 'हुङ्, अपनयने ॥'

( तत्त्वदी० )-वेति व्यवस्थितो विकल्प इत्यभिप्रेत्याह-यवलमनपरे इति ॥ हकारे इति विशेष्यम् । यश्च वश्च लश्च मश्च नश्च ते ते परे यस्य स तथा तस्मिन् ॥ किं ह्य इति ॥ ह्योऽतीतेऽह्नि । किं ह्वलयतीत्यादि ॥ 'ह्वल, ह्मल, चलने' । 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति मित्त्वाद्ध्रस्वत्वम् ॥ 'हुङ्, अपह्नवे । अदादिः । 'ह्लादी, सुखे ।' कुर्वन्तीत्यत्र नस्य णत्वं तु 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वात् न । वेति व्यवस्थितविभाषाश्रयणात् ॥ शसे चपस्य द्वितीया वेति ॥ टनात्सस्य वा धुट् । शसे ङ्णोः कुक्टुकौ वा । पकारे परे नॄन्नकारस्य नूस् वा इत्यादि संगृहीतम् ॥

**( शसे चपस्य द्वितीया वा )** वथ्सरः-वत्सरः । अफ्सरः-अप्सरः ॥

( सुबोधिनी )-शसे चपस्य द्वितीया वा ॥ वर्गप्रथमानां द्वितीया भवन्ति शसे परे ॥

**( न पदान्ते )** तत्साधुः ॥

( सुबोधिनी )-न पदान्ते॥ पदान्ते स्थितानां वर्गप्रथमानां द्वितीया न भवन्ति ॥

**( कुक्टुक्वर्जितस्य विभक्तौ न )** भवत्सु ॥

( सुबोधिनी )-कुक्टुक्वर्जितस्य विभक्तौ न ॥ चपस्य विभक्तौ द्वितीया न स्युः कुक्टुकोश्च द्वितीयाः स्युर्विभक्तौ परे ॥

**( टनात्सस्य वा धुट् )** षट्त्सन्तः-षट् सन्तः । सन्त्सः-सन्सः ॥

( सुबोधिनी )-टनात्सस्य वा धुट् ॥ टश्च नश्च तयोः समाहारः टनं तस्मात टकारनकाराभ्यां परस्य सकारस्य धुट् वा स्यात् ॥ धुटश्चपत्वेन तकारः ततः शसे चपस्येत्यनेन तकारस्य थो न चपत्वस्यासिद्धत्वात् । षट्त्सन्तः ॥

**( शसे ङ्णोः कुक्टुकौ वा )** प्राङ् षष्ठः-प्राङ्क्षष्ठः-प्राङ्ख् षष्ठः । सुगण साधुः-सुगणट् साधुः-सुगणठ् साधुः ॥

( सुबोधिनी )-शसे ङ्णोः कुक्टुकौ वा ॥ ङकारणकारयोः कुक्टुकावागमौ वा स्तः शसे परे ॥ कुगभावे प्राङ् षष्ठः । कुगागमे प्राङ्क्षष्ठः । कुको द्वितीये प्राङ्ख् षष्ठः ॥

( तत्त्वदी० )-ङ् च ण् च ङ्णौ तयोः ङस्य कुक् णस्य टुक् भवतीत्यर्थः वर्ग्यत्वात् ॥

**( पकारे परे नॄन् नकारस्य नूस् वा )**

( सुबोधिनी पकारे परे नॄन्नकारस्य नूस् वा ॥ नॄनित्यस्य नकारस्य न्स आदेशः स्याद्वा पकारे परे ॥ अकार उच्चारणार्थः । तेन नॄः पुनाति इत्यादि सिद्धचति

**स्रोर्विसर्गः ॥ सकाररेफयोर्विसर्गो भवत्यधातो रसे पदान्ते च ॥**

( सुबोधिनी )—स्रोर्विसर्गः ॥ स् च र् च स्रौ तयोः स्रोः । पदान्ते स्रोर्विसर्गः स्यात्॥अधातो रसे पदान्ते च॥अधातोः स्रोर्विसर्गः स्याद्रसे परे पदान्ते च॥धात्वधातुसाधारणमिदम् ॥ पदान्ते किम् । स्यात् । ब्रूयात् । पयसी वारी ॥ रसे किम् । चातुर्यम् ॥ सुप्प्रत्यये परे रस्य विसर्गो न चतुर्ष्विति निर्देशात् । तेन गीर्षु वार्षु पूर्षु इत्यादि सिद्ध्यति । नार्पत्यः भार्गवः इत्यादौ तु बहिरङ्गाया वृद्धेरसिद्धत्वान्न विसर्गः । वर्ष्म वर्त्मेत्यादौ कर्तृसाधनयोरिति निर्देशान्न विसर्गः ॥

( तत्त्वदी० )—स्रोर्विसर्गः ॥ पदान्ते वर्तमानयोः स्रोर्विसर्गः स्यात् । धात्वधातुसाधारणमिदम् । तेन अबिभः देवः प्रातरित्यादि सिद्धम् । अव्ययादित्यस्य परत्वात्सिलुकि नात्र रसपरत्वम् ॥ पदान्ते किम् । धुर्यात् । पयसी । नाम्नश्च रसपरयोः स्रोर्विसर्गः स्यात् । तेन वेधोभ्यां दोःस्वित्यादि सिद्धम् ॥ सौ तु प्रथमं सिलोपाय रत्वाद्विसर्गे कृते तस्य हसपरत्वाभावेन सिलोपाभावे नित्यं विसर्गद्वयश्रवणप्रसंगः । अथ वेधोभ्याम् इत्यत्र द्वयोः सकारयोरेको विसर्गो भविष्यति सत्वजातेनाश्रयणादिति चेत् । श्रृणु । प्रियचत्वाः गीरित्यादौ रसपरयोरेकजात्यभावादुक्तदोषतादवस्थ्यमिति केचित् तन्न 'प्रायशो दृश्यताम् 'इति वचनात् ॥ क्वचित्पूर्वेणापि परबाध इष्टसिद्ध्यर्थम् ॥ रसे किम् । चीवरान्वस्तेः क्वाचित्क्विब्विशिष्टस्य नामसंज्ञा भवति लुप्तेऽपि क्विपि एकदेशविकृतन्यायेन नामत्वमस्ति । तेन स्रुवोस्यामित्यादौ विसर्गः सिध्यति । स् च र् च स्रौ तयोः । अत्र रेफो निर्दिष्टो न तु रेफभूत ऋकारः रेफस्थानिकविसर्गस्य रादेशविधाकयस्य र इति सूत्रस्य वैयर्थ्यापत्तेः कर्तृकार्ययोरित्यादिनिर्देशाच्च । न ह्यत्र ऋकारस्य विसर्गो निर्दिष्टः । प्रातः पाशमित्यादावुभयथा विसर्गः । नामसंज्ञाप्रवृत्तिकाले शर्त रेफस्य सुपि न विसर्गः चतुर्ष्विति ज्ञापकात् । तेन गीर्ष्वित्यादि सिद्ध्यति । नार्पत्य इत्यत्र तु बहिरङ्गाया वृद्धेरसिद्धत्वान्न विसर्गः । वर्ष्म इत्यादौ न विसर्गः कर्तृसाधनयोरिति निर्देशादितिदिक् ॥

**कुप्वोः ᳲक ᳲपौ वा ॥ कवर्गपवर्गसम्बन्धिनि खसे परे विसर्गस्य ᳲक ᳲपौ वा भवतः ॥ कपावुच्चारणार्थौ । नॄं ᳲ पाहि—नॄंः पाहि—नॄन् पाहि ॥ इति हससंधिः ॥**

( सुबोधिनी )—कुप्वोः ᳲक ᳲपौ वा ॥ आदेशनिमित्तयोर्यथाक्रममत्रास्ति । आदेशे ककारपकारावुच्चारणार्थौ । केवलयोर्जिह्वामूलीयोपध्मानीययोरुच्चारणासंभवात् । किं च । ककारखकारयोः परत ᳲकः स्यात् । पकारफकारयोश्च ᳲपः स्यात् ॥ कुप्वोरिति किम् । कश्चारः ॥ वाग्रहणात्पक्षे विसर्गः । विसर्जनीयस्य स इत्यस्यापवादोयम् । उपध्मानीये नॄं ᳲ पाहि । विसर्गे नॄंः पाहि । नभावे नॄन्पाहि ॥ ॥ इति सुबोधिन्यां हससंधिः ॥

( तत्त्वदी० )-**कुप्वोः ᳲकᳲपौ वेति** ॥ कुश्च पुश्च कुपू तयोः । अत्रादेशनिमित्तयोर्यथाक्रमम् आदेशे कपावुच्चारणार्थौं केवलयोरुच्चारणासंभवात्। कखयोः ᳲकः पफयोःᳲपः । अन्यत्रोत्तरविधिभिर्बाधनात् ॥

श्रीविद्यानगरस्थायी पौत्रो रामकरस्य हि । हससंधेर्व्यधाद्व्याख्यां स हि लोके-शसंज्ञकः ॥

इति तत्त्वदीपिकायां हससंधिः ॥

---

# अथ विसर्गसंधिः ।

## विसर्जनीयस्य सः ॥ खसे परे ॥ कस्तनोति ॥

( सुबोधिनी )-**विसर्जनीयस्य सः ॥** विसर्गस्य सकारः स्यात् खसे परे ॥ कस्तनोतीत्यत्र विसर्गस्य सत्वे कृते तस्य पुनर्विसर्गादेशो न असिद्धत्वाद्विधिसामर्थ्याद्वा॥

( तत्त्वदी० )-**विसर्जनीयस्य स** इति ॥ आसंधिसमाप्तीदं षष्ठ्यन्तमधिक्रियते । पारिशेषात् खसे एवास्य प्रवृत्तिः । अन्यत्र तूत्तरसूत्रैस्तत्र तत्र बाधः ॥ विसर्गस्य स इति नोक्तम् । पर्यायशब्दानां गौरवलाघवयोरनपेक्षणात् ॥ यत्तु प्राचामुपहासार्थं विसर्जनीयादिग्रहणं प्राञ्चो लाघवं न जानन्तीत्युक्तम् । तत्रेदमवधेयम् । प्राञ्चोऽत्र के विवरणकर्तारः सूत्रकर्तारो वा । आद्ये सूत्रस्थगौरवेण तेषामुपहासासंभवात् । अन्ते सरस्वत्याः सूत्रकर्तृत्वेन तदुपहासे प्रत्यवायसंभवात् । 'न निन्देन्मनसा वाचा सर्वव्याधिपराङ्मुखः । इति निषेधदर्शनात् । अः सः इति सूत्रणीयम् । यद्विसर्जनीयस्येत्युक्तं तत्संज्ञापूर्वकत्वेन सस्यानित्यबोधनार्थम् । तेन कः साधुरित्यादि सिद्धम् । ननु कुप्वोः ᳲकᳲ पावित्यस्य वैकल्पिकत्वात् पक्षे सत्वं कुतो नेति चेन्न।'शेषाः कार्ये' इति निर्देशेन ᳲकᳲ पाभ्यामुक्ते पक्षे सत्वप्रवृत्त्यभावस्य ज्ञापनात् । अत्र वेत्यनुवृत्तस्य व्यवस्थितविभाषाश्रयणात् शसे वा सकारः ॥

**( शसपरे खसे विसर्जनीयस्य विसर्ग एव ) कः त्सरुः । घनाघनः क्षोभणः ॥**

( सुबोधिनी)-**शसपरे खसे विसर्जनीयस्य विसर्ग एव ॥** शसः परो यस्मात्स शपरस्तस्मिन् शसपरे खसे विसर्जनीयस्य विसर्जनीय एव भवति न त्वन्यत् ॥ यदि तु शसपरेखसे नेत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धेऽपि ᳲ कᳲ पौ स्याताम् । विसर्गवचनात्तु विकारमात्रमपि निषिध्यते । तेन वासः क्षौमम् अद्भिः प्सातमित्यादौ विसर्ग एव ॥

( तत्त्वदी० )-**शसपरे खसे** इत्यादि ॥ शसः परो यस्मात्स शसपरः तस्मिन् ॥

**शसे वा ॥ कश्शूरः-कः शूरः । कंष्षण्ढः-कः षण्ढः । कस्साधुः-कः साधुः ॥**

( सुबोधिनी )-**शसे वा ॥** शसे परे विसर्जनीयस्य विसर्जनीय एव वा भवति ॥ पक्षे सः । कस् शूरः श्चुत्वं कश्शूरः । कः षण्ढः कस् षंढः ष्टुत्वं कष्षण्ढः ॥

**( खपपरे शसे विसर्गस्य लोपो वा ) हरिस्फुरति–हरिः स्फुरति–हरिस्स्फुरति । कुप्वोः ⨯ क ⨯ पौ वा । क ⨯ करोति कः करोति । क ⨯ पचति कः पचति ॥**

( सुबोधिनी )–खपपरे शसे विसर्गस्य लोपो वा । खपः परो यस्मात्सः खपपरः तस्मिन्खपपरे शसे विसर्जनीयस्य लोपो वा भवति ॥ वाग्रहणात्पक्षे शसे वेति विसर्गे सत्वे च त्रैरूप्यम् । हरिस्फुरति–हरिः स्फुरति–हरिस्स्फुरति ॥

( तत्त्वदी० )–खपपरे इति ॥ खपः परो यस्मात्सः खपपरः तस्मिन् । एतत्सर्वं व्यवस्थितविभाषाश्रयणादेव । कुप्वोः ⨯ क ⨯ पाविति व्याख्यानं पूर्वोक्तमेव ॥

**( वाचस्पत्यादयो निपातात्सिध्यंति ) वाचस्पतिः । बृहस्पतिः । तस्करः । कौतस्कुतः । कान्कान्–कांस्कान् । कस्कः । भास्करः । पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति । नमस्करोति–नमःकरोति । पुरस्करोति । निष्प्रत्यूहम् । आविष्कृतम् । तिरस्कर्ता–तिरःकर्ता । द्विष्करोति–द्विः करोति । त्रिष्करोति–त्रिः करोति । चतुष्करोति–चतुः करोति । चतुष्कपालम् । सर्पिष्करोति–सर्पिः करोति । धनुष्करोति–धनुः करोति । सर्पिष्कुंडिका । अयस्कारः । अयस्कामः । अयस्कुम्भः । अयस्पात्रम् । अयःसहिता-कुशा–अयस्कुशा । अयस्कर्णी । अधस्पदम् । शिरस्पदम् ॥ आकृतिगणोऽयम् ॥ अविहितलक्षणः सकारो वाचस्पत्यादिषु द्रष्टव्यः ॥**

( सुबोधिनी )–वाचस्पत्यादयो निपातात्सिध्यन्ति ॥ सिद्धस्वरूपोच्चारणं निपातस्तस्मादेते शब्दाः सिद्धिं यान्ति ॥ वाचः पतिरित्यत्र षष्ठ्या अलुक् । निपातनाद्विसर्गस्य सत्वम् । वाचस्पतिः ॥ तत् चौर्यं करोतीति तकारस्य सत्वं निपातनात् । तस्करः ॥ बृहतां पतिरिति निपातनात् तकारस्य सत्वम् बृहस्पतिः ॥ कुतःकुत आगत इत्यत्र 'त्यतनौ' इत्यनेनाव्ययात्त्यप्प्रत्यये प्राप्ते गणपाठसामर्थ्यादण्प्रत्ययष्टिलोपश्च । निपातनाद्विसर्गस्य जिह्वामूलीयाभावः । कौतस्कुतः ॥ कान्कानिति । अत्र एकः किंशब्दः प्रश्ने द्वितीयो निन्दार्थे । समागमाभावोऽत्र भिन्नार्थत्वात् । गणे चाम्रेडितस्यैव ग्रहणम् । कान् कुत्सितान् पश्यसीत्यर्थः । कांस्कान् इति । अत्र आम्रेडितत्वात्तु पूर्वनकारस्य सगागमो भवति निपातनात् । कांस्कान् । कान्कान् पश्यतीत्यर्थः ॥ कःक इति कस्कः जिह्वामूलीयाभावोऽत्र ॥ भासः करोतीति भास्करः जिह्वामूलीयाभावः ॥ कुत्सितं पय इति पयस्पाशम् । कुत्सायामिति पाशः ॥ ईषन्यूनं यश इति यशस्कल्पम् ।

ईषदसमाप्ताविति कल्पः । कुत्सितं यश इति कुत्सितेऽर्थे कः यशस्कम् ॥ आत्मनो यश इच्छतीति काम्यश्चेति काम्यप्रत्ययः । इत्यादौ विसर्गस्य जिह्वामूलीयोपध्मानीयाभावो निपातनात् ॥ कुत्सितं सर्पिरिति सर्पिष्पाशम् ॥ ईषन्न्यूनं सर्पिरिति सर्पिष्कल्पम् ॥ कुत्सितं सर्पिरितिसर्पिष्कम् ॥ आत्मनः सर्पिरिच्छतीति सर्पिष्काम्यति । इत्यादौ विसर्गस्य षत्वं निपातनात् ॥ नमस्करोति–नमःकरोति । इत्यत्र विकल्पेन सकारविसर्गौ निपातनात्॥ पुरस्करोतीत्यत्र जिह्वामूलीयाभावः ॥ निष्प्रत्यूहम्, आविष्कृतम्, दुष्कृत-मित्यादौ विसर्गस्य षत्वं निपातनात् ॥ तिरस्कर्ता–तिरःकर्तेत्यत्र विकल्पेन सकार-विसर्गौ ॥ द्वौ वारौ करोतीति द्विष्करोति–द्विःकरोति ॥ त्रीन् वारान्करोतीति त्रिष्करोति–त्रिःकरोति ॥ चतुरो वारान् करोति चतुष्करोति–चतुःकरोति । द्वित्रिचतुर्भ्यः इति सुः ॥ चतुर्षु कपालेषु संस्कृत इत्यर्थे अण् । द्विगुसमासेऽणो लुक्च । चतुष्कपालः–चतुःकपालः ॥ सर्पिष्करोति–सर्पिःकरोति ॥ धनुष्करोति–धनुःकरोति । इत्यादौ विकल्पेन विसर्गस्य षत्वविसर्गौ निपातनात् ॥ सर्पिषो घृतस्य कुण्डिकेति सर्पिष्कुंडिका । नित्यं षत्वमत्र ॥ अयसः कार इत्ययस्कारः ॥ अयसः काम इत्ययस्कामः ॥ अयसः कुम्भ इत्ययस्कुम्भः॥ इत्यत्र विसर्गस्य जिह्वामूलीयाभावः ॥ अयसः पात्रमित्ययस्पात्रमित्यत्रोपध्मानीयाभावः ॥ अयःसहिता कुशेत्ययस्कुशा । वेदे औदुम्बरशंकुं कुशेति व्यवहरंति । अयोविकारे तु कुशीति ॥ अय इव कर्णौ यस्याः सा अयस्कर्णी । नासिकोदरेतीप् । अत्र जिह्वामूलीयाभावः ॥ पदस्याध इत्यधस्पदं शिरसः पदमिति शिरस्पदमित्यत्रोपध्मानीयाभावः ॥ आकृत्या स्वरूपेण गण्यते यः स आकृतिगण इति ॥

( तत्त्वदी० )–अत्रापि वेत्यस्य व्यवस्थितत्वात् अनेकार्थलाभ इत्याशयेनाह–**वाचस्पत्याद्य** इति ॥ बृहस्पतिरित्यत्र तकारस्य सकारः, तस्कर इत्यत्र तकारस्य ॥ एवमन्येऽपि ॥

**रोऽरात्रिषु ॥ अह्नो विसर्जनीयस्य पदान्ते रो भवति न तु रात्र्यादिषु ॥ अहर्गणः । अहरहः ॥ अरात्रिषु किम् । अहोरात्रः । अहोरूपम् । अहोरथन्तरम ॥**

( सुबोधिनी )–**रोऽरात्रिषु** ॥ पदान्तेऽहन्शब्दस्य विसर्गस्य रः स्यात् रात्र्यादिवर्जितेषु परतः ॥ अरात्रिष्विति बहुवचनमादिशब्दार्थे । तेन रात्रिरात्ररूपरथन्तराणि रात्र्यादयः ॥ अह्नां गण इत्यहर्गणः । अह्नः इति नस्य रः ॥ अहः अहः इत्यहरहः । वीप्सायां द्वित्वम् ॥ अहश्च रात्रिश्चानयोः समाहार इत्यहोरात्रः । समासान्तोऽप्रत्ययोऽत्र । 'रात्राह्नाहान्ताः' इति पुंस्त्वम् । अहो रात्रिरेषा । इदमह एषा रात्रिरस्तीत्यर्थः । प्रशस्तमह इत्यहोरूपम् । प्रशंसायामिति रूपः ॥ अहोरूपः । गुणवाचको रूपशब्दोऽप्यत्र ॥ रथन्तरं सामवेदसंज्ञा । अहोरथन्तरम् एषु विसर्गस्य उत्वं तत ओत्वम् ॥ पदान्ते किम् । अहोभ्याम ॥

( तत्त्वदी० )-रोऽरात्रिष्विति ॥ अरात्रिष्विति बहुवचनात् रात्र्यादिर्गृह्यते ॥ अहोरात्र इति ॥ एकदेशविकृतस्यानन्यवत्त्वाद्रात्रशब्दस्यापि ग्रहणम् ।रात्राह्नाहान्ताः पुंसि इति नियमात्पुंस्त्वम् । गतमहो रात्रिरेषेति मुख्यः प्रयोगः ॥

**अतोऽत्युः॥ अकारात्परस्य विसर्जनीयस्योकारो भवत्यति परे॥ कोऽर्थः॥**

( सुबोधिनी )-अतोऽत्युः ॥ आदबे लोपश् इत्यस्यापवादोऽयम् । अतः परस्य विसर्गस्य उत्वं स्यादति ॥ अत इति किम् । अग्निरत्र ॥ तपरः किम् । देवा अत्र ॥ सुस्रोतः ३ अत्र । दूराद्धाने इति प्लुतः॥अतीति किम् । देव इह॥तपरः किम्।देव आगतः॥तिष्ठतु पयः अग्निदत्तेत्यत्र गुरोरनृत इति प्लुतः॥विसर्गस्य उत्वे ओत्वे च 'एदोतोतः 'इत्यल्लोपः कोर्थः ॥

( तत्त्वदी० )-अतोत्युरिति ॥ अत इति किम् । हरिरत्र ॥ तपरः किम् । देवा अत्र ॥ अतीति तपरः किम् ।देवआगतः॥विसर्गस्येति किम् । राममनु।'आदबे लोपश्' इत्यस्यापवादोऽयम् ॥

**हबे ॥ अकारात्परस्य विसर्जनीयस्योकारो भवति हबे परे॥ देवो याति । मनोरथः ॥**

( सुबोधिनी )-हबे ॥ अत इत्यनुवर्तते । अतः परस्य विसर्गस्य उत्वं स्यात् हबे ॥ 'आदबे लोपश्' इत्यस्यापवादोऽयम् ॥ अतः किम् । वायुर्वन्द्यः ॥ तपरः किम् । वेधा वन्द्यः ॥ हबे किम् । देवः पश्यति ॥

( तत्त्वदी० )-हबे इति ॥ लोपशोऽपवादः॥अतः किम् । भानुर्वन्द्यः ॥ तपरः किम् । वेधा नम्यः ॥ हबे किम् रामः कर्ता ॥ अत्र लघुभाष्यम् । अतोद्धबे उरित्येकयोगो न क्ृतोऽस्यानित्यत्वज्ञापनाय । तेन उषर्बुध इत्यादि सिद्धम् । अत्रेदमवधेयम् । 'कप्वाᳫकᳫपौ वा' इत्यस्य व्यवस्थितत्वाश्रयणेनैव वाचस्पत्यादीनां सिद्धत्वेनोषर्बुध इत्यत्रापि रत्वसिद्धेरनित्यत्वज्ञापनस्यानुचितत्वात् । किं च ज्ञापितेऽप्यस्यानित्यत्वे 'आदबे लोपश्, इत्यस्याप्राप्तौ रेफार्थयत्नस्य त्वयाप्यभ्युपगमात् ॥

**आदबे लोपश् ॥ अवर्णात्परस्य विसर्जनीयस्य लोपश भवत्यबे परे॥ देवा अत्र । वाता वान्ति । देवा इह ॥**

( सुबोधिनी )-आदबे लोपश् ॥ आदिति पञ्चम्यन्तम् । न तु तपरत्वम् । दिव औ इत्यादिनिर्देशात् ॥ अबे किम् । देवाः सन्ति ॥

( तत्त्वदी० )-आदबे लोपशिति । नन्वाद्ग्रहणं किमर्थम् । न चेकारादिनिवृत्त्यर्थं 'नामिनोरः' इति रेफेण बाधितत्वात् । न च हसव्यावृत्त्यर्थं हसाद्विसर्गस्यासंभवात् । तस्मादुत्तरार्थमेव ॥ नन्वबग्रहणं किमर्थम् । न च हबग्रहणाननुवृत्त्यर्थं ब्रुव आह पूर्व उपधेत्यादिनिर्देशैस्तज्ज्ञापनात्॥ नाप्युत्तरार्थम् । असंदेहार्थं लाववार्थम् तत्रैवाकारिष्यत्॥ नाप्यवसानबाधनार्थं ज्ञापकादेव तत्राप्यस्याप्रवृत्तेः॥ तथाहि । यदाप इति सिलोपं शास्ति तज्ज्ञापयति नानेनावसाने लोपश् भवतीति । अन्यथा सेर्विसर्गलोपशोः कृतयोर्गङ्गेत्यादिसिद्धौ किं सिलोपविधानेन । ननु लोपशि सति गंगात्रेत्यादौ

संधिर्न स्यादतो लोपविधानं न ज्ञापकमिति चेन्न। यस्मिन् स्वरे परे लोपश् तेन सह संधिर्नेति ज्ञेयम्। वस्तुतोऽवसानेतिप्रसंगवारणार्थमेवावग्रहणम् ॥ ननु 'आद्योऽवे' इत्येव सूत्र्यतां स्वरे यत्वं वेति तु न कर्तव्यम्। देव इहेत्यादौ यकारे 'य्वोर्लोपश् वा' इत्यनेन लोपशि कृते रूपसिद्धेः। न च तत्राया-द्यनुवर्तनादस्य कथं लोपश् इति वाच्यम्। यात्पूर्वमवर्णं गृहीत्वा अय् इत्यादिरूपसंभवात् लक्षणप्रतिपदोक्तयोः परिभाषायास्तु अनित्यत्वात्। उच्यते। भोस इत्यत्रापि यो वेत्यनुवर्तेत। ततश्च भो इहेत्यादि न सिद्ध्येत् ॥

**स्वरे यत्वं वा ॥ देवायिह ॥**

( सुबोधिनी ) **स्वरे यत्वं वा ॥** लोपशो विकल्पेनापवादोऽयम्। अवर्णात्परस्य विसर्गस्य यत्वं वा स्यात् ॥ पक्षे लोपश्। स्वरे किम्। रामश्चतुरः ॥

( तत्त्वदी० )—**स्वरे यत्वं वेति** ॥ अवर्णात्परस्य विसर्जनीयस्य स्वरे यत्वं वेत्यर्थः ॥

**भोसः ॥ भोस्भगोस्अघोस् इत्येतस्य विसर्जनीयस्य लोपश् भवत्यवे परे ॥ भो हरे। भगो नमस्ते। अघो याहि ॥स्वरे यत्वं वा॥ भोस्भगोस्अघोस्विसर्गस्य स्वरे यत्वं वा भवति ॥ भोयेहि। भगोयेहि। अघोयगच्छत् ॥**

( सुबोधिनी )—**भोसः ॥** भोस् भगोस् अघोस् इति सकारान्ता निपाताः सन्ति। तत्राऽऽद्यन्ताभ्यां प्रत्याहारो 'भोसः' इति गृहीतः। भोसः इति षष्ठ्यन्तम्। भोस् भगोस् अघोस् एषां विसर्गस्य लोपश् स्यादवे ॥ अवे किम्। भोस्तपस्विनः ॥ **स्वरे यत्वं वा ॥** भोस्भगोस्अघोसां विसर्गस्य यत्वं वा भवति स्वरे। पक्षे लोपश् ॥

( तत्त्वदी० )—**भोस** इति ॥ षष्ठ्येषा न तु पञ्चमी। भोस्शब्दस्य सान्तत्वेन ततः परस्य विसर्गस्याभावादित्यभिप्रेत्याह ॥ **भोस्भगोस्अघोस्इत्येतस्येति** ॥ भोस्भगोस्अघोस्इत्येतस्मात्परस्येति तु प्राचः प्रमाद एव। भोस इत्यत्र निपातभवच्छब्दयोरपि सामान्येनानुकरणम्। तथा च भो देव 'भो लक्ष्मि' भो विद्वन् इत्यादि सिद्धम्। न च भोस इत्यत्र भोस्मात्रग्रहणात् भगो इह अघो याहीत्यादावव्याप्तमिति वाच्यम्। प्रत्याहाराश्रयणेनाव्याप्तिवारणात् ॥ एवं च विभोरित्यादावतिप्रसंगवारणं च संभवति तस्य प्रत्याहारेऽनन्तर्भावात् ॥ अत्र लघुभाष्यम्। ननु 'अभोसोऽवे लोप श्' इत्येकयोग एव लाघवाय कर्तुमुचितः। उच्यते। नञ्समासोऽत्र प्रतीयेत। भोस्व्यतिरिक्ताच्छब्दात्परस्येति। अथैतद्दोषवारणाय अभोसोरवे लोपशिति सूत्रणीयम्। तदर्द्धमात्रालाघवेऽपि वैरूप्यं दोषः। भोसोऽवयवोऽवर्णात्पर इति सूत्रभेदे तु नायं दोष इति सूत्रभेद एवाश्रितः। अत्रेदमवधेयम्। आद्भोसोवे लोपशिति सूत्रणीयम्। तथा च। नञ्समासभ्रमवैरूप्यदोषयोरसंभव एव। आदित्यस्य पञ्चम्यन्तत्वात्। भोस इत्यस्य षष्ठ्यन्तत्वाच्च भोसोऽवयवोऽवर्णात्तु पर इत्यस्यार्थस्य सुलभत्वात्। एवं च स्वरे यत्वं वेत्यस्याद्विरुक्तिश्चेति महल्लाघवम् ॥

**नामिनो रः ॥** नामिनः परस्य विसर्जनीयस्य रेफो भवत्यबे परे ॥ अग्निरत्र । पटुर्वक्ता ॥ **( उषसो बुधे )** उषसो विसर्जनीयस्य रेफो भवति बुधे परे ॥ उषः बुधः–उषर्बुधः ॥

( सुबोधिनी )–नामिनोरः ॥ नामिन इति किम् । रामो वन्द्यः ॥ अबे किम् । अग्निः करोति ॥

( तत्त्वदी )–नामिनो र इति ॥ ननु नामिन इति किमर्थम् । अवर्णाल्लोपशादिविधानेन हसाद्विसर्गविधानेन च तस्यैव परिशेषात् । यत्तु नामिन इति योगविभागे आदबे लोपशित्यतोऽबे लोपंशिति चानुवर्तते । क्वचिन्नामिनः परस्य विसर्गस्याबे लोपश् । तेन 'सेमां भूम्याददे' इत्यादि सिद्धमित्याहुः । तन्न । सेमामित्यादेश्छान्दसत्वात् । छन्दसि दृष्टानुविधिरित्यस्योक्तत्वात् 'सेमां भूम्याददे, इत्यत्रापि भूमिशब्दस्य कृदन्तत्वेन कृदिकारादिति ईपि कृते 'हसेपः सेर्लोपः' इति सिलोपे इष्टासिद्धेः । उच्यते 'नामिनो रः' इत्यत्र योगविभागार्थं नामिग्रहणम् । तथा च वाक्यभेदेन व्याख्यानम् नामिन इत्येको योगः । तत्र खपे वेति चानुवर्त्य र इति षष्ठ्यन्तं च कृत्वा वाक्यभेदेन व्याख्येयमित्याशयेनाह ॥

**( रेफप्रकृतिकस्य खपे वा रेफः )** गीःपतिः-गीर्पतिः-गी॒पतिः ॥

( सुबोधिनी )–रेफप्रकृतिकस्य खपे वा रेफः ॥ रेफः प्रकृतिर्मूलकारणं यस्य स रेफप्रकृतिकस्तस्य रेफप्रकृतिकस्य विसर्गस्य रकारो वा भवति खपे परे ॥ वा ग्रहणात् पक्षे विसर्गोपध्मानीयौ ॥

( तत्त्वदी० )–रेफप्रकृतिकस्य खपे वेति ॥ रेफः प्रकृतिर्यस्य सः तथा तस्य । वस्तुतस्तु रेफप्रकृतिकस्येति नोचितम् वक्तुम् । र इति सूत्रार्थेनैव तद्गतार्थम् ॥

**( अहन् )** अहर्पतिः–अहःपतिः–अह॒पतिः ॥

( सुबोधिनी )–अहन् ॥ अहन्शब्दस्य विसर्गस्य रो भवति ॥ रात्रिष्विति रत्वे विसर्गे च कृतेऽयं विधिः प्रवर्तते । अहर्पतिः–अहः पतिः–अह॒पतिः ॥

**रः ॥** रेफसंबन्धिनो विसर्जनीयस्य रेफो भवत्यबे परे ॥ प्रातरत्र । अन्तर्गतः ॥

( सुबोधिनी )–रः ॥ षष्ठ्यन्तमिदम् । रेफस्य स्थाने विहितो यो विसर्जनीयस्तस्य रो भवत्यबे परे ॥ अबे किम् । प्रातःकालः ॥ रेफप्रकृतिकस्येति किम् । रामो नम्यः ॥

( तत्त्वदी० )–र इति ॥ षष्ठ्येषा न तु पञ्चमी ॥

**रि लोपो दीर्घश्च ॥** रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः ॥ पुना रमते । हरी राजते । भानू रम्यः । शंभू राजते ॥

( सुबोधिनी )–रि लोपो दीर्घश्च ॥ र इति षष्ठ्यन्तमनुवर्तते । रि इति सप्तम्यन्तम् । रो लोपः स्याद्रेफे परे ॥ चकारो विधेययोर्लोपदीर्घयोः समुच्चयार्थः । तेन पूर्वस्वरस्य दीर्घश्च ॥ रीति किम् । प्रातर्वायुः ॥ र इति किम् । मनोरथः ॥

( तत्त्वदी० )–रि लोपो दीर्घश्चेति ॥ रि इति सप्तमी । अत्र र इति षष्ठ्यन्तमनुवर्तते इत्यभिप्रेत्याह-**रेफस्येति** ॥ रीति सप्तमीनिर्देशाल्लोपनिमित्ताद्रेफात्पूर्वस्येत्याशयेनाह-**पूर्वस्येति** ॥ चकारो विधेययोर्लोपदीर्घयोः समुच्चयस्य द्योतकः ॥

**सैषाद्धसे ॥ सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपो भवति । हसे परे ॥ स चरति । एष सहति ॥**

( सुबोधिनी )– सैषाद्धसे ॥ सश्च एषश्च तयोः समाहारः सैषं तस्मादनञ्समासेऽककारात्सैषात् परस्य विसर्गस्य लोपः स्यात् हसे परे॥स इति एष इति च कृतात्वसत्वस्य तच्छब्दस्य एतच्छब्दस्य चानुकरणम् । अनुकार्यानुकरणयोर्भेदेऽर्थवत्त्वाद्विभक्त्युत्पत्तौ सत्यां द्वन्द्वे विभक्तिलोपे च कृते नामत्वात् ङसिं परतः स्मटोऽभावः । द्वन्द्वे सर्वादीनां न सर्वकार्यमित्युक्तत्वात् ॥ अककारात् किम् । एषको रुद्रः ॥ अनञ्समासे किम् । असः शिवः ॥ हसे किम् । एषोऽत्र ॥

( तत्त्वदी० )–सैषाद्धसे इति ॥ सश्च एषश्च तयोः समाहारः सैषं तस्मात् । स इति तच्छब्दस्य कृतात्वसत्वस्यानुकरणम् एष इत्येतच्छब्दस्य । अनुकार्यानुकरणयोर्भेदादर्थवत्त्वम् । स्मटोभावो द्वन्द्वे सर्वादीनां सर्वकार्याभावो ज्ञापितः । सधातुरित्यादिज्ञापकात् तच्छब्दस्यैवानुकरणम् । तत्साहचर्यादेषशब्दोऽप्येतच्छब्दस्यैव विकृतनिर्देशात्प्रथमान्तादन्यत् न । असः शिव इत्यादौ तु संज्ञापूर्वको विधिरनित्य इत्यनित्यत्वान्न ॥

**( सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चेत् ) सैष दाशरथी रामः सैष राजा युधिष्ठिरः । सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ ॥ इति विसर्गसंधिः ॥**

( सुबोधिनी )–सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चेत् ॥सं इति शब्दस्य विसर्गस्य लोपः स्यात् स्वरे परे।चेद्यदि लोपे सत्येव पादः पूर्येत॥पादः श्लोकचतुर्थांश इति॥पादपूरणमिति किम्॥स एवमुक्त्वा॥लोप एवेत्यवधारणात् अन्यथा पादपूरणे लोपो न । 'सोऽहमाजन्मशुद्धानाम्' इति॥स एष रामोऽस्ति। कीदृशः दशरथस्यापत्यं दाशरथिः। अत इञन्नृषेरितीञ् ॥ स एष युधिष्ठिरः। कीदृशः राजते इति राजा ॥ स एष कर्णः। कीदृशः महांश्चासौ त्यागश्च महात्यागः। महात्यागोस्ति यस्य स महात्यागी। 'मान्तोपधाद्वत्विनौ' इतीन्। स एष भीमः। कीदृशः महांश्चासौ बलश्च महाबलः महाबलोऽस्ति यस्य स महाबलः।अइकौ चेत्यप्रत्ययः॥ ॥इति सुबोधिन्यां विसर्गसंधिः॥

( तत्त्वदी० )—रिलोपो दीर्घश्चेति सूत्रे लोपशोऽनुवर्तनात् रिलोपो दीर्घश्चेति वक्तव्ये लोपग्रहण-मुत्तरार्थमित्याशयेनाह-**सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चेति ॥** तथा च 'सैष दाशरथी रामः' इत्यादौ लोपे जाते संधिः सिद्ध्यति। लोपशि तु न स्यात्। लोप एवेत्यवधारणादन्यत्रापि पादपूरणे लोपो न। तेन 'सोऽहमाजन्मशुद्धानाम्' इत्यादि सिद्धम् ॥

श्रीविद्यानगरस्थायी लोकेशंकरसंज्ञकः। विसर्गसंधेः कृतवान् व्याख्यां भाष्यानुसारिणीम् ॥

इति तत्त्वदीपिकाया विसर्गसंधिः ॥

---

# अथ स्वरान्तपुँल्लिङ्गाः ॥

**अविभक्ति नाम ॥ विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते ॥**

( सुबोधिनी )—अविभक्ति नाम ॥। विभक्तेरन्यदित्यविभक्ति। अन्यच्छब्देन शब्दरूपं विशेष्यं गृह्यते। तत् क्लीबम्। तस्य विशेषणमिदम्। सूत्रे विभक्तिशब्देन तन्त्रादिना विभक्तिः विभक्त्यन्तं चेत्युभयमुच्यते। विभक्तिशब्देन सह नञ्तत्पुरुषः। नञ् तु द्विधा। तथा हि "द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ ॥ पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ १ ॥ प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता ॥ पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ २ ॥ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ॥ प्रसज्यस्तु स विज्ञेयः क्रियया सह यत्र नञ् ॥ ३ ॥" एवं हि विभक्तिभिन्नं विभक्त्यन्तभिन्नमर्थवच्छब्दरूपं संज्ञि नाम च संज्ञा विभक्त्यन्तभिन्नमिति कथनेन धातूनां व्यावृत्तिः कृता तेषां तिबादिविभक्त्यन्तत्वात्। तच्छब्दरूपं नाम प्रातिपदिकमुच्यते। कीदृशम् तत् अविभक्ति। पर्युदासोऽत्र नञ् गृह्यते। विभक्तिसदृशं विभक्तिभिन्नमित्यर्थः। विभक्तिसदृशमिति कथनेनार्थवदेवागतम् ॥ पुनः कीदृशम्। विभक्त्यन्तभिन्नमिति कथनेन धातुवर्जितमित्यागतम् ॥ पुनः कीदृशम्। अर्थवत्। अत्रार्थशब्दोऽभिधेयवचनो न तु धननिवृत्तिप्रयोजनवचनः यथार्थवान् धनवानित्यर्थः। मशकार्थो धूमः मशकनिवृत्तये इत्यर्थः। कोऽर्थः किं प्रयोजनमित्यर्थः। तत्राभिधेयं तु चतुर्विधं जातिगुणक्रियाद्रव्यभेदात्। जातिशब्दा यथा। गौ अश्व इत्यादयः। गुणशब्दा यथा। शुक्लः कृष्ण इत्यादयः। क्रियाशब्दा यथा। पाचकः गन्तेत्यादयः। द्रव्यशब्दा यथा डित्थं कपित्थमित्यादयः ॥ ननु वन्ध्यापुत्राभावशशविशाणगगनकुसुमादीनामर्थाभावादेषां नामसंज्ञा न स्यादिति चेदुच्यते। अभावोऽपि पदार्थान्तरत्वेनाभिधेयत्वादभावशब्दस्य सिद्धा संज्ञा वन्ध्यादिशब्दार्थः पुत्रादिशब्दार्थश्च प्रसिद्ध एव तयोः संसर्गमारोप्य शब्दप्रयो-

गसंभवात्तेषामप्यस्ति ॥ विभक्तिरहितमिति किम् । हरिषु । करोषि । सुप्रसिपोर्मा भूत् । पदादित्वात्सस्य षो न स्यात् ॥ विभक्त्यन्तरहितमिति किम् । देवौ । भवन्ति । अत्र द्वित्वाद्यनभिधानेऽप्यव्ययादिवच्चैकवचनं स्यात् ॥ धातुवर्जितमिति किम् । अहन्नित्यत्र 'नाम्नो नो लोपश्' इत्यनेन लो शु स्यात् । अहन्नित्यत्र अह इत्यनेन सत्वं तु न तस्य लाक्षणिकत्वात् ॥ अर्थवदिति किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् ॥ अत्र वार्तिकम् । कृत्तद्धितसमासाश्चेति । चकारोऽनुक्तसमुच्चयार्थः । तेन निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति ॥

( तत्त्वदी० )—**अविभक्ति नामेति** ॥ विभक्तेरन्यादिति अविभक्ति । विशेष्यं तु शब्दस्वरूपम् । तन्त्रादिना विभक्त्यन्तमपि लब्धम् ॥ ननु सूत्रे अविभक्तीत्येतावन्मात्रमर्थवद्ग्रहणं कुतो लब्धमितिचेत् । उच्यते । "द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यस्तु स विज्ञेयः क्रियया सह यत्र नञ् ॥" इति ॥ तथा च पर्युदासोऽत्र नञ् गृह्यते । ततश्च विभक्तेरथवत्त्वात् तत्सदृशमर्थवदेव संज्ञि उपपततीत्यर्थवल्लाभः ॥ तंत्रादिलब्धविभक्त्यन्तपर्युदासाद्धातुपर्युदासोऽपि ॥ अर्थवदिति किम् । धनं वनमित्यत्र प्रतिवर्णं संज्ञा मा भूत् । तस्यां सत्यां स्याद्युत्पत्तौ नलोपः प्रसज्येत ॥ ननु च एकवर्णानामप्यर्थदर्शनादेतीत्यादाविव देवादिष्वपि वर्णा अर्थवन्तः कथं न. । तथा च प्रत्याराह्निके अर्थवन्तो वर्णा इति भाष्येऽपि श्रीमत्पतञ्जलिनोक्तम् उदाहृतं च कूप इति ककारे साति कश्चिदर्थो गम्यते । यूप इति यकारे अर्थान्तरं तेन मन्यामहे । यः कूपे कूपार्थः स ककारस्य यो यूपे यूपार्थः स यकारस्येति । तथा ब्राह्मण इत्युक्ते योऽर्थो गम्यते नासौ बकारादीनामन्यतमापायेऽपि गम्यते । येषां च संघातो यत्कार्यं करोति ते प्रत्येकमपि तत्कुर्वीति । यथा तिलानां खारी तैलमुत्पादयन्ति प्रत्येकं च तिलाः । ये तु यस्मिन् प्रत्येकमसमर्थास्तेषां समुदायोऽपि तत्रासमर्थः । यथा प्रत्येकं सिकतास्तैलं नोत्पादयन्ति तेषां खार्यपि । अतः संघातार्थवत्त्वाच्चार्थवन्तो वर्णाः तत्कथमर्थवद्ग्रहणे सत्यपि तेषां निवृत्तिरिति चेत् । उच्यते । अनर्थका वर्णाः प्रतिवर्णमर्थानुपलब्धेः । न हि ब्राह्मण इत्यत्र ब्रा इत्युक्ते कश्चिदर्थो गम्यते । अतो धात्वादीनामेकवर्णानामर्थवत्त्वादन्येऽपि वर्णा अर्थवन्त इत्यनुपलब्धिबाधितमेतत् । किं च कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वादन्येऽपि वर्णानामानर्थक्यमभ्युपगतं स्यात् । अथ तेषामप्यर्थवत्त्वम् । भूयिष्ठः कूपे यूपार्थः स्यात् कूपार्थश्च यूपे । यत्र भूयसामर्थानामन्वयो व्यतिरेकस्तु कस्यचित् तत्रार्थानामपि भूयसामनुवृत्तिव्यतिरेकस्तु कस्यचित् । यथा देवदत्त गामानय शुक्लां देवदत्त गामानय कृष्णामिति । अतः संघाता एव तेनार्थेनार्थवन्तः संघातार्थवत्त्वाच्चेति हेतुरनैकान्तिक इति शंका । तैलाग्निवर्तिसंघातेन दीपो न प्रत्येकम् । रथावयवैश्चक्रादिभिः संहतैः व्रजिक्रिया । किं चार्थवतां विपर्यासे अर्थप्रत्ययस्याविपर्यासः । आहर पात्रं पात्रमाहरेति । अपाये चापायः । गामानय शुक्लां शुक्लां गामानयेति । उपजने चोपजनः । गामानय शुक्लामिति ॥ वर्णेषु नैवम् । हिनस्ति

इति सिंहः। हन्ति, हतः, घ्नन्ति। भविता। अतः संघाता एवार्थवंतः॥ विभक्तिरहितमिति किम्। हरिषु करोषि। सुप्सिपोर्मा भूत् पदादित्वात्सस्य षो न स्यात्॥ विभक्त्यन्तरहितमिति किम्। देवाः। भवन्ति। अत्र द्वित्वाद्यभिधानेऽप्यव्ययादिवच्चैकवचनं स्यात्॥ धातुवर्जितमिति किम्। अहन्। नलोपश्च स्यात्॥ यत्तु प्राचोक्तम्। अथ विभक्तिर्विभाव्यते। तत् व्याख्यातृभिश्च व्याकृतं संधिप्रकरणकथनानन्तरं ये विधयो वक्ष्यन्ते तेषां विभक्तिसंज्ञा स्यात्। सा च विभाव्यते प्रस्तूयते तत्प्रकरणमारभ्यत इति विभक्तिशब्दावृत्त्या योज्यम्। स्वमते शब्दार्थयोरभेदोपचारादित्यर्थः। अभेदोपचाराच्च द्वितीयो विभक्तिशब्दः संज्ञिवचनः। आदिः संज्ञावचनः। महासंज्ञाकरणं तु विभज्यन्ते विविच्यन्ते संख्याकर्मादयोऽर्था अनयेति विभक्तिः इत्यन्वर्थसंज्ञाविज्ञानार्थम्। तेनागमादीनामत्र वक्ष्यमाणानामपि विभक्तिसंज्ञा नेति। तन्न वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्ययोगात्॥ अन्ये तु यौगिकार्थेनैव सिद्धमित्याहुः। विभज्यते प्रकटीक्रियते कर्तृकर्माद्यर्थोऽनया सा विभक्तिः॥ अतिप्रसक्तं योगमात्रं कृदादौ यद्यपि तथापि स्यादिषु तिबादिषु च योगरूढिः॥ यच्च कृत्तद्धितसमासाश्चेति वार्तिकम्। चकारो नामसंज्ञानुकर्षणार्थः। अत्र तद्व्याख्यातारः। ननु किमर्थमिदं नामसंज्ञा तु पूर्वेणैव सिद्धा। न सिद्ध्यति। तत्र कृत्सु क्विबाद्यन्तानां धातुत्वानपायात्। अत एव हे सोमपा इति धिलोपो न स्वार्थतद्धितानामपि गुणीभूतार्थवत्त्वात्। तथाहि। चोर एव चौरः। स्वार्थेण्। अत्र हि चोरशब्दस्य साक्षादर्थवत्त्वम्। चौरशब्दस्य चोरशब्दस्मरणद्वारा गौण मुख्यन्यायेन चोरशब्दस्यैव पूर्वेण संज्ञा स्यान्न चौरशब्दस्येति विध्यर्थं कृत्तद्धितग्रहणम्। समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावात्। अत एव पञ्चाग्नीति पदान्ताश्रयो नलोप इत्याहुः। अत्रेदं वक्तव्यम्। पञ्चनवदधिमधुइत्यादीनामविभक्तिकत्वेन नामत्वानपायात्कथं पदत्वम्। अत्र यदि विभक्तिसत्त्वसमये एव प्रवृत्ता पदसंज्ञा लुप्तायां विभक्तौ एकदेशविकृतन्यायेन प्रकृतिभागेऽपि सास्तीति ब्रूषे तर्हि प्रकृतेऽपि समं क्विबादिसत्त्वसमये प्रवृत्ता नामसंज्ञा लुप्तेऽपि तस्मिन्प्रकृतिभागेऽपि सास्तीति तुल्यम्। यदि च लुप्ते प्रत्यये प्रत्ययलक्षणेन पदसंज्ञां स्वीकरोषि तदपि समं समाधानम्। यदपि स्वार्थतद्धितानामपीत्यादि तदपि न गौणत्वासंभवात्। स्वार्थोपसर्जनार्थान्तराभिधायित्वं गौणत्वम्। तच्चात्र न संभवति। न हि चौरचोरशब्दयोरर्थौ भिन्नौ येनैकोऽपरत्र गौणो भवेत्। यदपि अत्र चोरशब्दस्य साक्षादित्यादि तदपि न। न हि पर्यायाणां परस्परस्मरणद्वारा स्वार्थबोधकत्वं क्वचित्स्वीक्रियते। व्याकरणानभिज्ञस्यापि शक्तिग्रहे सति ततो बोधो जायते। अन्यथा ज्ञानं ध्यानमित्यादौ पुरः स्वार्थिकत्वेन गौणत्वादिकं स्यात्। यदपि समासेष्वपि भूतपूर्वविभक्त्येत्यादि तदपि न अवयवानां विभक्त्यन्तत्वेऽपि समुदायस्यातथात्वात्। यस्माद्विभक्तिर्विधीयते तद्विभक्त्यन्तम्। सा चावयवेभ्यो विधीयते न समुदायात्। अन्यथा समासवत् वाक्यस्यापि विभक्त्यन्तत्वेन पूर्वेण प्राप्तिविरहादेव तत्र नियमानुपयोगात्। यदि नन्वेवमपि अव्ययीभावादिति विभक्तिलुग्विधानाज्ज्ञापकात्समासे नामसंज्ञा भविष्यति। एवमपि नियमार्थं समासग्रहणम्। अर्थवत्समुदायानां मध्ये समासस्यैव यथा स्यात्। तेन वाक्यस्यार्थवतो न भवतीति। तदपि न। उक्तरीत्या समासस्याविभक्त्यन्तत्वेन ज्ञापकोपन्यासवैयर्थ्यात्। अन्यथा समासवद्वाक्यस्यापि विभक्त्यन्तत्वेन समासेष्वपि भूतपूर्वविभक्त्या अविभक्ति-

त्वाभावादित्यनेन विध्यर्थतायास्त्वयैवोक्तत्वात् पूर्वापरविरोधः नियमफलाभावेन समासग्रहणवैयर्थ्यात् । नियमस्तत्र क्रियते यत्र सर्वत्र प्राप्तिर्भवति अत्र तु तव मते वाक्ये प्राप्तिर्नास्ति वाक्यस्य चेत्प्राप्तिर्भवति तर्हि वार्तिके समासपदं व्यर्थम् । तस्मात्पूर्वेणैव सिद्धे वार्तिकमिदं न कार्यम् ॥

## तस्मात् ॥

( सुबोधिनी )—तस्मात् ॥ इत्यधिकारोऽयम् । 'धातोः' इत्यतः प्राक् स्यादयोऽणादयश्च प्रत्यया नाम्नः पराः स्युः ॥ तस्मादिति पञ्चमी । इयं न विश्लेषावधौ विश्लेषस्यासंभवात् । किं तु ऋते आदिषु दिक्शब्दपाठाद्दिग्योगलक्षणा पञ्चमी तत्र परः पूर्वो वा इत्यनियमेनाध्याहारे प्रसक्ते बहुवा उक्तेऽर्थे स च प्रयोगे वेत्यनेन वहोः पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एवेति परशब्दोऽध्याहार्यः ॥

( तत्त्वदी० )—तस्मादिति ॥ अधिकारोऽयं प्राग्धातोः । तथा च स्यादयोऽणादयश्च नाम्न एव परे बोध्या इति । ननु धातोरित्यग्रिमाधिकारात् ततः प्राक्तनानां प्रत्ययानां नाम्नः परत्वमवधेयमेवेति किं तस्मादित्यनेनेति चेन्न किंपरिमाणमितिवक्तव्ये किंदघ्नमित्यपि स्यात् इति निराकरणाय तस्मादित्यस्यावश्यकत्वात् अथ न केवलः प्रत्ययः प्रयोक्तव्य इति नियमेन तद्वारणसंभवादिति चेत् एतस्यापि तन्मूलकत्वादित्यवधेहि । तस्मादिति पञ्चमी न विश्लेषावधौ विश्लेषस्यात्रासंभवात् । किं तु ऋतादिमध्ये दिक्शब्दस्य पाठात्तद्योगे तत्र च पूर्वः परो वेति नियमाभावेऽपि परशब्द एवाध्याहार्यः समानाद्वेर्लोप इति निर्देशात् तच्छब्दस्य पूर्वपरामर्शित्वान्नाम्नः परामर्शः ॥

**सि औ जस् १ अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् ॥ नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति ॥**

( सुबोधिनी )—सि औ जस् १ अम् औ शस् २ टा भ्यां भिस् ३ ङे भ्यां भ्यस् ४ ङसिभ्यांभ्यस्५ ङस् ओस् आम्६ ङि ओस् सुप् ७। सिप्रत्ययस्येकारोऽत्वसोः साविस्यादौ विशेषणार्थः।जस्शसोर्जकारशकारौ जसीशसीत्यनयोर्विषयविभागार्थौ।टाप्रत्ययस्यटकारः टेनटानाटौसोःटाङ्योरित्यादौ भेदकः।ङेङसिङस्ङीनांङकारस्तु ङितीत्यादौ विशेषणार्थः ङसेरिकारो ङसिरदिति विशेषणार्थः । सुप्प्रत्ययस्य पकारः प्रत्याहारार्थस्तेन सिप्प्रत्याहारो यथा स्यात् ॥ स्यादित्यादिभेदतो विभक्तिर्द्विधा। तत्र सिऔजसित्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः । तेषु त्रिकेषु त्रीणि त्रीणि वचनानि एकश एकवचनद्विवचनबहुवचनसंज्ञकानि सन्ति ॥

( तत्त्वदी० )—सिऔजस् इत्यादि ॥ सेरिकारोऽत्वसोः सावित्यादौ सीत्युक्ते सकारादिलाभसंभवात् । न चेष्टापत्तिः वेधःसु इत्यादावपि दीर्घत्वप्रसंगात् । न च श्रवणार्थः गुण इत्यादिलिङ्गात् । एतेन सेरिकार उच्चारणार्थ इत्युक्तिः प्रत्युक्ता सू इत्यनेनाप्युच्चारणसंभवात् ॥

**( एकत्वद्वित्वबहुत्वेषु ) एकवचनद्विवचनबहुवचनानि॥ स्रोर्विसर्गः । देवः ॥**

( सुबोधिनी )–एकत्वद्वित्वबहुत्वेषु ॥ एकत्वद्वित्वबहुत्वशब्दा इह संख्यापराः सन्ति तेन बहुः पर्वत इति वैपुल्यवाचिनो ग्रहणं न। आश्रयद्रव्यगतेषु एकत्वद्वित्वबहुत्वेषु सत्सु एकवचनद्विवचनबहुवचनसंज्ञकाः प्रत्यया भवन्ति । उच्यतेऽनेनेति वचनम् । एकस्य वचनमेकवचनम् । द्वयोर्वचनमिति द्विवचनम् । बहूनां वचनमिति बहुवचनम् ॥

( तत्त्वदी० )–एकवचनादिसंज्ञानामन्वर्थतामाश्रित्याह-एकत्वेत्यादि ॥ तथा च । एकं वक्ति एकवचनम् । द्वौ वक्ति द्विवचनम् । बहून्वक्ति बहुवचनम् ॥ यद्वा उच्यत इति वचनम् । एकवचनमिति॥ जसो जकारस्य फलमाह । जसो जकार इति ॥ तथा च शसः शकारोऽपि शसीति विशेषणार्थः । वस्तुतस्तु एकतरो न पठितुं योग्यः एकेनैव द्वितीयवारणात् ॥

**( सरूपाणामेकशेष एकविभक्तौ ) देवौ । देवाः ॥**

( सुबोधिनी )–सरूपाणामेकशेष एकविभक्तौ ॥ एकविक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ॥ रूप्यते बोध्यते इति रूपमर्थः । समानं रूपं येषां ते सरूपाः । सहादित्वात्समानस्य सादेशः । तथा समानं रूपं स्वरूपं येषां ते सरूपाः सरूपाश्च सरूपाश्चेति सरूपास्तेषामित्येकशेषेण व्याख्यानम् ॥एकविभक्ताविति विभक्तिसारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम् । एवं च नैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः स्याद्युत्पत्तेः प्रागेव प्रवर्तते । यद्येतन्नारभ्यते तर्हि प्रत्येकं विभक्तिः स्यात् द्वन्द्वश्च प्रवर्तेत । आरब्धे त्वेकशेषो भवति न तु द्वन्द्वः अनेकपदाभावात ॥ ननु स्याद्युत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थं बोधयतीति द्विवचनाद्युत्पत्तौ देवौ देवा इत्यादि न सिध्येत् । उच्यते । शिष्यमाणो लुप्यमानार्थं कथयति । एकशेषस्य वृत्तिषु पाठात् । परार्थाभिधानं वृत्तिरिति॥अत एव लुप्तेऽपि प्रत्यये लिट् धुक् इत्यादौ कर्ता प्रतीयते॥एकस्यां विभक्तौ परतः सरूपाण्येवेति किम् । मातृशब्दयोर्जननीपरिच्छेत्तृवाचिनोर्नैकशेषो भवति । मातृभ्यां मातृभिरित्यादौ सारूप्येऽपि औजसादिषु वैरूप्यात् ॥ नन्वेवं पयः पयो नयति देवदेव इत्यादावतिप्रसंगः स्यात् । सह विवक्षायामेकशेषः प्रवर्तते इतरेतरयोगे द्वन्द्वस्य विषये इत्यर्थो नान्यत्र ॥

**अमृशसोरस्य ॥ समानादुत्तरयोरमृशसोरकारस्य लोपो भवति वम् । देवौ । शसः शकारः शसीति विशेषणार्थः ॥**

( सुबोधिनी )–अमृशसोरस्य ॥ समानाद्धेर्लोपोऽधातोरित्यतः समानादिति लोप इति अधातोरिति चानुवर्तते अधातोः समानात्परयोरमृशसोरकारस्य लोपः स्यात् ॥ अधातोरिति किम् । श्रियं भुवमित्यादावियुवौ । सेनान्यं खलप्वमित्यादौ य्वौ । सोमपामित्यादौ सवर्णदीर्घः ॥ समानादिति किम् । रायम् ग्लावम् ॥

( तत्त्वदी० )-**अम्शसोरस्ये**ति ॥ अत्र समानाद्धेर्लोपो धातोरिति सूत्रात्समानलोपावनुवर्तेते इत्याशयेनाह-**समानादि**ति समानादिति किम् । रायम् ।अत्र स्याद्यविकारस्यैवामो ग्रहणादधातोरिति नानुवर्त्यम् । अतोऽचिनवमित्यादौ नातिव्याप्तिः।।अस्येति किम् । षष्ठीनिर्दिष्टत्वेनान्त्यस्य मा भूत् ॥ न च 'सो नः पुंसः' इत्यत्र सकारस्य नत्वविधेर्लिङ्गान्नान्यस्य विधिरन्यथा शसः सकारस्यान्तत्वे नलोपे तदभावान्नत्वासंभवः स्यादिति वाच्यं तत्र 'सो नः पुंसः' इत्युक्त्या ज्ञापनासंभवात् । न हि तत्र शसो न इत्युक्तं येन ज्ञापकं स्यात् । न च सो न इत्यत्रापि शसः सकारस्यैव ग्रहणमिति वाच्यम् । न हि शस्येव सकारो नान्यत्रेति नियमोऽस्ति येन ज्ञापकमिदं स्यात् ॥ यत्तु लघुभाष्यम् । अत्र 'आदबे लोपश्च' इत्यतो आदित्यस्यानुवृत्तेरस्येति व्यर्थमिति कश्चित् इति । अत्रेदमवधेयम् । आदित्यस्य पञ्चम्यन्तत्वेन षष्ठ्यर्थालाभात् । अथार्थवशाद्विभक्तिविपरिणाम इति विभक्तिविपरिणामेन षष्ठ्यर्थलाभः । विभक्तिविपरिणामे त्वर्थलाभस्यातिक्लिष्टत्वेऽन्त्यस्येत्यस्यैवावश्यकत्वात् ॥

**सो नः पुंसः ॥ पुँल्लिङ्गात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति न त्वाम्शशीत्यात्वे ॥**

( सुबोधिनी )-**सो नः पुंसः** ॥ पुल्लिङ्गात्समानान्नाम्नः परस्य शसः सस्य नः स्यात् ॥ शस इत्यानुवृत्तं लिङ्गं नामार्थं इति मते पुंस इति पञ्चमी । पुँल्लिङ्गात्समानान्तान्नाम्न इति । यदा तु लिङ्गं प्रत्ययार्थस्तदा पुंस इति षष्ठी । समानान्तान्नाम्नः परस्य पुंसो वाचकस्य शसः सस्य न स्यादिति ॥ उक्तं च "एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा । नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥" इति ॥ स्वार्थद्रव्यलिङ्गसंख्याकारकात्मकः पञ्चको नामार्थः।उक्तपञ्चसु पूर्वस्य पूर्वस्य नामार्थत्वे परः परो विभक्त्यर्थो ज्ञेयः । शब्दप्रवृत्तिनिमित्तः स्वार्थोऽस्ति । स्वार्थश्चानेकविधः स्वरूपजातिगुणक्रियाद्रव्यसंबन्धभेदात् ॥ स्वरूपं यथा । डित्थः । यदा शब्दरूपेण विशिष्टा जातिः कथ्यते गौरिति तदा गोशब्दस्य स्वरूपं स्वार्थोऽस्ति विशेषणत्वात् । जातिस्तु द्रव्यं भवति विशेष्यत्वात् । यदा जात्या विशिष्टो गुणः कथ्यते पटस्य शुक्लो गुण इति तदा जातिः स्वार्थो भवति विशेषणत्वात् शुक्लो गुणो द्रव्यं भवति विशेष्यत्वात् । यदा गुणेन विशिष्टं द्रव्यं कथ्यते शुक्लः पट इति तदा विशेषणभूतो गुणः स्वार्थो भवति । विशेष्यभूतं पटादिकं द्रव्यं भवति । यदा तु द्रव्यमपि द्रव्यान्तरस्य विशेषणं भवति । यष्टीः प्रवेशयेत्यादौ तदा यष्ट्यादिकं द्रव्यं विशेषणत्वमापन्नं स्वार्थो भवति । पुरुषादिविशेष्यं द्रव्यं भवति। दण्डीत्यादौ दण्डपुरुषसंबन्धः स्वार्थो भवति। दण्डीति द्रव्यं विशेषणं भवति । पाचक इत्यादौ क्रिया स्वार्थो भवति । पुरुषो द्रव्यं भवति। किं च ॥ शब्दस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदिष्यते । पर्यवसानभूमिरित्यर्थः ॥ तच्चानेकप्रकारम् । जातिगुणक्रियाद्रव्यस्वरूपमिति । गौः शुक्लः पाचकः डित्थः । सिसतासीस्यपामिद् । लिंगं स्त्रीत्वादि । संख्या एकत्वादिः । कर्मादयः कारकविशेषाः । तत्र स्वार्थो विशेषणम् द्रव्यं तु विशेष्यमिति निर्गलितार्थः ॥ 'आमृशसि' इति सूत्रेणौकारस्य स्थाने आत्वे

कृते सति 'सो नः पुंसः' इत्येतत्सूत्रं न प्रवर्तते इत्यर्थः ॥ कुतो न । उच्यते । पदविभागात् । यथा स् १ ओ २ न् ३ अः ४ पुंसः ५ इति पञ्च पदानि छित्त्वा पुँल्लिगात्समानाच्छसः सस्य न् स्यात् ओकारसंबन्धिनोऽवर्णाच्चु विसर्गः स्यादिति व्याख्येयम् । अतो गाः पश्येत्यादौ नत्वं न ॥ पुल्लिंगादिति किम् । बुद्धिः ॥ समानादिति किम् रायः । ग्लावः । लोपविषये एवास्य प्रवृत्तिः । समानादमूशसोरल्लोपस्यानिषेधात् ॥ अत एव बहुश इत्यत्र नत्वं न । स्यादधिकाराद्वा ॥

( तत्त्वदी० )–**सो नः पुंस** इति ॥ पञ्चमीत्याशयेनाह–**पुल्लिङ्गा**दिति ॥ तथा च समानान्तान्नाम्न इति बोद्धव्यम् । यद्वा पुल्लिङ्गात्समानादित्येकं पदम् । पुल्लिङ्गमततीति पुल्लिङ्गात् स चासौ समानश्चेति स तथा तस्मादित्यर्थः ॥ तत्राम्शसोरित्यतः शस इत्यनुवृत्तं यद्यपि समासान्तर्गतं तथापि नामोऽनुवृत्तिस्तत्र सस्यासंभवादित्याह–**शस** इति ॥ ननु गा इत्यत्र नत्वं कुतो न । अम्शसीत्यात्वेन समानातपरत्वादिति चेत् । अत्र केचित्सो न इत्यावर्त्य शसो नकारस्य सकार इति व्याख्येयम् । इष्टसिद्ध्यर्थमिदम् । तेन गा इत्यादि सिद्धम् ॥ यद्वा आवृत्त्या लब्धं यत्सो न इति सूत्रं तत्र शसो नस्येत्यनुवर्तते । स इत्यविभक्तिको निर्देशः । ओरिति षष्ठी । ततश्च ओकारसंबन्धी योऽवर्णः तस्मात्परो यः शसो नकारस्तस्य सकार आदेशो भवतीत्यर्थो लभ्यतेऽतो नातिप्रसङ्गः ॥ यद्वा स ओ न् अः पुंस इति पञ्च पदानि छित्त्वा पुल्लिङ्गात्समानात् शसः सस्य नकारः । ओकारसंबन्धिनोऽवर्णात्तु विसग इति व्याख्येयम ॥ अत्रेदं वक्तव्यम् । गा इत्यत्र नत्ववारणे सन्निपातपरिभाषयैव सिद्धे तदर्थमेतावता वृत्ताद्यनुसरणक्लेशेन किम् । न च तानित्यादावपि सान्निपातपरिभाषया निषेधइति वाच्यम् । कानित्यादिलिङ्गेन त्यदादिषु शसो नत्वविधौ परिभाषानाश्रयणात् ॥ यद्वा त्यदादेष्टेरः स्यादावित्यत्रादिपदगृहीतस्य शसो निमित्तत्वे लाक्षणिकत्वे नाम्शसीत्यत्र शसः साक्षाच्छ्रवणेन निमित्तत्वे प्रतिपदोक्तत्वात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ॥ किं च परिभाषाश्रयणस्येष्टसिद्ध्यर्थत्वात् तानित्यादावनाश्रयणात् ॥ यच्च पुंस्त्वादिविचारे "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषो भवेत् । उभयोरन्तरं यच्च तदभावे नपुंसकम्" इति लक्षणे खट्वावृक्षादावव्याप्तिवारणाय चेतनेषु स्तनादिमद्यक्त्यादिस्त्रीत्वादिव्यञ्जकम् । अचेतनेषु तु सर्वत्रापदेश एवाभिव्यञ्जकः । उपदशस्तु लिङ्गानुशासनादिष्वित्युक्तम् । तत्रापि चेतना चेतनविषयविभागो व्यर्थः । अतिप्रसक्तस्य दारशब्दस्य स्त्रीवाचकस्य स्तनकेशवत्त्वस्य व्यञ्जकस्य सत्त्वेऽपि स्त्रीत्वादर्शनात्सर्वचेतनाचेतने उपदेश एव स्त्रीत्वादिव्यञ्जक इत्यलमतिविस्तरेण ॥

**शसि ॥ शसि परे पूर्वस्य दीर्घो भवति ॥ यदादेशस्तद्वद्भवति । न तु वर्णमात्रविधौ । देवान् । टकारष्टेनेति विशेषणार्थः ॥**

( सुबोधिनी )–**शसि** ॥ 'शसि' दीर्घश्रुत्योपास्थितस्य स्वरस्येति पदस्य नाम्नो विशेषणत्वात्तदन्तविधिः । पूर्वस्य स्वरान्तस्य नाम्नो दीर्घः स्यात् शसि परे ॥ 'सो नः पुंसः' इति नत्वे दीर्घत्वम् । पूर्वं नत्वं ततो दीर्घत्वम् पश्चादल्लोपः । वैपरीत्यं वा ज्ञेयम् ॥

शसि किम् । हरीभिः ॥ स्वरस्य किम् । लिहः ॥ ननु इह शसपरत्वाभावात्कथं दीर्घः उच्यते । यस्य स्थाने आदेशः यदादेशः स तेन स्थानिना तुल्यं तद्वत् स्थानिवद्भवतीत्यर्थः ॥ स्थानिवर्णाश्रयविधौ कर्तव्ये न भवति । अस्य व्याख्यानं परिभाषाप्रकरणे उक्तम् ॥

( तत्त्वदी० )–शसीति ॥ दीर्घश्रुत्योपस्थितेन स्वरेण नाम्नो विशेषणत्वात्तदन्तविधिः । पूर्वं दीर्घः पश्चादह्लोपः । वैपरीत्यं वा । उभयथा वैलक्षण्यं नास्ति ॥ एवं 'सो नः पुंसः' इति नत्वेऽपि ज्ञेयम् ॥

**टेन ॥ अकारात्परष्टा इनो भवति ॥ देवेन ॥**

( सुबोधिनी )–टेन ॥ पदद्वयमपि प्रथमान्तं संकेतितम् । अतः परष्टा इनः स्यात् ॥ अतः किम् । कर्त्रा । भवता ॥ तपरः किम् । हाहा ॥ टा किम् । देवैः ॥

( तत्त्वदी० )–टेनेति ॥ टा इन इति च्छेदः । पदद्वयमपि लुप्तप्रथमान्तम् । अत्रात् इत्यनुवर्त्तते ॥ टा इति किम् । देवैः ॥ अतः किम् । पित्रा ॥ तपरः किम् । हाहा ॥ ननु टानेत्येव सूत्र्यताम् किं एकारेण एग्रहणं चानुवर्त्य एनेति रूपसिद्धेरिति चेन्न । लाघवे विशेषाभावादित्युक्तं कैश्चित् । तत्र ए इत्यनुवृत्त्या गौरवस्य जागरूकत्वेन विशेषाभावादित्युक्तेरपार्थत्वात् ॥ न च एनेत्येव सूत्र्यताम् । आ इन इति च्छेदः स्याद्यधिकाराच्च नातिव्याप्तिः । आमि तु नुटा बाधान्नातिप्रसङ्ग इति वाच्यम् । स्पष्टार्थत्वाट्टकारस्य ॥

**अद्भि ॥ अकारस्यात्वं भवति भकारादौ स्यादौ ॥ देवाभ्याम् ॥**

( सुबोधिनी–अद्भि ॥ अकार आकारो भवति भादौ स्यादौ च ॥ अदिति किम् हरिभ्याम् । तपरत्वमुत्तरार्थम् ॥ भीति किम् । देवस्य ॥ स्यादौ किम् । देवभवनम् बहुत्वे तु परत्वादेत्वं भवति । देवेभ्य इति ॥

( तत्त्वदी० )–अद्भीति ॥ अत्रादिति प्रथमान्तम् । भीति सप्तम्यन्तम् । तच्च भकारादावीति व्याख्येयम् । आदिति । न स्वरूपग्राहकं आद्यन्ताभ्यामिति लिङ्गात् । तेन महद्भ्यामित्यत्रात्वं न ॥ अदिति किम् । हारिभ्याम् ॥ भीति किम् । देवस्य ॥ ननु रैस्मीत्यतो भीति सिद्धे किं भग्रहणेनेति चेन्न । एकयोगनिर्दिष्टत्वेन सकारस्यानुवृत्तिः स्यादिति तन्निरासार्थं भीत्यस्यावश्यकत्वात ॥ भ्यामो मस्य च नेत्वं इदुद्भ्यामिति लिंगात ॥ स्यादौ किम् । देवभवनम् ॥

**भ्यः ॥ अकारात्परस्य भिसो भकारय अकारादेशो भवति ॥ देवैः । ङकारो ङित्कार्यार्थः ॥**

( सुबोधिनी )–भ्यः ॥ 'एस्भि बहुत्वे, इत्यस्यापवादोऽयम । भ् भि अः इति पदच्छेदः भि इत्येकदेशद्वारेण भिस एवानुकरणम् । अत इत्यनुवृत्तम् । अतो भिसो भकारस्याकारः स्यात ॥ स्यादावित्यधिकारात् स्यादिसंबन्धी भिस गृह्यते । तेन ब्राह्मणभिस्से त्यादौ नातिप्रसंगः ॥

( तत्त्वदी० )—भ्य इति ॥ भ् भि अः इति छेदः॥ अत इति पूर्वसूत्रादनुवर्तते। भीति भिस एकदेशानुकरणम्। नामैकदेशग्रहणे नामग्रहणम्। यथा भीमो भीमसेन इति॥ यत्तु भ्य इति चतुर्थीपञ्चम्यो र्बहुवचनस्य ग्रहणम्। 'अद्भि' इत्यस्मादकारात्परत्वात् 'हसेर्हहसः' इति द्वित्वम् 'झबे जबाः' इति भस्य बः। तथाचातः परस्य भ्यस एवाकारादेश इत्यर्थो लभ्यते॥ यद्वा भ् भ्यः इति छेदः॥ अकारात्परस्य भ्यसो भकारस्याकार इत्यर्थोऽस्तु। आकारो वास्वितोऽनुवर्तते। एवं भ्यसो ग्रहणे व्याख्यायमाने 'भिस् भिस्' इति सूत्रं व्यर्थं स्यात्। ननु तर्हि भि अ इति छित्त्वा भकारे परे पूर्वस्य अत एव भवति। तस्यादेशान्तरं न भवतीति व्याख्यानमस्तु। यद्वा भि इत्येकदेशद्वारेण भिस् एवानुकरणम्। ततश्च भिसि परे अत एवेत्यर्थोऽस्तु। मैवम्। आद्ये पक्षे भीति व्यर्थं स्यात् पूर्वसूत्रादनुवृत्तेः सत्त्वात्। द्वितीये तु भागैरिति निर्देशो नोपपद्यते। इत्याद्युक्तम्। तत्रेदमवधेयम्। भकारस्य द्वित्वे द्वितीयसूत्रस्यैकारस्य निमित्तत्वे बहुस्थलेऽतिप्रसङ्गः स्यात्। किं च। भागैरिति लिंगस्यैव विद्यमानत्वेनैव 'भिस् भिस्' इति निर्देशपर्यन्तानुधावनस्य क्लिष्टत्वात्। अवर्णविधानसामर्थ्यात्सवर्णदीर्घं बाधित्वाप्यैत्वमेव। अन्यथा 'समानाद्धेर्लोपः' इत्यतो लोपमनुवर्त्य लोपमेव व्यधास्यत्॥ ननु भि इति सूत्रमस्तु आकारो वास्वित्यतोऽनुवर्तते। तथा च भिसो भकारस्यात्वेऽपि रूपसिद्धेः॥ यद्वा भ इत्येवास्तु भि इति पूर्वसूत्रादनुवर्तनीयम्। तच्च रूपपरम्। इत्थं च भि इति समुदाये यो भः स आकारो भवतीत्यर्थः॥ अत्रार्थे भागैरिति लिङ्गदर्शनम्। उच्यते। इमौ यकाराकारौ योगविभागेन स्यादिप्रकरणं भित्त्वान्यस्माद्विधी येते। अतः प्रौढः स्वैरी वापयतीत्यादि सिद्धम्। पादेर्युक् गवादेरिति च न वक्तव्यं भवति॥

**ङे अक् ॥ अकारात्परस्य ङे इत्येतस्यागागमो भवति ॥ देवाय। देवाभ्याम् ॥**

( सुबोधिनी )—ङे अक् ॥ ङे इत्यविभक्तिको निर्देशः। अतो ङे इत्यस्याक् स्यात्॥ कित्त्वादन्ते ॥ अत इत्यनुवृत्तेनेह। वातप्रम्ये ॥ तपरत्वान्नेह। हाहै ॥ अथ अकि कृते 'एदोतोतः' इत्यकारस्य लोपश्च तु न। विधानसामर्थ्यादपदान्तत्वाद्वा न हि अकि कृते एतः पदान्तत्वं संभवतीति ॥

( तत्त्वदी० )—ङे अगिति॥ अत्र ङे इत्यविभक्तिको निर्देशोऽसंदेहार्थः। ङेरित्युक्तौ चतुर्थीसप्तम्येकवचनयोः संदेहः स्यात्। वस्तुतस्तु ङेरित्युक्तिरपि न्याय्या। आम्ङेरित्यादौ चतुर्थ्येकवचनसंदेहनिराकरणाय व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमित्यस्याश्रयणीयत्वात्। ङकारो व्यर्थः स्याद्यधिकारेणैवातिप्रसंगवारणादित्याहुः। वस्तुतस्तु स्पष्टार्थमुपात्तत्वान्न व्यर्थता। अत इत्यनुवृत्तेर्वातप्रम्ये इत्यादौ न॥ ङे इति किम्। देवौ देवे॥ 'एदोतोतः' इत्यनेन लोपस्तु न। एतोऽपदान्तत्वात्। अग्विधानसामर्थ्यादित्युक्तिस्तु निर्मूला प्राप्तलोपे विधानसामर्थ्यावलम्बनस्योचितत्वादिह तु पदान्तत्वाभावे प्राप्तेरेवासंभवात्॥

**एस्भि बहुत्वे ॥ अकारस्यैत्वं भवति सकारभकारादौ विभक्तौ बहुत्वे सति ॥ देवेभ्यः ॥**

( सुबोधिनी )—एस्भि बहुत्वे ॥ अकार एकारो भवति बहुत्वे वर्तमानेषु सकारभकारादिषु स्यादिषु परेषु ॥ अकार इति किम् । हाहाभ्यः ॥ बहुत्वे किम् । देवस्य ॥ स्यादिष्विति किम् । पचध्वम् ॥

( तत्त्वदी० )—एस्भि बहुत्वे इति ॥ स्भीति सप्तम्यन्तम् । स् च भ् च स्भ् तस्मिन् स्भि ॥ अतः किम् । हरिभ्यः ॥ तपरः किम् । हाहाभ्यः ॥ स्भीति किम् । देवानाम् ॥ ननु स्भीति किम् । न च देवानामित्यत्रातिप्रसंगः । तत्र परत्वान्नामीति दीर्घेण बाधात् । देवानित्यादौ तु शसीत्यनेन । अथ देवा इत्यत्रातिप्रसंगः स्यादिति चेन्न । तद्वारणाय रैस्भीतिसूत्रात् भीत्यस्यानुवृत्तेः सत्त्वात् । अथानन्तरत्वादद्भीत्यतो भीत्यस्यैवानुवृत्तिः स्यादिति । तन्न इच्छार्थेष्विति ज्ञापकात् ॥ अथवा देवा इत्यत्रापि सवर्णदीर्घपूर्वोऽपि 'झबे जबाः' इत्यादिनिर्देशेन क्वचित्पूर्वेणापि परबाधस्येष्टसिद्ध्यर्थमभ्युपगमात् । तस्माद्व्यर्थं स्भीति । अत्राहुः । देवपूज्या इत्यादौ पूर्वपदस्यस्यैव वारणाय स्भीत्यावश्यकमिति तन्नेति वृद्धाः । विहितविशेषणाश्रयणात् । नाम्नो विहिते बहुत्वे वर्तमाने पर एत्वमित्यभ्युपगमात् । अन्ये तु बहुत्वविशेषणार्थं पुनः स्भीत्युक्तम् । तेन बहुत्वे वाच्ये सति विहितो यः सकारो भकारश्च तस्मिन् परतो नाम्नोऽत एत्वम् । तेन सोमं सुनोतीति सोमसुत् तमाचक्षते सोमसयन्ति तै सोमसे इत्यत्र नेत्याहुः । तन्नेति नव्याः । स्याद्यनुवृत्त्यैतद्वारणसंभवात् । अत्रोच्यते । रैस्भीत्यत्र नकारोऽपि द्रष्टव्यो नादावपि स्यादावात्वमित्यर्थः । तथा च त्रिराणामिति सिद्ध्यति । अत्रार्थे इदं स्भिग्रहणमेव लिंगम् । यदि तस्याप्यत्रानुवृत्तिः स्यात्तदा देवानामित्यत्राप्येत्वं स्यात् । नामीति तु हरीणामित्याद्यर्थं स्यात् । ततस्तन्निवृत्त्यर्थं पुनः स्भिग्रहणस्यावश्यकत्वात् ॥

## ङसिरत् ॥ अकारात्परो ङसिरद्भवति ॥ देवात्, देवाभ्याम्, देवेभ्यः ॥

( सुबोधिनी )—ङसिरदिति ॥ अदन्तान्नाम्नः परो ङसिरत् स्यात् ॥ अतः किम् । वातप्रम्यः । ग्लावः ॥ तपरः किम् । हाहाः ॥ ननु ङसेरदादेशे कृते 'यस्य लोपः' इत्यतो लोपः स्यात् । उच्यते स्यादौ 'यस्य लोपः' इत्यस्याभावो ज्ञापितोऽकारविधानेन अन्यथा ङसिस्त इत्यवक्ष्यत् ॥ यद्वा तद्धितप्रकरणादीपीति सूत्रारम्भाच्च नात्र यस्य लोपः । देवादित्यत्र 'वावसाने' इति जबत्वचपत्वे 'हसेहे हसः' इति दतयोर्द्वित्वे रूपचतुष्टयं बोध्यम् ॥

( तत्त्वदी० )—ङसिरत् ॥ अत्राप्यत इत्यनुवर्तते । अतो वातप्रम्य इत्यादौ न । तपरत्वात् हाहा इत्यत्र न । अत्रापि ङकारो व्यर्थ इत्युक्तिः पूर्वोक्तयुक्त्यैव निरसनीया । न चाति कृते 'यस्य लोपः' इत्यनेनाकारस्य लोपोऽस्त्विति वाच्यम् । अकारोच्चारणसामर्थ्यात्स्यादौ न 'यस्य लोपः' इति प्रवर्तते । अत्राहुः । कार्ये 'सिस्योः' 'शेषाः'—इत्यादिनिर्देशात् ताद्धितप्रकरणाद्वा यस्य लोपो न । एवं स्थिते लाघवे विशेषाभावात् ङसिस्त इति न सूत्रितम् । तत्रोच्यते । सेस्त इत्येव सुवचम् । न च देव इत्यत्राव्याप्तिस्त्वन्यादेरिति लिंगेनातिव्याप्तिवारणात् । न चामर्थं तदिति वाच्यम् । छ इत्यादिलिंगात् । अथ देवस्येत्यत्रातिप्रसंगः तत्र ङस् स्येति विशेषसूत्रेण बाधात् इकारसहितानुकरणसंभवात् ॥

**ङस् स्य ॥** अकारात्परो ङस् स्यो भवति ॥ देवस्य ॥

( सुबोधिनी० )–ङस्स्य ॥ अतो ङस : स्यात् ॥ अत इति किम् । वातप्रम्यः॥ तपरः किम् । हाहाः ॥

( तत्त्वदी० )–ङस्स्येति ॥ पदद्वयमपि प्रथमान्तम् ॥ अतः किम् । वातप्रम्यः॥ तपरः किम् । हाहाः ॥ अत्राहुः । पूर्वस्य स्वरादित्यादिलिंगात्तदन्तलाभः । आदिति लिंगाच्च तस्यापीति ज्ञापकद्वय-बलमाश्रित्य देवस्य अस्येत्यादिसिद्धिरीति । वस्तुतस्तु तदन्तलाभाय तल्लाभाय च ज्ञापकद्वयानुसरण-क्लेशोऽपार्थ एव देवस्येत्यादौ ङसोतः परत्वसंभवात् । न च विहितविशेषणादातोऽविहितत्वाभावेन देव-स्येत्यादिसिद्धिर्न स्यादिति शङ्कनीयं तस्येत्यादिसिद्ध्यर्थविहितविशेषणानाश्रयणात् ॥

**ओसि ॥** अकारस्यैत्वं भवति ओसि परे ॥ देवयोः ॥

( सुबोधिनी )–ओसि ॥ अत एकारः स्यादोसि परे ॥ अत इति किम् । हर्योः ॥ तपरः किम् । हाहौः ॥ ओसि किम् । देवस्य ॥

( तत्त्वदी० )–ओसि ॥ अत्रापि स्याद्यधिकारादेव ओस इत्यादौ नातिप्रसङ्गः । आ उस्रः ओस्रः ॥ अ इति किम् । भान्वोः ॥ तपरः किम् । हाहौः ॥ ओसीति किम । देवस्य ॥

**नुडामः ॥** समानादुत्तरस्यामो नुडागमो भवति पुंसि तु ह्रस्वादेव ॥

( सुबोधिनी )–नुडामः ॥ आमो नुडिति कर्तव्ये नुटः पूर्वोच्चारणं प्राथम्यार्थम् । यत्र नुडन्यच्च प्राप्नोति तत्र प्रथम नुडेव भवति । तेन स्त्रीणां वारीणामित्यादावुभय-प्रसंगे परावियनुमौ बाधित्वा नुडव । अत एव प्राक् प्रायशो दृश्यतामित्युक्तेर्बीजम् । तत्र नुटा क्वचित्पूर्वेणापि परस्य बाधः क्रियत इति तदर्थः। किं च मण्डूकप्लुत्या 'ङ्णो ह्रस्वात्' इति सूत्राद् ह्रस्वादिति पदं पुंस इति चात्रानुवर्त्य वाक्यभेदेन संवध्यते । समानादित्यनुवृत्तं समानान्तान्नाम्न आमो नुट् स्यात । पुल्लिङ्गे तु ह्रस्वान्तान्नाम्न एव परस्यामा नुट् न दीर्घान्तान्नाम्न इत्यर्थः ॥ समानादिति किम् । रायाम् । भवताम् ॥ ह्रस्वान्तात् किम । हाहाम् ॥ पुंस इति किम् । वातप्रम्याम् ॥ नाम्न इति किम् । कारयांचकार ॥ पचतितरामित्यत्र तृकारानुबन्ध आम् ज्ञेयः तेन न नुट् 'निरनुबन्धक-ग्रहणे न सानुबन्धकस्य' इति वचनात् । ङेरादेशस्यामस्तु न नुट् परत्वेनाड्यड्भ्यां बाधनात् स्त्रियामित्यादिनिर्देशाच्च ॥

( तत्त्वदी० )–नुडामः ॥ नुट् आम इति छेदः ॥ अत्र समानादित्यनुवर्तते । तेन रायामि-त्यादौ न । अत्राहुः । अत्राधातोरित्यनुवर्तनीयं श्रियामित्याद्यर्थं तन्न परेणेया बाधात् । एवं तर्हि कारयांचकारेत्यादावतिप्रसङ्गवारणायाधातोरित्यनुवर्तनात्तदपि न परत्वाद्गुणेन बाधात् । पातयांचकारे-त्यादावपि लोपेन बाधः । पचतितरामित्यादावपि यस्य लोपः परः । न चैवमपि मालांचकारेत्यत्र नुट् स्यादिति वाच्यम् । स्याद्यधिकारेण तद्बाधात् इति । अत्रेदमवधेयम् । स्याद्यधिकारस्य जागरूक-त्वेन गुणाल्लोपादीनां परत्वानुधावनेन बाधान्वेषणस्य व्यर्थत्वात् ॥ अत्र ङेरामः कुतो न नुडिति चेन्न।

स्त्रियामित्यादिलिङ्गेन विभक्त्युपदेशकाले विद्यमानस्य वामोऽत्र ग्रहणात् । अत एव चतुराम् शौ च देव आमः देव आमि इत्यादौ नातिप्रसङ्गः । एतेनैतद्वारणायानर्थकत्वेन समानान्तान्नाम्नोऽभावेन वा प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमित्यादि समाधानं परास्तम् । ननु वारीणां स्त्रीणामित्यत्र परत्वान्नुमियौ भविष्यतः न नुट् । अथ नुमि न क्षतिरिति वाच्यम् । नुट्सहित एवामि दीर्घविधानात् दीर्घताभावः प्रसज्येत । अत्रोच्यते । प्रायशो दृश्यतामिहेत्यत्र प्रायश इत्यस्य ग्रहणेन क्वचित्पूर्वेणापि परस्य बाधदर्शनात् । आमो मस्येत्वं तु गमां स्वर इत्यादिनिर्देशान्न । ननु हाहामित्यादौ कुतो न नुट् । समानात्परत्वसंभवादित्याह ॥ **पुंसि त्वित्यादि** ॥ अयमाशयः । अत्र ङ्णो ह्रस्वादिति सूत्रान्मण्डूकप्लुत्या ह्रस्वादिति पुंस इति चानुवर्त्य पुंसि तु ह्रस्वादेवेति व्याख्यानात्तत्र ह्रस्वात्परत्वाभावान्न नुट्। अत्रार्थे ज्ञपानां दांहौ इत्यादिलिङ्गम् ॥

**नामि ॥ नामि परे पूर्वस्य दीर्घो भवति ॥ देवानाम् । देवे, देवयोः ॥**

**( सुबोधिनी )—नामि ॥ पूर्वस्य स्वरान्तस्य नाम्नो दीर्घः स्यात् नुट्सहिते आमि परे ॥ नुम्सहिते आमि तु न दीर्घो भवति। यदि हि नुम्सहिते आम्यपि दीर्घः स्यात्तर्हि नुमं बाधित्वा नुड्विधानं व्यर्थ स्यात् । नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन इत्युक्तत्वान्नुट्सहित एव आम् गृह्यते ॥**

**( तत्त्वदी० )—नामी**ति॥ नुट्सहित आम् नाम् तस्मिन् नामि परे पूर्वस्य दीर्घो भवति इत्यर्थः॥ आमीति तु न सूत्रितं वर्मणामित्यादावपि दीर्घः स्यात्। तथाहि । अत्र नोपधाया इति सूत्रस्य प्राप्तिसंभवः स्यात्तत्राप्यामीत्यस्यानुवृत्तेरामः सत्त्वात् ॥ यत्तु कैश्चिन्नामीत्युक्त्या वारीणामित्यत्र सनुम्यप्यामि दीर्घः सिध्यतीत्युक्तम् । तत्र नुट्सहित आम् नाम् तस्मिन्नामीति व्याख्यानं सर्वसंमतत्वेन स्वोक्त्यैव तद्विरोधेन चोपेक्षितम् ॥

**क्लिात्षः सः कृतस्य ॥ कवर्गादिलाच्च प्रत्याहारात्परस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति अन्ते स्थितस्य न भवति ॥ देवेषु ॥**

**( सुबोधिनी )—क्लिात्षः सः कृतस्य ॥ कुश्च इलश्चानयोः समाहारः क्लिं तस्मात् क्लिात् । क्रियते स्म विधीयते स्मेति कर्मणि क्तः । कृञो विहितस्य कृतस्य शास्त्रेण विहितस्येत्यर्थः॥स इति षष्ठ्यन्तम्॥ ष इति प्रथमान्तम्॥अकार उच्चारणार्थः ॥ क्लिात्परस्य कृतस्यादेशरूपस्य प्रत्ययावयवस्य च सः स्थाने षः स्यात् ॥ष्रुनों णोऽनन्ते' इत्यतोऽनन्ते इत्यनुवर्तते । तेन पदान्ते स्थितस्य सस्य षत्वं न ॥ क्लिात्किम् । देवस्य ॥ कृतस्येति किम् । सुपीः, सुपिसौ ॥ पदान्ते स्थितस्य नेति किम् । हिरस्तत्र ॥**

**( तत्त्वदी० )—क्लिात्षः सः कृतस्ये**ति ॥ कुश्च इलश्च क्लिं तस्मात् ॥ ष इति प्रथमान्तम् ॥ स इति षष्ठ्यन्तम् ॥ अत्र ष्रुनों णोऽनन्त इत्यतोऽनन्त इत्यनुवर्तते । ततश्चान्ते स्थितस्य सस्य षत्वं न हरिस्तत्रेत्यादौ ॥ ननु कृतस्य सस्येति व्याख्यानात् देवेष्वित्यादौ सुपः कृतत्वेन समात्र-

स्य कृतकत्वाभावात्कथं षत्वमिति चेन्न । अरात्रिष्वित्यादिलिङ्गात्क्वचिदवयवग्रहणेनापि समुदायस्य ग्रहणात् । न चैवं तिस्र इत्यादौ षत्वप्रसङ्ग इति वाच्यं तत्र तिसृचतसृ इति सत्वनिर्देशेन तद्बाधन_ संभवात् । अत्र केचित् । नन्वत्र कु इति 'कु, शब्दे' इति धातोर्ग्रहणं कुत्सितार्थाव्ययस्य वा क वर्गस्य वा । नाद्यः इलादित्येव सिद्धत्वात् । ननु यदा कुर्धातुस्तदा इलोपि गत्यर्थो धातुरेव साहचर्यात् । मैवम् अकारोच्चारणसामर्थ्यान्न धातुः । तर्हि कोरेव यथा स्यान्नान्यस्माद्धातोरिति नियमार्थम् कुधातुरेवेति चेन्न इलेन संज्ञाशब्देन साहचर्यात्संज्ञाशब्दस्यैव कोर्ग्रहणात् । चोः कुरित्यादौ कवर्गार्थस्यैव सिद्धत्वाच्चेत्याहुः । सतो हि कार्यिणः कार्येण भवितव्यमिति । सः ष इति निर्देष्टव्ये विपरीतनिर्देशः षस्स इति द्विसकारनिर्देशेन षत्ववत्सत्वस्यापि क्वचिद्विध्यर्थः । तेन सिस्वेदयिषतीत्यादि सिद्धम् । यच्च दधिसेचौ यजूःषु सर्पीषि अवष्टम्भः सुष्टु इत्यादिसिद्धयर्थमनेकक्लेशानुकरणं तत्सर्वं रभसोक्तिमात्रमित्युपेक्षितम् । बहुसेचावित्यत्र षत्वनिषेधार्थं शेषा निपात्याः कत्यादय इत्यस्य शरणीकर्तव्यत्वेन सर्वस्यानुक्तस्यानेनैव निर्वाहसत्त्वात् ॥ किलात्किम् । देवस्य । विश्वपासु ॥ कृतस्येति किम् । विसम् ॥

**सिर्धिः ॥ आमन्त्रणेऽर्थे सिर्धिसंज्ञको भवति ॥**

**( सुबोधिनी )–सिर्धिः ॥ आमन्त्र्यते प्रसन्नं क्रियतेऽनेनेत्यामन्त्रणम् । साधने युट् ॥ आमन्त्रणे किम् । रामः । सत्यः ॥ सिः किम् । हे रामौ ॥**

( तत्त्वदी० )–**सिर्द्धिरि**ति ॥ आमन्त्रण इत्यनुवर्तते इत्यभिप्रेत्याह–**आमन्त्रणेऽर्थे** इति ॥ आमन्त्रणं चानुकूलकरणम् ॥ आमन्त्रणे किम् । रामः ॥ सिः किम् । हे रामौ ॥

**समानाद्धेर्लोपोऽधातोः ॥ ह्रस्वात्समानादेदोतश्चोत्तरस्य धेर्लोपो भवत्यधातोः ॥ आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक् प्रयोगः ॥ हे देव, हे देवौ, हे देवाः ॥ एवं घटपटरामकृष्णमुकुन्दादयः ॥**

**(सुबोधिनी)–समानाद्धेर्लोपोऽधातोः॥ङ्णनो ह्रस्वात् इत्यतो मण्डूकप्लुत्या ह्रस्वादिति पदम् । एदोतोतः इत्यत एदोत इति चानुवर्तते । ह्रस्वसमानान्तादेदोदन्ताच्च नाम्नः परस्य धेर्लोपः स्यात् ॥ ह्रस्वसमानान्तादिति किम् । हे हाहाः हे वातप्रमीः ॥ अधातोरित्युत्तरार्थम् ॥ एदोत इति ग्रहणं किम् । हे हरे हे विष्णो ॥ अत्र हि परत्वान्नित्यत्वाच्च धावित्यनेनैदोतोः कृतयोर्ह्रस्वात्परत्वं नास्ति ॥ अभिमुखस्य भाव आभिमुख्यं संमुखीकरणम् । आभिमुख्यस्याभिव्यक्तिः प्रकटीकरणं आभिमुख्याभिव्यक्तिस्तस्यै । नाम्नः प्राक् हे शब्दस्य प्रयोगोऽर्थतः शब्दतो वा बोध्यः ॥**

( तत्त्वदी० )–**समानाद्धेर्लोपोऽधातोरि**ति ॥ लोपः अधातोरिति छेदः ॥ समानादिति किम् । गौः ॥ अधातोरिति किम् । हे श्रीः ॥ ननु हे हाहा हे हरे इत्यादावतिव्याप्त्यव्याप्ती इत्यत आह **ह्रस्वादि**ति ॥ ननु सूत्रे ह्रस्वादित्येव किमिति नोक्तम् । किं समानादित्यनेनेति चेत् अमृशारस्येत्यत्रानुवृत्त्यर्थमेतस्यावश्यकत्वात् । न च समानादित्युक्त्या कथं ह्रस्वलाभ इति वाच्यम् । लक्ष-

णयेति गृहाण ॥ अथैवमप्येदोतोः कुतो लब्धिरिति चेत् अधातुग्रहणात् । अधातुग्रहणात्कथमिति चेत् शृणु । अधातुग्रहणं तावद्व्यर्थम् । न च हे श्रीरित्यादावतिव्याप्तिः ह्रस्वग्रहणेनैव तद्वारणात् । न चाम्शसोरित्यत्रानुवृत्त्यर्थं श्रियमित्यादौ परत्वादिनैव तद्बाधात् । न चाचिनवमित्यादिवारणार्थं स्याद्यधिकारेणैव तद्वारणसंभवात् । तस्माद्धातुग्रहणं व्यर्थत्वादेतज्ज्ञापनार्थमेवोपात्तम् । लोपग्रहणं तु व्यर्थमेव । रिलोपो दीर्घ इत्यतोऽनुवृत्त्यैव तल्लाभात् । न चैकयोगनिर्दिष्टत्वेन दीर्घस्याप्यनुवृत्तिः स्यादिति वाच्यं सैषाद्धस इत्यत्र केवलस्याप्यनुवृत्तिदर्शनात् ॥ यद्वा लोपग्रहणस्यैवैतज्ज्ञापनमधातुग्रहणं तु त्रितो नुमित्यत्रोपयोगार्थमपि न्याय्यम् । जलधिरित्यादौ तु स्याद्यधिकारेण वारणम् । एवं च ग्रामणि कुलमित्यादि एकदेशविकृतन्यायेन धातुत्वेऽनेनाप्राप्तेऽपि नपुंसकात्स्यमोर्लुकैव रूपसिद्धेः ॥

**सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम सम सिम त्वत् त्व भवतु नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मद् अस्मद् ॥**

## एते सर्वादयस्त्रिलिङ्गाः ॥

( सुबोधिनी )—सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम सम सिम त्वत् त्व भवतु नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मद् अस्मद् ॥ एते सर्वादयस्त्रिलिङ्गाः ॥ एते पञ्चत्रिंशच्छब्दाः त्रीणि लिङ्गानि येषां ते त्रिलिङ्गाः सर्वादिसंज्ञका ज्ञेयाः गणसूत्रमिदम् । आदिशब्दोऽत्रावयववाची । सर्वः आदिराद्यावयवो येषां ते सर्वादयः । तद्गुणसंविज्ञानोऽयं बहुव्रीहिः । तस्यान्यपदार्थस्य गुणानां विशेषणानां वृत्तिपदार्थरूपाणां कार्यान्वयितया संविज्ञानं यस्मिन् स तद्गुणसंविज्ञान इत्यक्षरार्थः ॥ आदिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनम् । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदङ्गेष्विति न्यायेन तदवयवेषु प्रवर्तमाना सर्वादिसंज्ञाविशेषात्सर्वशब्देऽपि वर्तते इति युक्तम् । तद्गुणसंविज्ञानत्वं संयोगसमवायान्यतरसंबन्धे लम्बकर्णमानयेत्यादौ तद्गुणसंविज्ञानत्वमेव ॥ स्वस्वामिभावसंबन्धे तु चित्रगुमानयेत्यादावतद्गुणसंविज्ञानत्वम् ॥ तदन्तस्यापीयं सर्वादिसंज्ञा भवति द्वन्द्वे सर्वादीनां सर्वकार्यं न इति ज्ञापकात् । संज्ञोपसर्जनीभूतेषु सर्वादिषु सर्वादिसंज्ञा न प्रवर्तते । मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्ययो नामुख्ये इति न्यायात् । मुख्यो हि लोकप्रसिद्धोऽर्थः । तत्र सर्वविश्वशब्दौ कृत्स्नपर्यायौ ॥ उभशब्दो द्वित्वविशिष्टस्य वाचकोऽतो नित्यं द्विवचनान्तः । ननु उभस्य सर्वनामत्वे कोऽर्थ इति भाष्यकारप्रयोगो विरुध्येत । उच्यते । अर्थपरस्यैव नित्यं द्विवचनान्तता न तु स्वरूपानुकरणस्येति । अथ सर्वादिषु उभशब्दपाठो व्यर्थः । सर्वादिकार्याणां स्मडादीनां द्विवचनेऽभावात् । उच्यते । सर्वादिगणे उभशब्दस्य पाठस्तु उभकाविति रूपसिद्ध्यर्थः । तथाहि । उभशब्दस्तावद् द्विवचनमात्रविषयः । त्रित्स्वरितेत उभे इति लिङ्गात् । समा-

सतद्धितादौ तु द्विवचनलोपे नासौ प्रयुज्यतेऽनभिधानात्। द्विवचनलोपे तु उभशब्दाद्वृत्तिविषये स्वार्थे नित्यमयट् भवति। उभयोऽन्यत्रेति। अन्यत्र द्विवचनपरत्वाभावे इत्युक्तत्वात्। तेन उभयतः। उभयत्र। उभाभ्यां पक्षाभ्यां विनीता निद्रा यैस्ते इति विग्रहे 'उभयपक्षविनीतनिद्राः' इत्यादिप्रयोगवत् कप्रत्ययेऽप्ययट् प्राप्तः। अयटि सति उभयकाविति रूपापत्तिः स्यात् तन्निवारणार्थः सर्वादिषूभशब्दस्य पाठः। तेनाख्याताव्ययसर्वादेष्टेः प्रागक् इत्यक्प्रत्यये उभकाविति सिध्यति। तद्धितस्य मध्यपतितत्वेन द्विवचनपरत्वानपायात्॥ उभयशब्दस्तु अवयवद्वयारब्धेऽवयविनि वर्तते। उभाववयवौ यस्य स उभयः संख्याया अवयवे तयडयटौ इत्ययट्। ननु 'द्वयेषामपि मेदिनीभृताम्' इति माघप्रयोगः कथं संगच्छते तस्य सर्वादित्वाभावात्। उच्यते। द्वयं द्वैधमिच्छन्ति गच्छन्तीति द्वयेषस्तेषां द्वयेषामिति इषेः क्लीबन्तस्य रूपम्॥ अन्यशब्दो भिन्नार्थः॥ अन्यतरशब्दोऽव्युत्पन्नः स्वभावात् द्विविषये निर्द्धारणेऽस्ति॥ इतरस्त्वन्यनीचयोः॥डतरडतमौ प्रत्ययौ। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति विभक्त्यन्तं पदमिति ज्ञापकात्। तथापीह तदन्तग्रहणम्। येभ्यो डतरडतमौ विहितौ तेषां तदन्तानां ग्रहणमित्यर्थः। केवलयोः संज्ञायाः प्रयोजनाभावात्॥ कतरकतमयतरयतमादयस्तदन्ताः। द्वयोर्बहूनां चैकस्य निर्द्धारणे इति डतरडतमौ॥ समशब्दः सर्वपर्यायः। तुल्यपर्यायस्तु नेह गृह्यते॥ 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः'॥ त्वत्त्वशब्दावन्यपर्यायौ। आद्यस्तान्तः। एतस्य पाठोऽकार्थः॥ भवतुशब्दस्तु भवदर्थः॥ उणादौ भातेर्डवतुरिति डवतुप्रत्ययान्त उकारानुबन्धो व्युत्पादितः। आ सर्वादेः इत्यात्वमकप्रत्ययश्च प्रयोजनमस्य भवादृक् भवकान्॥ नेमशब्दोऽर्द्धवाची॥ "एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते"॥ संख्यायामेकवचनान्तः॥ पूर्वपरावरशब्दा दिग्देशकालवाचकाः सर्वादिसंज्ञकाः॥दक्षिणशब्दस्तु दिग्देशवाचकः सर्वादिः न तु प्रवीणवाची॥उत्तरापरशब्दौ दिग्देशकालवाचकौ सर्वादी॥ अधरस्तु दिग्देशवाचकः सर्वादिः॥ 'स्वोज्ञातवात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धन' इत्यमरः॥ 'स्वः स्यात्पुंस्यात्मविज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने।' इति मेदिनी॥ इति चत्वारोऽर्थाः स्वशब्दस्य। तत्रात्मात्मीययोरेव सर्वादित्वम्॥ "अन्तरमवकाशावधि परिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च॥" इत्यन्तरशब्दस्यार्थाः। तत्र परिधानबहिर्योगयोरेव सर्वादित्वम्॥ त्यदतदौ शब्दौ पूर्वोक्तपरामर्शकौ॥ यदशब्द उद्देश्यसमर्थकः॥ एतदिदमौ शब्दौ प्रत्यक्षोपस्थितवाचकौ॥ अदसशब्दस्तु व्यवहितवाचकः। उक्तं च।"इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्॥ अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इति॥ द्विशब्दो द्वित्वविशिष्टवाचकः॥ किमशब्दः प्रश्ने आक्षेपे च॥ अलिङ्गः संबोधनैकविषयकश्च युष्मदर्थः॥ अलिङ्ग उच्चारयित्रर्थोऽस्मच्छब्दः॥

( तत्त्वदी० )–सर्वविश्वेत्यादि ॥ सर्वादयः पञ्चत्रिंशत् ॥ तत्र सर्वविश्वशब्दौ कृत्स्नपर्यायौ ॥ उभशब्दो द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः पाठस्तूभकावित्यकार्थः अन्यथा क एव स्यात् । तस्मिन् द्विवचनपरत्वाभावादुभयकावित्येव रूपं स्यात् ॥ उभयशब्दस्तु अवयवद्वयारब्ध इत्यर्थः । तिरोहितावयवभेदत्वादेकवचनम् ॥ अन्यो भिन्नार्थः ॥ अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्द्धारणे वर्त्तेते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा ॥ इतरशब्दस्त्वन्यनीचयोः ॥ त्वत्त्वइत्यन्यपर्यायौ । आद्यस्तान्तः ॥ नेम इत्यर्द्धे ॥ समः सर्वपर्यायः । तुल्यपर्यायस्तु नेह गृह्यते ॥ 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः' ॥ पूर्वपरावरोत्तरापराः पञ्च दिक्काल्योस्तदवच्छिन्ने च ॥ दक्षिणाधरशब्दौ दिशि तदवच्छिन्ने च । न दक्षिणः प्रवीणः अधरे ताम्बूलरागः उत्तरे प्रत्युत्तरें वा शक्त इत्येते गृह्यन्ते । कथं परे शत्रवः अपरे वादिन इति शत्रुप्रतिवादिवाचिनोः सर्वादित्वम् । उपचारादिति गृहाण । न चोपसर्जनत्वात्कथमिति वाच्यम्। न हि लाक्षणिकत्वमुपसर्जनत्वम् । किं तु स्वार्थविशिष्टार्थान्तरसंक्रमः । अथ दिग्वाचकत्वे संज्ञात्वात्सर्वादिकार्यनिषेध इति वाच्यम् । आधुनिकसंकेतो हि संज्ञा । न च सा दिक्षु कुरुषु तु सास्त्येव । तेनोत्तराः कुरवः । केचित्तु दिक्षु चिरन्तनः कुरुषु तु आधुनिकः संकेत इत्यत्र प्रमाणाभावः । सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दप्रवृत्तेरित्याहुः । तत्र वृद्धव्यवहार एव प्रमाणमिति तु नव्याः ॥ स्वशब्दस्य ज्ञातिरात्मा धनमात्मीयं चेति चत्वारोऽर्थाः । तत्र जातौ धने च न सर्वादित्वम् । "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च" इति ॥ अन्तरशब्दस्यार्थेषु परिधानबहिर्योगयोरेव सर्वादित्वम् । बहिरित्यनावृतो देशो बाह्यं चोच्यते ॥ भवच्छब्दस्य पाठस्तु आसर्वादेरित्यात्वार्थोऽकार्थश्च ॥ त्यद्तद्शब्दौ पूर्वोक्तपरामर्शकौ ॥ यदुद्देश्यसमर्थकः ॥ एतदिमौ प्रत्यक्षोपस्थिते ॥ अदस् व्यवहिते ॥ "एकोऽन्यार्थे प्रधानेऽल्पे प्रथमे केवले तथा । साधारणे समाने च संख्यायां च प्रवर्त्तते ॥" संख्यायामेकवचनान्त एव ॥ अलिङ्गः संबोधनैकविषयश्च युष्मदर्थः ॥ किंशब्दः प्रश्ने आक्षेपे च ॥

## जसी ॥ सर्वादेरकारान्तात्परो जस ईर्भवति ॥ सर्वे ॥

( सुबोधिनी )–जसी ॥ अदन्तात्सर्वादेर्जस ईः स्यात् ॥ षष्ठ्या अविधानान्नान्तस्यायमादेशो भवति । निर्दिश्यमानस्यादेशा भवन्ति इति न्यायेन जस इत्यस्य सर्वस्यैव स्थाने आदेशः ॥ यद्वा जसीत्यत्र ई इति प्रश्लेषेण गुरुत्वात्सर्वादेशः । अन्यथा दीर्घग्रहणस्य प्रयोजनाभावात् ॥ यद्वा अस्त्यत्र दीर्घस्य प्रयोजनम् । द्वितीय ईकारः प्रथमचरमादिभ्योऽपि विध्यर्थः ॥ ननु अकारमाश्रित्य जात ईकारः कथमेतद्रूपेणाकारस्य विघातकः स्यात् । उच्यते । उभय इति निर्देशेन सन्निपातपरिभाषाया अनित्यत्वाभ्युपगमादविघातको भवतीत्यर्थः ॥

( तत्त्वदी० )–जसी ॥ जस् ई इ इति छेदः । इकारप्रश्लेषः किमर्थम् इति चेत्सत्यम् । प्रथमादिभ्योऽपि विध्यर्थो द्वितीयः । अथैवं जसोऽन्त्यस्य सस्यैव किं नेति चेन्न । अन्त्यविधायकषष्ठ्या अदर्श

नात् । उभय इति लिङ्गाच्च । अत्र केचित्सप्तमीभ्रमव्यावृत्त्यर्थं दीर्घविधिः न तु तदर्थमित्याहुः । तन्न । उभय इति निर्देशेन तद्भ्रमनिरासात् ॥ ननु सर्वे इत्यत्र कथम् अ इ ए इत्यनेनैत्वं सन्निपातपरिभाषया तस्य बाधात् इति चेन्न । अत्रोभयोरपि विनाशे सन्निपातपरिभाषाया अविषयत्वात् । उभये इति निर्देशेन तस्या अनित्यत्वज्ञापनाद्वा ॥

**ष्रुर्नो णोऽनन्ते ॥षकाररेफऋवर्णेभ्यः परस्य नकारस्यैकपदस्थस्य णकारादेशो भवत्यन्ते स्थितस्य न भवति ॥ सर्वानित्यादौ ॥**

**( सुबोधिनी )–ष्रुर्नो णोऽनन्ते ॥ ष् च र् च आ च एषां समाहारः षृ तस्मात् ष्रुः । संज्ञापूर्वकत्वेनानित्यत्वात् नामिनः स्वरे इति न नुम् । अनन्ते इत्यत्र नञ् प्रसज्यप्रतिषेध एव । अन्तशब्देन पदान्त एव गृह्यते न तु वाक्यान्तः व्याकरणे पदसंस्कारपक्षस्याभ्युपगमात् । ष्रुर्न धातोर्नामिन इत्यादिनिर्देशादेकपदे एव णत्वविधिरास्ति । तेनैकपदस्थस्य षृरऋवर्णेभ्यः परस्य नस्य णः स्यादपदान्ते ॥ यथा पुष्णाति । चतुर्णाम् धातृणाम् ॥ अपदान्ते किम् । पितॄन् ॥ ष्रुरिति किम् । देवेन ॥**

**( तत्त्वदी० )–ष्रुर्नोणोऽनन्त** इति ॥ ष् च र् च आ च एषां समाहारः षृ तस्मात् ष्रुः । षकाररेफऋवर्णेभ्य इत्यर्थः ॥ ननु समासे नपुंसकत्वात्ष्रुरिति कथमिति चेत्सत्यम् । नामिनः स्वर इति नुमः संज्ञापूर्वकत्वेनानित्यत्वात् । सौत्रत्वाद्वा पुंस्त्वम् ॥ अनन्ते इति किम् । कर्तॄन् ॥ ष्रुरिति किम् । देवेन । न इति किम् । वर्म ॥ ननु हरेर्नेत्रमित्यत्र कुतो न णत्वमिति चेन्न । धातोर्नामिन इत्यादिनिर्देशेनैकपद एवास्य स्वीकारात् । अथैवं रामनामेत्यादावपि कुतो न णत्वं समासेनैकपदत्वादिति चेन्न । गर्गनडेत्यादिनिर्देशेन समासेनैकपदत्वे न णत्वम् । अथ हरिकामेणेत्यादौ कथमिति वाच्यं ज्ञापकसिद्धं न सर्वत्रेत्याद्याश्रयणात् ॥ नन्वत्र षग्रहणं किमर्थम् न च पुष्णातीत्यत्र णत्वं कथमिति वाच्यम् ष्टुत्वेनैव तत्सिद्धेः । न च पुषाणेत्यादौ व्यवहितेऽपि णत्वार्थमिति चेत् ॥ ष्रुरिति पञ्चमीनिर्देशेनाव्यवहितस्यैव णत्वविधानात् । तथाचोत्तरार्थमिहैव कृतम् । षरेफसाहचर्यादृकारोऽपि वर्ण एव गृह्यते न तु धातुः । ननु पितॄणामित्यत्र ऋकारैकदेशरेफमाश्रित्य णत्वं भविष्यति किमृकारेणेति चेन्न । नरसिंहवज्जात्यन्तराक्रान्तत्वादृकारत्वेनैव तस्य सर्वव्यवहारसिद्धत्वान्न तु रेफत्वेनेति न तत्र रेफत्वमतोऽवश्यमृग्रहणम् । अत एव हरे इन्द्र इत्यादावेकारान्तर्गतामिकारमाश्रित्य न सवर्णदीर्घः । अत्र केचित् । ननु चैवमपि धातर्नमस्ते इत्यादौ पदादेर्नस्य णत्वं स्यात् अनन्त इति निषेधानुपस्थानात् । अनन्तइत्यस्य काकाक्षिगोलकन्यायेनावृत्त्या वा ष्रुरित्यनेनापि संबन्धात् । पदान्तेभ्यः षकाररेफऋवर्णेभ्योऽपि प्रतिषेधादित्याहुः । तत्रेदमवधेयम् । एकपदे एव णत्वविधानस्योक्तत्वेन द्वितीयपदस्थस्य नस्य णत्वाशङ्कानिर्मूलेति सूरिभिर्विभावनीयम् ॥

**अवकुप्वन्तरेऽपि ॥ अवप्रत्याहारेण कवर्गेण पवर्गेणानुस्वारेण विसर्गेण ×क ×पाभ्यां च मध्ये व्यवधानेऽपि भवति नान्येन ॥ सर्वेण ॥**

( सुबोधिनी )—अवकुप्वन्तरेऽपि ॥ अवश्च कुश्च पुश्च तेषां समाहारः अवकुपु । तेनान्तरं अवकुप्वन्तरं तस्मिन् । स्वराद्यदन्तस्य इति अवशब्दस्य पूर्वनिपातः । दन्तौष्ठ्यवकारेणावप्रत्याहारः । अन्तरशब्दो मध्यवाची । ष्रुरित्यनुवर्तते । पञ्चमीनिर्देशाद्व्यवधाने सति णत्वं न प्राप्नोत्यत इदमारभ्यते । अत्रापिशब्दोऽनुक्तसमुच्चयार्थः । तेनानुस्वारविसर्गजिह्वामूलीयोपध्मानीया ज्ञेयाः । एतेषां व्यस्तानां यथासंभवं मिलितानां च मध्ये व्यवधाने सति ष्रुः परस्य नस्य णः स्यादनन्ते ॥ अवेत्यादि किम् । मृत्स्ना ॥ ष्रुरिति किम् । भानुना ॥ अनन्ते किम् । सर्वान् ॥ अनुस्वारातिव्यवधाने यथा । बृंहणम् । उरः केन-उरᳵकेण । उरः पेण-उरᳶपेणेत्यादि ॥

( तत्त्वदी० )—अवकुप्वन्तरेऽपि ॥ अवश्च कुश्च पुश्च एतेषां समाहारः अवकुपु तेन अन्तरं तस्मिन् ॥ यदि गर्गाः शतं दण्ड्यन्तामितिवत्समुदाये वाक्यसमाप्तिराश्रीयते तदा क्वापि न प्राप्तिः । ब्राह्मणा भोज्यन्तामितिवद्यदि प्रत्येकं वाक्यपरिसमाप्तिस्तदा अवर्णेत्यादि न स्यात् । तस्मादेतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवाये णत्वं भवति । यथा गर्गैः सह न भोक्तव्यमिति प्रत्येकं च न सह भुज्यते समुदितैरपि तथेहापि व्यस्ताः समस्ताश्चावादयो व्यवायमुपलक्षयितुं शक्ताः । अपिशब्दोऽनुक्तसमुच्चयार्थः । तेनानुस्वारावसगᳵकᳶपव्यवायेऽपि णो भवति ॥ कुप्ववान्तरेऽपीति सुवचम् ॥ अल्पस्वरत्वादुकारान्तत्वात्कु पु एतयोरेव पूर्वनिपातस्य न्याय्यत्वात् । तथा च लाघवमपीति ध्येयम् । स्वराद्यदन्तस्येत्यस्य यदि परत्वाद्बलवत्त्वं तदेदम् ॥

**सर्वादेः स्मट् ॥ सर्वादेरकारान्तात्परस्य ङे इत्येतस्य स्मडागमो भवति ॥ सर्वस्मै ॥**

( सुबोधिनी )—सर्वादेः स्मट् ॥ ङे अगित्यस्यापवादोऽयम् । अदन्तात्सर्वादेर्ङे इत्यस्य स्मट् स्यात् ॥ अदन्तादिति किम् । त्वते । भवते ॥ सर्वादेरिति किम् । रामाय ॥

( तत्त्वदी० )— सर्वादेः स्मडिति ॥ अत्रात इत्यनुवृत्तेरदन्तादिति । अतो भवते इत्यत्र न । तपरकरणं तु स्पष्टार्थमेव न त्वाबन्तनिवृत्त्यर्थं तत्र यडादिनैव बाधात् ॥ सर्वादेरिति किम् । देवाय ॥ अकोऽप्ययमपवादो येन नाप्राप्तिन्यायात् । सर्व आदिर्यस्य स सर्वादिरिति तद्गुणसंविज्ञानो बहुव्रीहिरतः सर्वशब्दस्यापि लाभः । न च सर्वादिशब्दस्य समुदायवाचित्वात्कथं तदवयवे सर्वशब्दे इति वाच्यम् । समुदायस्य युगपल्लक्ष्ये प्रयोगाभावादानर्थक्यात्तदङ्गेष्विति न्यायेन तदवयवे एव तत्कार्यम् ॥

**अतः ॥ सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति ॥ सर्वस्मात् ॥**

( सुबोधिनी )—अतः ॥ ङसिरत् इत्यतो ङसिरित्यनुवर्त्य विभक्तिविपरिणामेन व्याख्यातव्यम् । यथा अदन्तात्सर्वादेः परस्य ङसेरादेशस्यातः स्मट् स्यात् ॥

( तत्त्वदी० )—अत इति ॥ अत्र ङसेरादेश एवात् गृह्यते न त्वकारः तस्मादिति ज्ञापकात् ॥

**सुडामः ॥ सर्वादेरवर्णान्तात्परस्यामः सुडागमो भवति ॥ सर्वेषाम् ॥**

( सुबोधिनी ) सुडामः॥अम्शसोरस्य इत्यतो मण्डूकप्लुत्या अस्येत्यनुवर्त्य व्याख्येयम् । यथा अवर्णान्तात्सर्वादेरामः सुट् स्यात् । सुडामः इत्यत आम् इत्यनुवर्तनीयम् । तेनामः षष्ठीबहुवचनस्यामः सुडित्यर्थो ज्ञेयः । तेन 'आम्ङेः' इत्यादिना कृतस्यामस्तु सुड् न । युवाम् । आवाम् । सर्वस्यामित्यत्र परत्वात् ङितां यडित्यपि समाधानमस्ति॥

( तत्त्वदी० )–**सुडाम** इति ॥ अत्राम्शसोरस्येत्यतो मण्डूकप्लुत्यास्येत्यनुवृत्त्या अदिति नेत्याह–**अवर्णान्तादि**ति ॥ सर्वादेरेतावन्मात्रोक्तौ भवत इत्यत्रातिप्रसंगः स्यात् । अदन्तादित्युक्तावाबन्तेऽव्याप्तिः । किं चैवं सर्वमिच्छन्ति सर्वीयन्तीति सर्वियस्तेषां सर्व्रियां सर्वे कुर्वतामित्यादावतिव्याप्तिवारणाय यादीनां परत्वाद्यनुसरणक्लेशोऽपि न कार्यः ॥

**ङि स्मिन् ॥ सर्वादेरकारान्तात्परो ङिः स्मिन्भवति ॥ सर्वस्मिन् ॥ शेषं देववत् ॥ एवं विश्वादयः ॥ डतरडतमौ प्रत्ययौ । ततस्तदन्ताः शब्दा ग्राह्याः ॥**

( सुबोधिनी )–ङि स्मिन् ॥ अदन्तात्सर्वादेर्ङिः स्मिन् भवति ॥ अतः किम् । भवति ॥ सर्वादिगणे डतरडतमौ प्रत्ययौ पठितौ न केवलः प्रत्यय इत्युक्तत्वात् । तौ डतरडतमावन्ते येषां ते तदन्ताः कतरकतमादयो ज्ञेयाः ॥

( तत्त्वदी० )–**ङि स्मिन्निति** ॥ अत्राप्यत इत्युनुवर्तते । इ स्मिन्नित्येव सूत्रयितुमुचितम् । ङकारग्रहणं स्पष्टार्थम् । न च जसः शौ सर्वाणीत्यादावतिव्याप्तिरिति वाच्यम् । तत्र परत्वाल्लुमा बाधात् । अथ जातिपक्षे ह्रस्वग्रहणेन दीर्घस्यापि ग्रहे ईमौ जसीतिकृतेष्वतिप्रसंग इति वाच्यम् । उभे उभये इत्यादिलिङ्गेन ह्रस्वव्यक्तेरेवालाभात् । सर्वेष्टिरित्यादौ तु स्यादिविशेषणेन वारणसंभवात् । स्यादीनां परवर्ण इति व्याख्यानात् ॥ **ततस्तदन्ता** इत्यादि ॥ केवलयोः संज्ञायाः प्रयोजनाभावादित्यर्थः । एतन्मूलं तु जसी सर्वादेः स्मट् अतः ङिस्मिन्निति सूत्रचतुष्टये वेत्यनुवर्त्य तस्य व्यवस्थिततत्वमाश्रित्य सर्वार्थनिर्वाहो बोध्यः ॥

**( पूर्वादीनां नवनां जसङसिङीनामीस्मात्स्मिनो वा ) पूर्वे–पूर्वाः । पूर्वस्मात्–पूर्वात् । पूर्वस्मिन्–पूर्वे । शेषं सर्ववत् ॥ एवं परादयः ॥ सर्वादिः सर्वकार्यी स्यान्न चेद् गौणोऽथवाभिधा । पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि ॥ परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि ॥ सर्वमतिक्रान्तोऽतिसर्वः तस्मै अतिसर्वाय देहि । प्रियं सर्वं यस्यासौ प्रियसर्वः तस्मै प्रियसर्वाय । सर्वो नाम कश्चित्तस्मै सर्वाय । अतिपूर्वाय । अन्तरायां पुरि । समाय तुल्याय ॥ व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः ॥ असंज्ञायां किम् । उत्तराः कुरवः ॥ अन्त-**

रेऽन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ अन्तरेऽन्तरा वा चाण्डालस्य गृहाः । बाह्या इत्यर्थः ॥ बहिर्योगे किम् । ग्रामयोरन्तरे तापसः । मध्य इत्यर्थः ॥

(सुबोधिनी)-पूर्वादीनां नवानां जस्ङसिङीनामीस्मात्स्मिनो वा ॥ पूर्वादीनां सप्तानां व्यवस्थायामसंज्ञायां स्वशब्दस्य चात्मात्मीयार्थयोरन्तरशब्दस्य बाह्ये परिधानीये चार्थे गणपाठात्सर्वत्र सर्वादिसंज्ञा प्राप्ता सा जस्ङसिङिषु परतो वा भवतीत्यर्थः । सर्वादिः "सर्वकार्यी स्यान्न चेद्गौणोऽथवाभिधा । पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि ॥ परिधाने बहिर्योगे स्वोर्थज्ञात्यन्यवाच्यपि ॥' चेद्यदि :सर्वादिः सर्वादिगणे गौणो न अथवाऽभिधा नाम न स्यात् तदा सर्वादिः सर्वशब्दस्य कार्यमस्ति यस्य सः सर्वकार्यी स्याद्भवेत् । मान्तोपधात् इतीन् । सर्वनामाख्य इति वा पाठः । ये तु संज्ञोपसर्जनीभूताः सर्वादयस्तेषां सर्वादिकार्यमन्तर्गणकार्यं च न. सर्वादिसंज्ञाया अभावात् । सर्वादिकार्यं यथा । जसी इतीत्वम् । सर्वादेः इति स्मट् । अतः इति स्मट् । ङि स्मिन् इति स्मिन् । सुडामः इति सुडागमः । यटोच्च इति सुट् । इत्यादि ॥ अन्तर्गणकार्यं यथा । इत्वन्यादेः इति इतुः । त्यदादेष्टेः इत्यः । दस्य मः इति मः । सौ सः इति सः । इत्यादि ॥ स्वार्थं परित्यज्य अन्यार्थं ब्रूते स गौणः । गौणे यथा । सर्वमतिक्रान्त इत्यत्र अत्यादयः क्रान्ताद्यर्थे द्वितीययेति तत्पुरुषः । अतिसर्वस्तस्मै अतिसर्वाय पुरुषाय त्वं देहि । गौणत्वादत्र न स्मट् । प्रियं सर्वं यस्येति बहुव्रीहिः स प्रियसर्वः॥ संकेतकरणं संज्ञा । यथा कश्चित्पुरुषस्तस्य नाम सर्व इति तस्मै सर्वाय । संज्ञात्वादत्र न स्मट्॥ पूर्वादिसप्तको गणो व्यवस्थया सर्वकार्यी स्यात् । स्वाभिधेयापेक्षावधिनियमो व्यवस्थेति । स्वस्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः । अपेक्ष्यते इति अपेक्षः । कर्मणि घञ्प्रत्ययः । स्वशब्देन पूर्वादयः सप्त ग्राह्याः । स्वेषां पूर्वादीनामभिधेयः स्वाभिधेयो दिग्देशकालरूपोऽर्थः स्वाभिधेयस्यापेक्षः स्वाभिधेयापेक्षः 'कर्तृकार्ययोरक्तादौ' इति कर्तृषष्ठ्या समासः। स्वाभिधेयेनापेक्ष्यते इत्यर्थः॥स्वाभिधेयेनापेक्षश्चासाववधिनियमश्च स्वाभिधेयापेक्षावधिनियमो व्यवस्था । अवधिमपेक्ष्य ते पूर्वादयो यत्र स्युस्तत्र व्यवस्था भवतीत्यर्थः॥व्यवस्थायां किम् । दक्षिणा नराः । कुशला इत्यर्थः ॥ एवं अधरे ताम्बूलरागः । उत्तरे प्रत्युत्तरे च शक्त इति ॥ गौणे यथा । पूर्वमतिक्रान्तोऽतिपूर्वस्तस्मै अतिपूर्वाय पुरुषाय त्वं देहि । गौणत्वादत्र न स्मट् ॥ समशब्दोऽतुल्येऽर्थे सर्वकार्यः । तुल्येऽर्थे न भवतीत्यर्थः । समाय देहि । तुल्यार्थत्वादत्र न स्मट् ॥ अन्तरशब्दः परिधाने उत्तरीयेऽर्थे बहिर्योगे चार्थे सर्वकार्यः ॥ अपुरि पुरोविषयतायां सर्वकार्यी न भवति । बहिःशब्देनानावृतो देशो बाह्यं चोच्यते । अन्तरायां पुरीति प्राकाराद्बाह्यायां पुरि प्राकारान्तरवर्तिन्यां वा पुरि गृहाः सन्ति । सत्यपि बहिर्योगे पुरि विषयत्वान्न सर्वादिसंज्ञात्र । सर्वादित्वाभावात् यटोच्च इति न सुट् ॥ परिधाने तु अन्तरे अन्तरा वा शाटका इति । परिधानीया इत्यर्थः ।

सर्वादित्वात् वा जसी इति ईत्वम्। बहिःशब्दोऽर्थद्वयवाची उक्तः। तत्राद्ये यथा। अन्तरे अन्तरा वा गृहा इति। नगराद्बाह्याश्चाण्डालादिगृहा इत्यर्थः॥ द्वितीये तु नगराभ्यन्तरा गृहा इत्यर्थः। बाह्येन सहाभ्यन्तरस्य योगो ह्यस्ति ॥ बहिर्योगे किम्। ग्रामयोर्द्वयोरन्तरे मध्ये तापसा वसन्तीति अन्तरशब्दस्य मध्यार्थत्वान्न सर्वादिसंज्ञा। अत एवात्र पाक्षिको न स्मिन्॥ अर्थश्च ज्ञातिश्चार्थज्ञाती। अर्थज्ञातिभ्यामन्यावात्मात्मीयावर्थौ अर्थज्ञात्यन्यौ। अर्थज्ञात्यन्यौ वक्तीत्यर्थज्ञात्यन्यवाची स्वशब्दः सर्वकार्यः । आत्मात्मीयज्ञातिधनवाची स्वशब्दः। तत्र ज्ञातिधनयोः पर्युदासादात्मात्मीयौ परिशिष्टौ। तत्र सर्वादिसंज्ञा भवति। स्वे—स्वाः। आत्मानः—आत्मीया वेत्यर्थः । सर्वादित्वादत्र वा जसी इतीत्वम्। ज्ञातिधनवाचिनस्तु स्वायेत्यत्र सर्वादित्वाभावान्न स्मट्। ननु आत्मात्मीयवाचीति वक्तुं युक्तं पर्युदासग्रहणमनर्थकम्। उच्यते । ज्ञातित्वेन धनत्वेन च विवक्षायां सत्यामात्मीयार्थसर्वादिसंज्ञा मा भूदित्यर्थं पर्युदासग्रहणमिति॥ अन्यशब्दग्रहणमनर्थकम्। उच्यते। आत्मीयार्थस्यापि ज्ञातित्वेन धनत्वेन च विवक्षायां सत्यां सर्वादिसंज्ञा मा भूदित्येतदर्थमन्यशब्दग्रहणमिति॥

( तत्त्वदी० )—**सर्वादिः सर्वकार्यी स्यादि**त्यादि। सर्वादिस्तदा सर्वकार्यी स्याच्चेद्गौणो न अथवा अभिधा न। पूर्वादिश्च व्यवस्थायां वाच्यायां सर्वकार्यी स्यादित्यर्थः॥ चशब्दाद्गौणाभिधयोः सर्वत्रान्वयः॥ समः अतुल्ये॥ अन्तरः अपुरि परिधाने बहिर्योगे च अन्तर एव॥ स्वशब्दः अर्थज्ञातिभिन्नार्थवाची चेत्तदा सर्वकार्यीत्यर्थः॥ स्वाभिधेयापेक्षावधिनियमो व्यवस्था । अवधेर्नियमः कीदृशः स्वाभिधेयापेक्षः। स्वस्य पूर्वादेरभिधेयं वाच्यं दिगादि अपेक्षत इत्यर्थः॥ 'दिशः सपत्नी भव दक्षिणस्याः' इत्यादावपि व्यवस्थास्त्येव। प्रसिद्धत्वात्तु नावधिवाची शब्दः प्रयुज्यते। न च संज्ञात्वान्निषेधः आधुनिकसंकेतस्यैव संज्ञात्वात्। आधुनिकत्वं तु व्यवहार एव शरणम् । एवं च विश्वेषां देवानामित्यपि सिद्धम्। वेदे प्रसिद्धत्वादाधुनिकत्वाभावात्। अन्यच्च पूर्वमेवोक्तम् । गौणत्वं च स्वार्थविशिष्टार्यान्तरसंक्रमः॥ अभिधा संज्ञा॥ ननु सर्वादिगणे सर्वविश्वादीनामेव पाठो न त्वतिसर्वातितदित्यादीनां तत्कथं तेषु सर्वादिकार्यातिप्रसंगशङ्केति चेन्न। तदन्तग्रहणस्यात्रेष्टत्वात् । अन्यथा परमसर्वस्मै इत्यादावपि न स्यात् इति चेदुच्यते । सर्वादेः स्मडित्यत्र सर्वादेरित्यावर्त्तते । आदिशब्दश्चात्र प्रकारे। प्रकारश्च सादृश्यम्। तच्च सर्वार्थाभिधानसामर्थ्यम्। तथा च सर्वार्थाभिधानसामर्थ्यविशिष्टानामेव गणे पाठस्यावश्यकतया प्रकारान्तरजुषां च पाठे प्रमाणाभावादेव विशेषे व्यवस्थितानां संज्ञानामुपसर्जनानां च सर्वादित्वमेव नास्ति। तेन तेषां सर्वादिकार्यमन्तर्गणकार्यं च न भवति॥ यत्तु शब्दस्वरूपमात्राश्रयं न तु गणापेक्षं तत्तूपसर्जनत्वेऽपि स्यादेव युष्मदस्मदोस्त्वमहमितिवत्। न चैवं युष्मदि चास्मदि चेत्यत्र त्वन्मदादिप्रसंगः। लोकप्रसिद्धार्थवाचकतायामेव तत्प्रसंगः न तु शब्दस्वरूपत्वे वाच्ये। नन्वेवमस इत्यादौ कथमतिसर्वे इतिवद्गौणत्वेऽपि तत्कार्यसंभवः। अब्राह्मण इत्यादौ ब्राह्मणभिन्न इत्यादिपूर्वपदार्थप्राधान्येन विवरणसंभवादिति चेत्सत्यम् । वैयाकरणैर्नञ्समासे उत्तरप-

दार्थप्राधान्यस्यैवाभ्युपगमात् । तथाहि । आरोपितत्वं नञर्थः । तथा च मायामनुष्यः कपटब्राह्मण इतिवत् मिथ्याभूतो ब्राह्मण इत्येव शाब्दबोधः । ब्राह्मणभिन्न इत्याद्यर्थस्तु न शाब्दः अत्राचतुर्णामिति निर्देशोऽनुकूलः ॥

**द्वंद्वे सर्वादीनां न सर्वकार्यम् ॥ पूर्वपरावराणाम् ॥**

( सुबोधिनी )—**द्वन्द्वे सर्वादीनां न सर्वकार्यम् ॥** द्वन्द्वसमासे सर्वादिसंज्ञा न भवति ॥ समुदायस्यायं निषेधो न त्ववयवानाम् । वर्णाश्च आश्रमाश्च इतरे च ते वर्णाश्रमेतरे तेषां वर्णाश्रमेतराणाम् । सर्वादिसंज्ञाभावान्न सुट् ॥

( तत्त्वदी० )—**द्वंन्द्वे सर्वादीना**मिति ॥ एतन्मूलं तु पूर्वोक्तमेव ॥ **वर्णेत्यादि** ॥ वर्णाश्च आश्रमाश्च इतरे च ते तथा ॥

**( वा जसी ) वर्णाश्रमेतरे वर्णाश्रमेतराः ॥**

( सुबोधिनी )—**वा जसी ॥** द्वन्द्वे उक्ता संज्ञा वा स्याज्जसीति ई आदेशे कर्तव्ये ॥

**( तृतीयासमासे तृतीयासमासार्थवाक्येऽपि च न ) मासपूर्वाय । मासेन पूर्वाय ॥**

( सुबोधिनी )—**तृतीयासमासे तृतीयासमासार्थवाक्येऽपि च न ॥** तृतीयातत्पुरुषसमासे च तृतीयासमासोऽर्थः प्रयोजनं यस्य तत् तृतीयासमासार्थं तृतीयासमासार्थं च तद्वाक्यं च तृतीयासमासार्थवाक्यं तस्मिन् तृतीयासमासार्थवाक्येऽपि सर्वादिसंज्ञा न भवति ॥ मासेन पूर्वः मासपूर्वस्तस्मै मासपूर्वाय देहि । तृतीयासमासेऽत्र सर्वादित्वाभावान्न स्मट् ॥

( तत्त्वदी० )—**तृतीये**त्यादि ॥ व्यवस्थितविभाषाश्रयणात् अत्र निषेधः । शेषं देववत् ॥ अथ 'कथं द्वयेषामपि मेदिनीभृताम्' इति माघः ॥ उच्यते । द्वयमिच्छन्तीति द्वयेषः तेषामिति क्विबन्तस्येच्छते रूपम् ॥

**( प्रथमचरमतयडयडल्पार्द्धकतिपयनेमानां जसी वा ) प्रथमे-प्रथमाः । चरमे-चरमाः ॥ तयडयटौ प्रत्ययौ । ततस्तदन्ताः शब्दा ग्राह्याः । द्वितये-द्वितयाः । द्वये-द्वयाः । शेषं देववत् ॥ नेमे-नेमाः । शेषं सर्ववत् ॥**

( सुबोधिनी )—**प्रथमचरमतयडयडल्पार्द्धकतिपयनेमानां जसी वा ॥** एतेषां सर्वादिसंज्ञा वा स्यात् जसी इतीत्वे कर्तव्ये । नेमशब्दस्य नित्यं प्राप्ते अन्येषामप्राप्ते चायमारम्भः ॥ तयडयटौ प्रत्ययौ । केवलयोः संज्ञायाः प्रयोजनाभावात् तयडयडन्ता द्वितयद्वयादिका ग्राह्याः । 'संख्याया अवयवे' इति तयडयटौ । द्वाववयवौ यस्य सः द्वितयः द्वयः ॥

**( तीयस्य ङित्सु वा सर्ववद्रूपम् )** द्वितीयस्मै–द्वितीयाय। द्वितीयस्मात्–द्वितीयात्। द्वितीयस्मिन्–द्वितीये॥ एवं तृतीयः॥ उभशब्दो नित्यं द्विवचनान्तः। उभौ। उभौ। उभाभ्याम्। उभाभ्याम्। उभाभ्याम्। उभयोः। उभयोः। उभयशब्दस्य द्विवचनं नास्तीत्येके। अस्तीत्यन्ये। उभयः। उभये॥ निर्जरः॥

(सुबोधिनी)–तीयस्य ङित्सु वा सर्ववद्रूपम्॥ तीयप्रत्ययान्तस्य वा सर्वशब्दतुल्यं रूपं भवति ङेङसिङिषु परतः। द्वित्रिभ्याम् इति तीयः। अर्थवद्ग्रहणान्नेह। पटुजातीयायेत्यत्र प्रकारेण जातीयः इति जातीयः। उभशब्दस्य आख्याताव्ययसर्वादेः इत्यकार्थः सर्वादौ पाठः। द्विवचनपरत्वाभावे तु उभशब्दान्नित्यं मयट् भवतीति न कप्रत्ययादिष्टसिद्धिः॥ उभशब्दस्य द्विवचनान्तानभिधानादिति कैयटः॥ उभयशब्दस्य द्विवचनमस्ति अनभिधाने प्रमाणाभावादिति हरदत्तः॥ उभयशब्दस्यायट्प्रत्ययान्तत्वात् प्रथमचरम इति विकल्पे प्राप्ते सर्वादौ पाठसामर्थ्यान्नित्यं संज्ञा भवति विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वाच्च। अयमर्थः। उभयशब्दे प्रथमचरमेति विकल्पस्य जसपेक्षया बहिरङ्गत्वं सर्वादिगणपाठसिद्धनित्यसंज्ञायास्तु विभक्त्यपेक्षारहितत्वेन अन्तरङ्गत्वम्। ततः अन्तरङ्गबहिरङ्गयोर्मध्येऽन्तरङ्गो विधिर्बलीयान् इति न्यायादत्र नित्यैव संज्ञा स्यान्न तु विकल्प इति॥ निष्क्रान्तो जराया इति 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति तत्पुरुषः। अन्यार्थे इति ह्रस्वः। निर्जरः। 'अमरा निर्जरा देवाः' इत्यमरः॥

(तत्त्वदी०)–**उभये** इति अयडन्तत्वेऽपि न जसि विकल्पः व्यवस्थितत्वात्॥

**( जरायाः स्वरादौ जरस् वा वक्तव्यः )** तदन्तविधिरत्र॥ षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः॥ गुरुः शिच्च सर्वस्य॥ निर्दिश्यमानस्यादेशा भवन्ति॥ एकदेशविकृतमनन्यवत्॥ निर्जरसौ–निर्जरौ। निर्जरसः–निर्जराः। पक्षे हसादौ च देववत्॥

( सुबोधिनी )–जरायाः स्वरादौ जरस् वा वक्तव्यः॥ जराशब्दस्य वा जरस् भवति स्वरादौ विभक्तौ परतः। तदन्तविधिरत्र जराया इत्यस्य नाम्नो विशेषणत्वात्। षष्ठीनिर्दिष्टस्येति परिभाषया निर्जरशब्दस्यान्तस्य स्थाने जरस् प्राप्तोऽत आह॥ गुरुः शिच्चेति॥ अनया परिभाषया सोपपदस्य सर्वस्य स्थाने जरसादेशे प्राप्ते सत्याह॥ निर्दिश्यमानस्यादेशा भवन्ति॥ निर्दिश्यते इति निर्दिश्यमान उच्चार्यमाणस्तस्य स्थाने आदेशाः स्युः। एवमपि निर्दिश्यमानजराशब्दस्य जरसादेशो भवति न त्वन्यत्रेत्यत आह॥ एकदेशेति॥ एकदेशेन विकृतमेकदेशविकृतं शब्दरूपम् अन्येन तुल्यमित्यन्यवन्न भवति। अनया परिभाषया निर्जर इत्यत्र जरोऽपि जरावद् ज्ञेयः। जरसादेशाभावपक्षे हसादौ च देववद्रूपम्॥

( तत्त्वदी० )–**जराया** इत्यादि ॥ **तदन्त** इत्यादि ॥ स अन्ते यस्य तस्य विधिरित्यर्थः ॥ तथा च जराशब्दस्योक्तो जरस् निर्जरशब्दस्यापि भवतीत्याशयः । षष्ठीनिर्दिष्टस्यादेशिन इति भावः ॥ एतदपवादमाह–**गुरुः शिच्चेति** ॥ अनेकाक्षर आदेशो गुरुः । तथा च निर्जरस्य कृत्स्नस्य प्राप्तिरत आह–**निर्दिश्यमानस्येत्यादि** ॥ एवमपि जराशब्दनिर्देशादत्रादन्तत्वात्कथं प्राप्तिरित्यत आह–**एकदेशेत्यादि** ॥ अन्यैः तुल्यमन्यवत् न अन्यवत् अनन्यवत् । न हि कर्णे पुच्छे वा छिन्ने श्वा अश्वो भवति वा गर्दभः किं तु श्वैव ॥ स्वरादौ विभक्तावेव जरस् वोध्यः नान्यत्र । तेन जराया इदं जारमित्यत्र नातिप्रसंगः ॥ **पक्षे** इत्यादि ॥ पक्षे सर्वत्र देववत् हसादौ देववदेवेति बोध्यम् ॥

## ( संख्याविसायपूर्वस्याह्नस्याहन् वा ङौ )

( सुबोधिनी )–**संख्याविसायपूर्वस्याह्नस्याहन् वा ङौ** ॥ **संख्याविसायाः पूर्वे यस्य सः संख्याविसायपूर्वस्तस्य संख्यादिपूर्वस्याह्नस्य स्थानेऽहन् आदेशो वा स्यात्**

( तत्त्वदी० )–**संख्याविसाये**त्यादि ॥ संख्या च विश्च सायश्च संख्याविसायाः ते पूर्वे यस्य स तस्येत्यर्थः ॥

**वेङ्योः ॥ अन्नन्तस्योपधाया लोपो वा भवति ईङीत्येतयोः परयोः ॥ मकारवकारान्तसंयोगादुत्तरस्य न ॥ द्व्यह्नि–द्व्यहनि–द्व्यह्ने । विगतमहर्व्यह्नः । व्यह्नि–व्यहनि–व्यह्ने । अह्नः सायः सायाह्नः । सायाह्नः । सायाह्नि–सायाहनि–सायाह्ने ॥**

( सुबोधिनी )—**वेङ्योः** ॥ ईश्च ङिश्च ईङी तयोरीङ्योः ॥ ई इति 'ईमौ' इति सूत्रेण कृतोऽत्र गृह्यते न तु 'जस्शसोः शिः' इति शिः । नापि ईप् । निरनुबन्धकग्रहणे न सानुबन्धकस्येत्युक्तत्वात् । अल्लोप इति नित्ये प्राप्ते विकल्पोऽयम् । अन्नन्तस्य नाम्न उपधाया लोपो वा स्यात् ईङ्योः परतः । वकारमकारौ अन्ते यस्य संयोगस्य स वकारमकारान्तः वकारमकारान्तश्चासौ संयोगश्च वकारमकारान्तसंयोगस्तस्मात्परस्यान उपधाया लोपो न भवतीत्यर्थः ॥ यथा बहुयज्वनी चर्मणी इत्यादि ॥ द्वयोरह्नोर्भव इति तद्धितार्थे द्विगुसमासोऽयम् । भवार्थे इकप्रत्ययस्तस्य लुक् च । ततः समासान्तष्टप्रत्ययः । नावा इत्युपधालोपः । द्व्यह्नः । विगतमहरिति तत्पुरुषः । व्यह्नः । अह्नः सायं इति क्वचित् 'अमाद्यन्तस्य' इति परनिपातः । स्यतेर्घञ् प्रत्यये युकि च कृते सति सायशब्दोऽवसानवाची साधितः । अहन्नादेशे उपधालोपे द्व्यह्नि । लोपाभावे द्व्यहनि । अहन्नभावे द्व्यह्ने ॥

( तत्त्वदी० )–**वेङ्योरिति** ॥ वा ईङ्योरिति छेदः । ईश्च ङिश्च ईङी तयोः ईङ्योः ॥ ई इति इमा इत्यनेन कृतो गृह्यते न तु जस्शसोः शिरिति सानुबन्धकनिरनुबन्धकयोर्निरनुबन्धकस्यैव ग्रहणमिति न्यायात् । अत एव ईपोऽपि न ग्रहणम् । अत्र वाङ्योरित्येव छेदः द्विवचननिर्देशेनैव ईकारलाभात्

मात् ॥ **अह्नः साय** इतिं षोऽन्तकर्मणीत्यस्माद्घञि कृते स्यतेर्घञि अवसानवचनः सायशब्दः न तु मान्तमव्ययम् मलोपस्यादर्शनात् ॥

**( पाददन्तनासिकामासहृदयनिशाअसृग्यूषदोषयकृच्छकृदुदकआस्यमांसपृतनासानूनाम् )**—पाद् दत् नस् मास् हृद् निश् असृक् यूषन् दोषन् यकन् शकन् उदन् आसन् मांस् पृत् स्नु एते आदेशा भवन्ति शसादौ वा ॥ पदः । पदा, पद्भ्याम, पद्भिः ॥ दतः । दता' दद्भ्याम्, दद्भिः ॥ मासः । मासा, माभ्याम्—मासाभ्याम् ॥

( सुबोधिनी )—**पाददन्तनासिकामासहृदयनिशाअसृग्यूषदोषयकृत्शकृतउदकआस्यमांसपृतनासानूनाम्** ॥ एते पदादय आदेशा वा स्युः शसादौ ॥ माभ्यामित्यत्र सस्य विसर्गे आद्वे इति विसर्गलोपश्च । यूषो मण्डः । 'मुद्गामलकयूषस्तु भेदी दीपनपाचनः' इति दर्शनात् ॥

( तत्त्वदी० )—**शसादौ वेति** ॥ आदिशब्दः प्रकारे इत्यभिप्रेत्याह—**पदादय** इति ॥ तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इति 'स्वान्तं हृन्मानसं मनः' इति संगच्छते ॥

**अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ** ॥ अन्नन्तस्योपधाया लोपो भवति शसादौ स्वरे परे ॥ मकारवकारान्तसंयोगादुत्तरस्य न यूष्णः । यूष्णा ॥

( सुबोधिनी )—**अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ** नोपधाया इत्यनुवर्तते । नान्तस्य नाम्न उपधाया अतो लोपः स्यात् शसादौ स्वरे ॥ नान्तस्येति किम् । भवतः ॥ अत इति किम् । दण्डिनः ॥ तपर इति किम् । प्रतानयतीति प्रतान् । क्विप्प्रत्ययः । तान् प्रतानः ॥ स्वरे किम् । राजभ्याम् ॥ शसादौ किम् । मघोन इदं माघवनम् । देवतेदमर्थे इत्यण् ॥ म् च वश्च म्वौ । युक्तः कर्मणि क्तः । म्वाभ्यां युक्तो म्वयुक्तः न म्वयुक्तोऽम्वयुक्तस्तस्मादम्वयुक्तात् । म्वाभ्यां युक्ताद्वर्णात्परस्यातो लोपो न भवतीत्यर्थः ॥ यथा । यज्वनः । ब्रह्मणः ॥ म्वेति किम् । तक्ष्णा ॥ युक्तादिति किम् । अर्यम्णः ॥ णत्वे कृते षणयोगे ष्ण इत्यक्षरं भवति । यूष्णः ॥

( तत्त्वदी० )—**अल्लोपः स्वरेऽम्वयुक्ताच्छसादा**विति ॥ अत्रादिति निर्विभक्तिको निर्देशः । नोपधाया इत्यनुवर्तते ॥ तथा च नान्तस्योपधाया अतो लोपः स्यादित्यर्थः ॥ म् च वश्च म्वौ म्वाभ्यां युक्तः वर्णः म्वयुक्तः न म्वयुक्तः अम्वयुक्तः तस्मात् । म्वाभ्यां युक्ताद्वर्णान्नेत्यर्थः ॥ प्रसज्यप्रतिषेधः पर्युदासो वा ॥ तथा च म्वयुक्तभिन्नाद्वर्णात्परस्यातो लोप इत्यर्थः ॥ उपधाया अत इति किम् । तपस्विनः ॥ नान्तस्य किम् । महतः ॥ अतः किम् । दण्डिनः ॥ स्वरे किम् । राजभ्याम् ॥ तपरः किम् । प्रतानयतीति प्रतान् तस्य शसि प्रतानः इत्यत्र लोपो न केवलस्य क्विपि नान्तत्वा-

भावात् । ञ्यन्तत्वमाश्रित्योदाहृतामिति भावः ॥ म्वेति किम् । तक्ष्णः ॥ युक्ताक्किम । अर्यम्णः ॥ यूष्णा इति ॥ यूषो मण्डः । ' मुद्गामलकयूषस्तु भेदी दीपनपाचनः ' इति दर्शनात् ॥

**नाम्नो नो लोपशधौ ॥ नान्तस्य नाम्नो नस्य लोपश भवति रसे पदान्ते चाधौ ॥ यूषभ्याम्' यूषभिः ॥ नस्य लोपशि न विभक्तिकार्यम् ॥ पक्षे पञ्चसु देववत् ॥ पदादयः पृथक् शब्दा इत्येके । सोमपाः, सोमपौ, सोमपाः । सोमपाम् ॥**

( सुबोधिनी )नाम्नो नो लोपशधौ ॥ न इत्यनेन नाम विशिष्यते । विशेषणत्वात्तदन्तविधिर्भवति । नान्तस्य नाम्नोऽन्तस्य लोपश् स्याद्रसे पदान्ते चाधौ ॥ नाम्न इति किम् । अहन् ॥ नाम्न इत्यनुवर्तमाने पुनर्नामग्रहणं नामसंज्ञाप्रवृत्तिकाले स्थितस्य नकारस्य लोपशर्थम् । तेनागमादेशयोर्नकारस्य लोपश् न भवति । यथा । पचन् । भवन् । श्वन् । सुहिन् । प्रशान् ॥ यूषभ्याम् । अत्र नस्य लोपशि कृते अद्भि इत्वे प्राप्ते उच्यते । नस्य लोपशि न विभक्तिकार्यमिति । विभक्तौ कार्यं विभक्तेर्वा कार्यमिति समासः । पथिष्वित्यादौ षत्वं तु न विभक्तिकार्यम् सैषादिति ज्ञापकात् । आदेशाभावपक्षे सर्वाणि रूपाणि देववत् । आदेशपक्षे पञ्चवचनानि देववत् । पदादयो नादेशाः किं तु पृथक्शब्दाः । एके आचार्या इति वदन्ति । तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम् ।' 'स्वान्तं हृन्मानसं मनः' इत्यादि संगच्छते ॥ इत्यदन्ताः ॥ सोमं पिबतीति सोमपाः । पा पाने इत्यस्मात् आतो ड इति डप्रत्ययं बाधित्वा क्विप् ॥

( तत्त्वदी० )-नाम्नो नो लोपशधाविति ॥ अत्र न इति षष्ठ्यन्तं नाम्नो विशेषणं अतस्तत्र तदन्तलाभ इत्यभिप्रेत्याह ॥ नान्तस्येति ॥ ननु राजेत्यत्र परत्वात्प्रथमं नलोपशिति चेन्न । प्रायशो दृश्यतामिति वचनात्क्वचित्पूर्वेणापि परबाधः आसाविति ज्ञापकाच्च । अन्यथा अधावित्येवावक्ष्यत् ॥ ननु यूषभ्याम्, यूषभिरित्यादौ अद्भि भ्य इत्यादिनात्वादिकमस्त्वित्यत आह-नस्य लोपशि न विभक्तिकार्य मिति ॥ विभक्तौ कार्यं विभक्तेर्वा कार्यमिति समासः । तेन दण्डिष्वित्यादौ नलोपे सति षत्वं भवत्यव । सैषादिति ज्ञापकेन तस्य विभक्तिकार्यत्वाभावात् ॥ अत्र नाम्न इत्यनुवर्तमाने पुनर्नामग्रहणान्नामसंज्ञाप्रवृत्तिकाले नान्तत्वं ग्राह्यम् । तेन पचन्नित्यादौ नलोपो न ॥

**आतो धातोर्लोपः ॥ धातुसंबन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे ॥ सोमपः । सोमपा, सोमपाभ्यामित्यादि ॥ एवं कीलालपाशंखध्मामधुपाविश्वपाप्रभृतयः ॥ धातोः किम् । हाहान् ॥ हाहा । हाहै । हाहाः । हाहाः । हाहौः ॥ हारिः ॥**

( सुबोधिनी )-आतो धातोर्लोपः ॥ आकारान्तस्य धातोर्लोपः स्याच्छसादौ स्वरे ॥ "शतृशानक्वसन्तानां तृजन्तानां तथैव च । क्विबन्तानां च शब्दानां धातुत्वं

नोपहन्यते ॥" प्रातिपदिकसंज्ञयेत्यर्थः ॥ अतो डस्य द्वे संज्ञे स्तः । षष्ठीनिर्दिष्टस्येत्यन्तलोपः ॥ धातोः किम् । हाहान् ॥ गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम् । 'हाहाहूहूश्चैवमाद्या गन्धर्वाः' इत्यमरः ॥ टा सवर्णे दीर्घः । हाहा ॥ ङे ऐत्वं हाहै ॥ ङसिङसोर्दीर्घः हाहाः । हाहाः ॥ ओसि औत्वं हाहौः ॥ ङौ एत्वं हाहे ॥ शेषं सोमपावत् ॥ आत इति योगविभागादधातोरप्याकारलोपः क्वचित् । क्त्वः ॥ इत्यादन्ताः ॥

( तत्त्वदी० )-**आतो धातोर्लोप** इति ॥ आत इति किम् । नद्या ॥ धातोः किम् । खट्वाः पश्य ॥ न च नामत्वधातुत्वयोर्विरोधात्कथं धातुत्वमिति वाच्यम् क्विबन्ता विजन्ता विडन्ता धातुत्वं न जहति नामत्वं प्रतिपादयन्तीति वचनादविरोधात् ॥ ननु अस्य धातोरिति किमिति न सूत्रितमिति चेन्न । श्रीपेण कुलेनेत्यादावपि परत्वादकारलोपापत्तेर्दुर्वारत्वात् । तपरकरणं तु व्यर्थमेव ॥ अत्रात इति योगविभागादधातोरप्यलोपः क्वचित् । तेन क्त्वः ॥ **हाहानि**ति ॥ गन्धर्वविशेषवाचकमव्युत्पन्नं नामेदम् । केचित्तु जहातीति हाहा इति क्रियाशब्दं वदन्तः सोमपावद्रूपमाहुः ॥

**औ यू ॥ इकारान्तादुकारान्ताच्च पर औ यू आपद्यते ई ऊ भवतः ॥ हरी ॥**

( सुबोधिनी )-**औ यू** ॥ इदुद्भ्यां पर औ यू स्याताम् । ईदूतोर्दीर्घयोर्ग्रहणे ई ऊ इति पदद्वयं बोध्यम् । ह्रस्वग्रहणपक्षे तु यु इत्यत्रेतरेतरद्वन्द्वः ॥ इदुद्भ्यामिति किम् । देवौ ॥ तपरत्वमिति किम् । वातप्रम्यौ । हूह्वौ ॥

( तत्त्वदी० )-**औ यू** इति ॥ अत्र इदुद्भ्यामित्यनुवर्तते । दीर्घयोर्ग्रहणे ई ऊ इति छेदः । ह्रस्वयोर्ग्रहणे तु इतरेतरद्वन्द्वः ॥

**एओ जसि ॥ इकारान्तस्योकारान्तस्य च जसि परे एकार ओकारश्च भवति ॥ हरयः ॥**

( सुबोधिनी )-**एओ जसि** ॥ इदुद्भ्यामित्यनुवर्तते । तच्च षष्ठ्या विपरिणम्यते तच्च नाम्नो विशेषणम् । विशेषणे हि तदन्तविधिः । इदुदन्तस्य नाम्न ए ओ स्यातां जसि परतः ॥ इदुदन्तस्येति किम् । रायः । ग्लावः ॥ तत्परत्वं किम् । वातप्रम्यः । हूहूः ॥

( तत्त्वदी० )-**ए ओ** इति ॥ अत्रेदुद्भ्यामित्यनुवृत्तस्यापि विभक्तिविपरिणामेन व्याख्यानमित्यभिप्रेत्याह-**इदुदन्तस्ये**त्यादि ॥ इदुदन्तस्य किम् । रामाः ॥ गुणो जसीति तु न सूत्रितं लाघवे विशेषाभावात् । जसि गुण इत्युक्ते त्वर्द्धमात्रालाघवेऽपि प्रतिपत्तिलाघवार्थमिदमुक्तम् ॥

**धौ ॥ इकारान्तस्योकारान्तस्य च धौ परे एकार ओकारश्च भवति ॥ हे हरे । हरिम्, हरी, हरीन् ॥**

( सुबोधिनी )—धौ ॥ इदुदन्तस्य ए ओ भवतः धौ परे ॥ कृताकृतप्रसाङ्गित्वेन नित्यत्वाच्च पूर्वमेत्वमोत्वं च ॥ ततः 'समानाद्धेः' इति धिलोपः ॥ इदुदन्तस्य किम्। हे ग्लौः ॥ तपरत्वं किम्। हे वातप्रमीः। हे हूहूः ॥

( तत्त्वदी० )—धाविति ॥ अत्र एओधिजशोरिति जस्भ्योरिति वा एकयोगो न कृतो यथाक्रमं स्थानिनोरादेशविधानशङ्कानिरासाय ॥ यत्तु योगविभागो विषयसप्तमीलब्ध्यर्थ इति तन्न विषये सप्तम्याऽविधानादित्युक्तं तच्चिन्त्यम्। विषये सप्तम्या बहुस्थले दर्शनात् ॥ किं च यत्र प्रत्ययोत्पत्तेः पूर्वमेव कार्यं विधीयते तत्रैव विषयसप्तमीति व्यवहारः प्राचाम् ॥ यथार्द्धधातुके 'ब्रूञो वच्' 'चक्षिङः ख्याञादयः' एवं वदता त्वया स्वयमेव विषयसप्तम्याः स्वीकृतत्वात् ॥

**टा नास्त्रियाम् ॥ इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रियाम् ॥ हरिणा, हरिभ्याम, हरिभिः ॥**

( सुबोधिनी )—टा नास्त्रियाम् ॥ इदुद्भ्यां परष्टा ना स्यात्। स्त्रीलिङ्गे तु न ॥ किं च। पुंसीत्युक्ते तु अदसष्टाप्रत्यये त्यदाद्यत्वे मत्वे च अम टा इति स्थिते इनादेशतः परत्वादन्तरङ्गत्वाच्च 'मादु' इत्युत्वे पुँल्लिङ्गे सिद्धममुनेति। क्लीबे त्वमुनेति न सिद्ध्यति। 'नामिनः स्वरे' इति नुमि कर्तव्ये उत्वस्यासिद्धत्वादतोऽस्त्रियामित्युक्तम् ॥ इदुद्भ्यां किम्। गवा ॥ तपरत्वं किम्। वातप्रम्या। हूह्वा ॥

( तत्त्वदी० )—टा नास्त्रियामिति ॥ इदुद्भ्यामित्यत्राप्यनुवर्त्तते। अत्र अस्त्रियामिति नञं प्र[illegible]य छेदः। नञः प्रश्लेषे च व्याख्यानमेव शरणमिति तु वृद्धाः ॥ ननु पुंसीत्येव किमिति न सूत्रितं [illegible]। अत्राहुः। अमुना कुलेनेत्यत्र उत्वादन्तरंगत्वादिनादेशः स्यादतो नाम्यभावान्नुभावे रूपा[illegible] स्यादित्यस्त्रियां ग्रहणसामर्थ्याद् दुर्बलमप्युत्वं प्रवर्त्य नाभावो भवतीत्युक्तं कैश्चित्तन्न इनादेशात उत्वस्[illegible]न्तरंगत्वात्। अदश्शब्दमकारान्तात्परवर्णं ह्यपेक्षते उत्वम् इनादेशस्तु नाम स्यादि अकार टा चतुष्ट्यापेक्षत्वेन बह्वाश्रयत्वात् बहिरंगः ॥ किं च कृतेऽपीनादेशे स्थानिवद्भावेन टात्वमाश्रित्य नाप्रवृत्तेरिति पूर्वपक्षस्योत्तरमुत्तरार्थमस्त्रियां ग्रहणं सूत्रकृता कृतं कथं मु इति सूत्रान्तरं मुशब्दात्परष्टा ना भवति। मुशब्दश्चादस एव गृह्यते नान्यस्य पूर्वसूत्रेणैव सिद्धेः। तथा चात्र सूत्रे पुंसीत्यस्यानुवृत्तौ क्लीबे अमुनेति रूपासाद्धन कतव्योति उत्वस्यासिद्धत्वात्। अस्त्रियामित्यनुवृत्तौ तु नपुंसकेऽप्यस्य प्रवृत्तिरिति ॥ अत्र वक्तव्यम्। मुइति सूत्रान्तरकल्पनापेक्षया अस्त्रियामित्यस्यैव तज्ज्ञापने लाघवात् ॥ इदुद्भ्या किम्। गवा ॥ तपरत्वं किम्। हूह्वा ॥ टा किम्। हरिभ्याम् ॥

**ङिति ॥ इकारान्तस्योकारान्तस्य च ङिति परे एकार ओकारश्च भवति ॥ हरये, हरिभ्याम्, हरिभ्यः ॥**

( सुबोधिनी )—ङित ॥ इदुदन्तस्य नाम्न एओ स्याताम्। ङ् इत् यस्य स ङित् तस्मिन् ङिति। ङिति स्यादौ ॥ ङिति किम्। हरिभ्याम् ॥ स्यादौ किम्। हरिरिवा-

चरतीति हरयति। आचारे क्विप्। ततः 'प्रत्ययान्तात्' स्त्रियामङ्ङित्यङ्। हर्या॥ नाम्नः किम्। नुतः, नुवन्ति॥ किं च ङ्चासौ इच्च ङित् तस्मिन् ङिति इति कर्मधारयकरणे इत्संज्ञकङकारादौ प्रत्यये परे इत्यर्थो भवति। तदा नाम्नः स्यादावित्येतयोरनुवृत्तिर्न कर्तव्येति। 'लितुषादेर्ङः' इत्यादौ ङप्रत्यये तु परत्वादियुवौ। अशिश्रियत्, अदूदुवदित्यादि॥

( तत्त्वदी० )–ङितीति॥ अत्र इदुद्भ्याम् 'ए ओ जसि' इति चानुवर्त्तते। तत्र विभक्तिविपरिणामेन व्याख्यानम्॥ ङ् इवस्य स ङित् तस्मिन्ङिति॥ ङिति किम्। हरिभ्याम्॥ ङिच स्यादिरेव गृह्यते न त्वन्यः॥

**ङस्य॥ एदोद्भ्यामुत्तरस्य ङसिङसोरकारस्य लोपो भवति॥**

**हरेः, हर्योः, हरीणाम्॥**

( सुबोधिनी )–ङस्य॥ एदोतोत इति सूत्रमनुवर्त्तते लोपश्च इति च। एदोतः परस्य ङस्याकारस्य लोपश्च स्यात्। ङकारस्य इत्संज्ञायामकारः परत्वेन लभ्यते॥ एदोत इति किम्। रायः। ग्लावः॥ ङस्येति किम्। हरये। भानवे॥ ङस्यातः किम्। हरयः। भानवः॥

( तत्त्वदी० )–ङस्येति॥ ङकारग्रहणेन ङसिङसोर्ग्रहणम्॥

**ङेरौ ङित्॥ इदुद्भ्यामुत्तरस्य ङेरौ भवति स च ङित्॥**

( सुबोधिनी )–ङेरौ ङित्॥ इदुद्भ्यां परस्य सप्तम्येकवचनस्य औः स्यात्स ङित्संज्ञकः॥ ननु 'ङेर्डौ' इत्येव वक्तव्यं किम् ङिच्छब्देन। उच्यते। ङिद्ग्रहणं 'ऋतो ङ उः' इत्यादौ ङिदित्यस्यानुवृत्त्यर्थम्॥ इदुद्भ्यां किम्। रायि। गवि॥ तपरत्वं किम्। वातप्रमी। हूह्वि॥

( तत्त्वदी० )–ङेरौ ङिदिति॥ इदुभ्यां किम्। गवि॥ तपरत्वं किम्। वातप्रमी॥ ङेः किम्। हरिभ्याम्॥ अमादावित्यादिनिर्देशेन च औङिदित्ययं नादेशः। अत एव ङेरित्यनेन चतुर्थ्येकवचनस्य न ग्रहः। न च ङिति टेरित्यत्र ङित्संज्ञकस्यैव ग्रहणम् न तु यौगिकस्य कृत्रिमत्वात्। तथा च सेर्डाधेरित्यत्र डकारस्य ङित्संज्ञा न प्रयोजनाभावादिति चेत्सत्यम् स्त्रियामिति निर्देशेन कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणम्। तथाहि। स्त्यायतेः ड्रटि स्त्रीतिरूपं तच्चैवं न स्यात्॥ ङेर्डावित्यत्र किमिति न सूत्रितमिति चेन्न उत्तरार्थं ङित्करणम्। ऋतो ङ उरित्यादावावश्यकत्वात्। अथ तत्रापि ङो डुरित्येव किमिति न कृतमिति वाच्यम्। डावित्यत्र धेरारित्यनुवर्त्तते। तथा च डारि कृते डरित्येवात्रानुवर्त्तते। तथा च ऋकारस्य डारि कृते टिलोपे पितरीत्यादि रूपं न सिद्ध्येत्। अप् कर्तरीति लिङ्गेन तत्र टिलोपः स्यादिति वाच्यम्। न पञ्चस्विति सूत्रेऽपि डरोऽनुवृत्तौ ज्ञापकाभावात् टिलोपे पितरावित्यादिरूपं न सिद्ध्येत् इति ङिदित्युक्तम्॥ यदि तु ङिति प्रत्यये लोप इति व्याख्यायते तदा न कर्तव्यं भवति॥

**ङिति टेः ॥ ङिति परे टेर्लोपो भवति ॥ हरौ, हर्य्योः, हरिषु ॥ एवमग्निगिरिरविकविमुन्यादयः ॥ उकारान्ता विष्णुवायुभानुगुर्वादयोऽप्येवं ज्ञेयाः ॥ भानुः, भानू, भानवः ॥**

( सुबोधिनी )—ङिति टेः ॥ नाम्नष्टेर्लोपः स्यात् ङिति परतः ॥ अव्ययानां टेर्लोपश्च । तद्धितस्य ये स्वरे च । यथा बहिर्भवो बाह्यः । पुनःपुनरेव पौनःपुन्यम् । ण्यः ॥ कुतः कुत आगतः कौतस्कुतः । कारकादित्यण ॥

( तत्त्वदी० )—ङिति टेरिति ॥ ङ् इत् यस्य स ङित् तस्मिन् ङिति ॥ अत्राहुः । अत्र वाक्यार्थत्रयम् । नाम्नो लोपो भवति ङिति परे इत्येकम् । तथा च विंशतेः पूरण इति वाक्ये अप्रत्यये 'यस्य लोपः' इतीकारलोपेऽतो लोपे विंश इति सिध्यति । ततः टेः नाम्नः तथा टेर्लोपो भवति यकारे स्वरे चेति द्वितीयम् । तथा च लघिष्ठः बहिर्भवो बाह्य इत्यादिसिद्धिः । ततः नाम्नष्टेर्लोपो भवति ङितीति तृतीयम् । अत्र तद्धिते यस्वरे इति सम्बध्यते विश्लेषावधावित्यादिनिर्देशात् । तत्र ङेरौ ङिदिति न तद्धित इति । अत्रेदं संप्रधार्यम् । तृतीयवाक्ये नाम्न इति संबन्धे स्त्री तितउरित्यादि न सिध्यति । तथाहि । स्त्यैधातोर्ड्रटि कृते टिलोपावसरे नामत्वाभावात् । तितउरित्यत्रापि तनोतेर्डउः सन्वच्चेति डउप्रत्यये टिलोपावसरे धातुत्वानपायेन नामत्वाभावात् । तस्मादत्र न नाम संबध्यते । किं तु ङितीति परसप्तम्या पूर्वमात्रमाक्षिप्यते तथा च सर्वत्र निर्वाह इति दिक् ॥

**सेर्डोधेः ॥ सखिशब्दात्तदन्ताच्च परस्य सेरधेर्डो भवति ॥ सखा ॥**

( सुबोधिनी )—सेर्डोधेः ॥ सखिशब्दात्सखिशब्दान्ताच्च नाम्नः परस्य सेर्डो स्यात् ॥ 'ऐसख्युः' इति सूत्रे विपरीतनिर्देशात्तदन्तग्रहणम् ॥ कीदृशस्य सेः । न धिः अधिस्तस्याधेर्धिभिन्नस्येत्यर्थः ॥ समानं ख्यायते जनैरिति सखा । नीव्यादयः इति निपातनात्ख्याधातोरिप्रत्ययो या इत्यस्य निवृत्तिश्च ॥ तदन्ते तु शोभनः सखा सुसखा ॥ धौ तु 'धौ' इत्येकारो न तु डा अधेरिति निषेधात् ॥

( तत्त्वदी० )—सेर्डोधेरिति ॥ अधेरिति छेदः । धिभिन्नस्य सेर्डो भवतीत्यर्थः ॥ ऐसख्युरित्यतः सख्युरित्यनुवर्तते । तच्च षष्ठ्यन्तमर्थवशाद्विपरिणम्यते । 'सख्युरै' इति कर्तव्ये विपरीतनिर्देशात्तदन्तलाभ इत्यभिप्रेत्याह—तदन्तादिति ॥ सख्युः किम् । हरिः ॥ सेः किम् । सखिभ्याम् ॥ अधेः किम् । हे सखे ॥

**ऐ सख्युः ॥ सखिशब्दस्य तदन्तस्याप्यैकारादेशो भवत्यधिषु पञ्चसु ॥ सखायौ, सखायः । सखायम्, सखायौ, सखीन् ॥**

( सुबोधिनी )—ऐ सख्युः ॥ तस्मादित्यनुवर्तते । तस्य सखिशब्देन विशेषणात्तदन्तविधिः । सखिशब्दस्य सखिशब्दान्तस्य च नाम्नः ऐः स्यात् । पञ्चसुशब्दः प्राक स्यादिष्वेव रूढः । सौ तु परेण डादेशेन बाधितत्वादेन्न ॥ अथवा सेर्डादेशे प्रकृतेरैत्वे च

कृते टिलोपः । विशेषाभावात्तदन्ते सुसखायौ ।: सख्युरिति षष्ठीनिर्दिष्टत्वेनान्त्यस्यैकारस्य ऐः । सखायौ ॥

( तत्त्वदी० )—ऐ सख्युरिति ॥ अत्राधेरित्युत्तरसूत्रादपकृष्यते । तथा चाधिप्रत्ययान्तस्य सखिशब्दस्यैकारादेशः पञ्चस्विति व्याख्येयम् । अथ औप्रभृतीनि पञ्चवचनानि कुतो न गृहीतानि इति वाच्यं पञ्चसुशब्दः स्यादिष्वेव रूढ इतिं व्याख्यानात् ॥ यद्वा अधेरिति पर्युदासात्स्यादिग्रहः ॥

**सखिपत्योरीक् ॥ सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः ॥ दीर्घत्वान्ना न भवति ॥ सख्या । सख्ये ॥**

( सुबोधिनी )—सखिपत्योरीगिति ॥ एतयोरीक् स्यात् टाङेङिषु ॥ कित्वादन्ते । टाप्रत्यये ईका व्यवधानात् टा नास्त्रियामिति न प्रवर्तते । सवर्णे दीर्घे यत्वे च सख्या । सख्ये । ङौ तु औत्वे टिलोपे च कृते पश्चादेकदेशविकृतमिति न्यायेनेग्यत्वे । सख्यौ । सखिपत्योर्विशेषस्य विवक्षणात् तदन्तविधिर्न । तेनातिसखिना भूपतिना इत्यत्र नेक् ॥

( तत्त्वदी० )—सखिपत्योरीगिति ॥ अत्र ए टाङ्योरिति पूर्वसूत्रात् टाङ्योरित्यनुवर्तते । तथा च टाङ्योरेवानेन ईक् । सख्ये इति सिद्ध्यर्थं तु 'ङे'इति सूत्रान्तरम् । तथा च ङाय परे सखिपत्योरीगागमो भवति इति तस्यार्थः ॥ दीर्घविधिर्नात्वादिप्रतिषेधार्थ इत्यभिप्रेत्याह—दीर्घत्वादिति ॥ यद्यपि ह्रस्वकरणेऽपि विधानसामर्थ्यान्नात्वादिप्रतिषेधो लभ्यते तथापि ङौ द्विः सवर्णदीर्घे सखी इत्येव स्यादिति दीर्घकरणात्प्रथममौत्वटिलोपयोः प्रसक्तयोः पश्चादेकदेशविकृतन्यायेन ईगागमे कृते सख्याविति रूपसिद्ध्यर्थं दीर्घविधानस्यावश्यकत्वात् । अत एव ईदिद्वा न कृतः 'सखिपत्योर्या' इत्यपि न सूत्रितम् । सख्या सख्ये इति सिद्धावपि ङौ सख्यि इति रूपापत्तेः । अत्र नाम्नो विशेषणत्वाभावान्न तदन्तलाभः ॥

**ऋङ् ङे ॥ सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोरकारे परे सख्यृ अस् इति स्थिते ॥**

( सुबोधिनी )—ऋङ्ङे ॥ सखिपत्योर्ऋक् स्यात् । ङा उपलक्षितः अः ङस्तस्मिन् ङे ॥

( तत्त्वदी० )—ऋङ् ङे इति ॥ ऋक् ङे इति छेदः । ङे इति सप्तमी । ङोपलक्षितः अः ङः तस्मिन् ॥ तेन ङसिङसोरकारो लभ्यते ॥ 'ङङः' इति सूत्रणीये ईगनुवृत्त्या ङितीत्येत्वस्य बाधे रूपसिद्धावपि गुरुकरणमागमजस्यानित्यत्वज्ञापनार्थम् । तेन सखिना वानरेन्द्रेणेति अन्यत्र पतिना सहेति च संगच्छते ॥ ङे किम् । सखीन् ॥ सखिपत्योः किम् । वातप्रम्यः ॥

**ऋतो ङ उः ॥ ऋकारान्तात्परस्य ङसिङसोरकारस्योकारो भवति । स च ङित ॥ सख्युः । ङेरौङिदित्यौकारे कृते सखिपत्योरीक् । सख्यौ ॥ शोभनः सखा सुसखा, सुसखायौ, सुसखायः । सुसखीन । सुसख्ये—सुसखेः । सुसखौ ॥ अतिशयितः सखा अतिसखा । परमः सखा परमसखा । सखीमतिक्रान्तोऽतिसखिः । इह**

**ङैत्वे न । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति न्यायात् ॥ पतिः, पती, पतयः । पतिम्, पती, पतीन । पत्या । पत्ये । पत्युः । पत्यौ ॥**

( सुबोधिनी )-**ऋतो ङ उः** ॥ ङिदित्यनुवर्तते । ऋदन्तान्नाम्नः परो ङ उः स्यात् ॥ स च ङित् ॥ नाम्नः किम् । आरत् । उरितिलिङ्गात्केवलादपि ऋत उर्भवति । ऋगागमे कृते यत्वोत्वटिलोपाः । सख्युः । तदन्ते यथा । शोभनः सखेति प्रादिसमासे तत्पुरुषे राजाहःसखिभ्य इति टप्रत्ययो न पूजार्थोपपदे निषेधात् । इहैडात्वयोः प्रवृत्तिस्वदन्तग्रहणात् । सुसखिशब्दस्य पञ्चसु सखिवद्रूपम् । शेषं हरिवत् ॥ एवमतिशयितः सखेति अतिसखा । प्रादिसमासोऽत्र । परमः सखा यस्य स परमसखेति बहुव्रीहिः । कर्मधारये तु टप्रत्ययेन भाव्यम् । गौणत्वेप्यैडात्वे भवतः । अतिदध्नेत्यादावचास्थ्नामितिवत् ॥ सखीमतिक्रान्तोऽतिसखिः । अत्यादयः क्रान्ताद्यर्थे इति तत्पुरुषः । अन्यार्थे इति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् टप्रत्यय ऐडात्वे च न । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येति परिभाषणात् । लक्षणं च प्रतिपदं च लक्षणप्रतिपदे लक्षणप्रतिपदाभ्यामुक्तौ लक्षणप्रतिपदोक्तौ तयोः । द्वन्द्वान्ते श्रूयमाणत्वादुक्तशब्दः प्रत्येकं संबध्यते । लक्षणोक्तः प्रतिपदोक्त इति । लक्षणेन सूत्रेणोक्तो लाक्षणिक इकः । प्रतिपदोक्तस्य झटिति बुद्ध्यारोहो लाक्षणिकस्य तु लक्षणानुसंधानद्वारेण विलम्बितो बुद्ध्यारोहो भवतीत्यर्थः । क्लीबे तु पूर्वेणापि नुमा परस्यप्यैत्वस्य बाधः क्रियते । प्रायशो दृश्यतामित्युक्तत्वात् । यथा प्रियसखिनी, प्रियसखीनि । पतिशब्दस्य टाङेङसिङस्ङिषु सखिवद्रूपम् । शेषं हरिवत् ॥

( तत्त्वदी० )-**ऋतो ङ उरिति** ॥ अत्र नाम्न इति ऋदन्तस्य विशेषणं स्यादेरिति ङस्य तेन आरत् कर्तृङवते इत्यादौ नातिप्रसंगः । सख्युरित्यादिलिङ्गाचतुर्थ्येकवचनस्यादेशे लोपे च न निर्देशशङ्का ॥ ऋतः किम् । ग्लावः ॥ ऋतो उरिति सूत्रणीये ङग्रहणं वर्णमात्रविधौ यदादेशस्तद्वद्भवतीति न प्रवर्तते इति ज्ञापनाय । तथाहि । ऋतः अः उरिति छेदः । जसमोस्तु परत्वाद्गुण एव स्थानिवद्भावेन प्राप्तावपि पञ्चसुग्रहणसामर्थ्यान्न । अन्यथा अर्वीत्येवोच्यते । तथा च शस्यतिप्रसंगः । तत्रापि परत्वाच्छसीति दीर्घेण भवितव्यम् । दीर्घे कृतेऽपि यदादेशस्तद्वदित्यनेनोत्वेन भाव्यम् । एवं चोत्वे कृते यदादेशस्तद्वदित्यम्शसोरस्येत्यलोपो भविष्यति । इत्थं च कृताकृतप्रसंगित्वेन नित्यत्वादतः पूर्वमलोपो भविष्यति । तथा च शस्यपि नातिप्रसंगनिःशङ्केति तज्ज्ञापनफलकमेव ङकारग्रहणमिति वृद्धाः ॥ **अतिसखिरिति** ॥ अन्यार्थे इति ह्रस्वः । अतिसखेरिति भाष्यप्रयोगादीदूदन्तस्येत्यादिना स्त्रीकार्यं न । लक्षणप्रतिपदोक्तयोरिति सूत्रानुसंबद्धद्वारेण कृतं लाक्षणिकम् । झटिति बुद्ध्यारोहणं प्रतिपदोक्तम् ॥

**( पतिः समासे हरिवत् ) भूपतये ॥**

( सुबोधिनी )—पतिः समासे हरिवत् ॥ पतिशब्दस्य रूपं समासे हरिवत्स्यात् ॥ समासाभावे शसादौ सखिवत् । भुवः पतिः भूपतिस्तस्मै भूपतये । समासत्वादत्र नेक् । कथं सीतायाः पतये नमः । पराशरश्चाह । "नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ १ ॥" इति । उच्यते । पतिशब्दोऽयमाख्यातप्रत्ययान्तो यथा नाम्नो ञिर्डिदिति ञिप्रत्यये टिलोपे धातोरित्यौणादिके इप्रत्यये ञेरिति ञिलोपे च निष्पन्नोऽयं पतिशब्दः ॥ पतिमाचष्टे इति पतयति पतयतीति पतिः । लाक्षणिकत्वादस्य सखिवद्रूपम् । एवं 'कृष्णस्य सखिरर्जुनः' इति भारते । 'सखिना वानरेन्द्रेण' इति रामायणे च बोध्यम् ॥

( आगमजमनित्यम् ) सखिना । पतिना । द्विशब्दो नित्यं द्विवचनान्तः ॥

( सुबोधिनी )—आगमजमनित्यम् ॥ आगमाज्जातमागमजं कार्यमनित्यमस्ति इति न्यायाद्वा सखिनेत्यादौ नेक् । अथ ऋङ् ङे इत्यत्र ङ उरिति सूत्रणीये ईगनुवृत्त्या ङिति त्वेत्वस्य बाधे रूपसिद्धावपि गुरुकरणमेतत्सत्त्वे ज्ञापकं बोध्यम् ॥

त्यदादेष्टेरः स्यादौ ॥ द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥

( सुबोधिनी )—त्यदादेष्टेरः स्यादौ ॥ त्यदादीनां दशानां टेरत्वं भवति स्यादिविभक्तौ ॥ विभक्ताविति किम् । त्यद्वं । तत् ॥ स्यादौ किम् । तस्यापत्यं तादः । तमिच्छतीति तद्यति । यः ॥ टेः किम् । सः य इत्यादावत्वे सवर्णे दीर्घे च सा या इति स्यात् ॥ द्विशब्दस्यात्वे सति सर्ववद्रूपम् ॥

( तत्त्वदी० )—त्यदादेष्टेरः स्यादाविति ॥ त्यदादेः किम् । मरुतौ ॥ स्यादौ किम् । तस्यापत्यं तादः तमिच्छति तद्यति । अत्र सधातुरित्यादिलिंगेनैव टेरत्वसिद्धौ टेरिति ग्रहणं टेरपि क्वचिद्विधानार्थम् । तेन किम्शब्दस्याकसहितस्य त्यदाद्यत्वे क इत्येव रूपम् ॥

( संज्ञोपसर्जनयोर्नात्वम् ) द्विर्नाम कश्चित् । द्विः, द्वी, द्वयः । द्वावतिक्रान्तोऽतिद्विः । प्राधान्ये तु परमद्वौ । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः ॥

( सुबोधिनी )—संज्ञोपसर्जनयोर्नात्वम् ॥ संज्ञायां गौणत्वे च त्यदादेरित्यत्वं न भवति सर्वाद्यन्तर्गणकार्यत्वात् । कस्यचित् पुरुषस्य द्विर्नाम तस्य हरिवद्रूपम् । गौणेऽतिद्विस्तस्यापि हरिवद्रूपम् । प्राधान्ये मुख्ये तु परमौ च तौ द्वौ च परमद्वौ कर्मधारयः । सर्ववद्रूपम् ॥

**त्रेरयङ् ॥ त्रिशब्दस्यायङ्आदेशो भवति नामि परे ॥ तदन्तविधिरत्र। ङिदन्तस्यैव वक्तव्यः। त्रयाणाम्। परमत्रयाणाम्। त्रिषु। कतिशब्दो नित्यं बहुवचनान्तः ॥**

(सुबोधिनी)—त्रेरयङ् ॥ आम् इत्यनुवर्तते। तच्च सप्तम्या विपरिणम्यते तस्मादिति च। तस्य नाम्नस्त्रेरिति विशेषणे विशेषणत्वात्तदन्तविधिः। त्रिशब्दस्य त्रिशब्दान्तस्य चायङ् स्यादामि। गुरुत्वात्सर्वादेशे प्राप्ते ङिदादेशः अन्तस्य स्थाने भवतीतीकारस्यायङ्। त्रेरित्येकवचननिर्देशस्त्वनुकरणत्वात्। तदन्ते। प्रियाश्च ते त्रयश्च प्रियत्रयस्तेषां प्रियत्रयाणाम्। गौणत्वे नेति केचित्। तरतेरौणादिको ड्रिप्रत्ययः। डित्वाट्टिलोपे त्रिशब्दः ॥

(तत्त्वदी०)—त्रेरयङ्ङिति ॥ ननु त्रिशब्दस्य बहुवचनान्तत्वात् कथं त्रेरिति चेत्सत्यम्। त्रिशब्दस्त्रित्वविशिष्टवाचको बहुवचनान्तः अयं तु न त्रित्वविशिष्टवाचकः किंतु तदनुकरणेन गृहीतः। अनुकार्यानुकरणयोश्च भेदविवक्षाया इष्टत्वात् प्रकृतिवदनुकरणमित्यस्य त्वानित्यत्वात्। एवं स्थिते त्रयाणामयङ् इत्युक्तौ त्रिशब्दसमानवचनाशङ्कायां तदुद्धारार्थम् अचतुर्णामित्यादिलिंगानुशरणं कृत्वा पुनर्गौरवदोषोद्भावेन यथान्याससूत्रस्थापनप्रयासो निजपाण्डित्यप्रस्थापनायैवेति दिक् ॥ **तदन्तविधिरत्रेति** ॥ तस्मादित्यनुवृत्तेः त्रिशब्दात्तस्य नाम्न इति व्याख्यानात्। त्रयाणामित्यत्र तु व्यपदेशिवद्भावादित्यभिप्रायः ॥ **ङिदन्तस्येति** ॥ गुरुः शित्चेत्यस्यापवादः ॥

**(डतेः) संख्यावाचिनो डत्यन्ताज्जश्शसोर्लुक् ॥ प्रत्ययलोपे प्रत्ययलक्षणम् ॥**

(सुबोधिनी)—डतेः ॥ किमः संख्यापरिमाणे डति चेति डतिः। संख्यापरिमाणे विहित इह गृह्यते पातेर्डतिरिति तु न संख्याया इत्यनुवृत्तेः। कतीत्यत्र यदादेशस्तद्वदिति जसमाश्रित्य ए ओ जसीत्येत्वे प्राप्ते सत्याह ॥

(तत्त्वदी०)—डतेरिति ॥ डत्यन्तान्नाम्न इति बोध्यम्। डतिप्रत्ययश्च शेषा निपात्याः कत्यादय इति गृह्यते। संख्याया इत्यनुवृत्तेः संख्यासंबन्धे च डतिर्गृह्यते न तु पातेर्डतिः पतिरिति ॥ कतेरिति तु न सूत्रितं पतिततीनां ग्रहणार्थम् ॥ यत्तु कतेरित्येव युक्तं पतिततीनां लोकेऽदर्शनादित्युक्तं तत् प्रौढिवादमात्रं 'पतिते नागशीर्षाणि ततिते नाङ्गवेदने' त्यादिषु दर्शनात्। बहुगणवतिडतिसंख्येति पाणिनिसूत्रेऽपि डतेरेव ग्रहणात् कतीत्यत्र ए ओ जसीत्यस्य प्राप्तौ जसोऽत्राभावात्। प्रत्ययलोपेऽपि प्रत्ययाश्रितं कार्यं भवतीति तत्प्राप्तिः यदादेशस्तद्वद्भवतीति सिद्धेः प्रत्ययलोप इत्याद्युक्तिर्नियमार्था। तेन यत्र प्रत्ययस्यासाधारणं रूपं प्रयोजकं तदेव प्रत्ययलोपे सति भवति न तु प्रत्ययाप्रत्ययसाधारणम्। तेन शोभना दृषदोऽस्य सुदृषत् प्रासाद इत्यत्र अत्वसोः साविति दीर्घो न ॥

**(लुकि न तन्निमित्तम्) कति। कति। कतीनाम्। कतिषु। औडुलोमिः। औडुलोमी ॥**

( सुबोधिनी )–लुकि न तन्निमित्तम् ॥ लुक्शब्देन लुप्ते सति लुग्वन्निमित्तमाश्रित्य कार्यं न भवतीतीत्यर्थः ॥ 'शीङो गुणश्चतुर्षु' इत्यनेन ज्ञापितमिदम् । अन्यथा शेते इत्यादावदादेर्लुगिति लुक्तस्यापः प्रत्ययलोपे प्रत्ययलक्षणं न याति इति तद्भावेन गुणस्य सिद्धत्वाद्व्यर्थमिदं सूत्रं ततो ज्ञापयतीति । का संख्या येषां ते कति । उडूनीव लोमानि यस्य स उडुलोमा । उडुलोम्नोऽपत्यमौडुलोमिः । बाह्वादित्वादिञ् ॥

( तत्त्वदी० )–सिद्धान्तमाह ॥ **लुकि न तन्निमित्त**मिति ॥ स प्रत्ययो निमित्तं यस्य तत्कार्यमिति शेषः । लुकि सति प्रत्ययाश्रितं कार्यं न भवति इत्यर्थः । एतद्बीजं तु शेते इत्यत्र शीङ इति सूत्रेण गुणकरणम् । अन्यथा अपो लुकि प्रत्ययलक्षणेन पित्त्वाद्गुण इत्यनेनैव गुणे सिद्धे यत्सूत्रान्तरप्रणयनं तज्ज्ञापयति । **लुकि न तन्निमित्त**मिति ॥ **औडुलोमि**रिति ॥ बाह्वादेश्चेति इञ् । आदिस्वरस्य ञ्णिति चेति वृद्धिः । टिलोपः ॥

**( लोम्नोऽपत्येषु बहुष्वकारः ) उडुलोमाः । औडुलोमिम्, औडुलोमी, उडुलोमान् । वातप्रमीः, वातप्रम्यौ, वातप्रम्यः । वातप्रमीम्, वातप्रम्यौ, वातप्रमीन् । वातप्रम्या ॥ एवं ययीपप्यादयः । क्विबन्तवातप्रमीशब्दस्यामि शसि ङौ च विशेषः । वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि । य्वौ वेति यः । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥**

( सुबोधिनी )–लोम्नोऽपत्येषु बहुष्वकारः ॥ लोमन्शब्दान्तादप्रत्ययो भवति अपत्यानां बहुत्वे वाच्ये ॥ उडुलोम्नोऽपत्यानि उडुलोमाः । नो वेति टिलोपः । बहुत्वाभावे औडुलोमिशब्द इदन्तस्तस्य हरिवद्रूपम् । बहुत्वे तु उडुलोमशब्दोऽदन्तोऽन्य एव । तस्य इकारान्तेषु व्युत्पादनं प्रासंगिकम् । औडुलोमिशब्दस्य बहुत्वेऽदन्तत्वं भवतीति न भ्रमितव्यमिति । अदन्तस्य तु देववद्रूपम् ॥इतिदन्ताः॥ वातं प्रमिमीते इति वातप्रमीः वातप्रम्यादय इत्युणादिसूत्रेण माङ ईक् प्रत्ययः । आतोऽनपीत्यालोपः । स्वरादिविभक्तौ 'इयं स्वरे' इति यत्वम् । अमि शसि च परत्वादमूशसोरित्यालोपः । वातप्रमीम् । वातप्रमीन् । आमि तु दीर्घत्वान्न नुट् । वातप्रम्याम् । ङौ तु सवर्णे दीर्घः । वातप्रमी । एवं यान्त्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः । यापोरीक्प्रत्ययो द्वित्वं च निपातनात् । यदा वातं प्रमीनातीति । मीञ् हिंसायाम् । अस्मात् क्विपि वातप्रमीः । अथवा ईक्प्रत्ययान्ताद्वातप्रमीशब्दादाचारे यङन्तात्कर्तरि क्विप् क्रियते तदा क्विबन्तो वातप्रमीशब्दः । धातुत्वाद् य्वौ वेति यः । स्वरादिविभक्तौ परतः सर्वत्र प्रधीवत् । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी पुरुषः । पुंवद्धेतीपो निवृत्तिः । अतिशयेन प्रशस्य इति ईयसुप्रत्यये प्रशस्यशब्दस्य श्रादेशः । ऋन्नित इतीप् । अन्यार्थे इति ह्रस्वस्तु न ईयसुप्रत्ययान्तस्य बहुव्रीहौ नेति निषेधात् ॥

( तत्त्वदी० )–**बहुष्वकार** इति॥ तथा च एकत्वद्वित्वयोरिदं न औडुलोमिशब्दः बहुत्वे त्वकारान्तो भिन्न उडुलोमशब्दः । इकारान्तस्य बहुत्वेऽदन्तामिति न भ्रमितव्यमिति भावः ॥ **ययीपप्यादय** इति ॥ यान्त्यनेनेति ययीर्मार्गः । पाति लोकामिति पपीः सूर्यः । औणादिकौ ॥ **क्विबन्ते**त्यादि ॥ तथा च वातं प्रमिमीते इति वातप्रमीरिति क्विबन्तत्वे धातुत्वानपायेन य्वौ वेति य इति भावः । औणादिकस्य तु धातुत्वाभावात् य्वौ वेत्यस्याप्रवृत्तावपि अम्शसोरित्यस्याप्रवृत्तिः । ङौ तु सवर्णे दीर्घः सहेत्यस्येति रूपभेदः ॥ **बहुश्रेयसी**ति ॥ समासाश्रितविधेरनित्यत्वान्न कः । ईयसोनेति निषेधान्न ह्रस्वः ॥

## (ईदूदन्तस्येयुवस्थानभिन्नस्य स्त्र्याख्यस्योपसर्जनत्वेऽपि स्त्रीकार्यं वक्तव्यम् )

( सुबोधिनी )–**ईदूदन्तस्येयुवस्थानभिन्नस्य स्त्र्याख्यस्योपसर्जनत्वेऽपि स्त्री कार्यं वक्तव्यम्** ॥ स्त्रियमाचष्टे इति स्त्र्याख्यः । चक्षिङो मूलविभुजादित्वात्कप्रत्यये ख्याआदेशे चातोऽनपीत्यालोपे स्त्रियामिति वक्तव्ये आख्याग्रहणं नित्यस्त्रीत्वलाभार्थम् । तेन वृत्तेः प्राक् स्त्र्याख्यस्य नित्यस्त्रीलिंगस्य ईकारोकारान्तस्य नाम्नो गौणेऽपि स्त्रीलिंगकार्यं भवति ॥ स्त्र्याख्यस्येति किम् । ग्रामण्ये ॥

( तत्त्वदी० )–**स्त्र्याख्यस्ये**ति ॥ स्त्रियमाख्यातीति स तस्य पूर्वं स्त्रीत्ववाचकस्येत्यर्थः ॥ इयुवस्थानभिन्नस्य किम् । अतिश्रिये ॥

**हसेपः सेर्लोपः ॥ हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति ॥ बहुश्रेयसी, बहुश्रेयस्यौ ॥**

( सुबोधिनी )–**हसेपः सेर्लोपः** ॥ हसान्तादीबन्ताच्च नाम्नो सेर्लोपो भवति । हसश्च ईप् चानयोः समाहारो हसेप् तस्मात् ॥ ननु कौशाम्ब्या निष्क्रान्त इति निष्कौशाम्बिरित्यत्रातिव्याप्तिः स्यात् । 'अन्यार्थे' इति ह्रस्वे कृते एकदेशविकृतस्यानन्यत्वात् । उच्यते । ई ईप् इति प्रश्लिष्य दीर्घस्यैवेपो ग्रहणात् ईकाररूपादीपः सेर्लोप इति ह्रस्वे कृते त्वीबन्तत्वेऽपीकारान्तत्वं नास्तीति ॥ सेरिति किम् । मरुतौ । हसान्तात्प्रथम सिलोपे पश्चात्कार्यान्तरं भवति । इतोऽदित्यनेनात्वे उपधादीर्घे नलोपशि स्त्रोर्विसर्गे च कृते पन्था इति सिद्धम् । आसावित्याकारविधानेन प्रथमसिलोपस्य ज्ञापनात् ॥

( तत्त्वदी० )–**हसेपः सेर्लोप** इति ॥ हस् च ईप् च एतयोः समाहारः हसेप् तस्मात् हसेपः ननु हसग्रहणं किमर्थं हसान्तात्संयोगान्तलोपे रूपसिद्धेरिति चेन्न वेधा इत्यत्र परत्वादपवादत्वाद्वा स्कोराद्योरित्यनेन सलोपे अत्वसोः साविति दीर्घासिद्धेः । अथ परं नित्यं च लोपं बाधित्वा निरवकाशत्वादत्वसोरित्यस्यैव प्रवृत्तिरिति चेत् । मैवम् । शक्नोतीति शक् इत्यस्यासिद्धेः । संयोगान्तलोपं बाधित्वा स्कोराद्योरीति कलोपप्राप्तेः । तस्माद्धसग्रहणम् ॥ अथ गंगामिच्छति गंगीयति ततः क्विपि अल्लोपयलोपौ गंगीरिति । तत्रापः भूतपूर्वेपकारनाश्रित्य ईपः सिलोपोऽस्त्विति वाच्यं लक्षणप्रतिपदो-

क्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषया तदग्रहणात् ॥ ननु निष्कौशाम्बिरित्यत्र ह्रस्वत्वेऽपि ई-पमाश्रित्य सेर्लोपोऽस्त्विति चेन्न तत्र ई ईबिति प्रश्लिष्य दीर्घस्यैवेपः सर्वत्र ग्रहणात् । अत्र तस्मादि-त्यनुवृत्य स्याद्यनुवृत्य वा ईप्साहचर्याद्वा अभैत्सीदित्यादौ न लोपः ॥

**धौ ह्रस्वः ॥ इयुवस्थानवर्जितयोरीदूतोरस्त्रीशब्दस्य च स्त्रियां धौ परे ह्रस्वो भवति ह्रस्वविधानसामर्थ्याद्धाविति न । हे बहुश्रेयसि । बहुश्रेयसीम् । बहुश्रेयसीन् ॥**

( सुबोधिनी )—धौ ह्रस्वः ॥ स्त्रियां वर्तमानयोरीदूतोः स्त्रीशब्दस्य च ह्रस्वो भवति ॥ वेयुव इत्यपकृष्य व्यवस्थितविकल्पं चाश्रित्य वाक्यभेदेन व्याख्येयम् । तेन इयुवस्थानिनोरीदूतोर्धौ न ह्रस्वः । हे बहुश्रेयसि इत्यत्र ह्रस्वे कृते धाविति गुणो न ह्रस्वविधिसामर्थ्यात् ॥

( तत्त्वदी० )—धौ ह्रस्व इति ॥ अत्र वेयुव इत्यतो वा इति इयुव इति चानुवर्त्य वा इत्यस्य व्यवस्थितत्वमाश्रित्य सर्वत्र निर्वाहः । तथा च इयुवस्थानवर्जितयोरीदूतोः स्त्रीशब्दस्य च धातुवर्जि तस्य चेत्यादिलाभः । तेन हे श्रीः । हे स्त्रि । हे ग्रामणि । हे अतिचमु । इत्यादावव्यप्त्यत्यातिव्याप्ति-परिहारः सिद्ध्यतीति ध्येयम् ॥

**ङितामट् ॥ स्त्रियामीकारान्तादूकाराच्च ङितामडागमो भवति॥ बहुश्रेयस्यै । बहुश्रेयस्याः । बहुश्रेसीनाम् ॥**

( सुबोधिनी )—ङितामट् ॥ य्वोरित्यनुवर्तते । इदुद्भ्यामिति परत्वाद्विकल्पेन बाध-नाद्दीर्घयोरेव ईदूतोर्ग्रहणम् । स्त्रियामीदूदन्तात्परेषां ङेङसिङसङीनामट् स्यात् ॥ यदा-गमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति परिभाषया स्याद्यवयव एवाट् । तेन स्वरादौ स्यादौ परतो विधीयमानावियुवौ य्वौ च भवतः । यथा । श्रियै । भुवै । प्रध्यै । वर्षा-भ्वै ॥ स्त्रियां किम् । वातप्रम्ये । हूह्वे । आमि तु नुट् । बहुश्रेयसीनाम् ॥

( तत्त्वदी० )—ङितामडिति ॥ ङ् इत् येषां ते ङितस्तेषाम् ॥ नन्वटः स्यादित्वाभावेन कथं तस्मिन् इयुवौ य्वौ वेति चेत्सत्यम् । यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यंते इति परिभाष-यापि स्यादिग्रहणेन ग्रहणसंभवात् । अत्र स्त्रियामिति निर्देशो मानम् । अत्र च दीर्घौ ईदूतौ ग्राह्यौ इदुद्भ्यां परत्वाद्विकल्पेन बाधात् ॥ नन्वतिलक्ष्म्यै कथमत्र समासस्य स्त्रियामभावादिति चेन्न अवयव-स्यैव स्त्रियां वर्तमानत्वेनेष्टसिद्धेः ॥ स्त्रियां किम् । वातप्रम्ये ॥ य्वोः किम् । मात्रे ॥

**स्त्रियां योः ॥ इवर्णान्तादुवर्णान्ताच्च स्त्रियां वर्तमानात्परस्य ङे-रामादेशो भवति ॥ बहुश्रेयस्याम् । अनीबन्तत्वान्न सिलोपः । अतिलक्ष्मीः । धौ ह्रस्वः । हे अतिलक्ष्मि । शेषं बहुश्रेयसीवत् । सुश्रीः ॥**

( सुबोधिनी )—स्त्रियां योः ॥ इश्च उश्चानयोः समाहारो युस्तस्माद योः । समाहारे नपुंसकत्वस्यानित्यत्वात्पुंल्लिङ्गनिर्देशः । आगमशास्त्रस्यानित्यत्वाद्वा न नुम् । अथवा इना सहित उरिति युः । शाकपार्थिवादित्वान्मध्यमपदलोपः । स्त्रियामिवर्णोवर्णान्तात्परस्य ङेराम् स्यात् ॥ स्त्रियां किम् । वातममी । हूह्वि ॥ योरिति किम् । गवि । किं च अडागमाभावे आमोऽप्यभाव इति यद्वृत्तौ पठ्यते तस्यायमाशयः । तथाहि । मत्यां मतावित्यादिषु स्त्रियां योरित्यनेन नित्यमामि कृते इडुद्भ्यामित्यादिविकल्पेनाट् क्रियते । अडागमाभावे तु स्थानिवद्भावेनामो ङित्त्वात् ङेरौडिदित्यनेन औत्वटिलोपौ भवतः । अट्पक्षे तु तेन व्यवधानादौत्वाभाव इति । तेनाडामोः सहैव प्रवृत्तिर्भवति । बहुश्रेयसी ङि इत्यत्र ङेरामादेशे कृते नुट् न परत्वेनाटा बाधनात् । बहुश्रेयस्याम् । लक्षेर्मुट् चेत्यौणादिक ईप्रत्ययान्तो लक्ष्मीशब्दः । लक्ष्मीमतिक्रान्त इत्यतिलक्ष्मीः । 'अन्यार्थे' इति ह्रस्वो न स्त्रीप्रत्ययान्तत्वाभावात् । हसेप इति सेर्लोपोऽपि न ईप्रत्ययान्तत्वाभावात् । सुष्ठुश्रीर्यस्येति सुश्रीः । ईबन्तत्वाभावान्न सिलोपः ॥

( तत्त्वदी० )—स्त्रियां योरिति ॥ इश्च उश्च एतयोः समाहारः युः तस्मात् योः । आगमजस्यानित्यत्वान्न नुम् ॥ स्त्रियां किम् । वातप्रमीः ॥ योरिति किम् । गवि ॥

**य्वोर्धातोरियुवौ स्वरे ॥ धातोरीवर्णोवर्णयोरियुवौ भवतः स्यादौ स्वरे परे ॥ सुश्रियः । एवं सुधीयवक्र्यादयः । सेनानीः ॥**

( सुबोधिनी )—य्वोर्धातोरियुवौ स्वरे ॥ यत्वाद्यपवादोऽयम् । इश्च उश्च यू तयोर्य्वोः । व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति परिभाषया य्वोरिति ह्रस्वयोरिह ग्रहणे सावर्ण्याद्दीर्घयोश्च नाम्नो धातोरिवर्णोवर्णयोरियुवौ भवतः स्यादौ स्वरे ॥ धातोः किम् । वातप्रम्यौ । हूह्वौ ॥ स्यादौ किम् । श्र्यर्थम् । भ्वर्थम् ॥ ननु सुश्रिये इत्यादौ वेयुव इत्यनेनाट् कथं नं क्रियते । ईदूदन्तस्य स्त्र्याख्यस्येत्युक्तत्वादाह । इयुवोर्निमित्तभूतयोरीदूतोर्गौणे स्त्रीकार्यं न वक्तव्यं स्त्रीशब्दं विना ॥ सुष्ठु धीर्यस्येति सुधीशब्दस्य च नेति निषेधात् स्त्रौ वेति न प्रवर्तते ॥ यवं क्रीणातीति यवक्रीः । क्विबन्तः ॥ सेनां नयतीति सेनानीः । क्विबन्तः ॥

( तत्त्वदी० )—य्वोर्धातोरियुवौ स्वरे इति ॥ धातोः किम् । वातप्रम्यौ ॥ य्वोः किम् । विश्वपौ ॥ स्वरे किम् । सुश्रीभ्याम् ॥ स्यादौ किम् । श्र्यर्थम् । भ्वर्थम् ॥ अत्र इश्च उश्च एतयोः य्वोरिति व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति वचनादवर्णोवर्णयोरिति व्याख्यास्यामः । अत्राहुः । नामिनः स्वरे इति तु स्वरग्रहणमत्रास्थामिति शसादिना संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनः स्वरग्रहणमिति । तत्रेदमवधेयम् । न ह्यन्यसूत्रस्य पदसंबद्धस्यानुवृत्तिरिह दृष्टा एकयोगनिर्दिष्टानामेव प्रवृत्तिनिवृत्त्योर्दर्शनात् । किं तु बहुसूत्रव्यवधानादन्यत्र विधानात्तन्निवृत्तौ स्वरग्रहणमित्येव वक्तुमुचितम् । अत्रातो धातोरित्यतो धातोरिति लब्धेऽपि पुनर्धाग्रहणं योगविभागेनार्थविशेषज्ञापनार्थम् । यत्तु इयेषेत्यादौ स्पष्टतयोपपादयिष्यते । अत्राहुः ।

य्वोरिति किमर्थम् । परिशेषादेव तल्लाभात् । तथाहि । ऋदन्तस्य तुक् ऋदन्तस्य तु इरुरौ ऌदन्तस्य तु धातोरेव संध्यक्षरान्तस्य त्वात्वमेव । अदन्तस्य तु यत इति लोपः । आदन्तस्य शसादौ लोपः । पञ्चसु तु आतः पञ्चसु नेति पदत्रयमनुवर्त्य पञ्चसु नेति निषेधः । हसान्तस्य गमामित्यादिनिर्देशा न्नेति श्रीपं कुलमित्यादौ तु अत इति नेति च पदद्वयमनुवर्त्य अतो नेति व्याख्यातुं शक्यत्वान्नेति पारिशेषात् य्वोरिति लब्धे किमर्थं तदितीति । अत्रेदमवधेयम् । आदन्तस्य वारणाय आतः पञ्चसु नेति अदन्तवारणाय अतो नेत्याद्यनुवृत्तिक्लेशतो य्वोरिति ग्रहणस्य स्पष्टप्रतिपत्तितया लघुत्वादिति तदुपेक्षितम् ॥

**य्वौ वा ॥ अनेकस्वरस्य नाम्नो धातोरिवर्णोवर्णयोर्यकारवकारौ भवतः स्यादौ स्वरे परे ॥ धातोरवयवसंयोगः पूर्वो यस्मात्तस्य तु न । सोपपदस्यानेकस्वरस्य चेदुपसर्गकारकपूर्वस्यैव नान्यपूर्वस्य । वर्षाकरदृन्पुनर्पूर्वस्य भूशब्दस्य वत्वम् । अन्यभूशब्दस्य सुधीशब्दस्य च य्वौ न ॥ सेनान्यौ । सेनान्यः ॥**

( सुबोधिनी )—य्वौ वा ॥ इयुवोरपवादोऽयम् । तस्मादिति य्वोर्धातोः स्वरे इति चानुवर्तते । अनेकस्वरस्य नाम्नो धातोः संबधिनोरिवर्णोवर्णयोर्यकारकवारौ भवतः स्यादौ स्वरे । धात्ववयवसंयोगपूर्वयोरिवर्णोवर्णयोस्तु य्वौ न चेद्यदि सोपपदस्य धातोरिवर्णोवर्णयोर्य्वौ स्यातां तदोपसर्गकारकपूर्वस्य धातोरिवर्णोवर्णयोरेव य्वौ स्तः न तूपसर्गकारकेतरपूर्वस्य धातोरिवर्णोवर्णयोरर्थादुपसर्गकारकपूर्वत्वेन योऽनेकस्वरो धातुस्तस्यैवर्णोवर्णयोरेवय्वौ । उपसर्गकारकेतरपूर्वत्वेन योऽनेकस्वरो धातुस्तस्यैवर्णोवर्णयोर्य्वौ न ॥ अनेकस्वरस्य य्वौ किम् । नियौ । लुवौ ॥ धातोर्य्वोः किम् । वातप्रम्यौ । हूह्वौ ॥ स्यादौ स्वरे किम् । सेनान्यर्थम् । सुल्वर्थम् ॥ धात्ववयवसंयोगपूर्वत्वे सुश्रियौ । उपसर्गधात्ववयवसंयोगपूर्वत्वे तु य्वौ भवतः । उन्न्यौ । उल्ल्वौ । धात्ववयवसंयोगोऽत्र न । उपसर्गकारकाभ्यामितरपूर्वत्वे तु य्वौ न । परमनियौ । शुद्धधियौ । वर्षाकरदृन्पुनर्पूर्वस्य भुवो वत्वमितरपूर्वस्य भूशब्दस्य सुधीशब्दस्य च य्वौ न किं तु इयुवौ ॥

( तत्त्वदी० )—य्वौ वेति ॥ अत्र तस्मात् य्वोर्धातोः स्वरे इति पदचतुष्टयमप्यनुवर्तते इत्यभिप्रेत्याह—**नाम्नो धातो**रित्यादि ॥ अत्र वाशब्दो व्यवस्थितः । ततश्च सर्वेष्टसिद्धिरिति ॥ अनेकस्वरस्य किम् । नियौ ॥ धातोः किम् । वातप्रमीम् ॥ य्वौ किम् । सोमपौ ॥ स्वरादौ किम् । सेनानीभ्याम् ॥ स्यादौ किम् । सेनान्यर्थम् ॥

**नियः ॥ नीशब्दादुत्तरस्य ङेरामादेशः ॥ सेनान्याम् । एवं सुनीग्रधीग्रामण्यादयः । धातुना संयोगविशेषणात् उन्न्यौ । उपसर्गकारकपूर्वस्य किम् । परमनियौ । शुद्धधियौ ॥ अनेकस्वरस्य किम् । नियौ । कुमारीमिच्छन् कुमारीवाचरन् कुमारी । हसेप इति**

**सिलोपः। कुमार्यौ, कुमार्यः। अमि शसि च कुमार्यम्। कुमार्यः। शेषं बहुश्रेयसीवत। सखायमिच्छति सखीयति। एकदेशविकृतस्यानन्यत्वात् डैत्वे सखा, सखायौ, सखायः। हे सखीः। सखायम्। सख्यः। सह खेन वर्तते सखस्तमिच्छति सखीः सख्यौ सुतमिच्छति सुतीः, सुत्यौ॥**

सुबोधिनी )—नियः॥ नीशब्देन नाम्नो विशेषणात्तदन्तविधिः। नीशब्दान्नीशब्दान्ताच्च नाम्नो ङेराम् स्यात्॥ लुन्वीत्यत्र तु नातिव्याप्तिः लक्षणप्रतिपदोक्तयोरिति न्यायात्। अर्थवद्ग्रहणे नानर्थकस्येति न्यायाच्च॥ यत्वे आमादेशे च सेनान्याम्। एवं सुष्ठु नयतीति सुनीः॥ प्रध्यायतीति प्रधीः। ध्यायतेः क्विपि संप्रसारणे रूपम्। यदा तु प्रकृष्टा धीर्बुद्धिर्यस्येति विग्रहस्तदा धीशब्दस्य नित्यस्त्रीलिङ्गत्वात् ईदूदन्तस्य स्याख्यस्येति स्त्रीकार्ये बहुश्रेयसीवद्रूपम्॥ सुष्ठु ध्यायतीति सुधीः। सुधीशब्दस्य च नेति निषेधादिय्। सुधियौ, सुधियः। इत्यादि॥ ग्रामं नयतीति ग्रामणीः॥ उन्नयतीत्युन्नीः। धातुना संयोगस्य विशेषणादिह य्वौ वेति यत्वं स्यादेव। परमश्चासौनीश्च परमनीः। शुद्धा धीर्यस्य स शुद्धधीः। उपसर्गकारकेतरपूर्वत्वादिय्। यदा तु शुद्धं ब्रह्म ध्यायतीति विगृह्यते तदा य्वौ वेति यत्वं भवत्येव॥ नयतीति नीः। एकस्वरत्वादिय्। कुमारीमिच्छतीति कुमारीयति। अथवा कुमारीवाचरतीति कुमारीयते कुमारयति वा। नाम्नोय ईचास्योति यप्रत्ययान्तात् कर्तुर्यङिति नाम्न आचारे क्विप्। यगन्ताभ्यां च कर्तरि क्विपि परतः। यत इत्यल्लोपे यवयोर्वसे हकारे चेति यलोपे च कुमारीति रूपम्॥ ननु कुमारीत्यत्रान्यार्थे इत्यनेन ह्रस्वः स्यात् क्विवर्थं प्रतीवन्तस्योपसर्जनत्वात्। उच्यते। 'अन्यार्थे' इति सूत्रे कृत्रिमोपसर्जनं गृह्यते न त्वप्रधानरूपमिति। कुमारीशब्दे ईदूदन्तस्य स्याख्यस्येति स्त्रीकार्यं भवति। तेन धौ परे धौ ह्रस्व इति ह्रस्वः। ङिद्वचनेषु ङितामाडित्यट्। स्त्रियां योरिति ङेराम्। आमि तु नुट्। स्वरे य्वौ वेति यत्वम्। कथं तर्हि दुर्धियः वृश्चिकभिय इत्यादि। उपसर्गकारकपूर्वत्वाद्यत्वेन भाव्यमिति। उच्यते। दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्योपसर्गसंज्ञा नास्ति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञका इत्युक्तत्वात्। वृश्चिकसंबन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपोऽत्र बोध्यः। भययोगभावाद्वृश्चिकस्य नापादानत्वमिति भावः॥ सखायमिच्छतीति सखीयति। नाम्नो य इति यप्रत्ययः। य इति दीर्घः। ततः क्विपि यत इत्यल्लोपः। यवयोर्वसे इति यलोपः। अल्लोपस्यात्र स्थानिवत्त्वेन यत्वं न भवति क्वौ लुप्तं न स्थानिवदिति निषेधात्। एकदेशविकृतस्यानन्यतया डात्वमैत्वं च भवति। शसादौ स्वरे य्वौ वेति यः। सह खेन वर्तते यः स सख इति बहुव्रीहिः। "कं शीर्षे च सुखे खं खः सदिवि व्योमनीन्द्रिये। शून्ये विदौ सुखे खस्तु" इति हैमः॥ सखमिच्छतीति सखीयति। नाम्नो य ई चास्येति यः ईत्वं च। ततः क्विपि सखी। लक्ष-

णप्रतिपदोक्तयोरिति न्यायान्नात्र डात्वम् । स्वरादिविभक्तौ य्वौ वेति यः ॥ एवं सुतमिच्छतीति सुतीयति । क्विपि सुतीः ॥

( तत्त्वदी० )–नियं इति ॥ अत्र 'णीञ् प्रापणे' इति धातुरेव गृह्यते न त्वन्यः लक्षणप्रतिपदोक्तपरिभाषया लून्य इत्यादौ नातिप्रसंगः । कचिन्नियश्चेति चकारः स चिन्त्यप्रयोजन इति वृद्धाः ॥ उन्न्याविति ॥ अत्र संयोगपूर्वकत्वेऽपि उपसर्गधात्ववयवसंयोगत्वाद् य्वौ ॥ कुमारीमिच्छन्नित्यादि ॥ इच्छार्थायां तदाचारक्विबन्ताद्वा कर्तरि क्विपि कुमारीति रूपम् । नेति पुरुष इत्यर्थः ॥ पुंस्त्वद्योतनायेदं कुमार्यमिति । अल्लोपं बाधित्वा य्वौ वेति यः ॥ सखेति ॥ अत्रापि सखायमिच्छतीति वाक्ये अल्लोपयलोपयोः सखीति दीर्घान्तः । सेर्डाधेरित्यत्र ऐसख्युरित्यस्य ह्रस्वान्तस्यानुवृत्तेरिह च ह्रस्वान्तस्य ग्रहणात् कथं दीर्घान्ते कार्यद्वयमित्यत आह–एकदेशेत्यादि ॥ एकदेशेन एकादेशावयवेन विकृतं विकारवत् विपरीताकृत्यपि नान्यवद्भवतीत्यर्थः । यथा छिन्नकर्णोऽपि श्वा श्वैव नान्य इति भावः ॥ नन्वत्रालोपस्य स्थानिवद्भावेन यादेशोऽस्त्विति चेन्न क्वौ लुप्तं न स्थानिवदिति परिभाषोपस्थानात् । लुप्तेति नपुंसके भावे क्तः । क्वौ लोप इति यावत् ॥ सखायमिति ॥ अत्राम्शसोरिति बाधित्वा य्वौ वेति यः प्राप्तः ततोऽपि परत्वादैसख्युरित्यैत्वमेव तकारस्थानजादिति स्थानिवद्भावेनेति भावः ॥

**( खीतीभ्यां कृतयादेशाभ्यां ङसिङसोरकारस्य उः ) सख्युः । सुत्युः ॥**

( सुबोधिनी )–**खीतीभ्यां कृतयादेशाभ्यां ङसिङसोरकारस्य उः ॥** य्वौ वेति कृतयाभ्यां खीतीवर्णाभ्यां परस्य ङसिङसोरस्य उः स्यात् ॥

( तत्त्वदी० )–कृतयादेशेत्यादि ॥ धात्ववयवसंयोगपूर्वत्वान्न यत्वं तदभावान्नोत्वमित्यर्थः ॥

**( तकारस्थानजाद्वर्णादपि ) लूनमिच्छतीति लूनीः । लून्युः । क्षामं प्रस्तीमं वेच्छतीति क्षामीः । क्षाम्युः । प्रस्तीमीः । प्रस्तीम्युः । शुष्कीः । पक्वीः । कृतयादेशत्वाभावान्नोत्वम् । शुष्कियः । पक्वियः । हूहूः, हूह्वौ, हूह्वः । हे हूहूः । हूहूम्, हूह्वौ, हूहून् । वातप्रमीवत् ॥ एवं दम्भूः । अतिचमूः । बहुश्रेयसीवत् ॥ खलपूः, खलप्वौ, खलप्वः । एवमुल्लूसुल्वादयः ॥ स्वयंभूः, स्वयंभुवौ, स्वयंभुवः। एवं लूस्वभूकटभूदृन्भूकाराभूपरमल्वादयः ॥ वर्षाभूः, वर्षाभ्वौ, वर्षाभ्वः । वर्षाभ्वम् । एवं कारभूपुनर्भूदृन्भूकरभूशब्दाः ॥**

( सुबोधिनी )–**तकारस्थानजाद्वर्णादपि ॥** कृतयादेशात्तकारस्थानोत्पन्नाद्वर्णात्परस्य ङसिङसोरस्य उः स्यात् ॥ लूनमिच्छतीति लूनीयति । क्विपि लूनीः । ल्वादेोदितश्चेति क्तस्य नः ॥ क्षाममिच्छतीति क्षामीयति क्विपि क्षामीः । क्षायो म इति क्तस्य मः ॥ प्रस्तीममिच्छतीति प्रस्तीमीयति । क्विपि प्रस्तीमीः । प्रस्त्यायतेः संप्रसारणं

क्तस्य नत्वं च निपातनात् । 'क्षामं क्षिणं तु प्रस्तीमं विपरीतं निगद्यते' इति ॥ शुष्कं पक्कं वेच्छाति शुष्कीयति पक्कीयति । क्विपि शुष्कीः । पक्वीः । शुषेः क इति क्तस्य कः । पचो व इति क्तस्य वः । ङसिङसोः परतो य्वोर्धातोरितीयादेशे कृते य्वौ वेति यादेशत्वस्याभावात् स्त्रीतीभ्यामित्युत्वं न ॥ इतीदन्ताः ॥ उदन्ता हरिवत् ॥ इत्युदन्ताः ॥ गन्धर्वविशेषवाचकोऽव्युत्पन्नो हूहूशब्दः । अमि शसि च अमृशसोरित्यल्लोपः । अन्यत्र स्वरादौ विभक्तौ उवमिति वत्वम् ॥ दृम्भतीति दृम्भूः । 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' इत्युणादिसूत्रेण कूप्रत्ययो नुगागमश्च निपात्यते । अयमूकारो धातोर्न । तेन उवमिति वत्वम् । दृभी ग्रन्थे । दृम्भूः ग्रन्थकर्ता ॥ चमूं सेनामतिक्रान्तो य सोऽतिचमूः । अतिचमूशब्दे तु स्त्रीकार्यं विशेषः । धौ हे अतिचमु । ङिति अतिचम्वै : अतिचम्वाः । आमि अतिचमूनाम् । ङौ अतिचम्वाम् ॥ खलं पुनातीति खलपूः । पूञः । क्विप् । स्वरादौ विभक्तौ य्वौ वेति वत्वम् । स्वयं भवतीति स्वयंभूः । क्विवन्तः । अन्यभूशब्दस्येति निषेधात् वत्वं न ॥ लुनातीति लूः । अनेकस्वरत्वाभावात् वत्वं न ॥ स्वेन भवतीति स्वभूः । अन्यभूशब्दस्येति निषेधाद्वत्वं न ॥ कटं प्रवत इति कटप्रूः । धातोरवयवसंयोगपूर्वकत्वाद्वत्वं न ॥ दृन्भ्यां भवतीति दृन्भूः ॥ कारायां भवतीति काराभूः । अन्यभूशब्दस्येति वत्वं न ॥ परमश्चासौ लूश्च परमलूः । उपसर्गकारकेतरपूर्वत्वाद्वत्वं न ॥ वर्षासु भवतीति वर्षाभूः । य्वौ वेति वत्वं स्वरे । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः ॥ 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः ॥ कर एव कारः स्वार्थिकोऽण् । कारे भवतीति कारभूः । वत्वम् ॥ पुनर्भवतीति पुनर्भूरिति क्रियाशब्दः । 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः ॥ पुनर्भूशब्दस्तु नित्यस्त्रीलिङ्ग एव ॥ दृन्निति नान्ते हिंसार्थाव्यये पूर्वापदे भुवः क्विप् । दृन्भूः । तरुसर्पजातिकपिश्च ॥ करे भवतीति करभूः वत्वम् ॥ इत्यूदन्ताः ॥

**सेरा ॥ ऋकारान्तात्परस्य सेरा भवति स च डित् ॥ पिता ॥**

( सुबोधिनी )—सेरा ॥ ऋतो ङ उरित्यत ऋत इत्यनुवृत्तम् । ऋदन्तान्नाम्नः सेरा स्यात् स च डिद्वत् ॥ पितृ सि इत्यत्र पञ्चसु इत्यर् प्राप्तः सेरा इत्यात्वं च प्राप्तम् । तत्र येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवाद इति न्यायेनार् इत्यस्य बाधकोऽयमाकारः प्रथमं प्रवर्तते । ततस्तस्य स्थानिवत्त्वेन आ इत्यस्य सित्वात्तस्मिन् परे अर् टिलोपश्चेति द्वयं प्राप्तम् । तत्र परत्वान्नित्यत्वाच्च टिलोपः ॥ "पिता माता ननान्दा न—प्तृत्वष्टृभ्रातृयातरः । जामाता दुहिता देवा न हि त्रन्ता इमे दश ॥ १ ॥" अव्युत्पत्तिपक्षमाश्रित्येदमुक्तम् ॥

( तत्त्वदी० )—सेरेति ॥ अत्र ऋतो ङ उरित्यत ऋत इत्यनुवर्तते ॥ सेः किम् । पितृभ्याम् ॥ ऋतः किम् । हूहूः ॥ तपरत्वं किम् । तॄः ॥ अत्र पितृ सि इति स्थिते पञ्चस्वित्यर्प्राप्तोऽप्यलपः

विषयत्वात्सेरेत्येवादौ प्रवर्तते ततः स्थानिवद्भावादेरप्राप्तावपि परत्वाट्टिलोप एव ॥ अत्राहुः । अन् सावित्येव सूत्रयितुमुचितम् । तथा च अनि सति नोपधाया इति दीर्घे हसेप इति लोपे सिद्ध्यतीष्टमिति । तत्रेदमवधेयम् । अन् सावित्ति कृतेऽर्द्धमात्रालाघवेऽपि सूत्रद्वयापेक्षत्वेन प्रक्रिया-गौरवमित्युपेक्षितम् ॥

**पञ्चसु ॥ ऋकारस्यार्भवति पञ्चसु ॥ पितरौ, पितरः ॥**

**( सुबोधिनी )—पञ्चसु ॥ नाम्न ऋतोऽर् स्यात् स्यादिषु पञ्चसु ॥ स्यादौ किम् । बिभृतः ॥**

**( तत्त्वदी० )—पञ्चस्विति** ॥ अरित्यनुवर्तते । तच्च ऋत एव न तु तदन्तस्य निर्दिश्य-मानस्यादेशा भवन्तीति वचनात् ॥ ऋतः किम् । हूह्वौ ॥ तपरत्वं किम् । त्रौ ॥ पञ्चसु किम् । पितृभ्याम् ॥ अत्र लाघवात् ङि पञ्चस्वित्येकयोगः समुचितः । पृथग्योगकरणमरो नित्यत्वज्ञापना-येति कश्चित् । तेन प्रियतिस्रौ, प्रियतिस्रेत्यादि नेति भावः ॥

**धेरर् ॥ ऋकारान्तात्परस्य धेरर् भवति स च डित् ॥ हे पितः । पितरम्, पितरौ, पितॄन् ॥**

**( सुबोधिनी )—धेरर् ॥ पञ्चसु इत्यस्य स्तुरार् इत्यस्य चापवादोऽयम् । ऋन्दताद्धे रर् स्यात् स च डिद्वत् ॥**

**( तत्त्वदी० )—धेररिति** ॥ अत्र वृद्धाः । मास्त्विदं सूत्रं पञ्चस्वित्यनेनारि कृते हसेप इति संयोगान्त इति वा सिलोपे रूपसिद्धेः । अथ सेरेत्यस्य प्रवृत्तौ रूपासिद्धिरिति वाच्यम् न तत्राधे-रिति योजनीयमतो न हानिः । अथ ङावित्यत्रानुवृत्त्यर्थमिति चेत् तन्न 'अङौ' इत्यस्यैव सुव-चत्वात् । लाघवे विशेषाभाव इति चेत् एकवाक्येनार्थलाघवसद्भावात् । न चैवं हे कर्तरित्यत्रा-प्यार्प्रसंग इति वाच्यं तत्रापि सेरा धेररित्यतो धेरित्यनुवर्त्य विभक्तिविपरिणामेनाधाविति व्याख्येय-मित्यतो धावारः प्रतिषेधात् । अत्रोच्यते । सूत्रं विना हे कर्तरिति न सिद्ध्येत् । तथाहि । प्रथमं पञ्चस्विति अर्प्राप्तः तदपवादः स्तुरारिति आर्प्राप्तः स चाधाविति प्रतिषिद्धः । देवद त्तस्य हन्तरि हते नहि देवदत्तो जीवतीति न्यायेनारि निषिद्धेऽप्यर् न स्यात् । सूत्रारम्भे तु धेररिति टिलोपे च सिद्धम् हे कर्तरिति । यदि त्वपवादे पुनरुत्सर्गस्य प्रवृत्तिरिति न्याय आश्रीयते यथा वासिष्ठ इत्यादौ तदेदं सूत्रं व्यर्थमित्याहुः ॥

**ऋतो ङ उः ॥ पितुः ॥**

**ङौ ॥ ऋकारस्यार् भवति ङौ परे ॥ पितरि ॥ एवं जामातृभ्रात्रा-दयः ॥**

**( सुबोधिनी )—ङौ ॥ नाम्न ऋतोऽर् स्यात् ङौ परे ॥ ङौ किम् । पित्रे । नयतेर्डि-च्चेति ऋप्रत्ययान्तो नृशब्दः । ना, नरौ, नरः ॥**

( तत्त्वदी० )–ङाविति ॥ अत्र ङिदिति निवृत्तं ङित्कार्यस्यासंभवात् । ऋत इत्यनुवृत्तं पञ्चम्यन्तमर्थवशात्षष्ठया विपरिणम्यते । अत्रापि कर्तरीति निर्देशान्निर्दिश्यमानस्यैव ग्रहणात् न तु तदन्तस्य ङिपरत्वमप्यूत एव । तेन ग्रन्थकृतीत्यादौ नातिप्रसंगः ॥ ऋतः किम् । वातप्रमी ॥ तपरः किम् । पित्र्यम् ॥

**( नुर्वा नामि दीर्घः ) नृणाम–नॄणाम् । शेषं पितृवत् ॥**

**( सुबोधिनी )–नुर्वा नामि दीर्घः ॥ नृशब्दस्य वा दीर्घो भवति नामि परे ॥**

**स्तुरार् ॥ सकारतृप्रत्ययसंबन्धिन ऋकारस्यार् भवति पञ्चसु ॥**

**कर्ता, कर्तारौ, कर्तारः । हे कर्तः । कर्तारम्, कर्तारौ, कर्तॄन् ॥**

**( सुबोधिनी )–स्तुरार् ॥ स् च ता चानयोः समाहारः स्तृ तस्य स्तुः । स्तोरितिवद्बोध्यम् । सकारसहितस्ता तस्य स्तुरिति वा । सकारात् परस्य तृप्रत्ययावयवस्य च ऋत आर् स्यात् पञ्चसु ॥ कर्तृ सि इत्यत्र आरपेक्षया सेरेत्यस्यैव प्रथमप्रवर्तनस्यौचित्यं नित्यत्वात् । ततष्टिलेपः । वस्तुतः पूर्वमारि कृते तु वर्णमात्रविधौ यदादेश इत्यस्याभावात् 'सेरा' इत्यात्वं न स्यादिति । आत्वमेव पूर्वं विधेयमिति ॥ स्तुरिति किम् । ना, नरौ, नरः ॥**

( तत्त्वदी० )–स्तुरारिति ॥ स च तृ च स्तृ तस्य स्तुः । स्तोरिति केचित् । सात्परत्वं तृशब्दस्यावयवमकारे बोध्यम् । न तु संयोगसमवायौ ऋकारस्य वर्णत्वेन शब्दत्वात् । संयोगसमवाययोरभावात् शब्दस्य गुणत्वेन संयोगाभावः तस्य द्रव्यमात्रधर्मत्वात् शब्दस्याकाशमात्रसमवेतत्वेन समवायाभावश्च ॥ ननु तृ इत्युक्ते तृणो न ग्रहणं निरनुबन्धकग्रहणे न सानुबन्धकस्येति न्यायात् इति चेन्न परिभाषाया अनित्यत्वात् । प्रशास्तृशब्दस्यैव तृशब्दस्य तु न ग्रहणं व्याख्यानात् । लक्ष्यानुरोधो व्याकरणान्तरं चात्र मूलम् । नप्त्रादीनां मातृपित्रादीनां तु नेति व्याख्यायां व्याख्यानमेव शरणं उभयेषामपि व्युत्पत्त्यव्युत्पत्तिपक्षयोः समत्वात् ॥

**(उद्गातृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणां च ) उद्गाता । नप्ता । क्रोष्टुशब्दस्य पुंसि पञ्चस्यादिषु स्त्रियां च तृवद्रूपम् ॥ क्रोष्टा, क्रोष्टारौ, क्रोष्टारः । हे क्रोष्टो । क्रोष्टारम, क्रोष्टारौ क्रोष्टून् ॥**

**( सुबोधिनी )–उद्गातृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणां च ॥ एषामप्यार् स्यात् पञ्चसु ॥ किं च उद्गात्रादीनां त्रन्तानामारिष्टः । पितृमातृभ्रातृजामातृयातृदुहितृशब्दानां त्रन्तानामरिष्टस्तत्र किं प्रमाणम् । व्युत्पत्तिपक्षे उद्गात्रादयः पित्रादयश्च उणादौ त्रन्ता व्युत्पादिताः । अव्युत्पत्तिपक्षे तूद्गात्रादयः पित्रादयश्चाव्युत्पन्ना न तृप्रत्ययान्ता इति । उच्यते । व्युत्पत्तिपक्षे तृप्रत्ययान्तत्वादेवारि सिद्धे उद्गात्रादिग्रहणं व्यर्थम् । व्यर्थं सति नियम्यते । औणादिकानामुद्गात्रादीनामेव त्रन्तानामार् न तु औणादिकानां**

न्तानाम् । संज्ञाशब्दानामन्येषां पितृप्रभृतीनामिति । अव्युत्पत्तिपक्षे तृन्नात्रादिग्रहणं विध्यर्थमिति पितृमातृभ्रातृप्रभृतीनामार् इत्यस्य शंकैव नास्तीति । क्रोष्टुशब्दस्य पुंसि पञ्चसु स्यादिषु स्त्रियां तृवद्रूपम् । क्रोष्टुशब्दस्य स्थाने क्रोष्टृ इति तृप्रत्ययान्तं रूपं भवति पुंसि पञ्चसु परेषु स्त्रीलिङ्गे च । 'क्रुश' आह्वाने अस्मादौणादिके तु प्रत्यये क्रोष्टुशब्दः । तृवुणाविति तृप्रत्यये तु क्रोष्टृशब्दः । द्वावपि शृगालवाचिनौ । तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते पञ्चस्यादिषु स्त्रियां च तृप्रत्ययान्त एव । तृतीयादौ स्वरे उभयम् । अन्यत्र तु प्रत्ययान्त एवेति नियमार्थमिदमारम्भणीयम् । निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयकत्वेनातिदेशस्य षड्विधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यते तच्च क्रुशेरेव । उपस्थितत्वादर्थतः सादृश्याच्च ॥

**(टादौ स्वरे क्रोष्टुशब्दस्य तृवद्वा)** क्रोष्ट्रा–क्रोष्टुना । क्रोष्ट्रे–क्रोष्टवे । क्रोष्टुः–क्रोष्टोः । क्रोष्टुः–क्रोष्टोः । क्रोष्ट्रोः–क्रोष्ट्वोः । कृताकृतप्रसंगी यो विधिः स नित्यः । नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् । क्रोष्टूनाम् । क्रोष्टरि–क्रोष्टौ ॥ सह इना कामेन वर्तते सेः, सयौ, सयः । स्मृता ईर्लक्ष्मीर्येन स स्मृतेः, स्मृतयौ, स्मृतयः ॥

( सुबोधिनी )–टादौ स्वरे क्रोष्टुशब्दस्य तृवद्वा ॥ क्रोष्टृशब्दो वा तृप्रत्ययान्तः प्रयोज्यष्टादौ स्वरे ॥ तृप्रत्ययान्तक्रोष्टृशब्दस्य कर्तृवद्रूपमुकारान्तक्रोष्टुशब्दस्य भानुवत् । आमि तु तृवद्भावे नुडागमे च प्राप्ते सत्याह । कृतं चाकृतं च कृताकृते कृताकृतयोः प्रसंगोऽस्यास्तीति कृताकृतप्रसंगी यो विधिः स नित्यो विधिर्भवति । तृवद्भावे कृतेऽकृते च नुड्विधिर्नित्यः तृवद्भावस्त्वनित्यः । नित्यश्चानित्यश्च नित्यानित्यौ तयोर्नित्यानित्ययोर्विध्योर्मध्ये नित्यो विधिर्बलवान्बलिष्ठः ॥ कौमुद्यां तु आमि परत्वात् तृज्वद्भावे प्राप्ते नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेति नुडेव । तेन वारीणाम् । तिसृणाम् । क्रोष्टूनामिति ॥ इत्यृदन्ताः ॥ कॄ, विक्षेपे । 'तॄ, प्लवनतरणयोः।' अनयोरनुकरणे कॄ तॄ इति प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशात् 'ऋत इर्' 'ति' 'इर्' स्वोर्विहसे' इति दीर्घे च । कीः किरौ, किरः । तीः, तिरौ, तिरः । इत्यादि गीर्वत् । इरभावपक्षे तु कॄः, क्रौ, क्रः । क्रम्, क्रौ, कॄन् । क्रा । क्रे । ङसिङसोः क्रः । दीर्घान्तत्वादामो न नुट् । क्राम् । ङौ तु क्रि ॥ इत्यॄदन्ताः ॥ 'गम्लृ, गतौ । शक्लृ, शक्तौ ।' अनयोरनुकरणे गम्लृ शक्लृ इति । ऋवर्णलृवर्णौ चेति।सावर्ण्यात् सेरेत्यात्वम् । गमा । शका । पञ्चस्वित्यल् । गमलौ, गमलः । गमलम्, गमलौ । शसि तु गम्लृन् । लृकारस्य दीर्घत्वाभावाच्छसीति न दीर्घः ॥ लृ लमिति लः । गम्ला । गम्ले । ङसिङसोस्तु ऋतो ङ उरित्युत्वम् । गमुल् । शकुल् । ङौ तु गमलि । शकलि ॥ इति लृदन्ताः ॥ ॥ अस्यापत्यमिः कामः । अस्य कृष्णस्य स्त्री ईर्लक्ष्मीः । तेन तया वा सह वर्तते यः स सेः । सहादेरिति सहस्य सरतत एवम् । स्वरादौ विभक्तावय् । सयौ ॥ इत्येदन्ताः॥

**रै स्भि ॥** रैशब्दस्याकारादेशो भवति सकारभकारादौ स्यादौ विभक्तौ ॥ सुराः, सुरायौ, सुरायः । सुराभ्याम् सुरासु ॥

(सुबोधिनी)–रै स्भि ॥ रै इत्यविभक्तिको निर्देशः । रायः आत्वं स्यात् सभादौ विभक्तौ ॥ स्भीति किम् । रायौ ॥ स्यादौ किम् । रैभारः । रैसहायः । 'अर्थरैविभवा अपि' इत्यमरः ॥ इत्यैदन्ताः ॥

(तत्त्वदी०)–रैस्भीति ॥ स् च भ् च स्भ् तस्मिन् । सभादौ स्यादावित्यर्थः ॥ सभादौ किम् । रायौ ॥ स्यादौ किम् । रैभारः । रैसहायः ॥ ऐस्भीति न सूत्रितम् 'ऐकारः स्यान्महेश्वरः' इत्येकाक्षरकोशादिस्थैकारान्तेऽतिप्रसंगात् ॥

**ओरौ ॥** ओकारास्यौकारोदशो भवति पञ्चसु ॥ गौः, गावौ, गावः । हे गौः ॥

(सुबोधिनी)–ओरौ ॥ ओकारस्यौकारो भवति ओकारान्ताद्विहितेषु पञ्चसु परेषु॥ पञ्चसु किम् । गवा ॥ विहितविशेषणं किम् । हे भानो । हे भानवः । धौ ए ओजसीत्योकारे कृते औत्वं प्राप्तं विहितविशेषणाद्वार्यते ॥

(तत्त्वदी०)–ओराविति ॥ ओकारान्ताद्विहितेषु पञ्चसु स्यादिष्विति बोध्यम् । तेन हे भानो, हे भानव इत्यादौ नातिप्रसंगः । उकारान्ताद्विहितौ सिजसावत्र न त्वोकारान्तात् ॥ नन्वोरित्युक्ते उवर्णस्य कुतो न ग्रहणमिति चेन्न द्विगुः उत ऊरित्यादिनिर्देशेन ओकारस्यैव ग्रहणात् ।

**आम्शसि ॥** ओकारस्यात्वं भवति अमि शसि च ॥ गाम, गावौ, गाः । गवा, गोभ्याम् । ङस्य गोः । एवं सुद्यौः । स्मृत उः शंभुर्येन स स्मतौः, स्मृतावौ, स्मृतावः । ग्लौः, ग्लावौ, ग्लावः ॥ इति स्वरान्ताः पुँल्लिङ्गाः ॥

(सुबोधिनी)–अम्शसि ॥ ओत आत्वं स्यात् ॥ शसा साहचर्यात् स्यादीनामेवाम् गृह्यते । नेह । अचिनवम् । असुनवम् । औतोऽपवादोऽयम् । अम् च शश्चानयोः समाहारोऽम्शस् तस्मिन् अम्शसि । गाः इत्यत्र न त्वाम्शसीत्यात्वे इत्युक्तेः 'सो नः पुंसः' इत्यनेन सस्य नकारो नं । सुष्ठु द्यौर्यस्मिन् दिवसे स सुद्यौः । 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः ॥ उः शंभुः स्मृतो येन सः स्मृतोः । बहुव्रीहाविति क्तान्तस्य पूर्वनिपातः ॥ इत्योदन्ताः ॥'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः ॥ स्वरे आव् । ग्लावौ, ग्लावः ॥ इत्यौदन्ताः ॥ ॥ इति सुबोधिन्यां स्वरान्ताः पुँल्लिङ्गाः ॥

(तत्त्वदी०)–अम्शसीति ॥ अम् शसीति च्छेदः । अम् च शस् च अनयोः समाहारोऽम्शम् तस्मिन् ॥ अम्शसीति किम् । गावौ । वसोर्व उरित्यादिनिर्देशान्नोवर्णशङ्का । स्याद्यधिकारादचिनवमित्यत्रातिप्रसंगोऽपि न ॥ ओतः किम् । ग्लावम् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायामिह टीकायां पुँल्लिङ्गोऽगात्स्वरान्तकः ॥

इति तत्त्वदीपिकायां स्वरान्ताः पुँल्लिङ्गाः ।

# अथ स्वरान्ताः स्त्रीलिंगाः ।

**आपः ॥ आदन्तादाबन्तात्परस्य सेर्लोपो भवति ॥ गङ्गा ॥**

( सुबोधिनी )—आपः ॥ आ आप इत्याकारप्रश्लेषादाकारान्तादाबन्तान्नाम्नः परस्य सेर्लोपः स्यात् ॥ आबन्तात्किम् । सोमपाः ॥ आदन्तात्किम् । खट्वामतिक्रान्तोऽतिखट्वः । एकदेशविकृतस्यानन्यत्वादाबन्तत्वेऽपि न सिलोपः आदन्ताबन्ताभावात् ॥

( तत्त्वदी० )—आप इति ॥ अत्र आ आबिति प्रश्लेषादाकाररूपस्यैवापो ग्रहणादतिगंग इत्यादौ नातिप्रसंगः । न चात्र गौणमुख्यन्यायादेव नेति वाच्यं तस्य विशिष्टरूपोपादानविषयत्वात् । अत्र तु आप इति प्रत्ययग्रहणं न तु किंचिद्विशिष्टरूपम् । अत्राहुः । आप इति सानुबन्धग्रहणं व्यर्थं विशेषग्रहणं त्वर्थविशेषादेवेति । अत्रेदमवधेयम् । अर्थविशेषानुशरणानुधावनतः सानुबन्धनिर्देशस्य लघुत्वात् । न चाप इति सूत्रं व्यर्थं हसेपः सेर्लोप इत्यत्रैव हस आ ईबिति प्रश्लेषेण पकारस्योभययोजनेनैवेष्टसिद्धेः । उत्तरत्रोभयानुवृत्तिस्तु स्त्रीभ्रुवोरित्यस्याम्शसीत्यत्रैव निरसनायेति चेत् । न । त्रिद्वन्द्वे सति पश्चात्पकारेण संबन्धे अन्तरंगत्वाद इ ए इति कृते हसेप इति स्यात् । द्वित्रिपदे द्वन्द्वे तु पकारस्याकारेण संबन्धो न लभ्यते । अतः सूत्रारम्भ एवोचित इत्युक्तं वृद्धैः । तत्रेदमवधेयम् । अइएसवर्णदीर्घयोरन्तरंगबहिरंगत्वविशेषे मानाभावः । किं च हसेप इति जातेऽपि मात्रागौरवाभावः । किं च त्रिपदेऽपि द्वन्द्वे पकारानन्वये न कापि क्षतिः । लूनः शान्तिः सोममालभेतेत्यत्रैव अर्थविशेषस्यैव निश्चायकत्वमिति स्वयमेवास्याभ्युपगमादित्यूहनीयमायुष्मता ॥

**औ ॥ आदन्तादाबन्तात्परस्य औ ईर्भवति ॥ गङ्गे, गङ्गाः ॥**

( सुबोधिनी ) औ ॥ औ इत्यविभक्तिको निर्देशः । आप इत्यनुवर्तते । धिरीरित्यत ई इति च ॥

( तत्त्वदी० )—औ इति ॥ अविभक्तिकमौकारविभक्तेरनुकरणम् ॥ आप इति किम् । सोमपौ ॥ आदन्तात्किम् । गंगियौ । दीर्घग्रहणं तु 'य्वे द्विले' इत्येतदर्थम् । जरसीति तु सन्निपातपरिभाषयैव । तद्ध्रस्वत्वेऽपि न क्षतिः ॥

**धिरीः ॥ आदन्तादाबन्तात्परो धिरीर्भवति ॥ हे गङ्गे । गङ्गाम्, गङ्गे, गङ्गाः ॥**

( सुबोधिनी )—धिरीः ॥ आप इत्यनुवर्तते । दीर्घविधानमौ इति सूत्रेऽनुवृत्त्यर्थम् । वस्तुतस्तु ह्रस्व एव युक्तः । शसि तु स्त्रीत्वान्नत्वाभावः । गङ्गाः ॥

( तत्त्वदी० )—धिरीरिति ॥ दीर्घविधानमुत्तरार्थम् । जराशब्दस्य तूक्तरीत्यैव निरासः ॥ आपः किम् । हे हाहाः ॥ आदन्तात्किम् । हे अतिगङ्ग, हे अतिगंगे, इत्यत्र स्थानिवद्भावेन धेर्लोपस्तु न सूत्रारम्भसामर्थ्यात् ॥

**टौसोरेः ॥** आदन्तस्याबन्तस्य टौसोः परयोरेत्वं भवति ॥ गङ्गया ॥

( सुबोधिनी )–**टौसोरेः ॥** टाश्च ओश्च टौसौ तयोष्टौसोः परतः आदन्तस्याबन्तस्यैत्वं स्यात् ॥

( तत्त्वदी० )–**टौसोरे**रिति ॥ टाश्च औश्च टौसौ तयोः ॥ आपः किम् । हाहा । हाहोः । अत्राप्याकारं प्रश्लिष्य पूर्ववदादन्तस्यावन्तस्येति व्याख्यानादतिगंगिया इत्यादौ नातिप्रसंगः ॥

**ङितां यट् ॥** आदन्तादाबन्तात्परेषां ङेङसिङस्ङीना यडागमो भवति ॥ गङ्गायै । गङ्गायाः । गङ्गायाः, गङ्गयोः, गङ्गानाम् ॥

( सुबोधिनी )–**ङितां यट् ॥** ङ्इद्येषां तानि तेषां ङिताम् । वचनापेक्षया क्लीवत्वम् । ङ्इत् यासां ता ङितस्तासाम् । विभक्त्यपेक्षया स्त्रीत्वं वा । ङ् इत् येषां ते ङितस्तेषाम् । प्रत्ययापेक्षया पुंस्त्वं वा । आदन्तादावन्तात् ङितां यट् स्यात् ॥ टित्वादादौ एत्वम् ॥ गङ्गयै । सवर्णदीर्घे । गङ्गायाः ॥

( तत्त्वदी० )–**ङितां य**डिति ॥ ङ्इद्येषां यासां वेति वचनविभक्तिप्रत्ययानामन्यतमस्यान्यपदार्थत्वेन विग्रहः ॥ आप इति किम् । हाहै ॥ आदन्तादिति किम् । अतिगङ्गाय ॥ ङितां किम् । गङ्गाः ॥ अतिगङ्गायेत्यत्र तु आकारश्रूयमाणत्वात्स्थानिवत्त्वेनाबन्तत्वाच्च यट् तु न । लाक्षणिकत्वात् अवयवशो व्युत्पादितत्वादिति स्वीकारात् ॥

**आम्ङेः ॥** आदन्तादाबन्तात्परस्य ङेरामादेशो भवति ॥ गङ्गायाम्, गङ्गयोः, गङ्गासु ॥ एवं श्रद्धामेधादुर्गादयः ॥

( सुबोधिनी )–**आम्ङेः ॥** तिसेवत्क्रियायामित्यादिनिर्देशात् सप्तम्येकवचनस्यैव ग्रहणं न तु चतुर्थ्येकवचनस्य ॥ ननु गङ्गायामित्यादौ ङेरामादेशे कृते नुडागम इति नुट् स्यादिति चेन्न । परत्वात् ङितामिति यटा बाधनात् ॥ ननु ङितां यडागमो विधीयते आमादेशस्तु न ङिदिति कथं तस्य यडिति चेन्न । आदेशः स्थानिकार्यं लभते इति स्वीकारात् । अत्र क्रियायामिति निर्देशो मानम् ॥ श्रद्धा प्रतीतिः । मेधा बुद्धिः । दुर्गा पार्वती ॥

( तत्त्वदी० )–**आम्ङे**रिति अत्र ङेरिति सप्तम्येकवचनम् न तु चतुर्थ्येकवचनं व्याख्यानात् । अत्रार्थे क्रियायामित्यादिनिर्देशोऽप्यनुकूलः ॥ ननु गङ्गायामित्यादौ नुडाम इति नुडस्तु इति चेत् न परत्वाद्यटा बाधात् । न चामि कृते ङित्त्वाभावाद्यडेव कथमिति वाच्यम् । आदेशः स्थानिकार्यं लभत इत्यभ्युपगमात् । अत्रापि क्रियायामिति निर्देशो मानम् ॥

**( अम्बार्थानां द्विस्वराणां धौ ह्रस्वः )** हे अम्ब । हे अक्क । हे अल्ल । शेषं गङ्गावत् । द्विस्वराणामिति किम् । हे अम्बाडे । हे अम्बाले । हे अम्बिके ॥

( सुबोधिनी )–अम्बार्थानां द्विस्वराणां धौ ह्रस्वः ॥ अम्बार्थानां द्विस्वराणां ह्रस्वः स्याद्धौ परे ॥ 'अम्बा माताथ बाला स्यात्' इत्यमरः ॥

( तत्त्वदी० )–अम्बार्थानामिति ॥ एतन्मूलं तु यटोऽच्चेत्यतोऽनुक्तसमुच्चयार्थचकारानुवृत्तिस्ततोऽस्यार्थस्य संग्रह इति वृद्धाः ॥

**यटोऽच्च ॥ सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽकारः ॥ सर्वस्याः । सर्वस्याः, सर्वयोः, सर्वासाम् । सर्वस्याम् । एवं विश्वादयोऽप्याबन्ताः ॥ जरा, जरसौ-जरे, जरसः-जराः ॥**

( सुबोधिनी )–यटोऽच्च ॥ आप इत्यनुवर्तते । आबन्तसर्वादेर्यडागमस्य सुट् स्यात् आपः स्थानेऽच्च ॥ सर्वादेः किम् । गङ्गायै ॥ यटः किम् । सर्वाभ्याम् ॥ जॄष्, वयोहानावित्यस्मात् 'षिद्भिदामङित्यङि ऋतोऽङ' गुण इति गुणे कृते आप् । जरा । जरायाः स्वरादौ जरसीति स्वरादिविभक्तौ जरस् औपरतः । औ इतीत्वं न नित्यत्वाज्जरस् । जरसौ । आमि तु जरसामिति जराया इति वचनसामर्थ्यात् । पक्षे हसादौ च गङ्गावत् ॥

( तत्त्वदी० )–यटोऽच्चेति ॥ यटः अत् चेति छेदः ॥ अत्राहुः । ननु यटः सर्वादेः परत्वं नास्ति आपा व्यवधानात् इति चेत्सत्यम् । वचनसामर्थ्यात्तेन व्यवधानं सह्यते । आपं विना हि यट एव दुर्लभत्वात् । अड्विधावपि सर्वादेरिति पञ्चमीति पक्षे सवर्णदीर्घे कृते एकदेशविकृतन्यायेन सर्वादेः परस्य विधीयमानो यडाप एव भवति अन्यस्यासंभवात् । षष्ठीपक्ष एकदेशविकृतन्यायेन सर्वादेरकारो भवति ऊनाधिकभावेन विकारस्य द्वैविध्यादिति । अत्रेदमवधेयम् । अत्राबन्तात्सर्वादेरिति व्याख्याने आपो व्यवधायकत्वाभावेन तद्व्यवधानशङ्का निर्मूलैव तदन्तग्रहणे चाप इत्यादावत्वाकारप्रश्लेष एव लिङ्गम् । किं च केवलस्यापः प्रत्ययत्वेन तत्परविभक्तेरभावात्तत्कार्यासंभव इति दिक् ॥

**( दिक्समासे बहुव्रीहौ सर्वदेर्वा सर्वकार्यम् ) दक्षिणपूर्वस्यै-दक्षिणपूर्वायै । उत्तरपूर्वस्याः-उत्तरपूर्वायाः । अन्तरस्यै शालायै बाह्यायै इत्यर्थः॥ अपुरीत्युक्तेर्नेह । अन्तरायै नगर्यै । द्वितीयस्यै-द्वितीयायै । तृतीयस्यै-तृतीयायै । नासिका, नासिके, नासिकाः । नासिकाम्, नासिके, नासिकायाः नस् । नसः-नासिकाः । नसा-नासिकया । नोभ्याम्-नासिकाभ्याम् । पक्षे पञ्चसु गङ्गावत् ॥ पृतनायाः पृत् । पृतः । पृता । पृद्भ्याम् ॥ निशाया निश् । निशः । निशा ॥**

( सुबोधिनी )–दिक्समासे बहुव्रीहौ सर्वादेर्वा सर्वकार्यम् ॥ गौणत्वादप्राप्ते विभाषेयम् । दिशां समासो दिक्समासस्तस्मिन् । बहुव्रीहौ सर्वादेः सर्वादिकार्यं वा वाच्यम् ॥ दक्षिणस्याः पूर्वस्या अन्तराले मध्ये या दिक् सा दक्षिणपूर्वा

तस्यै ॥ उत्तरस्याः पूर्वस्या अन्तराले या दिक् सा उत्तरपूर्वा तस्याः ॥ अन्यपदार्थोऽपि दिक्शब्दवाच्य एव ग्राह्यस्तेन नेह। योत्तरा सा पूर्वा यस्या उन्मत्तायाः सा उत्तरपूर्वा तस्यै उत्तरपूर्वायै ॥ अन्तरोऽपुरि परिधाने बहिर्योगे इत्युक्तत्वादन्तरशब्दस्य बहिरर्थे सर्वकार्यम् । अन्तरस्यै शालायै । नगरबाह्यायै इत्यर्थः । अन्तरस्य न पुनर्यथा सर्वकार्यम् । अन्तरायै । न सुट् ॥ द्वितीयातृतीययोस्तृतीयस्य ङित्सु वा सर्ववदित्युक्तत्वात् । ङेङसिङसङिषु वा सर्ववत् । शेषं गङ्गावद्रूपम् ॥ पाददन्तोति नासिकाशब्दस्य शसादौ नस् । सस्य विसर्गे हबे इत्युत्वे ओत्वे च नोभ्याम् ॥ पृतना सेना ॥

( तत्त्वदी० )—**दिक्समासे** इति ॥ दिशां दिग्वाचकानां शब्दानां समास इत्यर्थः । एतन्मूलं तु यटोऽचेत्यत्र चेत्यनुवृत्तेर्व्यवस्थित्याश्रयणम् ॥

**छशषराजादेः षः ॥ छकारान्तस्य शकारान्तस्य षकारान्तस्य राजयजसृजमृजभ्रस्जव्रश्चभ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥**

( सुबोधिनी )—छशषराजादेः षः ॥ छान्तस्य शान्तस्य षान्तस्य राजादेश्च नाम्नः षः स्यात् रसे पदान्ते च । छान्तस्य शान्तस्य षान्तस्य राजादेश्च धातोः षः स्यात् झसे पदान्ते च ॥ छान्तस्य नाम्नो यथा । तत्त्वप्राट्- तत्त्वप्राड् । भजां विणिति विण्प्रत्यये अकृतव्यूहपरिभाषया द्वित्वं न प्रवर्तेत । ततोऽसिद्धपरिभाषया न वृद्धिः । वृद्धेर्विण्निमित्तत्वेन षत्वं प्रति बहिरङ्गत्वात् ॥ धातोश्च यथा । प्रष्टा । अप्राट् ॥ शान्तस्य नाम्नो यथा । विट् । विड्भ्याम् ॥ धातोश्च यथा । वेष्टा अवेवेट् ॥ षान्तस्य नाम्नो यथा । द्विट् । द्विड्भ्याम् ॥ धातोश्च यथा । द्वेष्टा । अद्वेट् ॥ षस्य षविधानमादेशान्तरनिवृत्त्यर्थम् । ततः पुरस्तादपवादन्यायेन खसे चपा एव बाध्यो न तु व्यवहितो झबे जबा इति च । अयं च निषेधः स्यादौ न लक्ष्यानुरोधात् । तेन षट्सु इत्यादिसिद्धिः । द्विड्ढे । अत्र झबे जबाः । अद्वेट्-अद्वेडत्र वावसाने च स्यादेव । व्यवहितविधित्वात् ॥ राजादयस्तु 'राजृ, दीप्तौ । यज, देवपूजादौ । सृज, विसर्गे । मृजूष्, शुद्धौ । भ्रस्ज, पाके । ओव्रश्चू, छेदने । भ्राजृ, दीप्तौ ।' आदिशब्दात् परिव्राजशब्दो विण्णन्तो ग्राह्यः । दिशामिति सूत्रे सृगृत्विजोः पाठस्तु षत्वबाधनार्थः । असधातोरौणादिके ऋज्प्रत्यये सिद्धोऽसृजशब्दो न गृह्यते लाक्षणिकत्वात् ॥

( तत्त्वदी० )—**छशषराजादेः ष** इति ॥ यद्यपि छान्तस्य नाम्नोऽसंभवः क्विपि छस्य शविधानात् तथापि विणि तत्त्वप्रच्छशब्दस्य तत्त्वप्राडिति रूपं मन्वानैः सूत्रे छग्रहणमङ्गीकृतम् । अकृतव्यूहपरिभाषया द्वित्वाभावः । असिद्धपरिभाषया वृद्ध्यभावः । वृद्धेर्विण्निमित्तकत्वेन षत्वं प्रति बहिरङ्गत्वात् । अत्र षस्य षविधानमन्यविधिबाधनार्थम् । पुरस्तादपवादन्यायेन खसे चपा एव बाध्यः न तु व्यवहितो झबे जबा इति वावसान इति वा । अयं निषेधो न स्यादौ लक्ष्यानुरोधादिति

वृद्धाः । तेन षट्स्वित्यादिसिद्धिः । द्विड्ढि । अत्र झबे जबाः । अद्वेट्-अद्वेड् । अत्र च वावसाने च भवत्येव व्यवहितविधित्वात् ॥ राजयजसृजमृजभ्रस्जव्रश्चभ्राजपरिव्राजोऽष्टौ राजादयः । स्रज्ऋत्वि-जोस्तु दिशादिषु पाठः षत्वबाधनार्थः । असृज्शब्दस्तु न सृजेः किं तु असेरौणादिक ऋजप्रत्यये बाध्यः । लाक्षणिकत्वान्न गृहीतः । भ्राजिस्तु राजूसाहचर्यादेज्सहचरितो न गृहीतः ॥

**षो डः ॥ निड्भ्याम् । निड्भिः । निट्त्सु-निट्सु-निशासु । केचित्तु धातारव षत्वमाहुः । तन्मते तु झबे जबा इति जकारः निज्भ्याम्, निज्भिः । श्चुत्वम् । निच्सु-निशासु ॥ गोपाः सोमपावत् ॥ बुद्धिः, बुद्धी, बुद्धयः । हे बुद्धे । बुद्धिम् । बुद्धीः । बुद्ध्या ॥**

( सुबोधिनी )—षो डः ॥ षस्य नाम्नो विशेषणात्तदन्तविधिः । षान्तस्य नाम्नो-ऽन्तस्य डः स्यात् रसे पदान्ते च ॥ षष्ठीति निर्देशात् । थट्प्रत्ययेन षस्य डः । षष्ठः ॥ ननु 'वावसाने' 'झबे जबाः' खसे चपा झसानामित्यन्तैः सूत्रैष्टडयोर्लाभान्मास्त्विदं सूत्रम् । उच्यते । षाण्मातुर इत्यादि सिद्ध्यर्थमिदमावश्यकम् । यथा षाष् मातुर इति स्थिते षो ड इति डत्वे कृते त्वन्मदेकत्वे इति निर्देशाज्जबस्यापि ञमो भवतीति ॥ अष्टनो डौ वेति निर्देशाच्च द्वेष्टीत्यादावपि न डत्वम् ॥ शस्य षत्वे डत्वम् । निड्भ्याम् । सुपि डस्य खसे चपा इति चपत्वे टनात्सस्य वेति वा धुट् । धस्य चपत्वम् । धुडभावे टस्य धुट् । पक्षे च तकारस्य शसे चपस्येत्यनेन ठथौ न कुकुट्कवर्जितस्येति निषेधात् । स्यादीनां सस्येति न ष्टुत्वम् । निट्सु—निट्त्सु ॥ परिशिष्टकारादयः छशषराजादेरिति सूत्रे धातोश्च इति सूत्राद्धातोरित्येवानुवर्तयन्ति न तु नाम्न इति । तन्मते झबे जबा इत्यनेन शस्य जकारे निज्भ्यामिति । सुपि खसे चपा इति शस्य चः । स्तोश्चुभिरिति शत्वम् । 'चपाच्छः शः' इति पक्षे शस्य छत्वमपि बोध्यम् । निच्शु ॥ चोः कुरिति कुत्वं न चपस्यासिद्धत्वात् ॥ इत्यावन्ताः ॥ गोपाशब्द आकारान्तः ॥ बुद्धिः प्रायेण हरिवत् । स्त्रीत्वात्सो नः पुंस इति न नत्वम् । बुद्धीः । अस्त्रियामित्युक्तत्वाट्टानेति नात्वं न । बुद्ध्या ॥

( तत्त्वदी० )—षो ड इति ॥ ननु इदं सूत्रं किमर्थं 'झबे जबाः' 'वावसाने' इति सूत्राभ्यां कार्यसिद्धेरव्याहतत्वात् । अथ कथं षडानन इत्यादाविति चेत्सत्यं वावसान इत्यस्याप्रवृत्तेः । अत्रा-वसानत्वाभावात्कथमिति चेत् । शृणु । अवसीयत इत्यवसानपदेन न ह्यवसीयतेऽतः पदान्ततैवाव-सानम् अन्यथा षाण्मातुर इति न सिद्ध्येत् । तथा हि षाष्मातुर इति स्थिते षो ड इति डत्वे चपा-भावाद् ञमत्वाभावः । अस्मन्मते तु 'वावसाने' इत्यनेनैव रूपसिद्धिः । अथ त्वन्मदेकत्व इति निर्दे-शेन जबस्यापि ञमत्वमिति वाच्यम् । तत्र 'वावसाने' इत्यनेनैव तत्त्वे तस्य ञमत्वाद्रूपसिद्धेर्ज्ञापकानु-सरणक्लेशस्य व्यर्थत्वात् । षण्णामित्यपि ड्ण इत्यस्य षो णो नामीत्यर्थस्यैव वक्तुमुचितत्वेन षृशब्द-स्यैव प्रथमैकवचनम् ड् इति रूपत्वात् । द्वेष्टीत्यादौ त्वष्टन इति निर्देशेन 'षो डः' 'खपे चपा' इत्युभयोरपि निवृत्तिरिति सूत्रं व्यर्थम् । वस्तुतस्तु 'झबे जबाः' इति सूत्रेण विधास्यमानस्य षस्थाने डस्यैव विधानानुवादार्थमिदं सूत्रमिति ध्येयम् । अस्मिन् ग्रन्थे समानवर्गजस्यैव सावर्ण्यस्योक्तत्वेन षड-

योस्तदभावात्तुल्यास्यप्रयत्नं सवर्णमित्यस्याप्रणयनात्कथं षस्य डत्वमित्याशङ्कायां षोढ इत्यस्य विहितत्वादिति दिक् ॥ **निड्भ्यामिति** ॥ प्रथमातिक्रमे कारणाभावात्प्रथम इति न्यायेन जकार इति भावः ॥ **निचूस्विति** ॥ खसे चपा इति शस्य चर्त्वे तद्योगे स्तोः श्चुभिश्चुरिति सोः सस्य शत्वमित्यर्थः ॥

**इदुद्भ्याम् ॥ स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वाडागमो भवति ॥ बुद्ध्यै-बुद्धये । बुद्ध्याः-बुद्धेः । बुद्ध्याः-बुद्धेः । बुद्धीनाम् । स्त्रियां योः । बुद्ध्याम् । अडागमाभावे आमोऽप्यभावः । बुद्धौ । एवं मतिभूतिधृतिरुच्यादयः ॥ धेनुरज्जुदतुचञ्च्वादयोऽप्येवम् ॥**

( सुबोधिनी )-इदुद्भ्याम् ॥ इश्च उश्च इदुतौ ताभ्यामिदुद्भ्याम् । वेयुव इत्यतो वेत्यनुवर्तते । ङितामडिति च । स्त्रियां ङितां वाट् स्यात् ॥ ङितामडिति नित्ये प्राप्ते विभाषेयम् ॥ स्त्रियामिति किम् । सख्ये । पत्ये ॥ ङितामिति किम् । मतिभ्यः ॥ तपरत्वं किम् । नद्यै ॥ अट् । बुद्ध्यै । अडभावे ङितीत्येत्वम् । बुद्धये । ङौ तु अडामोः सहैव प्रवृत्त्यप्रवृत्ती । सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायात् ॥

( तत्त्वदी० )-इदुद्भ्यामिति ॥ इच उच इदुतौ ताभ्याम् । सन्नियोगशिष्टन्यायादडामोः सहैव प्रवृत्त्यप्रवृत्ती । यद्वा आमोऽभावे परत्वात् ङेरौडित्यौकारः । न च नित्यत्वादट् । ओकारे टिलोपे च इकारान्तत्वाभावात् परत्वादटा बाधादामि कृते नुडभावः । वेयुव इत्यत्र ह्रस्वानुवृत्तेर्ह्रस्वाद्वेति सिद्धेऽपि मात्रे इत्यादौ ह्रस्वत्वाविशेषेणातिव्याप्तिवारणायेदं सूत्रमिति वृद्धाः । तपरत्वमपि नित्यविकल्पयोर्व्यवस्थार्थम् । अन्यथा उभयोर्विकल्पो नित्यो वा स्यात् दीर्घस्य विकल्पः ह्रस्वस्यैव नित्य इति विपर्ययो वा स्यादिति ॥ स्त्रियामिति किम् । सख्ये ॥ ङितामिति किम् । मतिभ्याम् ॥ इदुद्भ्यामिति किम् । मात्रे ॥ तपरत्वं किम् । नद्यै ॥ इदुद्भ्यामित्यस्यैव तन्त्राश्रयणात् इदुद्भ्यां ङितामड्वा अटि सति ङेरामिति । एतेनाटि सति अटो ङिद्विभक्तित्वेन ङेरिदुदन्तात्परत्वानपायादौत्वं स्यादित्यादिकमपास्तम् अडामोः सहैव प्रवृत्तत्वात् ॥

**त्रिचतुरोः स्त्रियां तिसृचतसृवत् ॥ स्त्रियां वर्तमानयोस्त्रिचतुरशब्दयोस्तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौ । ऋकारश्च ऋकारवत् । ततोऽरारुकारा न भवन्ति । सेरा धेरर् तु भवति ॥ तिस्रः । तिस्रः । तिसृभिः । तिसृभ्यः । तिसृभ्यः ॥**

( सुबोधिनी )-त्रिचतुरोः स्त्रियां तिसृचतसृवत् ॥ त्यदादेरित्यतः स्यादावनुकृष्यते । स्त्र्यर्थवाचकयोरेतयोरेतावादेशौ स्तो विभक्तौ । र ऋकारेण तुल्यं ऋवदिति वाक्यान्तरम् । ऋ ऋवदिति पदच्छेदः । स्वोरित्यतः स्वरे इत्यनुवर्तते । स्वरे परे तिसृच-

तसृशब्दयोः ऋकार ऋकारकार्यं लभते तच्च रत्वम् । तेन पञ्चसु इति ङाविति चार स्तुरा-रित्यार् । ऋतो ङ उरित्युकारः एते विधयो न । अम्शसोरल्लोपोऽपि न । सेरेत्यात्वम् ॥ धेररित्यर् तु भवत्येव । स्वरपरत्वाभावात् ॥ तिसृ इत्यत्र क्विलादिति षत्वाभावप्रदर्शनेना-देशावयवे षत्वं नेति ज्ञापितम् । सैषादिति षत्वनिर्देशेन समात्रादेशस्य षत्वं भवतीति ज्ञापितं च ॥ विभक्तौ किम् । तिस्रः प्रिया यस्य स त्रिप्रियः इत्यत्र तु न लुकि न तन्नि-मित्तमित्युक्तत्वात् ॥ स्त्रियां किम् । त्रयः । चत्वारः ॥

( तत्त्वदी० )–**त्रिचतुरोः स्त्रियां तिसृचतसृवदिति** ॥ अत्र त्यदादेरित्यतः स्यादा-वित्यनुकृष्यते । स्त्र्यर्थवाचकत्रिचतुरन्तनाम्नस्तिसृचतसृ आदेशावित्यर्थः ॥ अनेकाक्षरत्वात्संपूर्णस्य प्राप्तौ निर्दिश्यमानस्यादेशा भवन्तीति त्रिचतुरोरेव केवलयोस्तु व्यपदेशिवद्भावात् ॥ **ऋकारश्चेति** ॥ अत्र य्वौ इत्यतः स्वरे इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन ऋकारः स्वरे ऋवद्भवतीत्यर्थः ॥ रा तुल्यम् ऋवत् । अतोऽरारुकाराणां स्वरकार्यत्वाभावः । सेरा धेरर् एतयोस्तु हसकार्यत्वात्प्रवृ-त्तिरिति भावः ॥

**( न तिसृचतस्रोर्नामि दीर्घः )** तिसृणाम् । स्त्रियामिति त्रिचतुरो-र्विशेषणान्नेह । प्रियास्त्रयः प्रियाणि त्रीणि वा यस्याः सा प्रियत्रिः । बुद्धिवत् । आमि प्रियत्रयाणाम् । यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदैतौ स्तः । प्रियास्तिस्रो यस्य स प्रियतिसा प्रियतिस्रौ प्रियतिस्रः । हे प्रियतिसः । नाम्शसोरल्लोपः । प्रियतिस्रम् । प्रियास्तिस्रो यस्य कुलस्य तत् कुलं प्रियत्रि ॥ प्रियतिसृणी, प्रियतिसॄणि । य्वॄणां नपुंसके धौ गुणो वा । हे प्रियतिसः हे प्रिय-तिसृ । टादौ स्वरे । टादाविति पुंवत् । नामिनः स्वरे । प्रियतिसृणा-प्रियतिस्रा । द्वेरत्वे सत्याप् । द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥ हसेऽपः सेर्लोपः । नदी, नद्यौ, नद्यः । हे नदि । नदीम्, नद्यौ, नदीः । नद्या । ङित्तामट् । नद्यै । नद्या, नदीनाम् । नद्याम् ॥ एवं ब्राह्मणीसखीकुमारीगौर्यादयः ॥ लक्ष्मीः । अनीबन्तत्वान्न सिलोपः । धौ ह्रस्वः । हे लक्ष्मि । शेषं नदीवत् ॥ एवमवीतन्त्रीतरीप्रभृतयः ॥ ईबन्तत्वात्सिलोपः । स्त्री ॥

( सुबोधिनी )–न तिसृचतस्रोर्नामि दीर्घः ॥ एतयोर्दीर्घो न स्यान्नामि आमि तु नुट् । तिसृणाम् । श्रुतत्वात् त्रिचतुरोरित्यस्यैव स्त्रियामिति विशेषणं नानु-वृत्तस्य नाम्नः । प्रियास्त्रयः पुरुषाः प्रियाणि त्रीणि कुलानि वा यस्याः सा प्रियत्रिः । तस्य बुद्धिवद्रूपम् । समासस्य स्त्र्यर्थाविधायकत्वेऽपि त्रिचतुरोः स्त्र्यर्थाविधायकत्वाभावात् । आमि तु 'त्रेस्त्रयङ्' इत्ययङ् । प्रियत्रयाणामिति विशेषः । यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदैतौ स्तः । यदा विग्रहे त्रिचतुर्शब्दौ स्त्र्यर्थवाचकौ मुख्यौ । तिसृचतसृरूपा-

विरित्यर्थः । यस्य यस्या वेत्यादि समासार्थरूपे लिङ्गान्तरे तु तौ गौणौ स्तः । तदा त्रिचतुरोस्तिसृ चतसृ इत्येतौ भवतः । यथा प्रियाः तिस्रो यस्य पुंसः स इत्यत्र प्रिया जस् त्रि जस् इति स्थिते अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते इत्यकृत्वैव तिस्रादेशं सिपो लुकि कृते समासाद्यविभक्तिस्तस्यां परतस्तिस्रादेशः । पुंवद्वेति प्रियाशब्दस्य पुंवद्भावः । सेरेत्यात्वम् । प्रियतिसेति । यद्यपीह जहत्स्वार्थावृत्तिपक्षे त्रिशब्दस्य निरर्थकत्वेन स्त्रीवाचित्वं दुर्लभं तथापि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या । उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिसिद्धान्तस्यैवमेव निर्वाह्यत्वात् । अजहत्स्वार्थावृत्तिपक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः । प्रियतिस्रौ, प्रियतिस्रः । प्रियतिस्रम्, प्रियतिस्रौ, प्रियतिस्रः । प्रियतिस्रा, प्रियतिसृभ्याम्, प्रियतिसृभिः । प्रियतिस्रे, । प्रियतिस्रः, प्रियतिस्रोः, प्रियतिसृणाम् । प्रियतिस्रि, प्रियतिस्रोः, प्रियतिसृषु । हे प्रियतिसः ॥ प्रियाः तिस्रो यस्य कुलस्येत्यत्र स्यमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । प्रियत्रि । लुकि न तन्निमित्तमित्यस्यानित्यत्वात्पक्षे प्रियतिसृ । एतद्रूपद्वयं कैयटेन स्वीकृतम् । इदमोऽयं पुंसीत्यनेनानित्यत्वं ज्ञापितम् । 'नामिनः स्वरे' इति नुम् । ईमावितीत्वम् । प्रियतिसृणी । नोपधाया इति दीर्घः । प्रियतिसॄणि । तृतीयादिषु वक्ष्यमाणेन टादावित्यनेन पुंवद्भावविकल्पात् पर्यायेण नुमृत्वे । प्रियतिस्रा—प्रियतिसृणा । प्रियतिस्रे—प्रियतिसृणे । प्रियतिस्रः—प्रियतिसृणः । आमि रत्वं बाधित्वापरत्वान्नुम् प्राप्तः तं च बाधित्वा विप्रतिषेधे परमिति नुट् । प्रियतिसृणाम् । ख्वृणामिति वा गुणः । हे प्रियतिसः । हे प्रियतिसृ । द्विशब्दस्य त्यदादेरित्यकारे कृते सन्निपातपरिभाषाया अनित्यत्वादावत इत्याप् ॥ इतीदन्ताः॥नदादेरितीप्। नदी। धौ ह्रस्व इतिह्रस्वे हे नदि । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति सेर्डाधोरीति डात्वे ऐ सख्युरित्यैत्वे च प्राप्ते विभक्तौ लिङ्गविशिष्टाग्रहणमिति न । सखी ॥ लक्षेर्मुट् चेति ईप्रत्ययः । लक्ष्मीः । केचिदिह कृदिकारादिति पाक्षिकमीपमिच्छन्ति । तन्मते पक्षे सिलोपः स्यादेव । वातप्रमी श्री लक्ष्मीति पक्षे ङ्यन्ताः सुसाधव इति रक्षितः । 'लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशश्च ॥ अवी रजस्वला स्त्री । तन्त्रीर्वीणा । स्तरीर्धूमः । तरीर्वेडा[१] । स्त्यायतेर्ड्रिति ड्रट्प्रत्ये यवयोर्वसे इति यलोपः । ष्ट्रित इतीप् । स्त्यायतेऽस्याः शुक्रशोणिते इति स्त्री ॥

( तत्त्वदी० )—**स्त्रियामिति त्रिचतुरोर्विशेषणा**दिति ॥ श्रुतत्वात् तयोरिति भावः नामविशेषणं नेति बोध्यम् । तद्विशेषणे तु विपरीतं स्यात् । अत्रेदं तत्त्वम् । जहत्स्वार्थैव वृत्तिरिहाभिमता लक्ष्यानुरोधात् । तेन नाम्नःस्त्रियामिति सम्यगेव । त्रिशब्दस्य पुंनपुंसकवाचित्वं तु भूतपूर्वगत्या । अजहत्स्वार्थावृत्तिरितिपक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः । न तु स्त्रियां प्रियतिसेति कथं ऋकारान्तत्वादीपः प्रवृत्तेरिति चेत्सत्यं सन्निपातपरिभाषाविरोधात् ॥ विभक्त्यानन्तर्येण प्रवृत्ते आदेशे स न विहितः ॥ विभक्तौ किम् ।

१ 'नौका' इति हेमचन्द्रः ।

तिस्रो भार्या अस्येति त्रिभार्य इत्यादौ न लुंकि न तन्निमित्तमिति प्रत्ययलक्षणनिषेधात् ॥ स्त्रियां किम् । त्रयः । तिस्र इत्यत्र षत्वं तु षः सः कृतस्येति व्याख्याने सस्य कृतत्वाभावान्न । अत एव संधिसंपदंधिश्वेतिद्विर्वचनादेशे तु प्रकृतेऽपि न षत्वम् । देवेषु एधिष्यते इत्यादौ तु चतुर्षु भविष्यतीत्यादिनिर्देशात् प्रत्ययावयवस्य षत्वं भवतीति ज्ञापकात् । व्यधिकरणषष्ठीपक्षे तु प्रत्ययावयवस्य भवत्येव । आदेशावययवस्य तु तिसृ इति निर्देशादेव न । अन्यथा तिषृ चतषृ इत्येव ब्रूयात् । सैषादिति निर्देशेन सकारमात्रादेशस्य षत्वं भवतीति ज्ञापितम् ॥ **द्वेरत्व** इति ॥ स्यादिसन्निपातकृतमपि त्यदाद्यत्वमापो निमित्तम् । सन्निपातपरिभाषाया अनित्यत्वात् ॥

**स्त्रीभ्रुवोः ॥ स्त्रीशब्दस्य भ्रूशब्दस्य चेयुवौ भवतः स्यादौ स्वरे परे ॥ स्त्रियौ स्त्रियः । हे स्त्रि ॥**

( सुबोधिनी )—**स्त्रीभ्रुवोः** ॥ अप्राप्ते विधिरयम् । यत्ववत्वयोरपवादः । एतयोरिवर्णोवर्णयोरियुवौ भवतः स्वरादौ ॥ स्यादौ किम् । स्त्र्यर्थम् भ्र्वर्थम् ॥ धौ ह्रस्व इति ह्रस्वे हे स्त्रि ॥

( तत्त्वदी० )—**स्त्रीभ्रुवो**रिति ॥ अधातुत्वात् य्वोरित्येतदप्राप्तौ विधिरयम् । यत्ववत्वयोरपवादोऽयम् ॥ स्यादौ किम् । स्त्र्यर्थम् । । भ्र्वर्थम् ॥ अत्र य्वोरित्यनुवर्तते । अनेकवर्णत्वात्सर्वादेशबाधनाय ॥

**वाम्शसि ॥ अमि शसि च परे स्त्रीशब्दस्य वा इय् भवति ॥ स्त्रियम्–स्त्रीम् । स्त्रियः–स्त्रीः । स्त्रियाम्–स्त्रीणाम् । स्त्रियमतिक्रान्तोऽतिस्त्रिः । अन्यार्थे अतिस्त्रियौ । "एओनाभावौत्वनुड्भिः पूर्वस्थैः पुंसि बाध्यते । क्लीबे नुमा च स्त्रीशब्दस्येय् त्वयेत्यवधार्यताम् ॥" अतिस्त्रयः । हे अतिस्त्रे । अतिस्त्रियम्–अतिस्त्रिम्, अतिस्त्रियौ । अतिस्त्रियः–अतिस्त्रीन् । अतिस्त्रिणा । अतिस्त्रये–अतिस्त्रेः, अतिस्त्रियोः, अतिस्त्रीणां अतिस्त्रौ, अतिस्त्रियोः अतिस्त्रिषु । "ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया । इयादेशस्तु नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥" क्लीबे तु नुम् । अतिस्त्रि, अतिस्त्रिणी, अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिये–अतिस्त्रिणे । अतिस्त्रेः–अतिस्त्रिणः । अतिस्त्रेः–अतिस्त्रिणः, अतिस्त्रियोः–अतिस्त्रिणोः, अतिस्त्रीणाम् । अतिस्त्रौ, अतिस्त्रिणि ॥ य्वृणां नपुंसके धौ गुणो वा वक्तव्यः ॥ हे अतिस्त्रे–हे अतिस्त्रि ॥ स्त्रियां तु प्रायेण पुंवत् । अतिस्त्रिः, अतिस्त्रियौ, अतिस्त्रियः । शसि अतिस्त्रीः । अतिस्त्रिया । इदुद्भ्याम । अतिस्त्रियै–अतिस्त्रये । अतिस्त्रियाः–अतिस्त्रेः ।**

**अतिस्त्रियाः–अतिस्त्रेः, अतिस्त्रियोः, अतिस्त्रीणाम–अतिस्त्रियाम्। अतिस्त्रौ ॥ श्रीः, श्रियौ, श्रियः। हे श्रीः ॥**

( सुबोधिनी )–**वाम्शसि** ॥ पूर्वेण नित्ये प्राप्ते विकल्पोऽयम्। क्वचिदेकदेशोऽनुवर्तते इति। स्त्रीभ्रुवोरित्यतः स्त्रीशब्दस्यानुवृत्तिः। ङितामडित्यट्। स्त्रियै। आमि स्त्रियास्तु नित्यामिति वक्ष्यमाणेन नुट्। स्त्रीणाम्। ङौ स्त्रियां योरित्याम्। स्त्रियाम्। गौणे तु स्त्रियमतिक्रान्तः पुमान् अतिस्त्रिः। अन्यार्थे इति ह्रस्वः ॥ **एओनेत्यादि** ॥ 'एओनाभावौत्वनुड्भिः' पुंसि स्त्रीशब्दस्य इय् बाध्यते इति त्वयाऽवधार्यतां ज्ञायताम्। एश्च ओश्च नाश्च ते एओनाः एओनानां भावः एओनाभावः एओनाभावश्च औत्वं च नुट् च ते एओनाभावौत्वनुटस्तैः। एओजसि ङितीत्येत्वौत्वे। टानास्त्रियामिति ना। ङेरौ ङिदित्यौत्वम्। नुडागम इति नुट् ॥ कीदृशैः। पूर्वस्मिन् तिष्ठन्तीति पूर्वस्थास्तैश्च ॥ पुनः क्लीबे नामिनः स्वरे इति नुगागमेन स्त्रीशब्दस्येय् बाध्यते ॥ **ओसीत्यादि** ॥ स्त्रियाः स्त्रीशब्दस्य पुंस्युपसर्जने विद्यमानस्य ओसादिषु चतुर्ष्वेव परेषु स्त्रीभ्रुवोरितीयादेशो भवति। यथा ओसि औकारप्रत्यये च परतः इयं नित्यम्। तु पुनरम्शसोः परतो विकल्पेनेय्। अन्यस्मिन् प्रत्यये इय् न। 'एओनाभावौत्वनुड्भिः' पूर्वोक्तैर्बाधितत्वादित्यर्थः ॥ क्लीबे तु नुम्। ईमावितीत्वम्। अतिस्त्रिणी। जश्शसोरिति शिः। नोपधाया इति दीर्घः। अतिस्त्रीणि। टादिस्वरे तु टादावुक्तपुंस्कमिति वक्ष्यमाणेन पुंवद्भावपक्षे हरिवद्रूपम् ॥ स्त्रियमतिक्रान्ता या स्त्री सा अतिस्त्रिः। शसि स्त्रीत्वात् सो नः पुंस इति न नत्वम्। अतिस्त्रीः। स्वरादिविभक्तौ स्त्रीभ्रुवोरितीय् ङिद्वचनेषु इदुद्भ्यामिति 'वाऽट्'। अतिस्त्रियै। ङितीत्येत्वपक्षे अतिस्त्रये। आमि नुट् अतिस्त्रीणाम्। ङौ स्त्रियां योरित्याम्। अतिस्त्रियाम्। पक्षे ङेरौङिदित्यौत्वे। अतिस्त्रौ। क्विपि वचिप्रच्छायतस्तुकटप्रुजुश्रीणामिति क्विपि दीर्घः। अनीबन्तत्वान्न सिलोपः। श्रीः। य्वोर्धातोरितीय्। श्रियौ। इयुवस्थानिवर्जितयोरित्युक्तत्वात् धाविति ह्रस्वो न। हे श्रीः।

(तत्त्वदी०)–**वाम्शसी**ति ॥ वा अम्शसीतिच्छेदः। क्वचिदेकदेशोऽप्यनुवर्तत इति स्त्रीशब्दस्यैवानुवृत्तिरित्यभिप्रेत्याह–**स्त्रीशब्दस्ये**ति ॥ वार्तिकमिदं लेखकैर्भ्रमात् सूत्ररीत्या लिखितमिति केचित्। स्थानसादृश्यात् एरिय् ओरुव् ॥ **एओनाभावेत्या**दीति ॥ एओइत्यनेन एओविधायकं सूत्रं गृह्यते ॥ तथा चै ओ जसि इति सूत्रं गृह्यते ॥ **इयादेशस्त्वि**ति ॥ स्वरादौ य इयादेशो विहितः उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्य स्यादिषु चतुर्ष्वेव न त्वन्यत्र। एओनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः ॥

**वेयुवः ॥ इयुवन्तात् ङितामड् वा स्त्रीं विना ॥ श्रियै–श्रिये। श्रियाः–श्रियः। इयुवन्तादामो नुड् वा। स्त्रियास्तु नित्यम्। श्रीणाम्–श्रियाम्। श्रियि–श्रियाम् ॥ एवं ह्रीधीप्रभृतयः ॥ एवं भूभ्रू-**

भृतयः ॥ प्रधीशब्दस्य तु लक्ष्मीशब्दवद्रूपम् । केषां चिन्मते तु पुम्वत् । प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत् । अमि शसि च । प्रध्यम् । प्रध्यः । सुष्ठु धीर्यस्याः सुष्ठु ध्यायति वेति विग्रहे सुधीः श्रीवत् । केषांचिन्मते पुम्वत् । सुष्ठु धीरिति विग्रहे तु श्रीवदेव ॥ ग्रामणीः पुम्वत् ॥ एवं खलप्वादिः ॥

( सुबोधिनी )—वेयुवः ॥ ङितामडित्यनेन नित्ये प्राप्ते विकल्पोऽयम् । स च व्यवस्थितः । तेन स्त्रियां नित्यमेवाट् । इय् च उव् चानयोः समाहारः इयुव् तस्मादियुवः । य्वोरित्यनुवर्तते । स्त्रियामियुवूस्थानिभ्यामिवर्णोवर्णाभ्यां परेषां ङितामड् वा स्यात् ॥ स्त्रियामिति किम् । सुधिये । स्वयंभुवे ॥ इयुव इति किम् । प्रध्यै । वर्षाभ्वै । इयुवन्तादामो नुड् वा । स्त्रियास्तु नित्यम् । स्त्रियामियुवूस्थानिभ्यामिवर्णोवर्णाभ्यां परस्यामो नुड् वा स्यात् । स्त्रीशब्दात्परस्यामो नित्यमेव नुट् । 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः ॥ ह्रीलर्ज्जा ॥ 'भूर्भूमिरचलानन्ता' इत्यमरः ॥ भ्रमतीति भ्रमेर्डूरिति भ्रमतेर्डूप्रत्ययः । डित्त्वाट्टिलोपः । नेत्रयोरुपरि रोमपद्धतिर्भ्रूः ॥ पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वदतां वृत्तिकारादीनां मते प्रधीशब्दस्य लक्ष्मीशब्दवद्रूपम् । अमि शसि च प्रध्यम्, प्रध्यः । इति विशेषः धातुत्वात् । य्वौ वेति स्वरे यत्वम् । लिंगान्तराऽनभिधायकत्वं नित्यस्त्रीत्वमिति वदतः कैयटस्य मते प्रकृष्टा धीर्यस्याः सा प्रकर्षेण ध्यायतीति वा विग्रहे प्रधीशब्दस्य पुंवद्रूपम् ॥ अयं मतभेदः । प्रकृष्टा धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेऽपि लक्ष्मीवत्प्रधीशब्दस्य स्याद्रूपम् । सुष्ठु धीर्यस्याः सा सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीशब्दस्य श्रीशब्दवद्रूपम् । कैयटमते तु नित्यस्त्रीत्वाभावात्पुंवद्रूपम् । सुष्ठु धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेऽपि श्रीवदेव बुद्धिवाचकधीशब्दस्य नित्यस्त्रीत्वात् ॥ ग्रामणीशब्दः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः । एवं खलप्वादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥

( तत्त्वदी० )—वेयुव इति ॥ इय् च उव् चानयोः समाहारः इयुव् तस्मात् इयुवः । अत्र य्वोरित्यनुवर्तते, तयोरभेदस्य बाधितत्वादियुवूस्थानिनो योरित्यर्थो लभ्यते । विकल्पश्चायं व्यवस्थितः । तेन स्त्रियां नित्यम् । आमो नुड्वा स्त्रियां नित्यमित्येव सर्वं लब्धम् ॥ **लक्ष्मीवदि**ति । पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वदतां वृत्तिकारादीनां मते प्रधीशब्दस्य तथात्वादिति भावः ॥ **केषांचिदि**ति ॥ लिङ्गान्तरानभिधायित्वं नित्यस्त्रीत्वमिति वदतां कैयटादीनां मते इत्यर्थः ॥ **ग्रामणी**रिति ॥ ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः ॥ एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥

**न्रण ईप्** ॥ नकारान्तादृकारान्तादणन्ताच्च स्त्रियामीप् प्रत्ययो भवति ॥ क्रोष्ट्री । क्रोष्ट्र्यौ नदीवत् ॥ वधूजम्ब्वादयो नदीवत् ॥

पुनर्भूः य्वौ वा। पुनर्भ्वौ। हे पुनर्भु। पुनर्भ्वा। पुनर्भूणाम्। पुनर्भ्वाम्। 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्।' हे वर्षाभु। वर्षाभ्वौ। स्वयंभूः पुंवत्॥

( सुबोधिनी )—त्रण ईप्॥ न् च आ च अण् च एषां समाहारो त्रण् तस्मात्त्रणः। अणिति प्रत्ययो न तु क्विबन्तोऽणिति गृह्यते प्रत्ययाप्रत्यययोरीति न्यायात्। अस्य व्याख्यानं स्त्रीप्रत्यये द्रष्टव्यम्॥ क्रोष्टुशब्दस्य पुंसि पञ्चस्वधिषु स्त्रियां वेति तृवद्भावः। क्रोष्ट्री॥ धाविति ह्रस्वः। हे पुनर्भु। स्त्रियाँ योरिति ङेराम्। पुनर्भ्वाम्। कैयटमते भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूः। वृत्तिकारमते तु हे वर्षाभु। पुनर्नवायां तु हे वर्षाभु। उक्तं च। 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः॥ भेक्यां मण्डूक्यां तथा पुनर्नवा ओषधी तस्यां वाच्यायां वर्षाभूशब्दः स्त्रीलिङ्गः। दर्दुरवाची तु पुँल्लिङ्गः। ङा वर्षाभ्वाम्॥ स्वयंभूशब्दे स्वरे परतो य्वोर्धातोरित्युव्। मतद्वयेऽपि नित्यस्त्रीत्वाभावात् ङितामडित्यादिना॥

( तत्त्वदी० )—त्रण ईप् इति न् च आ च अण् एतेषां समाहारः त्रण् तस्मात् त्रणः। अत्र मध्ये रेफभूत ऋकारो गृह्यते न रेफः व्याख्यानात् मध्यपाठस्य लाघवार्थत्वाच्च। अत्राण् प्रत्ययः न तु क्विबन्तोणिति प्रत्ययाप्रत्यययोरीति न्यायात्। तथा च तदन्तनाम गृहीतम्। प्रत्ययग्रहणे यस्मात्स विहित इति परिभाषया तदन्तं लब्धम्। नाम्नो विशेषणात्तदन्तान्तमप्यायातम्॥

( नकारान्तसंख्यायाः स्वसृतिसृचतसृननान्दृदुहितृयातृमातृभ्यश्च नेवायौ ) माता, पितृवत्॥ स्वसा, कर्तृवत्॥ शसि मातॄः स्वसॄः॥ राः पुम्वत्॥ गौः पुम्वत्॥ नौर्ग्लौवत्॥॥ इति स्वरान्ताः स्त्रीलिङ्गाः॥

( सुबोधिनी )—नकारान्तसंख्यायाः स्वसृतिसृचतसृननान्दृदुहितृयातृमातृभ्यश्चनेवायौ॥ स्वस्रादीनामपि प्राप्तो नकारान्तसंख्यायास्तूभौ प्राप्तावनेन निषिध्येते। सावसेर्ऋ इति ऋप्रत्ययः। स्वसा। स्तुरारित्यार्। स्वसारौ। शसि, स्वसॄः। स्त्रीत्वात्सो नः पुंस इति न नत्वम्॥ 'ननान्दा तु स्वसा पत्युः' इत्यमरः॥ 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' इति च॥ यद्यपि पुँल्लिङ्ग एव रैशब्दः। 'अर्थरैविभवा अपि।' इत्यमरे। भिन्नलिङ्गानां न द्वन्द्व इति परिभाषितत्वात् तथापि रात्येना मिति राः। स्त्रीत्येके॥ नुदतेर्ग्लानुदिभ्यां डाविति डौप्रत्ययः। डित्वाट्टिलोपः। नौः। 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः॥ इति सुबोधिन्यां स्वरान्ताः स्त्रीलिङ्गाः॥

( तत्त्वदी० )—नकारान्तेत्यादि॥ एतद्बीजं तु त्रण ईबित्यत्र न संधीत्यंतो न इत्यनुवर्त्य लक्ष्यानुरोधात्तस्य व्यवस्थितत्वमाश्रित्य क्वचिन्नेति व्याख्यानात्। तेन क्वचिदणन्तादपि न कामिका। यथा अणन्तान्तात् नगरकारी अणन्तादेवात्रेबिति तु न तथा सतीबन्तादेयणि तद्धितप्रकृतिभूतस्यादेः स्वरस्य

वृद्धौ नगरकारेय इत्येव स्यात् ॥ ननु परमनगरकार्या अपत्यमित्यर्थेऽणि कस्य वृद्धिरिति चेत्सत्यम्। समुदायादेरेव प्रत्ययग्रहणं रादेरन्तस्य च नियमोऽस्त्विति यत्र विधौ स्त्रीप्रत्ययो गृह्यते तत्र तदादिनियमो नास्ति स्त्रीप्रत्ययेऽनुपसर्जने तदादिनियमो नेति वचनात्। पारमनगरकारेय इति भवति ॥ अनुपसर्जने किम्। अतिनगरकारेरपत्यमित्यर्थे तदादिनियमाभावे एयण् स्यात् स मा भूत् किं त्वणेव। अतिनगरकार इति प्रियौपगवेत्यत्र नत्वमाश्रित्य नेप् गौणत्वत्। गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा। कृतायामिहटीकायां स्त्रीलिङ्गोऽगात्स्वरान्तकः ॥

इति तत्त्वदीपिकायां स्वरान्ताः स्त्रीलिङ्गाः।

---

# अथ स्वरान्ता नपुंसकलिङ्गाः।

**अतोऽम् ॥ अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोरम् भवत्यधौ कुलम् ॥**

**( सुबोधिनी )—अतोऽम् ॥ अदन्तान्नपुंसकान्नाम्नः परयोः स्यमोरम् स्यात् ॥ नपुंसकात्स्यमोर्लुगित्यस्यापवादोऽयम् ॥ अतः किम्। पयः ॥ तपरकरणं मुखसुखार्थम्। नपुंसकस्येति ह्रस्वे कृते दीर्घत्वाभावात्। केचित्तु म् इत्येव पदच्छेदं कुर्वन्ति लाघवात्। तत्र सेर्मे कृते कुलमिति सिद्धम्। द्वितीयैकवचने तु मस्यैव मे कृते अमूशसोरित्यल्लोपे सिद्धमिष्टम्। यत्त्वाहुः। अतिजरसमिति सिद्ध्यर्थममुविधानं तन्न द्वितीयैकवचने लुकोऽपवादे अतोमिति मूभावे कृते अमूशसोरित्यल्लोपं बाधित्वा जरस ततः सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिरिति ॥ हे कुलेत्यत्र धेरमि कृते अल्लोपे च समानाद्धेरिति मलोपः। यद्वातोमिति सूत्रे न्सम्महत इत्यतो मण्डूकप्लुत्याऽधावित्यनुवर्त्य षष्ठ्या विपरिणम्यते। अमादेशनिषेधाद्धेर्लोप एव विधेयः ॥**

( तत्त्वदी० )—**अतोमिति** ॥ अत्र अतः म् इति छेदः। तथा च सेर्मादेशे कुलमिति सिद्धम्। द्वितीयैकवचने मस्यैव मादेशोऽस्य अमूशसोरिति लोपे रूपसिद्धेः। न चाजरसमिति सिद्ध्यर्थं तादिति वाच्यम्। लुकोऽपवादमम्भावं बाधित्वा जरसि कृते ततः संनिपातपरिभाषाविरोधादमो लुकि सिद्धत्वादिष्टस्य सौ तु सन्निपातपरिभाषयैव जरसादेशो नेति मूल एव स्फुटीकरिष्यति। यत्त्वाहुः। अत्राकारविधानं सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थम्। तेनामि जरसादेशोऽतिजरसमिति। अत्रेदं वक्तव्यम्। अमि अनित्यं सौ नेत्यत्र विनिगमनाविरहः। इष्टासिद्धेरेव विनिगमकत्वमिति चेत् अन्यथापीष्टसिद्धेरव्याहतत्वात्। यदपि मत इति सूत्रणीये म् च अश्चेति समासे मान्तादन्तात्स्यमोर्लुगित्यर्थः स्यात्। क्लीबे पूर्वेण सिद्धेः क्लीबार्थमेतत्स्यात्। तथा च किम् इदम् शब्दयोर्दोषशङ्काव्यावृत्तये तत्तज्ज्ञापकानुसरणे लाघवाभावः। किं तु आमित्येव वक्तुमुचितमित्युक्तम्। अत्राप्यनिष्टशङ्कायां अनिर्वार्यत्वात् अश्च मश्चेति समासे क्लीबाद्यथाक्रमं स्यमोरामौ स्यातामिति। तस्मान्म इत्यत्र निष्कारणमुद्देश्यविधेयक्रमबाधस्यैव दुष्टत्वात् ॥

**ईमौ ॥ नपुंसकलिङ्गात्पर औरीकारमापद्यते ॥ कुले ॥**

( सुबोधिनी )—**ईमौ** ॥ नपुंसकान्नाम्नः पर औरीत्वं प्राप्नोति ॥ दीर्घोच्चारणं तु मधुनी इत्यादौ श्रवणार्थम् । विपरीतनिर्देशो नित्यादपि नुमः पूर्वमीविधानार्थः ॥

( तत्त्वदी० )—**ईमाविति** ॥ अत इति नानुवर्तते। दीर्घोच्चारणं तु वारिणी इत्यादौ श्रवणार्थम्। विपरीतनिर्देशो नित्यादपि नुमः पूर्वमीविधानार्थः । सत्यपि च प्रथमनुम्प्रवृत्त्यभावात् ॥

**जश्शसोः शिः ॥ नपुंसकलिङ्गात्परयोर्जश्शसोः शिर्भवति ॥**

( सुबोधिनी )—**जश्शसोः शिः** ॥ नपुंसकान्नाम्नः परयोर्जश्शसोः शिः स्यात् ॥ नपुंसकात्किम् । देवाः ॥ जसा सहचरितस्य शसो ग्रहणान्नेह । शतशो ददाति । शकारः सर्वादेशार्थः ॥

( तत्त्वदी० )—**जश्शसोः शिरिति** ॥ जसा सहचरितस्य शसो ग्रहणात् शतशो ददातीत्यादौ नातिप्रसंगः । शकारः सर्वादेशार्थो न तु श्रवणार्थः ।पराणीत्यादिनिर्देशात् । अत्राहुः । अत्रासोरित्येव वक्तुमुचितं पराणीत्यादिनिर्देशात् स्याद्यधिकाराच्च । जश्शसोः शिरित्येव ग्रहणं न तु ङसिङसोः नपुंसकात् नपुंसकस्येति निर्देशात् । अर्थस्य नियामकत्वाद्वैपरीत्यशंकापि नेति । अत्रेदमवधेयम् । लाघवार्थम् सोरिति सूत्रिते ज्ञापकानुशरणं वैपरीत्यशंकानिवृत्त्यर्थम् अर्थनियामकत्वानुसरणस्य चातिगौरवेण ततोऽस्यैव लघुत्वात् ॥

**नुमयमः ॥ नपुंसकस्य नुमागमो भवति शौ परे । यमप्रत्याहारान्तस्य न । मिदन्त्यात्स्वरात्परः ॥**

( सुबोधिनी )—**नुमयमः** ॥ अयमप्रत्याहारान्तस्य नपुंसकस्य नुम् स्यात् शौ परतः । नपुंसकादिति षष्ठ्या विपरिणम्यते शिरिति सप्तम्या च । अयम इति षष्ठी । मकाराकारस्योच्चारणार्थत्वात् । मित्त्वादन्त्यात्स्वरात्परो नुम् ॥ अयमः किम् । विमलदिवि । चत्वारि । वारि । फलि । सुगणि । ब्रह्माणि । प्रशामि ॥

( तत्त्वदी० )—**नुमयम** इति ॥ अत्र नपुंसकादित्यनुवृत्तस्यार्थवशाद्विभक्तिविपरिणामः । एवं शिरित्यपि सप्तम्या विपरिणम्यते इत्यभिप्रेत्याह—**नपुंसकस्य शाविति च** ॥ अयम इति षष्ठी अकारस्योच्चारणार्थत्वात । षष्ठ्यर्थे प्रथमा ॥ **मिदन्त्यादिति** ॥ अत्र च संध्यक्षराणीति ज्ञापकमिति भावः ॥

**नोपधायाः ॥ नान्तस्योपधाया दीर्घो भवति शौ पञ्चस्वाधिषु । नामि च ईति न । कुलानि । हे कुल । शेषं देववत् ॥ एवं मूलफलादयः ॥**

( सुबोधिनी )—**नोपधायाः** ॥ नेत्यविभक्तिको निर्देशः । नाम्नो विशेषणम् । तेन नान्तस्य नाम्न उपधाया दीर्घः स्यात् शौ परे पञ्चस्वधिषु । ईमाविति ईकारे तु न ब्रह्मणी

इति । वादीपोरित्यत ईकारस्य अनुक्तसमुच्चयार्थस्य निषेधार्थस्य वाचकस्य चानुवर्तनात् । नामीत्यस्यापकर्षणान्नाम्यपि नोपधाया दीर्घः । विदो नवानामिति निर्देशात् । भवन्नित्यादौ संयोगान्तलोपस्यासिद्धत्वान्न दीर्घः ॥

( तत्त्वदी० )—**नोपधाया** इति ॥ न उपधाया इति छेदः । नेति लुप्तषष्ठीकं तदन्तत्वं च बोध्यम् । विशेष्यस्य नाम्न उपस्थितत्वात् इत्यत आह—**नान्तस्ये**ति ॥ अत्र वादीपोरित्यत ईकार इत्यनुवर्त्य नेति वेत्यत आह—**ईति ने**ति ॥ तेन ब्रह्मणीत्यादि च सिद्धम् । अत्र नामीत्यस्यापकर्षणमित्याह ॥ **नामी**ति—यदि तु ज्ञापकसिद्धस्यासार्वत्रिकत्वात् पञ्चानामिति निर्देशाद्वा नलोपस्यापि दीर्घस्तदा नामीति नापकर्षणीयम् ॥ **हे कुले**ति ॥ अकारस्य लोपे मकारस्य समानाद्धेरिति लोपः । अधेरित्यनुवृत्तेर्वा ॥

**श्त्वन्यादेः ॥ अन्यादेः क्लीबात्परयोः स्यमोः श्तुर्भवति ॥ अन्यत् ॥**

( सुबोधिनी )—**श्त्वन्यादेः** ॥ क्लीबादन्यादेर्नाम्नः परयोः स्यमोः श्तुः स्यात् ॥ अतोऽमित्यस्यापवादः ॥ अन्य अन्यतर इतर डतर डतमेति पञ्चात्मकोऽन्यादिः । सर्वाद्यन्तर्गणः । डतरडतमौ प्रत्ययौ । ततस्तदन्ताः कतरकतमादयो ग्राह्याः ॥ क्लीबादिति किम् । अन्यः । अन्यम् ॥ शकारः सर्वादेशार्थः । उकार उच्चारणार्थः ॥

( तत्त्वदी० )—**श्त्वन्यादे**रिति ॥ श्तु अन्यादेरिति छेदः । शः सर्वादेशार्थः । उकार उच्चारणार्थः । सेरेकवर्णत्वादेव सर्वादेशः सिद्धः । द्वितीयैकवचने तु मस्य तादेशे कृते एकदेशविकृतन्यायेनामश्शसोरस्येत्यलोपे कृते सिद्धमिष्टमिति शकारो व्यर्थ इति चेत्सत्यम् । स्वविषये प्राप्तस्य सर्वस्य स्थाने तुर्यथा स्यात् । सिलोपबाधनार्थं शकार इति फलितम् । इत्याशयेनाह—अन्यादेरिति ॥

**वावसाने ॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा ॥ अन्यत्–अन्यद्, अन्ये, अन्यानि ॥**

( सुबोधिनी )—**वावसाने** ॥ अवसातिरवसानम् । षोऽन्तकर्मणि । अस्माद्भावे युट् । समाप्तिरन्त इति यावत् । पदस्यान्ते वर्तमानानां झसानां जबाश्चपाश्च वा स्युः ॥ पदस्य किम् । मरुतौ ॥ अन्ते किम् । गतः ॥ झसानां किम् । राजन् ॥

( तत्त्वदी० )—**वावसान** इति ॥ अत्रावसातिरवसानम् । षोऽन्तकर्मणि । भावे युट् । समाप्तिरन्त इति यावत् । अत्रावसानशब्दस्यान्तावयवार्थस्यावयविनि साकाङ्क्षस्य परस्येत्यवयवी संबध्यते । यदि तु 'खसे चपा झसानाम्' 'झबे जबाः' इति सूत्रद्वये पदान्त इत्यनुवर्त्य वाक्यभेदेन व्याख्यायते पदान्ते झसानां जबाश्चपा भवन्तीति तदेदं सूत्रं व्यर्थमेव ॥

**( अन्यादेर्धेर्लोपो न ) हे अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् ॥**

( सुबोधिनी )—**अन्यादेर्धेर्लोपो न** ॥ अन्यादेः परस्य धेर्लोपो न ॥ समानाद्धेरिति प्राप्तिनिषेधः ॥

**( एकतरस्य श्तुर्न )** एकतरम् । शेषं सर्ववत् ॥ **सेरमादेशे संनिपातपरिभाषया न जरस् । अजरम, अजरसी-अजरे, अजराणि ॥**

( सुबोधिनी )-एकतरस्य श्तुर्न ॥ एकतरात्परयोः स्यमोः श्तुर्न स्यात् ॥ डतरप्रत्ययान्तत्वात्प्राप्ते निषेधः । अविद्यमाना जरा यस्य तत् अन्यार्थे इति ह्रस्वे कृते अतोऽमित्यम् । अजरमित्यत्राजरशब्दमाश्रित्य सिस्थानेऽम् उत्पन्नः तेनाजरशब्दस्याम्विधिः संनिपातः । अतः सन्निपातोऽम्विधिर्जरसादेशविधानेनाजरशब्दस्य विघातको नेति । अजरमित्येकमेव रूपम् । प्रथमैकवचने अजर सि इति स्थिते परत्वाजरसि कृते नुमयम इति नुम् ॥

(तत्त्वदी० )-सेरमादेशे इति ॥ यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥

**न्सम्महतोऽधौ दीर्घः शौ च ॥** न्सन्तस्यापशब्दस्य महच्छब्दस्य च दीर्घो भवति पञ्चस्वधिषु शौ च ॥ अजरांसि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् । ततः सन्निपातपरिभाषया न लुक् । अजरसम, अजरसी-अजरे, अजरांसि-अजराणि । शेषं निर्जरवत् ॥ हृदयोदकास्यमांसानाम् हृद् उदन् आसन् मांस् । हृंदि हृदा । हृद्भ्याम् ॥ उदानि । उद्ना । उद्भ्याम ॥ आसानि । आस्ना । आसभ्याम ॥ मांसि । मांसा । मान्भ्याम् ॥

( सुबोधिनी )-न्सम्महतोऽधौ दीर्घः शौ च ॥ न्स् च अप् च महच्च एषां समाहारो न्सम्महत् तस्य न्सम्महतः । 'अमे अमा वा' इत्यनेन पस्य मादेशं कृत्वा अप्शब्दोऽत्र निर्दिश्यते । अधिकाराल्लब्धस्य नाम्नो विशेषणमिदम् । विशेषणेन च तदन्तविधीरिति तदन्तस्यापि दीर्घो भवतीत्यर्थः ॥ अधाविति छेदो न तु धाविति । पञ्चस्वित्यनुवर्तते । तद्विशेषणं चेदम् । अत्र पूर्ववत् ई इत्यनुवर्तते । चकारोऽस्त्येव । तेन स्वपी इत्यादौ ईति नेत्यर्थः ॥ अत्राम्महत्साहचर्यादधातोरेव न्स गृह्यते । तेन सुहिन् इत्यादौ न दीर्घो धातुत्वात् । न्सन्तत्वाद्दीर्घे अजरांसि । नोंपधाया इति दीर्घे अजराणि । अजर अमित्यत्र नपुंसकात्स्यमोर्लुगित्यस्यापवादमतोऽमित्यम्भावं बाधित्वा परत्वाज्जरस् । ततो यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया नामो लुक् । अजरसम्-अजरम् ॥ पादन्तेत्यनेन हृद् उदन् आसन् मांस् आदेशाः । अल्लोपः स्वरे इत्यकारलोपे उद्ना । नाम्नो नो लोपशिति नलोपे उद्भ्याम् । संयोगान्तस्येति सलोपे मान्भ्यामिति ॥

( तत्त्वदी० )-न्सम्महतोऽधौ दीर्घः शौ चेति ॥ न्स् च अप् च महच्च एतेषां समाहारः न्सम्महत् । तस्य पस्य अमे अमा वेति मः । अत्राधाविति छेदः । तच पञ्चस्वित्यनुवृत्तस्य विशे-

षणम् । तेन धिवर्जितेषु पञ्चस्वित्यर्थः । केवलस्य नृसोऽसंभवात्तदन्तस्य ग्रहः । अत्र नोपधाया इत्यत उपधामात्रमपकृष्य तच्च पूर्वमात्रोपलक्षकं पारिभाषिकार्थस्येहासंभवात् । एवं स्थिते दीर्घग्रहणस्य सामर्थ्यकल्पना नादिकमनर्थकमित्युपेक्षितं शसः पञ्चस्वनन्तर्भावात् ॥ **शाविति** ॥ स्त्रपीत्यत्र तु न दीर्घः ईयोरित्यनुवर्त्य वकारस्य निषेधार्थत्वं परिकल्पना इति व्याख्यानात् ॥

**नपुंसकस्य ह्रस्वः ॥ नपुंसकस्य ह्रस्वो भवति ॥ श्रीपम् कुलवत् ॥**

**( सुबोधिनी )—नपुंसकस्य ह्रस्वः ॥ अत्र ह्रस्वश्रुत्या स्वरस्येत्युपस्थितम् । तच्च नपुंसकस्य विशेषणम् । नाम्न इत्यनुवृत्तमधिकारात् तत्र स्वरान्तस्य नपुंसकस्य नाम्न इति सामानाधिकरण्येन व्याख्यातम् । लिङ्गस्य नामार्थत्वाभ्युपगमात् । तस्य ह्रस्वः स्यादित्यर्थः । श्रियं पाति यत् कुलं तत् श्रीपम् । अत्र ह्रस्वे कृतेऽतोऽमित्यम् ॥**

( **तत्त्वदी० )—नपुंसकस्ये**ति ॥ इह ह्रस्वश्रुत्या स्वर इत्युपस्थितम् । तच्च नाम्नो विशेषणम् । तेन स्वरान्तस्य नाम्नो नपुंसकस्येत्यर्थः। न तु नपुंसकस्य स्वरस्य ह्रस्वे इत्यर्थः । सुवाक्कुलमित्यादावतिव्याप्तेः ॥

**नपुंसकात्स्यमोर्लुक् ॥ आस्थ ॥**

**( सुबोधिनी )—नपुंसकात् स्यमोर्लुक् ॥ नपुंसकान्नाम्नः परयोः स्यमोर्लुक् स्यात् ॥ त्यदित्यादौ लुका त्यदाद्यत्वं बाध्यते । क्वचित्पूर्वेणापि परस्य बाधस्वीकारात् नित्यत्वाद्वा । कृताकृतप्रसंगित्वाल्लुङ् नित्यः त्यदाद्यत्वं विभक्तावुच्यमानं कृते लुकि विभक्त्यभावान्न ॥**

( **तत्त्वदी० )—नपुंसकात्स्यमोर्लुग**िति ॥ तत्कुलमित्यत्र तु त्यदाद्यत्वमेतेन बाध्यते । नित्यत्वाद्वा कृताकृतप्रसंगित्वात् । न च कृते त्यदाद्यत्वे लुकोऽपि प्राप्तिः अतोऽमित्यनेन बाधात् इति चेत् । लुको निमित्तस्य लक्षणान्तरेण बाधात् । न पुनस्त्यदाद्यत्वेनैव ।यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति ॥

**( य्वॄणां नपुंसके धौ गुणो वा ) हे अस्थे-हे अस्थि ॥**

**( सुबोधिनी )—य्वॄणां नपुंसके धौ गुणो वा ॥ इश्च उश्च आ च ते य्वरस्तेषां य्वॄणामिकरोकारऋकारान्तानां नपुसकानां गुणो वा स्यात् धौ ॥**

( **तत्त्वदी० )—य्वॄणाम**िति ॥ इश्च उश्च आ च य्वरस्तेषां य्वॄणाम् ॥

**नामिनः स्वरे ॥ नाम्यन्तस्य नपुंसकस्य नुमागमो भवति स्यादौ स्वरे ॥ अस्थिनी ॥**

**( सुबोधिनी )—नामिनः स्वरे ॥ नाम्यन्तस्य नपुंसकस्य नाम्नो नुम् स्यात् स्वरादौ स्यादौ ॥ नाम्यन्तस्य किम् । जगते ॥ नपुंसकस्य किम् । वातप्रम्ये ॥ स्वरादौ किम् । वारिभ्याम् ॥ स्यादौ किम् । दध्यत्र ॥**

(तत्त्वदी०)—**नामिनः स्वर** इति॥ नाम्यन्तस्य किम्। जगता। नपुंसकस्य किम्। वातप्रम्या॥ स्वरादौ किम् वारिभ्याम्॥ स्यादौ किम्। दध्यत्र॥ ननु स्वरग्रहणं किमर्थम्। वारिभ्यामित्यादौ वारणार्थमिति चेन्न। तत्र लोपशा रूपसिद्धेः। अथ सुराभ्यामित्यत्र नुमा जातेन व्यवधानादात्वं न स्यात्। नलोपेऽपि कृते विभक्तिविधौ तस्यासिद्धत्वाद्व्यवधानमेव। सुरेत्यस्य व्यवधायकत्वाद्रैशब्दस्य व्यवधायकत्वं भवत्येव। अथ तस्माद्रैशब्दान्तनाम्नो नुमा व्यवधानमेवेति वाच्यम्। तथा सति पूर्वस्य ये कृते तेऽतिर्याभ्यामिति स्यात्। मैवम्। राय आत्वं नुमा व्यवधानं प्राप्यापि भवति विभक्तिविधानदशायामानन्तर्याश्रयणात्। अथ नुड्बाधनार्थं स्वरग्रहणम् अथ नित्यत्वान्नुमेव स्यादिति चेन्न नुडर्थं यत्नान्तरस्यावश्यकत्वात् अथ नुटि कृते नुम्बाधनार्थमिति चेन्न किं ततो लोपेनेष्टसिद्धेः। अथ लोपशि नामीत्यस्याप्रसंग इति वाच्यम्। नोपधाया इत्यनेनैव निर्वाहसत्त्वात् अथ शुचीनामित्यादौ इनां शौ सावित्यनेन नियमः स्यादिति वाच्यं न प्रतिपदोक्तस्यैवेनो ग्रहणात्। उत्तरार्थमित्यपि न तथा सति तत्रैव कृतं स्यात्। तेन इह करणं ज्ञापयति। आगमजस्य लोपश्चेति। तेन भवानित्यादि सिद्धम्॥

**अच्चास्थ्नां शसादौ॥ शसादा स्वरेऽस्थ्यादीनां नुमागम इकारस्य चाकारः। अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ॥ अस्थ्ना। अस्थ्ने। अस्थ्नः, अस्थ्नोः, अस्थ्नाम्। वेङ्योः। अस्थि—अस्थनि॥ एवं दधिसक्थ्यक्षिशब्दास्तदन्तस्यापीष्टाः। प्रियास्थ्ना। अतिदध्ना। वारि, वारिणी, वारीणि। आमि नुट्। वारीणाम्। नपुंसकस्य ह्रस्वः। ग्रामणि॥**

(सुबोधिनी)—**अच्चास्थ्नां शसादौ॥** अत्राधिकृतस्य नाम्नोऽस्थ्यादिभिर्विशेषणात्तदन्तविधिः। तेनानपुंसकस्याप्यस्थ्याद्यन्तस्य नाम्नो नुम् स्यादेषामितोऽकारश्च। शस आदिर्यत्यस्येत्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन शसि न अस्थीनीति। अस्थ्नामिति बहुवचनमाद्यर्थम्। तेनास्थिदधिसक्थ्यक्षिशब्दा ग्राह्याः। अल्लोप इत्यनेनोपधाकारलोपे अस्थ्ना। वेङ्योरित्युपधाया वा लोपे अस्थ्नि—अस्थिनि। तदन्ते तु प्रियमस्थि यस्य स प्रियास्थिः। तेन प्रियास्थ्ना शुना॥ दधि अतिक्रान्तमतिदधि। तेनातिदध्ना व्यञ्जनेन॥ स्त्रियामप्यतिदध्नेत्येव। सन्निपातपरिभाषया बहिरङ्गपरिभाषया चेपोऽप्रवृत्तेः॥ खूणामिति वा गुणे हे वारि—हे वारे। टानास्त्रियामिति नाभावे वारिणा। ङयि ङितीत्येत्वे प्राप्ते ऐत्वौत्वतृवद्भावैत्वानि बाधित्वा 'नामिनः स्वरे' इति नुम्। 'परेण पूर्वबाधो वा' इत्याद्युक्तत्वात्। अतिसखिनीत्यत्र ऐ सख्युरित्यैत्वे प्राप्ते नुम्। वारिणीत्यत्र ङेरौ ङिदित्यौत्वे प्राप्ते नुम्। प्रियक्रोष्टूनि इत्यत्र क्रोष्टुशब्दस्येति तृवद्भावे प्राप्ते नुम्। वारिणे। एत्वे प्राप्ते नुम्। आमि 'प्रायशः' इत्युक्तत्वात्पूर्वेण परस्य बाधनात् नुडेव॥ ननु नुम्नुटोः को विशेषः। उच्यते। नामीति दीर्घत्वमिति। वारीणाम्। हसादौ हरिवत्॥ ग्रामं नयति यत् कुलमिति नपुंसकस्येति ह्रस्वे ग्रामणि॥

( तत्त्वदी० )–**अचास्न्थां शसादावि**ति ॥ शस् आदिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणात् टादिर्गृह्यते । अथैवं टादावित्येव कथं नोक्तमुत्तरसूत्रेऽपि तदनुवृत्त्यैव सिद्धेः । टादावित्यस्यैव वक्तुमुचितत्वादिति चेत्सत्यम् । वसोर्व उरित्युत्तरसूत्रे शसादावित्यस्योपयोगित्वात् । बहुवचनादेवास्थ्यादिग्रहः । अत्वं चेकारस्यैव नाप्यनुवृत्तेः तपरत्वविपरीतनिर्देशयोस्तु वैयर्थ्यमेव ॥ **तदन्ते**ति ॥ तस्मादित्यधिकारान्नामलाभः । तच्चास्थ्यादीनां विशेषणम् । विशेषणेन च तदन्तविधिरित्यतस्तदन्तत्वलाभः । यत्तु उत्तरार्थमनुवृत्तं नपुंसकग्रहणमस्थ्यादीनां विशेषणम् । तेन यदृच्छाशब्दानां पुँल्लिङ्गानां वारणार्थम् । दधि नाम कश्चित्तदनुकरणस्य दधिनेत्येव यथा स्यादित्युक्तं तन्न । " अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु " इत्युक्तेरेव तद्वारणसंभवात् ॥

**टादावुक्तपुंस्कं पुंवद्वा ॥ उक्तपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे परे पुंवद्वा भवति ॥ ग्रामण्या–ग्रामणिना । ग्रामणीनाम्–ग्रामण्याम् । ग्रामणिनि–ग्रामण्याम् ॥ प्रधि । प्रध्या–प्रधिना ॥ सुधि । सुधिया–सुधिना ॥ मधु । हे मधो–हे मधु ॥ एवमम्ब्वादयः ॥ सानु, सानुनी, स्नूनि–सानूनि । स्नुना–सानुना, स्नुभ्याम् ॥ प्रियक्रोष्टु, प्रियक्रोष्टुनी, प्रियक्रोष्टूनि । प्रियक्रोष्ट्रा–प्रियक्रोष्टुना । प्रियक्रोष्ट्रे–प्रियक्रोष्टवे–प्रियक्रोष्टुने । प्रियक्रोष्टुः–प्रियक्रोष्टोः–प्रियक्रोष्टुनः ॥ सुलु, सुलुनी, सुलूनि । सुल्वा–सुलुना ॥ एवं खलप्वादयः ॥ धातृ, धातृणी, धातॄणि । हे धातः–हे धातृ ॥ एवं ज्ञातृकर्त्रादयः ॥**

( सुबोधिनी )–**टादावुक्तपुंस्कं पुंवद्वा** ॥ प्रवृत्तिनिमित्तैक्ये उक्तपुंस्कं नाम्यन्तं नपुंसकं पुंवद्वा भवति टादौ स्वरे ॥ नपुंसकादित्युक्तपुंस्कमित्यनेन सह प्रथमान्तं संबध्यते । पुंवदिति पुंशब्देन तुल्यमित्यर्थः । केन प्रकारेण पुंशब्देन तुल्यं नुम्ह्रस्वयोरभावद्वारेणेति । तेन नुम्ह्रस्वयोरभावोऽतिदिश्यते । पुंनपुंसके वर्तमानस्य यस्य शब्दस्य प्रवृत्तिनिमित्तं भिद्यते तस्य टादौ स्वरे न पुंवत् । यथा । मधुशब्दो मद्ये नपुंसकः । चैत्रदैत्ययोः पुल्लिङ्गः । नात्र पुंवत् । प्रवृत्तिनिमित्तभेदात् । उक्तः पुमान् यस्मिन्नर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति उक्तपुंस्कम् । अ इकौ चेत्यप्रत्ययः । उक्तं हि । "शब्दप्रवृत्तेर्निमित्तं यत् क्लीवे तच्च पुंसि चेत् ॥ तदा भाषितपुंस्कत्वं पटुने पटवे यथा ॥ १ ॥" पुँल्लिङ्गपक्षे ग्रामणीशब्दो दीर्घान्त एव । ततो य्वौ वेति यः । नियं इत्याम् । ग्रामण्याम् । नपुंसकपक्षे ह्रस्वः । ततो 'नामिनः स्वरे' इति नुम् । पुनरुक्तं च एक एवेत्यादि । तन्नाम्न उक्तपुंस्कमाचार्येणोच्यते । तत्किम् । एक एव यः शब्दः हीति निश्चयेन त्रिषु लिङ्गेषु वर्तते यः शब्दः त्रिषु लिङ्गेषु एकमेवार्थमाख्याति कथयति । अर्थं

शब्देन प्रवृत्तिनिमित्तमुच्यते ॥ १ ॥ प्रकृष्टा धीर्यस्य तत्प्रधि । प्रधिनी इत्यत्र पूर्वेणापि नुमा परमपि यत्वं वाध्यते प्रायश इत्युक्तत्वात् । अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुंसकयोरेकमेवेति । उक्तपुंस्कत्वात्पुंवत्पक्षे य्वौ वेति यः । नपुंसकपक्षे नुम् ॥ सुष्ठु धीर्यस्य तत् सुधि । सुधिनी इत्यत्र इयं वाधित्वा प्राग्वन्नुम् । शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुन्नपुंसकयोरेकमेव उक्तपुंस्कत्वात् । पुंवत्पक्षे सुधीशब्दस्य च नेति निषेधादियू । सुधिया ॥ मधु मद्ये पुष्परसे । मधुर्वसन्ते चैत्रे चेति । पुंनपुंसकयोरेकप्रवृत्तिनिमित्तं नास्त्यत्र । किं तु मद्यत्ववसन्तत्वादिरूपं भिन्नं भिन्नमेव । उक्तपुंस्कत्वाभावान्मधुने । मधुन इत्येव । न तु मधवे मधोरित्यादि । ख्यृणामिति वा गुणे हे मधु—हेमधो ॥ सानुशब्दस्य शसादौ पाद्दन्तेत्यनेन वा स्नुरादेशः । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्युभयलिङ्गः सानुशब्दः । स्नूनि—सानूनू इत्यादि ॥ प्रियः क्रोष्टा यस्य तत् प्रियक्रोष्टु । टादौ स्वरे पुंवत्पक्षे त्वम् । प्रियक्रोष्ट्रा । टानास्त्रियामिति नाभावे प्रियक्रोष्टुना इति रूपद्वयम् । क्लीबे तु नुमेव । प्रियक्रोष्टुने । एवमन्यत्रापि । आमि नुडेव नित्यत्वात् ॥ सुष्ठु लुनाति तत्सुलु । नपुंसकस्येति ह्रस्वः । शोभनलवनकर्तृत्वं पुंनपुंसकयोरेकमेव । पुंवत्पक्षे य्वौ वेति वः । क्लीबे नुम् । सुल्वा, सुलुना ॥ दधाति तत् धातृ धारणात् कर्तृत्वं पुंनपुंसकयोरेकमेव । पुंवत्पक्षे रत्वम् । क्लीबे नुम् । ङसिङसोर्ऋतो ङ उरित्युत्वम् । धातुः । आमि नुट् । धातॄणाम् । ङाविति गुणे धातारि । ख्यृणामिति वा गुणे हे धातः ॥

( तत्त्वदी० )—**टादावुक्तपुंस्कं पुंवद्वेति** ॥ पुंशब्देन तुल्यं पुंवत् । तेन नुम्ह्रस्वयोरभावे अतिदिश्यते । अतिदेशसामर्थ्याद्ध्रस्वोऽपि । अन्यथा प्रकृतत्वान्नुम एव ग्रहणं स्यात् । तथा च स्वाश्रयनाभावादि स्यात् ॥**उक्तपुंस्क**मिति ॥ उक्तः पुमान्यस्मिन्नर्थे प्रवृत्तिनिमित्तरूपे तदुक्तपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति मत्वर्थीयाकारेण क्लीबं नामोच्यते । तेन पीलुवृक्षस्तत्फलं पीलु । पीलुने न तु पीलवे । प्रवृत्तिनिमित्तभेदात् । वृक्षे वृक्षत्वव्याप्यजातिः फले तु फलत्वव्याप्यजातिरिति भेदः । उक्तं च । "शब्दप्रवृत्तौ निमित्तं यत् क्लीबे तच्च पुंसि चेत् । तदा भाषितपुंस्कत्वं पटुने पटवे यथा" इति । उक्तः पुमान् येन शब्देनेति वाक्ये तु स्वप्रवृत्तिनिमित्तभेदेऽपि स्यात् । प्रध्येऽपि पुम्वत्त्वे य्वौ वेति यत्वम् । बह्व्यः श्रेयस्यो यस्येति तद्बहुश्रेयसी कुलम् । अत्र नपुंसकाद्ध्रस्वत्वं न इयसोर्नेति ह्रस्वमात्रनिषेधादिति श्रीपत्यादयः । अन्ये तु उपसर्जनह्रस्व एव निषिध्यते नपुंसकह्रस्वत्वं स्यादेन बहुश्रेयसि बहुश्रेयसिनीत्याहुः । प्रद्युनेति माधवमते । मतान्तरे पुंवद्वा प्रद्यवेत्यपि ॥

**( ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ )** अतिरि । अतिराया—अतिरिणा । अतिराये—अतिरिणे । अतिराभ्याम् । अतिरिणि । अतिरासु ॥ प्रद्यु । प्रद्युना—प्रद्यवा । उपगुना—उपगवा ॥ अतिनु । अतिनुना—अतिनावा ॥ इति स्वरान्ता नपुंसकलिङ्गाः ॥

( सुबोधिनी )—**ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ** ॥ आदिश्यते इत्यादेशः ह्रस्वश्चासावादेशश्च ह्रस्वादेशः । निर्धारणे सप्तमी । जातावेकवचनम् । आदिश्य-

मानेषु ह्रस्वेषु मध्ये संध्यक्षराणामिकारोकारौ भवतः ॥ एकारान्तस्योदाहरणम् । इः कामः स्मृतो येन स स्मृतेः। शोभनः स्मृतेर्यस्य तत् सुस्मृति ॥ रायमतिक्रान्तं यत् कुलं तदतिरि। 'अत्यादयः क्रान्ताद्यर्थे' इति तत्पुरुषः। अतिरिणा । इह न पुंवत्। उक्तपुंस्कत्वाभावात्। पुंसि त्वैदन्तोऽस्तीति। एवमग्रेऽपि। एकदेशविकृतस्यानन्यत्वादेस्मीत्यात्वम्। अतिराभ्याम्। आमि नुट् नामीति दीर्घः। अतिरीणाम् ॥ प्रकृष्टा द्यौर्यस्मिन् तत् प्रद्यु। प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्यात् प्रद्योशब्द उक्तपुंस्कः। स एवेदानीं ह्रस्वत्वे प्रद्युशब्दोऽपि उक्तपुंस्क एव एकदेशविकृतस्यानन्यत्वात्। अतः पुंवद्भावो भवतीत्येके वदन्ति ॥ माधवमते तु सन्ध्यक्षरान्तेषु क्लीबेषु पुंवद्भावो नास्तीति बोध्यम् ॥ नावमतिक्रान्तं यत्तदतिनु ॥ ॥ इति सुबोधिन्यां स्वरान्ता नपुंसकलिङ्गाः ॥

( तत्त्वदी० )—लोकेशकरसंज्ञेन श्रीक्षेमंकरसूनुना ॥ विहितायां हि टीकायां क्लीबलिङ्गोऽगमच्छुभः ॥

इति तत्त्वदीपिकायां स्वरान्तनपुंसकलिङ्गाः ॥

---

# अथ हसान्ताः पुँल्लिङ्गाः ।

**अनडुहश्च ॥ पुंसि पञ्चसु शौ चानडुह आगागमः ईपि वा ॥**

( सुबोधिनी )—अनडुहश्च॥ अनडुहशब्दस्यामागमः स्यात्। अत्र चतुराम् शौ चेत्यत आम् शाविति पदद्वयमनुवृत्तं पञ्चस्विति च। अत्र हि चकारोऽनुक्तसमुच्चयार्थः। तेन ईकारे नाम्। ईप्याम् वा ईकारे बह्वनडुही। ईपि अनडुही—अनड्वाही। पत्न्यादित्वान्नदादित्वादीप्। तदन्तविधिरत्र। प्रियानड्वान् ॥

( तत्त्वदी० )—अनडुहश्चेति ॥ अत्र चतुराम् शौ चेत्यत आम् शौ इति पदद्वयमनुवर्तते। अत्राहुः । अनडुहश्चेत्यत्रादेरनुवृत्त्यैव लाभात्तदर्थो न चकारः किं तु योगविभागार्थः । तथा चेति सूत्रेऽनडुह इति साविति नुमिति च पदद्वयमनुवर्त्यानडुहः सौ नुमिति व्याख्येयम्। अत्रार्थे चतुराम् शौ चेत्यतः पृथग्योगकरणं लिङ्गम्। एवं चानडुह इति सूत्रेऽनुक्तसमुच्चयार्थो भिन्नश्चकारोऽनुवर्त्य इति। तत्रेदमवधेयम्। योगविभागानुवृत्तिक्लेशगौरवतः सूत्रस्यैव लघुत्वात्। पुनस्तत्र चकारान्तरस्याश्रयणे आश्रितत्यागे वातिगौरवमित्यालोच्योपेक्षितम्। यदप्युक्तम्। नन्वल्पविषयेन नुमा बहुविषय आम् बाध्यतां तथा नुमेवेति चेत्सत्यम् अच्योरादित्यतो मण्डूकप्लुत्या आदित्यनुवृत्तेरवर्णात्परतो नुम्विधानात् कथमनुवृत्तावप्याममोः कृतयोरेव नुम् प्रथमाकारादेव किमिति स्यादिति चेच्छृणु एवं सति मिदन्त्यादिति परिभाषा बाध्येत। यथा न बाध्येतानुवृत्तिश्च सार्थिका भवति तथा कर्तव्यम्। यदि वाऽऽममोरकृतयोर्नुम् स्यात् नेदमुभयमनुगृहीतं स्यादिति कृतयोरेव तयोर्नुम् भविष्यतीति। अत्रापीदं विचार्यम्। प्रथमतो नुम्यमि कृते न कापि क्षतिः । आम्करणं उकारस्यैवान्त्यस्वरत्वात्ततः परस्यैवामो विधानात्। असंभवत्वाबाधाच्च बाध्यबाधकभावाभावः ॥

**सावनडुहः ॥ अनडुहः सौ नुम् ॥**

( सुबोधिनी )—सावनडुहः ॥ अस्य नुम् स्यात् सौ परे ॥ नुमयम इत्यतो नुमित्यनुवृत्तमप्ययोरान्नित्यमिति सूत्रान्मण्डूकप्लुत्या आदित्यनुवर्तते । तेनावर्णात्परोऽयं नुम् । अतो विशेषविहितेनापि नुमाम् न बाध्यते अमा च नुम् न बाध्यते ॥

**संयोगान्तस्य लोपः ॥ स्यादौ रसे पदान्ते च ॥**

( सुबोधिनी )—संयोगान्तस्य लोपः ॥ संयोगेति अन्तस्येति च छेदः । अनुकरणाद्विभक्तेर्वैकल्पिकत्वादविभक्तिको निर्देशः । नाम्न इति विशेष्यम् । संयोगेति विशेषणम् । विशेषणेन च तदन्तविधिः । तेन संयोगान्तस्य नाम्नोऽन्तस्य लोपो भवति स्यादौ रसे च । पुनः पदान्ते वर्तमानो नाम्नो धातोश्च यः संयोगस्तस्यान्तस्य लोप इति ॥ पदान्ते यथायमर्थः । अचोस्कुन् ॥ संयोगान्तस्येति किम् । रुत् । संयोगस्य नाम्नो विशेषणत्वादादेर्न त्वद ॥ अनः शकटं वहतीति विग्रहे अनसि वहेः क्विप् । अनसो डश्चेति क्विप् । यजामिति संप्रसारणम् । अनडुह सि इति स्थिते । आम् नुमौ । परत्वात् संयोगान्तलोपे कृते सिलोपः । अनड्वान् । 'वसां रसे' इत्यनेननुमो दत्वं न नुम्विधिसामर्थ्यात् ॥

( तत्त्वदी० )—संयोगान्तस्य लोप इति ॥ संयोग अन्तस्येति छेदः । अनुकरणाद्विभक्तेर्वैकल्पिकत्वादविभक्तिको निर्देशः । तच्च नाम्नो विशेषणम् । तस्मात्तदन्तलाभः । तेन संयोगान्तस्य नाम्नोऽन्त्यस्य लोपो रसे पदान्ते वर्त्तमानो यः संयोग इत्येव न तु नाम्नस्तेन धातोः संयोगान्तस्यापि पदान्ते भवति नाम्नो विशेषणत्वादादेर्न स्तः । संयोगावन्ते यस्येति विग्रहलाभार्थमन्तग्रहणम् । अन्यथा सोमसुत्स्थानेत्यत्रापि लोपः प्रसज्ज्येत इति तु प्रत्येकं संयोगसञ्ज्ञेति पक्षे समुदायसंज्ञा । पक्षे तु संयोगोऽन्तो यस्येति विग्रहेऽपि व्यर्थम् । विशेषणत्वेनैव तदन्तलभात् । लोपशोऽनुवृत्तावपि लोपग्रहणं सन्नच्युत इत्यादौ द्वित्वार्थम् । अन्यथा लोपशि पुनर्न संधिरिति निषेधः प्रवर्त्तेत ॥

**( सभिन्नस्य रात्र ) अनड्वान्, अनड्वाहौ, अनड्वाहः ॥**

( सुबोधिनी )—सभिन्नस्य रात्र ॥ रात्परस्य सस्यैव लोपः स्यान्नान्यस्य वर्णस्य ॥ चतुरो वारान् इति चतुः । सुप्रत्ययस्य लोपोऽत्र । सस्येति किम् ऊर्क् । अमार्ट् ॥

( तत्त्वदी० )—सभिन्नस्येति ॥ रात्परस्य सकारमात्रस्य लोपो न तु सभिन्नवर्णान्तरस्येत्यर्थः । तेन ऊर्क् इत्यादि सिद्धम् ॥

**धावम् ॥ चतुरनडुहोर्धौ वमागमो भवति आम्न । हे अनड्वन् ॥**

( सुबोधिनी )—धावम् ॥ चतुरनडुहोरमागमः स्याद्धौ परे । आमोऽपवादः । चतुरशब्दात्तु गौणे । हे प्रियचत्वः ॥

( तत्त्वदी० )—धावमिति ॥ चतुरनडुहोरनुवृत्तेराह—चतुरेत्यादि ॥ चतुरस्तु गौणत्वे हे प्रियचत्वः। नुम्विधिसामर्थ्याद्वित्वं न ॥

**वसां रसे ॥ वसुस्रंसुध्वंसुभ्रंसुअनडुहां दत्वं भवति रसे पदान्ते च ॥ अनडुद्भ्याम्। अनडुत्सु ॥**

( सुबोधिनी )—वसां रसे ॥ बहुवचनमाद्यर्थम्। वसु चात्र प्रत्ययो गृह्यते न धातुर्व्याख्यानात्। उत्सृष्टानुबन्धत्वेन वसुक्वसोः सामान्यग्रहणम्। सौ स इत्यतः स इत्यनुवर्त्य षष्ठ्यन्तं व्याख्येयम्। तच्च वसोर्विशेषणं न स्रंसादेरव्यभिचारात्। नाप्यनडुहोऽसंभवात्। सान्तवस्वन्तस्य स्रंसादेश्च नाम्नोऽनडुहशब्दस्य दः स्यात् ॥ सान्तेति किम्। विद्वान् ॥ नाम्न इति किम्। स्रस्तम्। ध्वस्तम्। खसे चपा इति तः। अनडुत्सु ॥

( तत्त्वदी० )—वसां रस इति ॥ बहुवचनमाद्यर्थं लक्ष्यदर्शनात्। ग्रन्थान्तरसंवादाच्च वसुरत्र प्रत्यय एव न धातुः साहचर्यस्य सर्वत्र नियामकत्वात्। सौ स इत्यतः स इत्यनुवर्त्य तच्च वसोर्विशेषणं कार्यं नान्येषामभिचारासंभवात् तेन सान्तवस्वन्तस्येति व्याख्येयमतो विद्वानित्यत्र न दत्वम्। नाम्नोऽधिकारात्स्रस्तमित्यादौ न स्मीत्यधिकारेऽपि स्यादिनिरासाय रसग्रहणम्। तेन विद्वद्रूप इत्यादिसिद्धिः। रत्वबाधनार्थमनडुहो रस इत्येव न सूत्रितं विद्वद्भ्यामित्यत्र झबे जबा इत्यनेन स्थानसाम्याद्दत्वम्। विद्वत्स्वित्यत्र खसे चपा इति तः। स्रादित्यत्र वावसाने इति तदौ। एवं स्थितेऽपि सकारे रूपासिद्धेर्वसादिग्रहणम्। तत्र परत्वात्प्रतिपदोक्तत्वाच्च स्रोर्विसर्ग इत्यनेन बाधनात्। अन्यथा विसर्जनीयस्य स इति सूत्रवैयर्थ्यप्रसंगात् ॥ वसां किम्। हरिभ्याम् ॥ रसे किम्। स्रसौ ॥ पदान्ते किम्। विदुष्मान् ॥

**दादेर्घः ॥ आद्योच्चारणे दादेर्हकारस्य घत्वं भवति धातोर्झसे नाम्नश्च रसे पदान्ते च ॥**

( सुबोधिनी )—दादेर्घः ॥ द् आदिर्यस्य स दादिस्तस्य दादेः। अत्र धातुग्रहणद्वयमनुवर्त्य तत्रैकमाद्योच्चारणप्रतिपत्त्यर्थम्। आद्योच्चारणे दादेर्धातोर्हस्य घः स्यात् झसे पदान्ते च। दादेर्नाम्नश्च हस्य घो रसे पदान्ते च ॥ ढस्यापवादोऽयम् ॥ धातोर्यथा। दोग्धि। अधोक् ॥ आद्योच्चारणे किम्। अधोगित्यत्र यथा स्यात् ॥ दामलिहमात्मानमिच्छतीति दामलिह्यति। नाम्नो य इति यप्रत्ययः। ततः क्विपि दामलिट्। अत्र मा भूदिति ॥

( तत्त्वदी० )—दादेर्घ इति ॥ द् आदिर्यस्य स दादिस्तस्य धातोर्झस इति। तेन द्रुह्यादित्यत्र न॥ननु अधोक्।दामलिहमिच्छन्दामलिडित्यत्राव्याप्त्यतिव्याप्ती इति चेत्सत्यम्। धातुग्रहणद्वयमत्रानुवर्तते। एकमाद्युच्चारणलाभार्थम्। तेनाद्युच्चारणे दादित्वादधोगित्यत्र घत्वम्। तत्र त्वभावान्न घत्वम्। कखगानामन्यतमस्तु दोग्ध्रीत्यसिद्धेर्न कृतः ॥

**आदिजबानां झभान्तस्य झभाश्च स्ध्वोः ॥ धातोर्झभान्तस्यावयवस्यादौ वर्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे ना-**

**म्नश्च रसे पदान्ते च ॥ धुक-धुग्, दुहौ, दुहः । धुग्भ्याम् । धुक्षु ॥ आद्योच्चारणे किम् । दाम लिह्यतीति दामलिट्-दामलिड् । दामलिड्भ्याम् । दामलिट्सु-दामलिट्त्सु ॥ अवयवस्य किम् । गर्दभमाचष्टे गर्दभयतीति गर्धप् । गर्दभौ । गर्दभ्याम् । गर्धप्सु ॥**

(सुबोधिनी)-**आदिजबानां झभान्तस्य झभाश्च स्ध्वोः** ॥ मण्डूकप्लुत्या भिदपामित्यतो भि इत्यनुवर्तते । पदान्ते इति च । आदिशब्दस्यावयववाचित्वादवयव्याकाङ्क्षायां धातोर्नाम्नश्चेत्याक्षिप्यते । झभान्तस्येति न धातोर्विशेषणं किं त्ववयवस्य । झभान्तस्य धातोरवयवस्यादौ स्थिता जबा झभाः स्युः सादौ भादौ पदान्ते च । ध्वेति ध्वेध्वमोः सामान्यग्रहणम् । धातोर्यथा । धक्ष्यते । धुग्ध्वे । अधुग्ध्वम् । अधोक् ॥ जबानामिति किम् । योत्स्यते ॥ झभान्तस्येति किम् । दास्यति । जबानामित्यत्र दबानां झभा इत्यत्र धभा इत्यपेक्षितमाद्ययोरदर्शनात् ॥ अवयवस्येति किम् । गर्दभमाचष्टे इति गर्दभयति । नाम्नो णिर्डिदिति णिप्रत्ययः । ततः क्विप्णिलोपौ । गर्दप् । अवयवग्रहणाभावे गकारस्थानेऽत्र घः स्यादित्यर्थः ॥ दुह, प्रपूरणे । क्विप् । दादेर्घः । इति घत्वे झभान्तत्वाद् घः । वावसान इति जवचपौ । धुग्-धुक् । झबे जवा इति जवत्वम् धुग्भ्याम् । धत्वचपत्वे धुक्षु ॥

( तत्वदी० )-**आदिजबानां झभान्तस्य झभाश्च स्ध्वोरिति** ॥ अत्र धातोर्झसे इति निवृत्तं स्ध्वोर्ग्रहणसामर्थ्यात् । झभान्तस्येति न धातोर्विशेषणं किं त्ववयवस्य । तेन गर्दभमाचक्षाणः गर्धबिति सिद्धम् ॥ **आदिजबानामिति** ॥ आदयो जबा आदेः परा आदावुपदेशावस्थायां जबा इति पक्षत्रयमपि न गर्द्धबित्यत्र गकारेतिव्याप्तेर्न प्रथमः धुगित्यत्राव्याप्तेर्न द्वितीयः पुनर्गर्द्धबित्यत्राव्याप्तेर्न तृतीयः किं तु आदौ धातुसंज्ञाप्रवृत्तिकाले इति स्थिते दामलिडित्यत्र दकारे गर्द्धबित्यत्र गकारे चातिव्याप्तिरिति चेन्न अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषाश्रयणात् भिदपामित्यतो मण्डूकप्लुत्या भीत्यनुवृत्तेराह-**भकारे चेति** ॥

**हो ढः ॥ हकारस्य ढत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ लिट्-लिड्, लिहौ, लिहः । लिट्सु-लिट्त्सु ॥**

( सुबोधिनी )-**हो ढः** ॥ धातोर्हस्य ढः स्यात् झसे पदान्ते च ॥ नाम्नो हस्य ढः स्याद्रसे पदान्ते च । धातोर्यथा । लेक्ष्यति । अलेट् । 'लिह् आस्वादने' क्विप् । सौ परत्वात् ढत्वे सिलोपः । जवत्वचपत्वे । लिट्-लिड् । सुपि ढस्य चपत्वे कृते टनात्सस्य वेति धुट् । धुटः चपत्वेन ततः शसे चपस्य द्वितीयो वेति तस्य थो न । कुकुट्कवर्जितस्येत्युक्तत्वात् । ष्टुत्वं तु तकारस्य न शङ्कचमेव स्यादीनां सुपित्सस्य नेति निषेधात् । लिट्त्सु । धुडभावेऽपि शसे चपस्येति टस्य ठो न पूर्ववत् । ष्टुत्वं तु स्यादीनामिति निषिद्धमेव ॥

( तत्त्वदी० )–हो ढ इति ॥ टठडामन्यतमस्तु लेढीत्याद्यसिद्धेर्न कृतः । तथा सति झभान्तत्वाभावात्तथोर्द्ध इत्यस्याप्रवृत्तेः ॥

**द्रुहादेर्वा ॥ द्रुहमुहस्नुहस्निहां वा घत्वम् ॥ ध्रुक्–ध्रुग्–ध्रुट्–ध्रुड्, द्रुहौ, द्रुहः । ध्रुग्भ्याम्–ध्रुड्भ्याम्–ध्रुक्षु–ध्रुट्सु–ध्रुट्त्सु ॥ एवं मुहस्नुहस्निहः ॥ विश्ववाट्–विश्ववाड् ॥**

( सुबोधिनी )–द्रुहादेर्वा ॥ द्रुहमुहस्नुहस्निहां घत्वं वा ॥ द्रुह, जिघांसायाम् । मुह, वैचित्ये । ष्णुह, उद्गिरणे । ष्णिह, प्रीतौ । द्रुहेर्दादित्वान्नित्यं प्राप्ते अन्येषामप्राप्ते विभाषेयम् । द्रुहादीनां हस्य घः स्यात् धातोर्झसे पदान्ते च । नाम्नो रसे पदान्ते च । पक्षे ढः । धातोर्यथा । द्रोढा–द्रोग्धा । अदोध्रोट्–अदोध्रोक् ॥ विश्वं वहतीति विग्रहे भजां विणिति विण् प्रत्ययः । विश्वं वाहयतीति ञ्यन्तात् तु वा विण् प्रत्ययो बोध्यः ॥

( तत्त्वदी० )–द्रुहादेर्वेति ॥ ननु द्रुहादेर्गणनिर्दिष्टत्वादस्य दितपेति निषेधाद्यङि लुकि दोध्रुगित्यत्र न प्रवृत्तिरिति चेन्न । तस्यानित्यत्वाभ्युपगमात् ॥

**वाहो वौ शसादौ स्वरे ॥ वाहो वकारस्यौ भवति शसादौ स्वरे परे तद्धितयस्वरयोरीपीकारे च ॥ विश्वौहः । विश्वौहा । विश्ववाड्भ्याम । विश्ववाट्सु–विश्ववाट्त्सु ॥**

( सुबोधिनी )–वाहो वौ शसादौ स्वरे ॥ वकाराकारविशिष्टस्य वाशब्दस्येत्यर्थः । टनादिति धुट्चपत्वे । विश्वावाट्त्सु ॥

( तत्त्वदी० )–वाहो वौ शसादौ स्वरे इति ॥ वाहो वा औ इति च्छेदः । वाहो वा गृहीतोऽत्र न तु निपातो व्याख्यानात् इत्यभिप्रेत्याह ॥ **वा शब्दस्येति** ॥ वार्य्यूह इत्यादिप्रयोगास्तूहतेः क्विपि वहस्त्वनकारान्ते उपपदे विणोऽसंभवः फणीन्द्रेणांगीकृतत्वात् ॥

**सहेः साढि ॥ साढिरूपे सति सहेः सस्य षो भवति ॥ तुराषाट्–तुराषाड्, तुरासाहौ, तुरासाहः । तुराषाड्भ्याम् । तुराषाट्सु ॥ इति हान्ताः ॥**

( सुबोधिनी )–सहेः साढि ॥ षत्वमनुवर्तते । तुरं दैत्यवेगं सहते इति विग्रहे विण् । तुरं त्वरितं साहयत्यभिभवत्यरीनिति विग्रहे तु ञ्यन्तात् क्विप् । सहादित्वात् पूर्वपदस्य दीर्घः । तुराषाट् ॥

( तत्त्वदी० )–सहेः साढीति ॥ सहेरिति किम् । सह ढेन वर्तत इति सढः यस्य नाम्नि ढशब्दोऽस्ति यथा षण्ढ इति सढस्यापत्यं साढिरित्यत्र मा भूत् ॥

**दिव औ ॥ दिवो नाम्न औकारादेशो भवति सौ परे ॥ सुद्यौः, सुदिवौ ॥**

( सुबोधिनी )—दिव औ ॥ समानाद्धेर्लोप इत्यतो मण्डूकप्लुत्या अधातोरित्यनुवर्तते। तेन धातोर्न भवति । अक्षैर्दीव्यतीति अक्षद्यूरिति क्विबन्तादिवेर्डिवीति डिव् प्रत्ययः । वर्णमात्रविधित्वेन स्थानिवत्त्वाभावाद्धसेप इति सिलोपो न । सुष्ठु द्यौर्यस्मिन् स सुद्यौः ॥

( तत्त्वदी० )—दिव औ ॥ निरनुबन्धकग्रहणे सानुबन्धकस्य ग्रहणं नेति परिभाषया दिवु क्रीडादावित्यस्य धातोर्न ग्रहणम् । तेनाक्षद्यूरित्यादौ परत्वाद्वस्यौत्वे एकदेशविकृतन्यायेन प्राप्तमप्यौत्वं न ॥

ऊ रसे ॥ दिव उदादेशो भवति रसे पदान्ते च ॥ सुद्युभ्याम् । सुद्युषु ॥ इति वान्ताः ॥ चतुर्शब्दो नित्यं बहुवचनान्तः ॥

( सुबोधिनी )—ऊ रसे ॥ अधिकृतस्य नाम्नो दिवशब्देन विशेषणात्तदन्तविधिः । दिवो नाम्नः उः स्यात् रसे पदान्ते च । तदन्ते विमलद्यु ॥ इति वान्ताः ॥

( तत्त्वदी० )—ऊ रसे ॥ उः रसे इति छेदः । पदान्ते चेति ष्णोर्णे इति सूत्रादन्त इत्यनुवृत्तमत्र पदान्तपरतया व्याख्येयमित्याशयः । विपरीतनिर्देशस्तु प्रयोजनान्तरार्थः । तत्त्वग्रे स्फुटीकरिष्यते। वाम्या इति सूत्रं तु व्यर्थमेव द्योशब्दादेव द्यामिति सिद्धेः ॥

चतुराम्शौ च ॥ चतुर्शब्दस्यामागमो भवति पञ्चसु शौ च न त्वीति ॥ चत्वारः । चतुरः । चतुर्भिः ॥

( सुबोधिनी )—चतुराम्शौ च ॥ नाम्नश्चतुर्शब्देन विशेषणात्तदन्तविधिः । चकारेण पञ्चस्विति संबध्यते । चतुरित्यविभक्तिको निर्देशः । तदन्ते प्रियचत्वाः । चतेरुरित्युर्प्रत्यये चतुर्शब्दः । ईमावितीकारे तु न ॥

( तत्त्वदी० )—चतुराम्शौ चेति ॥ चतुः आम् शौ चेति छेदः ॥ चतुरिति लुप्तषष्ठीकं पदम्। चकारेण पञ्चस्विति लब्धम् । नाम्नश्चतुरो विशेषणात्तदन्तलाभः ॥

रः संख्यायाः ॥ रेफान्तसंख्यायाः परस्यामो नुडागमो भवति ॥ णत्वं द्वित्वं च । चतुर्णाम् । चतुर्षु ॥ प्रियाश्चत्वारः प्रियाणि वा चत्वारि यस्यासौ प्रियचत्वाः । हे प्रियचत्वः । प्रियचत्वारौ, प्रियचत्वारः-प्रियचतुरः । गौणत्वे नुट् न । स्वार्थावच्छिन्नपरार्थावलम्बनं गौणत्वम् । प्रियचतुराम् । कमलं कमलां वाऽऽचक्षाणः कमल्, कमलौ, कमलः । फल्, फलौ । फल्भ्याम् ॥ इति लान्ताः ॥

( सुबोधिनी )—रः संख्यायाः ॥ नाम्नो रकारेण विशेषणात्तदन्तविधिस्तेनान्तग्रहणम् । णत्वम् । रहाद्यपो द्विरिति द्वित्वम् । चतुर्णाम् । यक् चतुर्ष्विति सूत्रे रकारपठनान्न विसर्गः । प्रियाश्चत्वारः पुरुषाः प्रियाणि चत्वारि कुलानि वा यस्याः सा स्त्री प्रियचत्वाः । तदन्तत्वादाम् । हे प्रियचत्व इत्यत्र धावमित्यम् । गौणत्वे तु नुट् न । गौणत्वे रेफान्तसंख्याया आमो नुड् न । अन्यपदार्थवृत्तित्वेन संख्याभिधायित्वाभावात् । प्रधान्ये भवत्येव । परमचतुर्णाम् ॥ इतिरान्ताः ॥ 'कमलं जलपद्मयोः' इति

विश्वः ॥ 'कमला श्रीर्हरिप्रिया' इत्यमरः ॥ कमलं कमलां वाऽऽचक्षाण इति नाम्नो ञिर्डिदिति ञिप्रत्ययः । ञ्यन्तात् क्विपि ञेरिति ञिलोपः । कमल् । षत्वं कमल्षु ॥ फलमाचक्षाण इति फल् । तोयमाचक्षाण इत्यादौ तु यवयोर्वसे इति यलोपे तो इति स्यादतो यान्तो नोक्तः ॥ इति लान्ताः ॥

( तत्त्वदी० )—रः संख्यायाः इति ॥ र इति किम् । त्रिंशतम् 'विंशत्याद्याः सदैकत्वे' इति नियमेऽपि संख्यार्थे द्विबहुत्वे स्त इत्यनेन संख्याया द्विबहुत्वयोरपि संभवात् ॥ संख्याया इति किम् । वाराम् । रेफान्तसंख्याया विहितस्यामो नुडिति व्याख्यानमित्याशयेनाह—गौणत्व इति ॥ गौणत्वे वान्यपदार्थवृत्तित्वेन संख्याभिधायित्वाभावात् ड्णः संख्याया इत्येकयोगस्तु न कृतो रेफान्ततोऽपि जश्शसोर्लुक् स्यात् । यदि त्वेकदेशोऽप्यनुवर्तते इत्याश्रीयते तदैकयोगोऽपि साधुरेव । कमला लक्ष्मीः ॥

**मो नो धातोः ॥** मान्तस्य धातोर्मस्य नो भवति झसे पदान्ते च ॥

( सुबोधिनी )—मो नो धातोः ॥ मान्तस्य धातोर्नः स्यात् झसे पदान्ते च ॥

( तत्त्वदी० )—मो नो धातोरिति ॥ नस्य लोपो नेति । नाम्नो नो लोपशधावित्यत्र नाम्न इत्यस्यानुवृत्तावपि पुनर्नामग्रहणान्नामसंज्ञाप्रवृत्तिकालेनान्तार्थमित्याशयः ॥

**( वमयोश्च )** प्रशान् । प्रशामौ । प्रशामः । प्रशान्भ्याम् । प्रशान्सु ॥ कः, कौ, के । शेषं सर्ववत् ॥

( सुबोधिनी )—वमयोश्च ॥ मान्तस्य धातोर्नकारादेशः स्यात् वकारे मकारे च परे ॥ षष्ठ्या निर्दिष्टत्वादन्त्यस्यादेशः । सिप्रत्यये परत्वान्नकारे कृते सिलोपः । प्रशानित्यत्र नाम्नो नो लोपशिति नलोपो न नत्वस्यासिद्धत्वात् । यद्वा नाम्नो न इत सूत्रे पूर्वमेवोपपादितत्वात् । शमु, उपशमे । क्विप् । ञमान्तस्येति दीर्घः । प्रशाम्यतीति प्रशान् । वमयोस्तु चक्षण्वहे, चक्षण्महे, । पदान्ते च । अशंशन् । अचंस्कन् ॥ पदान्ते किम् । प्रशामौ । धात्वधिकारादेव धातोरिति लभ्यमाने पुनर्धातुग्रहणान्नामधातोर्न । अयामिवाचरन् इदाम् । प्रशान्भ्यामित्यादौ नश्चेति नकारस्यानुस्वारे विशेषाभावात्सामर्थ्याच्च नानुस्वारः ॥ कायतेर्डिमिति डिम्प्रत्यये निष्पन्नः किम्शब्दः । त्यदादेरित्यत्वे कृते सर्वशब्दवद्रूपम् ॥

**इदमोऽयम्पुंसि ॥** इदमः पुंसि सावयं भवति ॥ अयम् ॥

( सुबोधिनी )—इदमोऽयम्पुसि ॥ सावित्यनुवर्तते ॥ सौ स इत्यतः सिलोपे अयम् । पुंसि किम् । इदम् ॥ नन्वत्र लुकि न तन्निमित्तमिति परिभाषया न भविष्यति । सत्यम् । तस्या अनित्यत्वज्ञापनार्थं पुंसीति । तेन प्रियतिसृ इत्यादि सिद्ध्यति ॥ इन्देः कमिर्नलोपश्चेति कम्प्रत्यये इदम्शब्दः ॥

( तत्त्वदी० )-इदमोऽयम्पुंसीति ॥ इदमः किम् । यः ॥ पुंसीति किम् । इदम् ॥ न चात्र लकि न तन्निमित्तमित्येव भविष्यतीति चेत्सत्यम् । तस्य अनित्यत्वज्ञापनार्थम् । तेन हे प्रियातिस्र इत्यादि सिद्धम् ॥ अयमिति ॥ हसेप इति सेर्लोपः ॥

**दस्य मः ॥ त्यदादेर्दकारस्य मत्वं भवति स्यादौ ॥ इमौ, इमे ॥**

**त्यदादेः संबोधनाभावः । इमम्, इमौ, इमान् ॥**

( सुबोधिनी )-दस्य मः ॥ त्यदादेर्दस्य मः स्यात्स्यादौ विभक्तौ ॥ स्यादौ किम् । अस्यापत्यमैदमः । अमुमिच्छतीत्यदस्यति ॥ ननु द्वावित्यत्र कस्मान्मत्वं न । शृणु । स्यादाविति दस्य विशेषणम् । अर्थवशाद्विभक्तिविपरिणाम इत्युक्तत्वात् स्यादिपरस्य दस्येत्यर्थः ॥ येन नाव्यवधानं तेन व्यवहितेऽपि उक्तत्वादकारव्यवधाने सति न च द्विव्यवधाने । क्वचिद् द्वयोरिति निर्देशाद्वा न । त्यदाद्यत्वे मत्वे औत्वे च इमौ । त्यदादेः संबोधनं नास्तीत्युत्सर्गः । प्रचुरप्रयोगादर्शनमेवात्र मूलम् । भाष्ये तु हे स इत्युक्तम् ॥

( तत्त्वदी० )-दस्य म इति ॥ ननु द्वावित्यत्र किमु न मत्वमिति चेन्न । दो म इति वक्तव्ये अकारोच्चारणमकारपरस्यैव दस्य मत्वार्थम् । अत्राहुः । अत एव त्यदिति त्यदादेर्न चात्र त्यदाद्यत्वबाधकम् परत्वान्मत्वप्रसंगात् । अत्वावकाशो द्वौ मत्वान् इमौ स इत्यत्रोभयप्रसंगे परत्वान्मत्वम् । न चात्वविधौ त्यदादिग्रहणं व्यर्थम् इदमादेरिति वक्तुं युक्तम् उत्तरत्र चरितार्थत्वादिति । अत्रेदं वक्तव्यम् । स इत्यादौ कृतेऽपि मत्वे पश्चात्यदाद्यत्वेन रूपसिद्धेरनिर्वार्यत्वात् । न च मत्वविधिसामर्थ्यादेवात्वं नेति वाच्यं मत्वविधेरिमावित्यादौ चारितार्थत्वेन ज्ञापनायोगात् । पर्जन्यवल्लक्षणप्रवृत्तेरिष्टत्वाच्च सनपुंसकमित्यादिनिर्देशाच्चेति ॥ **त्यदादेः संबोधनाभाव** इति ॥ औत्सर्गिकश्चायम् हे स इति भाष्यप्रयोगात् । अभावस्तु प्रचुरप्रयोगे संबोधनाभाव इत्येवपरतया व्याख्येयः । यत्त्वाहुः । " इदमस्तु संनिकृष्टे समीपतरवर्तिचैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् " इति वचनादेवंविधस्यार्थस्याभिमुखीकरणानर्हत्वादिति तदापाततः सन्निकृष्टादिशब्दानामिव इदमादीनामपि संबोध्यसमर्थ्यकत्वे बाधकाभावात् विप्रकृष्टस्यापि बुद्ध्या सन्निधापितस्य बहुशः संबोधनदर्शनाच्च ॥ तथा भट्टिः । ' हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः ॥'

**अन टौसोः ॥ इदमोऽनादेशो भवति टौसोः परयोः ॥ अनेन ॥**

( सुबोधिनी )-अन टौसोः ॥ इदमोऽयामित्यत इदम इत्यनुवर्तते । टेनेतीनादेश । अनेन ॥

( तत्त्वदी० )-अन टौसोरिति ॥ अनापीति तु लाघवेऽपि प्रतिपत्तिगौरवादुपेक्षितम् । तथा हि । टा इत्याकारमारभ्य सुपः पकारेण प्रत्याहाराश्रयणे इतरेतरविभक्तावन्यविधानात्परिशेषाट्टौसोरेव लाभः । अपोऽपि स्यादाविति विशेषणेन वारणम् इत्यादिप्रतिपत्तिगौरवम् । तस्माद्यथान्यासमेव ॥

स्भ्यः ॥ सकारे भकारे च परे इदमोऽकारो भवति कृत्स्नस्य ॥ आद्वि । आभ्याम ॥

( सुबोधिनी )—स्भ्यः ॥ स् च भ् च अनयोः समाहारः स्भ् तस्मिन् स्भि । सकारभकारादौ स्यादौ इदम्शब्दस्य अः स्यात् । स्भशिति सुवचम् यतः सर्वस्य स्यात् ॥ अद्वीत्यात्वे आभ्याम् ॥

( तत्त्वदी० )—स्भ्य इति ॥ स् च भ् चानयोः समाहारः स्भ् तस्मिन् स्भि अ इति च्छेदः ॥ यस्मिन्विधिस्तदादौ वर्णग्रहणे इति सादिभादिग्रहः ॥ ननु अः षष्ठीनिर्दिष्टस्येत्यन्तस्य भविष्यति । तस्यानित्यत्वात् स्भशित्यस्यैव सुवचत्वात् ॥

भिस् भिस् ॥ इदमदसोर्भिस् भिसेव भवति न भकारस्याकारः ॥ एभिः । अस्मै । अस्मात् । अस्य, अनयोः, एषाम् । अस्मिन, एषु ॥

( सुबोधिनी )—भिस् भिस् ॥ इदमोऽदसश्च भिस भिसेव भवति ॥ भिसो भिसविधानं स्भ्य इत्यत्वबाधनार्थम् । एस्भीत्येत्वे एभिः । अदसस्तु अमीभिः ॥

( तत्त्वदी० )—भिस्भिसिति ॥ फलं किमित्याह—न भकारस्येति ॥ ह्रस्वो वेत्यनुवर्त्य तस्य व्यवस्थितत्वादिह न । इमकेन, इमकाभ्याम् । इमकैः ॥

( इदमेतदोरन्वादेशे द्वितीयाटौःस्वेनद्वा ) एनम, एनौ, एनान् । एनेन । एनयोः । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथानेन व्याकरणमधीतम् एनं छन्दोऽध्यापय । नोपधायाः । नाम्नो नो लोपशधौ । राजा, राजानौ, राजानः । हे राजन् । अल्लोपः स्वरेम्वयुक्ताच्छसादौ । श्चुत्वम् ॥

( सुबोधिनी )—इदमेतदोरन्वादेशे द्वितीयाटौःस्वेनद्वा ॥ द्वितीयायां टौसोश्च परतोऽन्वादेशे इदमेतदोरेनदादेशो वा स्यात् ॥ अन्वादेशमाह । किंचित्कार्यं विधातुमुपात्तस्य गृहीतस्य शब्दस्य कार्यान्तरं विधातुं बोधयितुं पुनरुपादानं ग्रहणम् । सोऽन्वादेश उच्यते । "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्यात्" इत्यत्र तु ईषदर्थादयो न विधीयन्ते किं त्वनूद्यन्ते इति नात्रैनदादेशः ॥ एवम् 'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय' इत्यत्रापि भीरुत्वस्यानुवाद्यत्वं बोध्यम् । यथा । अनेन पुरुषेण व्याकरणमधीतं पठितम् एनं पुरुषं त्वं छन्दोऽध्यापय पाठय ॥ इति मान्ताः ॥ ॥राजते इति राजा । कन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इति कन्प्रत्ययः । परत्वान्नोपधाया इत्युपधादीर्घः । हसेपः इति सिलोपः । ततो नाम्नोनो लोपशिति नलोपः । शसि तु अल्लोपः स्वरे इत्यल्लोपे कृते श्चुत्वम् ॥

( तत्त्वदी० )—व्यवस्थितत्वादपरमिह फलमित्याह—इदमेतदोरिति ॥ किंचित्कार्यं विधातुमिति कर्तुम् अपूर्वं बोधयितुमित्यर्थः । उपात्तस्य गृहीतस्येत्यर्थः । कार्यान्तरमन्यत्कार्यमित्यर्थः । पुनरुपा-

दानं ग्रहणमित्यर्थः ॥ 'ईषदर्थे क्रियायोगे' इति श्लोके तु ईषदर्थादयो न विधीयन्ते किं तु अनूद्यन्ते। तेन एनदादेशो न। एतेन 'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय' इत्यपि व्याख्यातम् ॥ भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात् न तु विधेयत्वेन

**जञोर्ज्ञः ॥ जकारञकारयोर्योगे ज्ञो भवति ॥ राज्ञः। राज्ञा। राजभ्याम्। नलोपशि न विभक्तिकार्यम्। पञ्चस्विति ज्ञापकात्। राजभिः। वेङ्योः। राज्ञि—राजनि। राज्ञोः, राजसु ॥ एवं वृषादयः ॥ यज्वनः। यज्वना ॥ आत्मनः। आत्मना ॥ प्रतिदिवा, प्रतिदिवानौ। अल्लोपे कृते ॥**

(सुबोधिनी)—जञोर्ज्ञः ॥ उभयोर्योगे ज्ञ इत्यक्षरं भवति ॥ राज्ञः। नस्य लोपशि न विभक्तिकार्यम् पञ्चस्विति ज्ञापकात्। अतो राजभ्यामित्यत्राद्गीत्यात्वम् राजभिरित्यत्र भ्य इत्यत्वम् राजभ्य इत्यत्रैस्मीत्यैत्वं च न ॥ वेङ्योरिति चोपधालोपे राज्ञि—राजनि॥ वृषा इन्द्रः। कन्नन्तः ॥ इष्टवानिति यज्वा। क्विब्वनिपुडा इति वनिप् प्रत्ययः। अम्वयुक्तादित्युक्तत्वान्नोपधालोपः। यज्वनः ॥ अततीत्यात्मा। अततेर्मनिण् इति मनिण् प्रत्ययः। अम्वयुक्तादित्युक्तत्वान्नोपधालोपः। आत्मनः ॥सुष्ठु धर्मो यस्यासौ सुधर्मा। धर्मादित्यन्। अम्वयुक्तादित्युक्तत्वान्नोपधालोपः ॥ सुधर्मणः ॥ प्रतिदीव्यतीति प्रतिदिवा। कन्नन्तः। शसि अल्लोपः स्वरे इत्यल्लोपे कृते ॥

(तत्त्वदी०)—**यज्वन** इति ॥ वान्तसंयोगत्वान्नलोपः ॥ **आत्मन** इति॥ मान्तसंयोगोऽत्र॥

**य्वोर्विहसे ॥ धातोरिदुतो दीर्घो भवति रेफवकारयोर्हसपरयोः ॥ प्रतिदीव्नः। प्रतिदीव्ना। प्रतिदिवभ्याम् ॥**

(सुबोधिनी)—य्वोर्वि हसे ॥ र् च व् च अनयोः समाहारो र्व् तस्मिन् र्वि। रेफवकारयोः परतः पदान्ते च धातोरिकारोकारयोर्दीर्घः स्यात्। कीदृशयोः। हसः परो ययोस्तौ हसपरौ तयोर्हसपरयोः। प्रतिदीव्नः। नाम्नो न इति नलोपे। प्रतिदिवभ्याम् ॥

(तत्त्वदी०)—**य्वोर्वि हस** इति ॥ य्वोः र्वि हस इति च्छेदः। इश्च उश्च यू तयोः य्वोः र् च व् च एतयोः समाहारः र्व् तस्मिन् र्वि। हस इति ॥ रेफवकारयोर्विशेषणमित्याशयेनाह—**हसपरयो**रिति ॥

**श्वादेः ॥ श्वादेर्व उत्वं प्राप्नोति शसादौ स्वरे ईपीकारे च ॥ शुनः। शुना, श्वभ्याम् ॥ यूनः। युना, युवभ्याम् ॥ मघवा, मघवानौ, मघवानः। मघोनः। मघोना ॥**

(सुबोधिनी)—श्वादेः ॥ श्वयुवमघोनां व उः स्यात् शसादौ स्वरे ईपि प्रत्यये ईमावितीकारे च ॥ प्रातिपदिकग्रहणे लिङ्गाभिधायिस्त्रीप्रत्ययविशिष्टस्यापि ग्रहणमिति

परिभाषा विभक्तिनिमित्ते कार्ये न प्रवर्त्तते । अतो युवतीः पश्येत्यादौ नोत्वम् । अकारसहितस्य वस्योत्वम् ॥ श्वा कुक्कुरः ॥ युवा तरुणः । युवन् शब्दे वस्योत्वे कृते दीर्घत्वम् । यूनः ॥ मघवा इन्द्रः । वस्योत्वे ओत्वे च कृते मघोनः ॥

( तत्त्वदी० )–श्वादेरिति । ननु युवतीः पश्येत्यत्र कथं नोत्वं नामग्रहणे लिङ्गाभिधायकप्रत्ययविशिष्टस्य ग्रहणमिति परिभाषाश्रयणादिति चेत्सत्यम् विभक्तिनिमित्ते कार्ये लिंगविशिष्टग्रहणं नेति निषेधात् । सस्वरस्य वस्योत्वं अल्लोपेऽपि सिद्धे ङौ विकल्पात् ॥

**( अर्वणस्त्रसावनञः ) नञा रहितस्यार्वन्नंतस्य तृ इत्यन्तादेशः स्यान्न तु सौ ॥**

( सुबोधिनी )–**अर्वणस्त्रसावनञः** ॥ ननु ऋधातोर्विप्रत्यये गुणे च अरिति रूपं तस्माद्वतुप्रत्यये अर्वन्तावित्यादि सेत्स्यति ऋधातोरेव वनिप्प्रत्यये त्वनर्वेति सेत्स्यति । रूढिशब्दश्चायम् । ‘ वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ’ इत्यमरोक्तत्वात्तत्रश्चार्थोऽपि न भिद्यते ॥ किमनेन सूत्रेणेति चेत् उच्यते । नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञ्युपपदे च नान्तस्य प्रयोगाऽन्यत्र तु तान्तस्य प्रयोगो भवतीति व्यवस्थार्थं सूत्रम् ॥

( तत्त्वदी० )–**अर्वणस्त्रसावनञ** इति ॥ ऋधातोर्विचि गुणे च अरिति रूपं तस्माद्वतौ अर्वन्ताविति । रूढिशब्दश्चायम् ॥ ‘ वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः’ इत्यमरकोशात् ॥ तथा च श्रीहर्षः । ‘वाहैरलुप्यत सहस्रदगर्वगर्वः’ इति प्रायुङ्क्त ॥

**उगितो नुम् ॥ उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु ॥ अर्वन्तौ, अर्वन्तः । अर्वन्तम्, अर्वन्तौ, अर्वतः । अर्वता, अर्वद्भ्याम् ॥ अनञः किम् । अनर्वाणौ ॥ असौ किम् । अर्वा ॥**

( सुबोधिनी )–**उगितो नुम्** ॥ उश्च आ च वरौ वरावितौ यस्य स उगित् तस्य उगितः । उदितः ऋदितश्च नुम् स्यात् । ‘सो नः पुंसः’ इत्यतो मण्डूकप्लुत्या पुंस इत्यनुवर्त्तते । तेन पुंसि पञ्चस्वित्यर्थः ॥ धातोर्नलोपिनोऽञ्चतेरेव । अञ्चेर्दीर्घश्चेत्यतोऽञ्चेरित्यपकृष्यते । तत्रैव वाञ्चेरिति विभज्य पञ्चस्विति नुमिति चानुवर्तते । अञ्चेरिति निर्देशात् नलोपिनो ग्रहणम् । धातोश्चेद् उगित्कार्यं तर्हि अञ्चतेरेवेति नियमार्थमिदम् । तेन स्रंसादीनामिव नुमौ न । ऋदित्वान्नुम् । अर्वन्तौ । नञ्तत्पुरुषे तु न अर्वा अनर्वा । यज्ववत् ॥

( तत्त्वदी० )–**उगितो नुमि**ति ॥ उश्च आ च वरौ तौ इतौ यस्य स उगित् तस्य उगितः । अत्राधातोरेवे अञ्चतेर्नुम्विधानात् । अन्यथा उगित्त्वादेवाञ्चतेरपि सिद्धे नुम्विधानं व्यर्थम् । अतः सिद्धे सति पुनर्नुम्विधानं व्यर्थम् । धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव । तेन स्रदित्यादौ न ॥

**इतोऽत्पञ्चसु ॥ पथिन्मथिन्ऋभुक्षिन्शब्दानामिकारस्याकारादेशो भवति पुंसि पञ्चसु शौ च ॥**

( सुबोधिनी )–इतोऽत्पञ्चसु ॥ पथां टेरित्यतः पथामित्यनुवृत्तम् । पथ्यादेरितोऽत् स्यात् पुंसि पञ्चसु शौ च ॥ शौ सुपन्थानि । पुंसि किम् । सुपथी । पतस्थश्चेति चादिन-प्रत्ययः । पथिन् ॥ मन्थतेः किन्प्रत्यये मथिन्शब्दः ॥ 'ऋभुक्षाः स्वर्गवज्रयोः ।' ततोऽस्त्यर्थे इन्प्रत्यये ऋभुक्षिन् ॥

( तत्त्वदी० )–इतोऽत्पञ्चसु ॥ पथां टेरित्यतः पथामित्यनुवृत्तेर्बहुवचननिर्देशात्तत्रैव पथ्यादिलाभः । अत्राद्वचनं तु चिन्त्यम् । इत आपञ्चस्वित्येव सुवचम् । तथा च आसाविति सूत्रमपि न कर्तव्यं भवति । तपरकरणं तु दीर्घनिवृत्त्यर्थम् । तथा च पन्थानमिच्छतीति वाक्ये पथीनतीति ततः क्विपि यत इत्याकारलोपः । एकदेशविकृतस्यानन्यत्वादासावित्यात्वम् । नुट् पन्थाः । इतोऽत्पञ्चस्वित्यत्वं न भवति इत् इति तपरत्वात् य्वौ वेति बाधित्वानित्यत्वात् 'थो नुट्' ततः संयोगपूर्वत्वादियु । पन्थियौ । शसादौ । पन्थां टेः । पथः । पथा । भ्यामादौ पथिभ्यामित्यादि । एवं चाद्वचनमासाविति सूत्रं च सार्थकं भवति । अन्ये तु पथीः पथ्यौ ऋभुक्षीः ऋभुक्षियावित्यादि उदाजह्रुः गौणत्वादात्वादि नेति एकदेशविकृतन्यायोऽपि मुख्ये चरितार्थत्वान्न अन्यथा सर्वमिच्छन्सर्वीरित्यत्राप्यकः स्यात्, तपरत्वं तु मुखसुखार्थमित्याहुः । अत्र केचित् । पदकार्ये गौणमुख्यन्यायो न नामकार्ये अन्यथा गां वाहीकं पश्येत्यादावात्वं न स्यात् । अकस्तु सर्वादिपाठाभावान्न । तपरस्यापि सार्थक्यमेव । अन्यथा इरदित्येवावक्ष्यत् । तपरे तु पथामिति निर्देशेन नान्तप्रकृत्यनुकरणान्नान्तानामेव पथ्यादीनामात्वादिप्रकृतेनान्तत्वाभावान्नेति । न चैकदेशविकृतन्याय एवमपि दुर्वार इति वाच्यं नान्तत्वविवक्षासामर्थ्यादेव प्रथमं नुटि तद्बाधनात् । एवं च पंथा इत्यत्रापि नान्तत्वविवक्षासामर्थ्यादेव नुट् तत आत्वम् अन्यथा मित्यत्वाद्विशेषविहितत्वाच्च पूर्वमात्वेऽनान्तत्वात् न्यादेशो न स्यात् ॥

**था नुट् ॥ पथिमथोस्थस्य नुट् स्यात पुंसि पञ्चसु शौ च ॥**

( सुबोधिनी )–थो नुट् ॥ पथ्यादेस्थस्य नुट् स्यात् पुंसि पञ्चसु शौ च ॥ थस्येति ?कम् । ऋभुक्षाः ॥ पुंसि किम् । सुपथि ॥

( तत्त्वदी० )–थो नुडिति ॥ अत्र द्वयोरेवानुवृत्तिः तृतीयेऽप्यस्यासंभवात ॥ ननु थस्य नुडिति सूत्र्यताम् थस्येति निर्देशादकारोऽपि । तथा च किमिति सूत्रेणेति चेत्सत्यम् ऋभुक्षा इति न सिद्ध्येत् ॥

**आ सौ ॥ पथिमथिऋभुक्षां टेरात्वं भवति सौ ॥ पन्थाः, पन्थानौ, पन्थानः । हे पन्थाः । पन्थानम् ॥**

( सुबोधिनी )–आ सौ ॥ पथां टेरिति पदद्वयमनुवर्तते । पथ्यादेष्टेरात्स्यात सि-प्रत्यये ॥ सौ किम् । पथिभ्याम् ॥

( तत्त्वदी० )—**आ साविति** ॥ अत्र पथां टेरिति पदद्वयमप्यनुवर्तत इत्यत आह—**टेरात्वमिति** ॥ अत्राहुः । पथ्यादीनामन्त्यस्यात्वं भवति । अन्त्यस्येति षष्ठीनिर्दिष्टस्येति परिभाषया लभ्यते इति अत्र साक्षादनुवृत्तं टेरिति, त्यक्त्वा परिभाषालब्धस्यान्त्यस्येत्यस्यानुकरणे गौरवात् । आ आ इति प्रश्लेषादनुनासिकस्यापि स्थाने विहितो नानुनासिकः ॥ ननु किमर्थमात्वम् इतोऽदित्यत्वे नोपधाया इति दीर्घत्वे सौ रसे नलोपशि पश्चाद्विसर्गे पन्था इति रूपसिद्धेरिति चेन्न धौ नलोपशोऽभावे हे पन्था इति न सिद्ध्येत् राजेत्यत्रानिष्टापत्तेश्च । असावित्येव तु न कृतं नकारमात्रस्यात्वे सवर्णदीर्घत्वेन सिद्धेऽपि पथीशब्दस्य पन्था इत्यसिद्धेः, टेरनुवृत्तौ तु मुख्येऽपि रूपासिद्धेश्च ॥

**पथां टेः** ॥ **पथिमथिऋभुक्षां टेर्लोपो भवति शसादौ स्वरे ईपीकारे च ॥ पथः । पथा । पथिषु ॥ एवं मथः । ऋभुक्षः ॥ स्त्रियां नान्तत्वादीप् । सुपथी । सुमथी । अनृभुक्षी सेना ॥ क्लीबे शोभनः पंथाः यस्मिन् वने तत्सुपथि वनम् ॥**

( सुबोधिनी )—**पथां टेः** ॥ पथ्यादेष्टेर्लोपः स्यात् शसादौ स्वरे ईपीकारे च ॥ पथामिति बहुवचनमाद्यर्थम् । स्त्रियां ऋण इतीप् । ततष्टिलोपः ॥ सुष्ठु पन्थाः यस्याः सा सुपथी रथ्या । ऋक्पूरित्यप्रत्ययो न 'न पूजने' इति निषेधात् । कप्रत्ययस्तु समासान्तविधेरनित्यत्वान्न ॥ सुष्ठु मन्थाः यस्यां सा सुमथी नगरी ॥ न विद्यते ऋभुक्षाः इन्द्रो यस्यां सा अनृभुक्षी सेना ॥ क्लीबे सुष्ठु पन्थाः यस्मिन् तत् सुपथि । आत्वं त्वत्र न लुकि न तन्निमित्तमिति निषेधात् ॥

( तत्त्वदी० )—**स्त्रियामिति** ॥ **सुपथीति** ॥ आसावित्यात्वं यो नुडिति लिंगविशिष्टपरिभाषया प्राप्तमपि विभक्तौ लिंगविशिष्टाग्रहणमिति निषेधान्न भवति ॥

**( धौ नपुंसकानां नस्य लोपो वा ) हे सुपथिन्–हे सुपथि । सुपथी । सुपन्थानि ॥**

( सुबोधिनी )—**धौ नपुंसकानां नस्य लोपो वा** ॥ हे सुपथि इत्यत्र नलोपस्यासिद्धत्वाद् ऋणामिति गुणो न द्विवचने पथामिति टिलोपः । सुपथी । शौ त्वत्वे नुटि च दीर्घत्वम् । सुपन्थानि ॥ किं च पन्थानमात्मन इच्छतीति पथीयति । ततः क्विप् । यत इत्यल्लोपः । यवयोरिति यलोपः । एकदेशविकृतस्यानन्यत्वादासावित्यात्वम् । थो नुडिति नुट् । पन्थाः । अत्वं तु न इत इति तपरकरणात् । य्वोर्धातोरितीय् । पन्थियौ ॥ एवं ऋभुक्षाः, ऋभुक्षियौ ॥

**इनां शौ सौ** ॥ **इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति नान्यत्र ॥ दण्डी । हे दंडिन् । दण्डिनौ,**

**दण्डिनः ॥ एवं कलिन्हलिन्यशस्विन्वाग्मिन्प्रभृतयः ॥ वृत्रहा, वृत्रहणौ, वृत्रहणः ॥**

( सुबोधिनी ) **इनां शौ सौ** ॥ बहुवचनमाद्यर्थम् । अर्थवत्परिभाषाया अनित्यत्वादर्थवतोऽनर्थकस्यापीनोऽत्र ग्रहणम् । उपधाया इत्यनुवर्तते । अधाविति च । नोपधाया इत्यनेनैव सिद्ध नियमार्थमिदम् । तदाह । इनादीनामुपधायाः शावेव दीर्घः स्यान्नान्यत्रेति । उपधादीर्घस्यैवायं नियमः । तेन वृत्रहेवाचरतीति वृत्रहायते । कर्तुर्यङ् । इत्यत्र ये इति दीर्घो भवत्येव । वृत्रहणीत्यत्र नमस्य 'कृञिति झसे' इति यो दीर्घः सोऽप नियमेन व्यावर्त्यते । उपधादीर्घमात्रापेक्षया नियमविधानादिति । साविति तु विध्यर्थम् । पूर्वेण नियमात् । सावप्राप्तेर्योगविभागाभिप्रायेणैव शौ साविति निर्देशोऽस्ति। अन्यथा शिस्योरित्येवावक्ष्यत् ॥ ननु पन्था इवाचरतीति पथीनाति । क्विप् । इत्यादौ नमान्तस्येत्युपधादीर्घो न प्राप्नोति । पथ्यादीनामिन्नन्तत्वात् । इन्नादीनां शौ सावेवेत्युपधादीर्घस्य नियमादिति चेत् । उच्यते । यत्र इनामिति सूत्रं प्रवर्तते तत्रैवायं नियमः। यथा दण्डीवाचरतीति दण्डीनति । क्विप् वृत्रहणति । पूषणति । अर्यमणति इति ॥ दण्डोऽस्यास्तीति दण्डी । मान्तोपधादितीन् ॥ शौ बहवो दण्डिनः सन्ति येषां तानि बहुदण्डीनि ॥ मुसलमस्यास्तीति मुसली । हलमस्यास्तीति हली । 'तालांको मुसली हली' इत्यमरः ॥ यशोऽस्यास्तीति यशस्वी । विन् ॥ वागस्यास्तीति वाग्ग्मी । ग्मिन् ॥ वृत्रं हतवानिति वृत्रहा । क्विबन्तः । 'वासवो वृत्रहा वृषा' इत्यमरः ॥ अवकुप्वन्तरेऽपीति णत्वम् । वृत्रहणौ ॥

( तत्त्वदी० )—**इनां शौ साविति** ॥ बहुवचनादिनादिलाभः । इनन्निन्समुदायेऽनिनोऽपि इनमारोप्यते छत्रिणो यान्तीतिवत् अर्थवत्परिभाषाया अनित्यत्वादनर्थकस्यापीनो ग्रहणं साविति ग्रहणात्तदन्तं गृह्यते पूषार्यम्णोः केवलयोः पुंस्त्वात् शेरभावात् । नोपधाया इति सिद्धे विधिरारभ्यमाणो नियमाय । तेन इन्नादीनामुपधाया दीर्घः शावेव नान्यत्रेति नियमः । नियमश्चोपधादीर्घस्यैव नान्यस्य। तेन दण्डीयति दण्डीभूत इत्यादौ भवत्येव दीर्घः ये च्वावित्यत्रोपधाग्रहणाभावात् ॥ ननु पन्था इवाचरन् पथीनतीत्यत्रापि नमान्तस्येत्युपधादीर्घोऽपि कथं पथ्यादीनामिनन्तत्वादिति चेत्सत्यम् । यत्र इनां शौ साविति सूत्रप्रवृत्तिस्तत्रैवायं नियमः । पथ्यादिषु तु इतोऽदित्यादेः प्रवृत्तिसंभवान्न नियमः ॥

**हनो घ्न ॥ हनो हकारस्य घो भवत्यव्यवधाने नकारे ञिति णिति च परे ॥**

(सुबोधिनी)—**हनो घ्ने** ॥ हनः घ्ने इति च्छेदः । आदिस्वरस्येत्यतो ञ्णितीत्यनुवृत्तम् । ञिति णिति प्रत्यये नकारे च परे हन्तेर्हस्य घः स्यात् ॥

( तत्त्वदी० )—**हनो घ्ने** इति ॥ हनः घ्ने इति च्छेदः । आदिस्वरस्येत्यतो ञ्णितीत्यनुवर्तते ॥

**( घसंयोगे णत्वं न )** वृत्रघ्नः । वृत्रघ्ना । वृत्रहभ्याम् ॥ एवं पूषन् अर्यमन् ॥ संख्याशब्दाः पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु सरूपाः ॥

( सुबोधिनी )—अल्लोपः स्वरे इत्यल्लोपे घत्वे च कृते अवकुप्वन्तर इति णत्वे प्राप्ते आह—**घसंयोगे णत्वं न** ॥ घकारात्परस्य णत्वं न भवति। वृत्रघ्नः । वृत्रघ्ना ॥ पूषा सूर्यः ॥ अर्यमा रविः ॥

( तत्त्वदी० )—घ्ने इत्यत्र तन्त्रादिना घ्न इत्यत्र नस्यादेशो नेति व्याख्यानमपीत्याशयेनाह—**घसंयोगे णत्वं** नेति ॥

**जश्शसोर्लुक्** ॥ षकारनकारान्तसंख्यायाः परयोर्जश्शसोर्लुक् ॥

पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः ॥

( सुबोधिनी )—जश्शसोर्लुक् ॥ संख्याया इति ष्ण इति चानुवर्तते ॥ संख्यायाः किम् विप्रुषः । पामानः ॥ ष्ण इति किम् । चत्वारः ॥ शतानि सहस्राणीत्यत्र संनिपातपरिभाषया जश्शसोर्लुग् न । तथा हि । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य । संनिपतनं सन्निपातः । आनन्तर्यं संनिपातो लक्षणं कारणं यस्य स संनिपातलक्षणो विधिस्तद्विघातस्य कारणविघातस्यानिमित्तं न प्रयोजकः । यमुपजीव्य यो विधिः प्रवृत्तः स तस्योपजीव्यस्य विरोधं न करोतीति परिभाषार्थः । शिमाश्रित्य प्रवृत्तो नुम् शेर्विघातको न ॥

( तत्त्वदी० )—**जश्शसोर्लुग**िति संख्याया इति चानुवर्तते । ननु शतानि सहस्राणीत्यादौ कथं न लुगिति चेत्सत्यम् सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया तन्निषेधात् । सन्निपतनं सन्निपातः आनन्तर्यं लक्षणं कारणं यस्य स सन्निपातलक्षणो विधिः तद्विघातस्य अनिमित्तं न प्रयोजकः । यमुपजीव्य यो विधिः प्रवृत्तः स तस्योपजीव्यस्य विरोधं न करोतीत्यर्थः । शिमाश्रित्य प्रवृत्तो नुम् शेर्विघातको न भवति ॥ लोप इत्यनुवृत्तावपि लुग्ग्रहणं षष्ठीनिर्दिष्टस्येति परिभाषां ज्ञापयति । लुकस्तु प्रत्ययादर्शनत्वेन सर्वलोपाभावे दर्शनासंभवात्सर्वलोप एव नान्त्यस्य । लोपापवादो लुक्शब्दादेशस्तु न भवति नव पमित्यादिनिर्देशात् । न हि लुक्शब्दोऽत्र श्रूयते क्विपः कित्त्वेन प्रत्ययादर्शनेऽपि प्रत्ययाश्रितं कार्यं भवतीति ॥ पञ्चेत्यत्र लुक्यपि नोपधाया इति दीर्घो न । नव पमिति लिङ्गेनैव लुकि सति तन्निमित्तं कार्यं न भवतीति ज्ञायते एतदर्थमेव शब्दभेदेन व्यवहारः । अन्यथा लुक्लोपयोरन्यतरेणैव सर्वत्र व्यवहरेत् । अथ लुग्ग्रहणं विनैव रूपसिद्धौ ज्ञापकं स्यात् असति तस्मिन्ननन्तरस्येति न्यायेनायङादिरेव प्रसज्येतेति चेत्सत्यं नव पमिति निर्देशेनैव तद्वारणसंभवात् ॥

**ष्णः** ॥ षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति ॥

पञ्चानाम् । परमपञ्चानाम् । गौणत्वे न लुग्नुटौ । प्रियपञ्चा, प्रियपञ्चानौ, प्रियपञ्चानः । प्रियपञ्ञ्ञः । प्रियपञ्ञ्ञा ॥ एवं सप्तन्नवन्दशन्प्रभृतयः ॥

( सुबोधिनी )–ष्णः ॥ ष् च न् चानयोः समाहारः ष्ण तस्मात् ष्णः । संख्याया इत्यनुवर्तते । ष्ण इति तस्या विशेषणम् । विशेषणेन तदन्तविधिः ॥ संख्याया इति किम् । विषाम् । यज्वनाम् ॥ ष्ण इति किम् । त्रिंशताम् । पञ्चाशताम् ॥ नलोपे नोपधाया इति दीर्घे च पञ्चानाम् ॥ प्राधान्ये परमाश्च ते पञ्च च परमपञ्च तेषाम् ॥ गौणत्वे न लुग्नुटौ । गौणे ष्णान्तसंख्यायाः जश्शसोर्लुक् । नामि तु नुट् न । संख्यावाचित्वाभावात् । प्रियाः पञ्च यस्य स प्रियपञ्चा । आमि प्रियपञ्चाम् । अकारद्वयमध्ये चकारः ॥

( तत्त्वदी० )–ष्ण इति ॥ ष् च न् च अनयोः समाहारः ष्ण तस्मात् ष्णः । अत्र संख्याया इत्यनुवर्तते । ष्ण इति तद्विशेषणं ततस्तदन्तलाभः इत्याशयेनाह–षकारनकारान्तेत्यादि ॥ नस्य ष्टुत्वनिर्देशे विशेषणम् । तस्य संख्यावाचिनोऽभावान्नान्तमेव गृह्यते ॥ संख्याया इति किम् । विषाम् ॥ ष्ण इति किम् । त्रिंशताम् ॥ गौणत्वे नेति ॥ संख्यावाचित्वाभावादित्यर्थः ॥

**अष्टनो डौ ॥ अष्टन्शब्दात्परयोर्जश्शसोर्वा डौ भवति ॥ अष्टौ-अष्ट । अष्टौ-अष्ट ॥**

( सुबोधिनी )–अष्टनो डौ ॥ अष्टन इत्येकवचनं तु त्रेरितिवत् । अल्लोपः स्वरे इत्यस्याप्रवृत्तिश्चिन्त्या । जश्शसोरित्यनुवर्तते । वास्विति वाशब्द उभयत्र संबध्यते काकाक्षिगोलकन्यायेनेति ॥ ननु षष्ठीनिर्दिष्टत्वादन्त्यस्य डौ भवति । न चानेकवर्णत्वात्सर्वादेशः स्यात् । नानुबन्धकृतमनेकवर्णत्वमित्युक्तत्वात् । उच्यते । डित्त्वसामर्थ्यान्नोक्तदोषः । तथा हि । अन्त्यादेशे सति जसि अष्टाविति शसि अष्टाविति प्राप्नोति तच्चान्तरेण डित्त्वं सिद्धम् । अतो डित्करणसामर्थ्यात् सर्वादेशः । लुकोऽपवादोऽयमिति सर्वादेश इति वा । डौशिति सुवचम् । डौत्वं हि लुग्नुटाविव प्राधान्ये एव भवति न तु गौणत्वे । सप्यशूभ्यां तुट्चेत्यनेन सप्तन्अष्टन्शब्दौ निष्पन्नौ ॥

( तत्त्वदी० )–अष्टनो डाविति ॥ एकवचनं तु त्रेरितिवत् । सौत्रत्वादल्लोपोऽपि न । अल्लोपः स्वरे इत्यस्याप्रवृत्तिश्चिन्त्येति कैश्चिदुक्तम् । अत्र अष्टाभ्य औशिति सूत्रव्याख्यावसरे अन्यथा अष्टन इत्येव ब्रूयात् इति भाष्यकारोक्त्यापि चिन्ताया अपसारणीयत्वात् ॥ वास्विति वाशब्दः काकाक्षिन्यायेनोभयत्रान्वेति । संख्याया इत्यनुवृत्तेर्नेह । प्रियाष्ट्नः ॥ अनुबन्धैरनेकवर्णत्वस्यासंभवादन्त्यादेशोऽस्तीति न शङ्कनीयम् षष्ठीनिर्दिष्टस्येति परिभाषाया अनित्यत्वात् ॥

**वासु ॥ अष्टनः सकारभकारादिषु विभक्तिषु वात्वं भवति ॥ अष्टाभिः-अष्टभिः । अष्टाभ्यः-अष्टभ्यः । अष्टाभ्यः-अष्टभ्यः । अष्टानाम् । प्रिया अष्टौ यस्यासौ प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टानः । प्रियाष्ट्नः । प्रियाष्ट्ना, प्रियाष्टाभ्याम । "प्रियाष्ट्नो राजवत्सर्वं हाहावच्चापरं हसे ।" सुगण्, सुगणौ, सुगणः । सुगणम्,**

**सुगणौ, सुगणः। सुगणट्सु॥ भुत-भुद्, बुधौ, बुधः। भुद्भ्याम्। भुत्सु। राक्-राग्, राघौ, राघः। राग्भ्याम्। राक्षु॥ सुककुप्-सुककुब्, सुककुभौ, सुककुभः। सुककुभम्। सुककुप्सु॥**

( सुबोधिनी )-वास्सु॥ भीत्यपकृष्यते। तेन स्यादयो विशेष्यन्ते। वा आ आसु इति च्छेदः। सकारभकारादौ स्यादौ परे अष्टन आत्वं वा भवतीति फलितोऽर्थः॥ इत आरभ्य संख्याया इति निवृत्तं व्याख्यानात्। तेन गौणत्वेऽपि स्यादावात्वम्॥ स्यादाविति किम्। अष्टभार्यः अष्टसेवकः॥ भीति किम्। प्रियाष्टानौ॥ प्राधान्ये परमाष्टौ॥ गौणत्वे प्रिया अष्टौ यस्य स प्रियाष्टा। आत्वाभावे राजवत्। शसि अल्लोपः स्वरे इत्यकारलोपे कृते ष्टुभिः ष्टुरिति णत्वं प्राप्तमसिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया न शस्निमित्तकत्वेन बहिरङ्गस्याल्लोपस्यासिद्धत्वात्। पूर्वं पूर्वमन्तरङ्गमिति स्वीकारात्॥ आत्वपक्षे प्रथमैकवचने प्रियाष्टाः। हाहाशब्दवत्। प्रियाष्टन्शब्दस्यात्वाभावपक्षे सर्वं रूपं राजवत्। आत्वपक्षे तु हसादावपरं रूपं हाहावत्॥ **इति नान्ताः**॥ सुष्ठु गणयतीति सुगण गणयतेर्विण्प्रत्ययः। शसे ङ्णोरिति टुकि सुगणट्सु। शसे चपस्येति द्वितीये सुगण्ठ्सु। टनादिति धुटि सुगणट्त्सु। क्विप्प्रत्यये तु सुगाण्। ञमस्य क्ङिति इति दीर्घे कर्तव्ये अल्लोपञिलोपयोः स्थानिवद्भावो न शङ्क्यः। दीर्घविधौ तन्निषेधात्॥ **इति णान्ताः**॥ बुध्यतेः क्विप्। आदिजबानामिति भः। जबत्वचपत्वे। भुत्-भुद्। जबत्वे भुद्भ्याम् चपत्वे भुत्सु॥ **इति धान्ताः**॥ ॥ राघृ, सामर्थ्ये। राघते इति राक्। क्विबन्तः॥ **इति घान्ताः**॥ ॥ सुष्ठु ककुप् यस्मिन् स सुककुप्। 'दिशस्तु ककुभः काष्ठाः' इत्यमरः॥ **इति भान्ताः**॥

( तत्त्वदी० )-**वास्स्विति**॥ वा आ आसु इति च्छेदः। इत आरभ्य संख्याया इति निवृत्तं व्याख्यानात्। तेन गौणत्वेऽप्यात्वम्॥ अत्र स्मीत्युत्तरसूत्रात् स्मीत्यपकृष्यते इत्यभिप्रेत्याह-**सकारे**त्यादि॥ **प्रियाष्ट्न** इति॥ ष्टुत्वं न। असिद्धं बहिरङ्गमन्तरङ्ग इति परिभाषया अल्लोपस्यासिद्धत्वात्॥

## ( युजेः पञ्चसु नुम् न समासे इति च )

( सुबोधिनी )-**युजेः पञ्चसु नुम् न समासे इति च**॥ 'युजि योगे' इत्यस्य धातोः पञ्चसु स्यादिषु नुम् स्यान्न तु समासे॥ युजेरिति धातुपाठपठितेकारविशिष्टस्य ग्रहणं न तु निर्देशे य इक तस्य। तेनेह नुम् न। युज्यते समाधत्ते इति युक्। 'युज समाधौ' दैवादिक आत्मनेपदी॥

( तत्त्वदी० )-**युजेः पञ्चस्विति**॥ समासे इति न इति च संबन्धः युञ्जी कुले इह न॥

**दिशाम्॥ दिश्दृश्स्पृश्दधृष्क्रुत्विजस्रुञ्चयुञ्ज्सृजअञ्चउष्णिहादीनां कुत्वं स्यादौ रसे पदान्ते च॥ संयोगान्तस्य लोपः। युङ्,**

**युञ्जौ, युञ्जः। युञ्जम्, युञ्जौ, युजः। युजा, युग्भ्याम्। समासे तु। सुयुक्॥**

( सुबोधिनी )–**दिशाम्**। बहुवचनमाद्यर्थम्। तेन दिश् १ दृश् २ स्पृश् ३ दधृष् ४ ऋत्विज् ५ क्रुञ्च् ६ युञ्ज् ७ स्रज् ८ अञ्च् ९ उष्णिहो १० गृह्यन्ते। दिश्दृश्स्पृशदधृष्ऋत्विज्स्रजां षत्वे प्राप्ते क्रुञ्च्युञ्ज्अञ्चामप्राप्ते उष्णिहो ढत्वे प्राप्ते अयं कुत्वविधिः॥ कुरित्यनुवर्तते। चोः कुरित्यतः युनक्तीति सिलोपे संयोगान्तलोपे च नस्य कुत्वेनानुनासिको ङकारः। युङ्। नश्चापदान्ते इति नुमोऽनुस्वारे परसवर्णः। स्यासिद्धत्वाच्चोः कुरिति कुत्वं न युञ्जौ। समासे तु सुष्ठु युनक्तीति क्विप्। अत्र न नुम्॥

( तत्त्वदी० )–**दिशामिति**॥ बहुवचनमाद्यर्थम्। अत्र रसग्रहणादिक्पाशेत्यादावपि॥ **युञ्जाविति**॥ नकारस्य कुत्वं तु न यमस्यासिद्धत्वात्॥

**चोः कुः॥ चवर्गस्य कवर्गो भवति धातोर्झसे नाम्नश्च रसे पदान्ते च॥ समाध्यर्थस्य नुम्न। युक्॥ खन्, खञ्जौ। खन्भ्याम्। खन्सु॥ छशषराजादेः षः। सम्राट्–सम्राड्, सम्राजौ, सम्राजः॥ देवेट्–देवेड्, देवेजौ, देवेजः॥ परिमृट्–परिमृड्, परिमृजौ, परिमृजः॥ विश्वसृट्–विश्वसृड्, विश्वसृजौ॥**

( सुबोधिनी )–**चोः कुः**॥ रसे किम्। त्वचौ॥ नाम्नः किम्। वच्मि॥ पदान्ते किम्। वाचि॥ धातोर्झसे यथा। वक्ता॥ झसे किम्। वच्मि॥ कुत्वे सुयुक्। समाध्यर्थस्य युजेर्नुम्न। युक्॥ खञ्जतीति। खजि, गतिवैकल्ये। क्विबन्तः। संयोगान्तलोपे खन्। संराजते इति षत्वे जबत्वचपत्वे च सम्राट्॥ देवान् यजतीति क्विपि यजादित्वात्संप्रसारणे एत्वे च देवेट्॥ विश्वं सृजतीति विश्वसृट् क्विंतः। दिशामिति कुत्वं न सृजिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात्। यद्वा सृजियज्योः कुत्वापवादः षत्वविधिरेव॥ स्रक्ऋत्विक्शब्दयोस्तु दिशामित्यनेन कुत्वमेव॥ परिमार्ष्टीति परिमृट्॥

( तत्त्वदी० )–**चोः कुरिति**॥ अत्र तदन्तग्रहणम्। तेन चवर्गान्तस्येति व्याख्येयम्। एवं चासिद्धत्वानुसरणेन युञ्जावित्यादौ कुत्वाभाव इति समानमपि नाश्रयणीयम्। ञकारस्यान्तेऽभावात् जकारसत्त्वेऽपि तस्य रसपरत्वाभावात्॥ **समाध्यर्थस्येति**॥ युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं न त्विका निर्देश इत्याशयः॥ **युगिति**॥ युज्यते समाधत्ते इति युक्। युज, समाधौ। दैवादिकः। आत्मनेपदी॥ **खन् इति**॥ खञ्जतीति खन्। खजि, गतिवैकल्ये। संयोगान्तस्येति यलोपः॥ **देवेडिति**॥ देवं यजतीति। क्विपि संप्रसारणे रूपम्॥

**विश्वस्य वसुराटोर्दीर्घः। विश्वावसुः। विश्वाराट्, विश्वराजौ। विश्वाराड्भ्याम्। विश्वाराट्सु–विश्वाराट्त्सु॥**

( सुबोधिनी )–विश्वस्य वसुराटोर्दीर्घः ॥ विश्वशब्दस्य दीर्घः स्यात् वसुशब्दे राट्शब्दे च परे ॥ विश्वं वसु द्रव्यं यस्य स विश्वावसुः । राडिति डशब्दस्य स्वरूपोपलक्षणमविवक्षितम् । षत्वम् । विश्वस्मिन् राजते इति विश्वाराट् ॥

( तत्त्वदी० )–वसुराटोरिति ॥ षत्वमविवक्षितं षत्वविषयोपलक्षकम् ॥ विश्वावसुरिति ॥ विश्वं वसु यस्येति विग्रहः ॥

**स्कोराद्योश्च ॥ संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे नाम्नश्च रसे पदान्ते च ॥ भृट्–भृड्, भृज्जौ, भृज्जः ॥ वृक्षवृट्–वृक्षवृड्, वृक्षवृश्चौ ॥ विभ्राट्–विभ्राड्, विभ्राजौ । विभ्राड्भ्याम् । विभ्राट्सु ॥ ऋत्विक्–ऋत्विग्, ऋत्विजौ । ऋत्विक्षु ॥ ऊर्क्–ऊर्ग्, ऊर्जौ । ऊर्क्षु ॥**

( सुबोधिनी )–स्कोराद्योश्च ॥ आदिशब्दस्यावयववाचित्वेन संबन्धित्वादवयव्याकाङ्क्षायां संयोगेति संबध्यते । संयोगशब्दस्यापीह समुदायवाचित्वादवयवार्थकत्वेनावयव्याकाङ्क्षायां नाम्नो धातोश्चेति संबध्यते । संयोगान्तलोपापवादः । झसे त्वपूर्वो विधिः । झसे भ्रष्टा । पदान्ते अवाभ्रट् ॥ आद्योः किम् । धक्ष्यति । नक्ष्यति ॥ भृज्जतीति क्विप् । ग्रहामिति संप्रसारणम् । सौ परत्वात् षत्वे स्कोरिति सलोपे च सिलोपः । भृट् । सस्य श्चुत्वेन शः । शस्य झवे जबा इति जः । भृज्जौ ॥ वृक्षं वृश्चतीति क्विपि ग्रहामिति संप्रसारणं छशषेति षत्वं स्कोरिति सलोपः जबत्वचपत्वे । वृक्षवृट्–वृक्षवृड् । सुपि टनादिति धुट् । ततश्च षत्वम् । वृक्षवृट्त्सु । चान्तेषु वक्तुमुचितः ॥ विशेषेण भ्राजते इति विभ्राट् । षत्वविधौ राजिसाहचर्यात् भ्राजृ दीप्ताविति फणादिरेव गृह्यते । यस्तु राजृ भ्राजृ दीप्ताविति तस्य कुत्वमेव । विभ्राक्–विभ्राग् । विभ्राग्भ्यामित्यादि ॥ ऋतौ यजतीति ऋतावुपपदे यजेः क्विप् । यजादित्वात्संप्रसारणम् । कुत्वम् । ऋत्विक् ॥ ऊर्ज, बलप्राणनयोः । अस्माच्चुरादिञ्यन्तात् क्विपि ञिलोपः । ऊर्ज्जयतीति । सभिन्नस्येति । नियमात् न संयोगान्तलोपः । ऊर्क् ॥ इति जान्ताः ॥

( तत्त्वदी० )–स्कोराद्योश्चेति ॥ स् च क् चेति स्कौ तयोः स्कोः । आदिशब्दस्यावयविनि साकाङ्क्षितत्वेन संयोगशब्देन संबन्धः । संयोगशब्दोऽपि नामधातुभ्यां संबध्यते । अत्र रसे झसे पदान्ते इति पदत्रयमपि संयोगस्यैव विशेषणम् । न तु नामधातोः । स्कोरिति द्विर्वचननिर्देशात्स्कुञ् धातोः स्वरूपस्य वा न ग्रहणम् ॥ ऋत्विगिति ॥ ऋतौ यजते इति वाक्ये ऋतावुपपदे यजतेः क्विपि संप्रसारणे च रूपम् ॥ ऊर्क् इति ॥ ऊर्ज, बलप्राणनयोः । चुरादिञ्यन्तात्क्विपि ञिलोपे च रूपम् ॥

**तः ॥ त्यदादेस्तस्य सत्वं भवति सौ परे ॥ स्यः, त्यौ, त्ये ॥ सः, तौ, ते ॥ परमसः । संज्ञायां गौणत्वे चात्वसत्वे न ॥ त्यत्–त्यद्,**

त्यदौ ॥ अतित्यत्, अतित्यद्, अतित्यदौ ॥ यः, यौ, ये ॥ एषः, एतौ, एते । अन्वादेशे एनम्, एनौ, एनान् । एनेन । एनयोः । अग्निमत्–अग्निमद्, अग्निमथौ । अग्निमद्भ्याम् । अग्निमत्सु । प्रत्यञ्चतीति क्विपि कृते ॥

( सुबोधिनी )–तः ॥ त्यदादेरित्यतः त्यदादेरिति सौ स इत्यतः स इति साविति चानुवृत्तम् ॥ त्यदादेः किम् । तातः ॥ प्राधान्ये परमसः ॥ संज्ञायां गौणत्वे चात्वसत्वे न ॥ अत्वसत्वयोः सर्वाद्यन्तर्गणकार्यत्वादत्वं सत्वं च संज्ञायां गौणे च न प्रवर्तते । संज्ञायां त्यत्, त्यदौ । गौणे त्यमतिक्रान्तोऽतित्यद् ॥ इदमेतदोरित्यन्वादेशे एनदादेशः । एनमित्यादि ॥ इति दान्ताः ॥ ॥ अग्निं मन्थतीति क्विपि नलोप इति नलोपः । अग्निमत् ॥ इति थान्ताः ॥ ॥ प्रत्यञ्चतीत्यत्राञ्चेः क्विपि कृते ॥

( तत्त्वदी० )–त इति ॥ त्यदादेष्टेरित्यतस्त्यदादेरिति सौ स इत्यतः स इतिं सौ इति च पदद्वयमनुवर्तत इत्याशयेनाह । त्यदादेरित्यादि ॥ त्यदादेः किम् । तातः ॥ त इति किम् । यः ॥ सौ इति किम् । तौ ॥ ननु त्वमित्यत्र सत्वात्वे कुतो नेति चेत्सत्यम् तकारोच्चारणसामर्थ्यात् । अथातित्वमित्यत्र गौणत्वे तयोश्चरितार्थत्वमिति चेदोम् । शसि परत्वाभावात् ॥ साविति वक्तव्ये सिनेति गुरूकरणं वस्वसोरिव विभागसंमोहार्थम् । अत एव मितावागमौ न ॥

**नो लोपः ॥ धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपः क्ङिति परे ॥**

( सुबोधिनी )–नो लोपः ॥ हसान्तस्येति किम् । नीयते ॥ उपधाभूतस्यात किम् । हन्यते ॥

**( पूजार्थाञ्चतेर्न ) निरुपपदात् क्रुञ्चेः क्विपि क्रुङ्, क्रुञ्चौ । क्रुङ्भ्याम् । क्रुङ्क्षु–क्रुङ्षु–क्रुङ्खषु ॥**

( सुबोधिनी )–पूजार्थाञ्चतेर्न ॥ पूजार्थवाचिनोऽञ्चतेरुपधाभूतस्य नस्य लोपो न भवतिं किति ङिति च ॥ निरुपपदात् क्रुञ्चेः क्विपि न । निर्गत उपपदेभ्यः निरुपपदस्तस्मात् । उपपदरहितस्य क्रुञ्चेरुपधाभूतस्य नस्य लोपो न भवति क्विपि । क्रुञ्च कौटिल्याल्पीभावयोः ॥

( तत्त्वदी० )–निरुपपदादिति ॥ निर्गत उपपदेभ्यः निरुपपदम् तस्मात् । क्रुञ्चेः क्विपि परे तस्यैव नलोपो नेत्यर्थः ॥

**( अञ्चेः पुंसि पञ्चसु नुम् ) दिशाम् ॥ प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः। प्रत्यञ्चम्, प्रत्यञ्चौ ॥**

( सुबोधिनी )–अञ्चेः पुंसि पञ्चसु नुम् ॥ गत्यर्थस्याञ्चतेर्नुमागमः स्यात् पुंसि पञ्चसु ॥ नलोपे पुनर्नुमि कृते प्रत्यन् च सि इति स्थिते संयोगान्तलोपे सिलोपे

च नुमो नकारस्य दिशामिति कुत्वेन ङकारः । प्रत्यङ् । अनुस्वारसवर्णौ । प्रत्यञ्चौ ॥

( तत्त्वदी० )—अञ्चेरिति ॥ इकारनिर्देशस्तथा सति कित्त्वान्नलोपे अचेरित्येव स्यात् ॥ किं तूच्चारणार्थ इकारः ॥ प्रत्यङ्ङिति ॥ प्रत्यञ्चतीति क्विपि नो लोप इति नलोपे सौ नुमि कृते प्रथमं संयोगान्तलोपः न तु त्वं अकृतव्यूहपरिभाषया श्चुत्वाप्रवृत्तेः । नित्यत्वात्संयोगान्त एव तथा च लोपे नस्यैव ङकारः पञ्चमत्वेन साम्यात्प्रथमं चुत्वे खन्नित्यसिद्ध्यापत्तेश्च ॥

**अचेर्दीर्घश्च ॥** नलोप्यञ्चतेरकारस्य लोपः पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धितयस्वरयोरीपीकारे च ॥ प्रतीचः । प्रतीचा । प्रत्यग्भ्याम् । प्रत्यक्षु । तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः ॥

( सुबोधिनी )—अचेर्दीर्घश्च ॥ लुप्तनकारस्याञ्चतेरतो लोपो भवति ईपि ईकारे च ॥ प्रतीची । तद्धितयस्वरयोः प्रतीच्यः । प्रतीचीनः । अचेरिति नायमिक्प्रत्ययः । किं तूच्चारणार्थोऽयमिकारः । नलोपिनिर्देशो ज्ञापकः । इकः कित्त्वान्नलोपे कृतेऽचेरित्यस्योक्तार्थे ज्ञापनात् ॥ ननु पूर्वस्येति कस्माल्लब्धम् । उच्यते । दीर्घश्रुत्योपस्थितः स्वर एवात्र स्थानी शसादौ स्वरे इति लोपदीर्घयोर्निमित्तम् । सप्तमीनिर्देशात् पूर्वस्याव्यवहितस्य स्वरस्य दीर्घे प्राप्ते येन नाव्यवधानं तेन व्यवहितेऽपीति वचनप्रामाण्यात् चकारेण व्यवहितस्याप्यत्र दीर्घः । अचेरिति लोपस्य विषयेऽन्तरङ्गोऽपीयमिति यकारो न । अकृतव्यूहा इति परिभाषया । प्रतीचः । तिरोऽञ्चतीति सहादेरिति तिरसस्तिरिः । तियङ् ॥

( तत्त्वदी० )—अचेर्दीश्चेति ॥ लुप्तनकारनिर्देशात्पूजार्थसंग्रह इत्याशयेनाह—**नलोपिन** इत्यादि ॥ अचेरिति पाठे तु ज्ञापनासंभवः इकः कित्त्वेन सर्वथैव नलोपात् । उच्चारणार्थ इकार इत्याद्याश्रयणे तु भवत्यपि पूर्वस्य चेति शसादाविति परसप्तम्या निमित्तत्वेन पूर्वलाभः । न च चकारे व्यवधानेनेति वाच्यं येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् चकारैकवर्णव्यवधानेऽपि भवत्येव अकृतव्यूहपरिभाषया पूर्वं न यत्वम्

**॥ तिरश्चादयः ॥** तिरश्चादयो निपात्यन्ते शसादौ स्वरे तद्धितयस्वरयोरीपीकारे च ॥ तिरश्चा । तिर्यग्भ्याम् । तिर्यक्षु ॥ उदीचः । उदग्भ्याम् । उदक्षु । पितरमञ्चतीति । पित्रङ्, पित्रञ्चौ ॥

( सुबोधिनी )—तिरश्चादयः ॥ सिद्धरूपनिर्देशो निपातनम् । एते निपात्यन्ते ईपि ईकारे च ॥ तिरश्ची । तद्धितस्य स्वरे यकारे च तिरश्चीनः उदीच्यः ॥ तिरश्चादिरिति सूत्रणीयम् । आदिशब्दादुदीच इति । बहुवचनं तु व्यर्थम् । तृतीयस्याभावात् । पदादयः षोडशादेशाः न तु पृथक्शब्दा इति पक्षाश्रयणे तु वचनस्य सार्थक्यं बोध्यम् ॥ उदञ्चतीति उदङ् ॥

( तत्त्वदी० )—**तिरश्चादय** इति ॥ ननु मास्तु निपातनं अञ्चतौ सहादेः सादिरिति सूत्रेण तिर्यादेशः । स तु अल्लोपे निमित्ताभावे नैमित्तिकाभावादेव रूपसिद्धेरिति चेत्सत्वं अञ्चतेर्निमित्तत्वेन अलोपेऽप्येकदेशविकृतन्यायेन तत्सत्त्वान्निमित्ताभावत्वाभावात् । तिरश्चादिरिति तु युक्तं तिरश्च उदीच इति शब्दद्वयं प्रवृत्तिदशनात् । तृतीयस्यादर्शनात् बहुवचन व्यर्थमिति वृद्धाः ॥

**( ऋता दीर्घो न ) पितृचः । पितृग्भ्याम्, पितृग्भिः । पितृक्षु ॥ सध्र्यङ् । सध्रीचः ॥ सम्यङ् । समीचः ॥ प्राङ् । प्राचः ॥ पूजायां तु प्रत्यञ्चः । प्रत्यञ्चा । प्रत्यङ्भ्याम् । प्रत्यङ्क्षु-प्रत्यङ्ख्षु—प्रत्यङ्षु॥ उदञ्चः । उदङ्भ्याम् ॥ तिर्यञ्चः । तिर्यङ्भ्याम् ॥ सम्यञ्चः । सध्र्यञ्चः। प्राञ्चः । प्राञ्चा । सहादेः सादिः ॥ अमुमञ्चतीति अमुमुयङ् । अमुमुईचः । अमुमुयग्भ्याम् । अदसुयङ् । अदद्र्यङ् ॥ पूजायां तु अमुमुयञ्चः । अमुमुयङ्भ्याम् । अदसुयञ्चः । अदद्र्यञ्चः ॥ मरुतः । मरुद्भ्याम् ॥ उगितो नुम् । न्सम्महतोऽधौ दीर्घः शौ च महान्, महान्तौ, महान्तः । हे महन् ॥**

( सुबोधिनी )—**ऋतो दीर्घो न** ॥ ऋकारस्य दीर्घो न भवति । लुप्ताकारनकारेऽञ्चतौ परेऽपि । ऋचः । सहाञ्चतीति सहादेरिति सहस्य सध्रिः । सध्र्यङ् ॥ समञ्चतीति सहादेरिति समः समिः । सम्यङ् ॥ प्रकर्षेणाञ्चतीति प्राङ् । पूजार्थस्याञ्चतेस्तु प्रत्यञ्चति पूजयतीति क्विपि पूजार्थाञ्चतेरिति नलोपाभावः अत एव नुम् न । प्रत्यङ् । शसि नलोपाभावादकारलोपो न । प्रत्यञ्चः । सुपि प्रत्यञ्च सु इति स्थिते दिशामिति कुत्वात् प्राक् संयोगान्तस्येति चलोपे नस्य कुत्वेन ङकारे च कृते ङ्णोरिति कुक् षत्वम् । प्रत्यङ्क्षु । शस चपरस्येति पक्षे खकारः । प्रत्यङ्ख्षु । कुगभावे प्रत्यङ्षु ॥ एवं पूजार्थे तिर्यङ्ङादयः ॥ विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । चाददसो ग्रहणम् । अनयोरदसश्च टेरद्र्यादेशः स्यात् वप्रत्ययान्तेऽञ्चतौ परे ॥ अमुमञ्चतीति विग्रहे अदस् अञ्च् इति स्थिते अद्र्यादेश अदद्रि अच इति यत्वम् । अदसोसेर्दादुदो मः । असेरिति इकार उच्चारणार्थः । असकारान्तस्यादसो दात्परस्य उदूतौ भवतः दस्य मश्च । उ इति ह्रस्वदीर्घयोः समाहारः ह्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य च दीर्घो भवति ॥ असान्तस्येति किम् । अमुमात्मन इच्छति अदस्यति ॥ दात्परस्येति किम् । अमुया इत्यत्रान्तस्य यस्य माभूत् । दकाराकारयोर्दकाररकारयोश्च मुत्वे अमुमुयङ् । शसि अचेरित्यतो लोपे दीर्घे च अमुमुईचः । मुत्वस्यासिद्धत्वान्न वत्वम् । अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषां वदतां मते परस्य दकाररकारस्यैव मुत्वम् । अदस इति स्थाने षष्ठी । एवं हि षष्ठीनिर्दिष्टस्येति परिभाषोपतिष्ठते । अदसो ऽोऽन्त्यः स

दात् परो यः सोऽदसोऽन्त्यः। एवमन्त्यबाधेऽन्त्यसमीपस्य भवतीति दकाररकारयोर्मुत्वे अदमुयङ्। अः अकारः सेः सकारस्य स्थाने यस्य स असिरिति व्याख्याने त्यदाद्यत्वविषये एव मुत्वं नान्यत्रेति। पक्षे उभयत्र मुत्वं न। अदद्र्यङ्। वार्तिककृतोक्तं च। "अदसोद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्। केचिदन्त्यसदेशस्य नेत्येके सेर्हि दृश्यते॥ १॥" अदसो दकाराकारयोरद्र्यादेर्दकाररकारयोश्च पृथङ् मुत्वं केचिदाचार्या इच्छन्ति लत्ववत्। यङन्तस्य चलीक्लृप्यते इत्यस्योभयोः कृपो रो ल इत्यनेन यथा लत्वं तथेत्यर्थः॥ अन्त्यसदेशस्य दकाररकारस्य मुत्वं केचिदिच्छन्ति। अः अकारः सेः सकारस्य स्थाने यस्य सोऽसिस्तस्य असेः। त्यदाद्यत्वविशिष्टस्यादसो हि मुत्वं दृश्यते इति केचिद्वदन्ति। तन्मते उभयोर्मुत्वं न। त्यदाद्यत्वाभावात्। एवं चामुद्र्यङ् इति केषांचिदुदाहरणं तद्भाष्येऽनुक्तत्वादुपेक्ष्यमिति भावः॥ इति चान्ताः॥॥ 'मरुतौ पवनामरौ' इत्यमरः॥ मह, पूजायाम्। मह्यते पूज्यते इति महान्। कर्मणि तृप्रत्ययः। ऋदित्वान्नुम्। न्सम्महत इति दीर्घः। सिलोपे संयोगान्तलोपे च महान्॥

( तत्त्वदी० )—ऋत इति॥ एतद्बीजं तु दीर्घग्रहणात् संज्ञापूर्वको विधिरनित्य इति ऋता न दीर्घः॥ अमुमुयङिति॥ अमुमञ्चतीति वाक्ये क्विपि अदस् अम् अञ्च क्विप् इति स्थिते क्विपा-रित्यालोपे वेरिति वलोपे समासप्रत्यययोरिति अम्लोपे नामसंज्ञायां स्यादौ अदस् अन्च् सि इति स्थिते। अद्र्यादेशमुत्वे नलोपे नुमागमे सिलोपे नस्य ङत्वेन रूपसिद्धिः। अदमुयङ्। अदद्र्यङ्। इति विकल्पस्त्वित्थम् उभयत्र मुत्वं लत्ववत्। तथा चलीक्लृप्यते इत्यत्र लत्वाद्दस्य म। इत्यत्र अन्त्यस्य दस्येति व्याख्यानेऽन्त्यबाधेऽन्त्यसदेशस्येति परिभाषामाश्रित्य परस्यैवात्वम्। तत्रैवोक्तम्। केचित्तु दो म इति वक्तव्ये दस्येति सस्वरदकारोक्तिर्ज्ञापयति। त्यदाद्यत्वविषय एव मत्वं प्रकृते तदभावान्नेति। उक्तं च। "अदसोद्रेः पृथग् मुत्वं केचिदिच्छन्ति लत्ववत्। केचिदन्त्यसदेशस्य नेत्येके सेर्हि दृश्यते॥" अमुमुईच इति॥ संज्ञापूर्वस्य विधेरनित्यत्वाच्च वत्वम्। यद्वा मुत्वस्यासिद्धत्वात्॥

**( द्विरुक्तानां जक्षादीनां च शतुर्नुम् न शौ वा )** ददत्। एवं जक्षत्। जाग्रत्। दरिद्रत्। चकासत्। शासत्।

( सुबोधिनी )—द्विरुक्तानां जक्षादीनां च शतुर्नुम् न शौ वा॥ द्विरुक्तधातुभ्यो जक्षादिभ्यश्च परस्य शतुर्नुम् न स्यात् शौ परे तु वा। ददातीति दाञः शतृप्रत्यये अप् ह्वादेरित्यपो लुक् द्वित्वं च ह्रस्व इति पूर्वस्य ह्रस्वः। दादेरित्यालोपः। ददत्। एवं जक्षतीति जक्षत्॥ जागर्तीति जाग्रत्॥ दरिद्रातीति दरिद्रत्। दरिद्रातेरित्यालोपः॥ चकास्तीति चकासत्॥ शास्तीति शासत्॥

( तत्त्वदी० )—द्विरुक्तानामिति॥ आगमशास्त्रस्यानित्यत्वादिति भावः॥

**अत्वसोः सौ॥** अत्वन्तस्य धातुभिन्नासन्तस्य चोपधाया दीर्घो भवति सावधौ॥ भवान्, भवन्तौ, भवन्तः। हे भवन्॥ चंद्रमाः;

चंद्रमसौ ॥ अधात्वसंतस्य किम् । चीवराणि वस्तेऽसौ चीवरवः ॥ शत्रन्तस्य तु अत्वन्तत्वाभावान्न दीर्घः । भवन्, भवन्तौ ॥ पचन् ॥ दीव्यन् ॥ धीमान् । हे धीमन् । धीमन्तौ ॥ मघवान्, मघवन्तौ । मघवद्भ्याम् ॥ गुप्-गुब्, गुपौ, गुपः । गुब्भ्याम् । तादृक्, तादृशौ, तादृशः । तादृक्षु ॥ एवं यादृगादयः ॥

( सुबोधिनी ) अत्वसोः सौ ॥ अतुश्च अस् च तौ अत्वसौ तयोः । नोपधाया इत्यत उपधाया इत्यनुवर्तते । अतुरिति मतुवतुक्तवत्वादीनामवयवो गृह्यते केवलस्य प्रत्ययस्याभावात् । अस्त्वर्थवाननर्थकोऽपि अतु इत्युकारानुबन्धस्यानुकरणाच्छत्रन्तस्य दीर्घो न अत्वन्तस्य धातोर्दीर्घः । गोमन्तमिच्छति गोमानिवाचरति वा इति इच्छार्थक्यन्तात्, आचारक्विबन्ताद्वा कर्त्तरि क्विप् । ततो अल्लोपयलोपौ । गोमान् । अधातोरित्यनुवर्त्य असन्ते योज्यम् । तेनासन्तस्य नाम्न उपाधाया दीर्घोऽधौ सौ । अत एव चानर्थकस्याप्यसो ग्रहणम् । भातेर्डवतुरिति डवतुप्रत्ययान्तो भवच्छब्दः । नित्यमपि नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः ततो नुम् । भवान् । शसादौ महद्वत् । असन्तस्तु चन्द्रमस्शब्दः । धात्वसन्तस्योपधाया दीर्घो न । यथा । 'वस आच्छादने' क्विप् । चीवरवः । भवतीति शतृप्रत्ययान्तस्यातुइत्युकारानुबन्धत्वाभावाद्दीर्घो न । त्रितो नुमिति नुम् । भवन् । एवं पचतीति पचन् ॥ दीव्यतीति दीव्यन् ॥ अत्वन्तस्याधातोर्यथा । धीरस्त्यस्येति धीमान् । अस्त्यर्थे मतुरिति मतुः ॥ मघशब्दाद्वतुप्रत्यये मघवच्छब्दः । उपधादीर्घादि प्राग्वत् । "हविर्जक्षिति निःशङ्को मखेषु मघवानसौ" इति भट्टिः ॥ वत्वन्तत्वाभावे महेर्हस्य घो वुगागमः कन्प्रत्ययश्चेत्येतत्त्रितये निपातनात्कृते मघवन्शब्दः श्वादेरित्यत्रोक्त एव ॥ इति तान्ताः ॥ ॥ गोपायतीति गुप् । क्विबन्तः । अयादयोऽनपीति वैकल्पिकत्वादिहायप्रत्ययाभावः । आयप्रत्ययपक्षे तु यत इत्यल्लोपे यलोपे च गोपा इति रूपं बोध्यम् ॥ इति पान्ताः ॥ ॥ तमिव पश्यतीति दृशेष्टकसकाविति चकारात् क्विप् । आ सर्वादेरित्यात्वम् । दिशामिति कुत्वम् । तादृक् ॥

( तत्त्वदी० )-अत्वसोः साविति ॥ अतुश्च अस् च अत्वसौ तयोः । अतुरत्र प्रत्ययावयवः केवलस्यासंभवात् । असतुवन्निरर्थकोऽपि । अतुग्रहणसामर्थ्यात्प्रथमं दीर्घः पश्चान्नुम् । अन्यथा तुग्रहणं व्यर्थं स्यात् । अत्वन्तस्य धातोरपि । गोमन्तमिच्छन् गोमानित्यत्र यथा । अधातोरित्यनुवृत्तं तु अनन्तरत्वादस् इत्यनेनान्वेति इत्यभिप्रेत्याह-**अधात्वसन्तस्येति** ॥ धातुभिन्नासन्तस्येत्यर्थः ॥

**( नशेः ) को वा पदान्ते स्यादा झसे च ॥ नक्-नग्-नट्-नड्, नशौ, नशः । नग्भ्याम्-नड्भ्याम् । नक्षु-नट्सु ॥ विट्-विड्, विशौ, विशः ॥ स्पृक्-स्पृग्, स्पृशौ, स्पृशः ॥ घृतस्पृक् ॥ उदक्-**

**पूर्वस्य न कुत्वम् । उदकस्पृट्, उदकस्पृड्, उदकस्पृशौ ॥ दधृक्-दधृग्, दधृषौ । दधृक्षु ॥ रत्नमुट्-रत्नमुड्, रत्नमुषौ । रत्नमुड्भ्याम् ॥ षषशब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः । जश्शसोर्लुक् । षट्-षड् ॥**

( सुबोधिनी )-नशेः ॥ नशेः कवर्गान्तादेशो वा स्यात् स्यादौ झसे पदान्ते च । णश, अदर्शने । क्विप् षत्वं जबत्वचपत्वे । नट्-नड् । कत्वे तु नक्-नग् ॥ 'विश, प्रवेशने' क्विप् । षत्वं जबत्वचपत्वे विट्-विड् ॥ घृतं घृतेन वा स्पृशतीति घृतस्पृक् ॥ उदकपूर्वस्य न कुत्वम् । उदकपूर्वस्य स्पृशेस्तु दिशामिति कुत्वं न उदकं स्पृशतीति षत्वम् । उदकस्पृट् ॥ इति शान्ताः ॥ ञिधृषा, प्रागल्भ्ये । अस्मात् क्विप् द्वित्वम् । निपातनात् दिशामिति कुत्वम् । धृष्णोतीति दधृक् ॥ मुष, स्तेये । रत्नानि मुष्णातीति रत्नमुट् ॥ जश्शसोरिति जश्शसोर्लुक् डत्वम् । जबत्वचपत्वे । षट्-षड् । डत्वे षड्भिः । आमि ष्ण इति नुटि कृते षस्य डत्वं नस्य च ष्टुत्वम् ॥

**ड् णः ॥ डकारस्य णो भवति नामि परे ॥ षण्णाम् । षट्सु-षट्त्सु । परमषट्-परमषड् । परमषण्णाम् ॥ गौणत्वे तु प्रियषट् ॥ प्रियषषः । प्रियषषाम् ॥**

( सुबोधिनी )-ड् णः ॥ डकारस्य चपेष्वनन्तर्भूतत्वादपदान्तत्वाच्च ञमे ञमा वेत्यस्याप्राप्तौ सत्यामारम्भः । आगमा यद्गुणीभूता इति परिभाषया नुटः प्रत्ययावयवत्वात् । प्रत्ययञमे इत्यनेन ञमत्वस्वीकारे व्यर्थमिदम् । नादिति धुटि षट्त्सु । तदन्तेऽप्ययं विधिर्वाञ्छितः । परमाश्च ते षट् च परमषट् तेषां परमषण्णाम् । षडर्थप्राधान्ये एव लुग्नुटौ न तु गौणत्वे । प्रियाः प्रियाणि वा षट् येषां ते प्रियषषः तेषां प्रियषषाम् ॥

( तत्त्वदी० )-ड् ण इति ॥ ड् ण इति छेदः । षशब्दस्य डत्वे प्रथमैकवचनमित्याशयेनाह-ड् इति ॥ संख्याया इत्यनुवृत्तेः षष्ठीनिर्दिष्टत्वादन्त्यस्यैव नाद्यस्येति भावः ॥ संख्यायाः किम् । सजुषाम् ॥

**दोषाम् ॥ दोषादीनां रो भवति रसे पदान्ते च ॥ दोः, दोषौ । शसादौ वा दोषन् ॥ दोष्णः दोर्भ्याम्-दोषभ्याम् ॥**

( सुबोधिनी )-दोषाम् ॥ जबचपविसर्गाणामपवादः । बहुवचनमाद्यर्थम् । दाम्यतीति दोः । दमेडासीति डोस् प्रत्ययः । डित्वाट्टिलोपः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः ॥ पाददन्तेति वा दोषन्नादेशः । शसादौ अल्लोप इत्युपधालोपः । णत्वम् । दोष्णः ॥

( तत्त्वदी० )-दोषामिति ॥ बहुवचनमाद्यर्थम् ॥ व्युत्पत्तिपक्षे ओसि सुप्रत्ययान्तानां स्रोर्विसर्ग इति विसर्गेणैव सिद्धिस्तथापि सजुष्शब्दस्य परत्वदीर्घार्थम् तुसुपिसोस्तु रत्वे दीर्घार्थं सूत्रकरणम् ॥

**( विसर्गनुम्स्थानिकानुस्वारव्यवधानेऽपि )** किलात्परस्य सस्य षः ॥ दोःषु-दोष्षु-दोष्षु ॥ य्वोर्विहसे । पिपठीः, पिपठिषौ । पिपठीर्भ्याम् । पिपठीःषु ॥ विविट्-विविड्, विविक्षौ, विविक्षः ॥ तट्-तड्, तक्षौ, तक्षः । गोरट्-गोरड्, गोरक्षौ, गोरक्षः ॥ तक्षिरक्ष्योः संयोगान्तलोप इत्येके । तक् तग् ॥ गोरक्-गोरग् ॥

( सुबोधिनी )-विसर्गनुम्स्थानिकानुस्वारव्यवधानेऽपि ॥ किलात्परस्य सस्य षः ॥ किलादिति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनम् । एतद्व्यवधानेऽपि आभ्यां परस्य सस्य षः स्यात् । सुपि रुत्वविसर्गयोः कृतयोः शसे वेति विकल्पात् पक्षे सकारस्तस्य षत्वम् । सुपः सस्य तु ष्टुत्वम् । दोष्षु । विसर्गपक्षे विसर्गनुमिति षत्वम् । दोःषु । नाम्नो न इति नलोपे दोष्षु ॥ नुम्स्थानिकानुस्वारेति व्याख्यानान्नेह । सुहिन्सु ॥ पुंसु ॥ पिपठिषतेः क्विपि यत इत्यल्लोपे कृत्तद्धितेति स्याद्युत्पत्तौ पिपठिष् सि इति स्थिते परत्वाद्रेफे कृते सिलोपे च दीर्घः । पिपठीः ॥ विश, प्रवेशने । अस्मात्सः नानिटिस इति गुणाभावः द्वित्वादि विवक्षिते क्विप् स्कोरिति कलोपः । जबत्वचपत्वे । विविट्-विविड् ॥ तक्षू, तनूकरणे । अस्मात् क्विप् । स्कोरिति कलोपे तट्-तड् ॥ गां रक्षतीति क्विप् । स्कोरिति कलोपे गोरट् । ताक्षिरक्ष्योः संयोगान्तलोप इत्येके । स्कोरिति कलोपो न । किंतु संयोगान्तलोप इत्यर्थः ॥

( तत्त्वदी० )-पिपठीरिति ॥ पठितुमिच्छति पिपठिषति । पिपठिषतीति क्विपि रुत्वे दीर्घे च पिपठीरिति ॥

**( कलोपे कुत्वमसिद्धम् )** पिपक्-पिपग्, पिपक्षौ, पिपक्षः । पिपक्षु ॥ एवं विवक् । दिधक् ॥ सुपीः, सुपिसौ । सुपीःषु ॥ एवं सुतूः ॥ विद्वान्, विद्वांसौ, विद्वांसः । हे विद्वन् ॥

( सुबोधिनी )-कलोपे कुत्वमसिद्धम् ॥ स्कोरिति कलोपे कर्तव्ये चोः कुरिति कुत्वस्यासिद्धत्वं वक्तव्यम् । अन्यथा स्कोरिति कलोपः स्यादित्यर्थः ॥ पक्तुमिच्छतीति पिपक् ॥ संयोगान्तलोपः । वक्तुमिच्छतीति विवक् ॥ दह, भस्मीकरणे । दादेरिति घः । आदि जबानामिति धः । दग्धुमिच्छतीति दिधक् ॥ इति षान्ताः ॥ ॥ पिस, गतौ ॥ सुष्ठु पेसतीति सुपीः ॥ तुस, खण्डने । सुष्ठु तोसतीति सुतूः । क्विबन्तः ॥ वेत्तीति विदेर्वा वसुरिति शतृस्थाने वसुः । अदादित्वादपो लुक् । अपित्तादिर्ङिदिति ङित्वान्नोपधागुणः । उदित्त्वान्नुम् । न्सम्महत इति दीर्घः संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । विद्वान् ॥

**वसोर्व उः ॥** वसोर्वकारस्य उत्वं भवति शसादौ स्वरे तद्धितयस्वरमतुप्स्वपीकारे च ॥ विदुषः। विद्वद्भ्याम् । विद्वत्सु ॥ सेदिवान् । वस्योत्वे इडभावः। सेदुषः। सेदिवद्भ्याम् ॥ ऊषिवान्। ऊषुषः । ऊषिवद्भ्याम् ॥ शुश्रुवान्। नुधातोः। शुश्रुवुषः। शुश्रुवद्भ्याम्॥ महच्छब्दसाहचर्यादधातोर्न्स् गृह्यते। नेह। सुहिन्, सुहिन्सौ। सुहिन्भ्याम। सुहिन्सु ॥ ध्वत्। ध्वसौ। वसां रसे। ध्वद्भ्याम् ॥ एवं स्रत् ॥

( सुबोधिनी )–वसोर्व उः ॥ अचास्थ्नामित्यतः शसादाविति वादीपोरित्यतईईपोरिति चानुवर्तते तद्धितयस्वरमतुप्ष्विति च। व्याख्यानात्। वसुक्वसोर्वकार उकारः स्यात् ॥ तद्धिते वैदुषः। अण्। वैदुष्यम्। यण् ॥ मतौ विदुष्मान् ॥ ईईपोर्विदुषी ॥ सस्वरस्य वस्योत्वम्। यवराणामिति पृथङ् निर्देशात्। वसामिति दत्वम्। विद्वद्भ्याम् ॥ ससादेति सदः क्वसुः। द्विश्चेति द्वित्वम्। पूर्वस्येति हसादिः शेषः। लोपः पचामित्येत्वपूर्वलोपौ । द्वित्वे सत्येकस्वरादितीट्। उदित्वान्नुम्। न्सम्महत इति दीर्घः। सेदिवान् ॥ वस्योत्व इडभावः। निमित्ताभावे नैमित्तिकस्याप्यभाव इत्युक्तत्वात्। वकाराभावे इडभावः। एवमुवासेति ॥ यजामिति संप्रसारणं णवादौ पूर्वस्येति पूर्वस्य संप्रसारणं दीर्घत्वं घसादेरिति षः। ऊषिवान् ॥ शुश्रावेति शुश्रुवान्। नुधातोरित्युव्। शुश्रुवुषः ॥ सुष्ठु हिनस्तीति न्सम्महत इति सूत्रे महत्साहचर्याद्धातोर्न्सन्तस्य न दीर्घः। अधातोरित्यनुवृत्तेर्वा । ततश्च संयोगान्तलोपस्यासिद्धत्वान्नोपधादीर्घः। सुहिन्। टनादिति वा धुट्। सुहिन्त्सु ॥ ध्वंसते इति ध्वत्। स्रंसु, ध्वंसु, अवस्रंसने। ध्वंसु, गतौ च। आभ्यां क्विप्। नो लोप इति नलोपः। वसामिति दत्वम्। ध्वद्भ्याम् ॥

( तत्त्वदी० )–वसोर्वउरिति ॥ अत्र वसुक्वसोः सामान्यग्रहणम्। एकानुबन्धग्रहणे द्व्यनुबन्धकस्य ग्रहणं नेति पारिभाषा तु नेहाश्रीयते उकारसहितस्य विधानात् । तथा हि। विदेर्वसुरिति सूत्रेण शतुर्वसुरादेशो विधीयते तत्र स्थानिनः शतुः ऋत्वादेव त्रित्कार्ये सिद्धे पुनरादेशे उदित्करणं व्यर्थमिति ज्ञापयति। वसुग्रहणेन क्वसोरपि ग्रहणं यथा स्यादिति । अल्लोप इति सूत्राच्छशादाविति लभ्यते। तत्रादिशब्दः प्रकारे। तेन यादिग्रहेपीत्याह ॥ **तद्धितेत्यादि ॥**

**पुंसोऽसुङ् ॥** पुंसोऽसुङादेशः पुंसि पञ्चसु शौ च ॥ पुमान्, पुमांसौ, पुमांसः। हे पुमन्। पुंसः। पुंभ्याम्। पुंसु ॥ वेधाः, वेधसौ। हे वेधः। वेधोभ्याम् ॥

( सुबोधिनी )–पुंसोसुङ् ॥ सो नः पुंस इत्यतो मण्डूकप्लुत्या पुंस इत्यनुवर्तते। न्सम्महत इत्यतः सिंहावलोकितन्यायेन शावित्यपकृष्यते। पुँल्लिङ्गस्य पुम्सशब्दस्या-

सुङ् स्यात् पञ्चसु । ङित्वादन्तादेशः । पातेर्डुम्सुरित्यौणादिक डुम्सुप्रत्ययस्योदित्त्वात् । तेनैव नुमि सिद्धे असुङ् उकार उच्चारणार्थः । शौ प्रियपुमांसि ॥ अधावित्युक्तत्वात् न्सम्महत इति न दीर्घः । हे पुमन् ॥ सुपि संयोगान्तलोपे मोऽनुस्वारः । नुम्स्थानिकानुस्वारव्यवधानेऽपीत्युक्तत्वान्न षत्वम् । पुंसु ॥ विधाञो वेध चेत्यसुप्रत्ययः । अत्वसोरिति दीर्घः । वेधाः विश्वसृट् ॥

( तत्त्वदी० )–पुंसोऽसुङिति ॥ अत्र न्सम्महत् इति सूत्रात्सिंहावलोकितेन शौ चेत्यपकृष्यते । सो नः पुंस इत्यतो मण्डूकप्लुत्या पुंस इत्यनुवर्तते ॥ उकारस्तूच्चारणार्थः । पुंसो डुम्सुः इति प्रत्यये उदित्त्वेन नुम्सिद्धेः । पुंसः पुम्सीति सिद्धेऽसुङ्करणमन्यतोऽपि विधानार्थम् । तेन जराशब्दे सिद्धम् । पुंस्विति संयोगान्तलोपे मोऽनुस्वारः । नुम्विसर्गैरिति न षत्वं नुम् स्थानिकानुस्वारस्यैव ग्रहणात् ॥

**उशनसाम् ॥ उशनस्पुरुदंशस्अनेहसां सेरधेर्डा ॥ उशनाः, उशनसौ, उशनसः ॥**

**( उशनसो धौ नान्तता अदन्तता वा वाच्या ) हे उशनन्–हे उशन–हे उशनः । उशनोभ्याम । उशनस्सु ॥**

( सुबोधिनी ) उशनसाम् ॥ बहुवचनमाद्यर्थम् ॥ सेर्डाधेरित्यनुवर्तते । 'उशना भार्गवः कविः' इत्यमरः ॥ धौ नान्तत्वेऽदन्तत्वे सान्तत्वे च रूपत्रयं भवति । उक्तं च । 'संबोधने' इत्यादि । सान्तम् । सस्य नकारादेशेनान्तं सस्य लोपेऽदन्तम् इगन्ते इदन्तं उदन्ते ऋदन्ते च क्लीबे धौ गुणमिति ॥ पुरु बहु दंशतीति पुरुदंशा इन्द्रः ॥ नञि हन एह चेत्यसुप्रत्यये अनेहाः कालः ।

( तत्त्वदी० )–उशनसामिति ॥ बहुवचनमाद्यर्थम् ॥ अत्राहुः । उशनेत्यत्र संज्ञापूर्वकत्वान्नोपधाया इति दीर्घो नेति । अत्रेदमवधेयम् । इयं शङ्का ठिलोपे कृतेऽकृते वा । नाद्यः । तत्र नान्तत्वाभावात्सान्तस्यैव दर्शनात् । द्वितीयेऽपि नान्तस्यं नाम्न इति व्याख्यानात् । तत्र नित्यमिति संबन्धात् नित्यं नाम्न इति लाभात् । प्रकृते तदभावादेव नेति विचारः ॥

**सौ सः ॥ अदसो दस्य सः सौ ॥**

( सुबोधिनी )–सौ सः ॥ मत्वापवादः ॥

( तत्त्वदी० )–सौ स इति ॥ अत्र त्यदादेष्टेरिति सूत्रात्त्यदादेरित्यस्यानुवृत्तेर्विवरणे त्यदादेर्दस्येत्येवोचितं न त्वदस इति ।: यदि तु त्यदादेरदस इति व्याख्यायते तदा न दोषः ॥ त्यदादेः किम् । वन्दः । नन्दः ॥ दस्य किम् । यः ॥ सौ किम् । अमूनि ॥ स इत्यकारसहितत्वान्नान्यस्य ॥

**सेरौः ॥ अदसः सेरौर्भवति ॥ असौ । दस्य मः ॥**

( सुबोधिनी )–सेरौः ॥ अदसः परस्य सेरौः स्यात् ॥ असौ । अत्र वाशब्दमनुवर्त्य व्यवस्थितविकल्प आश्रयणीयस्तेन अकसहितस्यादसः सेरौत्वऔत्वाभावे सात्प–

रस्य उत्वं च वक्तव्यम्। असुकौ असुक इति। स्त्रियाम् असुकौ। औत्वाभावे असुका। अमुक इति अमुकी इति च प्रयोगोऽसाधुरेव। अथ कथममुकगोत्रस्याऽमुकशर्मण इति अपभ्रंश एवायमिति प्राञ्चः। अमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषये एव प्रयुज्यते इन्यन्ये ॥

(तत्त्वदी० )—**सेरौरि**ति॥ ननु स्त्रियामकारान्तस्यासक्ताविति कथम्। काप्यत इतीत्वेन भवितव्यमिति चेत्सत्यम्। ङेरौ डिदित्यतो डिदित्यनुवृत्तेर्डित्त्वाट्टिलोपे रूपसिद्धेः। अत्र वेत्यनुवृत्ते- स्तस्य व्यवस्थिततत्वाश्रयणात्। साकाददसः सेरौत्वं वा। औत्वाभावे साधुत्वं न। असुकः। तन्मध्य पतितस्य तद्ग्रहणेन ग्रहणात् साकस्यापि त्यदादिकार्यम्। कथममुकगोत्रस्य अमुकगोत्रं इति चेत्। अपभ्रंश एवायमिति दीक्षिताः॥ रामाश्रमास्तु। अमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषये प्रयुज्यते। केवलस्य तु अदकुस्शब्दस्यैव प्रयोगः। अमुक इत्येकवचने तु यदि शिष्टप्रयोगस्तदा साधुः नो चेत् असाधुरेव। अमुकशब्दस्य तु वृत्तिविषये प्रयोगाभ्युपगमो युक्त एवेति। यद्यपि सामान्येऽकः स्यादित्यकच्चेति व्युत्पादितस्तथा तत्तस्य प्रयोगः समास एव न स्वतन्त्रस्येत्याहुः। तत्रेदमवधेयम्। इत्थं हि महानिबन्धानामृषिवाक्यानां च गतौ सत्यां नाप्रामाण्यमापादनीयमिति स्वोक्त्यैव शिष्टप्रयोग- निष्पत्तिश्चेत्पुनर्यदि विशिष्टप्रयोग इत्यादिसंशयोक्तिर्विरुद्धेति॥

**मादू ॥ अदसो मात्परस्य उश्च ऊश्च भवति ॥ अमू। जसि ॥**

(सुबोधिनी )—**मादू** ॥ उश्च ऊश्चानयोः समाहार ऊ। संज्ञापूर्वकत्वान्न ह्रस्वः ॥

(तत्त्वदी० )—**मादू** इति॥ मात् उ ऊ इति च्छेदः। समाहारे ह्रस्वत्वापत्तेः। यद्वास्तु समा- हारः ह्रस्वत्वस्य तु संज्ञापूर्वकत्वात्। अनित्यत्वात् अत्राहुः।मादिति पञ्चमीनिर्देशात्परः स्थानी लभ्यते। स च हसः स्वरश्च मात्परस्य हसस्यासंभवात्स्वर एव गृह्यत इति। अत्रेदमवधेयम्। अमुमुयङ् इत्यत्र मात्परस्य रेफरूपहसस्योत्वदर्शनात्। हसस्यासंभवात्स्वर एव गृह्यत इत्युक्तिर्निर्मूला। तथा चोक्तं दीक्षितैः। ह्रस्वव्यञ्जनयोर्ह्रस्वः दीर्घस्य तु दीर्घ इति। व्यञ्जनस्यासंभवे कथमिदं संगच्छते इति॥

**एरी बहुत्वे ॥ अदस एकारस्येर्भवति बहुत्वे सति ॥ अमी। अमुम, अमू, अमून्। अमुना, अमूभ्याम्, अमीभिः। अमुष्मै। अमुष्मात्। अमुष्य, अमुयोः, अमीषाम्। अमुष्मिन, अमुयोः, अमीषु॥ ॥ इति हसान्ताः पुँल्लिङ्गाः ॥**

(सुबोधिनी )—**एरी बहुत्वे** ॥ अदसः किम्। ते॥ एः किम्। अमून्॥ बहुत्वे किम्। अमुयोः॥ ॥ इति सुबोधिन्यां हसान्ताः पुँल्लिङ्गाः॥

(तत्त्वदी० )—**एरी** बहुत्व इति॥ बहुत्वे किम्। अमुयोः॥

श्रीरामकरपौत्रेण लोकेशाकरशर्मणा। कृतायामिह टीकायां पुँल्लिङ्गोऽगाद्धसान्तकः॥

इति तत्त्वदीपिकायां हसान्ताः पुँल्लिङ्गाः॥

# अथ हसान्ताः स्त्रीलिङ्गाः ।

**नहो धः ॥** नहो हस्य धो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ उपानत्-उपानद् । उपानद्भ्यान् । उपानत्सु ॥ उष्णिक्-उष्णिग्, उष्णिहौ, उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु ॥ द्यौः, दिवौ । द्युभ्याम् । द्युषु ॥ गीः, गिरौ । गीर्भ्याम् । गीर्षु ॥ एवं पुर्धुरादय ॥ चतस्रः ॥ प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः । हे प्रियचत्वः ॥

( सुबोधिनी )-नहो धः ॥ ढस्यापवादः । हो ढ इत्यतो हस्येत्यनुवर्तते । उपपूर्वान्नहेः क्विप् । नहिवृतीति पूर्वपदस्य दीर्घः । उपनह्यते इति उपानत् ॥ उत्पूर्वात् ष्णिह प्रीतावित्यस्मात् क्विप् ॥ निपातनाद्दलोपषत्वे दिशामिति हस्य घः । जबत्वचपत्वे । उष्णिक्-उष्णिग् ॥ दिव औ इत्यौत्वे द्यौः । 'उरसे' इत्युत्वे द्युभ्याम् ॥ गॄ, निगरणे । अस्मात् 'गॄ,शब्दे' इत्यस्माद्वा क्विप् । ऋत इतीर् । 'य्वोर्विहसे' इति दीर्घः । गीः ॥ एवं पॄ, पालनपूरणयोः । पोरुरित्युर् । पूः ॥ धुर्वि, हिंसायाम् । क्विपि वयोरितिय वलोपः । धूः ॥ त्रिचतुरोरिति चतस्रादेशः । न तिसृचतस्रोरिति न दीर्घः । चतसृणाम् ॥ प्रियाश्चत्वारो यस्याः सेति यदा स्त्रियां मुख्यावित्युक्तत्वान्न चतस्रादेशः । चतुरामित्याम् । प्रियचत्वाः धावमित्यम् । हे प्रियचत्वः ॥

( तत्वदी० )-नहो ध इति ॥ तथदानामन्यतमस्तु नोक्तः नद्ध इत्यसिद्धेः ॥ उपानदिति ॥ उपपूर्वान्नहेः क्विपि नहिवृतीत्यादिना पूर्वस्यात्वम् । अत्रेदं विभाव्यम् ॥ सुष्ठु अनड्वानस्यामिति बहुव्रीहौ स्वनड्वानित्येव न तु नदादित्वादीपि स्वनड्वाहीति । अनुपसर्जनादिति तन्निषेधात् ॥ उष्णिगिति ॥ उत्पूर्वात्ष्णिह प्रीतावित्यस्मात्क्विपि निपातनाद्दलोपषत्वे ॥ गीरिति । गॄ, निगरणे शब्दे च । क्विपि । ऋत इरिति इत्वम् । य्वोर्विहस इति दीर्घः ॥ पूरिति ॥ पॄ, पालनपूरणयोः । क्विपि पोरुरित्युत्वम् ॥

**इयं स्त्रियाम् ॥** इदमः स्त्रियामियं सौ ॥ इयम्, इमे, इमाः । अनया, आभ्याम्, आभिः । अस्यै । अस्याः । अनयोः, आसाम् । अस्याम् । आसु ॥ अन्वादेशे । एनाम, एने, एनाः । एनया । एनयोः ॥ स्रक्-स्रग्, स्रजौ । स्रग्भ्याम् । स्रक्षु ॥ समित्-समिद्, समिधौ, समिधः । समिद्भ्याम् । समित्सु ॥ स्या, त्ये, त्याः ॥ एवम । तद् । यद् । एतद् । किम् ॥ वाक्-वाग्, वाचौ । वाग्भ्याम् । वाक्षु ॥ ककुप्-ककुब्, ककुभौ । ककुब्भ्याम् । ककुप्सु ॥ त्वक्-त्वग्, त्वचौ, त्वचः । त्वचम् । त्वग्भ्याम् ॥ ऋक्-ऋग्,

ऋचौ, ऋचः । ऋचम् । ऋग्भ्याम् । ऋक्षु ॥ अप्शब्दो नित्यं बहुवचनान्तः आपः । अपः ॥

( सुबोधिनी )–इयं स्त्रियाम् ॥ इदमोऽयमित्यतः इदम् इत्यनुवर्तते । सौ स इत्यतः साविति च । त्यदाद्यत्वे आप् मत्वम् औरितीत्वम् । इमे । अनटौसोरित्यनादेशः । टौसो रित्येत्वम् । अनया । स्म्य इत्यत्वम् । आभ्याम् । अन्वादेशे इदमेतदोरित्येनत् । शेषं सर्ववत् ॥ सृजेः क्विप् अमागमश्च निपातितः । दिशामिति कुत्वम् । स्रक्–स्रग् ॥ 'इध्ममेधः समित् स्त्रियाम्' इत्यमरः॥ त्यदाद्यत्वे आप् । त इति सः । स्या ॥ वचेः क्विपि वचीति क्विपि परे दीर्घो ऽसंप्रसारणं च । चोः कुरिति कः । वाक् ॥ आप्नोतेर्हस्वश्चेति ह्रस्वश्चात् क्विप् न्सम्महत इति दीर्घः । आपः ॥

( तत्त्वदी० )–इयं स्त्रियामिति ॥ अत्रापि स्त्रियामिति ग्रहणं लुकि न तन्निमित्तस्यानित्यत्वे लिङ्गम् । अन्यथा इदमित्यत्र सेरभावादेवाप्राप्तौ स्त्रियां ग्रहणमनर्थकं स्यात् ॥

**भिदपाम्** ॥ अप्शब्दस्य दत्वं भवति भकारादौ विभक्तौ ॥ अद्भिः । अद्भ्यः । अपाम् । अप्सु ॥ दिक्–दिग्, दिशौ, दिशः । दिग्भ्याम् । दिक्षु ॥ त्विट्–त्विड्, त्विषौ, त्विषः ॥ दृक्–दृग्, दृशौ, दृशः ॥ सह जुषत इति सजूः, सजुषौ, सजुषः । सजूर्भ्याम् । सजूःषु ॥ आशीः, आशिषौ । आशीर्भ्याम् । आशीःषु । असौ, अमू, अमूः । अमूम् । अमूः । अमुया, अमूभ्याम्, अमूभिः । अमुष्यै । अमुष्याः । अमूषाम् । अमुष्याम्, अमूषु ॥ ॥ इति हसान्ताः स्त्रीलिङ्गाः ॥

( सुबोधिनी )–भिदपाम् ॥ अपामिति बहुवचनं चिन्त्यम् ॥ अष्टनः त्रेरितिवदेकवचनमेव युक्तम् । दिशेः क्विप् । दिशामिति कुत्वम् दिक्–दिग् ॥ त्विष्, दीप्तावित्यस्मात् क्विप् । षो ड इति डत्वम् । त्विट् ॥ दृशेः क्विप् । दिशामिति कुत्वम् । दृक् ॥ जुषी, प्रीतिसेवनयोरित्यस्मात् क्विप् । दोषामिति रः । र्वोरिति दीर्घः । सजूर्मित्रम् शसे वेति वा सः । विसर्गनुम्स्थानिकेति षत्वम् । सजूःषु । ष्टुत्वम् । सजूष्षु ॥ आशासः क्वावित्युपधाया इत्वम् । घसादेरिति षः । आशीः । त्यदाद्यत्वे आप् सौ स इति दस्य सः, सेरौः, इत्यौत्वम् । असौ । दस्य म इति मत्वम् । औ इतीत्वम् । एत्वं माद् इत्यूत्वम् । अमू ॥ ॥ इति सुबोधिन्यां हसान्ताः स्त्रीलिङ्गाः ॥

( तत्त्वदी० )–भिदपामिति ॥ भिद् अपाम् इति च्छेदः बहुवचनं चिन्त्यम् ॥ सुष्ठु आपो यस्मिन्स् स्वाप् स्वाद्भ्यामित्यत्रेष्टत्वात् । प्राधान्यद्योतनायेत्यपि न स्ववसस्वतवसंमासां वैदिकानां संप्रहार्थमाद्यर्थं बहुवचनमिति माधवः । तन्नेति रामाश्रमः । अत्र लौकिकानामेव प्रतिपाद्यत्वेन वैदिकप्रतिपादनस्यायुक्तत्वात् । अन्यथा अन्येषामपि व्युत्पाद्यत्वमिति न । न हि वैदिकव्युत्पादने यवनभाषायामिवापराधः । यदपि अन्यथेत्यादि तत्रापि देवासः देवेभिः गोनामित्यादीनां व्युत्पादनदर्शनात् ।

कथं न व्युत्पाद्यत्वम्। यदपि लौकिकप्रयोगनिष्पत्तये इति मूलविरोधाच्चेति तत्रापि न मात्रपदं न वा एवपदं वैदिकव्यवच्छेदकं दृष्टमस्ति। न च लौकिकपदाद्वैदिकनिरास इति वाच्यं लौकिकानां बहूनां व्युत्पादनेन तद्ग्रहणस्योचितत्वात्। छत्रिणो गच्छन्तीतिवत्। यदि माधवमतखण्डने आग्रह एव तदा इत्थम्। संज्ञिनिर्देशे प्रथममुचिते विपरीतनिर्देशादन्यत्रापीति वैदिकानां सिद्धिः। वस्तुतस्तु न्यायो-दिति सूत्रणीयम् लाघवात्। वैदिकानां तु छन्दसि दृष्टानुविधिरित्येव सिद्धिरिति दिक्॥ वृ इत्यनुवृत्ता-वपि विभक्तिविपरिणामक्लेशनिवृत्त्यर्थग्रहणम्॥ **आशिषाविति** ॥ आशासः क्वावुपधाया इतीत्वे वसादेरिति षत्वम्॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा। विहितायां हि टीकायां स्त्रीलिङ्गोऽगाद्धसान्तकः॥

इति तत्त्वदीपिकायां हसान्तस्त्रीलिङ्गाः॥

---

# अथ हसान्ता नपुंसकलिङ्गाः।

**स्वनडुत्-स्वनडुद्, स्वनुडुही, स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्॥ वाः, वारी, वारि। वार्भ्याम। वार्षु॥ ऊरसे। विमलद्यु, विमल-दिवी, विमलदिवि॥ किम्, के, कानि॥ इदम्, इमे, इमानि। अन्वादेशे एनत, एने, एनानि॥ ब्रह्म, ब्रह्मणी, ब्रह्माणि। हे ब्रह्मन्-हे ब्रह्म॥**

( सुबोधिनी )—सुष्ठु अनड्वान् यस्मिन् तत्। वसामिति दत्वम्। स्वनडुत्। शौ अन-डुहश्चेत्याम्। नुमयम इति नुम्। स्वनड्वांहि। टादौ पुंवद्रूपम्॥ यमान्तत्वान्न नुम् वारि॥ विमला द्यौर्यस्मिन् तद्विमलद्यु। औ परतोऽन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपद-स्येवोत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायामाह उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणं नेति। उत्तरशब्देनोत्तरपदमुच्यते। उत्तरपदस्य पदत्वव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः। पदादिविधौ तु प्रत्ययलक्षणं भवति। पदत्वाभावादुत्वं न। विमलदिवी॥ लुकि नेति त्यदाद्यत्वं न। किम्॥ एवमिदम्। इदमेतदोरित्येनदादेशे एनत्॥ वेड्चो-रित्यल्लोपो न। वकारमकारान्तसंयोगादुत्तरस्य नेति निषेधात्। ब्रह्मणी। धौ नपुंसका-नामिति वा नस्य लोपः। हे ब्रह्मन्-हे ब्रह्म॥

**अह्नः॥ अहन्शब्दस्य सो भवति रस पदान्ते च॥ अहः, अह्नी अ-हनी, अहानि। अह्ना। अहोभ्याम्॥ कर्म, कर्मणी, कर्माणि॥ एवं चर्मन्वर्मन्धन्वन्नादयः॥ दण्डि, दण्डिनी, दण्डीनि॥ स्रग्वि, स्रग्वि-णीं, स्रग्वीणि। वाग्मि, वाग्मिनी, वाग्मीनि॥ बहुवृत्रह, बहुवृ-त्रघ्नी-बहुवृत्रहणी, बहुवृत्रहाणि॥ बहुपूष, बहुपूष्णी-बहुपूषणी, बहुपूषाणि॥ बह्वर्यम, बह्वर्यम्णी-बह्वर्यमणी, बह्वर्यमाणि॥ असृक्-**

**असृग्, असृजी, असृञ्जि । शसादौ वाऽसन् । असानि । अस्ना । असभ्याम ऊर्क्-ऊग्, ऊर्जी, ऊन्र्जि ॥**

( सुबोधिनी )-अह्नः ॥ नस्य विसर्गविधानं युक्तम् । सस्यापि विसर्गविधानावश्यकत्वात् । तदन्तेऽपीष्टं सत्वम् । दीर्घाणि अहानि यस्मिन् स दीर्घाहाः निदाघः । दीर्घाहन् सि इत्यत्र हसेप इति सिलोपे नोपधाया इति दीर्घे च कृते ततः सकारः । वेङ्चोरीति वाल्लोपः । अह्नी-अहनी । अल्लोपः स्वरे इत्यल्लोपः । अह्नः । भ्यामि सत्वे कृते विसर्गः । 'हवे' इत्युत्वम् ओत्वं च । अहोभ्याम् ॥ दण्डोऽस्यास्तीति मान्तोपधादितीन् नाम्नो न इति नलोपः । दण्डि । इनामिति दीर्घः । दण्डिनी ॥ स्रगस्यास्तीति विन् । स्रग्वि ॥ वागस्यास्तीति ग्मिन् । वाग्मि । बहवो वृत्रहणो यस्मिन् तत् । नाम्नो न इति नलोपः । बहुवृत्रह । वेङ्चोरित्युपधालोपे हनो घ्न इति घः । बहुवृत्रघ्नी । अल्लोपाभावे बहुवृत्रहणी । इनामिति दीर्घः । बहुवृत्रहाणि ॥ बहवः पूषाणो यस्मिन् तत् । बहुपूष ॥ बहवोऽर्यम्णो यस्मिन् तत् बह्वर्यम ॥ अस्यतेरौणादिके ऋजुप्रत्यये । असृज् । चोः कुरिति कुत्वम् । असृक् । पाददन्तेत्यसन् । अल्लोपः स्वरे इत्यल्लोपे अस्ना ॥ ऊर्जतीति ऊर्क् । शौ ऊन्र्जि । नरजानां संयोगः । बहव ऊर्जो यस्मिन् तत् बहूर्क् ॥

( तत्त्वदी० )-अह्न इति ॥ स्नोर्विसर्ग इत्यतो विसर्ग इत्यनुवर्तते । कश्चित्तु सस्तावित्यतः समनुवर्त्य तमेव व्यधित तन्नेति रामाश्रमः । सस्यापि विसर्गविधानावश्यकत्वेन विसर्गविधानस्यौचित्यात् । वस्तुतस्तु सस्यैवाव्यवहितत्वेन तदनुवृत्तेरेवौचित्यं युक्तं क्षत्यभावात् । दीर्घान्यहानि यस्मिन्निदाघे इति विग्रहे दीर्घाहन् सि इति स्थिते हसेप इति सिलोपे नोपधाया इति दीर्घे पश्चादह्न इति विसर्गः । दीर्घाहाः । धौ त्वधाविति निषेधाद्दीर्घाभावे विसर्ग एव । हे दीर्घाहः ॥

**( बहूर्जो नुम्प्रतिषेधः ) अन्त्यात्पूर्वो वा नुम् ॥ बहूर्जि-बहूञ्र्जि॥ त्यत-त्यद्, त्ये, त्यानि ॥ तत्-तद्, ते, तानि ॥ यत-यद्, ये, यानि ॥ एतत्-एतद्, एते, एतानि ॥ अन्वादेशे एनत्-एनद्, एने, एनानि ॥ बेभित्-बेभिद्, बेभिदी, बेभिदि ॥**

( सुबोधिनी )-बहूर्जो नुमप्रतिषेधः ॥ अन्त्यात्पूर्वो वा नुम् । बहूर्ज्शब्दस्य भाष्यमते नुम् । वैतदोरित्येनदादेशः । एनत् । बेभिद्यते इति बेभित् । यङन्तात् क्विप्॥

( तत्त्वदी० )-बहूर्ज इति ॥ बहूञ्र्जीति ॥ र्ञ्जानां संयोगः । सौ न नुमिति । वानुवृत्तेर्व्यवस्थितत्वाभावादिति भावः ॥

**( सयङन्तस्य शौ नुम्न ) चेच्छित्-चेच्छिद्, चेच्छिदी, चेच्छिदि । "गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः । असन्ध्यगागमाल्लोपैर्नवाधिकशतं मतम् ॥ स्यम्सुपुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः । चत्वारि शेषे दशके रूपाणीति, विभावय ॥"**

गवाक्-गवाग्, गोअक्-गोअग्-गोक्-गोग्, गवाङ्-गोअङ्-गोङ् । गोची-गवाश्ची-गोअश्ची-गोश्ची । गवाश्चि-गोअश्चि-गोश्चि । गवाक्षु-गोअक्षु-गोक्षु-गवाङ्क्षु-गोअङ्क्षु-गोङ्क्षु-गवाङ्खषु-गोअङ्खषु-गोङ्खषु ॥ तिर्यक्-तिर्यग्, तिरश्ची, तिर्यञ्चि । तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चि ॥ यकृत, यकृती, यकृन्ति-यकानि । यक्ना-यकृता, यकभ्याम-यकृद्भ्याम् ॥ एवं शकृत् ॥ ददत्, ददती, ददति-ददन्ति ॥ एवं जाग्रदादयः ॥ तुदत् ॥

( सुबोधिनी )-सयङन्तस्य शौ नुम्न ॥ सश्च यङ् च सयङौ सयङावन्ते यस्य स सयङन्तस्तस्य सयङन्तस्य नाम्नो नुम् न शौ परे ॥ वेभिदि ॥ चेच्छिद्यते इति चेच्छित् । शौ चेच्छिदि ॥ सम्प्रत्ययान्तस्य शौ पिपठिषि ॥ "जायन्ते नव सौ तथाऽमि च नव भ्यासूभिसभ्यसां संगमे षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि । चत्वार्यन्यवचस्सु कस्य विबुधाः शब्दस्य रूपाणि तज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥ १ ॥" राजसभायामिति श्लोकः केनचित् कविनोक्तस्तदा कश्चित्पण्डितः श्लोकद्वयेन तदुत्तरमाह । श्लोकः । "गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः । असंध्यगागमाल्लोपैर्नवाधिकशतं मतम् ॥ १ ॥" व्याख्या । गवाक्शब्दस्य रूपाणि अर्चागतिविभेदतः पूजागत्यर्थभेदेन नवाधिकशतं बोध्यानि । 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः' इत्युक्तत्वादेकत्वं शते ॥ अञ्चेर्गतौ नस्य लोपः । पूजायां तु नेत्यांशयः । कीदृशम् । असंध्यगागमाल्लोपैर्मतं गोरग्रवेत्यगागमेन गोर्वेति प्रकृतिभावाल्लोपाभ्यां वाचार्याणां मननविषयीभूतम् । उक्तसंख्यामाह । प्रत्येकं स्यम्सुप्सु नव रूपाणि स्युः । भादौ षट्के षट् । जश्शसोस्त्रीणि । शेषे दशके प्रत्येकं चत्वारि । इति नवाधिकशतं रूपाणि त्वं विभावय जानीहि । शसे चपस्येति वार्तिकमनाश्रित्योक्तम् । अन्यथा त्रीणि रूपाणि वर्द्धन्ते इत्यर्थः ॥ ॥ १ ॥ गामञ्चतीति विग्रहे क्विप् गतौ नो लोप इति नलोपः । गो अच् सि इति स्थिते अगागमे चोः कुरिति कुत्वम् । गवाक् १ गवाग् २ प्रकृतिभावे. गोअक् ३ गोअग् ४ अल्लोपे गोक् ५ गोग् ६ पूजायां नस्य कुत्वेन ङः गवाङ् ७ प्रकृतिभावे गोअङ् ८ लोपे गोङ् ९ । अम्यप्येतानि रूपाणि । औपरतः अचेरित्यल्लोपे गोची १ पूजायां तु गवाञ्चौ २ गोअञ्चौ ३ गोञ्चौ ४ । शौ नुमयम इति नुम् । गतिपूजनयोस्त्रीण्येव सादृश्यात् । गवाञ्चि १ गोअञ्चि २ गोञ्चि ३ टापरतः अचेरित्यल्लोपः । गोचा १ पूजायाम् गवाञ्चा २ गोअञ्चा ३ गोञ्चा ४ । भ्यामि गवाग्भ्याम् १ गोअग्भ्याम् २ गोग्भ्याम् ३ पूजायाम् गवाङ्भ्याम् ४ गोअङ्भ्याम् ५ गोङ्भ्याम् ६ । भिसि परे गवाग्भिः १ गोअग्भिः २ गोग्भिः ३ पूजायाम् गवाङ्भिः ४ गोअङ्भिः ५ गोङ्भिः ६ ङेपरतः अचेरित्यल्लोपः । गोचे १ पूजायाम् गवाञ्चे २ गोअञ्चे ३

गोश्चे ४ । भ्यामि प्राग्वत् । भ्यसि गवाग्भ्यः १ गोअग्भ्यः २ गोग्भ्यः ३ पूजायाम् गवाङ्भ्यः ४ गोअङ्भ्यः ५ गोङ्भ्यः ६ ङसौ गोचः १ पूजायाम् गवाश्चः २ गोअश्चः ३ गोश्चः ४ । भ्यामि भ्यसि च प्राग्वत् ङस्परतो ङसिवत् । ओसि गोचोः १ पूजायाम् गवाश्चोः २ गोअश्चोः ३ गोश्चोः ४ । आमि गोचाम् १ पूजायाम् गवाश्चाम् २ गोअश्चाम् ३ गोश्चाम् ४ । ङौ गोचि १ पूजायाम् गवाश्चि २ गोअश्चि ३ गोश्चि ४ । ओसि च गोचोः १ पूजायाम् गवाश्चोः २ गोअश्चोः ३ गोश्चोः ४ । सुपि गवाक्षु १ गोअक्षु २ गोक्षु ३ पूजायाम् शसे ङ्णोरिति ङान्तानां कुक्पक्षे गवाङ्क्षु ४ । गोअङ्क्षु ५ गोङ्क्षु ६ कुगभावे गवाङ्षु ७ गोअङ्षु ८ गोऽङ्षु ९ । एवं नवाधिकशतं रूपाणि । कुक्पक्षे शसे चपरयेति ककारस्य खकारेण त्रयाणामाधिक्यं ज्ञेयम् । अन्यत्र तु कुत्वस्यासिद्धत्वान्न खकारः । एवं द्वादशाधिकम् ॥ तिरोऽश्वतीति नो लोप इति नलोपः । चोः कुरिति कुः । तिर्यक् । सहादित्वात्तिरिः । औपरतः तिरश्चादय इति तिरश्चः । तिरश्ची । शौ नुययम इति नुम् । तिर्यञ्चि । पूजायां तिर्यङ् ॥ यकृत्कालखण्डम् । शकृत् पुरीषम् ॥ शसादौ पाद्दन्तेति यकन्शकन्नादेशौ वा ॥ ददतीति पुल्लिङ्गे उक्त एव । द्विरुक्तानां जक्षादीनां चेति वा नुम् । ददन्ति–ददति वा ॥

( तत्त्वदी० )–**सयगन्तस्येति** ॥ सश्च यङ् च सयङौ तौ अन्तौ यस्य तस्येत्यर्थः । एतन्मूलं त्वनुवर्तितं वाग्रहणस्य व्यवस्थितत्वम् ॥ **गवाक्शब्दस्ये**त्यादि ॥ **अर्चागतीत्यादि** अर्चा पूजा गतिर्गमनं तयोर्भेदस्तस्मात् ॥ **असंध्यगागमाल्लोपैरि**ति ॥ गोर्वा गोरग्वेति विकल्पद्वयेन रूपत्रयमिति भावः ॥ **स्यम्सुप्स्वि**ति ॥ प्रत्येकं नवनवेत्यर्थः ॥ **भादाविति** ॥ भकारादौ इत्यर्थः । तथा हि । सौ गत्यर्थतायामनलोपे असंधौ अगागमे च पर्यायेण रूपत्रयम् । तत्रैव वावसान इति कगयोर्विकल्पाद्रूपषट्कम् । पूजायां त्वसंध्यादिविकल्पे रूपत्रयमिति संकलनया नव । एवमम्यपि । औद्वये तु गत्यर्थतायाम् अचेर्दीर्घ इत्यकारलोपे तन्निमित्तासंध्यादिरूपद्वयाभावादेकमेव । पूजार्थतायां तु नलोपाभावादलोपस्याभावेऽसंध्यादिविकल्पेन रूपत्रयम् । संकलनया प्रत्येकं रूपचतुष्टयम् । एवं टाप्रभृतौ स्वरादौ सर्वत्र प्रत्येकं रूपचतुष्टयं बोध्यम् । जश्शसोस्तु गत्यर्थतायां नलोपेऽपि पुनर्नुमा विशेषाभावात् प्रत्येकं त्रीण्येव । भ्यामादौ तु त्रीणि गतौ त्रीण्यर्चायामिति षट्षट् । सुपि तु पूजार्थतायां शसे ङ्णोः कुक्टुकाविति कुग्विकल्पेन षट् । गतौ तु त्रयमेवेति नव । कुक्पक्षे शसे चपरयेति विकल्पेन यदि खकारस्तदा रूपत्रयाधिक्यं भवत्येव ॥

**वादीपोः शतुः ॥ अवर्णान्तात्परस्य शतुर्वा नुमीकारे ईपि च ॥ तुदती-तुदन्ती, तुदन्ति ॥ भात् । भाती-भान्ती, भान्ति ॥**

( सुबोधिनी )–**वादीपोः शतुः** ॥ वा-आत् ईपोरिति पदच्छेदः । आदिति पञ्चमी न तु तपरत्वम् । ईश्च ईप् च ईपौ तयोरीपोः । शतुरित्यवयवषष्ठी ॥ ननु तुदती

इत्यत्र शिति चतुर्वदित्यनेन कृतस्य तुदादेरित्यप्रत्ययः स्यादित्यनेनान्तरङ्गत्वाल्लोपे कृतेऽवर्णात्परत्वाभावान्नुम् न स्यात् । उच्यते । प्रत्ययलक्षणेन तत्परत्वमस्त्येव । न चैवं घ्नती त्यादावतिप्रसंगः लुकि न तन्निमित्तमित्यनेन प्रत्ययलक्षणप्रतिषेधात् ॥ भातीति भात् । भा, दीप्तौ शतृप्रत्यये शित्त्वादप् । अदादित्वादपो लुक् ॥

( तत्त्वदी० )–**वादीपोः शतुरि**ति ॥ वा आत् ईपोः शतुरिति च्छेदः । आदिति पञ्चमी । न तपरत्वम् । ईश्च ईप् च ईपौ तयोः ईपोरित्यत्र जबाभावे उत्तरपदस्यान्तर्वर्तिविभक्त्या पदत्वं नेति ज्ञापितम् । तेन परमवाचामित्यत्र कुत्वाद्यभावः । अदीपोरादीपोरिति तु न च्छेदः । उत्तरसूत्रे नित्यग्रहणसामर्थ्यात् । तुदन्तीत्यत्रावर्णस्यादे इत्यनेन लोपे कथमात्परत्वमिति चेत्सत्यम् प्रत्ययलक्षणत्वेनेति गृहाण । अथ घ्नन्तीत्यत्रातिव्याप्तिरिति चेत् न लुकि न तन्निमित्तमिति निषेधात् । अथ कथमग्रहणेन सानुबन्धकावर्णसामान्यस्य ग्रहणं यवर्णसामान्यस्य ग्रहणं च "निरनुबन्धकग्रहणे न सानुबन्धकस्य ।" "अर्थवद्ग्रहणे नानर्थकस्य"। "प्रत्ययाप्रत्यययोः प्रत्ययस्यैव" इति परिभाषात्रयेण निषेधादिति वाच्यम् । अप्याभ्यां नित्यविधानेन परिभाषात्रयस्यात्राप्रवृत्तिज्ञापनात् । न ह्यन्यथाप्याभ्यामनेन विकल्पः प्राप्तो येन नित्यमित्यर्थवद्भवेत् । ईब्ग्रहणं तु सानुबन्धकस्य ग्रहणे निरनुबन्धकस्य ग्रहणं नेति ज्ञापनार्थम् ॥

**अप्ययोरान्नित्यम् ॥ अप्प्रत्ययप्रत्ययसंबन्धिनोऽवर्णात्परस्य शतुर्नुम् नित्यमीकारे ईपि च ॥ पचत्, पचन्ती, पचन्ति ॥ दीव्यत्, दीव्यन्ती, दीव्यन्ति ॥ स्वप्, स्वब्, स्वपी । न्सम्महत इति दीर्घः । स्वाम्पि । दीर्घो नेत्येके । स्वम्पि । स्वपा । भिदपाम् । स्वद्भ्याम् । स्वद्भिः ॥ जगत्, जगती, जगन्ति ॥ महत्, महती, महन्ति ॥ धनुः, धनुषी ॥**

( सुबोधिनी )–**अप्ययोरान्नित्यम्** ॥ वादीपोरित्यत ईपोरित्यनुवृत्तम् । विकल्पे प्राप्ते नित्यविधानार्थमिदम् । अप् च यश्चाप्यौ तयोरात्परस्य शतुर्नित्यं नुम् भवति ईईपोः ॥ ननु अप्ययोरित्यत्र चपा अबे इति जबत्वं वक्तुं युक्तम् । उच्यते । ज्ञापनार्थमेवं निर्देशः । प्रत्यये परतः क्वचित्पदत्वं नेति । तेन तडित्वानित्यादि सिद्धम् ॥ पचतीति पचत् । अप् कर्तरीत्यप् । अदे इत्यल्लोपः ॥ दीव्यतीति दीव्यत् । दिवादेरिति यः ॥ सुष्ठु आपो यस्मिन् सरसि तत् स्वप् । ऋक्पूरित्यप्रत्ययो न न पूजने इति निषेधात् । शौ नित्यत्वात् नुमः प्राक् दीर्घः । स्वाम्पि । तदन्ते दीर्घोऽस्य नेत्येके । स्वम्पि । अर्तिपृवपियजितनिधनितायिभ्य उसित्यौणादिकः । धनेरुस् । धनुः । शौ न्सम्महत इति दीर्घः । विसर्गनुमिति षत्वम् ॥

( तत्त्वदी० )–**अप्ययोरान्नित्य**मिति ॥ अप् च यश्च अप्यौ तयोः । अप्ययोरिति वक्तव्ये जबाकरणं ज्ञापकं यकारे क्वचिदपदान्तर्वर्तिविभक्त्या पदान्तं नेत्यस्य । तेन वैदुष्यमित्यत्र वसां रस

इति दीर्घत्वं न आप्यान्नित्यमिति सुवचम् । आदित्यस्यानुवृत्तेः आरम्भसामर्थ्यान्नित्यत्वे लब्धेऽपि अदीघोरादीघोरिति संदेहनिरासार्थं नित्यग्रहणम् ॥

**न्षपूर्वस्य शौ दीर्घः ॥ धनूंषि ॥ हविः, हविषी, हवींषि ॥ पयः, पयसी, पयांसि ॥ तेजः, तेजसी, तेजांसि ॥ वचः, वचसी, वचांसि ॥ पिपठीः, पिपठिषी । स्यङन्तस्य शौ नुम्न । पिपठिषि ॥ सुपुम्, सुपुंसी, सुपुमांसि ॥ अदः, अमू, अमूनि । शेषं पुंवत् ॥**

**॥ इति हसान्ता नपुंसकलिङ्गाः ॥**

( सुबोधिनी )—न्षपूर्वस्य शौ दीर्घः ॥ न्सम्महत इत्यस्यैव प्रपञ्चः । धनूंषि । धनुर्भ्याम् । अत्र 'य्वोर्वि हसे' इति न दीर्घोऽधातुत्वात् ॥ अर्चिशुचिहुसृपीत्यादिना जुहोतेरिस् । हविः ॥ पिपठिषतेः क्विप् । 'य्वोर्वि हसे' इत्यनेन दीर्घत्वम् । पिपठीः ॥ सुष्ठु पुमांसो यस्मिन् तत् सुपुम् । शौ पुंसोऽसुङित्यसुङ् । नुमयम इति नुम् । न्सम्महत इति दीर्घः । सुपुमांसि ॥ त्यदाद्यत्वं विभक्तिकार्यं मत्वोत्वे अमू । शौ नुम्दीर्घौ । अमूनि शेषं पुंवत् ॥॥ इति सुबोधिन्यां हसान्ता नपुंसकलिङ्गाः ॥

(तत्वदी० ) श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायामिह टीकायां क्लीबलिंगो हसान्तकः ॥

इति तत्त्वदीपिकायां हसान्तनपुंसकलिंगाः ॥

**समाप्ते इमे षड्लिंगव्याख्ये ॥**

---

# अथ युष्मदस्मत्प्रक्रिया ।

**त्वमहं सिना ॥ सिना सहितयोर्युष्मदस्मदोस्त्वमहमित्येतावादेशौ भवतो यथासंख्येन ॥ त्वम् । अहम् ॥**

( सुबोधिनी )—त्वमहं सिना ॥ युष्मदस्मदोः स्थाने त्वमहमित्येतौ यथाक्रमं स्तः । सिनेति सहादियोगे तृतीया । सिप्रत्ययेन साहितयोरित्यर्थः ॥ ननु त्वमहमोर्हसान्तत्वादेव सिलोपे सिद्धे साविति वाच्यं व्यर्थं सिनेति । उच्यते । मान्तत्वस्य तथा तकारोच्चारणस्य गौणेऽतित्वमित्यादौ चरितार्थत्वात् । सिलोपात्परत्वात्त्यदादेरित्यत्वं तत आम् स्मावित्यात्वम् त इति तकारस्य सत्वं च स्यात् । अतः सिनेत्युक्तम् ॥ इह तदन्तविधिरपि इष्टोऽस्ति । परमत्वम् । परमाहम् । गौणत्वे तु त्वां मां युवामावां युष्मान् अस्मान् वातिक्रान्त इत्यत्रापि अतित्वमत्यहमित्येव । इह युष्मदस्मदोर्नान्तसंख्यावाचिनामलिंगत्वमेव । 'अलिङ्गे युष्मदस्मदी' इत्युक्तत्वात् । अत एव त्रिषु लिङ्गेष्वेषां समानं रूपम् । लिङ्गनिमित्तम् विवादिकमनयोर्नालिङ्गत्वात् । त्वं ब्राह्मणः । अहं ब्राह्मणः । त्वं ब्राह्मणी । अहं ब्राह्मणी । त्वं ब्राह्मणकुलम् । अहंब्राह्मणकुलमिति ॥

( तत्त्वदी० )–त्वमहं सिनेति ॥ त्वम् अहं सिनेति च्छेदः । सिनोति सहयोगे तृतीया । त्वमहं सावित्ति तु नोक्तम् । त इति सकारस्य सौ परेऽनिवार्यत्वात् । तकारोच्चारणस्य तु न सामर्थ्यं तस्यातित्वमिति गौणे चारितार्थत्वात् । अत्राहुः । अत्र सावित्युक्तेः स्त्रियां त्यदाद्यत्वे परत्वादाम्सावित्यात्वं बाधित्वा आप्स्यादिति तन्निरासायेति । अत्रेदमवधेयम् । युष्मदस्मदोरलिंगत्वात्स्त्रीत्वाभावादेवापो निवृत्तेस्तन्निवृत्त्यर्थत्वस्य व्यर्थत्वात् । अथ लिंगयोगोऽस्ति युष्मदस्मदोरिति ब्रूषे तर्हि अस्मिन् ग्रन्थे युष्मदस्मदोर्नान्तसंख्यावाचिनां चालिंगत्वमेव स्वीकृतमिति स्वोक्त्या विरोधः । तयोश्च वाच्यलिंगत्वात्त्रिष्वपि लिंगेषु समानरूपमिति वदता वृत्तिकृतापि महानेव विरोधः । चवाच्यलिंगत्वादित्येकं पदम् । चस्य वाच्यं लिंगमिव लिंगं ययोस्ते तयोर्भावस्तत्त्वादव्ययवदलिंगत्वादित्याद्यर्थं वर्णयद्भिश्च विरोध एवेत्युपेक्षितम् ॥

**युवावौ द्विवचने ॥ द्व्यर्थवाचिनोर्युष्मदस्मदोर्युवावावादेशौ भवतो विभक्तौ ॥**

**( सुबोधिनी )–युवावौ द्विवचने ॥ द्वयोरर्थौ द्व्यर्थं वक्त इति द्व्यर्थवाचिनौ तयोर्युष्मदस्मदोर्युवावौ स्तः स्यादौ विभक्तौ ॥ त्यदादेरित्यतः स्यादावित्यपकृष्यते । द्वौ वक्त इति द्विवचने कर्तरि युट् । किं च द्विवचने इति प्रत्ययविशेषणे कृतेऽपि युवावौ सिद्ध्यतः तथापि युवामीतक्रान्तान् अतियुवानित्यादौ युवावयोरप्रसंगवारणाय प्रकृत्यर्थविशेषणं कृतम् ॥**

( तत्त्वदी० )–युवावौ द्विवचने इति ॥ इह त्यदादेष्टेरित्यतः स्यादावित्यपकृष्यते । वक्तीति वचनं कर्तरि युट् द्वयोरर्थयोर्द्विवचने प्रथमान्तम् । तथा च द्विवचने युष्मदस्मदीति हरदत्तादिमते तयोरित्यध्याहारक्लेशः । कर्मणि युडिति पक्षे द्विवचन इति सप्तम्यन्तं द्वित्व इत्यर्थकं तद्वाचिनोरित्यर्थः । अत्राहुः ॥ द्वित्वे या स्यादिर्विभक्तिस्तस्यामित्यर्थ इति । अत्रेदं वक्तव्यम् । एवं सति युवामावां वातिक्रान्तानतियुवानत्यावानित्यत्राव्याप्तिः द्वित्वाभिधायिस्याद्यभावात् ॥

**आमौ ॥ युष्मदस्मद्भ्यां पर औराम् भवति ॥ युवाम् । आवाम् ॥**

**( सुबोधिनी )–आमौ ॥ आभ्यामौ आम् स्यात् ॥ अत्र योगविभागाभिप्रायेण विपरीतनिर्देशो बोध्यः । विपरीतनिर्देशा इत्येतदर्थं व्याख्यानान्तरं क्रियते । अत्र अम् औ इति च्छेदः । अ इति योगविभागः कर्तव्यः । लोपः अन्तः युष्मदस्मदोरिति पदत्रयं चानुवर्तनीयम् । युष्मदस्मदोरकारान्तादेशोऽकारात्परस्याकारस्य लोपश्च स्यादित्येको योगः । युष्मदस्मद्भ्यां पर औकारोऽम् स्यादिति द्वितीयः । औकारस्यामि कृते आम्स्भावित्यात्वम् । यद्वा सवर्णदीर्घः । न चामूशसोरिति लोपः अकारोच्चारणसामर्थ्यात् । इति लघुभाष्ये । युवाम् । आवाम् । तदन्ते परमयुवाम् । परमावाम् । गौणत्वे तु त्यदादेरित्यत्वं न भवति । संज्ञोपसर्जनयोर्नात्वमित्युक्तत्वात् । किं तर्हि आमावि-**

त्यत्र योगविभागेनानयोरन्तस्याकारोऽतो लोपश्च । औकारस्य आम कृते आमूस्भावि-त्यात्वम् ॥ अतित्वाम्। अतिमाम्।अतियुवाम् । अत्यावाम्। अतियुष्माम्। अत्यस्माम् ॥

( तत्त्वदी० )-आमाविति ॥ आम् औ इति च्छेदः ॥ नन्वमेव क्रियतां किं चाम्विधानेने-ति चेत् । अत्र माधवः । आ अम् औ इति च्छेदः । युष्मदस्मदोराकारान्तादेशः औकारस्याम् भवती-त्यर्थः । एवं युष्मयतेः क्विपि तल्लोपे औकारस्यामि युष्मामस्मामिति प्राप्नोति युषाम् असाम् इति चेष्यते एवं मस्यात्वे रूपसिद्धिरित्याह । अत्र रामाश्रमः । अम्मात्रविधानेनैवेष्टसिद्धेराकारो व्यर्थ इत्यु-क्त्या स्वमतमुक्तवान् । अ अम् औ इति च्छेदः । अ इति योगो विभज्यते । अत्र लोपः अत् युष्मदस्म-दोरित्येतत्सर्वमनुवर्तते । तथा च युष्मदस्मदोरकारोऽन्तादेशः स्यात् । तस्य अतः परस्य लोपः स्यात् द्वितीयस्य तु युष्मदस्मभ्यां पर औ अम् भवति ॥ आमूस्भाविति आत्वम् सवर्णे दीर्घ इति वा दीर्घत्वम् । अम्शसोरस्येति तु न अकारोच्चारणसामर्थ्यादिति । अत्रेदमवधेयम् । अ इति छित्त्वा योगविभागं लो-पाद्यनुवृत्तिं च कृत्वा युवामावामिति रूपं साध्यम् । तत्राधिकक्लेशः । कुत्र आम् औ युष्मदस्मभ्यां पर औकारोऽम्भवति सति तस्मिन् तयोरकारान्तादेश इति अन्यत्र त्वामस्मावित्यनेनैवात्वम् । एवं चाति-प्रसंगशङ्कापि नेति अम्मात्रविधाने सुट्प्रसंगोद्भावननिराकरणार्थयत्नक्लेशोऽपि नेति विभाव्यं सूरिभिः॥

**यूयं वयं जसा ॥** जसा सहितयोर्युष्मदस्मदोर्यूयंवयं भवतः ॥

यूयम् । वयम् ॥

( सुबोधिनी )-**यूयं वयं जसा ॥** तदन्ते परमयूयम् । परमवयम् । गोणत्वेऽतियू-यम् । अतिवयम् ॥

( तत्त्वदी० )-यूयं वयं जसेति ॥ जसीति तु पूर्वोक्तयुक्तेर्न कृतं जसीत्यस्य प्रवृत्तेः ॥

**त्वन्मदेकत्वे ॥** युष्मदस्मदोस्त्वन्मदौ भवत एकत्वे गम्यमाने ॥

( सुबोधिनी )-**त्वन्मदेकत्वे ॥** एकत्वे गम्ये । एकस्यभावः एकत्वं तस्मिन् गम्य-माने ज्ञायमाने सति युष्मदस्मदोस्त्वन्मदावादेशौ स्तः । स्यादावित्यत्र न संबध्यते । तेन तव पुत्र इति त्वत्पुत्रः । तवापत्यमिति त्वादः । त्वं पुत्रो यस्य सः त्वत्पुत्रः । इत्यादौ विभक्त्यभावेऽपि त्वन्मदौ भवतः । न चान्तर्वर्तिनीं विभक्तिमाश्रित्याप्येतौ स्या-तामिति वाच्यं युवयोः पुत्र इति युष्मत्पुत्र इत्यादौ युवावयोरपिः प्रसंगात् । लुकि न तन्निमित्तमिति निषेधाच्च । दान्तादेशावेतौ । तेन त्वादयति । मादयति । त्वदीयम् । मदीयमित्यादिरूपसिद्धिः । सूत्रे वावसाने इति पाक्षिकतकारे कृते ञमे ञमा वेति ञमत्वं क्वचिज्जवस्यापि ञमो ज्ञाप्यते तेनेति वा बोध्यम् । सिङेङस्सूक्तवक्ष्यमाण विधयस्त्वन्मदौ बाधन्ते परत्वात् । तदन्ते । परमत्वाम् । परममाम् ॥ गौणत्वे तु अतित्वाम् । अतिमाम् ॥

( तत्त्वदी० )-त्वन्मदेकत्वे ॥ त्वद्मद् एकत्वे इति च्छेदः । ञमे ञमा वेत्यत्र वाशब्दस्य व्यवस्थितत्वात्क्वचिज्झसानामपि ञमा भवन्तीति ञमत्वम् । तेन त्वादयतीत्यादि सिद्धम् । तव पुत्र-

स्त्वत्पुत्र इत्यादौ भवत्येव एकत्वाभिधानस्य निमित्तस्य सत्त्वात् । अत्राहुः । युवयोः पुत्रः युष्मत्पुत्र इत्यत्र स्याद्यत्वाभावात् कथमिति वाच्यम् ॥ ननु धातोरित्यत्रासंभवात्साधकारस्त्यक्तः सोऽग्रेऽपि न संबध्यते । अत एव त्यदादेष्टेरस्यादावित्यत्र पुनः स्यादिग्रहणं कृतमिति । अत्रेदं वक्तव्यम् । त्वन्मदेकत्वे युवावौ द्विवचने इत्यनयोर्द्वयोरपि नुधातोस्त्यदादेष्टेरित्येतत्सूत्रद्वयमध्यस्थता विशेषेण कथमेकत्र स्यादिसंबन्धोऽपरत्र नेति व्याख्यानं संगच्छते विनिगमनाविरहात् । किं तु द्वित्व इति वक्तव्ये द्विवचनग्रहणसामर्थ्यादत्र स्यादियोग इति समाधेयम् ॥

**आम्स्भौ ॥ युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे ॥ त्वाम् । माम् । युवाम् । आवाम् । त्यदाद्यत्वे शसीति दीर्घः ॥**

( सुबोधिनी )–**आम्स्भौ** ॥ आ अम् इति च्छेदः । युष्मदस्मदोष्टेरात्वं स्यादमि सकारे भिसि च । अम् च स् च भिश्च तेषां समाहारोऽम्स्भि तस्मिन् । आगमजस्यानित्यत्वान्न नुम्भावः । भीत्येकदेशद्वारा समुदायानुकरणम् । अत्र माधव आह । टेरिति नानुवर्तनीयम् प्रयोजनाभावात् । षष्ठीनिर्दिष्टत्वादन्त्यस्यात्वे सवर्णदीर्घे च त्वां मामिति रूपसिद्धेः । युष्मदस्मदोर्ण्यन्तयोः क्विपि युष्म् अस्मिति रूपम् अभ्याममि शसि च युषाम् असाम् युषान् असानित्यन्त्यस्य मकारस्यात्वे सिध्यति । अन्यथा न । सत्यम् । अतियुष्माभ्यामित्यादावात्वं केन भवति गौणत्वे त्यदाद्यत्वाभावात् । उच्यते । आमावित्यत्र योगविभागेनात्वे कृते रूपसिद्धिरिति । तदा युष्मास्मोरपि योगविभागेनात्वे कृते पाश्चाट्टेरात्वे चामि शसि च युषाम् असाम् युषान् असानिति सिद्ध्यत्येव किं माधवोक्त्येति ॥

( तत्त्वदी० )–**आम्स्भावि**ति ॥ आ अम् स्भाविति च्छेदः । नन्वतियुष्माभ्याम् अतियुष्मान् अत्रात्वं केन गौणत्वे त्यदाद्यत्वाभावात् इति चेत्सत्यम् केचिदामावित्यत्र योगविभागेन परत्वादाम्स्भावित्यविभक्तिनिर्देशेन सात्पूर्वः परो वा लुप्तनिर्दिष्टो नकारान्तस्तस्मिन्परेऽप्यात्वम् । अत्र षष्ठीदर्शनादन्तादेशः । टेरित्यनुवृत्तिस्तु प्रयोजनाभावात् युष्मदस्मदोर्युवामस्मावित्यसिद्धेश्चोपेक्षितम् ॥

**( शसो नो वक्तव्यः ) युष्मान् । अस्मान् । त्वन्मदादेशे कृते ॥**

( सुबोधिनी )–**शसो नो वक्तव्यः** ॥ सो नः पुंस इत्यत्र सो न इति योगविभागेनाऽयमर्थो लभ्यते इत्यर्थः ॥

**एटाङ्ग्योः ॥ युष्मदस्मदोष्टेरेत्वं भवति टाङ्ग्योः ॥ त्वया । मया । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥**

( सुबोधिनी )–**एटाङ्ग्योः** ॥ अत्र टेरित्यनुवृत्तं अनयोष्टेरेत्वं स्यात् । टाश्च ङिश्च टाङी तयोः परतः । इदन्तत्वात् ङेः पूर्वनिपाते प्राप्ते तस्यानित्यत्वज्ञापनार्थं परनिपातः । किं च परत्वात्त्यदादेरित्यत्वे प्राप्तेऽपि आदौ एटाङ्ग्योरित्येत्वप्रवृत्तिरेव न्याय्या कृताकृतप्रसंगित्वेन तस्य नित्यत्वात् । टेरेत्वे कृते अयादेशे च त्वया मयेति । अत्र हि

युष्मदस्मदोर्न्यन्तयोः क्विपि युष्म् अस्म् इति । टाङिओस्सु परतः युष्मा । अस्मा । युष्मि । अस्मि । युष्मोः । अस्मोरिति रूपाणि । तत्सिद्ध्यर्थं व्याख्यानान्तरं क्रियते । अत्रैकारात् परो यवयोर्वसेऽहेकारे चेत्यनेन लुप्तो यकारो ज्ञातव्यः । तेनायमर्थः । अदन्तयोरनयोरेत्वं हसान्तयोर्यत्वं च न भवति । एटाङ्योरिति टाङीओसां लुप्तसप्तमीको निर्देशः । एषु परत इति ॥

( तत्त्वदी० )–एटाङ्योरिति ॥ अत्र टेरित्यनुवर्तते । अन्त्यविधौ रूपसिद्धेः । नित्यत्वात्प्रतिपदोक्तत्वाच्चादावेत्वप्रसक्तेस्त्यदाद्यत्वाभावात् । अत्राहुः ॥ ननु युष्मदस्मदोर्न्यन्तयोः क्विपि युष्म आ अस्म आ इति स्थिते टेरेत्वे कृते यया अया इति प्राप्नोति युष्मा अस्मा इति चेष्यते । सत्यम् । एकारोऽप्यनेन विधीयते । लक्ष्यानुसाराच्च व्यवस्था । अत एत्वं हसस्य परत्वं यवयोर्वसे लोप इत्यनेनैव ज्ञापितवचनेन लुप्तोऽत्र य इति । अत्रेदं तत्त्वम् । अत्रापि टेरनुवृत्तिर्न कर्तव्या. षष्ठ्यन्तादेश एव । स च त्यदाद्यत्वे कृते एव परत्वम् । नित्यत्वं तु समानमुभयोरपि । तथा च युष्मदस्मदोर्मस्यैत्वे अयादेशे य्वोर्लोपश्चेत्यत्र वा इत्यस्य व्यवस्थितत्वात् य्वोः संबन्धिनोऽवर्णस्य क्वचिल्लोप इत्यलोपे रूपसिद्धिः । एवं युष्मास्मेति सिद्ध्यर्थं ज्ञापितवचनेन लुप्तयकारनिर्देशक्लेशो नोचितः । किं च अत एत्वं हसस्य षत्वमिति व्याख्याने एकस्मिन्नेव प्रयोगे दस्य यत्वं मस्यैत्वं केन वार्यम् । त्यदाद्यत्वेनेति केचित् । नित्यत्वात्प्रतिपदोक्तत्वाच्चादावेत्वप्रवृत्तेस्त्यदाद्यत्वाभाव इति स्वोक्त्याविरोधात् । किं च लोपेन वचनं ज्ञाप्यते । ज्ञापितेन वचनेन लोप इत्यन्योन्याश्रयोऽपि । किं च अत एत्वमिति कथं त्यदाद्यत्वाभावे टेरत्वे अदस्शब्दस्यैत्वम् । किं च एवं टेर्यत्वमन्त्यस्येत्यत्र विनिगमनाविरहः । टाङ्योरित्यत्र टकारङकारौ तु स्पष्टप्रतिपत्तये कृताविति नान्यद्बहु जल्पितम् ॥

**तुभ्यं मह्यं ङ्या ॥** ङेसहितयोर्युष्मदस्मदोस्तुभ्यं मह्यमेतौ भवतः ॥ तुभ्यम् । मह्यम् ॥

( सुबोधिनी )–तुभ्यं मह्यं ङ्या ॥ तदन्ते परमतुभ्यम् । परममह्यम् ॥ गौणत्वे तु अतितुभ्यम् । अतिमह्यम् ॥

( तत्त्वदी० )–तुभ्यं मह्यं ङ्येति ॥ तृतीया तु पूर्ववत् । अन्यथा त्यदाद्यत्वे ङे अगिति स्यात् ॥

**( भ्यस् श्भ्यम् )** युष्मदस्मद्भ्यां परो भ्यस् श्भ्यं भवति ॥ शकारो भकारादित्वव्यावृत्त्यर्थः । तेनात्वैत्वे न भवतः । युष्मभ्यम् । अस्मभ्यम ॥

( सुबोधिनी )–भ्यस्श्भ्यम् ॥ अत्र भ्यस् चतुर्थीबहुवचनम् । आभ्यां भ्यस श्भ्यं स्यात् ॥ शकारो न सर्वादेशार्थः भ्यमो गुर्वादेशत्वात्, तर्हि किमर्थः भकारादित्ववारणार्थः ॥ सति शकारे भकारस्यादित्वाभावात् ॥ भादिनिमित्तमेस्भीत्येत्वे अद्भीत्यात्वं च न । आदेर्भाव आदित्वं भकारस्यादित्वं भकारादित्वं भकारादित्वस्य व्यावृत्तिर्निषेधः भकारादित्वव्यावृत्तिः भकारादित्वव्यावृत्तिरर्थः प्रयोजनं यस्य सः ॥

(तत्त्वदी०)–**भ्यसू श्भ्यमिति** ॥ भ्यसु श्भ्यमिति च्छेदः । नन्वत्र शकारो न श्रवणार्थः युष्मभ्यमित्यत्राश्रुतेः । सर्वादेशार्थोऽपि न भ्यमोऽनेकाक्षरादेशत्वादेव तत्सिद्धेरित्याशयेनाह–**शकार इत्यादि** ॥ सर्वैत्वादिव्यावृत्त्यर्थं कृतस्तद्व्यावृत्त्यनन्तरं नोपादीयते । जलानयनानन्तरं जलार्थं घटवत् । चतुर्थीबहुवचनमेवात्र भ्यसू ॥ पञ्चम्यास्तु न ङसिसाहचर्यात्तस्य तत्रैव ग्रहणात् ॥

**ङसिभ्यसोः श्तुः** ॥ ङसिसाहचर्यात्पञ्चम्या भ्यसू गृह्यते । त्वत् । मत् । युवाभ्याम् । आवाभ्याम् । युष्मत् । अस्मत् ॥

( सुबोधिनी )–**ङसिभ्यसोः श्तुः** ॥ युष्मदस्मद्भ्यां परयोर्ङसिभ्यसोः श्तुरादेशः स्यात् ॥ शित्त्वात्सर्वादेशः । उकार उच्चारणार्थः ॥ अत्र ङसिसाहचर्यात्पञ्चम्या एव भ्यसू गृह्यते । किं च अत्र माधवः । ङसिभ्यसः अः श्तुरिति पदच्छेदः कर्तव्यः । ततश्च युष्मदस्मद्भ्यां ङसिभ्यसोः श्तुर्भवति युष्मदस्मदोरन्त्यस्याकारादेशो भवति तेन ञ्यन्तयोर्युष्मास्मोर्युषत् असत् । अयमेवाकारो भ्यसू श्भ्यम् सामाकमित्यत्राप्यनुवर्तते । तेन युषभ्यम् । असभ्यम् । युषाकम् । असाकमिति सिद्ध्यतीति वदति । आमावित्यत्र योगविभागेनात्वे युषदसदित्यादि सिद्ध्यत्येव किं तत्प्रयासेन ॥

( तत्त्वदी० )–**ङसिभ्यसोः श्तुरिति** ॥ शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । अत्र ङसिभ्यसः अः श्तुरिति च्छेदादकारोऽन्तादेशोऽनयोरिति व्याख्यानात् युष्मास्मोर्युषदसदिति सिद्ध्यति ॥

**तवमम ङसा** ॥ ङसा सहितयोर्युष्मदस्मदोस्तवममौ भवतः॥ तव । मम । युवयोः । आवयोः । सुडामः ॥

( सुबोधिनी )–**तवमम ङसा** ॥ तदन्ते परमतव । परममम गौणत्वे अतितव अतिमम ॥

( तत्त्वदी० )–**तवमम ङसेति** ॥ तृतीया पूर्ववत् ॥

**सामाकम्** ॥ युष्मदस्मद्भ्यां परः सामाकं भवति ॥ युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु "समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी॥समासार्थोऽन्यसङ्ख्यश्चेद्युवावौ त्वन्मदावपि ॥१॥ सिजसूङेङस्सु परत आदेशाः स्युः सदैव ते । त्वाहौ यूयवयौ तुभ्यमह्यौ तव ममावपि ॥ २ ॥ एते परत्वाद्बाधन्ते युवावौ विषये स्वके । त्वन्मदावपि बाधन्ते पूर्ववद्विषये स्वतः ॥ ३ ॥ द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी । तयोरद्व्येकतार्थत्वाद्युवावौ त्वन्मदौ न च ॥ ४ ॥ " त्वां मां वाऽतिक्रान्त इति विग्रहे अतित्वम् । अत्यहम् ॥ गौणत्वे युष्म-

दस्मदोरुत्यदाद्यत्वं भवति । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम । अतित्वाम् । अतिमाम् । त्वन्मदेकत्वे । आम्स्भौ । अतित्वाम् । अतिमाम् । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वभ्यम् । अतिमभ्यम् । अतित्वत् । अतिम । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वासु । अतिमासु ॥ युवामावां वाऽतिक्रान्त इति विग्रहे । सिजसूङेङस्सु प्राग्वत् । अन्यत्र युवावौ । अतित्वम् । अत्यहम् । अतियुवाम् । अत्यावाम् । अतियूयम् । अतिवयम् । अतियुवाम् । अत्यावाम् । अतियुवान् । अत्यावान् । अतियुवया अत्यावया । अतितुभ्यम् । अतिमह्यम् । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवभ्यम् । अत्यावभ्यम् । अतियुवत् । अत्यावत् । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवत् । अत्यावत् । अतितव । अतिमम । अतियुवयोः । अत्यावयोः । अतियुवाकम् । अत्यावाकम् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु ॥ युष्मानस्मान्वाऽतिक्रान्त इति विग्रहे अतित्वम् । अत्यहम् । अतियुष्माम् । अत्यस्माम् । अतियूयम् । अतिवयम ।.सिजसूङेङस्सु प्राग्वत् । अतियुष्माम् । अत्यस्माम् । अतियुष्माम् । अत्यस्माम् । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् । अत्यस्माभ्याम् । अतियुष्माभिः । अत्यस्माभिः । अतितुभ्यम् । अतिमह्यम् । अतियुष्मत् । अत्यस्मत् । अतियुष्माभ्याम् । अत्यस्माभ्याम् । अतियुष्मत् । अत्यस्मत् । अतितव । अतिमम । अतियुष्माकम् । अत्यस्माकम् । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु । अत्यस्मासु ॥

( सुबोधिनी )—सामाकम ॥ अत्र तन्त्रैकशेषावृत्तिभिः सामिति द्वयं बोध्यम् । सकृदुच्चरितः शब्दोऽनेकार्थगमको भवतीति तन्त्रम् । सरूपाणामित्येकशेषः । द्विरुच्चारणमावृत्तिः । एकस्य सुटा सह अम् साम् । द्वितीयस्य तु आमा सह साम् इत्यर्थः । ततः सुट्सहित आम् केवल आम् च आकम् । युष्मदस्मदोरन्त्यस्याकारश्च भवतीत्यर्थः ॥ तेनातियुष्माकम् । अत्यस्माकमित्यादि सिद्ध्यतीति लघुभाष्यकर्तुरपि प्रयासो व्यर्थ एव । योगविभागेनात्वे कृते सुडाम इति सुटोऽपि सर्वादिकार्यत्वाद्गौणेऽप्रवृत्तेः तन्त्रादिना सामित्यस्य द्विरुच्चारणात् । केवलस्याप्याम् आकमि च विहिते रूपसिद्धेः ॥ समस्यमाने

द्व्येकत्ववाचिनी युष्मदस्मदी ॥ समासार्थोऽन्यसंख्यश्चेद्युवावौ त्वन्मदावपि ॥ १ ॥ युवावौ द्विवचने त्वन्मदेकत्वे इति सूत्रद्वये द्विवचनैकत्वशब्दौ प्रकृत्यर्थपरौ न तु प्रत्ययपराविति व्याख्यातम् । तत्फलं जातिलिङ्गव्यक्तिसंख्याकारकात्मकः पञ्चको नामार्थ इति पक्षाभिप्रायेण दर्शयति। चेद्यदि युष्मच्चास्मच्च युष्मदस्मदी शब्दरूपे । समस्येते इति समस्यमाने समासविषयीक्रियमाणे । द्वा च एकश्च द्व्येकौ । द्व्येकयोर्भावः द्व्येकत्वं वक्त इति द्व्येकत्ववाचिनी स्तः । समासस्यार्थः समासार्थः विग्रहः । अन्यसंख्योऽन्यस्य पदार्थस्य संख्या यस्मिन्सोऽन्यसंख्यो युष्मदस्मदर्थगतसंख्येतरसंख्यायुक्तो भवतीत्यर्थः। तदा युष्मदस्मदोः स्थाने युवावौ त्वन्मदावप्यादेशौ भवतः । द्विवचनैकत्वयोः प्रत्ययविशेषणत्वे तु न स्यातामित्यव्याप्तिः स्यादिति भावः ॥ १ ॥ सिजसङेङस्सु परत आदेशाः स्युः सदैव ते । त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥ नन्वेवं सिजसङेङस्स्वपि युष्मदस्मदोर्द्व्यर्थत्वे युवावौ स्यातामेकार्थत्वे तु त्वन्मदावित्याशङ्कायामाह । एतासु विभक्तिषु परतो युष्मदस्मदोः स्थाने ते आदेशाः सदैव स्युः । के ते आदेशा इत्यत आह । त्वाहौ यूयवयावित्यादि ॥ २ ॥ एते परत्वाद्बाधन्ते युवावौ विषये स्वके । त्वन्मदावपि बाधेते पूर्ववद्विषये स्वतः ॥ ३ ॥ एते त्वमहं यूयं वयं तुभ्यं मह्यं तव ममेत्यादेशाः स्वके विषये स्वे आत्मीये स्थाने युवावौ बाधन्ते । कस्मात्परत्वाद्विप्रतिषेधे परं कार्यमिति न्यायात् । उभयोस्तुल्यबलविरोधे सति सूत्रापेक्षया त्वमादयः परे त एव भवन्तीत्यर्थः । एते त्वमादयः । स्वतो विषये त्वन्मदावपि बाधन्ते पूर्ववत् । उक्तन्यायेन स्वत इत्यत्र सप्तम्यर्थे तस् ॥ ३ ॥ द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी । तयोरद्व्येकतार्थत्वाद्युवावौ त्वन्मदौ न च ॥ ४ ॥ यदा युष्मदस्मदी बह्वर्थे बहूनामर्थो ययोस्ते बह्वर्थे भवतः । समासार्थो विग्रहः । द्वौ च एकश्च द्व्येकौ, द्व्येकयोः संख्या यस्मिन् द्व्येकसंख्यो भवति । तदा युष्मदस्मदोः स्थाने युवावौ त्वन्मदावपि न स्तः । तस्मात् तयोर्युष्मदस्मदोः द्वौ च एकश्च द्व्येकौ द्व्येकयोर्भावः द्व्येकता द्व्येकताया अर्थः द्व्येकतार्थः द्व्येकतार्थस्य भावो द्व्येकतार्थत्वं न द्व्येकतार्थत्वमद्व्येकतार्थत्वं तस्मात् द्व्येकतार्थत्वस्याभावात् ॥ ४ ॥ त्वां मां वातिक्रान्त इति विग्रहे अपवादौ अतित्वम् अत्यहम् । त्वां मां वातिक्रान्ताविति विग्रहे उत्सर्गतः त्वन्मदादेशे कृते गौणत्वेऽपि युष्मदस्मदोस्त्यदाद्यत्वं भवति । आमावित्यत्र योगविभागेन यद्व्याख्यानान्तरं कृतं तस्यायं निष्कर्षोऽस्ति । गौणत्वेऽप्यनयोस्त्यदाद्यत्वं भवतीत्यर्थः । इत्यनेनात्वे तल्लोपे औविभक्तेरमि च कृते सवर्णदीर्घः । अतित्वाम् । अतिमाम् । त्वां मां वातिक्रान्ता इति विग्रहे अपवादौ अतियूयमतिवयम् । एवमग्रेऽप्यूह्यम् । १। अत्वे आमुस्भावित्यात्वे च अमूशसोरित्यल्लोपः । अतित्वाम् । अतिमाम् । शसि अत्वे कृते अमूशसोरित्यल्लोपः शसीति दीर्घः शसो न इति नत्वम् । अतित्वान् अतिमान् । २। अत्वे कृते एटाङ्योरित्ययादेशे च । अतित्वया । अतिमया । अत्वे अद्भीत्यात्वे च । अतित्वाभ्याम् । अतिमाभ्याम् ।

आमुस्भावित्यात्वं अतित्वाभिः। अतिमाभिः। ३। अपवादौ अतितुभ्यम्। अतिमह्यम्। अतित्वाभ्याम्। अतिमाभ्याम्। अत्वे श्भ्यमि च अतित्वभ्यम्। अतिमभ्यम्। ४। अत्वे ङ्तुआदेशे च अतित्वत्। अतिमत्। अतित्वाभ्याम्। अतिमाभ्याम्। अतित्वत्। अतिमत्।५। अपवादौ अतितव। अतिमम। अत्वे। ओसीत्येत्वे च अतित्वयोः। अतिमयोः। अत्वे सुडभावेऽपि प्रागुक्तरीत्या आकमि चं अतित्वाकम्। अतिमाकम्। ६। अत्वे कृते एटाङ्योरित्येत्वे अयादेशः अतित्वयि। अतिमयि। अतित्वयोः। अतिमयोः। अत्वे आत्वे च अतित्वासु। अतिमासु। ७। गुणीभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युक्त्वा संप्रति द्व्यर्थवाचित्वे उदाहरति। युवामावां वा अतिक्रान्तः अतिक्रान्तौ अतिक्रान्ता वा इति विग्रहे अतित्वम्। अत्यहम्। अतियुवाम्। अत्यावाम्। अतियूयम्। अतिवयम्। १। अतियुवाम्। अत्यावाम्। अतियुवाम्। अत्यावाम्। अतियुवान् अत्यावान्। २। अतियुवया। अत्यावया। अतियुवाभ्याम्। अत्यावाभ्याम्। अतियुवाभिः। अत्यावाभिः। ३। अतितुभ्यम्। अतिमह्यम्। अतियुवाभ्याम्। अत्यावाभ्याम्। अतियुवभ्यम्। अत्यावभ्यम्। ४। अतियुवत्। अत्यावत्। अतियुवाभ्याम्। अत्यावाभ्याम्। अतियुवत्। अत्यावत्।५। अतितव। अतिमम। अतियुवयोः। अत्यावयोः। अतियुवाकम्। अत्यावाकम्। ६। अतियुवयि। अत्यावयि। अतियुवयोः। अत्यावयोः। अतियुवासु। अत्यावासु। ७। बह्वर्थयोस्तूदाहरति। युष्मानस्मान्वातिक्रान्तः अतिक्रान्तौ अतिक्रान्ता वेति विग्रहे अतित्वम्। अत्यहम्। अतियुष्माम्। अत्यस्माम्। अतियूयम्। अतिवयम्। १। अतियुष्माम्। अत्यस्माम्। अतियुष्मान्। अत्यस्मान्। २। अतियुष्मया। अत्यस्मया। अतियुष्माभ्याम्। अत्यस्माभ्याम्। अतियुष्माभिः। अत्यस्माभिः।३। अतितुभ्यम्। अतिमह्यम्। अतियुष्माभ्याम्। अत्यस्माभ्याम्। अतियुष्मभ्यम्। अत्यस्मभ्यम्। ४। अतियुष्मत्। अत्यस्मत्। अतियुष्माभ्याम्। अत्यस्माभ्याम्। अतियुष्मत्। अत्यस्मत्। ५। अतितव। अतिमम। अतियुवयोः। अत्यावयोः। अतियुष्माकम्। अत्यस्माकम्।६। अतियुष्मयि। अत्यस्मयि। अतियुष्मयोः। अत्यस्मयोः। अतियुष्मासु। अत्यस्मासु।७। पुनर्गौणे रूपान्तरम्। युष्मानस्मान्वा करोतीति। णौ युष्मयति। अस्मयति। ततः क्विप्। णेरिति णिलोपे कृते युष्म् अस्मिति जातम्। स्यादिषु युष्मस्मोरपि त्वमहमादय आदेशा भवन्ति। एकदेशविकृतमनन्यवदित्युक्तत्वात्। त्वम्। अहम्। औ विभक्त्यादिषु गौणत्वेऽपि टाङ्योस्विभक्तीर्वर्जयित्वा सर्वत्रात्वे कृते आत्वम्। युषाम् असाम्। यूयम्। वयम्। १। युषाम्। असाम्। युषान्। असान्।२। एटाङ्योरित्यस्य व्याख्यानान्तरेणान्तस्य यत्वम् युष्या। अस्या। युषाभ्याम्। असाभ्याम्। युषाभिः। असाभिः।३। तुभ्यम्। मह्यम्। युषाभ्याम्। असाभ्याम्। युषभ्यम्। असभ्यम्।४। युषत्। असत्। युषाभ्याम्। असाभ्याम्। युषत्। असत्। ५। तव।

मम । अन्तस्य यत्वे युष्योः । अस्योः । युषाकम् । असाकम् ।६। यत्वे युष्यि । अस्यि-युष्योः । अस्योः । युषासु । असासु ॥

(तत्त्वदी०)-**सामाकमिति** ॥ साम आकम् इति छेदः । तेन युष्मदस्मद्भ्यां परः साम आकं भवति ॥ अनयोश्चाकारोऽन्तादेशः ॥ अत्राहुः । नन्वतियुष्माकमित्यादौ गौणत्वात्त्यदाद्यत्वाभावादनवर्णान्तत्वात्सुडभावात्कथं सामिति चेत्सत्यम् । तन्त्रादिना सामिति द्वयं बोध्यम् । एकस्य तु सुटा सहाम् सामिति द्वितीयस्य तु आमा सह साम् । ततश्च सुट्सहित आम् केवलश्च आकं भवति तयोश्चाकार इत्यर्थो भवतीति । अत्रेदमवधेयम् । गौणत्वात्त्यदाद्यत्वाभावादनवर्णान्तत्वात्सुडभावादिति किमर्थं गौणत्वात् सुडभावादित्यस्यैव वक्तुमुचितत्वात् सुटोऽपि सर्वादिकार्यित्वात् गौणत्वेऽप्रवृत्तेः । अन्यथा आकारान्तादेशेनावर्णान्तत्वात् तन्त्रादिप्रयासोऽनर्थकः संपद्येत ससुट्निर्देशस्तु आन् आदेशस्य स्थानिवद्भावेनामृत्वमाश्रित्य पश्चादपि सुट् स्यादिति तन्निवृत्तये अयमेवात्र ग्रन्थे स्थानिवद्भावज्ञापकः 'त्वन्मदेकत्वे' 'युवावौ द्विवचने' इति सूत्रद्वयेऽपि एकत्वद्विवचनशब्दौ न प्रत्ययपरौ किं त्वर्थपराविति फलं दर्शयति । स्वार्थद्रव्यकारकलिङ्गसंख्येत्यादिपञ्चकं नामार्थ इति पक्षे संज्ञाया अपि नामार्थत्वादिति भावः । त्रिकपक्षे तु ह्येकार्थवाचिनी इति पाठ्यम् । संख्यायां विभक्त्यर्थत्वेऽपि संख्येयस्य नामत्वानपायात् । अन्यसंख्यश्चेत् युष्मदस्मदर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थः । समस्यमाने युष्मदस्मदी ह्येकत्ववाचिनी चेत् समासार्थः अन्यसंख्यश्चेत् तदा युवावौ त्वन्मदावपि भवत इत्यर्थः ॥ **तयोरिति** ॥ युष्मदस्मदोर्ह्येकार्थत्वात् द्वित्वार्थत्वैकार्थत्वाभावादित्यर्थः । संकलितार्थस्त्वयम् । यदा वाक्ये युष्मदस्मदोरेकत्वे तदा त्वन्मदादेशौ भवत एव । त्वन्मदेकत्व इति सूत्रे युष्मदस्मदोरेकत्वाभिधानस्योक्तत्वात् । यदा वाक्ये युष्मदस्मदी द्वित्वे तदा युवावौ भवत एव । युष्मदस्मदोर्द्वित्वाविधायित्वात् । यदा तु वाक्ये युष्मदस्मदी बह्वर्थे समासार्थः द्वित्ववाची एकत्ववाची तदा युष्मदस्मदोर्द्वित्वार्थत्वैकार्थत्वाभावान्न युवावौ न वा त्वन्मदौ ॥

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ ॥ युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयासहितयोर्यथासंख्येनामी आदेशा भवन्ति ॥ तत्रैकवचनेन सह ते मे । द्विवचनेन वां नौ । बहुवचनेन वस्नसौ ॥**

( सुबोधिनी )-**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ ॥** षष्ठी च चतुर्थी च द्वितीया च षष्ठीचतुर्थीद्वितीयास्ताभिः । अल्पस्वरत्वात् षष्ठीत्यस्य पूर्वनिपातः । सहयोगे तृतीया तया साहित्यं बोध्यते । तत् किं साहित्यम् । श्रूयमाणविभक्तिकयोरेवादेशा भवन्ति न लुप्तविभक्तिकयोरिति । तेन समासे युष्माकं पुत्र इति युष्मत्पुत्रो ब्रवीति । अस्माकं पुत्र इत्यस्मत्पुत्रो ब्रवीतीत्यत्र प्रत्ययलक्षणेन षष्ठ्यन्तयोर्युष्मदस्मदोर्वस्नसौ न ॥

( तत्त्वदी० )-**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्ते मे वान्नौ वस्नसौ** इति ॥ अत्र व्याख्यानादेकार्थस्यैकार्थो य इति यथाक्रमम् । न त्वर्थतो नापि शब्दतः । अर्थतस्त्वेषां न

वत्वम् । आदेशानां त्रयत्वमिति वैषम्यम् । शब्दतस्तु षष्ठ्यास्तेमे इत्यादिक्रमप्रसंगः स्यात् । द्वितीयास्विति त्यक्त्वा द्वितीयाभिरिति तृतीयोपादानं श्रूयमाणविभक्त्या साहित्यलाभार्थम् । लुप्तया प्रत्ययलक्षणेन साहित्यासंभवात् । तेनेति युष्मत्पुत्रो ब्रवीतीत्यादौ न । तृतीया तु सहयोगे । अल्पस्वरत्वात्षष्ठ्याः पूर्वनिपातस्तदपेक्षया चतुर्थ्याः ॥

**त्वामामा ॥ अमा सहितयोर्युष्मदस्मदोस्त्वामा एतौ भवतः॥ श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म सः ॥ स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥ सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ॥ सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योत्र वः स नः ॥ २ ॥ एकवाक्ये युष्मदस्मदादेशा वक्तव्याः । एकाख्यातं वाक्यम् । तेनेह न । ओदनं पच तव भविष्यति । इह तु स्यादेव । शालीनामोदनं ते दास्यामि ॥**

( सुबोधिनी )—त्वामामा ॥ तेमयोरपवादोऽयम् । षष्ठीबहुवचनस्यामोऽत्र ग्रहणं न व्याख्यानात् । व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति भावः ॥ श्रीशस्त्वावतु मापीह दत्तात् ते मेऽपि शर्म सः ॥ स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥ सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः । सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥ उक्तानादेशान् वचनक्रमेणोदाहरति । द्वितीयैकवचने यथा । श्रिय ईशः श्रीशो हरिरिह जगति त्वामपि मामपि अवतु रक्षतात् । चतुर्थ्येकवचने यथा । स हरिस्ते तुभ्यमपि मे मह्यमपि शर्म सुखं दत्तात् । दानपात्रे चतुर्थी । षष्ठ्येकवचने यथा । स हरिस्ते तव मे ममापि स्वामी वर्त्तते । स्वाम्यादियोगे इति षष्ठी । सप्तम्यविधानात् । द्वितीयाद्विवचने यथा । विभुर्विष्णुर्वां युवां नावपि आवामपि पातु रक्षतु । चतुर्थीद्विवचने यथा । ईशः शंभुर्वां युवाभ्यां नौ आवाभ्यां सुखं ददातु । षष्ठीद्विवचने यथा । हरिर्वां युवयोः नावपि आवयोरपि पाति रक्षतीति पतिः । द्वितीयाबहुवचने यथा । स हरिर्वो युष्मान् नोऽस्मानव्यात् रक्षतु चतुर्थीबहुवचने यथा । सं वो युष्मभ्यं नोऽस्मभ्यं शिवं कल्याणं दद्यात् । षष्ठीबहुवचने यथा । स हरिर्वो युष्माकं नोऽस्माकमत्र लोके सेवितुमर्हः सेव्यः । ऋहसादृध्यणिति कर्मणि ध्यण् । कृत्यानां कर्तरि वेति षष्ठी । एकवाक्ये युष्मदस्मदादेशा वक्तव्याः । एकवाक्ये एकाख्यातेऽनयोः स्थाने उक्ता आदेशा भवन्ति । एकमाख्यातं यत्र तदिति बहुव्रीहिः एकाख्यातं वाक्यमुच्यते ॥ ननु पश्य मृगो धावति इत्यादावेकवाक्यत्वव्यवहारो न स्यात् । सत्यम् । एकाख्यातमित्यत्राख्यातं विशेषसमर्पकं विवक्षितम् । ततश्च पश्य मृगो धावतीत्यत्राख्यातद्वये सत्यपि पश्येत्यस्यैव विशेषसमर्पकत्वान्नोक्तदोषः ॥ तथा च वार्तिककारः ।

आख्यातं सविशेषणं वाक्यमित्याह। त्वमोदनं पच तव भविष्यति। अत्र ते इत्यादेशो न वाक्यद्वयत्वात्। एकवाक्ये यथा। अहं ते तुभ्यमोदनं दास्यामि॥

( तत्त्वदी० )–त्वामामा इति॥ त्वा मा अमा इति च्छेदः। तेमयोरपवादोऽयम्। आमस्तु न ग्रहणं एकवचनान्तस्यानिर्निर्देशात्॥ श्रीश इत्यादि॥ अवनकर्मत्वात्कर्मणि द्वितीया त्वा मेति॥ ते मे दानपात्रत्वाच्चतुर्थ्येकवचनं तुभ्यं मह्यमित्यस्य स्थाने॥ स्वाम्यादियोगे षष्ठीति षष्ठ्येकवचनं ते मे तव ममेत्यर्थः॥ द्विवचनं दर्शयति। पातु वामपीति युवामावामित्यर्थः। कर्मत्वाद् द्वितीया॥ सुखमिति॥ वान्नौ युवाभ्यामावाभ्यामित्यर्थः। अत्रापि दानपात्रत्वाच्चतुर्थी। पतिरिति। वान्नौ युवयोरावयोरित्यर्थः। अत्रापि स्वाम्यादियोगे षष्ठीति षष्ठीबहुवचनं दर्शयति। सोऽव्याद्वो न इति॥ वः युष्मान् नः अस्मान् स हरिः अव्यात् रक्ष्यादित्यर्थः॥ शिवं वः नः युष्मभ्यमस्मभ्यमित्यर्थः। सेव्योऽत्र वः स नः। युष्माकमस्माकमित्यर्थः। कृत्ययोगे षष्ठी॥

**(एतेऽनन्वादेशे वा) धाता ते तव भक्तोऽस्ति। अन्वादेशे नित्यम्। तस्मै ते नमः॥**

( सुबोधिनी )–एतेऽनन्वादेशे वा वक्तव्याः॥ एते तेमयादय आदेशाः। युष्मदस्मदोः स्थानेऽनन्वादेशेऽर्थे एते आदेशा विकल्पेन भवन्ति॥ अन्वादेशे नित्यम्। युष्मदस्मदोः स्थानेऽन्वादेशेऽर्थे एते आदेशा नित्यं स्युः॥ अनन्वादेशेऽर्थे। धाता ब्रह्मा ते भक्तस्तव भक्तोऽस्तीति वा॥ अन्वादेशे तस्मै पूर्वोक्ताय ते तुभ्यं विष्णवे नमोऽस्तु॥

( तत्त्वदी० )–अनन्वादेश इति॥ युष्मदस्मदोरिति सूत्रे ग्वौ वेत्यतो वेत्यनुवर्त्य तस्य व्यवस्थितत्वमाश्रित्य विकल्पः॥

**नादौ॥ वाक्यादौ पादादौ च वर्तमानयोर्युष्मदस्मदोर्नैते॥ त्वां पातु। 'वेदैरशेषैः संवेद्योऽस्मान् कृष्णः सर्वदावतु॥'**

( सुबोधिनी )–नादौ॥ वाक्यादौ मा भूत्। यथा त्वां पातु। पादादावपि माभूत्। यथा कृष्णोऽस्मान् सर्वदा सर्वस्मिन् कालेऽवतु पातु। कीदृशः। अशेषैः समस्तैर्वेदैः कृत्वा संवेद्यो ज्ञायमानः। संवेत्तुं योग्यः संवेद्यः। कर्मणि ण्यत्॥

( तत्त्वदी० )–नादाविति॥ आदित्वं च सत्यन्यस्मिन् तस्मात्पूर्वं नास्तीति वचनात्स्वप्राग्वर्णान्तरशून्यत्वम्। सत्यन्यास्मिन्निति विशेषणरहितलक्षणमन्ये वदन्ति। त्वन्मदादीनां तु नायं निषेधः। मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरानिति न्यायात्। योगविभागसामर्थ्यादनन्तरस्येति न्यायं बाधित्वा त्वा मामेत्यस्यैव न निषेधः। अन्यथा त्वा मामा नादावित्येकयोगमेवाकरिष्यत्॥

**( विशेष्यपूर्वं संबोधनेतरपूर्वं संबोधनं च हित्वान्यस्मात्संबोधनात्परयोर्नैते ) देवास्मान् पाहि नृहरे विष्णोऽस्मान् रक्ष सर्वदा। विशेष्यपूर्वात्तु। हरे कृपालो नः पाहि सर्वदा रक्ष देव नः॥**

( सुबोधिनी )–विशेष्यपूर्वं संबोधनेतरपूर्वं संबोधनं च हित्वान्यस्मात्संबोधनात्परयोर्नैते ॥ संबोधनात्परयोर्युष्मदस्मदोः स्थाने एते आदेशा न भवन्ति। किं कृत्वा। विशेष्यं पूर्वं यस्य तत् एतादृशं विशेषणात्मकं संबोधनं त्यक्त्वा। च पुनः संबोधनादितरत् पदं पूर्वं यस्य तत् एतादृशं संबोधनं त्यक्त्वा। विशेष्यपूर्वात् संबोधनेतरपूर्वाच्च संबोधनात् परयोर्युष्मदस्मदोः स्थाने एते आदेशा भवन्तीत्यर्थः। हे देव त्वमस्मान् पाहि रक्षेत्यर्थः हे नरसिंहावतार हे विष्णो त्वमस्मान् रक्ष पालयेत्यत्र संबोधनात्परस्यास्मानित्यस्य नसादेशो न जातः। विशेष्यपूर्वात्संबोधनात्तु स्युरेव। यथा। हे हरे कृपास्यास्ति कृपालुस्तस्य संबोधनं हे कृपालो त्वं नोऽस्मान्पाहि हरे इति विशेष्यं कृपालो इति विशेषणम्। संबोधनेतरपूर्वात्संबोधनात्तु यथा। हे देव त्वं नोऽस्मान् सर्वस्मिन्काले रक्षेत्यत्र देवेति संबोधनस्य सत्त्वेऽपि ततः प्राचीनं रक्षेत्याश्रित्यादेशः॥

( तत्त्वदी० )–नेति योगविभागादन्यत्रापि नेत्याशयेनाह॥ **विशेष्यपूर्वमित्यादि**॥ विशेष्यं पूर्वं यस्मात् तद्विशेष्यपूर्वं संबोधनम्। संबोधनेतरपूर्वमिति। संबोधनादितरत्संबोधनेतरत्पूर्वं यस्य तद्द्वयमपि हित्वा त्यक्त्वेत्यर्थः॥

**चादिभिश्च॥ च वा ह अह एव एभिर्योगे नैते। 'आवयोर्युवयोश्चेशो हरिर्मामेव रक्षतु॥'**

( सुबोधिनी )–चादिभिश्च॥ चादिगणस्थाः पञ्चैव चादयो ग्राह्या न त्वधिकाः लक्ष्यानुरोधात्। सहयोगे तृतीया। तया साक्षात्संबन्धो गृह्यते न तु परंपरासंबन्धः। यत्र युष्मदस्मदर्थगतान्समुच्चयादीन् चादयो द्योतयन्ति तदा चादिभिः सहार्थद्वारा युष्मदस्मदोः साक्षात्संबन्धस्तत्रायं निषेध इत्यर्थः। यथा। आवयोर्द्वयोर्युवयोर्द्वयोश्च समुच्चये हरिरीशः स्वामीत्यर्थः॥ वा विकल्पे प्रसिद्धौ। अह पूजायाम्। एवावधारणे। परंपरासंबन्धे तु स्युरेव। यथा। हरो हरिश्च मे स्वामीत्यत्र चशब्दो हरहरिगतं समुच्चयं वक्ति हरिहराभ्यां सहास्मदः संबन्धो न तु समुच्चयेन। किं तु परंपरासंबन्धोऽस्ति। लक्षणं तु समुच्चीयमानादर्थान्तरसंबन्धः परंपरासंबन्धः॥

( तत्त्वदी० )–**चादिभिरिति**॥ लक्ष्यानुरोधाच्चादिपञ्चकस्यैव योगे नान्यस्येत्यर्थः। साक्षाद्योगे एवायं निषेधः। परंपरासंबन्धे तु आदेशाः स्युरेव। हरो हरिश्च मे स्वामी भक्त इत्यादि। अत्र केचित्। येन हरेस्त्वं भक्तस्तेनैव कारणेनाहमपि भक्त इति योज्यम्। यदि तेनेत्यनेन भक्तत्वत्राणे हेतुर्निर्दिश्यते तदा सापेक्षत्वविधानत्वमेव तदिममिति वदन्वादेशो न स्यादिति तन्नेति दीक्षिताः। तथाहि। सापेक्षत्वविधानेऽन्वादेशत्वं नास्तीति तावदसंगतम्। आदेशो हि विधिः किंचिद्विधाय पश्चादितरविधिश्चान्वादेशः न तु निरपेक्षत्वगर्भः अशब्दार्थत्वात् शास्त्रे तथा परिभाषितत्वाच्च। न च प्रयोगदर्शनादेव तथा कल्प्यत इति वाच्यम्। 'तदेनमुल्लंघितशासनं विधिर्विधेहि कीनाश-

निकेतनातिथिम् ' इत्यादौ सापेक्षत्वेऽपि एनादेशदर्शनात् । 'नक्तं भीरुस्यम् ' इति तु न विधिः किं त्वनुवादः । अतस्तादिममिति न विरुध्यते । एवं स्थिते येन त्वं भक्त इति यच्छब्दाध्याहारक्लेशो व्यर्थः । किं तु तेन त्रायत इत्येव संबन्धः प्रक्रान्तार्थत्वाच्च न यच्छब्दापेक्षेति । तेनेति विद्यमानपदम् । हरिरिति प्रथमान्तम् ततः परस्यादेशः । तथा त्रायत इत्यस्मात्परः स इति प्रथमान्तम् । न च त्रायत इति भिन्नवाक्यस्थमिति भ्रमितव्यं स हरिस्त्वा मा त्रायत इति तन्त्रेणानेकसंबन्धात् ॥

इति तत्त्वदीपिकायां युष्मदस्मत्प्रक्रिया ।

**( अचाक्षुषज्ञानार्थधातुभिर्योगे च न )** चेतसा त्वां समीक्षते । भक्त स्तव रूपं ध्यायति । चाक्षुषज्ञाने तु भक्तस्त्वा पश्यति चक्षुषा ॥

( सुबोधिनी )—अचाक्षुषज्ञानार्थधातुभिर्योगे च न ॥ अचाक्षुषज्ञानमर्थो येषां ते अचाक्षुषज्ञानार्थाः अचाक्षुषज्ञानार्थाश्च ते धातवश्च अचाक्षुषज्ञानार्थधातवस्तैर्योगे नैते आदेशा भवन्ति ॥ यथा स भक्तः चेतसा चित्तसंबन्धिध्यानेन त्वां समीक्षते पश्यतीत्यर्थः । परंपरासंबन्धेऽपि निषेधः । यथा भक्तस्तव रूपं ध्यायति ॥

**( विद्यमानपूर्वात्प्रथमान्तात्परयोरन्वादेशेऽप्येते वा )** 'भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्' त्वामेति वा ॥ ॥ इति युष्मदस्मत्प्रक्रिया ॥

(सुबोधिनी)—विद्यमानपूर्वात्प्रथमान्तात्परयोरन्वादेशेऽप्येते वा ॥ विद्यमानं पदं पूर्वं यस्य स विद्यमानपूर्वस्तस्मात् प्रथमान्तात्परयोर्युष्मदस्मदोरन्वादेशे अथेंऽपि वादेशा भवन्ति । अन्वादेशे नित्यमित्यविशेषोक्त्या । नित्यत्वे प्राप्ते विकल्पार्थमिदं वचनम् । यथा त्वं भक्तोऽहमपि भक्तस्तेन हरिस्त्वां मां त्रायते पालयतीत्यर्थः ॥ अत्र तेनेति पूर्वं विद्यमानं पदं ततो हरिरिति प्रथमान्तं ततः परस्य युष्मच्छब्दस्य त्वादेश उत्तरत्र त्रायते इति । विद्यमानं परं ततः स इति प्रथमान्तं ततः परस्यास्मच्छब्दस्य मादेशो बोध्यः ॥

इति सुबोधिन्यां युष्मदस्मत्प्रक्रिया ॥

---

# अथाऽव्ययानि ।

चादिर्निपातः॥ च । वा । ह । अह । एव । एवम् । नूनम् । पृथक् । शश्वत् । युगपत् । भूयस् । नह । हन्त । विना । नाना । स्वस्ति । अस्ति । दोषा । नक्तम् । मृषा । मिथ्या । मिथस् । अथ । अथो । अहो । ह्यस् । श्वस् । उच्चैस् । शनैस् । ऋधक् । ऋते । आरात् । दिवा । रात्रौ ।

सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । अद्धा । इद्धा । वत् । उपधा । सामि । सना । सनत् । सनात् । तिरस् । अन्तरा । अन्तरेण । सहसा । अलम् । वषट् । क्षमा । विहायसा । मुधा । पुरा । मिथो । प्रायस् । मुहुस् । सार्द्धम् । साकम् । नमस् । हिरुक् । धिक् । मा । माङ् । अम् । आम् । नेत् । चेत् । क्वचित् । उञ् । यत् । सत्यम् । जातु । कम् । शम् । ज्योक् । रहसि । अभीक्ष्णम् । अनेहा । आ । आत् । न्वै । द्वै । रै । किम् । यत् । तत् । इति । एव । हम् । हो । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । यावत् । तावत् । स्वाहा । स्वधा । तथाहि । खलु । किल । सुष्ठु । दुष्ठु । आदह ॥

( उपसर्गस्वरविभक्तिप्रतिरूपकाश्च ) अवदत्तम् । अहंयुः । हेतौ । स्वयम् । उत । नञ् । स्वधा । स्म । अहम् । अस्मि । वै । शंवट् । दिष्ट्या । अ । आ । इ । ई । उ । ऊ । ऋ । ॠ । ऌ । ॡ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । हे । है । भोः । अये । द्य । विषु । रे । अरे । एकपदे । द्राक् । मङ्क्षु । युत् । आतः । श्रौषट् । वौषट् । इत्यादि ॥ तत्रादिर्विभक्त्यर्थे निपात्यते ॥ तस्मिन्निति तत्र । अस्मिन्निति अत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र । क्व । कुह । तेन प्रकारेण तथा । सर्वथा । कथम् । इत्थम् । अस्मादिति इतः । एतस्मादित्येततः । ततः । यतः । सर्वतः । कुतः । बहुतः । सार्वविभक्तिकस्तसित्येके ॥ आदितः । मध्यतः । उपरि । अन्ततः । पूर्वस्मिन्निति पुरः । पुरस्तात् । अधः । अधस्तात् । उपरिष्टात् । परस्मिन्निति परेण । दक्षिणेन । दक्षिणा । दक्षिणतः । उत्तरतः । दक्षिणस्यां दिशि दूरे दक्षिणा । दक्षिणाहि ॥ राजाधीनं राजसात् । सर्वं भस्म भस्मसात् ॥ ऊररी ऊरी उररी विस्तारांगीकारयोः ॥ सद्यआदिः काले । समानेऽह्नि सद्यः । अद्य । अधुना । इदानीम् । तस्मिन् काले । तदा । यदा । कदा । सर्वदा । एकदा । अन्यदा । सपदि । सांप्रतम् । झटिति । तूर्णम् । आशु । शीघ्रम् । पूर्वेद्युः । परेद्युः । परेद्यवि । ऐषमः । परुत् । परारि । अन्येद्युः । अन्यतरेद्युः । उभयेद्युः । तर्हि । यर्हि । कर्हि । एतर्हि ॥

( सुबोधिनी )—चादिर्निपातः ॥ च आदिर्यस्य स चादिः । निश्चयेन पतत्यनेकेष्वर्थेषु द्योतकत्वादिति निपातः । पत्लृ, पतने । अस्माज्ज्वलादेर्ण इति ण प्रत्ययः । असत्ववा-

चिनामेव चादीनां निपातसंज्ञा अव्ययसंज्ञा च भवति। स्वरादीनां तु सत्त्ववाचिनामसत्त्ववाचिनां चाव्ययसंज्ञैव न निपातसंज्ञा। स्वस्ति वाचयति स्वः पश्यति स्वः पततीत्यादा कर्मादिकारकयोगेन सत्त्ववाचकत्वं स्वरादीनां ह्यस्त्येव। एकस्वराणां निपातानां संधिर्न भवतीति निपातसंज्ञाफलम्। एकस्वराणां स्वरादीनां तु संधिर्भवत्येव तेषां निपातसंज्ञाभावात्॥ चेति समुच्चयान्वाचयेतरेतरयोगसमाहारेषु॥ 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये'॥ होति प्रसिद्धौ॥ अहेति पूजायाम्॥ एवेत्यवधारणे अनवक्लृप्तौ च॥ एवमित्युक्तपरामर्शे॥ नूनमिति निश्चये वितर्के च॥ पृथगिति भिन्नार्थे॥ शश्वदिति पौनःपुन्ये नित्ये सहार्थे च॥ युगपदित्येककाले॥ भूयसिति पुनरथ आधिक्ये च॥ नहेति प्रत्यारम्भे॥ हन्तेति हर्षे विषादे अनुकम्पायां वाक्यारम्भे च॥ विनेति वर्जने॥ नानेत्यनेकविनार्थयोः॥ स्वस्तीति मंगले॥ अस्तीति सत्तार्थे॥ दोषेति रात्रौ॥ वृथेति व्यर्थे॥ मृषेति वितथे॥ नक्तमिति रात्रौ॥ मिथ्येति वितथे॥ मिथसिति रहः सहार्थयोः॥ अथेति मंगलाऽनन्तरारम्भप्रश्नकात्स्न्यार्धिकारप्रतिज्ञासमुच्चयेषु॥ अथो इत्यथवत्॥ अहो इति विकल्पे चेदर्थेऽपि॥ ह्यसिति अतीतेऽह्नि॥ श्वसिति अनागते दिने॥ उच्चैसिति महति॥ नीचैसिति अल्पेऽर्थे॥ शनैसिति क्रियामान्द्ये॥ ऋधगिति सत्ये॥ वियोगशीघ्रसामीप्यलाघवेस्वित्यन्ये॥ ऋते वर्जने॥ आरादिति दूरसमीपयोः॥ दिवेति दिवसे॥ रात्राविति निशि॥ सायमिति निशामुखे॥ चिरमिति बहुकाले॥ मनाक्, ईषत्, इमावल्पे॥ जोषमिति सुखे मौने च॥ तूष्णीमिति मौने॥ बहिस्, अवस्, इमौ बाह्ये॥ समयेति समीपे मध्ये च॥ निकषेति समीपे॥ अद्धेति स्फुटावधारयोः। तत्त्वातिशययोरित्यन्ये॥ इद्धेति प्राकाश्ये॥ वत् 'वत्तुल्ये' इत्यादिना विहितो यो वत्प्रत्ययः स इह गृह्यते। प्रत्ययमात्रस्य संज्ञाप्रयोजनाभावात्। प्रत्ययान्तं ग्रहीतव्यम्। यथा। ब्राह्मणवत्। क्षत्रियवत्॥ उपधेति भेदे॥ सामीत्यर्द्धजुगुप्सितयोः॥ सना, सनत्, सनात्, एते त्रयो नित्ये॥ तिरसिति अन्तर्द्धौ तिर्यगर्थे परिभवे च॥ अन्तरेति मध्ये विनार्थे च॥ अन्तरेणेति वर्जने सहसेति आकस्मिकाविमर्शयोः॥ अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु॥ वषडिति हविर्दाने॥ क्षमेति क्षान्तौ॥ विहायसेति वियदर्थे॥ मुधेति व्यर्थे॥ पुरेति अविरते चिरातीते भविष्यदासन्ने च॥ मिथो इति रहःसहार्थयोः॥ प्रायसिति बाहुल्ये॥ मुहुसिति पुनरर्थे॥ साकं, सार्धमेतौ सहार्थे॥ नमसिति नतौ॥ हिरुगिति वर्जने॥ धिगिति निन्दाभर्त्सनयोः॥ मा, माङ्; एतौ निषेधाशङ्कयोः॥ अमिति शैघ्र्येऽल्पे च॥ आमिति अङ्गीकारे॥ नेदिति शङ्कायां प्रतिषेधविचारसमुच्चयेषु॥ चेदिति यद्यर्थे॥ कच्चिदितीष्टप्रश्ने च॥ उञिति संतर्कसंबोधनपूरणेषु॥ यदीति पक्षान्तरे॥ सत्यमिति प्रश्नप्रतिषेधसत्येषु॥ जात्विति कदाचिदर्थे॥ कमिति वारिमूर्द्धनिन्दासुखेषु॥ समिति सुखे॥ ज्योगिति कालभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे च॥ रहसीत्येकान्ते॥ अभीक्ष्णमिति पौनःपुन्ये॥

अनेहा इति विस्मयविषादशोकजुगुप्सार्तिषु ॥ आ इति भयाश्चर्ययोः ॥ आदिति शंकायाम् ॥ न्वै विशेषवितर्कयोः ॥ द्वै वितर्के ॥ रै दाने अनादरे च। रै करोति ददातीत्यर्थः । रैत्वं किं वदसीति ॥ किमिति पृच्छाजुगुप्सेषदर्थातिशयेषु ॥ यदिति यत्कारणे॥ तादिति हेतौ ॥ इतीति हेतुप्रकारप्रकर्षैवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्तिप्रकृतवक्ष्यमाणपरामर्शमतेषु ॥ एवेत्युपमायाम् ॥ हंहो इति विचारे ॥ स्वरिति स्वर्गे परलोके च ॥ अन्तारिति मध्ये ॥ प्रातारिति प्रत्यूषे ॥ पुनरित्यप्रथमे विशेषे च ॥ सनुतरित्यन्तर्द्धाने स्वराद्याः पञ्च स्वरान्ताः ॥ यावत्तावदेतौ साकल्यावधिमानावधारणेषु । साकल्ये यावत्कार्यं तावत्कृतम् । अवधौ यावद्गन्तव्यं तावत्तिष्ठामि । माने यावद्दत्तं तावद्भुक्तम् । अवधारणे यावदमत्रं तावद् ब्राह्मणानामन्त्रयस्वेति ॥ स्वाहेति देवताभ्यो दाने ॥ तथाहीति निदर्शने ॥ खल्विति निषेधवाक्यालंकारनिश्चयेषु ॥ किलेति वार्तायामलीके च ॥ नु वितर्के ॥ ननु इति प्रश्नावधारणानुज्ञेच्छामन्त्रेषु वाक्यारम्भादावपि ॥ सुष्ठु प्रशंसायाम् ॥ दुष्ठु निकृष्टार्थे ॥ आदहेत्युपक्रमहिंसाकुत्सनेषु ॥

उपसर्गस्वरविभक्तिप्रतिरूपकाश्च॥उपसर्गप्रतिरूपको यथा अवदत्तमिति । दोदत्तीति दथादेशः । इह अवस्यानुपसर्गत्वात्स्वरान्तो वेति तकारो न भवति ॥ स्वरप्रतिरूपको यथा । अ आ इत्यादि ॥ विभक्तिप्रतिरूपको यथा । अहंयुः । अहमिति सिबन्तप्रतिरूपकमहंकारे वर्तते । ऊर्णाहंशुभंभ्यो युरिति युः ॥ यदाऽस्मच्छब्दान्निष्पन्नो याऽहंशब्दस्तस्मात् प्रत्ययः क्रियते तर्हि समासप्रत्यययोरिति लुकि सति अस्मद्यु इति स्थिते मदीय इत्यत्रेव मदादेशे मद्युरिति स्यादिति भावः ॥ हेताविति निमित्ते ॥ स्वयमित्यात्मनेत्यर्थे ॥ उतेति विकल्पे । नञिति निषेधेषदर्थविक्षेपेषु तदन्यतद्विरुद्धतदभावेषु च ॥ स्वधेति पितृभ्यो दाने ॥ स्मेत्यतीते पादपूरणे च ॥ अस्मीत्यहमित्यर्थे ॥ वै पादपूरणे विशेषेऽपि ॥ शंवडित्यन्तःकरणे आभिमुख्ये च ॥ नो निषेधे ॥ दिष्ट्या इत्यानन्दे । सद्जनदर्शनप्रातिलोम्येष्वित्यन्ये ॥ अ इति संबोधनेऽधिक्षेपे निषेधे च ॥ आ इति वाक्यस्मरणयोः ॥ इ इति संबोधनजुगुप्साविस्मयेषु ॥ ई भर्त्सने ॥ उ ऊ दुःखवितर्कयोः ॥ ऋ ॠ ऌ ॡ गानसमूहे ॥ ए संबोधने ॥ ऐ आश्चर्ये ॥ ओ संबोधने ॥ औ अङ्गीकारे ॥ पशु सम्यगर्थे ॥ शुकम् शैघ्र्ये ॥ यथाकथाचेत्यनादरे । पाट्, प्याट् अङ्ग, है, हे, भोः, अये ( यि ) एते सप्त संबोधने ॥ घेति हिंसाप्रातिलोम्यपादपूरणेषु ॥ विषु इति नानार्थे ॥ रे, अरे, एतौ नीचामन्त्रणे ॥ एकपदे इत्यकस्मादित्यर्थे ॥ द्राक् मङ्क्षु, एतौ शैघ्र्ये ॥ युत् इति कुत्सायाम् । आतः इतीतोपीत्यर्थे ॥ श्रौषट्, वौषट्, एतौ हविर्दाने ॥ अन्येऽपि सन्ति । तथाहि । कामम् स्वाच्छन्द्ये ॥ प्रकाममित्यतिशये॥ सांप्रतमिति न्याये ॥ परमिति किंत्वर्थे ॥ साक्षादिति प्रत्यक्षे ॥ साचीति तिर्यगर्थे ॥ संवादिति वर्षे ॥ अवश्यमिति निश्चये ॥ उषेति रात्रौ ॥ ओमिति अङ्गीकारे ब्रह्मणि च॥

भूरिति पृथिव्याम् ॥ भुव इत्यन्तरिक्षे ॥ कु कुत्सितेषदर्थयोः ॥ अञ्जसेति तत्त्वशीघ्रार्थयोः ॥ मिथु इति द्वावित्यर्थे ॥ अस्तमिति विनाशे ॥ स्थाने इति युक्ते ॥ वरमिति ईषदुत्कर्षे ॥ सुदीति शुक्लपक्षे ॥ वदीति कृष्णपक्षे ॥ तुमिति तुंकारे ॥ आहेति उवाचेत्यर्थे ॥ आसेति वभूवेत्यर्थे ॥ आयोति प्रतिवन्धे । असीति त्वमित्यर्थवाक्यालंकारयोः । ब्रूहीति प्रैषानुज्ञावसरेषु । वामिति युवामित्यर्थे । चट्ठ, चाट्ठ, एतौ प्रियवाक्ये । एवमन्येऽप्यूह्याः ॥ तत्रादिर्विभक्त्यर्थे । आदिशब्दः प्रकारे वर्तते गणाभावात् । विभक्तीनामर्थोऽभिधेयो योऽपादानादिस्तस्मिन्नर्थे तत्रादिर्निपात्यते । तत्र आदिर्यस्य स तत्रादिः शब्दसमूह इत्यर्थः ॥ तस्मिन्निति तत्र ॥ एतस्मिन्नित्यत्र ॥ यस्मिन्निति यत्र ॥ कस्मिन्निति कुत्र क्व ॥ तेन प्रकारेण तथा ॥ सर्वेण प्रकारेणेति सर्वथा ॥ केन प्रकारेणेति कथम् ॥ अनेन प्रकारेण एतेन प्रकारेण वेतीत्थम् ॥ तस्मात्तस्या वेति ततः ॥ यस्मात् यस्या वेति यतः ॥ कस्मात् कस्या वेति कुतः ॥ सर्वस्मात् सर्वस्या वेति सर्वतः ॥ वहोरिति वहुतः ॥ पूर्वस्मिन् देशे पूर्वस्माद्देशात्पूर्वो वा देशः पुरः पुरस्तात् । अधः अधस्तात् । ऊर्ध्वं ऊर्ध्वात् ऊर्ध्वो वेति । उपरि उपरिष्टात् ॥ दक्षिणस्मिन् दक्षिणो वेति दक्षिणेन दक्षिणस्यां दिशि दूरे इति दक्षिणा दक्षिणाहि ॥ उत्तरस्मादुत्तरस्या वेति उत्तरतः ॥ उत्तरस्यां दिशि दूरे इति उत्तराहि उत्तरा । स भवानिति ततोभवान् तत्रभवान् । तं भवन्तमिति ततोभवन्तम् तत्रभवन्तम् । तेन भवतेति ततोभवता तत्रभवता । तस्मै भवते इति ततोभवते तत्रभवते । तस्माद्भवतः इति ततोभवतः तत्रभवतः । तस्यभवत इति ततोभवतः तत्रभवतः । तस्मिन्भवति इति ततोभवति तत्रभवति ॥ सद्यआदिः काले । अत्राप्यादिशब्दः प्रकारे वर्तते । पूर्वदेशकालादिविशिष्टो विभक्त्यर्थो गृहीतः । इह तु कालविशिष्ट एव विभक्त्यर्थो गृह्यते । समानेऽह्नीति समानस्य सादेशः द्यस्प्रत्ययश्च । तत्काले सद्यः ॥ अस्मिन्नहनीति इदमोऽशादेशो द्यप्रत्ययश्च ॥ सांप्रतदिनेऽद्य ॥ अधुना, इदानीमेतौ वर्तमानक्षणार्थे ॥ यस्मिन् काले यदा ॥ कस्मिन् काले कदा ॥ सर्वस्मिन् काले सर्वदा ॥ एकस्मिन् काले एकदा ॥ अन्यस्मिन् काले अन्यदा ॥ सपदि, सांप्रतम्, संप्रति, एते त्रयो वर्तमानक्षणार्थे । झटिति, तूर्णम्, आशु, शीघ्रमेते शब्दे ॥ पूर्वस्मिन्नहनीति पूर्वेद्युः ॥ परस्मिन्नहनीति परेद्यवि ॥ अस्मिन् वर्षे इति ऐषमः ॥ पूर्वस्मिन् वर्षे परुत् ॥ पूर्वतरे वर्षे परारि ॥ अन्यस्मिन्नहनीति अन्येद्युः ॥ अन्यतरस्मिन्नहनीति अन्यतरेद्युः ॥ उभयस्मिन्नहनीति उभयेद्युः ॥ तस्मिन्काले तर्हि ॥ कस्मिन्काले कर्हि ॥ यस्मिन् काले यर्हि ॥ एतस्मिन्काले एतर्हि ॥

( तत्त्वदी० )—**चादिर्निपात** इति ॥ च आदिर्यस्य स चादिः । आदिशब्दो व्यवस्थावाची । प्रकारार्थ इत्यन्ये । तेनानुक्तानामपि संग्रहः । निश्चयेन पतन्त्यनेकेष्वर्थेषु द्योतकत्वान्निपाताः । ज्वलादेर्णः । "निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्" इति केचित् । निपातसंज्ञा तु स्वरादीनां संधिनिषेधाभावार्थामिति निष्कर्षः । " प्रण-

म्य पितरं शांतं श्रीमत्क्षेमकराभिधम् । अव्ययार्थं प्रकटये पूर्वाचार्यैरुदीरितम् ॥ १ ॥ " च पुनरादौ ॥ वा विकल्पे ॥ ह स्फुटपादपूरणयोः ॥ हि निश्चये ॥ अहह खेदे ॥ एव अवधारणे ॥ एवमङ्गीकारे ॥ नूनं निश्चये ॥ पृथग्भिन्नार्थे ॥ अन्तरेण वर्जनार्थे ॥ स्वस्ति कल्याणे ॥ अस्ति सत्तायाम् ॥ दोषा, नक्तम्, रात्रौ ॥ मृषा, मिथ्या, असत्ये । मिथस् अन्योऽन्यार्थे ॥ अथ, अथो, आनन्तर्ये ॥ ह्यः पूर्वदिने ॥ श्वः परादिने ॥ उच्चैस् उच्चे ॥ नीचैस् नीचे ॥ स्वर् स्वर्गे ॥ अन्तर् मध्ये ॥ प्रातः प्रत्यूषे ॥ पुनर्, भूयस्, पौनःपुन्ये ॥ आहोस्वित् वितर्के ॥ अन्तरा मध्ये । अलं भूषायाम् ॥ कृतं वारणे ॥ ईषदल्पे ॥ किल, खलु, वै, इति निश्चये ॥ आरात् दूरान्तिकयोः ॥ भृशमत्यर्थे ॥ यत् यत्कारणे ॥ तत् तत्कारणे ॥ शश्वत् सातत्ये ॥ अ संबोधने अधिक्षेपे निषेधे च ॥ आ नयाश्चर्ययोः वाक्यस्मरणयोः ॥ इ, ई भर्त्सने ॥ उ, ऊ दुःखवितर्कयोः ॥ ऋ ॠ ऌ ॡ गणस्तोमे ॥ ए संबोधने ॥ ऐ आश्चर्ये ॥ ओ भवत्वर्थे ॥ औ अङ्गीकारे ॥ श्रौषट्, वौषट्, वषडिति हविर्दाने ॥ तत्क्षणे सद्यः ॥ अस्मिन्दिने अद्य ॥ अस्मिन्क्षणे अधुना इदानीं, सांप्रतं, संप्रति, त्रयमपि ॥ पूर्वस्मिन्दिने पूर्वेद्युः ॥ अन्यस्मिन्दिने अन्येद्युः ॥ प्र प्रकर्षे निराकरणे ॥ सं सम्यगर्थे ॥ अनु पश्चादर्थे ॥ अव स्थितिज्ञानयोः ॥ निर् निर्गतार्थे ॥ दुर् दुःखे ॥ अभि आभिमुख्ये ॥ वि विशेषार्थे ॥ आङ् समानार्थे ॥ नि निधने ॥ अति अतिशये ॥ अधि अधिके ॥ अपि संभावनायाम् ॥ प्रति वीप्सायाम् ॥ परि वर्जने ॥ उप समीपे ॥ श्रत् श्रद्धायाम् ॥ अन्तर् मध्ये ॥ अधि प्राकट्ये ॥ सु पूजायाम् ॥ सनुतरित्यन्तर्धाने ॥ ऋधगिति सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये ॥ युगपदिति एककाले ॥ मनाक् इति ईषदर्थे ॥ ईषदित्यल्पे ॥ जोषमिति सुखमौनयोः तूष्णीमिति मौने ॥ बहिस् इति बाह्ये ॥ अवसिति बहिरर्थे ॥ समयेत्यन्तिकमध्ययोः ॥ निकषेत्यन्तिके ॥ स्वयमिति आत्मनेत्यर्थे ॥ वृथेति व्यर्थे ॥ नञिति निषेधेषदर्थविपक्षेषु तदन्यतद्विरुद्धतदभावेष्वपि ॥ हेताविति निमित्तार्थे ॥ इद्धेति प्राकाश्ये ॥ अद्धेति स्फुटावधारणयोः ॥ तत्त्वातिशययोरित्येके ॥ सामीत्येतदर्द्धजुगुप्सितयोः ॥ सनेति नित्ये ॥ उपधेति भेदे ॥ सनादिति नित्ये ॥ सनदित्यपि ॥ तिरस् इति अन्तर्द्धौ तिर्यगर्थे वा ॥ अन्तरेति मध्यविनार्थयोः ॥ ज्योगिति कालभूयस्त्वप्रश्नयोः ॥ शीघ्रार्थे संप्रत्यर्थेऽपि ॥ कमिति वारिमूर्द्धनिन्दासुखेषु ॥ शमिति दुःखोपशमे ॥ सहसेत्याकस्मिकाविमर्शयोः ॥ नानेत्यनेकविनार्थयोः ॥ स्वस्तीति पुण्याशीःक्षेममङ्गलप्रत्याभिवादेषु ॥ स्वाहेति देवदाने ॥ स्वधेति पितृदाने ॥ अलमिति भूषणपर्याप्तिशक्तिवारणानिषेधेषु ॥ अन्यदिति अन्यार्थे ॥ उपांशु इति अप्रकाशोच्चारणरहस्ययोः ॥ क्षमेति क्षान्तौ ॥ विहायसेति वियदर्थे ॥ पुरेति चिरातीतभविष्यदासन्नेषु ॥ मिथो इति रहःसहार्थयोः । विरहान्योन्यार्थयोरपि ॥ प्रायसिति बाहुल्ये ॥ मुहुरिति पुनरर्थे ॥ प्रबाहुकमिति समकालार्थे । ऊर्द्ध्वेऽपि ॥ प्रवाहकमिति पाठान्तरम् ॥ आर्यहलमिति बलात्कारे ॥ आर्येति प्रतिबन्धे । हलमिति निषेधविवादार्थयोरिति शाकटायनः ॥ अभीक्ष्णमिति अनारते पुनरर्थे च ॥ साकं सार्द्धमित्येतौ सहार्थौ ॥ नमसिति नतौ ॥ हिरुक् इति वर्जने ॥ धिगिति निन्दाभर्त्सनयोः ॥ अथेति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु ॥ अम् शैघ्र्ये अल्पे च ॥ आमित्यङ्गीकारे ॥ प्रतामिति ग्लानौ ॥ प्रशानिति समानार्थे ॥ प्रतानिति विस्तारे ॥ मा इति निषेधे ॥ माङिति निषेधाशङ्कयोः ॥ चेत्यन्वाचयसमाहारेतरेतरसमुच्चयविनियोगतुल्ययोग्यतावधारणहेतुषु । पादपू-

रणेऽपि ॥ वेति विकल्पानवक्लृप्त्युपमानद्वन्द्वसमुच्चयेषु ॥अहेति विनियोगे। प्राचां मतं क्रमपूजनयोरपि॥ एवमिति प्रकृतपरामर्शप्रकारार्थोपदेशनिश्चयाङ्गीकारेषु ॥ नूनमिति वितर्के निश्चये च ॥ शश्वदिति सर्वकाले पौनःपुन्यनित्यशब्देष्वपि ॥ यदिति प्रश्नवितर्कप्रशंसासु ॥ काचिदिति भूयोऽर्थे॥ग्रमिति वितर्कनिश्चये च ॥ प्रशंसायां शङ्कायां च नेदिति । शङ्कायां प्रतिषेधविचारसमुच्चयेष्विति शाकटायनः ॥ चोदिति यद्यर्थे ॥ चिदिति चेदर्थे असाकल्यार्धोपमानसंपत्तिषु ॥ कच्चिदिति अभीष्टे प्रश्ने च ॥ यत्रेति अनवक्लृप्त्यमर्षगर्हाश्चर्येषु ॥ नहेति प्रारम्भे ॥ हन्तेति हर्षानुकम्पावाक्यारम्भविषादेषु । दाननिश्चययोरपि ॥ माकिमिति निषेधवर्जनयोः । नकिमित्यौपम्ययोश्च ॥ यावत्तावदित्येतौ साकल्यावधिमानावधारणेषु ॥ त्वै इति विशेषवितर्कयोः ॥ द्वै इति वितर्के ॥ रै इति आदरानादरयोः ॥ तुमिति तुंकारे ॥ तथाहि इति निदर्शने ॥ खलु इति निषेधवाक्यालंकारजिज्ञासानुनयेषु । नियमनिश्चयहेतुविवादेष्वपि ॥ किल इति वार्तानुकरणसंभाव्यहेत्वतिरस्कारालीकेषु ॥ तथेति सादृश्ये समुच्चयाभ्युपगमयोरपि ॥ अतीते पादपूरणे च ॥ अस्मीति अहमित्यर्थे ॥ आङिति ईषदर्थाभिविधिमर्यादाक्रियायोगेषु ॥ उत इति अ यर्थे ॥ उञ् इति सतर्कसंबोधनपूरणेषु ॥ आदहेति हिंसोपक्रमकुत्सनेषु । आतङ्किते कुत्सनविनाशयोः । प्रतिग्रहेऽपीति शाकटायनः ॥ वेलायाम् इति कालपरिमाणे ॥ मात्रायामिति अल्पपरिमाणे ॥ यथेति योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु ॥ किमिति पृच्छाजुगुप्सयोः । ईषदर्थातिशययोरपि ॥ यदिति यद्यर्थे ॥ हाहा इति विस्मयविषादशोकजुगुप्सार्तिषु ॥ ह इति विनियोगक्रमपादपूरणेषु ॥ हे, है, पाट्, प्याट्, एते संबोधनार्थाः ॥ अहो इति विकल्पे । चेदर्थेऽपि ॥ नन्विति प्रश्नावधारणानुज्ञेच्छामात्रेषु ॥ मन्ये इति वितर्के ॥ नहीत्यभावे ॥ उताहो इति वितर्के ॥ असीति त्वमित्यर्थवाक्यालंकारयोः ॥ ब्रूहीति प्रेषानुज्ञावसरेषु ॥ ननु इति निषेधे ॥ इति इति हेतुप्रकारप्रकर्षैवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्तिप्रकृतिवक्ष्यमाणपरामर्शमतेषु ॥ इवेतीषदर्थेऽपि ॥ मा प्रेक्षावाक्यालंकारेषु ॥ ओमित्यभ्यादानाभ्युपगमसमाध्यर्थेषु ॥ फाडिति विनिराकृतौ ॥ यदि पक्षान्तरे ॥ हो इति संबोधने ॥ इहीति तिङन्तप्रतिरूपकम् गच्छेत्यर्थे ॥ अहेत्यत्रेत्यर्थे ॥ तदिति हेतौ ॥ असाश्वादिति । अहो बत समिति सर्वतोभावे ॥ किमिति अनर्थकं पादपूरणे वा ॥ आमिति प्रतिवचनावधारणयोः ॥ हमिति स्तोभवचने ॥ वामिति युवामित्यर्थे ॥ श्रुकमिति अतिशये ॥ शुकमिति शैघ्र्ये ॥ आनुकमिति तर्के ॥ नहिकमिति निषेधे ॥ सत्यमिति प्रश्नप्रतिषेधसत्येषु ॥ ऋतमिति सत्यार्थे ॥ नोचेन्नचेदिति निषेधे ॥ जात्विति कदाचिदर्थे ॥ कथमिति प्रकारप्रश्ने ॥ कुत इति प्रश्ननिह्नवयोः ॥ कुत्रेति देशप्रश्ने ॥ अनु अवेति सपसर्गप्रतिरूपकौ अनु अव इत्येतयोरर्थे ॥ हा हौ हे एते त्रयोऽहि शोभार्थाः ॥ शंवाडिति अन्तःकरणे आभिमुख्येऽपि ॥ वै इति पादपूरणे । हिंसाप्रातिलोम्येषु ॥ दिष्ट्येत्यानन्दे । सद्भजनदर्शनप्रातिलोम्येष्वित्येके ॥ समिति सम्यगर्थे । सहेति सार्धमित्यर्थे ॥ आनुषगिति आनुपूर्व्ये ॥ अंगेति संबोधने ॥ द्राक् स्नागिति भुगित्यर्थे ॥ अरे इति नीचसंबोधने ॥ चटु चाटु इति प्रियवाक्ये ॥ हुमित्यनिच्छाभयभर्त्सनकोपेषु ॥ सुष्ठु इति प्रशंसायाम् ॥ पुरसित्यग्रे पूर्वदेशपूर्वकालयोश्च ॥ आश्विति क्षिप्रे ॥ नहीति विशेषे ॥ रहसीति एकान्ते ॥ एषामर्थानां निपाता द्योतका न तु वाचकाः

पदान्तरविनाऽप्रयोगात्। किं च वाचकत्वे घटस्य समुच्चय इतिवत् घटस्य च इत्यपि स्यात्। अपि शोभनः समुच्चयेतिवत्। शोभनं च इत्यपि स्यात्। द्योतकत्वे त्वस्य पदार्थैकदेशत्वान्न तत्र विशेषणान्वयः। अथ कथं घटश्चेत्यादौ समुच्चयादिबोध इति चेत्सत्यम् घटवल्लक्षणयैव समुच्चितघटबोधसंभवात्। विजय इत्यादौ विशिष्टजये धातोरिति चेदिति दिक्॥ **तत्रादिर्विभक्त्यर्थे** इति॥ आदिशब्दः प्रकारार्थः गणाभावात्। विभक्तीनामर्थोऽभिधेयस्तस्मिन् तत्रादिर्निपात्यते॥ **तत्रे**ति। अत्र त्रप्रत्ययष्टेरत्वं निपात्यते॥ **तत** इति। अत्र तस्प्रत्ययष्टेरत्वं च॥ **बहुत** इति। अत्र ईकारलोपः॥ तेन प्रकारेण **तथे**ति॥ तस्मिन् काले **तदे**ति॥ कालप्रकारयोर्विभक्त्यर्थत्वाभावेऽपि सदेोणादयः। प्रादेश्च तथेति सूत्रस्थसदातथेतिकालप्रकारयोरुपलक्षणम्॥ **सद्यआदि**रिति॥ तत्राप्यादिशब्दः प्रकारे। सर्वत्र देशकालादिविशिष्टो विभक्त्यर्थो गृहीत इह तु कालविशिष्ट एव विभक्त्यर्थो गृह्यते॥ **अद्ये**ति॥ अस्मिन्नहनीत्यर्थः। इदमः अः द्यप्रत्ययश्च॥ पुरः पुरस्तादिति पूर्वस्मिन्देशे पूर्वस्माद्देशात् पूर्वो वा देश इत्यर्थः॥ उपरीति ऊर्ध्वमित्यर्थः॥

**प्रादिरुपसर्गः॥ प्र। परा। अप। सम्। अनु। अव। निस्। निर्। दुस्। दुर्। अभि। वि। अधि। अति। सु। उद्। नि। प्रति। अपि। परि। उप। आङ। श्रत्। अन्तर्। आविर्॥**

( सुबोधिनी )—प्रादिरुपसर्गः॥ प्र आदिर्यस्य स प्रादिः। तद्गुणसंविज्ञानोऽयं बहुव्रीहिः। प्रकर्ष इति लिङ्गात्। उप समीपे सृज्यते उच्चार्यते क्रियावाचकस्य शब्दस्येत्युपसर्गः। कर्मणि घञ्। अन्वर्थसंज्ञाबलात् क्रियासंबद्ध इति लभ्यते। तदुक्तम्। यत् क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञेति॥ उपसर्गा हि अर्थविशेषस्य द्योतका न तु वाचकाः॥ "प्र आदिकर्म दीर्घेशभृशसंभवतृप्तिषु॥ वियोगशुद्धिशक्तीच्छाशान्तिपूजाग्रदर्शने॥१॥" आदिकर्माणि प्रारंभ कर्मणि यथा। प्रयातः॥ दीर्घे यथा। प्रबला मूषिकाः॥ ईशे यथा। प्रभुः॥ भृशार्थे यथा। प्रवदन्ति॥ संभवे यथा। हिमवतो गङ्गा प्रभवति॥ तृप्तौ यथा। प्रभुक्तमन्नम्॥ वियोगे यथा। प्रोषितः॥ शुद्धौ यथा। प्रसन्नमुदकम्॥ शक्तौ यथा। प्रशक्तः॥ इच्छायां यथा। प्रार्थयते कन्याम्॥ शान्तौ यथा। प्रशान्तोऽग्निः॥ पूजायां यथा। प्राञ्जलिः स्थितः॥ अग्रे यथा। प्रवालम्॥ दर्शने यथा। प्रलोकयाति। १। "वधे गतौ दर्शने च विक्रमेऽभिमुखे भृशे॥ अधीनमोक्षणप्रातिलोम्यकेषु परा मतः॥ २॥" वधे यथा। पराहतः॥ गतौ यथा। परागतः॥ दर्शने यथा। पराहृष्टः॥ विक्रमे यथा। पराक्रान्तः॥ अभिमुखे यथा। परावृत्तः॥ भृशे यथा पराजितः॥ अधीने यथा। पराधीनः॥ मोक्षणे यथा। पराकृतस्त्यक्त इत्यर्थः॥ प्रातिलोम्ये यथा। पराङ्मुखः। २। "अपो वियोगे विकृतौ विपरीते निदर्शने॥ आनन्दे वर्जने चौर्य्ये चारणे समुदाहृतः॥ ३॥" वियोगे यथा। अपयाति॥ विकृतौ यथा। अपकृतवान्॥

विपरीते यथा । अपशब्दः ॥ निदर्शने यथा । अपदिशति ॥ आनन्दे यथा । अपहसति ॥ वर्जने यथा । अपवनाद्वृष्टो देवः ॥ चौर्ये यथा । अपहरति ॥ चारणे यथा । अपसरति । ३ । "संयोगैक्ये च प्रभवे सत्यप्रत्यक्षसिद्धिषु ॥ भूषाश्लेषस्वीकरणक्रोधाभिमुखवाचि सम् ॥ ४ ॥" संयोगे यथा । संगतः पुत्रेण ॥ ऐक्ये यथा । संवदन्ति सख्यः ॥ प्रभवे यथा । काष्ठेऽग्निः संभवति ॥ सत्ये यथा । गां संजानाति ॥ प्रत्यक्षे यथा । संपश्यते ॥ सिद्धौ यथा । संसिद्धिः ॥ भूषायां यथा । संस्कृता कन्या ॥ आश्लेषे यथा । संधत्ते ॥ स्वीकारे यथा । संगृह्णाति ॥ क्रोधे यथा । संक्रुद्धः ॥ अभिमुखे यथा । संयाति । ४ । "वेदाधिष्ठानसामीप्यपश्चाद्भावानुबन्धने ॥ साम्याभिमुखहीनेषु विसर्गे लक्षणे त्वनुः ॥ ५ ॥" वेदे यथा । अनुवाकमधीते॥ अधिष्ठाने यथा । अनुष्ठानं देशः ॥ सामीप्ये यथा । अनुमेघं वर्षति ॥ पश्चाद्यथा । अनुरथम् ॥ भावानुबन्धने यथा । अनुशयः ॥ साम्ये यथा । अनुकृतिः ॥ अभिमुखे यथा । अनुवत्सो मातरं धावति ॥ हीने यथा । अन्वर्जुनं योद्धारः ॥ विसर्गे यथा । अनुज्ञातः ॥ लक्षणे यथा । अनुवनमसतां गतिः । ५ ।"ज्ञानावलम्बशुद्धीषदर्थे व्याप्तिपराभवे ॥ अवो ज्ञेयो वियोगे च लोकयोगानुसारतः ॥ ६ ॥" ज्ञाने यथा । अवगतोऽर्थः ॥ अवलम्बे यथा । अवलम्ब्य यष्टिं गच्छति ॥ शुद्धौ यथा । अवदातः ॥ ईषदर्थे यथा । अवलम्ब्यते ॥ व्याप्तौ यथा । अवकीर्णम् ॥ पराभवे यथा । अवघ्नन्ति ॥ वियोगे यथा । अवयातः । ६ । "निर्वियोगात्ययादेशातिक्रमे लाभनिश्चिते ॥ दुरीषदर्थे कृच्छ्रेऽर्थे कृशासंपत्तिसंकटे ॥ ७ ॥" वियोगे यथा । निःसंगो ब्रवीति ॥ अत्यये यथा । निर्मेघम् ॥ आदेशे यथा । निर्दिष्टम् ॥ अतिक्रमे यथा । निष्क्रान्तः ॥ लाभे यथा । निर्दिष्टः ॥ निश्चिते यथा । निश्चितम् ॥ दुर्—ईषदर्थे यथा । दुर्गतिः ॥ कृच्छ्रार्थे यथा । दुर्जीवः ॥ कृशे यथा । दुर्बलः ॥ असंपत्तौ यथा दुर्गतः ॥ संकटे यथा । दुर्दिनम् । ७ । "नानावियोगातिशये भृशमोहेशवाङ्मृधे॥ पैशुन्यास्मरणे भूषेषदर्थानाभिमुख्यके ॥ ८ ॥ अनवस्थामुख्यशौर्यदर्शने विरुदाहृतः ॥ आङिच्छाभयवाक्येषदर्थाश्लेषादिकर्मणि ॥ ९ ॥" नानार्थे यथा ॥ विचित्रासूत्रस्य कृतिः पाणिनेः । वियोगे यथा । वियुक्तः ॥ अतिशये यथा । विकीर्णः ॥ भृशे यथा। वितटा नद्यो महत्य इत्यर्थः ॥ मोहे यथा । विमनस्कः ॥ ईशे यथा । विभुः ॥ वाङ्मृधे यथा । विवदन्ते ॥ पैशुन्ये यथा । विगायति ॥ अस्मरणे यथा । विस्मृतः ॥ भूषायां यथा । विभूषितः ॥ ईषदर्थे यथा । विलोपितः ॥ अनाभिमुख्यके यथा । विमुखः । ८ । अनवस्थायां यथा । विभ्रान्तः ॥ मुख्ये यथा । विशिष्टः ॥ शौर्ये यथा । विक्रान्तः ॥ दर्शने यथा । विलोकयति ॥ आङ्—इच्छायां यथा । आकाङ्क्षति ॥ भये यथा । आबिभेति ॥ वाक्ये यथा । आजानाति ॥ ईषदर्थे यथा । आताम्रनखः ॥ आश्लेषे यथा । आलिङ्गति ॥ आदिकर्मणि यथा । आरभते । ९ । "बन्धनेऽभि-

विधौ शाठ्यकृच्छ्रसामीप्यसंश्रये ॥ अभिमन्त्रनिवृत्त्याशादानानुभवविस्मये ॥ १० ॥ प्रतिष्ठादेशमर्यादास्पर्द्धामुख्योर्ध्वकर्मणि ॥ नीराश्यधोभृशादेशनित्यकौशलबन्धने ॥ ॥ ११ ॥" बन्धने यथा । कवचमाबध्नन्ति ॥ अभिविधौ यथा । आकुमारं यशः ॥ शाठ्ये यथा । आचरति कपटेन ॥ कृच्छ्रे यथा । आहृतः ॥ सामीप्ये यथा । आसन्ना त्वयम् ॥ संश्रये यथा । आवसथः ॥ अभिमन्त्रे यथा । आमन्त्रणम् ॥ निवृत्तौ यथा । आधावति ॥ आशायां यथा । आशास्ते ॥ आदाने यथा । आदत्ते ॥ अनुभवे यथा । आशीतम् ॥ विस्मये यथा । आँ एवं किल तत् । १० । प्रतिष्ठायां यथा । आस्पदम् ॥ आदेशे यथा । आदिष्टः ॥ मर्यादायां यथा । आमुक्तेर्दुःखम् ॥ स्पर्धायां यथा । आह्वयते मल्लं मल्लः ॥ मुख्ये यथा । आगच्छति ॥ ऊर्ध्वकर्मणि यथा । आरोहति पर्वतम् ॥ नि–राशौ यथा । निकरो मणीनाम् ॥ अधो यथा । निपतति ॥ अभृशे यथा । निगृहीतः ॥ आदेशे यथा । निदर्शितम् ॥ नित्ये यथा । निविशते ॥ कौशले यथा । निपुणः ॥ बन्धने यथा । निबद्धः । ११ । "अन्तर्भावे समीपे निर्दर्शनोपरमाश्रये । अधिरध्ययनैश्वर्यवशित्वमरणाधिके ॥ १२ ॥" अन्तर्भावे यथा । निपीतमुदकं सिकताभिः ॥ समीपे यथा । निकृष्टः ॥ दर्शने यथा । निदर्शनम् ॥ उपरमे यथा । निवृत्तः पणतः ॥ आश्रये यथा । निलयः ॥ अधि–अध्ययने यथा । उपाध्यायादधीते ॥ ऐश्वर्ये यथा । अधिपतिः ॥ वशित्वे यथा । अधीनः ॥ स्मरणे यथा । मातुरध्येति ॥ अधिके यथा । अधिकृतम् । १२ । "अपिः संभवगर्हाशीर्मृतिभूषासमुच्चये ॥ विक्रमाति क्रमाबुद्धभृशार्थातिशयेष्वति ॥ १३ ॥" संभवे यथा । अपि प्रयोजनमस्ति ॥ गर्हायां यथा । अपि पापिनः ॥ आशिषि यथा । भद्रमपि ॥ मृतौ यथा । मरणमपि ॥ भूषायथा । अपिनह्यति हारम् ॥ समुच्चये यथा । तदपि विक्रामति ॥ अतिविक्रमे यथा । अतिरथः ॥ अतिक्रमे यथा । अतिक्रामति ॥ अबुद्ध यथा । अतिगहनम् ॥ भृशार्थे यथा । अतितप्तम् ॥ अतिशये यथा । अतिमनुते । १३ । "प्रशंसानुमते पूजाभृशकृच्छ्रशुभेषु सुः । उत्प्राबल्यवियोगोर्ध्वकर्मलाभप्रकाशने ॥ १४ ॥" प्रशंसायां यथा । सुरूपः ॥ अनुमते यथा । सुकृतम् ॥ पूजायां यथा । सुसाधुः ॥ भृशे यथा । सुतप्तः ॥ कृच्छ्रे यथा । सुदुष्करम् ॥ शुभे यथा । सुगन्धः ॥ उद्–प्राबल्ये यथा । उद्बलः ॥ वियोगे यथा । उद्गच्छति ॥ ऊर्ध्वकर्मणि यथा । उत्तिष्ठति शयनात् ॥ लाभे यथा । उत्पन्नम् ॥ प्रकाशने यथा । उच्चरति । १४ । "आश्चर्ये मोक्षणेऽभावे चलप्राधान्यशक्तिषु ॥ अभिः पूजाभृशार्थेच्छाव्याधिसाम्याभिमुख्यके ॥ १५ ॥" आश्चर्ये यथा । उत्सुकः ॥ मोक्षणे यथा । उद्गतोऽश्वः ॥ अभावे यथा । उत्पथः ॥ चले यथा । उत्कः ॥ प्राधान्ये यथा । उद्दिष्टः ॥ शक्तौ यथा । उत्साहः ॥ अभि–पूजायां यथा । अभिवन्दते देवम् ॥ भृशे यथा । अभियुक्तः ॥ इच्छायां यथा । अभिलिप्सते ॥ व्याधौ यथा । अभिस्यन्दो व्याधिः ॥ साम्ये यथा । अभिजातः ॥ आभिमुख्यके यथा । अभिमुखम् । १५ ।

"सारूप्यवचनाहारस्वाध्यायेषु निरूपितः ॥ सादृश्यादानहिंसाङ्गीकृतौ प्रतिनिधौ क्वचित् ॥ १६ ॥" सारूप्ये यथा । अभिरूपः ॥ वचने यथा । अभिधानम् ॥ आहारे यथा । अभ्यवहरति ॥ स्वाध्याये यथा । अभ्यस्यति ॥ प्रति–सादृश्ये यथा । देवदत्तस्य प्रति ॥ आदाने यथा । प्रतिगृह्णाति ॥ हिंसायां यथा । प्रतिहन्ति ॥ अङ्गीकृतौ यथा । प्रतिज्ञातम् ॥ प्रतिनिधौ यथा । अभिमन्युरर्जुनतः प्रति । १६ । "व्याध्याभिमुख्ययोर्व्याप्तौ वारणे प्रतिरुच्यते । परिः समंततोभावव्याधिदोषकथासु च ॥ १७ ॥" व्याधौ यथा । प्रतिशापः ॥ आभिमुख्ये यथा । प्रतिसूर्यं गच्छति । व्याप्तौ यथा । प्रतिकीर्णं पांशुभिः ॥ वारणे यथा । प्रतिषिद्धः ॥ परि–समंततोभावे यथा । परितः ॥ परिव्याप्तौ यथा । परिगतोऽग्निर्मार्गम् ॥ दोषकथासु यथा । परिवादः । १७ । "भूषाश्लेषे पूजने च वर्जने वसने शुभे ॥ उपः सामीप्यसामर्थ्यव्याप्त्याचार्यकृतौ मृतौ ॥ १८ ॥" भूषायां यथा । परिकरोति कन्याम् ॥ आश्लेषे यथा । परिष्वजते ॥ पूजने यथा । परिचरति गुरुम् ॥ वर्जने यथा । परिवनेभ्यो वृष्टो देवः ॥ वसने यथा । परिधत्ते वासः ॥ अशुभे यथा । परिदेवनम् ॥ उप–सामीप्ये यथा । उपकुम्भम् ॥ सामर्थ्ये यथा । उपकरोति मित्रेभ्यः ॥ व्याप्तौ यथा । उपकीर्णः पांशुभिः ॥ आचार्यकृतौ यथा । उपदिशति शिष्येभ्यः ॥ मृतौ यथा । उपरतः।१८।"दोषदानक्रियावीप्सारम्भाध्ययनपूजने ॥ कृष्णाचार्यैः कृताः श्लोका उपसर्गार्थसंग्रहे ॥ १९ ॥" दोषे यथा । उपघातः ॥ दाने यथा । उपहरत्यर्थं देवदत्ताय ॥ क्रियायां यथा । उपचारः ॥ वीप्सायां यथा । देवंदेवमुपचरति ॥ आरम्भे यथा । उपक्रमते भोक्तुम् ॥ अध्ययने यथा । उपाध्यायादधीते ॥ पूजने यथा । उपचितः पिता पुत्रेण । १९ । निस्, निश्चयादौ ॥ दुस्, दुःखादौ ॥ श्रत्, श्रद्धादौ ॥ अन्तर्, मध्यादौ ॥ आविर्, प्राकट्यादौ ॥

( तत्त्वदी० )–**प्रादिरुपसर्ग** इति ॥ प्र आदिर्यस्येति स प्रादिरिति तद्गुणसंविज्ञानो बहुव्रीहिः नातद्गुणसंविज्ञानः प्रकर्ष इति लिङ्गात् । अन्यथा प्र इत्यस्य धातोः प्राक् पाठो न स्यात् । उप समीपे सृज्यत उच्चार्यते क्रियावाचकस्येत्युपसर्गः । सृजेः कर्मणि घञ् । अन्वर्थसंज्ञायां च क्रियायोग इति लभ्यते । तदुक्तम् । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञेति । यस्य धातोर्वाच्या क्रिया यत्क्रिया तया युक्ताः । तं धातुं अर्थं वा प्रति उपसर्गाणां द्योतत्वमेव न वाचकत्वम् । तदुक्तम् । "उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते" इति । उपसर्गेण द्योतकेन हेतुना अन्यः धातुपाठपठिताद्भिन्नः प्रतीयते धातुनैव ॥

## प्राग्धातोः ॥ उपसर्गा धातोः प्राक् प्रयोक्तव्याः ।

( सुबोधिनी )–**प्राग्धातोः** ॥ वेदादौ विपरीतप्रयोगदर्शनात् व्याकरणे लोकेऽपि विपरीतप्रयोगो मा भूदिति नियमार्थमिदम् ॥

( तत्त्वदी० )–**प्राग्धातोरिति** ॥ संज्ञानियम एवायम् । धातोः प्राक् प्रयुज्यमाना एव प्रादय उपसर्गसंज्ञा नान्ये इत्यर्थः । तेन सुपुरुष इत्यादावधातोः प्राक् प्रयोगेऽपि न क्षतिः । अत्र

धातोरिति ग्रहणात्। कर्तुं प्रेक्षते प्रचिकीर्षतीत्यादौ नानिष्टता। अन्यथा यत्क्रियायुक्ताः प्रादयस्ततः प्रागिति सुवाच्येच्छया प्रशब्दस्य योग इति तस्यैव प्राक् प्रशब्दः प्रयुज्येत। वस्तुतस्तु यत्क्रियेत्यस्य धातोर्वाच्या क्रियेति व्याख्यानात्केवलस्य तस्य धातुत्वाभावात्। सान्तस्यैव धातुत्वात्॥

**तदव्ययम्॥ चादि अव्ययसंज्ञं भवति। न तु शब्दनिर्देशे।**

(सुबोधिनी)—तदव्यम्॥ प्रादिचादिउपर्यादि तत्रादिसद्यआदिपरामर्शार्थं तद्ग्रहणम्। अत्रनाम्न इत्यनुवृत्य प्रथमया विपरिणम्य विशेष्यमभ्युपेयम्। चादिस्वरादीनि तु विशेषणानि। विशेषणे हि तदन्तविधिस्ते न परमोच्चैः परमस्वरित्यादावव्ययसंज्ञा भवत्येव॥ उच्चैरतिक्रान्तोऽत्युच्चैः। अत्युच्चैसौ। अतिस्वः। अतिस्वरौ। अतिस्वरः। इत्यादि गौणे तु नाव्ययसंज्ञा। मुख्यामुख्ययोरितिन्यायात्॥

(तत्त्वदी०)—तदव्ययमिति॥ तच्छब्देन प्रादिचादिउपर्यादितत्रादिग्रहणम्। अन्यथानन्तरत्वात् सद्यआदय एव गृह्येरन्॥

**क्त्वाद्यन्तं च॥ क्त्वा क्यप् तुम् णम् धा च्वि शस् वत् कृत्वस् सुआम् इत्याद्यन्तमव्ययसंज्ञं भवति॥**

(सुबोधिनी)—क्त्वाद्यन्तं च॥ पूर्वकाले क्त्वेति क्त्वा। समासे क्यबिति क्यप्। तुम् तदर्थायां भविष्यतीति तुम्। पौनःपुन्ये णम् पदं द्विश्चेति णम्। संख्यायाः प्रकारे धेति धा। बह्वल्पार्थात्कारकाच्छस इति शस्। अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विरिति च्विः। वत्तुल्ये इति वत्। क्रियाया आवृत्तौ कृत्वसिति कृत्वस्। द्वित्रिचतुर्भ्यः सुरिति सुः। किमोऽव्ययादाख्याताच्च तरतमयोरास् वक्तव्यः अद्रव्यप्रकर्षे इत्याम्॥

**अव्ययाद्विभक्तेर्लुक्॥ "सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हसान्तानां यथा वाचा निशा दिशा॥" वगाहः—अवगाहः॥ पिधानम्—अपिधानम्॥ ॥ इत्यव्ययानि॥**

(सुबोधिनी)—अव्ययाद्विभक्तेर्लुक्॥ अव्ययाद्विहिताया विभक्तेर्लुक् स्यात्। विभजनं विभक्तिर्विभागः। यद्वा विभज्यते बोध्यते कर्तृकर्माद्यर्थोऽनयेति विभक्तिः स्यादित्याद्योरेवेति योगरूढिः। "सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥ १॥" आथर्वणप्रणवविद्यागतश्रुतिरियम्। यत् शब्दरूपं न व्येति न व्ययं प्राप्नोति तदव्ययं त्वया ज्ञेयम्। कीदृशम् तत्। त्रिषु लिंगेषु सदृशमेकप्रकारम्। पुनः कीदृशम्। सर्वासु विभक्तिषु सदृशं च। पुनः कीदृशम्। सर्वेषु वचनेषु सदृशम्॥ १॥ "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हसान्तानां यथा वाचा निशा दिशा॥ १॥" भागुरिराचार्योऽवाप्योरुपसर्गयोरल्लोपं वष्टि वाञ्छतीत्यर्थः।

च पुनः हसान्तानां शब्दानामापं वष्टि ॥ २ ॥ अल्लोपे यथा । वगाहः । अवगाहः । पिधानम् । अपिधानम् । अपिना साहचर्यादादिरेवाकारो लुप्यते । नान्त्य इति भावः ॥ ॥ इति सुबोधिन्यामव्ययानि ॥

( तत्त्वदी० )—सदृशमिति ॥ श्रुतिर्लिङ्गसंख्याकारकभावपरा ॥ यथा वाचेति ॥ परिगणनमिदमित्येके । अन्ये तु उदाहरणमात्रमित्याहुः ॥ वगाह इति ॥ आदिरेवाकारो लुप्यते नान्त्यः अपिना साहचर्यात् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायामिह टीकायामव्ययव्याकृतिर्गता ॥

इति तत्त्वदीपिकायामव्ययानि ॥

---

# अथ स्त्रीप्रत्ययाः ।

**आबतः स्त्रियाम् ॥** आकारान्तान्नाम्नः स्त्रियां वर्तमानादाप् प्रत्ययो भवति ॥ सर्वा । मा ।ा ॥

(सुबोधिनी)—आबतः स्त्रियाम् ॥ अत इति तपरग्रहणम् । तेनाधिकृतस्य नाम्नो विशेषणात् तदन्तविधेः । स्त्रियामिति प्रकृत्यर्थविशेषणम् । स्त्रियां वर्तमानाददन्तान्नाम्न आप् स्यात् । पित्त्वं स्वरार्थम् । स्त्र्यादिकं लिङ्गत्रयं तु पारिभाषिकमेव लिंगानुशासनादिभ्यो निर्णेयम् ॥ माया । शठताऽविद्या वा ॥

( तत्त्वदी० )—आबत स्त्रियामिति ॥ आप अतः स्त्रियामिति च्छेदः । अत इति तपरकरणाद्व्यक्तेर्ग्रहणम् न तु स्वरूपस्य नापि आङ्गादित्यादौ अच्छब्दान्तस्य तुमृतदर्थायामिति निर्देशात् । नापि ङसेरादेशस्याच्छब्दस्य स्त्रियां वृत्त्यभावात् । अधिकृतस्य नाम्नो विशेषणात्तदन्तविधिः । स्त्रियामिति प्रकृतिविशेषणमित्यप्रेत्याह—स्त्रियां वर्त्तमानादिति ॥

**(अजादेश्च)** अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । संफला । भस्त्रफला । अजिनफला । शणफला । पिण्डफला । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । एकपुष्पा । शूद्रा । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेऽपि । त्रिफला । अमूला । कोकिला जातावपि इत्यादि ॥

(सुबोधिनी)—अजादेश्च ॥ अजशब्द आदिर्यस्येति बहुव्रीहिः । अजादेर्गणादाप् तस्य स्त्रीत्वे द्योत्ये ॥ अजा । एडका । अश्वा । चटका । मूषिका । शूद्रा । अमूला । संफला । भस्त्रफला । अजिनफला । शणफला । प्रत्यक्फला । पिण्डफला । सत्पुष्पा । प्राक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । एकपुष्पा । क्रुञ्चा । उष्णिहा । देवविशा इत्यादिषु जातेरयोपधादितीप् प्राप्तः । बाला वत्सा । होडा । मन्दा । विलातेत्यादिषु अनन्त्यवयोवाचिन

इतीप् प्राप्तः। ज्येष्ठाकनिष्ठामध्यमाकोकिलेत्यादिषु पुंयोगे चेतीप् प्राप्तः। त्रिफलाज्यनीकेत्यादौ समाहारेऽन्तईबितीप् प्राप्तः। स ईबजादेरित्यनेन बाध्यते। अजादेः स्त्रीत्वाभावात् पञ्चानामजानां समाहर इति पञ्चाजी। अत्रापि न। अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वं न त्वजादिनिष्ठम्। चटकेत्यत्र काप्यत इति ईकारो न क्षिपकादीनां नेति निषेधात्। मुषेर्दीर्घश्चेति किक् प्रत्यये इकारमध्यो मूषिकाशब्दः होडेति भिल्लस्त्री। मन्देत्यप्रौढा स्त्री। विलातेति नवयौवना स्त्री। संफलेत्यादय एकपुष्पान्ता ओषधिविशेषाः। भस्त्रेव फलानि यस्या इति विग्रहः। कुक्कुट्यादिषु पाठात् पुंवद्भावः। शूद्रेति जातावेवाप् महत्पूर्वात् शूद्रशब्दात्तु ईबेव। महाशूद्री। "आभीरी तु महाशूद्री जातिपुंयोगयोः समा" इत्यमरः॥ पुंयोगे त्वीबेव। शूद्री। क्रुञ्चेत्यादित्रयोऽमी हसान्ता इत्येके। भाष्ये तु क्रुञ्चानालभेत। उष्णिहककुभावित्यादिप्रयोगमुदाहृत्यादन्ता अपि स्वीकृताः। पचाद्यप्रत्ययेन नाम्युपधात्क इति कप्रत्ययेन च रूपसिद्धेः उष्णिहेति छन्दोजातिः। देवविशेति देवानां प्रजा पुंयोगेऽपि। यदा ज्येष्ठादयः प्रथमजातादौ वर्तन्ते तदा अदन्तत्वादेवाप्। यदा ज्येष्ठस्य स्त्रीति पुंयोगविवक्षा तदाप्याप् भवतीति सूचयितुमपिशब्दः। कोकिलस्य स्त्री कोकिला। जातिवाचकादप्यजादेरेवाब् भवति न तु जातेरितीप्। तेन जातावपि कोकिलेत्येव। नञ्पूर्वान्मूलशब्दाज्जातावप्याव। अमूलेत्योषधिजातिः। अनञ्पूर्वात्तु शतमूलीत्येव॥

( तत्त्वदी० )—अजादेश्चेति॥ ईब्बाधनार्थमिदम्। अजादौ जातिलक्षण ईप् प्राप्तः। बालेति वयसि प्रथमे इतीप् प्राप्तः। पुंयोगेऽपीति यदि ज्येष्ठादयः प्रथमजात्यादौ वर्तन्ते तदादन्तत्वादेवाप्। यदा ज्येष्ठस्य स्त्रीति पुंयोगो विवक्ष्यते तदापि आप् भवतीति सूचयितुमपिशब्दः। एतद्बीजं तु अतः स्त्रियामाविति सूत्रणीये विपरीतनिर्देशाद्विकल्पादिलाभः॥

## ( पादो वा ईप् ) द्विपदी–द्विपाद्

( सुबोधिनी )—पादो वा ईप्॥ कृतसमासान्तात्पादशब्दादीप् वा स्यात्॥ द्वौ पादौ यस्याः सा इति बहुव्रीहौ संख्यासु-व्याघ्रादेपूर्वस्येति पादशब्दस्यान्तलोपः। द्विपाद्। ईपि तु शसादौ स्वरे तद्धितयस्वरयोरिति पद। द्विपदी छन्दोजातिः॥

## ( आबृचि ) ऋचि वाच्यायां सत्यां पादन्तादाप् स्यात्॥ द्विपदा ऋक्॥

( सुबोधिनी )—आबृचि॥ ऋचि वाच्यायां तु द्विपदा एकपदा ऋक् इत्येव भवति॥

## काप्यतः॥ कापि परे पूर्वस्याकारस्येकारो भवति॥ कारिका। पाचिका। पाठिका॥ अतः किम्। नौका॥ तपरः किम्। राका॥

( सुबोधिनी )—काप्यतः॥ कापि इ अत इति छेदः। ककारेण सहितः आप् काप् तस्मिन्॥ प्रत्ययस्यैव को गृह्यते आपा साहचर्यात् स्त्रियां वर्तमानस्य नाम्नोऽतः स्थाने इकारो भवति कापि परे। करोतेः तृवुणाविति वुण्। णित्वाद् वृद्धिः। कारिका॥ एवं

पचतेः पाचिका ॥ अतः किम् । नौका । नौशब्दात्स्वार्थे कः प्रत्ययः ॥ ककाराभावे तु शक्नोतीति शका । पचाद्यः प्रत्ययः ॥ तपरः किम् । राका ॥ मामकनरकयोरत इः । ककारस्य प्रत्ययत्वाभावादप्राप्तौ वचनम् । ममेयं मामिका । अणीनयोरिति ममकादेशः णित्त्वाद्वृद्धिः । अजादित्वादाप् ॥ नरान् कायतीति कै, शब्दे । अस्मात् आतो ड इति डप्रत्ययः । आप् इत्वं च । नरिका ॥

( तत्त्वदी० )–काप्यत इति ॥ कापि इ अत इति छेदः । कसहित आप् काप् तस्मिन् । अत्र कप्रत्यय एव गृह्यते आपा साहचर्यात् तेन शक्नोतीति शकेत्यत्र न अत इ कापीति वक्तव्ये विपरीतनिर्देशादन्यदपि भवति तेन क्वचित्प्रत्ययस्थे केऽपि न क्वचिदप्रत्ययस्थेऽपि भवति ॥ नरान्कायति नारकेति मामिकेत्यत्र । एवंस्थिते साहचर्यं न सर्वत्र नियामकमित्युक्तिर्गौरवग्रस्तत्वादुपेक्षिता । स्त्रियामित्यत्रानुवर्तते । स्त्रियां वर्तमानस्य नाम्नोऽत इर्भवतीति व्याख्येयम् । तेन कारकमाप्नोति कारकाप् इत्यत्र नेत्वम् ॥ अतः किम् । मातृका क्षिपकेति । एतद्बीजं तु उक्तमेव ॥

**( क्षिपकादीनां न )** क्षिपका । ध्रुवका । कन्यका । चटका । यका । सका । उपत्यका । अधित्यका ॥

( सुबोधिनी )–क्षिपकादीनां न ॥ एषामत इकारो न कापि ॥ क्षिपेर्नाम्युपधात् क इति कः । ध्रुव स्थैर्ये इत्यस्मादपि कः अथवा ध्रु, गतिस्थैर्ययोरस्मात्पचाद्यः प्रत्ययः । कुटादित्वात् ङित्वेन गुणाभावे नुधातोरित्युव् । क्षिपा एव क्षिपका शस्त्रविशेषः ॥ ध्रुवा एव ध्रुवका भाजनम् ॥ चट, भेदनेऽस्मात्पचाद्यः । चटका ॥ सर्वत्रापि अज्ञातादौ के पुनरपि च ह्रस्वो वेति ह्रस्वः ॥ या एव यका । सा एव सका । आभ्यामाख्याताव्ययसर्वादेरित्यकः ॥ उपाधिभ्यामासन्नारूढयोरित्यकः । उपत्यका । अधित्यका ॥ "उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका" इत्यमरः ॥

**( तारका ज्योतिषि )** अन्यत्र तारिका ॥

( सुबोधिनी )–तारका ज्योतिषि ॥तरतेर्वुण् । अकादेशो वृद्धिश्च । ज्योतिर्नक्षत्रं नेत्रकनीनिका च । तयोरर्थे तारका । अन्यत्र तु तारिका ॥

**( वर्णका तान्तवे )** वर्णिकान्या ॥

( सुबोधिनी )–वर्णका तान्तवे ॥ तन्तूनां विकारस्तान्तवं तस्मिन् ॥ वर्णका प्रावारविशेषः । वर्णवर्णक्रियाविस्तारगुणवचनेष्विति चौरादिकाद्वुण । ग्रन्थविशेषस्य व्याख्यात्री स्तोत्रकर्त्री वर्णिका ॥

**( वर्तका शकुनौ प्राचाम् )** उदीचां तु वर्तिका ॥

( सुबोधिनी )–वर्तयतीति वर्तिका ॥ वुण्प्रत्ययः । शकुनावेव वाच्येऽयं विकल्पः । अन्यस्मिन्नर्थे तु नित्यमित्वम् । प्राचां पूर्वाचार्याणां मते इतोऽभावः । उदीचामाधुनिकानां मते इत्वमित्यर्थः ॥

( अष्टका श्राद्धे ) अष्टिकान्या ॥

( सुबोधिनी )—अश्नन्ति ब्राह्मणा यस्यां साष्टका। इष्यशिभ्यां तक इति तकः। अष्टौ परिमाणमस्या इत्यष्टिका ॥

( क्वचिद्वा ) पुत्रका-पुत्रिका। सूतका-सूतिका। वृन्दारका-वृन्दारिका। आर्यका-आर्यिका। चटकका-चटकिका। निर्भस्त्रका। निर्भस्त्रिका। एषका—एषिका। अजका—अजिका। ज्ञका—ज्ञिका। द्वके—द्विके। निःस्वकानिःस्विका ॥

( सुबोधिनी )—क्वचिद्वा ॥ वा अ इति च्छेदः। क्वचित् पूर्वस्याकारो वा भवति कापि परे ॥ पुत्री एवेति ह्रस्वो वेति ह्रस्वे कृते पुत्रिका। पक्षे पूर्वस्य ईपोऽकारः पुत्रकेति सूतशब्दात् स्वार्थे कः। सूता एव सूतिका-सूतका ॥ वृन्दमस्यास्तीति शृङ्गवृन्दाभ्यामारकः। वृन्दारिका- वृन्दारका ॥ देवतावाची वृन्दारकशब्दः पुल्लिङ्ग एव। अन्यत्र त्रिलिङ्गः। तथा च त्रिषूत्तरेत्युपक्रम्य "वृन्दारकौ रूपिमुख्या" इत्यमरः ॥ आर्या एव आर्यका। पक्षे इत्वम्। आर्यिका ॥ चटका एव चटकका-चटकिका ॥ निष्कान्ता भस्त्राया इति निर्भस्त्रा। पञ्चमीतत्पुरुषः। निर्भस्त्रा एवेति निर्भस्त्रका-निर्भस्त्रिका ॥ एषा एव एषका-एषिका। अकः ॥ अजा एव अजका-अजिका। ज्ञा एव ज्ञका-ज्ञिका ॥ द्वे एव द्वके-द्विके ॥ आख्याताव्ययसर्वादेरित्यकः ॥ निर्गता स्वात् या सा निःस्वा। निःस्वा एवेति निःस्वका-निःस्विका। स्वार्थे कः ॥

( तत्त्वदी० )—क्वचिद्वेति ॥ अत्रापि विपरीतनिर्देश एव मूलम् ॥

ह्रस्वो वा ॥ कापि परे तरादौ च पूर्वस्य ह्रस्वो वा ॥ गंगाका गङ्गका—गङ्गिका ॥ नदिका—नदीका ॥ श्रेयसितरा—श्रेयसीतरा ॥ वाग्रहणादेव संध्यक्षराणां न। गोका। नौका ॥

( सुबोधिनी )—ह्रस्वो वा ॥ कापि तरादौ प्रत्यये च परे स्त्रियां विहितस्य अस्य ह्रस्योऽत इश्च वा स्यात् ॥ वाशब्दो व्यवस्थार्थस्तेन तरादाविति लब्धम्। गंगा एव गंगका। ह्रस्वाभावे गंगाका। काप्यत इतीत्वे गंगिका ॥ ह्रस्वा नदीति नदिका—नदीका स्वार्थे कः ॥ अतिशयेन श्रेयसीति श्रेयसितरा—श्रेयसीतरा। तरतमेयस्विष्ठाः प्रकर्षे इति तरप्रत्ययः ॥ स्त्रियां विहितस्य किम्। लक्ष्मीतरा ॥ चमूतरा ॥

( तत्त्वदी० )—ह्रस्वो वेति ॥ वा आ इति छेदः। स्त्रियामित्यनुवर्तते। स्त्रियां वर्तमानान्नाम्नः परस्याकारस्य ह्रस्व इश्च वा भवतीत्यर्थः ॥ वा इत्यस्य व्यवस्थितत्वं बोध्यम्। तेन तरादावपि नदीतर इत्यत्र तु प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणं इति परिभाषाबलान्न ह्रस्वत्वम्। क्वचिदीपो नित्यं ह्रस्वः ॥ ब्राह्मणितरा। कप्रत्यये समानस्य ह्रस्वः। आर्यका। कालिका। जम्बुका। टाडका इति क्तन केन कल्याणपञ्चमीकः। आपो वा। बहुविद्याकः—बहुविद्यकः ॥ एवं चैतदर्थलाभाय वाशब्द

व्यवस्थितत्वाश्रयणेऽवश्यं कर्तव्ये अवेति हित्वा ह्रस्वग्रहणं वाक्यान्तरलाभाय । वाक्यान्तरं चेदं नाम्नः परस्य स्त्रियां विहितस्य स्वरस्य ह्रस्वो वा स्यात् स्त्रीलिङ्गे परे । तच्च स्त्रीलिंगं लक्ष्यानुसारात्तरादिकमेव गृह्यते । इत्यादिव्याख्यानं गौरवग्रस्तत्वादुपेक्षितम्। किं च अवेति सूत्रिते नदिकेत्यादि न सिध्येत् इति॥

**न्रण ईप् ॥ दण्डिनी । दन्तिनी । मघोनी । शुनी । पौंस्नी । स्त्रैणी चौरी । हर्त्री । कर्त्री ॥**

( सुबोधिनी )—न्रण ईप् ॥ न् च आ च अण् च एषां समाहारो न्रण् तस्मान्न्रणः । अणिति प्रत्ययः । नाम्नो विशेषणात्तदन्तविधिः । न च प्रत्ययविधौ प्रतिषेधः शङ्क्यः स्त्रीप्रत्ययेषु तदन्तविधिस्वीकारात् । नान्तात् ऌदन्तात् अणन्ताच्च स्त्रियामीप् स्यात् ॥ दण्डोऽस्या अस्तीति दण्डिनी ॥ मान्तोपधाद्वत्विनावितीन् । मघोनी ॥ शुनी । श्वादेरिति वस्योत्वम् ॥ कर्त्री । करोतेस्तृवुणाविति तृप्रत्ययः ॥

**यस्य लोपः ॥ इवर्णावर्णयोर्लोपो भवति तद्धितस्य स्वरे यकारे ईपि च ॥ औपंगवी । ऐन्द्री । ईप्यनोऽल्लोपः । राज्ञी । द्विदाम्नी ॥**

( सुबोधिनी )—यस्य लोपः ॥ इश्च अश्च यं तस्य यस्य लोपः स्यात्तद्धितयस्वरयोरीपि च यथा गार्ग्यः । काव्यम् । वासिष्ठः । मौनम् । उपगोरपत्यं स्त्री औपगवी । अपत्येऽणित्यण् ॥ इन्द्रो देवता अस्या इति ऐन्द्री दिक् । देवतेदमर्थे इत्यण् । ईप्यनोऽल्लोपः ॥ अन्नन्तस्योपधाकारस्य लोपः स्यादीपि । राज्ञः स्त्री राज्ञी । द्वे दाम्नी यस्याः सा द्विदाम्नी ॥

( तत्त्वदी० )—यस्य लोप इति ॥ इश्च अश्च यं तस्य स्वरो यकारश्च तद्धितस्यैव प्रकरणात् अदे आतोऽड इति लिंगाभ्यां त्यादिकृत्स्वरो न अन्त्यादिति लिंगाच्च यकारस्य न ग्रहणम् । अत एव न दीर्घयोरेव । एर्लोप इति तु न सूत्रितं तन्त्रादिना यकारलोपार्थम् । तेन गार्गी तैषं पौषं कानीन इत्यादि सिद्धम् ॥ जात्याश्रयणाद्दीर्घयोरपि ईप्यन इति ईपि परे अनोऽकारस्य लोप इत्यर्थः ॥ एतन्मूलं तु नो वेत्यत्र वा इत्यस्य व्यवस्थितत्वाश्रयणम् ॥

**ष्ट्वृितः ॥ षकारटकारउकारऋकारानुबन्धात् स्त्रियामीप् प्रत्ययो भवति ॥ ष-वराकी ॥ ट-कुरुचरी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री इत्वरी ॥ उ-गोमती । विदुषी ॥ ऋ-पचन्ती । दीव्यन्ती । तुदती-तुदन्ती । प्राची-प्राञ्ची । प्रतीची-प्रत्यञ्ची । उदीची-उदञ्ची । तिरश्ची-तिर्यञ्ची । स्तनंधयी ॥**

( सुबोधिनी )—ष्ट्वृितः ॥ ष् च ट् च उश्च आ चेति ष्ट्वृः ष्ट्वृः इतो यस्य स ष्ट्वृित् तस्मात् ष्ट्वृितः । वृञ्, वरणे । षप्रत्ययान्तात् स्त्रियामीप् स्यात् । वृणोतेः षाकोकण इति षाकप्रत्ययः । यस्येत्यलोपः । वराकी । कुरुचरी । कुरुषु चरतीति । अधि

करणोपपदाच्चरतेरटाविति टः ॥ गोशब्दात् अस्त्यर्थे इति मतुः । गावः सन्ति यस्याः सा-गोमती ॥ विदेर्वा वसुरिति वसुप्रत्ययः । वसोर्व उरित्युत्वम् । विदुषी ॥ पचेः शतृ-शानौ तिप्तेवदिति शतृप्रत्ययः । अप् कर्तरीत्यप् । पचन्ती ॥ दिवेः शतृप्रत्यये दिवादेर्य इति यप्रत्ययः । दीव्यन्ती । अप्ययोरान्नित्यामिति नुम् ॥ तुदेः शतृप्रत्यये तुदादेर इत्य-प्रत्ययः । तुदन्ती ॥ वादीपोः शतुरिति वा नुम् ॥

( तत्त्वदी० )-ष्ट्वित इति ॥ ष् च ट् च उश्च आ च ते ष्ट्वस्ते इतो यस्य स ष्ट्वित् तस्मात् ष्ट्वितः । पिदन्तादुदन्तादृदन्तान्नाम्नः स्त्रियामीप् इत्यर्थः ॥ वराकीति ॥ वरणशीलेति विग्रहे वृञ् धातोः षाकोकण इति षाकप्रत्ययः । गुण इति गुणः । कुरुषु चरतीति विग्रहे चर गतावित्यतो टाविति टप्रत्ययः । गौणत्वे तु नेप् । बहुवराका । बहुकुरुचरा । विदुषीति ॥ उदन्तादृदन्तात्तु गौणत्वेऽपि प्रियविदुषी । प्रियपचन्ती गौणमुख्यन्यायस्यानित्यत्वात् । ष्वदित्यादौ तु धातोश्चेत् त्रित्कार्यं तर्ह्यञ्चतेरेव इति नियमेन प्राप्तिर्बाधिता ॥

**( मन्नन्तान्नेप् ) सीमा, सीमानौ । दामा, दामानौ ॥**

( सुबोधिनी )-मन्नन्तान्नेप् । मन्नन्तान्नाम्न ईप् न भवति ॥ सीमा । दामा । राजवत् ॥

( तत्त्वदी० )-मन्नन्तादिति ॥ एतन्मूलं तु आवतः स्त्रियामिति सूत्रे विपरीतनिर्देश एव । एवमुत्तरत्रापि ॥

**( अन्नन्ताद्बहुव्रीहेर्न ) बहुयज्वा, बहुयज्वानौ ॥**

( सुबोधिनी )-अन्नन्ताद्बहुव्रीहेर्न ॥ नान्तत्वात्प्राप्त ईप् स न भवति । बहवो यज्वानो यस्यां सा बहुयज्वा नगरी ॥

**( डाब् वा ) मन्नंतान्नाम्नोऽन्नन्ताद्बहुव्रीहेश्च डाब् वा स्यात् ॥ डि-त्वाट्टिलोपः ॥ सीमा, सीमे, सीमाः ॥ दामा दामे, दामाः ॥ बहु-यज्वा, बहुयज्वे, बहुयज्वाः ॥**

( सुबोधिनी )-डाब् वा ॥ मन्नन्तान्नाम्नोऽन्नन्ताद्बहुव्रीहेश्च डाब् वा स्यात् । डित्वा-ट्टिलोपः । सीमा । दामा । बहुयज्वा । गङ्गावत् ॥ "सीमसीमे स्त्रियामुभे" इत्यमरः ॥

**( उपधालोपिनो बहुव्रीहेर्वेप् ) बहुराज्ञी-बहुराजा ॥**

( सुबोधिनी)-उपधालोपिनो बहुव्रीहेर्वेप् ॥ अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वेप् स्यात् ॥ बहवो राजानो यस्यां सा बहुराज्ञी ॥ ईप्यन इत्यल्लोपः । ईबभावे डाप् । पक्षे डाबीपोरभावः ॥

**नदादेः ॥ स्त्रियामीप् ॥ नदी । गौरी । सरसी । सखी । अशि-श्वी । अनड्वाही । अनडुही इत्यादि ॥**

( सुबोधिनी )-नदादेः ॥ नद आदिर्यस्य स नदादिस्तस्मान्नदादेर्गणात् स्त्रियामीप् स्यात् ॥ अनुपसर्जनादेवायं गौणमुख्यन्यायात् । नद इत्यव्यक्तं शब्दं करोतीति पचाद्य-

प्रत्ययः । यस्येत्यलोपः । नदी ॥ गौणे तु नदीमतिक्रान्ता स्त्री अतिनदा ॥ सुपर्णशब्दादपत्येऽर्थे एयण् प्रत्ययः। आदिस्वरे वृद्धिश्च। सुपर्णाया अपत्यं स्त्री सौपर्णेयी॥ऊरुः प्रमाणं यस्याः सा ऊरुद्वयसी नदी । यस्येत्यलोपः । प्रमाणे द्वयसट् दघ्नट् मात्रट् इति द्वयसडादिः ॥ अक्षैर्दीव्यति केनेयेति इकप्रत्ययः। आक्षिकी ॥ इण्नशूजीसर्तिभ्यः करबिति करप् एति परपुरुषं तच्छीला इत्वरी असती । करब्द्वयसडाद्यन्तोदाहरणचतुष्टयं ष्ठ्वित इत्यत्र वक्तुमुचितम् । क्वचित्तु तथैव पाठस्तत्र न दोषः ॥ चुरा शीलमस्या इति चौरी । अञ्प्रत्ययान्तः । स्त्रीपुंसाभ्यामिति नञ्स्नञौ । स्त्रियां भवा स्त्रैणी । पुंसि भवा पौंस्नी ॥ शक्तिः प्रहरणमस्या इति शाक्तिकी । शक्तियष्टचोरीकणितीकण् ॥ गर्गस्यापत्यमिति गर्गादेरिति ण्यः । गार्ग्यः । स्त्र्यपत्य तु नदादित्वादीप् । यस्येत्यलोपः । हसात्तद्धितयस्येति यलोपे गार्गी । पक्षे गार्ग्यायणीति ण्यन्ताद्गार्ग्यशब्दात्स्त्रियां नदादित्वादीप् स्वार्थे लोहितस्यापत्यं स्त्री लोहितायनी । लोहितादिर्गर्गाद्यन्तर्गणः । ण्यन्ताल्लौहित्यशब्दात् स्त्रियामायनण् ॥ कतस्यापत्यं स्त्रीति ण्यन्तान्तात् कात्यशब्दात् स्त्रियामायनण् ॥ आसुरस्यापत्यं स्त्रीति अणन्तादासुरशब्दात्स्त्रियामायनण् ॥

( तत्त्वदी० )–नदादेरिति ॥ नद आदिर्यस्य स नदादिर्गणः तस्मात् नदादेः । नदडादयो यद्यपि टितो निपातितास्तथापि ङ्याटित एव बोध्याः । स्वरार्थत्वं तु ङ्यातुपयुक्तमेव । वैदिकानामप्रतिपाद्यत्वात् । अत इत्यनुवृत्तं यथासंभवं विशेषणीयम् । अन्यथा सखीत्यादिः न सिद्ध्येत् । यदि तु पत्न्यादित्वमेषां तदानुवृत्तविशेषणत्वेन संकोचः । नदमिच्छन्ति कुर्वन्ति वा नदीर्नदित्यत्रातिव्याप्तिवारणायात इत्यनुवृत्तिश्चावश्यमभ्युपेया । एकदेशविकृतन्यायेन दशब्दत्वात् प्राप्तिः ॥ एवं वराकमिच्छन्ति कुर्वन्ति वा वराकीर्वराक् इत्यत्रापि नेप् अनुवृत्तेस्तत्रापि सत्त्वात् ॥

**( अनन्त्यवयोवाचिनोऽदन्तात् स्त्रियामीप् ) कुमारी। किशोरी। वधूटी । चिरण्टी । तरुणी । तलुनी ॥ अदन्तात्किम् । शिशुः ॥**

( सुबोधिनी )–अनन्त्यवयोवाचिनोऽदन्तात् स्त्रियामीप् ॥ कालकृता शरीरावस्था वयः । वयांसि चत्वारि त्रीणि च सन्ति । यथा । "आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् ॥ तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥ पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥" उपचयापचयलक्षणे द्वे वयसी इत्यन्ये । वधूटचिरण्टतरुणतलुनशब्दा यौवनवाचिनः ॥ कुमारस्तु प्रथमवयोवाची ॥ अल्पवयाः अश्वा किशोरी ॥

( तत्त्वदी० )–कुमारीति ॥ प्रथमवयोवाची एष शब्दः न तु रूढत्वप्रयुक्तः । वृद्धकुमारीति तु गौणः प्रयोगः । तरुणी शालेत्यपि मुख्यार्थे उत्पादितस्य गौर्वाहीक इतिवद्गौणत्वेऽपि संभवात् ॥

**( ऊधोऽन्तस्य बहुव्रीहेर्नङ् स्त्रियाम् ) कुण्डोध्नी । द्व्यूध्नी । अत्यूध्नी ॥**

( सुबोधिनी )—ऊधोऽन्तस्य बहुव्रीहेर्नङ् स्त्रियाम् ॥ अकार उच्चारणार्थः । बहुव्रीहिग्रहणेनेव तदन्तलाभादन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । व्रण ईविति प्राप्तस्येपो निषेधः अनेन प्रतिषिध्यते । यथा । डाप् वेति वैकल्पिको डाप् । उपधालोपिनो बहुव्रीहेर्वेति वैकल्पिक ईप् । अन्नन्ताद्बहुव्रीहेर्नेति निषेधश्च । कुण्डमिव ऊधो यस्याः सा । ईप्यनोऽल्लोप इत्यल्लोपे कुण्डोध्नी ॥ द्वे ऊधसी यस्याः सा द्व्यूध्नी ॥ अतिशयितमूधो यस्याः सा अत्यूध्नी ॥ स्त्रियामिति किम् । कुण्डोधो धैनुकम् ॥ बहुव्रीहेरिति किम् । प्राप्ता ऊधः प्राप्तोधाः । द्वितीयातत्पुरुषः ॥

**( संख्यादेर्दाम्न ईप् )** संख्यादेर्बहुव्रीहेर्दामान्ताच्च डाबीपोर्विकल्पेन प्राप्तयोर्वचनम् । द्विदाम्नी ॥

**( वयोवाचिनो हायनस्येप् )** संख्यादेर्बहुव्रीहेर्वयोवाचिहायनान्तादीप् स्यात् । आपि प्राप्ते वचनम् ॥

**( त्रिचतुर्भ्यां हायनस्य णत्वम् )** त्रिहायणी । चतुर्हायणी ॥

( सुबोधिनी )—त्रिचतुर्भ्यां हायनस्य णत्वम् ॥ आभ्यां परस्य वयोवाचकस्य हायनस्य णत्वं वाच्यम् ॥ त्रयो हायना यस्याः सा त्रिहायणी ॥ चत्वारो हायना यस्याः सा चतुर्हायणी बाला । "हायनोऽस्त्री शरत्समाः" इत्यमरः ॥

**इन्द्रादेरानीप् ॥ स्त्रियां पुंयोगे ॥** इन्द्राणी । वरुणानी । भवानी शर्वाणी । रुद्राणी । मृडानी ॥

( सुबोधिनी )—इन्द्रादेरानीप् ॥ इन्द्र आदिर्यस्य स इन्द्रादिस्तस्मादिन्द्रादेर्गणात् स्त्रियामानीप् स्यात् ॥ पुंयोगेत्यपकृष्यते । पित्करणसामर्थ्याद्धसेप इत्यत्रानीपोऽपि ग्रहणं भवति ॥ ननु ह्रस्वादिरेवानीबस्तु किमनेन दीर्घोच्चारणेन । अत्राहुः । ब्रह्माणीति सिद्ध्यर्थं दीर्घग्रहणम् । ब्रह्मन्शब्दादानीपि कृते नो वेति टिलोपे ब्रह्माणीति ॥ अन्ये त्वाहुः । ब्रह्माणमानयति जीवयतीत्यन, प्राणने । ञ्यन्तादस्मात्कार्येऽणित्यण् प्रत्ययः । व्रण ईवितीपि च कृते ब्रह्माणीति सिद्ध्यत्येव ॥ माधवस्तु इन्द्रं करोति इन्द्रयति । इन्द्रेति नाम्नो ञिर्डित्करणे इति ञ्यन्तात् क्विपि इन्द्र् तस्य इन्द्रः स्त्री इन्द्राणीति दीर्घपाठाद्वदति तन्न । क्विबन्तस्य क्रियाशब्दत्वेन पुंशब्दत्वाभावात् ॥ किं च इन्द्रमिच्छतीति इन्द्रीयति । नाम्नो य ईचास्येति यप्रत्ययान्तात् क्विपि कृते इन्द्रीः । इन्द्रियः स्त्री इन्द्राणीत्यतिव्याप्तेश्च । वस्तुतस्तु ह्रस्वादिपाठेऽपि हानिर्न । इन्द्रस्य स्त्री इन्द्राणी ॥ वरुणस्य स्त्री वरुणानी ॥ भवशर्वमृडरुद्राः पर्यायशब्दाः ॥

( तत्त्वदी० )—इन्द्रादेरानीबिति ॥ अत्र पुंयोगे च इत्यतः पुंयोगे इत्यनुकृष्यते दीर्घोच्चारतु क्वचिदतद्धितेऽपि यस्य लोप इति ज्ञापनार्थम् । अन्यथा अनीपि लोपे एवं न स्यात् । आकारो-

च्चारणस्य तु न सामर्थ्यं धर्मादनि सुधर्मेत्यादावपि तत्सामर्थ्याल्लोपाभावप्रसंगात्। इन्द्रं करोति इन्द्रयति ततः क्विपि इन्द्र् तस्य इन्द्रः स्त्री इन्द्रं कुर्वन् इन्द्रियः स्त्रीत्यादौ अत इत्यनुवृत्तेरनन्तादेव न ब्रह्माणीति ब्रह्माणमानयति जीवयतीति विग्रहे अन, प्राणने। इत्यन्तो ण्यन्तात्कर्मण्यणि अणन्तत्वात् ङीपि णत्वे च सिद्ध्यति। सूत्रं तु इन्द्रस्य स्त्रीति वाक्ये इन्द्रीत्यनिष्टरूपवारणायेति बोध्यम्। इन्द्रादेरानन्वेति तु न सूत्रितं आगमलिंगाभावेन सर्वादेशप्रसंगात्। अनुगपि न कृतः अल्लोपः स्वर इति लोपप्रसंगात्। आकारोच्चारणस्य तु प्रकृत्यकारकारणार्थत्वेन चरितार्थत्वान्न सामर्थ्यम्। सर्वशब्दे च। अत्राहुः। आनुक् सुवचं मात्रालाघवादिति। अत्रेदं वक्तव्यं मात्रालाघवेऽपि प्रक्रियागौरवस्य सत्त्वेन तुल्यत्वात्। तथाहि। आनुकि सवर्णे दीर्घः सह ङ्गण ईत्रिति सूत्रद्वयं आनीपि तु दीर्घसूत्रमेकमेवेति लाघवम्॥

## ( आचार्यादणत्वम् ) आचार्यानी ॥

( सुबोधिनी )—आचार्यादणत्वम् ॥ आचार्यशब्दात्परस्यानीपो नस्य णत्वं न स्यात्॥ आचार्यस्य स्त्री आचार्यानी - पुंयोगाभावे आचार्या। स्वयं व्याख्यात्री ॥

## ( हिमारण्ययोर्महत्त्वे ) महद्धिमं हिमानी ॥ महदरण्यमरण्यानी ॥

( सुबोधिनी )—हिमारण्ययोर्महत्त्वे ॥ महत्त्वयोगे आभ्यामानीप् स्त्रीत्वं च विधीयते ॥ महद्धिमं हिमानी ॥ "हिमानी हिमसंहतिः" इत्यमरः ॥ महदरण्यमरण्यानी। "महारण्यमरण्यानी" इत्यमरः ॥

( तत्त्वदी० )—महत्त्वे इति ॥ लक्षणया महत्त्वम्। नं दीर्घत्वमिति भावः। तदन्तश्च स्त्रियामिति वक्तव्यम् अन्यथा घौ ह्रस्वः स्त्रियां य्वोरित्यादेः प्रवृत्तिर्न स्यात् स्त्रियां भावात् ॥

## ( यवाद्दोषे ) दुष्टो यवो यवानी ॥

( सुबोधिनी )—यवाद्दोषे ॥ यवादानीप् स्त्रीत्वं च दोषेऽर्थे ॥ दुष्टो यवो यवानी यवत्वजात्यभावे तदाकारानुकृतिर्दोषः। यवाकारानुकृतिमज्जात्यन्तरमेवानेनाभिधीयते ॥

( तत्त्वदी० )—यवाद्दोष इति ॥ यवानीति जात्यन्तरमेवानेन विधीयते। अयमेव चास्य दोषः। यदि तु यवत्वजातेरभावेऽपि तदाकारानुकृतिः ॥

## ( यवनाल्लिप्याम् ) यवनानां लिपिर्यवनानी ॥

( सुबोधिनी )—यवनाल्लिप्याम् ॥ यवनशब्दादानीप् लिप्यर्थे। सा च स्त्रीलिङ्ग एव। देवतेदमर्थे इत्यणो बाधक आनीप् विधीयते। यवनानां लिपिर्यवनानी। लिखिताक्षरविन्यासो लिपिः ॥

## ( मातुलोपाध्यायाभ्यां वा ) मातुलानी—मातुली ॥ उपाध्यायानी—उपाध्यायी ॥

( सुबोधिनी )—मातुलोपाध्यायाभ्यां वा ॥ आभ्यामानीप् वा स्यात्। पक्षे पुंयोगे चेतीप् ॥ मातुर्भ्राता मातुलस्तस्य स्त्री मातुलानी—मातुली ॥ उपाध्यायस्य स्त्री उपाध्यायानी—उपाध्यायी ॥

**( अर्यक्षत्रियोपाध्यायेभ्यो वा स्वार्थे )** अर्याणी–अर्या ॥ क्षत्रियाणी–क्षत्रिया ॥ उपाध्यायानी–उपाध्याया ॥

( सुबोधिनी )–अर्यक्षत्रियोपाध्यायेभ्यो वा स्वार्थे ॥ एभ्य स्वार्थे आनीब्वा स्यात् । पक्षे आप् ॥ अर्याणी–आर्या । स्वामिनी । वैश्या वेत्यर्थः । अर्यः स्वामिवैश्ययोरित्यर्थद्वयेऽपि निपातनात् ॥ क्षत्रियाणी–क्षत्रिया । क्षत्रियजातीया स्त्रीत्यर्थः ॥ पुंयोगे तु अर्यी क्षत्रियी या तु स्वयमेवाध्यापिका तत्र वा ईप् वाच्यः । पक्षे आप् । उपाध्यायी उपाध्याया । उपेत्यस्या अधीयते इत्यपादाने स्त्रियां घञ् । " उपाध्यायान्युपाध्यायी " इत्यमरः ॥

( तत्त्वदी० )–अर्याणीति ॥ स्वामिनी वैश्या पुंयोगेऽसतीत्यर्थः ॥

**( पुंयोगे च )** अदन्तात्स्त्रियामीप् । शूद्री । गणकी ॥

( सुबोधिनी )–पुंयोगे च ॥ इह पुमिति षष्ठ्यन्तं सांकेतिकं पृथक् पदम् । तच्चावर्त्यते । द्विरुच्चारणमावृत्तिः । पुंसः पुंस इति योगे इति भावे निमित्ते वा सप्तमी । अधिकारान्नामेति लभ्यते । यत् पुंसो नाम पुंवाचकशब्दोऽदन्तः । पुंसो योगे स्त्रियां वर्तते तत ईप् स्यात् ॥ योगः संबन्धः स चेह दंपतीरूप एवेति नाग्रहः । किं तु । जन्यजनकभावोऽपि गृह्यते । तेन केकयस्य क्षत्रियस्य पुत्री केकयीत्यादि सिद्धम् । तथा च भट्टिः । "प्राक्केकयीतो भरतस्ततोऽभूत्" इति ॥ कत्यादित्वात्केकयदुहिता कैकेयीत्यपि । तथा प्रागुक्तः । " कैकेयि कामाः फलितास्तवेति" इति कालिदासः ॥ पुंयोगे किम् । देवता । अयं हि संज्ञाशब्दः स्वभावात् स्त्रियां वर्तते न तु पुंवाचकशब्दयोगे ॥ अतः किम् भानोः स्त्री भानुः ॥

( तत्त्वदी० )–गणकीति ॥ गणकस्य स्त्रीत्यर्थः । स्त्रियां वृत्तिस्तु साहचर्यात् । तस्येयमिति संबन्धात् । तद्धितस्त्वभेदविवक्षातो न । यदि भेदविवक्षा तदा गणकेत्यपि भवत्येव । पुंयोगश्च न दाम्पत्यरूप एव किं तु जन्यजनकभावलक्षणोऽपि तेन केकयीत्यपि ॥

**( पालकान्तान्न )** गोपालिका । अश्वपालिका ॥

( सुबोधिनी )–पालकान्तान्न ॥ पुंयोगे ईब् न स्यात् । गोपालकस्य स्त्री गोपालिका ॥

( तत्त्वदी० )–पालकान्तान्नेति ॥ चकारस्य व्यवस्थितत्वार्थत्वादित्यर्थः ॥

**( सूर्याद्देवतायां चाप् )** सूर्यस्य स्त्री देवता सूर्या । अन्या सूरी ॥

( सुबोधिनी )–सूर्याद्देवतायां चाप् ॥ सूर्यशब्दात् पुंयोगे आप् स्यात् देवतार्थे ईपोऽपवादः ॥ देवतायां किम् । सूर्यस्य स्त्री सूरी । मानुषी कुन्तीत्यर्थः । सूर्यागस्त्ययोरिति यलोपः ॥

( तत्त्वदी० )–सूरीति ॥ सूर्यागस्त्ययोरीये ईपि चेति यलोपः ॥

**( जातेरयोपधात् )** जातिवाचिनो यकारोपधादकारान्तात्स्त्रियामीष् प्रत्ययो भवति ॥ महिषी । हंसी ॥ योपधात्तु । क्षत्रिया । वैश्या ॥

( सुबोधिनी )–जातेरयोपधात् ॥ जातिवाचकाद्य ऊपधा यस्य स योपधः न योपधः अयोपधस्तस्मादयोपधात् अदन्तात्स्त्रियामीष् स्यात् ॥ जातिलक्षणमाह । "आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ १ ॥" आकृतिग्रहणं यस्याः सा आकृतिग्रहणा जातिरुच्यते । आकृतिः संस्थानम् । गृह्यतेऽनेनेति ग्रहणम् । करणे युट् । अवयवसंनिवेशविशेषव्यङ्ग्येत्यर्थः । यथा तटी । तटादेः सर्वलिङ्गत्वेऽपि आकृतिग्रहणत्वाज्जातित्वं भवति । अनेन लक्षणेन गोत्रत्वादिजातिर्लक्षिता । ब्राह्मणत्वादिजातिस्तु न लक्षिता । ब्राह्मणक्षत्रियादीनां ह्यवयवसंस्थानस्य सदृशत्वाद् ब्राह्मणादिष्वव्याप्तिवारणाय लक्षणान्तरमाह । चकारो भिन्नक्रमार्थः । या सकृदाख्यातनिर्ग्राह्या सा जातिरुच्यते । सकृदेकवारमाख्यातोपदिष्टा सती निर्ग्राह्या निश्चेतुं शक्या सा जातिरित्यर्थः । कीदृशी सा लिङ्गानां न सर्वभाक् । लिङ्गानामिति कर्मणि षष्ठी । सर्वाणि भजतीति सर्वभाक् । या सर्वाणि लिङ्गानि न भजतीत्यर्थः । सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वात् । भजो विण्प्रत्ययः समासश्च । असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम् । यथा वृषली । एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विनापि वृषलत्वस्य सुग्रहः ॥ सकृदित्यादि किम् । देवदत्ता । यस्यां हि व्यक्तौ देवदत्तत्वं कथ्यते तत्समकालमन्या देवदत्तव्यक्तिरप्रसिद्धेति न देवदत्तत्वं जातिः । उक्तलक्षणद्वयरहितत्वात् ॥ तृतीयलक्षणमाह । चरणैः सह गोत्रं जातिरुच्यते । चरणशब्देन शाखाध्येतार उच्यन्ते । गोत्रशब्देनापत्यमुच्यते अपत्यप्रत्ययान्तः शाखाध्येतृवाचकशब्दो जातिवाचक इत्यर्थः ॥ गोत्रस्यानाकृतिग्रहणत्वात् सर्वलिङ्गत्वाच्च पृथगुपादानम् । चरणशब्दस्त्वध्ययनक्रियासंबन्धेन प्रवृत्तत्वात् क्रियाशब्दा एव जातिशब्दा इति चरणग्रहणं कृतम् आकृतिग्रहणा यथा । महिषी । हंसी ॥ असर्वलिङ्गा यथा । ब्राह्मणी । वृषली ॥ गोत्रलक्षणा यथा । पैतृष्वस्रीयी । औपगवी अण्णन्तमीपं परत्वादयं बाधते इति भावः ॥ चरणलक्षणा यथा । कठेन प्रोक्तमधीयाना कठी । कारकादित्यण्प्रत्ययस्तस्य लुक् च ॥ अत इति किम् । तित्तिरिः । गौः ॥

( तत्त्वदी० )–जातेरयोपधादिति ॥ जातिलक्षणमुच्यते । "आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥" आकृतिग्रहणा जातिः । आकृतिः संस्थानं ग्रहणं यस्याः सा आकृतिग्रहणा । अवयवसन्निवेशविशेषव्यंग्येत्यर्थः । अनेन गोत्वादिजातिर्लक्षिता ॥ ब्राह्मणत्वादिजातिस्तु ब्राह्मणक्षत्रियादीनां संस्थानस्य सादृश्यत्वात् । अतो लक्षणान्तरं लिंगानां चेत्या-

दि । सार्वाणि लिंगानि न भजतीत्ययमर्थो विवक्षितः । सर्वशब्दस्य लिंगापेक्षत्वेऽपि भजो विण्प्रत्ययः। समासश्च बोधकत्वात् । लिङ्गानामिति कर्मणि षष्ठी । सर्वं लिङ्गं न भजतीत्यर्थः ॥ **सकृदिति ॥** असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम् । अक्षरार्थस्तु एकस्मिन्पिण्डे सकृदेकवारमाख्याता अयं गौरित्युपदिष्टा पिण्डान्तरेषु निर्ग्राह्या निश्चेतुं शक्येत्यर्थः ॥ अप्राप्तप्रापणं चेदं न तु पूर्वलक्षणसंकोचकं तेन तटादेर्जातित्वम् देवतादौ तु उपदेशाभावान्न लक्षणसमन्वयः । येषु सर्वेषु लिङ्गेष्वाचार्या जातिवाचित्वमुपदिशन्ति तेष्वेव वदन्तीत्यर्थः ॥ **गोत्रं च चरणैः सहेति** ॥ गोत्रशब्देनापत्यमुच्यते । चरणशब्देन शाखाध्यायिन उच्यते । तेनापत्यप्रत्ययान्तः शाखाध्येतृवाची शब्दो जातिवाचक इत्यर्थः ॥ कुक्कुटी सूकरीति प्रथमस्योदाहरणम् ॥ ब्राह्मणी वृषलीति द्वितीयस्य ॥ गार्गी पैतृष्वस्रीयीति तृतीयस्य ॥ कठी वराकीति चतुर्थस्य ॥ गवयेत्यादिनोक्तस्यानित्यत्वादिति भावः ॥

**( क्वचिन्न ) बलाका ॥**

( सुबोधिनी )–क्वचिन्न ॥ यः शब्दो जातिवाची अयोपधः स्त्रियां नियतश्च ततो ङीप् भवतीत्यर्थः । "बलाका विसकण्ठिका" इत्यमरः ॥

**( गवयहयमुकयमनुष्यमत्स्यानामनिषेधः ) गवयी । हयी । मुकयी ॥ हसात्तद्धितयस्येपि लोपः । मनुषी ॥**

( सुबोधिनी )–गवयहयमुकयमनुष्यमत्स्यानामनिषेधः ॥ योपधेभ्योऽप्येभ्य ईप् स्यात् ॥ हसात्तद्धितयस्येपि लोपः । हसात्परस्य तद्धितयकारस्य लोपः स्यादीपि यस्येत्यलोपः । मनुषी ॥

( तत्त्वदी० )–गवयहयेति ॥ हसात्तद्धितेत्यादि । एतद्बीजं तु यस्य लोपसूत्रव्याख्यानावसरे चोक्तम् ।

**( मत्स्यस्य यलोपः ) मत्सी ॥**

( सुबोधिनी )–मत्स्यस्य यलोपः ॥ मत्स्यशब्दस्य यकारस्य लोपः स्यादीपि ॥ यस्येत्यलोपः । मत्सी ॥

**( सूर्यागस्त्ययोरीये ईपि च ) सूरी । अगस्ती ॥**

( सुबोधिनी )–सूर्यागस्त्ययोरीये ईपि च ॥ अनयोर्यकारस्य लोपः स्यात् ईयप्रत्यये ईप्प्रत्यये च ॥ सूरीयः । सूरी । अगस्तीयः । अगस्ती ॥

**( तिष्यपुष्ययोर्नक्षत्राणि यलोपः ) तैषी । पौषी ॥**

( सुबोधिनी )–तिष्यपुष्ययोर्नक्षत्राणि यलोपः ॥ अनयोर्यकारस्य लोपः स्यात् । नक्षत्रसंबन्धी योऽण् स नक्षत्राण् । नक्षत्रेण युक्तः काल इत्यण् । नक्षत्रे भव

इत्यण् च तस्मिन् परतः ॥ तिष्येण युक्तः कालस्तैषः । पुष्येण युक्तः कालः पौषः । तथा तिष्ये भवस्तैषः । पुष्ये भवः पौषः । स्त्रियां त्रण ईवितीप् । यस्येत्यलोपः । तैषी । पौषी ॥

**( जानपदादिभ्योऽर्थविशेषे ङीष् ) जानपदी-वृत्तिश्चेत् । अन्या जानपदी ॥ कुण्डी-अमत्रं चेत् । कुण्डान्या ॥ गोणी-आवपनं चेत् । गोणान्या ॥ स्थली-अकृत्रिमा चेत् । स्थलान्या ॥ भाजी-श्राणा चेत् । भाजान्या ॥ नागी-स्थूला चेत् । नागान्या ॥ काली-वर्णश्चेत् । कालान्या ॥ नीली-औषधिप्राणिनोः । नीलान्या ॥ संज्ञायां वा । नीला-नीली ॥ कुशी-अयोविकारे । कुशान्या ॥ कामुकी-मैथुनेच्छायाम् । कामुकान्या ॥ कबरी-केशविन्यासे । कबरान्या ॥**

( सुबोधिनी )-पाणिनिसूत्रम् । जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु । एभ्य एकादशभ्य एष्वर्थेष्वीप् स्यात् ॥ जनपदे देशे भवा जानपदी । भवार्थे अण् वर्तते । अन्येति ॥ वृत्तिर्जीविका चेद्यदि । अन्याप्येवं जानपदी । वृत्त्यभावे आद्युदात्त इति स्वरे भेदः ॥ "अस्त्री कमण्डलुः कुण्डी" इत्यमरः ॥ अमत्रं पात्रम् । कुण्डी स्त्रीविषयत्वाभावादप्राप्त ईप् विधीयते । अन्या कुण्डा । कुडि, दाहे । अस्माद्गुरोर्हसादित्यङ्प्रत्यये रूपम् । यस्तु "अमृते जारजः कुण्डः" इति मनुष्यजातिवाची कुण्डशब्दस्ततो जातिलक्षण ईप् भवत्येव ॥ ओप्यते निक्षिप्यते धान्यं यस्मिन् तदावपनम् । गोणी । आङ्पूर्वाद्वपेरधिकरणे युट् । अन्या गोणेति यथेच्छं नाम ॥ अकृत्रिमा पुरुषेणासंस्कृता भूमिः स्थली । पुरुषकृता तु स्थला ॥ पुष्टा चेत् नागी । अन्या नागा ॥ वर्णयुक्ता चेत् काली । अन्या काला ॥ अनाच्छादनं चेन्नीली औषधिविशेषः । प्राणिनि तु नीली गौः । आच्छादने तु नीला शाटी ॥ अयसो लोहस्य विकारः अयोविकारः । फाल इति प्रसिद्धः । तत्र कुशी । अन्या कुशा । वेदे औदुम्बरशंकुं कुशा इति व्यवहरन्ति "वल्गावक्षेपणी कुशा' इति हैमकोशे ॥ मैथुनेच्छायां सुरतवाञ्छायां कामुकी । वनादिकं कामयितुं शीलं यस्याः सा कामुका । षाकोकण इत्युकण् ॥ केशविन्यासे केशरचनायां कबरी । अन्या कबरा । चित्रेत्यर्थः ॥

( तत्त्वदी० )-**जानपदेत्या**दि ॥ पुंयोगेत्यत्र चकारस्य व्यवस्थितत्वाश्रयणादिति भावः ॥ **आपवन** इति ॥ आ उप्यते निःक्षिप्यते धान्यं यस्मिन् तत्तस्मिन् । गोणान्या याहच्छिकं नाम ॥ **अकृत्रिमायामि**ति ॥ असंस्कृतायामित्यर्थः ॥ **श्राणे**ति ॥ पक्वेत्यर्थः ॥ **अयोविकार** इति ॥ फाल इत्यर्थः ॥ कुशा वौदुम्बराः शङ्कवः ॥

**( शोणाद्वा ) शोणी–शोणा ॥**

( सुबोधिनी )–शोणाद्वा ॥ शोणशब्दाद्वा ईप् स्यात् ॥ "शोणः कोकनदच्छविः" इत्यमरः ॥

**( बहुव्रीहेर्जातिपूर्वात् क्तान्तात् ) ऊरुभिन्नी ॥**

( सुबोधिनी )–बहुव्रीहेर्जातिपूर्वात् क्तान्तात् ॥ जातिवाचिपूर्वपदात् क्तान्तादद्न्ताद्बहुव्रीहेः स्त्रियामीप् ॥ भिन्नावूरू यस्या इति बहुव्रीहौ भिन्नशब्दस्य बहुव्रीहौ विशेषणसप्तम्यन्तक्तान्तानामिति पूर्वनिपाते प्राप्ते क्वचिन्नेति परनिपातः ॥

( तत्त्वदी० )–बहुव्रीहेरिति ॥ एतद्बीजं तु चकार एव ॥

**( जातान्तान्न ) दन्तजाता ॥**

( सुबोधिनी )–जातान्तान्न ॥ जातशब्दान्ताद्बहुव्रीहेर्जातिवाचिपूर्वपदादीप् न । दन्ता जाता यस्याः सा दन्तजाता ॥

**( अस्वाङ्गपूर्वपदाद्वा ) सुरापीती–सुरापीता ॥**

( सुबोधिनी )–अस्वाङ्गपूर्वपदाद्वा ॥ अस्वाङ्गवाचिपूर्वपदात् क्तान्तादद्न्ताद्बहुव्रीहेः स्त्रियां वेप् स्यात् । पीता सुरा यया सा सुरापीता । क्वचिन्नेति क्तान्तस्य परनिपातः । बहुव्रीहेर्जातिपूर्वपदादित्यनेन नित्ये प्राप्ते विकल्पार्थमेतत् ॥

( तत्त्वदी० )–सुरापीतीति ॥ नाम्नः क्तेतिव्युत्पत्तेः प्रागेव समासे सिबन्तं न । समासे तु सुरापीतेत्यादिकमेव ॥

**( पाणिगृहीती भार्यायाम् ) अन्या पाणिगृहीता ॥**

( सुबोधिनी )–पाणिगृहीती भार्यायाम् ॥ यस्याः पाणिरग्निसाक्षिको गृह्यते तस्यां वाच्यायां पाणिगृहीतशब्दादीप् स्यात् ॥ अन्येति ॥ कौतुकादिना पाणिर्गृहीतो यस्या दास्यादेः सा पाणिगृहीता ॥

**( क्रीतान्तात्करणादेः ) वस्त्रक्रीती । क्वचिन्न । धनक्रीता ॥**

( सुबोधिनी )–क्रीतान्तात्करणादेः ॥ आदिशब्दो ह्यवयववचनः करणमादिरवयवो यस्य तस्मात् करणादेरेकपदादित्यर्थः । क्रीतान्तादद्न्तात् करणादेः स्त्रियामीप् स्यात् ॥ वस्त्रेण क्रीतेति वस्त्रक्रीती ॥ करणादेरिति किम् । गवा क्रीता ॥ अश्वेन क्रीता ॥

**( क्तान्तादल्पत्वे ) अभ्रलिप्ती द्यौः ॥ अल्पत्वे किम् । चन्दनलिप्तान्या मूर्तिः ॥**

( सुबोधिनी )–क्तान्तादल्पत्वे ॥ करणादेः क्तान्तादद्न्तात्स्त्रियामीप् स्यादल्पत्वे द्योत्ये । अल्पैरभ्रैर्लिप्तेति अभ्रलिप्ती ॥

( स्वाङ्गाद्वा ) स्वाङ्गवाचिनोऽदन्तादसंयोगोपधादुपसर्जनाद्वा स्त्रियामीप् ॥ सुमुखी–सुमुखा । सुकेशी–सुकेशा ॥ संयोगोपधात्तु सुगुल्फा ॥

( सुबोधिनी )–स्वाङ्गाद्वा ॥ स्वाङ्गवाचकादकारान्तादसंयोगोपधाद्गौणाद्वा स्त्रियामीप् स्यात् ॥ यथा सुष्ठु मुखं यस्याः सा सुमुखी ॥ सुष्ठु केशा यस्याः सा सुकेशी । पक्षे आवत इत्याप् ॥ असंयोगोपधात्किम् । सुष्ठु गुल्फौ यस्याः सा सुगुल्फा ॥ उपसर्जनात्किम् । शोभना शिखेति सुशिखा । शीङो ह्रस्वश्चेति खप्रत्ययः । आवत इत्याप् ॥ किं च यद्यत्र स्वम् अङ्गं स्वाङ्गं गृह्येत तदा सुमुखा शालेत्यत्रापीप् स्यात् । मुखस्य शालाङ्गत्वात् । सुकेशी रथ्येत्यत्र चेप् न स्यात् । केशानां रथ्याङ्गत्वाभावात् । अतोऽव्याप्त्यतिव्याप्तिपरिहारार्थमाह । तत्स्वाङ्गं त्रिधा । तथा च । "अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ॥ अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥ १ ॥" तत्स्वाङ्गमुच्यते कीदृशम् । अद्रवत् द्रवतीति द्रवत् न द्रवदद्रवत् ॥ सुष्ठु स्वेदो यस्याः सा सुस्वेदा । द्रवत्वादत्र स्वाङ्गं न ॥ पुनः कीदृशम् । मूर्तिमत् । स्पर्शवद्द्रव्यपरिमाणं मूर्तिः मूर्तिर्यस्यास्तीति तन्मूर्तिमत् सुष्ठु ज्ञानं यस्याः सा सुज्ञाना अमूर्तत्वात् । अत्र स्वाङ्गं न ॥ पुनः कीदृशम् । प्राणिस्थम् । मुखनासिकान्तःसंचारी वायुः प्राणः प्राणो यस्यास्तीति प्राणी प्राणिनि तिष्ठतीति तत्प्राणिस्थम् । सुष्ठु मुखं यस्याः सा सुमुखा शाला । अप्राणिस्थत्वादत्र स्वाङ्गं न ॥ पुनः कीदृशम् । अविकारजम् । वातपित्तकफानां विकृतिर्विकारः विकाराज्जातं विकारजं न विकारजम् अविकारजम् । सुष्ठु शोफो यस्याः सा सुशोफा । "शोफस्तु श्वयथुः शोथः" इत्यमरः ॥ विकारजत्वादत्र स्वाङ्गं न ॥ यदि प्राणिस्थं स्वाङ्गं तर्हि रथ्यादिगतानां केशादीनां स्वाङ्गत्वं न स्यात् । सुकेशी रथ्या इति न सिद्ध्यत्यतो द्वितीयं लक्षणमाह । च पुनः अतत्स्थं तत्र दृष्टं स्वाङ्गमुच्यते । कदाचित्तत्र प्राणिनि दृष्टं तं प्रति तस्मिन् प्राणिनि तिष्ठतीति तत्स्थं न तत्स्थम् अतत्स्थम् अप्राणिस्थमित्यर्थः । अप्राणिस्थस्यापि केशादेः पूर्वं प्राणिनि दृष्टत्वात् स्वाङ्गम् । एवमपि प्रतिमादिगतस्तनमुखादीनां स्वाङ्गत्वं न प्राप्नोति । अप्राणिन्यदृष्टत्वात् ॥ सुस्तनी प्रतिमेति न सिध्यत्यतस्तृतीयलक्षणमाह । तेन चेत्तत् तथा युतं अतत्स्थमित्यनुषज्यते एतादृशं तदप्राणिस्थं मुखादि स्वाङ्गमुच्यते । कीदृशम् । चेद्यदि तेन प्राण्यङ्गेन मुखादिना सह तथा युतं प्राणिवद्युतं सहितं यथा प्राणियुतं तद्वत्प्राणिनि युतं भवतीत्यर्थः ॥ सुष्ठु स्तनौ यस्याः सा सुस्तनी प्रतिमा । प्राणिसदृशे प्रतिमादौ प्राणिनि इवेति प्राणिवत् स्तनादेः स्थितत्वात् स्वाङ्गमस्ति ॥

( तत्त्वदी० )–स्वांगाद्वेति ॥ स्वमङ्गं स्वांगमित्युक्तौ सुमुखा शालेत्यत्रातिव्याप्तिः । मुखस्य शालावयवत्वात् । दीर्घकेशी रथ्येत्यत्राव्याप्तिश्च केशानां रथ्यांगत्वाभावादतस्तत्परिहाराय स्वांगलक्षण-

मुच्यते । "अद्रवन् मूर्तिमत्स्वांगं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥" प्राणिस्थं स्वांगं प्राणिनि तिष्ठतीति प्राणिस्थम् । एतेन श्लक्ष्णमुखा शालेत्यत्र न भवति । अप्राणिस्थत्वात् ॥ द्रवतीति द्रवत् । ततोऽन्यदद्रवत् एवं च सुस्वेदात्र न भवति द्रवत्वात् ॥ **मूर्तिमदिति** ॥ असर्वगतद्रव्यपरिमाणं मूर्तिः । असर्वगतानि यानि द्रव्याणि तेषां यत्परिमाणं ह्रस्वत्वादि सा मूर्तिः । स्पर्शनद्रव्यपरिमाणमूर्तिरित्यन्ये । सा यस्यास्तीति तन्मूर्तिमत् । एवं च बहुज्ञानात्र न भवति अमूर्तत्वात् । अविकारजमिति विकारो वातादिवैषम्यं ततो यज्जायते तन्न भवतीत्यविकारजम् । एवं सुशोफात्र न भवति ॥ **अतत्स्थमिति** ॥ सांप्रतमपि कदाचित्प्राणिनि दृष्टं चेत्तदपि स्वांगं भवत्येवेत्यर्थः ॥ तथा च दीर्घकेशी रथ्येत्यत्र भवत्येव । इदानीम अप्राणिस्थस्यापि पूर्वं प्राणिनि दृष्टत्वात् ॥ **तेन चेदिति** ॥ अतत्स्थमित्यनुषज्यते । अप्राणिस्थमपि मुखादि स्वांगं तेन चेत् मुखादिना तत् अप्राणिद्रव्यं तथायुतं भवति । यथा प्राणिद्रव्यमित्यर्थः । एवं दीर्घमुखी प्रातिमेति भवति । प्राणिवत्प्राणिसदृशेऽपि स्थितत्वात् ॥

**( नासिकोदरौष्ठजङ्घादन्तकर्णशृंगाद्वा ) तुङ्गनासिकी–तुङ्गनासिका । मन्दोदरी–मन्दोदरा । बिम्बोष्ठी–बिम्बोष्ठा ॥ एवं सुजंघी । सुदन्ती । सुकर्णी । सुशृङ्गी ॥**

( सुबोधिनी )–नासिकोदरौष्ठजंघादन्तकर्णशृङ्गाद्वा ॥ एभ्यो वेप् स्यात् ॥ नासिकोदरयोर्न क्रोडादिबह्वस्वरादिति ओष्ठादीनां पञ्चानां तु संयोगोपधाच्चेति निषेधे प्राप्ते वचनम् ॥ तुङ्गा नासिका यस्याः सा तुङ्गनासिकी ॥ मन्दम् उदरं यस्याः सा मन्दोदरी ॥ विम्बवत् ओष्ठौ यस्याः सा बिम्बोष्ठी ॥ सुष्ठु जङ्घे यस्याः सा सुजङ्घी । पक्षे आप् सुजङ्घेति ॥

( तत्त्वदी० )–नासिकेत्यादि ॥ वाग्रहणादेतत्सर्वम् । नासिकोदरयोर्बह्वस्वरादप्राप्तिः । ओष्ठादीनां तु संयोगोपधत्वादप्राप्तिः ॥

**( अङ्गगात्रकण्ठपुच्छाच्च ) स्वङ्गी । सुगात्री । सुकण्ठी । सुपुच्छी । पक्षे स्वङ्गेत्यादि ॥**

( सुबोधिनी )–अङ्गगात्रकण्ठपुच्छाच्च ॥ एभ्यो वेप् स्यात् ॥ असंयोगोपधादिति निषेधे प्राप्ते वचनम् ॥ सुष्ठु अङ्गं यस्याः सा स्वङ्गी ॥ सुष्ठु गात्रं यस्याः सा सुगात्री ॥ सुष्ठु कण्ठो यस्याः सा सुकण्ठी ॥ सुष्ठु पुच्छं यस्याः सा सुपुच्छी ॥ पक्षे आप् ॥

**( कबरमणिविषशरेभ्यः परात् पुच्छान्नित्यम् ) कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ॥**

( सुबोधिनी )–कबरमणिविषशरेभ्यः परात् पुच्छान्नित्यम् ॥ ईप् स्यात् ॥ कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी ॥ मणिः पुच्छे यस्याः सा मणिपुच्छी ॥ शरः पुच्छे यस्याः सा शरपुच्छी ॥ विषं पुच्छे यस्याः सा विषपुच्छी ॥

**( उपमानात्पक्षपुच्छाभ्याम् ) श्येनपक्षी । श्येनपुच्छी ॥**

( सुबोधिनी )–उपमानात्पक्षपुच्छाभ्याम्॥ उपमानात्पराभ्यां पक्षपुच्छाभ्यां नित्यमीप् ॥ श्येनवत् पक्षौ यस्याः सा श्येनपक्षी ॥ श्येन इव पुच्छं यस्याः सा श्येनपुच्छी ॥

**( न क्रोडादिबहुस्वरात् ) कल्याणक्रोडा । सुजघना ॥**

( सुबोधिनी )–न क्रोडादिबहुस्वरात् ॥ क्रोडादेर्बहुस्वराच्च स्वाङ्गान्नेप् स्यात् ॥ अश्वानामुरः क्रोडा । सुष्ठु जघनं यस्याः सा सुजघना ॥

( तत्त्वदी० )–कल्याणक्रोडेति ॥ अश्वानामुरः क्रोडा । स्त्रीलिंगोऽयमिति हरदत्तादयः । तत्रान्यार्थत्वेन ह्रस्वत्वेऽदन्तत्वादीपः प्राप्तिः ॥ अमरस्तु 'न ना क्रोडं भुजान्तरम्' इत्याह ॥ रत्नमणिस्तु पुंस्त्वमाह । गणे च क्रोडेति प्रातिपदिकमात्रं पाठ्यते न तु आबन्तमिति गणरत्नमहोदधिकारः । एवं चाविशेषाल्लिंगत्रयेऽपि उदाहरणं वोध्यम् ॥ माधवस्तु तुदादिगणे 'क्रुड, निमज्जने' इति धाताबाह । क्रोडः वेञ् । क्रोडा अश्वानामुरः । अयं स्वभावतो विशेषविषयः क्रोडादिषु आबन्तस्यैव पाठात् । भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वांगलक्षणं ईब्विकल्पो भवत्येव । कल्याणक्रोडी। कल्याणक्रोडादिराकृतिगणः ॥

**( सहनञ्विद्यमानपूर्वाच्च ) सकेशा । अकेशा । विद्यमाननासिका ॥**

( सुबोधिनी )–सहनञ्विद्यमानपूर्वाच्च ॥ सहेत्यादित्रिकपूर्वात्स्वाङ्गान्नेप् स्यात् ॥ सह केशैः वर्तते या सकेशा । सहादेरिति सहस्य सः ॥ अविद्यमानाः केशाः यस्याः सा अकेशा ना इति नञोऽकारादेशः ॥ विद्यमाना नासिका यस्याः सा विद्यमाननासिका । स्वाङ्गाद्वेत्यस्य नासिकोदरौष्ठेत्यस्य वाधकोऽयं परत्वात् ॥

**( नखमुखात्संज्ञायाम् ) शूर्पणखा । गौरमुखा ॥ संज्ञायाम् किम् । ताम्रमुखी कन्या ॥**

( सुबोधिनी )–नखमुखात् संज्ञायाम् ॥ आभ्यामीप् न स्यात् संज्ञार्थे ॥ शूर्पणखा । रावणस्य स्वसुर्नाम ॥ यदा शूर्पवन्नखानि यस्याः सा इति योगमात्रं विवक्ष्यते न तु संज्ञा तदा ईप् स्यादेव णत्वाभावश्च ॥ गौरमुखेति कस्याश्चित् संज्ञा ॥ असंज्ञायां तु ताम्रवन्मुखं यस्याः सा ताम्रमुखी ॥

**वोर्गुणात् ॥ उदन्ताद्गुणवाचिनो वा स्त्रियामीप् स्यात ॥ पट्वी–पटुः । बह्वी–बहुः ॥**

( सुबोधिनी )–वोर्गुणात ॥ वा ओरिति छेदः । गुणशब्दोऽत्र गुणवत्परो न तु गुणमात्रवाचिपरो गुणमात्रवाचकानां स्त्रीलिङ्गाभावात् । "गुणे शुक्लादयः पुंसि" इत्युक्तत्वात् ॥ उदन्तादिति किम् । शुचिः ॥ गुणात्किम् । आखुः ॥ महाभाष्ये ;

लक्षणम् । "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥" स गुण उच्यते । यः सत्त्वे द्रव्ये निविशते । द्रव्यमुपैतीत्यर्थः ॥ ननु द्रव्ये द्रव्यत्वं तत्रातिव्याप्तिरत आह । यो पृथक् द्रव्यादपैति अपगच्छति । द्रव्यं जहातीत्यर्थः ॥ यथा पीततायां जातायां नीलता फलादपैति नैवं द्रव्यत्वं द्रव्यादपैति । ननु गोषु गोत्वं तदश्वादेश्चापैति तत्रातिव्याप्तिरत आह । यः पृथग्जातिषु दृश्यते । द्रव्यान्तरेष्ववलोक्यते । यथाभ्रे दृष्टा नीलता तृणादिष्वपि दृश्यते न तथा गोत्वं पृथग्जातिषु दृश्यते । एवं तर्हि द्रव्ये क्रिया वर्तते सा द्रव्यादपैति पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह । य आधेय उत्पाद्यः । च पुनः यः अक्रियाजोऽनुत्पाद्य इत्यर्थः । उत्पाद्यो यथा । घटादेः पाकजो रूपादिः अनुत्पाद्यो यथा । आकाशादेर्महत्तत्त्वादिः । क्रिया तु सर्वा प्युत्पाद्यैव । नानुत्पाद्यायाः क्रियाया द्वैविध्याभावाद्गुणत्वाभावः । एवं तर्हि द्रव्यस्य गुणत्वं प्राप्नोति तथाहि । अवयविद्रव्यं ह्यवयवद्रव्येषु निविशते संयोगविनाशादवयवद्रव्यादपैति । पृथग्जातिषु हस्तपादादिषु दृश्यते । द्रव्यमुत्पाद्यानुत्पाद्यभेदेन द्विविधम् । तत्र निरवयवस्यात्मपरमाण्वादेरनुत्पाद्यत्वं नित्यत्वात् । अवयविद्रव्यस्य घटादेस्तूत्पाद्यत्वमस्त्यनित्यत्वादत आह । योऽसत्त्वप्रकृतिरद्रव्यस्वभावो द्रव्याद्भिन्न इत्यर्थः ॥

( तत्त्वदी० )—**वोर्गुणादिति** ॥ वा ओः गुणादिति छेदः । औरिति तु न औः प्रत्यय इति व्याख्यानं न कार्यिणः प्रागनुद्देशात् सतो हि कार्यिणः कार्येण भाव्यमिति । औरित्यपि उवर्णान्तस्यैव ग्रहणं न त्वोकारान्तस्य गुणस्य तदभावात् । केवलस्यापि उमात्रस्यागुणस्याभावात् । गुणशब्दोऽपि न स्वरूपपरः तस्यानुदन्तत्वात् गुणमात्रवाचीपरोऽपि न तस्य स्त्रियामप्रवृत्तेः । "गुणे शुक्लादयः पुंसि" इति वचनात् ॥ गुणलक्षणं तु "उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि । वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः" इति ॥

**( खरुसंयोगोपधान्न ) खरुः । पाण्डुः ॥**

( सुबोधिनी )—**खरुसंयोगोपधान्न** ॥ खरुशब्दात् संयोगोपधगुणवाचिनः शब्दाच्च नेप् स्यात् ॥ खरुः पतिंवरा कन्या । पाणिग्रहणोत्कण्ठावतीत्यर्थः ॥

( तत्त्वदी० )—**खरुसंयोगे**त्यादि ॥ वाशब्दादेतत् । खरुः पतिंवरा कन्या । तत्र पाणिग्रहणोत्कण्ठाभिधायित्वाद् गुणवचनत्वम् ॥

**( कृदिकारादक्त्यर्थात् ) आजी—आजिः । धूली—धूलिः । रात्री—रात्रिः । शकटी—शकटिः ॥ अक्त्यर्थात् किम् । भूतिः । अजननिः ॥**

( सुबोधिनी )—**कृदिकारादक्त्यर्थात्** ॥ क्त्यादिभिन्नात्कृत्संबन्धिन इकारात् स्त्रियां वेप् स्यात् ॥ आजी संग्रामः ॥ धूली रजः ॥ अक्त्यर्थात् किम् । भूतिः । क्तिरिति स्त्रियां भावेऽर्थे क्तिः ॥ आक्रोशे नञ्यनिरिति जनेरनिप्रत्ययः । न जायते इत्यजननिः ॥

**( पद्धत्यादिभ्यो वा )** पद्धती-पद्धतिः ।

( सुबोधिनी )-पद्धत्यादिभ्यो वा ॥ स्त्रियामेभ्यो वेप् स्यात् ॥ पद्भ्यां हन्यते इति पद्धतिर्मार्गः । क्तिप्रत्ययान्तत्वादप्राप्ते विध्यर्थम् । पद्धतिशब्दो गणे पठ्यते । पद्धतिषष्टिविकटविशालकल्याणपुराणचण्डकृपाणअहनित्यादयः ॥

**ऐ च मन्वादेः ॥ मनुपूतक्रतुवृषाकप्यग्निकुसितकुसिदानामै आदेश ईप् च स्त्रियां पुंयोगे ॥ पूतक्रतायी । कुसितायी । कुसिदायी । वृषाकपायी । अग्नायी ॥**

( सुबोधिनी )-ऐ च मन्वादेः ॥ मनुरादिरस्य स मन्वादिस्तस्मान्मन्वादेः । आदिशब्दः प्रकारे । स्त्रियां मन्वादेरीप् स्यात् । पुंयोगे एषामन्तस्यैकारादेशश्च ॥ पूतः क्रतुर्यस्य येन वा पूतक्रतुः पूतक्रतोः स्त्री पूतक्रतायी ॥ पुंयोगे किम् । पूतक्रतुः स्त्री । "यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा" इत्यमरः ॥ अग्नेः स्त्री अग्नायी । "स्वाहा च हुतभुक्प्रिया" इत्यमरः ॥ वर्षति कामानिति वृषः । नाम्युपधात्क इति कः ॥ आकम्पयति पापानीत्याकपिः, अत्रान्तर्भावितञिप्रत्ययार्थोऽस्ति 'इखखि' इति इप्रत्ययः । इदित इति न नुम् । आगमजमनित्यमित्युक्तत्वात् । वृषश्चासौ आकपिश्च वृषाकपिः वृषाकपेः स्त्री वृषाकपायी । "हरविष्णू वृषाकपी" इत्यमरः ॥ "वृषाकपायी श्रीगौर्यौ" इति चामरः ॥

( तत्त्वदी० )-**ऐ च मन्वादे**रिति ॥ मनुरादिर्यस्य स मन्वादिः । आदिशब्दः प्रकारे । तेन वृषाकप्यग्निकुसितकुसिदा गृहीताः ॥ **पूतक्रतायीति** ॥ पूतः क्रतुर्येन स पूतक्रतुः तस्य स्त्रीत्यर्थः ॥ **वृषाकपायी**ति । वर्षति कामानिति वृषः । नाम्युपधात्कः । आकम्पयति पापानिति आकपिः । अन्तर्भावितञ्यन्तः । इखखीति इः । यत्त्वागमजमनित्यमिति । तत्र इप्रत्यये खित्त्वाभावादेव नुमोऽप्राप्तेरागमजत्वेनानित्यत्वाश्रयस्य व्यर्थत्वात् । वृषश्चासावाकपिश्च वृषाकपिस्तस्य स्त्रीत्यर्थः ॥ "हरविष्णू वृषाकपी।' 'वृषाकपायी श्रीगौर्यौ ॥" पुंयोगे किम् । पूताः क्रतवो यय सा पूतक्रतुरेव ॥

**( मनोरै औ वा )** मनावी- मनायी-मनुः ॥

( सुबोधिनी )-मनोरैऔ वा ॥ मनुशब्दस्यौकारादेशः ऐकारादेशश्च वा ईपि ॥ मनोः स्त्री मनावी-मनायी-मनुः । ईबभावः ॥

**पत्न्यादयः ॥ पत्न्यादयो निपात्यन्ते ॥ पत्नी । सपत्नी । एकपत्नी । वीरपत्नी ॥**

( सुबोधिनी )-पत्न्यादयः ॥ पत्नी आदिर्येषां ते पत्न्यादयः । आदिशब्दः प्रकारे । पतिशब्दान्तस्य नान्तत्वं निपात्यते । त्रण ईबितीप् । पत्नी ॥ समानः

पतिर्यस्याः सा सपत्नी। सहादेरिति समानस्य सभावः॥ एकः पतिर्यस्याः सा एकपत्नी॥ वीरः पतिर्यस्याः सा वीरपत्नी॥ सखिशब्दशिशुशब्दाभ्यामीप् निपात्यते। सखी॥ न विद्यते शिशुर्यस्याः सा अशिश्वी। "अशिश्वी तु शिशुं विना" इत्यमरः॥ अनडुहः स्त्रियामीप् निपात्यते। अनडुहश्चेति वाम्। अनड्वाही–अनडुही॥ प्रागादिशब्दादीप् निपात्यते गतौ। प्राची पूर्वा दिक्। नो लोप इति लोपः। पूजायां तु प्राञ्ची। पूजार्थाञ्चतेर्नेति नलोपाभावः। गतौ अचेरदीर्घश्चेत्यकारलोपः॥ पूर्वदीर्घे प्रतीची पश्चिमा दिक्। पूजायां प्रत्यञ्ची॥ उदीची उत्तरा दिक्। तिरश्चादय इति उदीचादेशः॥ अवाची। दक्षिणा दिक्। "प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः। "उत्तरादिगुदीची स्यात्" इत्यमरः॥

(तत्त्वदी०)–पत्न्यादय इति॥ नत्वं निपात्यते। ईप् तु नान्तत्वादेव॥

**(क्वचिद्वा) दृढपत्नी–दृढपतिः। वृषलपत्नी–वृषलपतिः। एता–एनी। हरिता–हरिणी। रोहिता–रोहिणी। श्येता–श्येनी। असिता–असिक्नी। पलिता–पलिक्नी। इत्यादि॥**

(सुबोधिनी)–क्वचिद्वा॥ क्वचिद्वा निपातनं भवति॥दृढः पतिर्यस्याः सा दृढपत्नी–दृढपतिः॥ वृषलः शूद्रः पतिर्यस्याः सा वृषलपत्नी–वृषलपतिः॥ एतच्छब्दात् स्त्रियामीप् तकारस्य नकारादेशश्च वा निपात्यते। एता–एनी। कर्बुरेत्यर्थः। "चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः॥ हरिता–हरिणी। हरिद्वर्णेत्यर्थः॥ रोहिता–रोहिणी। रक्तेत्यर्थः॥ श्येता–श्येनी। श्वेतेत्यर्थः॥ असितपलितशब्दयोरीप् तकारस्य क्नादेशश्च वा निपात्यते। असिता–असिक्नी। कृष्णेत्यर्थः॥ पलिता–पलिक्नी। वृद्धेत्यर्थः॥

(तत्त्वदी०)–क्वचिद्वेति॥ पुंयोगेत्यतश्चकारानुवृत्तेरिति भावः॥

**इतो मनुष्यजातेरीप्॥ दाक्षी। अवन्ती। कुन्ती॥**

(सुबोधिनी)–इतो मनुष्यजातेरीप्॥ मनुष्यजातिवाचिन इकारान्तात् स्त्रियामीप् स्यात्॥ दक्षस्यापत्यं दाक्षिः। अत इञिति इञ्। अत्र गोत्रलक्षणा जातिः॥ अवन्तेरपत्यं स्त्री कुन्तेरपत्यं स्त्री। स्त्रियामवन्तिकुन्तीत्यपत्यप्रत्ययस्य लुक्। अत्रापि गोत्रलक्षणा जातिः॥

**उत ऊः॥ उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूः प्रत्ययः॥ कुरूः॥ अयोपधात्किम्। अध्वर्युः स्त्री॥**

(सुबोधिनी)–उत ऊः॥ कुरोरपत्यं स्त्री कुरूः। स्त्रियामवन्तिकुन्तिकुर्वित्यपत्यप्रत्ययस्य लुक्। अत्रापि गोत्रलक्षणा जातिः॥ अयोपधात्किम्। अध्वर्युर्ब्राह्मणी

शाखाध्येत्री शाखाध्यायिवंशोद्भवा वेत्यर्थः ॥ अत्र चरणलक्षणा जातिः ॥ अध्वरं यातीति विग्रहे मृगय्वादयश्चेत्यौणादिकेन सूत्रेण याधातोः कुप्रत्यये अध्वरशब्दस्यान्त्यलोपश्च ।

( तत्त्वदी० )–उत ऊरिति ॥ अत्राहुः । ओरित्यनुवर्तमाने उत इति किमर्थम् । न च वाच्यमूदन्तान्मा भूदिति वध्वूरित्यादौ सत्यसति विशेषाभावादतस्तदनुवृत्तौ तत्संबन्धस्य गुणशब्दस्याप्यनुवृत्तिः स्यादिति पुनरुक्तमिति माधवस्तन्न खलप्वं यवल्वमिति विशेषणसत्त्वात् । अत्रेदमवधेयम् । मनुष्यजातिवाचिनउदन्तादूप्रत्ययस्य विधानेन खलप्वादिशब्दानां क्रियावाचकत्वे जातिवाचित्वाभावादेवाप्राप्तौ विशेषणस्यासंभवात् । अथात्र मनुष्यजातिर्न विवक्षितेति वाच्यं न ऊङुत इति सूत्रविवरणे उदन्तान्मनुष्यजातिवाचिन इति दीक्षितादिभिः सर्वैरेवोक्तत्वात् ॥

**( पङ्गोश्च ) पङ्गूः ॥**

( सुबोधिनी )–पङ्गोश्च ॥ पङ्गुशब्दो गुणवाची तस्मात् स्त्रियामूः स्यात् ॥

**( श्वशुरस्योकाराकारलोप ऊश्च ) श्वश्रूः ॥**

( सुबोधिनी )–श्वशुरस्योकाराकारलोप ऊश्च ॥ श्वशुरशब्दात् स्त्रियामूः स्यात् उकाराकारयोर्लोपश्च ॥ संनिहितत्वादन्तस्यैवालोपो न त्वादेः । पुंयोगे ङीप् निवारणार्थमिदम् ॥

( तत्त्वदी० )–श्वशुरस्येत्यादि ॥ एतन्मूलं तु दीर्घकरणमेवान्यथा उदन्तत्वात्सवर्णदीर्घेणापि सिद्धेरूकरणं वृथा स्यात् । पुंयोगलक्षण ङीपि प्राप्ते ऊ तत्संयोगेन च विधीयमानोऽलोपः सन्निहितत्वादन्तस्यैवाकारस्य न त्वादेः ॥

**( ऊरूत्तरपदादौपम्ये ) उपमानवाचिपूर्वपदादूरूत्तरपदादूः ॥ करभोरूः ॥**

( सुबोधिनी )–ऊरूत्तरपदादौपम्ये ॥ उपमानवाचिपूर्वपदादूरूत्तरपदादूः ॥ उपमीयतेऽनेन तदुपमानम् अधिकगुणविशिष्टमित्यर्थः ॥ करभवत् ऊरू यस्याः सा करभोरूः । " मणिबन्धादाकनिष्ठं करस्य करभो बहिः " इत्यमरः ॥

( तत्त्वदी० )–उपमानवाचिपूर्वपदादिति ॥ "धात्री कराभ्यां करभोपमोरुः" इत्यत्र तु न करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात् ॥

**संहितशफलक्षणवामसहितसहादेरनौपम्येऽपि ॥ संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः । सहितोरूः । सहोरूः ॥**

( सुबोधिनी )–संहितशफलक्षणवामसहितसहादेरनौपम्येऽपि ॥ संहितादिपूर्वपदादुरूत्तरपदान्नाम्नः स्त्रियामूः स्यात् ॥ उपमीयते अनयेत्युपमा तस्या भाव औपम्यं न औपम्यम् अनौपम्यं तस्मिन् । संहितौ मिलितौ ऊरू यस्याः सा संहितोरूः ॥ शफाविव ऊरू यस्याः सा शफोरूः । "शफं क्लीबे खुरः पुमान्" इत्यमरेण क्लीबत्व-

मुक्तं तथापि कोशान्तरे पुंस्त्वम् "शफः खुरे गवादीनां मूले विटपिनामपि" इति हेमचन्द्रः ॥ लक्षणमस्त्यस्मिन् स लक्षणः । अस्त्यर्थे अप्रत्ययः । लक्षणौ ऊरू यस्याः सा लक्षणोरूः ॥ वामौ सुन्दरौ ऊरू यस्याः सा वामोरूः ॥ हितेन सह सहितौ सहितौ ऊरू यस्याः सा सहितोरूः ॥ सहेते इति सहौ । सहौ ऊरू यस्याः सा सहोरूः ॥

( तत्त्वदी० )–शफोरूरिति ॥ शफौ खुरौ ताविव । संश्लिष्टत्वादुपचारः । यद्यपि "शफं क्लीबे खुरः पुमान्" इत्यमरस्तथापि शफशब्दस्य पुंस्त्वमपि बहुसंमतम् । "शफः खुरे गवादीनां मूले विटपिनामपि" इति हेमचन्द्रकोशाच्च ॥

**( नृनरयोर्वृद्धिश्च ) नारी ॥**

( सुबोधिनी )–नृनरयोर्वृद्धिश्च ॥ नृशब्दात् त्रण ईबिति ईपि प्राप्ते नरशब्दात् जातिलक्षणे ईपि प्राप्ते वृद्ध्यर्थं वचनम् ॥ नुर्नरस्य वा स्त्री नारी ॥

(तत्त्वदी० )–नृनरयोरिति ॥ नृशब्दात् त्रण ईबित्यनेन । नरशब्दात्तु जातिलक्षण एव ॥ ननु नरशब्दोऽन्त्याकारस्य षष्ठीनिर्दिष्टत्वात् वृद्धिरस्त्विति वाच्यं न चान्त्यवृद्धिर्विफला लोपं बाधित्वा प्रवृत्तेः । उच्यते । नरस्य अः नरः हलादित्वाद्वेर्लोपः ना च नरश्च नृनरौ तयोरित्यर्थः । प्रश्लेषसामर्थ्यान्नान्त्याकारो गृह्यते ॥

**यूनस्तिः ॥ युवन्शब्दात् स्त्रियां तिः ॥ युवतिः ॥ ॥ इति स्त्रीप्रत्ययाः ॥**

( सुबोधिनी )–यूनस्तिः ॥ त्रण ईबित्यस्यापवादः । नाम्नो न इति सूत्रे केचित् स्यादौ रसे इत्यनुवर्तयन्ति तन्मते युवन्शब्दात्तिप्रत्यये नलोपः कथं स्यात् । स्यादीनां रसस्य यत्वाभावात् । उच्यते । त् इः इति च्छेदः कर्तव्यः । युवन्शब्दात्स्त्रियामीप् प्रत्ययो यूनोऽन्त्यस्य तादेशश्चेति । कथं तर्हि "युवतीकरनिर्मथितम्" इति प्रयोगः ॥ याति मिश्रीकरोति पत्या सहेति यौतेः शत्रन्तात् ष्ट्रत्रित इति ईपि कृते बोध्यः । अत्रापि अनुपसर्जनादिति वक्तव्यम् । गौणे तु बहवो युवानो यस्यां बहुयुवा पूः । स्त्रीप्रत्ययान्तेभ्यः शब्देभ्यः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया स्याद्युत्पत्तिर्बोध्या ॥ ॥ इति सुबोधिन्यां स्त्रीप्रत्ययाः ॥

( तत्त्वदी० )–यूनस्तिरिति ॥ वसां रस इत्यतो रस इत्यनुवृत्तेरस्यादावपि रसे नलोपः । यद्वा त् इः इति च्छित्त्वा युवन्शब्दस्य तादेश इश्च प्रत्ययः स्त्रियामित्यर्थो वाच्यः । युवतीति यौतेः शत्रन्तादीपि बोध्यम् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायामिह टीकायां स्त्रीप्रत्ययविचारणम् ॥

इति तत्त्वदीपिकायां स्त्रीप्रत्ययाः ॥

# अथ विभक्त्यर्थाः ॥

**लिङ्गार्थे प्रथमा ॥** नामार्थमात्रे लिंगमात्राधिक्ये च प्रथमा विभक्तिः ॥ नियतोपस्थितिको नामार्थः । उच्चैः । नीचैः । कृष्णः । श्रीः ज्ञानम् । द्रोणः । खारी । आढकम् । एकः । द्वौ । बहवः । अलिंगा नियतलिंगाश्च नामार्थमात्र इत्यस्योदाहरणम् । अनियतलिंगास्तु लिंगमात्राधिक्य इत्यस्य । तटः । तटी । तटम् ॥

( सुबोधिनी )—अथ कारकप्रकरणं स्वादयः प्रत्यया नाम्नो विहितास्तेषामर्थविशेषे व्यवस्थां दर्शयितुमारभते लिंगार्थे प्रथमा ॥ लिंगं च अर्थश्चानयोः समाहारो लिंगार्थम् तस्मिन् लिंगार्थे । अर्थे प्रथमेत्युक्तौ कस्यार्थे इत्याकांक्षायां यस्मान्नाम्नः स्यादिर्विभक्तिर्विहिता तस्य नाम्नोऽर्थे एवेति नामार्थमात्रम् । "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः । तत्र प्रथमा विभक्तिर्भवति । स को नामार्थः । नियतोपस्थितिकः । नियतोपस्थितिर्यस्य स नियतोपस्थितिकः । यस्मिन् नाम्नि उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स नियतोपस्थितिको नामार्थ एव शक्य इत्युच्यते । अनियतलिंगग्रहणार्थं लिंगमिति । लिंगे लिंगमात्राधिक्येऽपि प्रथमा । यद्यपि लिङ्गमात्र इत्येवाक्षरार्थस्तथापि नामार्थं विना लिङ्गादिप्रतीतेरसंभवादाधिक्ये इत्युक्तम् । प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः । ननु सिंहो माणवक इत्यादौ प्रथमा न स्यात् । उच्यते । शक्यार्थमादाय प्रथमाविभक्तेरुत्पत्तौ सत्यां पश्चात्पदान्तरसमभिहारो लक्ष्यार्थबोधोऽस्तीति ॥ ननु वीरः पुरुष इत्यादौ प्रथमा न स्यात् । वीराभिन्नः पुरुष इत्यभेदसंसर्गस्याधिकस्य भानात् । उच्यते । अत्र पदसंस्कारपक्षाभ्युपगमोऽस्ति ततोऽन्तरङ्गत्वात् प्रथमप्रवृत्तपदसंस्कारेण प्रथमारूपे कृते पश्चाद्बहिरंगत्वात् अभेदसंसर्गो वाक्यार्थः कर्तव्य इति । नास्ति लिंगं येषां ते अलिंगाः । नियतं निश्चितं लिंगं येषां ते नियतलिंगा इति । उभयेषां नामार्थमात्रे उदाहरणं यथा । उच्चैरिह । पदत्वाद्विसर्गसिद्धिः । किं चास्य प्रथमान्तत्वात् संग्राम उच्चैस्तव संग्राम उच्चैस्ते इति । विद्यमानपूर्वादिति सूत्रेण ते मे आदेशयोर्विकल्पसिद्धिरपि फलम् । कृष्णः । अयं नीलद्रव्येऽनियतलिंगस्तथापि वासुदेवे नियतलिंगः । ज्ञायते तत् ज्ञानम् । भावे ल्युट् । खारी द्रोण आढकमित्यत्रापि नामार्थे एव प्रथमा । परिमाणार्थस्य नियतज्ञानात् । द्रोणो व्रीहिरित्यत्र तु द्रोणपरिच्छिन्नाभिन्नो व्रीहिरित्यभेदान्वयः । नामार्थयोरभेदान्वयस्य व्युत्पन्नत्वात् ॥ ननु एको द्वौ बहव इत्यत्र नाम्नैव संख्याया अभिधानात् प्रथमा न स्यात् । उच्यते । न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्यय इति नियमात् प्रथमोत्पत्तिर्बोध्या । अनियतं लिंगं येषां ते अनियतलिंगास्तेषामनियतलिंगमेवेति लिंगमात्रम् । अधिकस्य भाव आधिक्यं लिंगमात्रस्य आधिक्यं लिंगमात्राधिक्यं तस्मिन् । उदाहरणं बोध्यम् । किं च भाष्यकारमते पञ्चकः प्रतिपदिकार्थः

स्वार्थद्रव्यलिंगसंख्याकारक इति । यथा दधि मध्वित्यादौ विनापि विभक्तिं प्रातिपादिकादेव तावतामर्थानां प्रतीतेः । कैयटमते आदितश्चतुष्कं प्रातिपादिकार्थः । वृत्तिकारमते आदितस्त्रिकं प्रातिपदिकार्थः । संख्याकर्मादयस्तु विभक्त्यर्था इति । आदितो द्विकं प्रातिपदिकार्थ इत्यन्ये । लिंगमात्रादिवाच्यमित्युक्तत्वात् । तत्र स्वार्थो विशेषणं द्रव्यं विशेष्यं द्रव्यगुणक्रियासन्निधाने द्रव्यवाचकस्यैव प्राधान्यमित्युक्तत्वात् । लिंगं स्त्रीत्वादि । संख्या एकत्वादि । कारकं कर्मादि ॥

( तत्त्वदी० )**लिङ्गार्थे प्रथमे**ति ॥ लिङ्गं च अर्थश्च लिङ्गार्थे तस्मिन् लिङ्गार्थे । लिङ्गे अर्थे च प्रथमेत्यर्थः । कस्यार्थे इत्याकांक्षायां यस्मात्स्यादिविभक्तिस्तस्यार्थे । स्यादयश्च नाम्नो विधीयन्ते अतो नामार्थे इति लब्धमेव ॥ नामार्थमाह ॥ **नियतोपस्थितिक** इति ॥ नियता उपस्थितिर्यस्य सः यस्मान्नाम्नोयोऽर्थो नियमेन भासते स तस्यार्थः । नियतत्वलाभश्चामन्त्रण इति सूत्रारम्भात् । नामार्थ एव द्विविधः तं दर्शयति—**अलिङ्गा** इत्यादि ॥ नालिङ्गा संख्या इत्यर्थः । प्रथमे उदाहरणमव्ययम् । द्वितीय उदाहरणं कृष्ण इत्यादि । यद्यपि नीलरूपवत्परोऽयमनियतलिङ्गस्तथापि वासुदेवे भगवति नियतलिङ्ग एवेति भावात् । कृष्णादौ लिङ्गमेव नामार्थस्तस्य नियमेन भावात् । तदादौ तु लिङ्गं नामार्थव्यतिरेके नास्तीति लिङ्गमात्राधिक्ये नामार्थे प्रथमाविधानात् कारकसंबन्धयोस्तु नाम्नोर्नियतमानाभावान्न तयोराधिक्ये प्रथमा।यदि त्वर्थशब्दो वृत्तिपरः वृत्तिस्तु शक्तिर्लक्षणा गौणी तु लक्षणान्तर्भूता पृथग्वास्तु त्रिकं च नामार्थ इत्याश्रीयते । तदा लिङ्गे इत्यपि मास्तु लक्ष्याणां विचित्रत्वेऽपि न क्षतिः नियमांशत्यागात् । शक्यं लक्ष्यं गौणं च पुल्लिङ्गम् स्त्रीलिङ्गं नपुंसकलिङ्गं च लक्ष्यमिति वैचित्र्यम् । शक्य एवेति नियमस्य पुंस्त्वादिना लिङ्गस्य वाच्यतेति नियमस्य च त्यागात् । लिङ्गत्वेनैव लिङ्गस्य वाच्यताभ्युपगमात् । खारीत्यादिपरिमाणमपि नामार्थ एव नियमेन लाभात् । एक इत्यादिसंख्यायास्तु नाम्नैवाभिधानात्तदभिधायिका प्रथमा न इति चेत्सत्यं न केवला प्रकृतिः प्रयोक्तव्येति नियमात् । अन्यप्रयोगेऽप्येषोऽन्वयः स्यादिति अनुवादकप्रयोगस्यैव न्याय्यत्वात् ॥ ननु कृष्ण इत्यादावस्तीत्यध्याहारेणान्योक्ते प्रथमेत्यनेनैव सिद्धे किमेतेनेति चेत्सत्यम् । अध्याहारे गौरवात् । शुक्लोऽयं न पीत इत्यादौ स विशेषणवाक्येऽध्याहारस्यानावश्यकत्वाच्च ॥ ननु तस्मात्सिऔजसिति सूत्रेणैव विभक्तिविधानात्किं कारकप्रकरणेनेति चेत्सत्यम् । सिद्धे सत्यारम्भो नियमार्थः । स च द्विविधः । विभक्तिनियमोर्थऽनियमश्च । आद्ये नामार्थ एव प्रथमा । कार्य एव द्वितीया । करण एव तृतीयेत्यादि । अत्र पक्षेऽव्ययेभ्यो न प्राप्तिः । द्वितीये तु नामार्थे प्रथमैव । कार्ये द्वितीयैवेत्यादि । अत्र पक्षेऽव्ययेभ्योऽपि भवन्ति ॥

**आमंत्रणे च ॥ अभिमुखीकरणे प्रथमा ॥ हे देव, हे देवौ, हे देवाः ॥**

( सुबोधिनी )—**आमन्त्रणे च** ॥ संबोधनाधिक्यप्राप्तौ वचनम् । आमन्त्र्यते प्रसन्नः क्रियते अनेनेति करणे युट् । अनभिमुखोऽभिमुखः क्रियते अनेनेत्यभिमुखीकरणमनुकूलकरणम् । तत्र प्रथमा भवति । 'देव मां पाहीति वाक्ये' देवसंबंधिसंबोधन-

विषयो मत्कर्मकरक्षणक्रियेति बोधः । "संबोधनपदं यच्च तत्क्रियाया विशेषणम्" इत्युक्तत्वादिह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणमिति ॥

( तत्त्वदी० )–आमन्त्रणेति ॥ आमन्त्रणमभिमुखीकरणमनुकूलकरणमिति यावत् । आमन्त्र्यते प्रसन्नः क्रियतेऽनेनेति साधने युट् । इह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणमिति सिद्धान्तः । "संबोधनपदं यच्च तत् क्रियाया विशेषणम्" इत्युक्तत्वात् । एवं देव मां पाहीति वाक्यस्य देवसंबन्धिसंबोधनविषयकमत्कर्मकं रक्षणमर्थः ॥

**भोस्भगोस्अघोस्भवद्भगवदघवतां वा निपात्या धौ ॥ भो हरे । भगो नमस्ते । अघो याहि ॥**

( सुबोधिनी )–**भोस्भगोस्अघोस्भवद्भगवदघवतां वा निपात्या धौ ॥** धिविषये एषां स्थाने एते निपात्यन्ते वा । हे भोः । हे भवन् । हे पूज्येत्यर्थः ॥ हे भगोः । हे भगवन् । हे ज्ञानिन्नित्यर्थः ॥ हे अघोः । हे अघवन् हे पापिष्ठेत्यर्थः ॥ भोस् इत्यनेन विसर्गलोपः भो हरे ॥ इति प्रथमा ॥

( तत्त्वदी० )–भोस्भगोस् इत्यादि ॥ योग्यतावलाद्भवदादयः स्थानिन आक्षिप्यन्ते ॥ इति प्रथमा ॥

**शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबन्ध आधारभावयोः ॥ द्वितीयाद्या विभक्तय एष्वर्थेषु भवन्ति ॥ कार्ये कर्मकारके द्वितीया । कटं करोति कारूको रूपं पश्यति चाक्षुषः । राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥**

( सुबोधिनी )–**शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबन्ध आधारभावयोः ॥** शिष्यन्ते इति शेषाः । कर्मणि घञ् प्रत्ययः । प्रथमायाः शेषाः अन्याः षड्विभक्तयस्ताः कार्यादिषु षट्सु यथाक्रमं प्रवर्तन्ते इत्यर्थः ॥ कार्ये द्वितीया क्रियते । कर्त्रा स्वक्रियया निष्पाद्यते यत् कार्यम् । धातूपात्तफलायेत्यर्थः । तस्मिन्ननुक्ते कार्ये कर्मणि द्वितीया स्यात् । उक्ते कर्मणि तु प्रथमैव । उक्तं त्वाख्यातकृत्तद्धितसमासनिपातैर्भवति ॥ आख्यातोक्ते हरिः सेव्यते ॥ कृदुक्ते लक्ष्म्या सेवितो हरिः ॥ तद्धितोक्ते शतेन क्रीतः शत्यः ॥ कारकांत्क्रियायुक्ते इति शेषः ॥ समासोक्ते प्राप्त आनन्दो यं स प्राप्तानन्दः ॥ निपातोक्ते विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतमिति ॥ कटं करोति कारूको रूपं पश्यति चाक्षुषः । राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥ १ ॥ अत्र सर्वत्राख्यातेनानुक्ते कर्मणि द्वितीया । कारूकः पुमान् कटं करोति । कटनिष्ठोत्पत्त्यनुकूला एककर्तृका वर्तमाना करोति क्रियेति शाब्दबोधः ॥ चक्षुषा पश्यतीति चाक्षुषः पुमान् । कारकादित्यण् । रूपं पश्यति । रूपनिष्ठसाक्षात्कारोत्पत्त्यनुकूला एककर्तृका वर्तमाना दृशिक्रिया ॥ धर्मोऽस्त्यस्येति धर्मी ।

अस्त्यर्थे इन्। अतिशयेन धर्मीति इष्ठप्रत्ययः। धर्मिष्ठः पुमान्। राज्ञः कर्मेति राज्यं प्राप्नोति। राज्यनिष्ठोत्पत्त्यनुकूला एककर्तृका वर्तमाना प्राप्नोतीति क्रिया॥ सोमं पिबतीति सोमपाः पुरुषः। सोमममृतवल्लीं सुनोति खण्डयतीत्यर्थः। सोमनिष्ठखण्डनोत्पत्त्यनुकूला एककर्तृका वर्तमाना सुनोतिक्रियेति। क्रियाप्रधानमाख्यातमिति सिद्धान्तात् क्रियाविशेष्यकः शाब्दबोधः कर्तव्यः॥ यास्कोऽप्याह। भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति। पश्य मृगो धावतीत्यादौ तु मृगकर्तृकगमनं दृशिक्रियां प्रति कर्म। प्रधानं तु दृशिक्रियैव। उक्तं च। "सुबन्तं हि यथानेकं तिङन्तस्य विशेषणम्। तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणमिति॥ १॥" ननु उक्ते कर्मणि प्रथमेत्युक्तम्। तेन पक्वमोदनं भुङ्क्ते इत्यत्र द्वितीया न स्यात्। कृत्प्रत्ययेन कर्मण उक्तत्वात्। उच्यते। इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती तत्र प्रधानीभूतभुजिक्रियानिरूपितामनुक्तां शक्तिमादाय द्वितीयोत्पत्तिर्भवतीति। उक्तं च हरिणा। "प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्॥ शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥ १॥ प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते। यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥२॥" अत एव। पक्वौदनो भुज्यते देवदत्तेनेत्यत्र भुजिप्रत्ययेन उक्ते कर्मणि प्रथमैव भवति। पचेरप्राधान्यात्। अथ प्रसंगात्पाणिनिसूत्राणि लिख्यन्ते॥ अकथितं च। अपादानादिविशेषैरनुक्तं कारकं कर्मसंज्ञं स्यात् "दुह्याच्पचदण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥ १॥" दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म ज्ञेयम्। कर्मणा युज्यते इति कर्मयुक्। किंवन्तम्। मुख्यकर्मणा सह क्रियया संबध्यमानमपादानादिविशेषैरकथितं यत्कारकं तत्कर्मसंज्ञकं भवतीत्यर्थः। एतेन दुहादीनां द्विकर्मकत्वमुक्तम्। दुह, प्रपूरणे। गां दोग्धि पयः स इत्यत्र पयःकर्मकं गोसंबन्धिदोहनमर्थः। पयोऽत्र मुख्यं कर्म धातूपात्तफलाश्रयत्वात्। गोस्तु पयसो निमित्ततामात्रेणोपात्ता न त्ववधिभावेनेत्यपादानसंज्ञाया अप्रवृत्तेरनेन कर्मसंज्ञा। विवक्षायां त्वपादानादिसंज्ञा भवत्येव। विवक्षातः कारकविभक्तयो नाना भवन्तीति शाब्दिका इत्युक्तत्वात् गोर्दोग्धि पयः स इति॥ टुयाचृ, याच्ञायाम्। बलिं याचते वसुधां हरिः। अत्र प्रार्थनार्थस्य याचतेर्वसुधा मुख्यं कर्म। तेन कर्मणा युक्तो बलिः तस्यापादानत्वाविवक्षायामनेन कर्मसंज्ञा। अपादानविवक्षायां तु बलेर्याचते वसुधामिति॥ अविनीतं विनयं याचते सः। अविनीतं विनयायानुनयतीत्यर्थः। अविनीतमिति मुख्यं कर्म विनयस्य तादर्थ्याविवक्षायामनेन कर्मसंज्ञा। विवक्षायां तु अविनीतं विनयाय याचते॥ डुपचष, पाके। तण्डुलानोदनं पचति सः। ओदनं निर्वर्तयतीत्यर्थः। ओदनमिति मुख्यं कर्म। करणत्वाविवक्षायां तण्डुलानित्यत्रानेन कर्मसंज्ञा। विवक्षायां तु तण्डुलैरोदनं पचतीति॥ दण्ड, 'दण्ड ग्रहणे' चुरादिः। गर्गान् शतं दण्डयति सः। शतमिति मुख्यं कर्म। गर्गानित्यत्र

त्वपादानत्वविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु गर्गेभ्यः शतं दण्डयतीति ॥ रुधिर्, आवरणे । व्रजमवरुणद्धि गां सः । गामिति मुख्यं कर्म व्रजमित्यत्र त्वधिकरणत्वाविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु व्रजेऽवरुणद्धि गामिति ॥ प्रच्छ, ज्ञीप्सायाम् । माणवकं पन्थानं पृच्छति सः । पन्थानमिति मुख्यं कर्म । तादर्थ्याविवक्षायां तु माणवकमित्यत्रानेन कर्मसंज्ञा । विवक्षायां तु माणवकाय पन्थानं पृच्छति ॥ चिञ्, चयने । वृक्षमवचिनोति फलानि सः । फलानीति मुख्यं कर्म वृक्षमित्यत्रापादानत्वाविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु वृक्षादवचिनोति फलानीति ॥ ब्रूञ्, व्यक्तायां वाचि । शासु, अनुशिष्टौ । माणवकं धर्मं ब्रूते सः । धर्ममिति मुख्यं कर्म । माणवकमित्यत्र तु तादर्थ्याविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु माणवकाय धर्मं ब्रूते शास्तीति वा ॥ जि, जये । शतम् जयति देवदत्तं सः । शतमिति मुख्यं कर्म । देवदत्तमित्यत्र त्वपादनत्वाविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु शतं जयति देवदत्तात्सः ॥ मन्थ, विलोडने । सुधां क्षीरनिधिं मथ्नाति हरिः । सुधामिति मुख्यं कर्म । क्षीरनिधिमित्यत्राधिकरणत्वाविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु सुधां क्षीरनिधौ मथ्नाति ॥ मुष, स्तेये । देवदत्तं शतं मुष्णाति । शतमिति मुख्यं कर्म । देवदत्तमित्यत्रापादानत्वाविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु देवदत्ताच्छतं मुष्णाति सः ॥ णीञ्, प्रापणे । हृञ्, हरणे । कृष, विलेखने । वह, प्रापणे । ग्राममजां नयति सः । एवं हरतीत्यादि । अजामिति मुख्यं कर्म । ग्राममित्यत्र त्वधिकरणत्वाविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु ग्रामेऽजां नयति हरति कर्षति वहति वेति ॥ एतदर्थका धातवोऽन्येऽपि संज्ञेयाः । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥ अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् । कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ । गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां च धातूनामणौ यः कर्ता स णौ कर्म स्यात् । प्रत्यवसानं भक्षणम् । शब्दः कर्म कारकं येषां ते शब्दकर्मकाः । अनुत्पन्ने ञिप्रत्यये शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ञिप्रत्ययान्तधातुवाच्यां क्रियां प्रति कर्मसंज्ञः स्यादित्यर्थः ॥ यथा " शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् आशयच्चामृतं देवान् वेदमध्यापयद्विधिम् ॥ १ ॥ आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥" गत्यर्थो यथा । शत्रवः स्वर्गमगच्छन् । तान् शत्रून् श्रीहरिः स्वर्गमगमयदिति । गमेरञिप्रत्ययान्तावस्थायां शत्रवः कर्तारस्ते ञ्यन्तावस्थायां कर्माभवन् । स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो हरिकर्तृकश्चिरातीतो व्यापारः ॥ बुद्ध्यर्थो यथा । स्वे स्वकीयाः वेदार्थमविदुस्तान् स्वान् श्रीहरिर्वेदार्थमवेदयत् । विदेरञ्यन्तावस्थायां स्वे कर्तारस्ते ञ्यन्तावस्थायां कर्माभवन् ॥ देवा अमृतमश्नन् । तान् देवान् श्रीहरिरमृतमाशयत् । अशेरञ्यन्तावस्थायां देवाः कर्तारस्ते ञ्यन्तावस्थायां कर्माभ-

वन् ॥ विधिर्वेदमध्यैत । तं ब्रह्माणं श्रीहरिर्वेदमध्यापयदपाठयादित्यर्थः । अण्यन्तावस्थायां विधिः कर्ता स ण्यन्तावस्थायां कर्माभवत् ॥ सलिले जले पृथ्वी आस्ते तां पृथ्वीं श्रीहरिः सलिले आसयत् स्थापयति स्म । आसेरण्यन्तावस्थायां पृथ्वी कर्त्री सा ण्यन्तावस्थायां कर्माभवत् । स श्रीहरिर्मे मम गतिः स्यादित्यन्वयः ॥ इति द्वितीया ॥

( तत्त्वदी० )-**शेषाः कार्ये** इत्यादि ॥ शिष्यन्त इति शेषाः । कर्मणि वञ् । उक्तायाः प्रथमायाः अन्याः षड्विभक्तयः शेषाः द्वितीयाद्या इति यावत् । कार्यादयोऽर्थाश्च षड्भिः पदैर्निर्दिष्टास्तेषां यथाक्रमं प्रवृत्तिः । तत्र प्रथमानिर्दिष्टमाह—**कार्ये** इति ॥ क्रियते कर्ता प्रवर्तते यष्टा स्वव्यापारेण यागं स्वर्गं च साधयति । तदाश्रये च द्वितीया । तत्संबन्धात् द्वितीयावाच्यस्त्वाश्रय एव न तु फलं तस्य धातुनैव लाभात् । अनन्यलब्धस्य शब्दार्थत्वात् । वाच्यतावच्छेदकत्वाश्रयत्वमत एव नाश्रयत्वं वाच्यम् आश्रयत्वस्य वाच्यतावच्छेदकत्वे गौरवात् तच्च कर्म द्विविधम् । ईप्सितमनीप्सितं च तत्रेप्सितं त्रिविधम् । निर्वर्त्यं विकार्यं प्राप्यं च । अनीप्सितं तु चतुर्विधम् । औदासीन्येन प्राप्यं द्वेष्यं संज्ञान्तरैरनाख्यातम् अन्यपूर्वकं चेति । तत्र निर्वर्त्यं यथा । पूर्वमनुत्पन्नमेवोत्पद्यते सदवस्थात्वात्प्रकटीभवति । ततः विकार्यं तु द्विविधम् । प्रकृत्युच्छेदसंभूतं गुणान्तरोत्पत्त्या वा । कटं करोतीत्यादि । कटं पूर्वमसन्तमुत्पादयतीत्यर्थः ॥ रूपं पश्यतीति प्राप्यम् । चाक्षुष इति । प्रशस्तचक्षुरस्यास्तीति चाक्षुषः प्रशंसायां मत्वर्थीयोऽण् । राज्यं प्राप्नोतीति संस्कार्यं पृथगिच्छतीति संस्कार्यम् कर्म । सोमं सुनोतीति गुणान्तरोत्पत्त्या विकार्यम् । अन्यदप्युदाह्रियते । प्रकृत्युच्छेदसंभूतविकार्यं यथा । प्रकृतेः प्रकृतिभूतस्यात्मनः उच्छेदसंभूतम् । तद्यथा । काष्ठं भस्म करोति । औदासीन्यं तु तृणं स्पृशति । द्वेष्यं तु विषं भुङ्क्ते । संज्ञान्तरैरनाख्यातं यथा । गां दोग्धि पयः । अन्यपूर्वकं यथा । क्रूरमभिक्रुध्यति । अक्षान् दीव्यति । ईप्सितानीप्सितयोः शाब्दबोधस्त्वेक एव । ईप्सितत्वादेस्तत्र मानाभावात् ॥ कटं करोतीति कारूक इत्यस्य कटनिष्ठोत्पत्त्यनुकूल एककारूको भिन्नाश्रयको वर्तमानो व्यापारः ॥ विषं भुङ्क्ते इत्यत्र गलादधोदेशसंयोगस्यानुकूल एकाश्रयको व्यापारः । इत्यादावीप्सितानीप्सितयोरभानादेरूप एव शाब्दबोधः । एवं च कर्मशब्दस्य यौगिकत्वादेव सिद्धे कर्मसंज्ञाविधायकानि नानासूत्राणि न कृतानि । कर्मणि तृतीयेत्यस्य फलनिरूपिताश्रये सर्वत्र द्वितीयायाः सिद्धत्वात् । असत्कार्यवादे तु निर्वर्त्यस्य कर्मकारकत्वाप्राप्तिः । तस्यासत्त्वादेव फलाश्रयत्वानुपपत्तेः । क्रियाजनकत्वाभावात्कारकत्वानुपपत्तेश्च । क्रियां कुर्वत् हि कारकमिति सिद्धान्तत्वात् ॥ इति द्वितीया ॥

**( कर्तरि करणे च तृतीया ) भिन्नः शरेण रामेण रावणो लोकरावणः । कराग्रेण विदीर्णोऽपि वानरैर्युध्यते पुनः ॥**

( सुबोधिनी )-**कर्तरि करणे च तृतीया** ॥ क्रियां करोति स कर्ता । धातूपात्तव्यापाराश्रय इत्यर्थः । उक्तं च । "धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते" इति । व्यापाराश्रयः कर्तेत्युक्तम् । व्यापारो धातुवाच्य आश्रयस्तृतीयावाच्योऽनन्यलभ्यत्वात् । स त्रिविधः । स्वतंत्रः प्रयोजकः कर्मकर्ता चेति । क्रिया साध्यतेऽनेनेति

साधनं क्रियासिद्ध्युपकारकमित्यर्थः । तदेव करणम् । अत्र तृतीयाया व्यापार आश्रयश्च पृथग् वाच्यौ । तत्र सर्वत्र प्रकृत्यर्थे आश्रये अभेदेन संसर्गेण विशेषणम् । व्यापारस्तु भावनायां विशेषणं भवति । उक्तं च । "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र तत्तत्र करणं स्मृतम् ॥ १ ॥" तत्रानुक्ते कर्तरि करणे च तृतीया विभक्तिर्भवति । रामेण कर्त्रा शरेण करणेन रावणो भिन्नः । कीदृशः । लोकान् रावयतीति लोकरावणः । भिदेः कर्मणि क्तः । यद्यपि क्रियां प्रति कारकाणां विशेषणतैव तथापि कृदुक्तानां कारकाणां विशेष्यतैव ज्ञेया । सत्त्वप्रधानानि नामानीत्युक्तत्वात् । रामनिष्ठो यो व्यापारो धनुराकर्षणादिस्तत्प्रेरितो यो बाणस्तदभिन्नाश्रयको यो व्यापारः शरीरभेदनादिस्तत्साध्यः प्राणवियोगाश्रयो रावण इत्यर्थः ॥ रावणं हन्ति । रावणो हन्यते । इत्यत्र तु क्रियाविशेष्यकः शाब्दबोधः । भावप्रधानमाख्यातमित्युक्तत्वात् । रावणनिष्ठो यः प्राणवियोगः शरभिन्नाश्रयशरीरभेदनादिव्यापारसाध्यसाधनानुकूलो रामनिष्ठधनुराकर्षणादिव्यापार इत्यर्थः । अनुक्ते कर्तरि किम् । हरिः करोति । वाचकः । कर्तरि वुण् । तद्धितोक्ते शाब्दिकः । इकः प्रत्ययः । समासोक्ते कृतं विश्वं येन स कृतविश्वः ॥ अनुक्ते करणे किम् । जीवत्यनेनेति जीवनः । करणे युट् प्रत्ययः ॥ इति तृतीया ॥

( तत्त्वदी० )–**कर्तरि करणे** चेति ॥ क्रियां करोतीति कर्ता धातूपात्तव्यापाराश्रयः । यदा यदीयो व्यापारो धातुनोपादीयते तदा स कर्ता । काष्ठानि पचन्ति । आ विक्लित्तेः सम्यग्ज्वलन्तीत्यर्थः । अग्निः पचति सम्यक्पाचयतीत्यर्थः । स्थाली पचति । स्वस्मिन्समावेशयतीत्यर्थः । तत्र व्यापारस्य धातुनैव लाभादाश्रयमात्रं तृतीयावाच्यम् । अनन्यलभ्यस्य शब्दार्थत्वात् । स च त्रिविधः । स्वतन्त्रः प्रयोजकः कर्मकर्ता चेति । तद्यथा । मया हरिः सेव्यते । कार्यते हरिणा । गमयति कृष्णं गोकुलम् । मदभिन्नाश्रयको हरिकर्मकसेवानुकूलव्यापारः । हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः । गोकुलकर्मकगमनानुकूलकृष्णाश्रयकव्यापारानुकूलो व्यापार इति शाब्दबोधः । क्रिया साध्यतेऽनेनेति साधनं क्रियासिद्ध्युपकारकम् तदेव करणं व्यापारवत्कारककरणमविलम्बेन क्रियोत्पादनं वा तत्र तृतीया । तस्याश्च व्यापार आश्रयश्च पृथक्पृथग् वाच्यौ ॥ **भिन्नः शरे**णेत्यादि ॥ एकरामाश्रयको यो व्यापारस्तत्प्रेरितो यः शरस्तदभिन्नाश्रयको यो व्यापारः संयोगभेदनादि तत्साध्यो यः प्राणवियोगस्तदाश्रयो रावण इत्यर्थः ॥ इति तृतीया ॥

## ( दानपात्रे चतुर्थी ) वेदविदे गां ददाति ॥

( सुबोधिनी )–**दानपात्रे चतुर्थी** । दीयते इति तद्दानम् । कर्मणि युट् । दानस्य पात्रं दानपात्रं दानयोग्यमित्यर्थः । "योग्यभाजनयोः पात्रम्" इत्यमरः ॥ अस्य संप्रदानसंज्ञा सम्यक्प्रदीयतेऽस्मै तत्संप्रदानम् । अपुनर्ग्रहणाय स्वत्वनिवृत्तिपूर्वकं यत् परस्वत्वोत्पादनं तद्दानम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ न चतुर्थी । रजकस्येति सबन्धे षष्ठी ॥ ननु

श्रोत्रियाय कन्यां ददातीत्यादौ चतुर्थी न स्यात् स्वत्वत्यागाभावात्। उच्यते । स्वस्य भावः स्वत्वम् आत्मत्वम् आत्मीयत्वं ज्ञातित्वं धनत्वं च । आत्मत्वात्मीयत्वयोस्त्यागो नास्तीति ज्ञातित्वस्य त्यागोऽस्ति । परगोत्रप्रवेशाद्धनत्वस्य च त्यागः । अतोऽत्र परस्वत्वस्यापादानरूपं मुख्यं दानम्। तत्र दानपात्रे अनुक्ते संप्रदाने कारके चतुर्थी स्यात् । वेदं वेत्तीति वेदवित्तस्मै वेदविदे चैत्रो गां ददाति । अत्र चतुर्थ्या उद्देश्योऽर्थः वेदविदुद्देश्यकः गोनिष्ठस्वत्वत्यागानुकूल एककर्तृको वर्तमानो व्यापारः ॥ अनुक्ते किम् । दानीयो विप्रः । दीयतेऽस्मै इति दानीयो विप्रः । बाहुलकात्संप्रदाने अनीयप्रत्ययः ॥

( तत्त्वदी० )–दानपात्रे चतुर्थीति ॥ दीयते इति दानम् । कर्मणि युट् । दानस्य पात्रं योग्यमित्यर्थः । "योग्यभाजनयोः पात्रम्" इत्यमरः ॥ वेदविदे गां ददाति । वेदविदुद्देश्यकगोनिष्ठो यः स्वत्वत्यागस्तदनुकूल एकाश्रयको वर्तमानव्यापार इत्यर्थः ॥ तथा च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं दानम् । खण्डिकोपाध्यायस्तस्मै चपेटां ददातीत्यादौ तु उद्देश्यत्वाच्चतुर्थी । श्रोत्रियाय कन्यां ददातीत्यत्र स्वात्मतात्मीयतयोरत्यागेऽपि परगोत्रत्वेन ज्ञातित्वस्यैव त्यागादिति वृद्धाः । परस्वत्वरूपस्य दानस्य च सत्त्वात् । स्वस्य भावः स्वत्वं स्वशब्दस्यार्थचतुष्टये आत्मात्मीयज्ञातिधनरूपे वृत्तेः ॥

## ( क्रियया यमाप्नोति तत्रापि चतुर्थी ) पत्ये शेते ॥

( सुबोधिनी )–क्रियया यमाप्नोति तत्रापि चतुर्थी ॥ क्रियया कर्ता यमाप्नोति संबन्धाद् यमभिप्रैति तत्र चतुर्थी स्यात् ॥ पत्ये शेते । शयनक्रियया पतिमभिप्रैति तदाभिमुख्येन शेते इत्यर्थः ॥ राज्ञे करं ददाति । दानक्रियया राजानमभिप्रैति तदाभिमुख्येन ददातीत्यर्थः ॥ ॥ इति चतुर्थी ॥

( तत्त्वदी० )–पत्ये शेत इति ॥ पत्युद्देश्यकशयनानुकूल एकाश्रयको व्यापारः ॥ इति चतुर्थी ॥

## ( विश्लेषावधौ पञ्चमी ) विश्लेषो विभागस्तस्यावधौ पञ्चमी ॥

हिमवतोऽवतरति गङ्गा । धावतोऽश्वादपतत् ॥

( सुबोधिनी )–विश्लेषावधौ पञ्चमी ॥ श्लेषणं श्लेषः संयोगः । विगतो विरुद्धो वा श्लेषो विश्लेषो विभागः । अवधीयते एकरूपतया ज्ञायते सोऽवधिः विश्लेषस्यावधिर्विश्लेषावधिस्तास्मिन् विश्लेषावधौ ॥ अस्यापादानसंज्ञा। उक्तं च हरिणा । " अपाये यदुदासीनं चलं वा यदि वाचलम् । ध्रुवमेवातदावेशात्तदपादानमुच्यते"। अपाये विश्लेषे साध्ये सति ध्रुवमवधिभूतं कारकमतदावेशात् विश्लेषजनकक्रियानावेशादपादानमुच्यते । कीदृशम् । चलमचलमुदासीनं वेत्यर्थः । तत्रानुक्ते अपादानकारके पञ्चमी स्यात् । अत्र प्रकृत्यर्थः पञ्चम्यर्थेऽवधावभेदेन संसर्गेण विशेषणं प्रत्ययार्थोऽवधिस्तु क्रियायां विशेषणं भवति कारकाणां क्रिययैव संबन्धात् । हिमवतः पर्वताद्गङ्गावतरति । अत्रावतरणविशिष्टाया गङ्गाया विश्लेषावधिभूतो हिमवान् । हिमवदभिन्नावधिकनिःसारणानुकूलो गङ्गाभिन्नाश्रयको वर्तमानो व्यापारः ॥ धावतोऽश्वाच्चैत्रः पतति । पतनक्रियाविशिष्टस्य चैत्रस्य

विश्लेषावधिरश्वः । शीघ्रगत्यनुकूलव्यापाराश्रयोऽश्वस्तदभिन्नावधिकं चैत्रनिष्ठं पतनमित्यर्थः ॥ अनुक्ते किम् । उपाध्यायो विप्रः । उप समीपेऽधीतेऽस्मादित्यपादाने घञ् ॥ इति पञ्चमी ॥

(तत्त्वदी०)—**विश्लेषेति** ॥ श्लेषणं श्लेषः संयोगः विगतः श्लेषो विश्लेषः ॥ फलितार्थमाह—**विभाग** इति ॥ **अवधाविति** ॥ अवधीयते एकरूपतया ज्ञायते सोऽवधिः प्रकृतधातूपात्तागत्यनादिष्टे सति तज्जन्यविभागाश्रयः ॥ **हिमवत** इति ॥ हिमवदभिन्नावधिकनिःसरणपूर्वकः अवतारणानुकूलगङ्गाभिन्नाश्रयको वर्तमानो व्यापारः ॥ **धावत** इति ॥ शीघ्रगत्यनुकूलो यो व्यापारस्तदाश्रयोऽश्वस्तदवधिकोऽधोदेशसंयोगानुकूल एकाश्रयकोऽतीतो व्यापारः । इह क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते । तथा परस्परान् मेषावपसरत इत्यत्र सृधातुना गतिद्वयस्याप्युपादानादेकमेषनिष्ठां गतिं प्रत्यपरस्य विश्लेषावधित्वमस्त्येव । मेषावधिको यः पूर्वदेशसंयोगस्तदनुकूलो मेषाभिन्नाश्रयको वर्तमानो व्यापारः । पर्वतात्पततोऽश्वात्पतति चैत्रः । पर्वताभिन्नाश्रयावधिकोऽधोदेशसंयोगानुकूलो यो व्यापारस्तदाश्रयोऽश्वस्तदवधिकोऽधोदेशसंयोगानुकूल एकचैत्राभिन्नाश्रयको वर्तमानो व्यापारः । विश्लेषश्च क्वचिन्मानसोऽपि क्वचिदध्याहृतक्रियापेक्षयापि । अधर्माज्जुगुप्सते । स्वार्थाद्धीयत इत्यादौ मानसाधर्मविश्लेषाध्याहृतनिःसरणक्रियापेक्षया विश्लेषयोरवधित्वस्य सत्त्वात् ॥ इति पञ्चमी ॥

## ( संबन्धे षष्ठी ) राज्ञः पुरुषः ॥

( सुबोधिनी )—**संबन्धे षष्ठी** ॥ विशेष्यविशेषणविश्लिष्टः संबन्धः । आह च एतौ संबन्धौ इति प्रतीतिजनकः संबन्धः समानार्थो न नियतज्ञाभावात् । स संबन्धो द्विविधः । क्रियाकारकसंबन्धो द्रव्यगुणसंबन्धश्चेति । क्रियाकारकसंबन्धोऽपि द्विविधः । विशेषः सामान्यं चेति । तत्र विशेषे कर्मत्वादिरूपे संबन्धे विहितापवादभूता द्वितीयादयो विभक्तयः । सामान्यसंबन्धे तु षष्ठी । उक्तं च । "संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां च क्रियायां सोऽभिधीयते ॥" नटस्य शृणोति । माषाणामश्नाति । नटसंबन्धिश्रवणानुकूल एककर्तृको व्यापारः । माषसंबन्धिभोजनानुकूल एककर्तृको व्यापारः । विशेषविवक्षायां तु नटेन गीतं शृणोति । माषानश्नातीति ॥ द्रव्यगुणसंबन्धो यथा । राज्ञः पुरुषः । अत्र सेव्यसेवकरूपः ॥ राज्ञः पुत्रः । अत्र पितृपुत्ररूपः ॥ तन्तूनां पटः । अवयवावयविरूपः ॥ पटस्य रूपम् । गुणगुणिरूपः ॥ माषाणां राशिः । समूहसमूहिरूपः ॥ कुरूणां राजा । पाल्यपालकरूपः ॥ चैत्रस्य वाहनम् । वाह्यवाहकरूपः ॥ शब्दस्यार्थः । अत्र वाच्यवाचकरूपः ॥ चक्षुषो विषयो रूपम् । अत्र बोध्यबोधकरूपः ॥ अग्नेर्धूमः । अत्र व्याप्यव्यापकरूपः ॥ पटस्याभावः । अत्र प्रतियोग्यनुयोगिरूपः ॥ उपगोरपत्यम् । अत्रापत्यापत्यवद्रूपः ॥ कुशूलस्यान्नम् । अत्राधाराधेयरूपः । इत्यादि ॥ ननु सबन्धस्योभयनिष्ठत्वात् कस्मात्षष्ठी । उच्यते । विशेषणात्षष्ठी भवति । उक्तं च । "भेद्यभेदकयोः श्लिष्टः संबन्धोऽन्योन्य-

मीक्ष्यते । द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥" भेद्यभेदकयोः स्वरूपं यथा । "परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम् । विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात् ॥" ननु शुक्लः पट इत्यत्रापि विशेषणे षष्ठी स्यात् । मैवं वद । विशेषणस्याभेदविवक्षातो न षष्ठी । विशेषणस्य भेदविवक्षायां तु षष्ठी भवत्येव । उक्तं च । "नाम्नो द्विधैव संबन्धः सर्ववाक्येष्ववस्थितः । सामानाधिकरण्येन षष्ठ्या वापि क्वचिद्भवेत् ॥" अत्र प्रकृत्यर्थः प्रत्ययार्थे संबन्धे विशेषणं प्रत्ययार्थः । संबन्धस्तु पुरुषे विशेषणं भवति । राज्ञः पुरुषः । राजनिरूपितसेवकत्वसंबन्धवान्पुरुषः ॥ इति षष्ठी ॥

(तत्त्वदी०)–**संबन्धे षष्ठी**ति ॥ एतौ संबन्धाविति प्रतीतिजनकः संबन्धस्तत्र षष्ठीत्यर्थः । स च द्विविधः । क्रियाकारकसंबन्धद्रव्यगुणसंबन्धभेदात् । आद्यो द्विविधः । सामान्यं विशेषश्च । विशेषः कर्मत्वादिरूपः तत्र द्वितीयादिरपवादः । सामान्ये षष्ठी । तद्यथा । नटस्य शृणोति । नटसंबन्धिश्रवणानुकूलो वर्तमानो व्यापारः । विशेषे तु नटेन गीतं शृणोति नटभिन्नाश्रयको यो व्यापारस्तत्साध्यगीताभिन्नाश्रयं यत् गानतानादि तदनुकूल एकाभिन्नाश्रयो वर्तमानो व्यापारः । अन्त्यं दर्शयति– **राज्ञ** इति ॥ राजसंबन्धवान् पुरुष इत्यर्थः । संबन्धश्चात्र सेव्यसेवकरूपः । एवमन्यत्राप्यूह्यम् ॥ नन्वत्र संबन्धस्योभयनिष्ठत्वात्कथं षष्ठी एकस्मात्कुतो वेति चेत्सत्यम् विशेषणस्याप्रधानत्वेन ततः षष्ठी । राज्ञः पुरुष इत्यत्र प्रकृत्यर्थो विशेषणं पुरुषस्तु नामार्थमात्रनिष्ठ एव प्रतिपाद्यते न विशेषणत्वेन । यदा तु विशेषणत्वेन विवक्षितस्तदा षष्ठी भवत्येव । पुरुषस्य राजेति । यथा । "परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम् । विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात् " इति ॥ शुक्लः पट इत्यत्र तु अभेदविवक्षणान्न षष्ठी भेदविवक्षायामेव षष्ठीति विधानात् । राहोः शिर इत्यत्र तु संतोऽप्यभेदस्याविवक्षा ॥ यथानुदरा कन्येति भेदवतो वस्तुनः असतोऽप्यभेदस्य विवक्षा ॥ यथा समुद्रः कुण्डिका । जलाधिक्यात्कुण्डिकायां समुद्रत्वम् । अगस्त्यपेक्षया समुद्रस्यापि कुण्डिकात्वम् । इति षष्ठी ॥

**आधारे सप्तमी ॥ औपश्लेषिकः सामीपिकोऽभिव्यापको वैषयिको नैमित्तिक औपचारिकश्चेति षोढा सः ॥ कटे शेते कुमारोऽसौ वटे गावः सुशेरते । तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् ॥ युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणां शतम् ॥**

( सुबोधिनी )–**आधारे सप्तमी** ॥ आध्रियन्ते क्रिया अस्मिन्नित्याधारः । संज्ञायामकर्तरि चेत्यधिकरणे घञ् । अधिकरणमित्यर्थः । स आधारः षड्विधः अस्येति षोढा । अन्यत्र सिद्धयोराधाराधेययोः प्रादेशिकः संबन्ध उपश्लेषः । उप उपरि श्लेषः उपश्लेषः उपश्लेषोऽस्यास्तीति उपश्लेषे भव इति वा औपश्लेषिकः । 'अइकौ च मत्वर्थे' इतीकः । णितो वेति णित्त्वाद्वृद्धिः । भवार्थे इको वा ॥ सामीप्यं सांनिध्यम् । सामीप्ये भवः सामीप्यमस्यास्तीति वा सामीपिकः केनेयेका इतीकः । अइकौ चेति वा इकः ॥

अपृथग्भिन्नप्रदेशवर्जितयोर्देशयोराधाराधेययोः सर्वावयवसंबंधिकः अन्तेत्यापकः । अभितः सर्वतो व्याप्यते आधेयेनेत्यभिव्यापकः । कर्मणि घञ् । ततः स्वार्थे कः ॥ अन्यत्र भावो विषयः । विषये भवो वैषयिकः । केनेयेका इति इकः ॥ निमित्तं हेतुः । ...पित्ते भवो नैमित्तिकः । केनेयेका इति इकः । निमित्तं फलं तदस्यास्तीति वा अइकौ चेतीकः ॥ अन्यत्र विद्यमानस्य सम्बन्धस्यान्यत्रारोपः उपचारः उपचारे भवः औपचारिकः । केनेयेका इतीकः । उपचारोऽस्यांऽस्तीति वा । अइकौ चेतीकः ॥ अत्राधिकरणे कारके सप्तमी स्यात् । अत्र सप्तम्या आश्रयोऽर्थः । प्रकृत्यर्थस्त्वभेदेन संसर्गेणाश्रये विशेषणं आश्रयस्तु क्रियायां विशेषणं भवति । कारकाणां क्रिययैवान्वयात् । उक्तं च । "आश्रयोऽवधिरुद्देश्यः संबन्धः शक्तिरेव वा । यथायथं विभक्त्यर्थाः सिपां कर्मेति वाक्यतः ॥ ॥ १ ॥" कर्मणि द्वितीया । कर्तृसाधनयोस्तृतीया । आधारे सप्तमी । नामाश्रयोऽर्थो निरूप्यभेदाच्चाभेदः । अवधिः पञ्चम्यर्थः । उद्देश्यः चतुर्थ्यर्थः । सम्बन्धः षष्ठ्यर्थः । शक्तिः प्रथमार्थः । यथासंख्यं षण्णामुदाहरणान्याह । असौ कुमारः कटे शेते । गावः वटे सुशेरते स्वपन्ति । तैलं तिलेषु विद्यते । हृदि अमृतं सुखरूपं परमुत्तमं निरुपाधिकं ब्रह्म वर्तते । हृदयब्रह्मणः प्रकाश्यप्रकाशकरूपः सम्बन्धः । धीरः संनह्यते युद्धे कवचबन्धनस्य युद्धफलकत्वात्तन्निमित्तम् ॥ करिणां शतमङ्गुल्यग्रे वर्तते । करिभूम्योराधाराधेयरूपः सम्बन्धः अंगुल्यग्रे आरोप्यते ॥

( तत्त्वदी० )—**आधारे सप्तमी**ति ॥ आध्रियते क्रियास्मिन् इत्याधारः । कर्तृकर्मद्वारा क्रियाधारत्वं न तु साक्षात् । आधारस्य षड्विधत्वमाह—**औपश्लेषिक** इत्यादि ॥ उप उपरि श्लेषः संयोगः सोऽस्यास्तीति अइकाविर्तीकः । णितो वेति णित्त्वाद्वृद्धिः ॥ समीपे भवः सामीपिकः । केनेयेका इतीकः । अभितः सर्वतो व्याप्यते आधेयैरिति अभिपूर्वादाप्नोतेः कर्मणि घञन्तात्स्वार्थे कः ॥ अपृथग्देशयोराधाराधेययोः सर्वावयवसंबन्धिकः ॥ विषयः प्रकाशनसामर्थ्यं तदस्यास्तीति पूर्ववत्प्रक्रिया-निमित्तं हेतुस्तत्र भवः फलं वा तदस्यास्तीति वा पूर्ववत् ॥ अन्यत्र विद्यमानस्य संबन्धस्यान्यत्रारोप उपचारः तत्र भवः सोऽस्यास्तीत्यौपचारिकः ॥ निमित्तप्रभेदाच्च षड्विधः कैश्चिदिष्यते इति वचनादस्य पक्षस्यापि प्रामाण्यम् ॥ उदाहरणान्याह । कटे शेते कमारोऽसौ । एककटाभिन्नाश्रयको निद्रानुकूलं एककुमाराभिन्नाश्रयको वर्तमानो व्यापारः ॥ वटे गावः सुशेरते । एकवटाभिन्नाधारकनिद्रानुकूलो बहुगोभिन्नाधारकवर्तमानो व्यापारः ॥ तिलेषु विद्यते तैलम् । बहुतिलाभिन्नाधारक आत्मधारणानुकूल एकतैलभिन्नाश्रयको वर्तमानो व्यापारः ॥ हृदि ब्रह्मामृतं परं विद्यते इति योज्यम् । हृदयाभिन्नाश्रयक आत्मधारणानुकूलः स्फुरणानुकूलो वा । एकब्रह्माभिन्नाश्रयको वर्तमानो व्यापारः । अमृतं सुखरूपं मरणशून्यं वा परमुत्तमम् उपाधिशून्यमित्यर्थः । द्वयमपि ब्रह्मविशेषणम् । प्रकाश्यतासंवन्धेन ब्रह्म मनसि वर्तते ॥ युद्धे सन्नह्यते धीरः । युद्धाभिन्नाधारकः कवचबन्धनानुकूलः एकधीराभिन्नाश्रयको वर्तमानो व्यापारः । कवचबन्धनस्य युद्धफलकत्वात्तन्निमित्तम् ॥ अङ्गुल्यग्रे करिणां शतम् । विद्यते इत्यस्यानुषङ्गः । अङ्गुल्यग्राभिन्नाश्रयक आत्मधारणानुकूलः करिसंबन्धिशताभिन्नाश्रयको वर्तमानो

...वाराधेयभावोऽङ्गुल्यग्रे आरोप्यते ॥ औपश्लेषिकत्वादिकं तु शाब्दबोधेन भासते । व्यापारः कर्तृ... ...तु भासते गौर्वाहीक इत्यत्रोपसर्जनत्ववत् ॥ अन्यपदो...

**...यालक्षणं भावस्तत्रापि सप्तमी ॥ वर्षति देवे चोर आयातः ॥ गोषु दुह्यमानासु गतः ॥**

( सुबोधिनी )–**क्रियालक्षणं भावस्तत्रापि सप्तमी** ॥ भवनं भावः । क्रिया प्रसिद्धैव ग्राह्या व्याख्यानात् । भावोऽस्ति यस्मिन् स भावः मत्वर्थीयोऽप्रत्ययः । प्रसिद्धक्रियावानित्यर्थः ॥ प्रसिद्धक्रियावांस्तु सापेक्षत्वादप्रसिद्धक्रियावन्तं संलक्ष्यैव भवति । अत आह । क्रियालक्षणम् । क्रियायां प्रसिद्धं क्रियाया लक्षणं चिह्नम् । निराश्रयायाः क्रियाया असंभवादाश्रय आक्षिप्यते । अप्रसिद्धक्रियावतो लक्षणमित्यर्थः । लक्षणरूपा प्रसिद्धा लक्षणया वा प्रसिद्धैव संभवति प्रसिद्धया अप्रसिद्धायाः साधनौचित्यात् । लक्ष्यलक्षणभावसंबन्धे षष्ठ्यां प्राप्तायां सप्तमी विधीयते । अप्रसिद्धक्रियावल्लक्षणे प्रसिद्धक्रियावति कर्तरि कर्मणि च सप्तमी स्यादित्यर्थः ॥ कर्तर्युदाहरणमाह देवे मेघे वर्षति सति चोर आयातः । अत्र देवनिष्ठा प्रसिद्धा क्रिया सा चोरनिष्ठामप्रसिद्धां क्रियां लक्षयति । वर्षतीत्यत्र लक्षणहेत्वोः क्रियाया इति सूत्रेण कर्तरि शतृप्रत्ययः । कर्ता च देवः अतस्तयोः सामानाधिकरण्यात् सप्तमी ॥ कर्मण्युदाहरणमाह गोषु दुह्यमानासु सतीषु चोरो गतः । दुह्यमानास्वित्यत्र कर्मणि यक् ॥ इति सप्तमी ॥

( तत्त्वदी० )–**क्रियालक्षणं भाव** इति ॥ भवनं भावः । क्रियाभावोऽस्यास्तीति मत्वर्थीयोऽप्रत्ययः । लक्ष्यत इति लक्षणम् । क्रियाया लक्षणं क्रियालक्षणं बोधकमिति यावत् । अप्रसिद्धक्रियाबोधिका या प्रसिद्धक्रिया तद्वतः सप्तमीत्यर्थः ॥ **वर्षती**त्यादि ॥ देवभिन्नाश्रयिका या वर्षणक्रिया तयोपलक्षितभूतं यदागमनं तदाश्रयश्चोर इत्यर्थः । इतोऽन्यार्थे । द्वितीयादिसिद्ध्यर्थं शेषा इत्यस्य योगविभागः कार्यः ॥ इति सप्तमी ॥

**( विनासहनमसृतेनिर्द्धारणस्वाम्यादिभिश्च ) एतैर्योगे द्वितीयाद्या विभक्तयः ॥ विनादियोगे द्वितीया । विना पापं सर्वं फलति । अन्तरेणाक्षिणी किं जीवितेन । अन्तरा त्वां मां हरिः । जपमनुप्रावर्षत् । अनुहरिं सुराः । भक्तो हरिमभि । उपहरिं सुराः । नदीमन्ववसिता सेना । अति देवान् कृष्णः । अभितो ग्रामम् । सर्वतो नगरम् । धिग् जाल्मम् । उपर्युपरि पर्वतम् । अध्यधि लोकम् । अध्यधि सुखम् । अधोऽधो ग्रामम् । उभयतः कृष्णम् ॥ एवं परितः समयानिकषाहाप्रतिपरियोगेऽपि ॥**

(सुबोधिनी)–अथोपपदविभक्तिमाह–**विनासहनमसृतेनिर्द्धारणस्वाम्यादिभिश्च** ॥ विना च सहश्च नमश्च ऋते च निर्द्धारणं च स्वामी च ते विनासहनमसृतेनिर्द्धा-

रणस्वामिनः ते आदयो येषां ते विनासहनमस्तेनिर्द्धारणस्वाम्यादयस्तैर्विनासहनमस्ते-निर्द्धारणस्वाम्यादिभिः । द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबध्यते इत्यादिशब्दः प्रत्येकं योज्यः । शेषा इत्यनुवर्तते । शेषा द्वितीयाद्या विभक्तयो यथाक्रममेषां योगे भवन्ति ॥ विनादियोगे द्वितीया । पापं विना सर्वं फलति । पापस्याभावे सर्वं कर्म फल-प्रदं भवतीत्यर्थः ॥ अक्षिणी अन्तरेण नेत्रयोरभावे चक्षुषी विना इत्यर्थः ॥ अन्तरेणेति निपातो मध्यार्थकोऽपि । यथा । "मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः" इत्यत्र चलच्चामरयोर्द्वयस्य मध्ये स्थित इत्यर्थः ॥ अन्तरा त्वां मां तव मम च मध्ये इत्यर्थः । योगे इति किम् । अन्तरा त्वां मां हरेर्मूर्तिः । अत्र हरिशब्दान्न द्वितीया अन्तराशब्देनान्वययोगाभावात् ॥ हेतुसहहीनार्थकानुयोगे द्वितीया । यथा । जपमनु-मेघः प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः । हेतौ तृतीयाबाधिका द्वितीयात्र ॥ नदीमनु नद्या सह सेना अवसिता । संबद्धेत्यर्थः । षिञ्, बन्धने । अस्मात् क्तः । षष्ठी बाधिका द्वितीयात्र ॥ अनुहरिं सुराः हरेर्हीना इत्यर्थः ॥ भक्तो हरिमभिहरिमभिवर्तत इत्यर्थः ॥ उत्कृष्टादेव द्वितीया नापकृष्टात् । शक्तिस्वभावात् ॥ हीनार्थकोपयोगे द्वितीया यथा । उपहरिं सुराः हरेर्हीना इत्यर्थः । अत्राप्युत्कृष्टादेव द्वितीया नापकृष्टात् ॥ अति-क्रमणपूजार्थकातियोगे द्वितीया यथा । उचितादधिकस्यानुष्ठानमतिक्रमणम् । अतिदेवान्न कृष्णः देवानतिक्रान्तो देवानां पूज्यश्चेत्यर्थः ॥ अभितो ग्रामं ग्रामस्य पार्श्वद्वये इत्यर्थः॥ सर्वतो ग्रामं ग्रामस्य समंतादित्यर्थः ॥ जाल्मं मूर्खं धिक् तस्य निन्द्यते इत्यर्थः ॥ उप-र्युपरि पर्वतम् । पर्वतस्योर्ध्वमित्यर्थः ॥ अध्यधि सुखं सुखस्योपरिष्टात्समीपकाले दुःख-मित्यर्थः ॥ अधोऽधो ग्रामं ग्रामस्याधस्तात् समीपदेशे इत्यर्थः ॥ उभयतः कृष्णम् । कृष्णस्य पार्श्वद्वये इत्यर्थः ॥ परितः सर्वत इत्यर्थः ॥ समया—निकषा—निपातौ समी-पार्थकौ । "विलङ्घ्य लङ्कां निकषा हनिष्यतीति" इति माघः ॥ हा मूर्खम् । तस्य शोच्यते इत्यर्थः ॥ 'बुभुक्षितं न प्रतिभाति किंचित् ।' बुभुक्षितस्य पुरुषस्य किंचित् प्रतिभाति नेत्यर्थः ॥

( तत्त्वदी० )—कारकविभक्तिं दर्शयित्वोपपदविभक्तिं दर्शयति—**विनासहेत्यादि** ॥ विना च सहश्च नमश्च ऋते च निर्द्धारणं च स्वामी च ते आदयो येषामिति द्वन्द्वगर्भो बहुव्रीहिः । द्वन्द्वान्ते श्रूयमाणत्वादादिशब्दः प्रत्येकं संबन्ध्यते । द्वितीयादीनां चात्र यथाक्रममन्वयः ॥ **विनादियोग** इति ॥ **विना पापमिति** । पापसंबन्धाभावे सर्वं कर्म फलप्रदं भवतीत्यर्थः । द्वितीयाद्या उपपद-विभक्तयः षष्ठ्यपवादाः ॥ **जपमनु** इति ॥ हेतुभूतजपोपलक्षितमतीतकालमेकाश्रयणं वर्षणमित्यर्थः॥ **उपहरिमिति** ॥ हरेर्हीना इत्यर्थः ॥ **नदीमिति** ॥ नद्या सह संबद्धेत्यर्थः । षिञ् बन्धने क्तः ॥ **अ-तिदेवानिति** ॥ देवानां पूज्य इत्यर्थः ॥ **अभित** इति उभयत इत्यर्थः ॥ **धिगिति** निर्भर्त्सन-निन्दयोः ॥ **उपरीति** ॥ पर्वतस्योपरिष्टात्समीपे देश इत्यर्थः ॥ **अधीति** ॥ सुखस्योपरिष्टात्समीप-काले दुःखमित्यर्थः ॥ **अध** इति ॥ ग्रामस्याधस्तात्समीपदेश इत्यर्थः ॥

**( कालाध्वनोर्नैरन्तर्ये )** मासमधीते । क्रोशं पर्वतः । मासं गुडधानाः । मासं कल्याणी । क्रोशं कुटिला नदी ॥ नैरन्तर्ये किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥

( सुबोधिनी )—कालाध्वनोर्नैरन्तर्ये ॥ कालश्च अध्वा च कालाध्वानौ तयोः कालाध्वनोः निर्गतमन्तरं यस्मात्तत् निरन्तरं निरन्तरस्य भावो नैरन्तर्यं तस्मिन्नैरन्तर्ये । क्रियागुणद्रव्यैः सह कालाध्वनोर्निरन्तरसंबन्धे कालाध्ववाचकाद् द्वितीया स्यात् ॥ मासमधीते । निरन्तरा मासस्याध्ययनक्रियेत्यर्थः ॥ क्रोशं पर्वतः । निरन्तरः क्रोशस्य पर्वत इत्यर्थः ॥ मासं गुडधानाः । निरन्तरा मासस्य । गुडेन मिश्रा धानाः गुडधानाः । "धाना भृष्टयवे स्त्रियाम्" इत्यमरः ॥ मासं कल्याणी । निरन्तरा मासस्य शोभनगुणवती ॥ क्रोशमधीते । निरन्तरा क्रोशस्याध्ययनक्रिया ॥ क्रोशं कुटिला नदी । निरन्तरा क्रोशस्य वक्रा नदी ॥ लक्षणेत्थंभूताख्यानभागवीप्सार्थकानां प्रतिपर्यनूनां योगे द्वितीया यथा लक्षणे । वृक्षं प्रति पर्यनु वा विद्योतते विद्युत् ॥ लक्ष्यलक्षणभावसंबन्धं प्रत्यादयो द्योतयन्त्यत्र ॥ इत्थंभूताख्याने । भक्तो विष्णुं प्रति पर्यनु वा । विष्णोर्भक्तेश्च विषयविषयीभावसंबन्धं प्रत्यादयो द्योतयन्त्यत्र । भक्तः कृष्णस्य कंचित्प्रकारं भक्तत्वं प्राप्त इत्यर्थः । भागे । लक्ष्मीः कृष्णं प्रति पर्यनु वा । लक्ष्मीरूपस्य भागस्य कृष्णेन सह स्वस्वामिसंबन्धः तं प्रत्यादयो द्योतयन्त्यत्र । कृष्णस्य भाग इत्यर्थः ॥ वीप्सायाम् । वृक्षं प्रति पर्यनु वा वृक्षं वृक्षमित्यर्थः ॥ लक्षणेत्थंभूताख्यानवीप्सार्थकाभियोगे द्वितीया । यथा । लक्षणे हरिमभिवर्तते मुक्तिः । हरिं लक्षयित्वेत्यर्थः । लक्ष्यलक्षणभावसंबन्धोऽत्र । इत्थंभूताख्याने । भक्तो हरिमभि । विषयविषयीभावसंबन्धोऽत्र । हरेः कंचित्प्रकारं भक्तत्वं प्राप्त इत्यर्थः ॥ वीप्सायाम् । देवमभिनमति । देवंदेवमित्यर्थः ॥ पृथग्नानादक्षिणेन उत्तरेण इत्यादियोगेऽपि द्वितीया ॥

( तत्त्वदी० )—**कालाध्वनो**रिति ॥ कालश्च अध्वा च कालाध्वानौ तयोः । निर्गतमन्तरं यस्मात्तन्निरन्तरम् तस्य भावः नैरन्तर्यं तस्मिन् क्रियागुणद्रव्यैः कालाध्वनोः निरन्तरं संबन्धे कालाध्वभ्यां द्वितीया ॥ **मास**मिति ॥ निरन्तरं माससंबन्धी एकाश्रयो ऽध्ययनानुकूलो व्यापारः ॥ **मासं कल्याणी**ति ॥ अव्यवच्छिन्नमाससंबन्धिशोभनगुणवती ॥ **मासं गुडे**ति ॥ अव्यवच्छिन्नमाससंबंधी इत्यर्थः ॥

**( अधिपूर्वाणां शीङ्स्थासामाधारः कर्म )** अभिनिपूर्वस्य विशेः ॥

( सुबोधिनी )—अधिपूर्वाणां शीङ्स्थासामाधारः कर्म ॥ शीङ्, स्वप्ने । ष्ठा, गतिनिवृत्तौ । आस, उपवेशने । अधिपूर्वकाणामेषामाधारः कर्मसंज्ञकः स्यादनुक्ते कर्मणि द्वितीयेत्यर्थः । अभिनिपूर्वस्य विशेः द्वन्द्वेऽल्पस्वरप्रधानेति नेः पूर्वनिपाते कर्तव्ये विपरीतोच्चारणमीदृशसंघातविवक्षार्थम् । अभिनीत्येतत्संघातपूर्वस्य 'विश प्रवेशने' इत्यस्याधारः कर्मसंज्ञकः स्यात् ॥

( तत्त्वदी० )-**अभिनि** इति ॥ नेरल्पस्वरत्वेन पूर्वनिपाते कर्तव्ये विपरीतोच्चारणमीदृशसमुदायविवक्षार्थम् । तेनेह न । "निविशते यदि शूकशिखापदे" इति ॥

**( उपान्वध्याङ्पूर्वस्य वसः ) अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः । अभिनिविशते सन्मार्गम् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः ॥**

( सुबोधिनी )-**उपान्वध्याङ्पूर्वस्य वसः** ॥ उपादिपूर्वस्य वसेराधारः कर्मसंज्ञकः स्यात् ॥ लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति न्यायात् । 'वस, निवासे' इति भौवादिक एव गृह्यते न तु 'वस, आच्छादने' इत्यदादिकः ॥

( तत्त्वदी० )-**अधिशेते** इत्यादि ॥ अत्र त्रयाणां फलं स्थितिः । अवस्थानजन्यवैकुण्ठनिष्ठसंयोगानुकूल एकहर्यभिन्नाश्रयको वर्तमानो व्यापारः ॥ **अभिनिविशत** इति ॥ अभिनिवेशजन्य सन्मार्गाभिन्नाश्रयः संबन्धस्तदनुकूल एकाभिन्नाश्रयको वर्तमानो व्यापारः ॥ **उपवसतीत्यादि** ॥ वैकुण्ठाभिन्नाश्रयको वासजन्यो यः संयोगस्तदनुकूल एकहर्यभिन्नाश्रयको वर्तमानो व्यापारः ॥

**( नाभुक्त्यर्थस्य ) वने उपवसति । इत्यादि ॥**

( सुबोधिनी )-**नाभुक्त्यर्थस्य** ॥ भोजननिवृत्तिवाचकस्य वसेराधारः कर्मसंज्ञो न ॥ उपवसति उपवासं करोतीत्यर्थः ॥ इति पुनरपि द्वितीया ॥

**( सहादियोगे तृतीया ) सह शिष्येणागतो गुरुः ॥ एवं साकं-सार्द्धसमंयोगेऽपि ॥**

( सुबोधिनी )-**सहादियोगे तृतीया** ॥ सहार्थकशब्दस्य योगे तृतीया विभक्तिर्भवति ॥ गुरुः शिष्येण सहागतः गुरोरत्रागमनक्रियया शाब्दः संबन्धः शिष्यस्य त्वार्थः संबन्धः । अत एव शिष्यस्याप्राधान्यम् । षष्ठ्या बाधिकेयम् ॥ ननु संबन्धे तृतीया । संबन्धश्चोभयनिष्ठोऽत उभाभ्यां तृतीया स्यात् । मैवं वद । यस्मात्षष्ठी प्राप्ता तस्मादेव तृतीया । षष्ठी चाप्रधानाद्विहिता । ततस्तृतीयाप्यप्रधानादेव भवति । उत्सर्गसमानदेशा अपवादा भवन्तीत्युक्तत्वात् । सहार्थविवक्षायां विनापि सहार्थयोगे तृतीया भवति । त्वमहंसिनेत्यादिनिर्देशात् । एवं साकं सार्द्धं समं अमा पृथक् विना नाना इत्यादियोगेऽपि तृतीया ॥

( तत्त्वदी० )-**सहादियोग** इति ॥ **शिष्येण सहे**ति ॥ गुरौ तु न तृतीया तस्य प्रधानत्वात् । अथाप्रधाने च तृतीयेति चेत् । कथं गुरुणा सहागतः शिष्य इत्यत्र सा गुरोः प्रधानत्वादिति चेत् सत्यम् । न ह्यत्र लौकिकं प्राधान्यं किन्तु शाब्दम् । तच्च शब्दप्रतिपादितक्रियात्वम् । अर्थलब्धक्रियात्वमप्राधान्यम् । तच्च यदा यस्य तदा तस्यैव प्राधान्याप्राधान्येन । शिष्येण सहागतो गुरुरित्यत्रागमने शिष्यस्यापि कर्तृत्वमन्यथा साहित्यं न स्यात् । इति कर्तृसाधनयोरित्येव तृतीया किमने-

नैति चत्सत्यम् । शिष्येण सहागमनं गुरोरित्यत्र शिष्यादपि कर्तृकार्ययोरिति षष्ठी प्राप्ता तदपवादार्थमिदमिति गृहाण । सहार्थविवक्षायाम् सहादिप्रयोगाभावेऽपि तृतीया सिनेत्यादिनिर्देशात् ॥

**( येनाङ्गविकारः ) येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया॥ अक्ष्णा काणः॥ अङ्गविकारः किम् । आक्षि काणमस्य॥**

( सुबोधिनी )—येनाङ्गविकारः ॥ अङ्गमस्यास्तीति सोऽङ्गः अस्त्यर्थेऽप्रत्ययः अङ्गीत्यर्थः ॥ अङ्गस्याङ्गिनो विकार अङ्गविकारः । अक्ष्णा काणः । अक्ष्णः काणत्वं विशिष्ट इत्यर्थः ॥

( तत्त्वदी० )—अङ्गिन इति ॥ अङ्गमस्यास्तीति सोऽङ्गी तस्येत्यर्थः ॥

**( कंचित्प्रकारं प्राप्तस्य लक्षणे ) जटाभिस्तापसः॥**

( सुबोधिनी )—कंचित्प्रकारं प्राप्तस्य लक्षणे ॥ सामान्यस्य भेदको विशेषः प्रकारः स लक्ष्यतेऽनेनेति लक्षणं चिह्नं कंचित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् ॥ जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्टः । जटाभिर्ज्ञाप्यं यत्तापसत्वं तद्विशिष्ट इत्यर्थः । इह जटानां लक्षणत्वम् ॥ तेन लक्ष्यलक्षणभावः संबन्धोऽत्र ॥

( तत्त्वदी० )—जटाभिरिति ॥ जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः । लक्षणे किम् । अस्य जटाः ॥

**( प्रकृत्यादिभ्यश्च ) प्रकृत्या चारुः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन याति ॥**

( सुबोधिनी )—प्रकृत्यादिभ्यश्च ॥ प्रकृत्या स्वभावेन चारुरभिरूपः न त्वलंकारादिना । अत्र क्रियाया अश्रवणे कर्तृकरणत्वाभावात्षष्ठी प्राप्ता तद्बाधिका तृतीया ॥ प्रायेण बहुधा यज्ञं करोतीति याज्ञिकः ॥ गोत्रेण गार्ग्यः । गर्गगोत्रमस्येत्यर्थः । प्रातिपदिकार्थे प्रथमा प्राप्ता तद्बाधिका तृतीयात्र ॥ समेन मार्गेण विषमेण मार्गेण स एति गच्छतीत्यर्थः । समविषमाभ्यां कर्मभ्यां द्वितीया प्राप्ता तद्बाधिका तृतीयात्र ॥ द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । क्वचिन्नेति स्त्रीत्वाभावः द्विद्रोणपरिमितधान्यमूल्यवाचको द्विद्रोणशब्दः । द्रोणद्वयस्य द्रव्यस्य धान्यं क्रीणातीत्यर्थः ॥ सुखेन दुःखेन याति । सुखं दुःखं यातीत्यर्थः ॥

**( दिवः करणम् ) कर्मसंज्ञं वा स्यात् ॥ अक्षैरक्षान्वा दीव्यति ॥**

( सुबोधिनी )—दिवः करणम् ॥ दिवः करणस्य कर्मसंज्ञा वा स्यात् ॥ दिवु क्रीडादौ । अस्य करणं वा कर्म भवति । अक्षैः अक्षान् वा दीव्यति । किंच सकर्मकत्वादक्षैर्देवयते देवदत्तो मैत्रेणेत्यत्र गतिबुद्धीत्यनेन आवपि कर्तुः कर्मत्वं न ॥

(तुल्यार्थयोगे) कृष्णेन तुल्यः । रामेण सदृशः ॥

(सुबोधिनी)–तुल्यार्थयोगे ॥ तोलनं तुला तुलया संमितस्तुल्यः ण्यप्रत्ययः । णितो वेति वृद्ध्यभावः । तुल्यार्थवाचकशब्दयोगे तृतीया वा स्यात् । पक्षे संबन्धे षष्ठी । तुलोपमाशब्दौ विना । उपमा तुला वा हरेर्नास्तीति । तुल्यः सदृशः समः कृष्णेन कृष्णस्य वा ॥

(फलप्राप्तौ कालाध्वनोरत्यन्तसंयोगे तृतीया) अह्ना क्रोशेन वानुवाकोऽधीतः ॥ फलप्राप्तौ किम् । मासमधीतो नायातः ॥

(सुबोधिनी)–फलप्राप्तौ कालाध्वनोरत्यन्तसंयोगे तृतीया ॥ अन्तं विरामम‌तिक्रान्तोऽत्यन्तः अत्यन्तश्चासौ संयोगश्चात्यन्तसंयोगस्तस्मिन् अत्यन्तसंयोगे । निरन्तरसंनिकर्षे कालाध्ववाचकाभ्यां तृतीया स्यात् फलप्राप्तौ सत्याम् । देवदत्तेनानुवाको ग्रन्थविशेषोऽह्ना दिनं यावन्निरन्तरं क्रोशेन एकक्रोशं यावन्निरन्तरं वाधीतः । कालाध्वनोरिति द्वितीयाबाधिकेयं तृतीया ॥

(तत्त्वदी०)–फलेति ॥ फलप्राप्तौ किम् । मासमधीतो नायातः ॥

(अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया) दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति ॥

(सुबोधिनी)–अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया ॥ निषिद्धाचारे प्रतिपाद्ये दाणः प्रयोगे चतुर्थ्यर्थे तृतीया स्यात् ॥ दास्या संयच्छते कामी ॥ धर्म्ये तु भार्यायै संयच्छति ॥ इति पुनरपि तृतीया ॥

(नमआदियोगे चतुर्थी) नमो नारायणाय ॥ एवं स्वस्तिस्वाहास्वधाऽलंवषड्योगे च ॥

(सुबोधिनी)–नमआदियोगे चतुर्थी ॥ सबन्धसामान्ये षष्ठ्यां प्राप्तायां तद्बाधिका चतुर्थी ॥ नारायणाय हरये नमोऽस्तु ॥ प्रजाभ्यः स्वस्ति कल्याणम् ॥ अग्नये स्वाहा ॥ पितृभ्यः स्वधा ॥ अलमिति समर्थार्थस्य ग्रहणम् । हरिर्दैत्येभ्योऽलं समर्थ इत्यर्थः ॥ इन्द्राय वषट् ॥

(तत्त्वदी०)–नमआदियोगे चतुर्थीति ॥ नमस्करोति देवानित्यादौ तु उपपदविभक्तेरित्याद्युक्तमेव । स्वयंभुवे नमस्कृत्येत्यादौ तु स्वयंभुवमनुकूलयितुमित्यर्थे तुमोऽप्रयुक्तस्य कर्मणि चतुर्थी । एतच्च कार्यायेति सूत्रेण ज्ञापितम् । कार्यं विधातुमित्यर्थात् ॥

उपपदविभक्तेः कारकविभक्तिर्बलीयसीति ॥ नमस्करोति देवान् । प्रभ्वादियोगे षष्ठ्यपि । भोजनाय भोजनस्य वा प्रभुः समर्थः शक्तः ॥ कृष्णाय कृष्णस्य वा मद्रं भद्रं कुशलं सुखमायुष्यमर्थः प्रयोजनं वा भूयात् ॥

( सुबोधिनी )—ननु नमस्करोति देवानित्यत्र चतुर्थी स्यात् । नमः संबन्धसत्त्वादुच्यते—उपपदविभक्तेः कारकविभक्तिर्बलीयसीति ॥ उपपदं निमित्तं यस्याः सा उपपदनिमित्ता सा चासौ विभक्तिश्च उपपदविभक्तिः शाकपार्थिवादित्वान्मध्यमपदलोपः । क्रियान्वयित्वं कारकत्वम् । कारकनिमित्ता विभक्तिर्बलीयसी बलिष्ठेत्यर्थः ॥ क्रियान्वयित्वाद्देवानित्यत्र द्वितीया ॥ प्रभ्वादियोगे षष्ठ्यपि । प्रभ्वायुष्यमद्रभद्रकुशलसुखार्थहितार्थकाः प्रभ्वादयः । एषां योगे षष्ठीचतुर्थ्यौ भवतः । तत्रायुष्यादियोगे आशीर्वादेऽर्थे एव ॥ आशीर्वादे किम् । देवदत्तस्यायुष्यमस्ति ॥

( तत्त्वदी० )—उपपदविभक्तेः कारकविभक्तिर्बलीयसीति ॥ उप समीपे पदम् उपपदम् उपपदं निमित्तं यस्याः सा उपपदनिमित्ता सा चासौ विभक्तिश्च उपपदविभक्तिः । शाकपार्थिवादिस्तस्याः तेन नमस्करोति देवानित्यत्र कर्मणि द्वितीयैव न चतुर्थी ॥

**( रुच्यर्थधातुयोगे प्रीयमाणे ) हरये रोचते भक्तिः ॥**

( सुबोधिनी )—रुच्यर्थधातुयोगे प्रीयमाणे ॥ रुचि दीप्तावपि दीप्तिस्तत्र न विवक्षिता इत्यत उच्यते अन्यकर्तृकोऽभिलाषो रुचिः । रुचिरर्थो येषां ते रुच्यर्थाः रुच्यर्थाश्च ते धातवश्च रुच्यर्थधातवस्तेषां योगः रुच्यर्थधातुयोगस्तस्मिन् । प्रीयते इति प्रीयमाणः । प्रीञ्, तर्पणे । अस्मात् कर्मणि शानप्रत्ययः । तस्मिन् प्रीयमाणे चतुर्थी भवति ॥ हरिं प्रीणयतीत्यर्थे कर्मणि द्वितीयाप्राप्तौ चतुर्थी । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । भक्तिरात्मविषयमभिलाषं हरेरुत्पादयतीत्यर्थः ॥ प्रीयमाणे किम् । देवदत्ताय रोचते मोदकः पथि ॥

( तत्त्वदी० )—हरय इति ॥ अन्यकर्तृकोऽभिलाषो रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । हरिं प्रीणयतीत्यर्थः । द्वितीयाप्राप्तौ वचनम् । शाब्दबोधस्त्वयम् । हर्यभिन्नाश्रयकप्रीत्यनुकूल एकसेवानिष्ठो वर्तमानो व्यापारः ॥

**( श्लाघह्नुङ्स्थाशपां प्रयोगे बोधयितुमीष्टे ) गोपी कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा ॥**

( सुबोधिनी )—श्लाघह्नुङ्स्थाशपां प्रयोगे बोधयितुमीष्टे ॥ श्लाघृ, कत्थने । ह्नुङ्, अपनयने । ष्ठा, गतिनिवृत्तौ । शप, उपालम्भे । एषां प्रयोगे बोधयितुं ज्ञापयितुमीष्टे वाञ्छिते चतुर्थी स्यात् ॥ गोपी स्मरात्कन्दर्पात् कृष्णाय श्लाघते । कृष्णं स्तौतीत्यर्थः ॥सर्वत्र कर्मणि द्वितीयाप्राप्तौ चतुर्थी ॥कृष्णाय ह्नुते । सपत्नीभ्यो ह्नुतमर्थं कृष्णं बोधयसीत्यर्थः। कृष्णाय तिष्ठते । स्थित्या स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः। स्वाभिप्रायाविष्करणे निर्णेत्राख्यायामिति तिष्ठतेरात्मनेपदम् ॥ कृष्णाय शपते । उपालम्भेन स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः ॥

( तत्त्वदी० )–श्लाघह्नुङ् इति श्लाघत इति श्लाघा स्तुतिः कृष्णाय श्लाघते । कृष्णं स्तौतीत्यर्थः ॥ कर्मत्वे प्राप्ते वचनमिदम् । अन्ये त्वाहुः । कृष्णाय आत्मानं परं वा श्लाघ्यं कथयतीत्यर्थः ॥ अस्मिंस्तु पक्षे शेषषष्ठ्यां प्राप्तायां वचनम् ॥ ह्नुत इति सपत्नीभ्यः कृष्णं ह्नुवाना तमेवार्थं कृष्णं बोधयतीत्यर्थः । यस्य कस्यचित् ह्नुतिं वा ॥ तिष्ठत इति स्थित्याभिप्रायं बोधयतीत्यर्थः । शब्दबोधस्तु कृष्णोद्देश्यक आत्मभिन्नाश्रयकश्लाघ्यत्वादिबोधनानुकूल एकगोप्यभिन्नाश्रयको वर्तमानो व्यापारः । स्वाभिप्रायाविष्करणे निर्णेत्राख्यायामित्यात्मनेपदम् ॥

**धारेरुत्तमर्णे ॥ भक्ताय धारयति मोक्षं हरिः ॥**

( सुबोधिनी )–**धारेरुत्तमर्णे** ॥ धृङ्, अवस्थाने । ण्यन्तः । धारयतेः प्रयोगे उत्तमर्णे चतुर्थी स्यात् ॥ उत्तमर्णो धनस्वामी । अत्रोत्तमर्णो भक्तः । हरिस्त्वधमर्णः । अधमर्णस्तु ग्राहक इति भक्तेन पूर्वं भक्तिर्दत्ता तदर्थं हरिर्मोक्षं धारयति । धृङोऽकर्मकत्वाद् गतिबुद्धीति सूत्रेणाण्यन्तावस्थायां कर्तुर्ण्यन्तावस्थायां कर्मत्वम् । अत्र च षष्ठीप्राप्तौ चतुर्थी विधीयते ॥ उत्तमर्णे किम् । देवदत्ताय शतं धारयति ग्रामे ॥

( तत्त्वदी० )–**धारेरिति** ॥ षष्ठीप्राप्तौ वचनम् ॥ **भक्तायेति** ॥ भक्तोद्देश्यकमोक्षकर्मकधारणानुकूल एकहर्यभिन्नाश्रयको वर्तमानो व्यापारः ॥

**( स्पृहयतेरीप्सिते ) पुष्पेभ्यः स्पृहयति ॥**

( सुबोधिनी )–**स्पृहयतेरीप्सिते** ॥ स्पृहयतेः प्रयोगे ईप्सिते वाञ्छिते चतुर्थी स्यात् ॥ स्पृह, ईप्सायाम् । चुरादावदन्तः । कर्मणि द्वितीयाबाधिकेयम् । मैत्रः पुष्पेभ्यः स्पृहयति । पुष्पाणि स्पृहयतीत्यर्थः ॥ प्रकर्षविवक्षायां द्वितीयापि ॥

( तत्त्वदी० )–**पुष्पेभ्यः स्पृहयति** इति ॥ पुष्पोद्देश्यकेच्छानुकूल एकाभिन्नाश्रयको वर्तमानो व्यापारः ॥

**( क्रुधद्रुहेर्ष्यासूयार्थानाम् ) यं प्रति कोपार्थादयस्तत्र ॥ हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति इत्यादि ॥**

( सुबोधिनी )–**क्रुधद्रुहेर्ष्यासूयार्थानाम्** ॥ क्रुधद्रुहेर्ष्यासूयार्थानां प्रयोगे यं प्रति कोपादयस्तत्र चतुर्थी ॥ क्रुध, क्रोधे । द्रुह, जिघांसायाम् । ईर्ष्य, ईर्ष्यायाम् । असूयेति कण्ड्वादिगणगतो धातुः । एषामर्थ इवार्थो येषां धातूनां तेषां प्रयोगे यं प्रति यस्मिन् कोपादयः क्रियन्ते तत्र चतुर्थी स्यात् ॥ क्रोधोऽमर्षः ॥ जिघांसापकारः ॥ ईर्ष्या परसंपत्त्यसहनम् ॥ असूया गुणेषु दोषाविष्करणम् ॥ क्रुधद्रुहोरकर्मकत्वात् तद्योगे षष्ठीप्राप्तौ चतुर्थी । ईर्ष्यासूययोस्तु सकर्मकत्वात् द्वितीयाप्राप्तौ चतुर्थी । यं प्रति कोपादयः किम् । भार्यामीर्ष्यति । मैनामन्योऽद्राक्षीदिति ॥ हेतोः चतुर्थी ॥ बलिहितसुखरक्षितैः । एभिर्योगे चतुर्थी स्यात् ॥ बलिः पूजोपहारकः । ब्राह्मणाय बलिः हितं सुखं रक्षितं वा । चशब्दादन्येऽप्ययुक्तप्रयोगा ज्ञेयाः ॥ इति पुनरपि चतुर्थी ॥

( तत्त्वदी० )–क्रुधद्रुह इति ॥ क्रुध, क्रोधे । द्रुह, द्रोहे । ईर्ष्य, ईर्ष्यायाम् । असूयेति कण्ड्वादियगन्तः । एषामर्थ इवार्थो येषां धातूनामित्यर्थः । तत्र क्रोधोऽमर्षः । ईर्ष्या असहनम् । असूया तु गुणेषु दोषारोपः । क्रुधद्रुहोरकर्मकत्वात्तद्योगे पञ्चमीति ॥

**ऋतेआदियोगे पञ्चमी ॥ ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । आराद्वनात् । इतरो ग्रामात् । भिन्नः कृष्णात् । पूर्वो ग्रामात् । प्राग्ग्रामात् । दक्षिणा ग्रामात् ।**

( सुबोधिनी )–ऋतेआदियोगे पञ्चमी ॥ ज्ञानादृते विना मुक्तिर्न । ऋते योगे द्वितीयापि । ऋते द्वितीया चेति चान्द्रसूत्रोक्तत्वात् ॥ गृहादन्यो विहारो वनम् ॥ वनादारात् । "आराद् दूरसमीपयोः" इत्यमरः ॥ दूरान्तिकयोगे षष्ठ्यपीति प्राप्ते पञ्चमी ॥ ग्रामादितरः । "इतरस्त्वन्यनीचयोः" इत्यमरः ॥ नीचार्थस्येतरस्य ग्रहणं न । कृष्णाद्भिन्नोऽन्य इत्यर्थः ॥ एवं पूर्वदक्षिणादक्षिणाहियोगे । अंचूत्तरपदयोगे च पञ्चमी ॥

( तत्त्वदी० )–ऋते ज्ञानादिति ॥ कथं तर्हि 'पुरुषाराधनमृते' इति । प्रमादोऽयमित्येके । ऋते द्वितीया चेति चान्द्रसूत्रात् द्वितीयापि ॥

**( विनापृथग्नाना वा ) विना कृष्णात् ॥**

( सुबोधिनी )–विनापृथग्नाना वा ॥ विनापृथग्नानाभियोगे द्वितीयातृतीयापञ्चम्यो भवन्ति ॥ " हिरुङ् नाना च वर्जने " इत्यमरः ॥

**( विद्यास्वीकारे पञ्चमी ) उपाध्यायादधीते ॥**

( सुबोधिनी )–विद्यास्वीकारे पञ्चमी ॥ विद्यास्वीकारे वक्तुः पञ्चमी भवति ॥ यथा उपेत्यास्मादधीयते इत्यपादाने घञ् । उपाध्यायादधीते शिष्यः । निःसरन्तं शब्दं ततो गृह्णातीत्यर्थः ॥

**( जनिकर्तुः प्रकृतिः ) जायमानस्य कार्यस्योपादानमपादानसंज्ञं स्यात् ॥ ब्रह्मणः प्रजाः प्रजायन्ते ॥**

( सुबोधिनी )–जनिकर्तुः प्रकृतिः ॥ उत्पद्यमानस्य कार्यस्य हेतोः पञ्चमी ॥ यथा । ब्रह्मणो धातुः प्रजाः प्रजायन्ते । उत्पद्यन्ते इत्यर्थः । तत उपक्रामन्ति निर्गच्छन्तीत्यर्थो वा । ब्रह्मा हिरण्यगर्भः स च हेतुरेव न पुनरुपादानम् । "प्रजा स्यात्संततौ जने" इत्यमरः ॥

**( यतश्चाध्वकालयोर्निर्माणं तत्र पञ्चमी ) पञ्चमीयुक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी ॥ वनाद्ग्रामो योजनं योजने वा । कार्त्तिक्या आग्रहायणी मासे ॥**

(सुबोधिनी)–यतश्चाध्वकालयोर्निर्माणं तत्र पञ्चमी ॥ यतश्चाध्वकालयोः परिच्छेदः क्रियते तस्मात्पञ्चमी भवति ॥ अध्ववाचकशब्दात्तु प्रथमासप्तम्यौ । कालवाचकात्तु सप्तम्येव । वनात् ग्रामो योजनं योजने वा ॥ अग्रे हायनं यस्याः सा आग्रहायणी स्वार्थेऽण् । कार्त्तिक्याः पौर्णमास्या आग्रहायणी मासेऽस्ति ॥

**वर्जनेऽपपरिभ्यां पञ्चमी ॥ अपहरेः संसारः । परिहरेः संसारः । आमुक्तेः संसारः ॥**

(सुबोधिनी)–वर्जनेऽपपरिभ्यां पञ्चमी ॥ वर्जनार्थयोरपपर्योर्योगे पञ्चमी । यथा । अपहरेः परिहरेः संसारः । हरिं वर्जयित्वेत्यर्थः ॥ मर्यादार्थकाङ्योगे पञ्चमी । यथा । आ मुक्तेः संसारः । मुक्तिं मर्यादीकृत्येत्यर्थः ॥ एवमभिविध्यर्थकाङ्योगेऽपि पञ्चमी । यथा । आ बालेभ्यो हरिभक्तिः बालानभिव्याप्येत्यर्थः ॥

**(प्रतिः प्रतिनिधिप्रतिदानयोः) यतः प्रतिनिधिः प्रतिदानं तत्र प्रतियोगे पञ्चमी ॥ प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् ॥**

(सुबोधिनी)–प्रतिः प्रतिनिधिप्रतिदानयोः ॥ एतयोरर्थयोर्यः प्रतिस्तस्य योगे पञ्चमी स्यात् ॥ मुख्यस्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिः । दत्तस्य प्रतिनिधिर्यातनं प्रतिदानम् । षष्ठीबाधिका पञ्चमीयम् । कृष्णात् प्रति । कृष्णस्य सदृश इत्यर्थः ॥ तिलेभ्यः प्रति । तिलानामादानेन मैत्रो माषान् यच्छति ददातीत्यर्थः । भयहेतौ पञ्चमी । भयार्थानां त्राणार्थानां च प्रयोगे भयहेतोः पञ्चमी स्यात् । षष्ठीबाधिकेयम् ॥ मैत्रश्चोराद्बिभेति । चौरात् त्रायते ॥

**(हेतौ तृतीयापञ्चम्यौ) जाड्याज्जाड्येन वा बद्धः । स्तोकात्स्तोकेन वा मुक्तः ॥**

(सुबोधिनी)–हेतौ तृतीयापञ्चम्यौ ॥ गुणे वर्तमानात् हेतुवाचकशब्दादस्त्रीलिङ्गात्तृतीयापञ्चम्यौ स्तः ॥ जडस्य भावो जाड्यं तेन तस्माद्वा बद्धः । स्तोकेन स्तोकाद्वा अनायासेन मुक्त इत्यर्थः ॥ गुणवाचकात् किम् । धनेन कुलम् ॥ अस्त्रीलिङ्गात्किम् । बुद्ध्या मुक्तः । तृतीयाप्राप्तौ पक्षे पञ्चमी विधीयते ॥

**(दूरान्तिकयोर्योगे षष्ठ्यपि) ग्रामस्य दूरादन्तिकाद्वा इत्यादि ॥**

(सुबोधिनी)–दूरान्तिकयोर्योगे षष्ठ्यपि ॥ अनयोर्योगे षष्ठी भवति । अपिशब्दाद्दूरान्तिकार्थकेभ्यो नामार्थमात्रे द्वितीयातृतीयापञ्चमीसप्तम्यो भवन्तीत्यर्थः ॥ ग्रामस्य दूरं दूरेण दूरात् दूरे वा ॥ अन्तिकम् अन्तिकेन अन्तिकात् अन्तिके वा ॥ ॥

इति पुनरपि पञ्चमी ॥

संबन्धः । "अथ पुष्कलको गन्धमृगे क्षपणकीलयोः" इति मेदिनी ॥ "सीमा घाटास्थिति-क्षेत्रष्वण्डकोशेषु च स्त्रियाम्" इति मेदिनी ॥

( तत्त्वदी० )–निमित्तादिति ॥ निमित्तमिह फलम् । योगः संयोगसमवायात्मकः ॥ सीम्नी-ति सीमाण्डकोशः । पुष्कलको गन्धमृगः ॥ योगविशेषे किम् । वेतनेन धान्यं लुनाति ॥

## ( क्तस्येन्विषये कर्मणि ) अधीती व्याकरणे ॥

( सुबोधिनी )–क्तस्येन्विषयेन्नन्तस्य कर्मणि ॥ इन्नन्तस्य क्तस्य कर्मणि सप्तमी स्यात् ॥ द्वितीयाबाधिका सप्तमी ॥ अधीतमनेनेत्यधीती व्याकरणे । भावे क्तप्रत्यय-स्तत इष्टादिभ्य इति कर्तरीन्प्रत्यये कृते पश्चाद्गुणभूतक्रियया संबध्यमानं व्याकरण-मनुक्तं कर्म ॥ इति पुनरपि सप्तमी ॥

( तत्त्वदी० )–अधीतमनेनेति विग्रहे इष्टादिभ्य इनिरित्यनेन इनिः ॥

## ( तादर्थ्ये चतुर्थी ) संयमाय श्रुतं धत्ते नरो धर्माय संयमम् । धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥

( सुबोधिनी )–पुनश्चतुर्थीमाह ॥ तादर्थ्ये चतुर्थी ॥ तस्मै कार्यायेदं तदर्थं तद-र्थस्य भावस्तादर्थ्यम् । भावे तत्वयण इति यण् । कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तस्ततो यणप्रत्ययेन संबन्धः । उच्यते । स च संबन्धोऽनेकधा न तु कार्यकारणभाव एव । तेन ब्राह्मणाय दधीत्यादौ चतुर्थी सिद्ध्यति । मैत्रः श्रुतं शास्त्रं धत्ते । कस्मै संयमाय । संयमं धत्ते । कस्मै धर्माय । मेधास्ति यस्य स मेधावी बुद्धिमान् धर्मं धत्ते । कस्मै मोक्षाय । धनं धत्ते । कस्मै दानाय त्यागाय भुक्तये भोगाय चेति ॥

( तत्त्वदी० )–तादर्थ्य इति ॥ तस्मै कार्यायेदं तदर्थं कारणम् तस्य भावस्तादर्थ्यजनतोप-कारकत्वरूपः संबन्धोऽभिधीयते । उपकारकत्वं चानेकधा तेन विप्राय मध्वित्यादावपि भवति ॥

## ( तुमोऽप्रयुक्तस्य कर्मणि ) फलेभ्यो याति ॥

( सुबोधिनी )–तुमोऽप्रयुक्तस्य कर्मणि ॥ क्रियावाचकप्रकृतिकमुपपदं यस्य तस्याप्रयुज्यमानस्य तुमन्तस्य कर्मणि चतुर्थी भवति ॥ द्वितीयाबाधिकेयम् ॥ फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः ॥ एवं स्वयंभुवे नमस्कृत्य । स्वयंभुवमनुकूलयि-तुमित्यर्थः ॥

( तत्त्वदी० )–फलेभ्यो यातीति ॥ फलान्याहर्तुं यातीत्यर्थः ॥

## ( क्यब्लोपे कर्मण्याधारे च पञ्चमी ) हर्म्यात्प्रेक्षते । आसनात्प्रे-क्षते ॥

( सुबोधिनी )–पुनः पञ्चमीमाह ॥ क्यब्लोपे कर्मण्याधारे च पञ्चमी ॥ क्यबन्तस्य गम्यमानार्थत्वात् प्रयोगे कर्मणि आधारे च पञ्चमी स्यात् ॥ क्यब्ग्रहण

मिह क्यबर्थपरम् । तेन क्त्वापि गृह्यते ॥ प्रासादात्प्रेक्षते । प्रासादमारुह्य ॥ आसनात् प्रेक्षते । आसने उपविश्येत्यर्थः । आसने स्थित्वा वा ॥

( तत्त्वदी० )—हर्म्यादिति ॥ हर्म्यमारुह्येत्यर्थः ॥

**( कर्तृकार्ययोरक्तादौ कृति षष्ठी )** कर्तरि कार्ये च षष्ठी क्तादिवर्जिते कृति प्रयुज्यमाने ॥ कृष्णस्य कृतिः । जगतः कर्ता कृष्णः ॥

( सुबोधिनी )—पुनः षष्ठीमाह ॥ कर्तृकार्ययोरक्तादौ कृति षष्ठी ॥ कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् क्तादीन् विना ॥ कृष्णेन क्रियते इति कृष्णस्य कृतिः । क्तिरिति स्त्रियां भावेऽर्थे क्तिः ॥ जगत् करोति इति जगतः कर्ता । तृवुणाविति कर्तरि तृप्रत्ययः ॥ कर्तृकार्ययोः किम् । शस्त्रेण भेत्ताऽत्र करणे मा भूत् ॥ कृति किम् । कृतपूर्वीकटमत्र तद्धिते मा भूत् । कृतं पूर्वमनेनेति कारकादिति कर्तरीनिः ॥

( तत्त्वदी० )—कर्तृकार्ययोरिति ॥ क्तादौ तु तृणो ग्रहणं न तु तृ इत्यस्य । तेन कटस्य कर्तेत्यपि अनन्तरस्येति विधिर्निषेधो वेति न्यायादयं निषेधः ॥

**( गुणकर्मणि वा )** नेताश्वस्य ग्रामं ग्रामस्य वा ॥

( सुबोधिनी )—गुणकर्मणि वा ॥ अमुख्यकर्मणि वा षष्ठी स्यात् अक्तादौ कृति ॥ नेताश्वस्य ग्रामं ग्रामस्य वा । कर्तरि तृप्रत्ययः । ग्राममिति गौणकर्म ॥

**( उभयप्राप्तौ कृति कर्तरि षष्ठी न )** आश्चर्यो गवां दोहोऽगोपेन ॥ स्त्रीप्रत्यययोरकाकारयोर्योगे नोक्तम् । भेदिका बिभित्सा वा रुद्रस्य जगतः ॥

( सुबोधिनी )—उभयप्राप्तौ कृति कर्तरि षष्ठी न ॥ उभयोः कर्तृकर्मणोः प्राप्तिर्यस्मिन् स उभयप्राप्तिस्तस्मिन्नुभयप्राप्तौ कृत्प्रत्यये कर्तरि षष्ठी न स्यात् ॥ कर्तृषष्ठीनिषेधकमिदम् ॥ कर्मणि षष्ठी तु कर्तृकार्ययोरनेनैव ॥ अगोपेन गावो दुह्यन्ते इति दोहः । भावे घञ् । स्त्रीप्रत्यययोरकाकारयोर्योगे नोक्तम् । स्त्रियां क्तिरित्यधिकारे कृतयोरकाकारयोर्योगे कर्तरि कर्मणि चोभयत्र षष्ठी स्यात् । कर्तरि षष्ठी नेति पूर्वोक्तं न प्रवर्तते इत्यर्थः । भेदनं भेदिका । धात्वर्थनिर्देशे वुण् वक्तव्यम् इति वुण् । युवोरनाकावित्यकादेशः । स्त्रियामाबत इत्याप् । काप्यत इतीत्वम् । भेत्तुमिच्छा बिभित्सा । भिदेः सप्रत्यये 'नानिटि से' इति न गुणः प्रत्ययान्तात् स्त्रियामङित्यङ् । तत आप् । रुद्रेण जगत् भिद्यते इति भेदिका । रुद्रस्य जगतः । भावे वुण् ॥ रुद्रेण जगत् बिभित्स्यते इति बिभित्सा रुद्रस्य जगतः । भावेऽङ् ॥

( तत्त्वदी० )—उभयप्राप्ताविति ॥ कर्तृकर्मप्राप्तावित्यर्थः ॥

**( शेषे कृति वा )** शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥

( सुबोधिनी )–शेषे कृति वा ॥ शेषेऽकाकारभिन्ने कृन्मात्रप्रत्यये उभयप्राप्तौ कर्तरि षष्ठी वा स्यात् ॥ आचार्येण शब्दा अनुशिष्यन्तेऽनेनेति शब्दानामनुशासनमाचार्येणाचार्यस्य वा । साधनाधारयोरिति करणे युट् ॥

( वर्तमानाधारार्थक्तस्य योगे षष्ठी ) राज्ञां मतः बुद्धः पूजितो वा । इदमेषां शयितम् ॥ क्तादौ तु कुर्वन् कुर्वाणः चकृवान् चक्राणः चक्रिर्वा सुखं हरिः । हरिं दिदृक्षुः अलंकरिष्णुर्वा । दैत्यान् घातुको हरिः । जगत्स्रष्टा । सुखं कर्तुम् । विष्णुना हता दैत्याः । दैत्यान् हतवान् हरिः । ईषत्करः प्रपञ्चो हरिणा । सोमं पवमानः । आत्मानं मण्डयमानः । वेदमधीयन् । कर्ता लोकान् ॥

( सुबोधिनी )–वर्तमानाधारार्थक्तस्य योगे षष्ठी ॥ वर्तमानार्थस्याधिकरणवाचिनश्च क्तस्य योगे कर्तरि षष्ठी स्यात् ॥ अक्तादाविति निषेधस्यापवादोऽयं विधिः ॥ राज्ञां मतः । ञितामिति मतिबुद्धिपूजार्थेभ्यो वर्तमाने कर्मणि क्तः । 'पूजितो यः सुरासुरैः' इत्यादौ तु भूते क्तो बोध्यः ॥ इदमेषां शयितमासितं भुक्तं वा । स्थैर्यगतिभक्षणार्थेभ्यः इत्यधिकरणे क्तः । क्तादय उच्यन्ते । कर्तृकर्मणोः षष्ठीबाधकाः ॥ हरिः सुखं कुर्वन् कुर्वाणः । शतृशानौ तिपूतेवदिति शतृशानौ ॥ चकृवान् चक्राणः चक्रिः । क्वसुकानौ णबवदिति क्वसुकानौ । आदृतः किर्द्विश्च भूते इति किः ॥ मैत्रो हरिं दिदृक्षुः । सान्ताशंसाभिक्षिभ्य उरित्युः ॥ अलंकरिष्णुः । इष्णुस्नुक्नु इति शीले इष्णुः ॥ हरिर्दैत्यान् घातुकः । 'षाकोकण्' इत्युकण् ॥ कृत्कर्तरीति कर्तरि प्रत्यया एते ॥ जगत् स्रष्टा । पूर्वकाले क्त्वेति क्त्वा ॥ सुखं कर्तुम् तुमृतदर्थायां भविष्यतीति तुम् ॥ विष्णुना दैत्या हताः । हरिर्दैत्यान् हतवान् । 'क्तक्तवतू' इति क्तक्तवतू प्रत्ययौ ॥ हरिणा प्रपञ्च ईषत्करः । ईषद्दुःसुषु खल्यू इति खल् ॥ मैत्रः सोमं पवमानः ॥ आत्मानं मण्डयमानः । मडि, भूषायाम् । ताच्छील्यवयोवचनशक्तिष्वानशित्यानश् ॥ मैत्रो वेदमधीयन् । इङ्धार्योरकृच्छ्रिणि कर्तरि शतृ इति शतृप्रत्ययः ॥ हरिर्लोकान् कर्ता । शीले तृन्निति तृन् ॥

( द्विषः शतुर्वा ) सुरस्य सुरं वा द्विषन् ॥

( सुबोधिनी )–द्विषः शतुर्वा ॥ 'द्विष' अप्रीतौ । इत्यस्मात् द्विषः शत्राविति सूत्रेण विहितो यः शतृप्रत्ययस्तस्य योगे कर्मणि वा षष्ठी स्यात् ॥ क्तादित्वान्नित्ये निषेधे प्राप्ते विकल्पार्थमिदम् ॥ अक्तादावित्ययं निषेधस्तु कारकषष्ठ्या एवानन्तरस्य विधिर्वा प्रतिषेधो वेति न्यायात् ॥ संबन्धे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन्नरकस्य जिष्णुरित्यादि ॥ एवं च आश्चर्यो गवां दोहोऽगोपेनेत्यत्र संबन्धविवक्षायां कर्तर्यपि षष्ठी भवतीति बोध्यम् ॥

**( भविष्यत्यकस्य भवित्यदाधमर्ण्यार्थस्येनश्च योगे षष्ठी न )** सतः पालकोऽवतरति । व्रजं गामी । शतं दायी ॥

( सुबोधिनी )–भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थस्येनश्च योगे षष्ठी न ॥ तुमर्थे वुण् इति भविष्यत्यर्थेऽपि वुण् प्रत्ययो भवति । युवोरनाकावित्यकादेशः । तस्य भविष्यदर्थकस्याकस्य योगे कर्मणि षष्ठी न स्यात् ॥ यस्तु कालसामान्ये ण्वुलतृचाविति वुणुक्तस्तत्र न निषेधः । यथा ओदनस्य पाचकः । देशानां दर्शकः ॥ आवश्यकाधमर्ण्ययोर्णिनिरित्यादिना इनिप्रत्ययो भविष्यत्यर्थे आधमर्ण्येऽर्थे च भवति । तस्य योगे कर्मणि षष्ठी न । सत इति शतृप्रत्ययान्तम् । सज्जनान्पालयिष्यतीति पालकः । भविष्यत्यर्थे वुण् ॥ गमिष्यतीति गामी । भविष्यत्यर्थे णिनिः ॥ ददातीति दायी । अधमर्णो ग्राहकः अधमर्णस्य भाव आधमर्ण्यं तस्मिन्नाधमर्ण्ये णिनिः ॥

**( कृत्यानां कर्तरि वा षष्ठी )** मया मम वा सेव्यो हरिः ॥

( सुबोधिनी )–कृत्यानां कर्तरि वा षष्ठी ॥ कृत्यसंज्ञकप्रत्ययानां योगे कर्तरि षष्ठी वा स्यात् ॥ कर्तृकार्ययोरिति नित्यं प्राप्ते विकल्पार्थमिदम् ॥ हरिर्मया मम वा सेव्यः । षेवृ सेवायामस्मात् ऋहलोर्ण्यदिति कर्मणि ण्यत् ॥ कर्तरि किम् । माणवकः साम्नां वेदानां गेयः । स्वराद्य इति कर्तरि यप्रत्ययविधानादनुक्तं कर्म । तव्याऽनीयध्यण्यक्यप एते पञ्च कृत्यप्रत्ययाः ॥

**( उभयप्राप्तौ कृत्ये षष्ठी न )** नेतव्या व्रजं गावः कृष्णेन ॥

( सुबोधिनी )–उभयप्राप्तौ कृत्ये षष्ठी न ॥ कर्तरि कर्मणि च प्राप्तौ सत्यां कृत्यप्रत्यययोगे उभयत्र षष्ठी न स्यात् ॥ उभयप्राप्तौ कृतीति सूत्रेण कर्तरि षष्ठीनिषेधे कर्मणि षष्ठी निषेधार्थमिदम् ॥ गुणकर्मणि वेति सूत्रम् उभयप्राप्तिरहितस्थले नेता ग्रामं ग्रामस्य वाश्वस्येत्यादौ चरितार्थं बोध्यम् ॥

( तत्त्वदी० )–उभयप्राप्ताविति ॥ कर्तृकर्मप्राप्तावित्यर्थः ॥

**( दूरनिकटार्थयोगे षष्ठीपञ्चम्यौ )** दूरं निकटं वा ग्रामस्य ग्रामाद्वा ॥

( सुबोधिनी )–दूरनिकटार्थयोगे षष्ठीपञ्चम्यौ ॥ षष्ठ्यां प्राप्तायां पक्षे पञ्चम्यर्थं वचनम् ॥

**( दूरनिकटार्थेभ्यो नामार्थमात्रेभ्यो द्वितीया तृतीया पञ्चमी सप्तमी )** ग्रामस्य ग्रामाद्वा दूरं दूरेण दूरात् दूरे निकटं वा ॥

**( द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी)** शतस्य दीव्यति ॥

( सुबोधिनी )–द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी॥ द्यूतमर्थो यस्य स द्यूतार्थस्तस्य द्यूतार्थस्य। क्रयश्च विक्रयश्च क्रयविक्रयौ क्रयविक्रयौ रूपं यस्य सः क्रयविक्रयरूपः क्रयविक्रयरूपश्चासौ व्यवहारश्च क्रयविक्रयरूपव्यवहारः क्रयविक्रयरूपव्यवहारोऽर्थो यस्य सः क्रयविक्रयरूपव्यवहारार्थस्तस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः धातोः कर्मणि षष्ठी स्यात्॥ द्यूतार्थेत्यादि किम्। ब्राह्मणं दीव्यति। स्तौतीत्यर्थः॥

( वोपसर्गस्य ) शतस्य शतं वा प्रतिदीव्यति ॥

( सुबोधिनी )–वोपसर्गस्य ॥ उपसर्गपूर्वकस्य दिवः कर्मणि वा षष्ठी स्यात् ॥ पूर्वसूत्रापवादः ॥

( षष्ठी हेतुप्रयोगे ) अन्नस्य हेतोर्वसति ॥

( सुबोधिनी )–षष्ठी हेतुप्रयोगे ॥ हेतुशब्दप्रयोगे षष्ठी स्यात्॥ हेतुशब्दे च हेतौ तृतीयायां प्राप्तायामनेन षष्ठी ॥

( सर्वादेर्हेतुप्रयोगे हेतौ द्योत्ये च तृतीयाषष्ठ्यौ ) केन हेतुना वसति। कस्य हेतोः ॥

( सुबोधिनी )–सर्वादेर्हेतुप्रयोगे हेतौ द्योत्ये च तृतीयाषष्ठ्यौ ॥ सर्वादिगणात्तृतीयाषष्ठ्यौ। तेन हेतुशब्दप्रयोगे तु तृतीयाषष्ठ्यौ च ॥

( निमित्तपर्यायप्रयोगे सर्वादेः सर्वा विभक्तयोऽसर्वादेस्तृतीयादयः )को हेतुः। किं प्रयोजनम्। कं हेतुम। केन हेतुना। ज्ञानेन निमित्तेन हरिः सेव्यः। ज्ञानाय निमित्ताय ॥

( सुबोधिनी )–निमित्तपर्यायप्रयोगे सर्वादेः सर्वा विभक्तयोऽसर्वादेस्तृतीयादयः ॥ सर्वादेर्निमित्तपर्यायप्रयोगे सर्वा विभक्तयः स्युः। असर्वादेस्तु प्रथमाद्वितीये न स्तः अन्याः स्युः। षष्ठीहेतुप्रयोगे सर्वादेर्हेतुप्रयोगे इति च सूत्रद्वयं गतार्थं बोध्यम् ॥

( तत्त्वदी० )–निमित्तपर्याय प्रयोगः इति चकारस्यानुक्तसमुच्चयार्थस्यानुवर्त्तमानात् एतत्सर्वार्थलाभः ॥ सर्वा विभक्तय इति ॥ सर्वादेरित्यर्थः ॥

अन्योक्ते प्रथमा ॥ आख्यातकृत्समासतद्धितनिपातोक्ते कारके संबन्धे च प्रथमा स्यात् ॥ घटः क्रियते। हरिः करोति । कृष्णः कंसं हतवान्। कृष्णेन कंसो हतः। पचनोऽग्निः। दानीयो विप्रः। उपाध्यायः। पचनी स्थाली। प्राप्तानन्दः। ऊढरथः। उपहृतपशुः। उद्धृतौदना। पीताम्बरः। वीरपुरुषः। कौङ्कुमम्। माथुरः धनवान्। दृषद्वती। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतमिति। क्रमादमुं नारद इत्यबोधि सः॥ इति विभक्त्यर्थाः ॥

( सुबोधिनी )-**अन्योक्ते प्रथमा** ॥ कार्ये द्वितीया स्यात् । अन्योक्ते कार्ये तु प्रथमा ॥ कर्तरि तृतीया । अन्योक्ते कर्तरि प्रथमा ॥ करणे तृतीया । अन्योक्ते करणे प्रथमा ॥ संप्रदाने चतुर्थी । अन्योक्ते संप्रदाने प्रथमा ॥ अपादाने पञ्चमी । अन्योक्ते अपादाने प्रथमा ॥ संवन्धे षष्ठी । अन्योक्ते संवन्धे प्रथमा ॥ अधिकरणे सप्तमी । अन्योक्ते अधिकरणे प्रथमा ॥ आख्यातोक्ते यथा । घटः क्रियते मैत्रेण । आह्वीति कर्मण्यात् । यक् चतुर्ष्विति यक् ॥ हरिः सुखं करोति । कर्तरि पञ्चेति कर्तरि परस्मैःपदम् । तनादेरुवित्युप् ॥ कृदुक्ते यथा । कृष्णः कंसं हतवान् क्तक्तवतू इति कर्तरि क्तवतुः ॥ कृष्णेन कंसो हतः । कर्मणि क्तः ॥ पच्यतेऽनेनेति पचनोऽग्निः । साधनाधारयोर्युडिति करणे युट् ॥ दीयतेऽस्मा इति दानीयः । तव्यानीयाविति संप्रदानेऽनीयः ॥ उप समीपे गत्वा अधीयतेऽस्मादित्युपाध्यायः । संज्ञायामकर्तरि चेत्यपादाने घञ् ॥ पच्यतेऽस्यामिति पचनी । साधनाधारयोरित्यधिकरणे युट् । स्थाली हण्डिका ॥ समासोक्ते यथा । प्राप्त आनन्दो यं स प्राप्तानन्दः ॥ ऊढो रथो येन स ऊढरथोऽनड्वान् वृषभः ॥ उपहृतः पशुर्यस्मै स उपहृतपशू रुद्रः ॥ उद्धृत ओदनो यस्याः सा उद्धृतौदना स्थाली ॥ पीतमम्बरं यस्य स पीताम्वरो हरिः ॥ वीराः पुरुषा यस्मिन् स वीरपुरुषो ग्रामः ॥ तद्धितोक्ते यथा । कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । तद्धितेनोक्तं कर्म । अण्प्रत्ययः ॥ मथुराया आगतः माथुरः अण् ॥ धनमस्यास्तीति धनवान् । मान्तोपधाद्वत्विनौ इति वतुः ॥ दृषद उपलाः सन्त्यस्यामिति दृषद्वती भूमिः ॥ निपातोक्ते यथा । विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतमित्यत्र संवर्द्ध्येति भावे क्यप् । क्यबन्तस्य क्रियापदस्य विषवृक्षमिति द्वितीयान्तं कर्म तत्रासांप्रतमित्यनेन निपातेनोक्तत्वात् प्रथमा । स्वयमात्मना छेत्तुमसांप्रतं न युज्यते इत्यर्थः ॥ क्रमादमुं नारद इत्यबोधि सः । अबोधीत्यत्र दीपजनबुधेति कर्तरीण् । तस्य नारदमिति द्वितीयान्तं कर्म । तत्र इति निपातयोगात्प्रथमा । उक्तं च । " यस्मिन्नर्थे विधीयन्ते लकारास्तद्धिताः कृतः । समासो वा भवेद्यत्र स उक्तः प्रथमा ततः ॥" ॥ इति कारकप्रक्रिया ॥

( तत्त्वदी० )-**अन्योक्ते प्रथमे**ति ॥ अन्येन उक्तम् अन्योक्तं तस्मिन्कार्ये इत्यादौ प्रत्येकं संबध्यते । प्रत्येकाभिप्रायादेकवचननिर्देशः ॥ कार्ये द्वितीया अन्योक्ते प्रथमा ॥ कर्तरि तृतीया अन्योक्ते प्रथमेत्यादि ॥ **पचनोऽग्नि**रिति ॥ पच्यतेऽनेनेति करणे युट् ॥ **दानीय** इति ॥ दीयतेऽस्मै इति विग्रहः ॥ **उपाध्यायादि**ति ॥ उप समीपे गत्वाऽधीयतेऽस्मादित्युपाध्यायः ॥ पच्यतेऽस्यामिति पचनी ॥ प्राप्त आनंदो यं स प्राप्तानन्दः ॥ ऊढः रथो येन सः ॥ उपहृतः पशुर्यस्मै सः ॥ उद्धृतः ओदनो यस्याः सा ॥ पीतमम्बरं यस्य ॥ वीराः पुरुषा यस्मिन् ॥ कुङ्कुमेन रक्तम् ॥ मथुराया आगतः ॥ धनं विद्यते यस्य ॥ दृषद्विद्यते यस्याः सा ॥ **असांप्रत**मिति ॥ असांप्रतमित्यस्यायुज्यत इत्यर्थः ॥ इदानीं द्विकर्मकोदाहरणमुच्यते । "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥" दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते

त्तदेव गौणं कर्मेति परिगणनं कर्तव्यमित्यर्थः॥ एतदर्थका अन्येऽपि ग्राह्याः॥ गां दोग्धि पय इत्यादि। अत्र गोर्गौणत्वं पश्चादपेक्षणात्। पयआदिकं तु मुख्यमादावेवापेक्षणात् कर्मणि प्रत्ययेन तु दुहादीनां गौणं न्यादीनां तु मुख्यं कर्मोक्तं भवति। गौर्दुह्यते पयः। ग्राममजा नीयते इत्यादि॥ ण्यन्तानां कर्तरि। गां दोहयति पयो गोपेन चैत्रः॥ ण्यन्तात्कर्मणि गौर्दोह्यते पयो गोपेन चैत्रेणेत्यादि॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा। कृतायामिह टीकायां विभक्त्यर्थनिरूपणम्॥

इति विभक्त्यर्थनिरूपणम्॥

---

# अथ समासाः।

## समासश्चान्वये नाम्नाम्॥ नाम्नामन्वये सति समासो भवति॥

## चकारात्कृत्तद्धितधातुसंज्ञाप्रयोजकप्रत्यया अपि॥

( सुबोधिनी )–**समासश्चान्वये नाम्नाम्**॥ नाम्नी च नामानि च नामानि तेषां नाम्नाम्। यद्यप्यविभक्ति नामेति संकेतितम् तथाप्यत्र नाम्नामिति विभक्त्यन्तानामेव ग्रहणम्। समासप्रत्यययोर्लुक् क्वचिदित्यादिज्ञापकात्। अत्र विधिरिति शेषः। प्रथमाद्यन्तानां पदानां पदयोर्वाऽन्वये सति यो विधिः स समाससंज्ञो भवति। चकारस्त्वनुक्तसमुच्चयार्थः। तेन पदानामन्वये सत्येव कृत्तद्धितधातुसंज्ञाप्रयोजकप्रत्यया अपि भवन्ति॥ समानि एकीभूतानि पदानि अर्था वासते यस्मिन्स समासः। 'आस, उपवेशने' अस्मादाधारे घञ्॥ सममेकमर्थमासयन्ति दीपयन्त्यस्मिन्समुदाये इति वा समासः। असु, दीप्तौ। ण्यन्तादस्मात्स्वराद इत्याधारेऽप्रत्ययः॥ संश्लिष्टानि एकीभूतानि पदानि अस्यन्ते उच्चार्यन्तेऽस्मिन्निति वा समासः। आधारे घञ्॥ समानं संश्लिष्टानां पदानामेकतामापन्नानामासनमुच्चारणमिति वा समासः। भावे घञ्॥ समसनं समासो वा। संपूर्वादस्यतेर्भावे घञ्॥ अनेकपदस्य एकपदीभवनमित्यर्थः॥ समस्यते इति वा समासः। संज्ञायामकर्तरि चेति कर्मणि घञ्॥ अनु अन्तर्मध्ये यन्ति पदार्था यस्मिन्नर्थे इत्यन्वयः इण, गतावस्मात् स्वराद इत्यप्रत्ययः॥ अनु अन्तः पदार्थानामयनं गमनमिति वान्वयः एकार्थीभावः॥ अनु सहान्येन यन्ति संबन्धं लभन्ते पदानि यस्मिन्निति वान्वयः। स्वराद इत्याधारेऽप्रत्ययः॥ अनु सहान्येन ईयन्ते संबन्धं प्राप्यन्ते पदान्यस्मिन्निति वान्वयः॥ सोऽन्वयो द्विधा। व्यपेक्षालक्षणः एकार्थीभावलक्षणश्चेति। तत्र व्यपेक्षालक्षणे विग्रहवाक्यमेव। एकार्थीभावलक्षणे तु वृत्तिरेव। तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षासंनिधियोग्यत्वेषु सत्सु यः परस्परसंबन्धः स व्यपेक्षालक्षणः। विशिष्टकार्यरूपः एकार्थीभावलक्षणः॥ विशेषेण गृह्यते ज्ञायते वृत्त्यर्थोऽनेनेति विग्रहः। विग्रहस्य वाक्यं विग्रहवाक्यम्। विग्रहवाक्यमपि द्विधा। लौकिकमलौकिकं चेति। प्रयोगार्हं परिनिष्ठितं साधु लौकिकम्। यथा। राज्ञः पुरुष इति। व्यपेक्षालक्षणः संबन्धो ह्यत्रैव॥ अपरिनिष्ठितं प्रयोगानर्हम-

स
न्त

साधु अलौकिकम् । यथा राजन् ङस् पुरुष सु इति । समाससंज्ञादिकं चास्मिन्नेव प्रवर्तते इति ॥ परार्थाभिधानं वृत्तिः । परः स्वार्थादन्यो योऽर्थः स परार्थः । अथवा स्वस्मात् परस्य शब्दस्य योर्थः स परार्थः । तस्याभिधानं प्रतिपादनं परार्थाभिधानं सा वृत्तिः । कृत्तद्धितसमासैकशेषयङ्लुगाद्यन्तधातुरूपा इति पञ्च वृत्तयः । वृत्तिरपि द्विधा । जहत्स्वार्थाऽजहत्स्वार्था चेति । जहति स्वार्थं पदानि यस्यां सा जहत्स्वार्था । उक्तं च । "वृत्तौ वर्तिपदानामानर्थक्यं पदे वर्णवत्" इति । यथा । वृषभ इत्यत्र वृषशब्दः सुकृतादेर्वाचकः भशब्दस्तु नक्षत्राणां वाचकः वृषभपदं तु बलीवर्दे शक्तम् । शक्ताववयवानामानर्थक्यम् ॥ एवं कवलशब्दे । को वाय्वादेर्वाचकः । वो वरुणवाचकः । लः पृथिवीवाचकः । कवलपदं ग्रासे शक्तम् । शक्तौ तेषामानार्थक्यम् । तथा राजपुरुषशब्दयोः पृथक्शक्त्योरपि राजसंबन्धिनि पुरुषे शक्तिः । तत्र राजपुरुषशब्दयोरानर्थक्यं तदन्या जहत्स्वार्था ॥

( तत्त्वदी० )—**समासश्चान्वये नाम्नामिति** ॥ समानि एकीभूतानि पदानि अर्था वा आसतेऽस्मिन्स समासः । आधारे घञ् ॥ अनु अन्तर्यन्ति पदार्था यस्मिन्नर्थे स अन्वयः । आधारे स्वरादः ॥ नाम्नामिति बहुवचनाद्द्वयोर्बहूनां च समासः । अन्वयो व्यपेक्षा परस्परापेक्षेति यावत् ॥ चकारस्यानुक्तसमुच्चयार्थत्वादन्यवृत्तिलाभोऽपीत्याह—**चकारा**दिति ॥ **धातुसंज्ञाप्रयोजके**ति ॥ धातुसंज्ञां प्रयोजयन्तीति ते येषु सत्सु संज्ञा भवतीति भावः । ते च यङादयः । तेऽप्यन्वये सत्येव भवन्तीति बोध्यम् । यद्यपि नामसंज्ञा विभक्तिरहितस्यैव तथाप्यत्र सविभक्तिकानामेव समासः समासप्रत्यययोरिति लुग्विधानात् ज्ञापकात् । अत्राहुः । स्पष्टार्थपदानामिति तु नोक्तम् । पचति भवति पश्यति धावतीत्यादावन्वयसत्त्वेन समासप्रसंगात् । सति च तस्मिन् यथेष्टं प्रयोगो न स्यात् इति ॥ अत्रेदं वक्तव्यम् । नाम्नामित्युपादानात् आख्यातनिराकरणमिति त्वदभिमतम् । एवं च पर्यभूषत् पचत भृज्जतेत्यादौ कथं समासः । अथ नाम्नाम् इति योगं विभज्य कतिपयतिङन्तोत्तरपदः समासः स च च्छन्दस्येव । आख्यातस्याख्यातेन क्रियासातत्यादौ च समास इति चेत्तदा तत्रतत्र तेनैव नियमेन विधानात् अन्यत्र प्राप्तिर्वारितैवेति किं तन्निराकरणाय पदान्तरेणेति । यत्तु अथार्थविभक्तिविशिष्टानां पदानां समासो निरूप्यते इत्युक्तं प्राचा तत्रार्थवदिति व्यर्थम् विभक्तिविशिष्टत्वेनैव तल्लाभात् । किं च विभक्तिविशिष्टानामित्यपि व्यर्थं पदग्रहणेनैव तदर्थप्रतीतेः । विभक्त्यन्तं पदमित्यनेन हि विभक्तिविशिष्टस्यैव पदसंज्ञाविधानात् ॥

**पूर्वेऽव्ययेऽव्ययीभावः ॥ अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति ॥**

( सुबोधिनी )—**पूर्वेऽव्ययेऽव्ययीभावः ॥** अव्यये पूर्वपदे सति पदयोर्योऽन्वय एकार्थीभावलक्षणः सोऽव्ययीभावसंज्ञकः समासोऽस्ति ॥ पूर्वग्रहणादेवाव्ययस्य पूर्वनिपातोऽव्ययीभावे । अन्यथाव्यये इत्येव सिद्धे किं तेन ॥

( तत्त्वदी० )–पूर्वेऽव्ययेऽव्ययीभाव इति ॥ पूर्वे इत्यस्य ग्रहणसामर्थ्यादव्ययस्य पूर्वनिपातः विभक्त्याद्यर्थेषु वर्तमाने एवाव्यये पूर्वे सतीति बोध्यम् । अन्यथास्तिधन इत्यादावतिव्याप्त्यापत्तेः ॥

**समासप्रत्यययोः ॥ समासे वर्तमानाया विभक्तेः प्रत्यये परे लुग्भवति ॥ नामत्वात्स्यादिः ॥**

( सुबोधिनी )–समासप्रत्यययोः ॥ प्रतीयते कर्तृकर्माद्यर्थोऽनेनेति प्रत्ययः । इण्, गतावस्मात् स्वराद इत्यप्रत्ययः ॥ अथवा अय, गतावस्मात्पचाद्यप्रत्यये प्रत्ययते प्रत्याययत्यर्थमिति प्रत्ययः । अन्तर्भावितण्यर्थः ॥ समासश्च प्रत्ययश्च समासप्रत्ययौ तयोः । भावे सप्तमीयम् ॥ समासे सति प्रत्यये च सति वर्तमानायाः स्यादिरूपाया विभक्तेर्लुक् स्यात् ॥ ततः कृत्तद्धितसमासाश्चेति नामसंज्ञायां स्याद्युत्पत्तिर्भवतीत्यर्थः ॥

( तत्त्वदी० )–समासप्रत्यययोरिति ॥ अत्रान्वयाभावेऽपि निपातनाद्द्वन्द्वः समासः । यद्वा भावे सप्तमीयम् । तथा च समासे सति प्रत्यये च सतीति बोध्यम् । प्रतीयते कर्त्राद्यनेनेति प्रत्ययः । इण् गतौ । स्वरादः ॥ ननूक्तार्थानामप्रयोग इति न्यायेनैव विभक्तेरप्रयोगो भविष्यति च–शब्दादेरिव वृत्तौ तदर्थस्यान्तर्भावात् । परार्थाभिधानस्यैव वृत्तिपदार्थत्वात्समासस्य च वृत्त्यन्तर्भावात् इति किमनेनेति चेत्सत्यम् । राजाश्व इत्यादौ प्रत्ययलक्षणेन पदकार्यार्थे स्वाभाविक्या अपि निवृत्तेः सूत्रेण विधानात् ॥

**स नपुंसकम् ॥ अव्ययीभावो नपुंसकलिङ्गो भवति ॥ नपुंसकस्येति ह्रस्वः ॥**

( सुबोधिनी )–स नपुंसकम् । तच्छब्देन संनिहितोऽव्ययीभावः परामृश्यते । स्त्री च पुमांश्च स्त्रीपुंसौ । न स्त्रीपुंसाविति नपुंसकम् । स्त्रीपुंसशब्दस्य पुंसकभावः सहादित्वान्निपात्यते । नपुंसकत्वान्नपुंसकस्येति ह्रस्वविधानम् ॥

( तत्त्वदी० )–स नपुंसकमिति ॥ तच्छब्दस्य पूर्वपरामर्शित्वादव्ययीभावो गृह्यते । न स्त्री न पुमानिति नपुंसकं स्त्रीपुंसशब्दस्य पुंसकभावो निपातनात्सहादित्वाद्वा । अत्राहुः । सन्निधानादेवानुवृत्तिलाभे सिद्धे स्पष्टार्थे सग्रहणमिति ध्येयमिति । अत्रेदमवधेयम् । कार्यिणः पूर्वकथनमग्रिमस्यैव कार्यत्वविज्ञानार्थमव्ययीभावानुवृत्तावपि विपरीतार्थप्रसंगः स्यात् । नपुंसकलिङ्गमव्ययीभावसंज्ञं स्यात् इति तन्निराकरणाय तच्छब्दस्यावश्यकत्वात् ॥

**अव्ययीभावात् ॥ विभक्तेर्लुक् । अधिस्त्रि ॥**

( सुबोधिनी )–अव्ययीभावात् ॥ ननु अनव्ययमव्ययं भवतीत्यव्ययीभावः । अभूततद्भावे इति च्विः । ज्वलादेर्ण इति भुवतेर्णप्रत्ययः ॥ अथवा अनव्ययस्य अव्ययत्वेन भवनमस्मिन्नेकार्थीभावे इति अव्ययीभावः । भावे आधारे वा घञ् । एवमन्वर्थसंज्ञाविज्ञानात् अव्ययादिति लुक्प्राप्तिरस्त्येव किमर्थमेतत् । मैवम् । तत्पुरुषादिसंज्ञावदस्या अन्वर्थत्वाभावात् । तत्त्वे तु योगविभागो मास्तु । अव्ययीभावादतोमनत इत्येक-

योग एवास्तु लुक् तु अव्ययादित्यनेन सिद्ध एव अतो योगविभाग एव ज्ञापयत्यत्रान्वर्थसंज्ञा नास्तीति। अस्माद्विभक्तेर्लुक् स्यात् ॥ अथ पाणिनिसूत्रम्। "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु।" विभक्त्यादिष्वर्थेषु विद्यमानमव्ययमन्वये सति सिवन्तेन नाम्ना सह समस्यते ॥ विभक्त्यर्थेऽव्यये यथा। स्त्रियामित्यधिस्त्रि। लौकिकविग्रहवाक्यमिदम्। सप्तम्यर्थस्य द्योतकोधिः। स्त्री ङि अधि इत्यलौकिकविग्रहवाक्यम्। अत्र निपातेनोक्तेऽप्यधिकरणे समासविधानसामर्थ्यात् सप्तमी। अन्यैस्तु स्त्रियमधिकृत्येति व्याख्यातं तदसत् अधिहरीत्यत्राधिकृत्येत्यर्थस्याप्रतीतेः। क्रमादमुं नारद इत्यबोधि स इत्यादौ समासो न इति शब्दस्य प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायकत्वात्। एवं च विभक्तिशब्दः सप्तम्यां पर्यवस्यति ॥ समीपार्थेऽव्यये यथा। कुम्भस्य समीपमिति उपकुम्भम् ॥ समया ग्रामम्। निकषा लङ्काम्। आराद्वनादित्यत्र तु नाव्ययीभावो विनादियोगे द्वितीयेति ऋतेआदियोगे पञ्चमीति च विधानसामर्थ्यात् ॥

( तत्त्वदी० )–**अव्ययीभावादि**ति ॥ विभज्यते विविच्य बोध्यते कर्तृकर्माद्यर्थोऽनयेति विभक्तिः। योगरूढत्वात्कृष्णादिषु नातिव्याप्तिः। स्यादेः सिप इति वा वक्तुमुचितम्। कुम्भकार इत्यत्र तु धातोरेव प्रत्ययविधानान्न त्यादेर्लुक् ॥ **अधिस्त्रि** इति ॥ स्त्रियाम् इतीति विग्रहः। नित्यसमासोऽयम्। अस्वपदविग्रहत्वात्। तथा चोक्तम्। अविग्रहो नित्यसमासोऽस्वपदविग्रहो वेति ॥ विग्रहश्च द्विविधः। लौकिकोऽलौकिकश्च। परिनिष्ठितत्वात्साधुर्लौकिकः प्रयोगानर्होऽसाधुरलौकिकः ॥

**अतोऽमनतः ॥ अदन्तादव्ययीभावाद्विभक्तेरलुक्। तं वर्जयित्वाऽमादेशः। कुम्भस्य समीपमुपकुम्भम् ॥**

( सुबोधिनी )–**अतोऽमनतः** ॥ विशेषणत्वात्तदन्तविधिः अदन्तादव्ययीभावात्। अनत इति षष्ठी। न अत् अनत् तस्या अनतो विभक्तेरमादेशः स्यात् ॥

( तत्त्वदी० )–**अतोऽमनत** इति ॥ अत इत्यस्य विशेषणत्वात्तदन्तलाभ इत्याशयेनादन्तादित्युक्तम्। अलुक्क्वचिदित्यतोऽलुगित्यनुवर्तते। तथा च वाक्यभेदेन व्याख्यानम्। ननु किं वाक्यभेदेनोभयविधानम् अमादेशस्यैव लुग्बाधकतास्तु इति चेन्न। टादावमादेशाभावे लुक्प्रवृत्तेरनिवार्यत्वापत्तेः। अम्विधानं तु सर्वादेशार्थम्। अनत इत्येकवचनं त्वव्ययीभावस्यैकवचनान्तत्वाभिप्रायेण। सर्ववचनान्तत्वपक्षे तु अनत इत्याद्युपलक्षणं वचनत्रयस्यापि ॥

**वा टाङ्योः ॥ अदन्तादव्ययीभावाट्टाङ्योरम्वा ॥ उपकुम्भम्–उपकुम्भेन वा कृतम्। उपकुम्भम्–उपकुम्भे वा निधेहि ॥ अनतः किम्। उपकुम्भात् ॥ मद्राणां संमृद्धिः सुमद्रम्। यवनानां व्यृद्धिर्दुर्यवनम्। मक्षिकाणामभावो निर्मक्षिकम्। हिमस्यात्ययोऽतिहि-**

मम् । निद्रा संप्रति न युज्यते इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इति इतिहरि । विष्णोः पश्चादनुविष्णु । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य करोति यथाशक्ति। हरेः सादृश्यं सहरि । सहादेः सादिरिति सहस्य सः । ज्येष्ठस्यानुपूर्व्येणे-त्यनुज्येष्ठम् । चक्रेण युगपत्सचक्रम् । सदृशः सख्या ससखि । क्ष-त्राणां संपत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थ-पर्यन्तमधीते साग्नि ॥

( सुबोधिनी )–वा टाङ्चोः ॥ कुत्रचिद्भवति कुत्रचिन्न भवतीयं व्यवस्थितविभाषा । तस्या आश्रयणात् समुद्रम् उन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमेवाऽम् ॥ समृद्ध्यर्थे यथा । ऋद्धेराधिक्यं समृद्धिः । मद्राणां देशविशेषाणां समृद्धिः सुमद्रम् । उत्तरपदार्थ-प्राधान्ये तु तत्पुरुषोऽपि भवति । समृद्धा मद्रा इति सुमद्राः ॥ वृद्ध्यर्थे यथा । विगता ऋद्धिर्व्यृद्धिः । यवनानां व्यृद्धिरिति दुर्यवनम् । इह तेषामृद्ध्यभावे समासः ॥ अर्थाभावे यथा । मक्षिकाणामभाव इति निर्मक्षिकम् । संसर्गाभावेऽयं समासः ॥ अत्यये यथा । हिमस्यात्ययो ध्वंस इति अतिहिमम् ॥ असंप्रत्यर्थे यथा । संप्रतीत्यव्ययमिदानीमित्यर्थे । युजिक्रियान्तर्भावेण नञ्समासः सौत्रो बोध्यः । निद्रा संप्रति न युज्यते इत्यतिनिद्रम् ॥ शब्दप्रादुर्भावे यथा । हरिशब्दस्य प्रकाश इति इतिहरि । षष्ठयन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः विष्णोः पश्चादिति अनुविष्णु । पश्चाच्छब्दस्य तु नाय-मव्ययीभावो भवति । ततः पश्चात् स्रंसते इति भाष्यप्रयोगात् । सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादित्यर्थः ॥ यथार्थे यथा । योग्यतावीप्सापदार्थानतिवृत्ति-सादृश्यानि यथार्थाः । तत्रानुरूपता योग्यता । रूपस्य योग्यमिति अनुरूपम् ॥ पदार्थानां व्याप्तुमिच्छा वीप्सा । अर्थमर्थं प्रतीति प्रत्यर्थम् । समासे वीप्साया अन्तर्भावान्न द्विः । वीप्सार्थकप्रतियोगे द्वितीयाविधानात् वाक्यमपि ॥ पदार्थानतिक्रमः पदार्थानतिवृत्तिः । शक्तिमनतिक्रम्येति यथाशक्ति ॥ हरेः सादृश्यमिति वक्ष्यमाणेन सहादेः सादिरित्यनेन सहस्य सादेशः । सहरि ॥ आनुपूर्व्यार्थे यथा । अनुपूर्वस्य भाव इत्यानुपूर्व्यम् । भावे तत्वयण इति यण् । ज्येष्ठस्यानुपूर्व्येणेति अनुज्येष्ठम् ॥ यौगपद्ये यथा । चक्रेण युगपत्सम-कालमिति सहादेरित्यनेन सहस्य सः सचक्रम् ॥ सादृश्ये यथा । यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येतदर्थम् । सदृशः सख्या इति सहादे-रित्यनेन सहस्य सः ससखि ॥ संपत्तौ यथा । अनुरूप आत्मभावः संपत्तिः । क्षत्राणां संपत्तिरिति सहादेरित्यनेन सहस्य सः सक्षत्रम् ॥ साकल्ये यथा । तृणमप्यपरित्यज्ये-ति सहादेरिति सहस्य सः सतृणम् । साकल्येनात्ति इत्यर्थः ॥ अन्तवचने यथा उच्यते तद्वचनं अन्तस्य वचनम् अन्तवचनं तस्मिन् । अग्निशब्दो अग्निप्रतिपादकग्रन्थे वर्तते । अस्वपदविग्रहो नित्यसमासोऽयम् । अग्निग्रन्थपर्यन्तमिति साग्नि अधीते ॥

( तत्त्वदी० )—**वा टाङ्योरि**ति ॥ अव्ययीभावादिति किम् । कृष्णश्रितेन । अदन्तात्किम् अधिस्त्रि । वेत्यस्य व्यवस्थितत्वाश्रयणात्सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यममभावः ॥ **उपकुम्भ**मिति ॥ कुम्भस्य समीपेनेत्यर्थः । **व्यृद्धिरि**ति ॥ विगता ऋद्धिः व्यृद्धिः ॥ **अत्यय** इति ॥ अत्ययो ध्वंसः ॥ **निद्रे**त्यादि । असंप्रत्यर्थेनातिशब्देनाव्ययीभावः । तत्र असंप्रतीत्यस्य संप्रत्यभाव इत्यर्थमुक्तवतोपभोग्यवस्तुनो यो वर्त्तमानः कालस्तस्यैव निषेधः क्रियत इत्युक्तं केनचित्तन्न । न हि भूतले घटो नास्तीत्यनेन हि भूतलनिषेधः केनचिद्दूरीक्रियते ॥

**यथाऽसादृश्ये ॥ यथाशब्दः सादृश्ये न समस्यते॥ यथा हरिस्तथा हरः ॥**

( सुबोधिनी )—**यथाऽसादृश्ये** ॥ असादृश्ये एव यथा शब्दः समस्यते । सादृश्ये इति यथार्थे इति वा प्राप्तं निषिध्यते । यथा हरिस्तथा हरः । यथाशब्दो हरेरुपमानत्वं द्योतयति ॥

( तत्त्वदी० )—**यथाऽसादृश्य** इति ॥ असादृश्य इति छेदः । यथाशब्दस्याव्ययत्वादेव सिद्धे सूत्रारम्भसामर्थ्यात् योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । योग्यता अनुरूपता । वीप्सा पदार्थानां व्याप्तुमिच्छा । पदार्थानतिवृत्तिः पदार्थानतिक्रमः । उदाहरणानि तु पूर्वमेवोक्तानि ॥

**अवधारणार्थे यावति च ॥ अवधारणार्थे यावच्छब्दे प्रयुज्यमाने योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति ॥ यावन्तः श्लोकाः तावन्तोऽच्युतप्रणामा यावच्छ्लोकम् ॥**

( सुबोधिनी )—**अवधारणार्थे यावति च** ॥ यावच्छब्दस्याव्ययत्वादेव सिद्धे नियमार्थमिदम् । अवधारणे एव यावदव्ययं समस्यते नान्यस्मिन्नर्थे । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः ॥ यत्परिमाणं येषां ते यावन्तः । एतत्किंयत्तद्भ्य इति वतुः । यत्तदेतदामित्यात्वम् । तत्परिमाणं येषां ते तावन्तः । तद्धितान्तेन विग्रहः । समासस्त्वव्ययेनैव अस्वपदविग्रहोऽयम् ॥ अवधारणे किम् । यावदत्तं तावद्भुक्तम् । नावधारयाम कियन्मया भुक्तमिति ॥

( तत्त्वदी० )—**अवधारणार्थे यावति** चेति ॥ निश्चयार्थे यावच्छब्दे इत्यर्थः ॥ **यावच्छ्लोक**मिति ॥ तद्धितान्तेन विग्रहः । समासस्त्वव्ययेनेत्यस्वपदविग्रहोऽयम् । तथा च । यावच्छब्दस्याव्ययत्वादेव सिद्धे नियमार्थमिदमवधारणे एव यावदव्ययं समस्यते नान्यस्मिन्निति । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यनेकार्थत्वान्नियम उपपद्यते ॥ अवधारणे किम् । यावदत्तं तावद्भुक्तम् । नावधारयामि कियन्मया भुक्तमिति ॥

**( क्वचिदनव्ययपूर्वपदोऽप्यव्ययीभावः ) उन्मत्ता गङ्गा यस्मिन् देशे इत्युन्मत्तगङ्गम् । शाकस्य लेशः शाकप्रति । अक्षेण विपरीतं वृत्तमक्षपरि । शलाकया विपरीतं वृत्तं शलाकापरि । एकपरि ॥**

( सुबोधिनी )—क्वचिदनव्ययपूर्वेपदेऽप्यव्ययीभावः ॥ अन्यपदार्थे स्याद्यन्तं नदीवाचिभिः सह नित्यं समस्यते संज्ञायाम् ॥ उन्मत्ता गङ्गा यस्मिन् । पुंवद्वेति पुंवद्भावः । तत् उन्मत्तगङ्गम् देशः । बहुव्रीह्यर्थे अव्ययीभावः । नित्यसमासोऽयम् ॥ लेशार्थे प्रतिना सह स्याद्यन्तं नित्यं समस्यते । "लवलेशकणाणवः" इत्यमरः ॥ शाकस्य लेश इति शाकप्रति ॥ अक्षशलाका संख्याः परिणा नित्यं समस्यन्ते । द्यूतव्यवहारे पराजये एवार्थे । अक्षेण विपरीतं वृत्तमिति अक्षपरि । पूर्वं यथा वृत्तं तथा न वृत्तमित्यर्थः ॥ शलाकया विपरीतं वृत्तमिति शलाकापरि ॥ एकेन विपरीतं वृत्तमिति एकपरि । एते नित्यसमासाः ॥

**क्वचिद्वा** ॥ अपविष्णोः अपविष्णु । परिविष्णोः परिविष्णु । बहिर्वनात् बहिर्वनम् । प्राग्वनात् प्राग्वनम । आमुक्तेः आमुक्ति । अभ्यग्निम अभ्यग्नि । प्रत्यग्निम् प्रत्यग्नि । बनस्य समीपमुवनम् । गंगामनु अनुगंगम् । तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गु ॥ आयतीगवम् । पारेगंगायाः पारेगंगम् । मध्येगंगायाः मध्येगंगम् ॥ इत्यादयो निपात्याः ॥ खले यवा यस्मिन् काले खलेयवम् । द्वौ मुनी वंश्यौ द्विमुनि । त्रिमुनि व्याकरणस्य । सप्त गंगाः समाहृताः सप्तगंगम् द्वियमुनम् ॥

( सुबोधिनी )—अथ वैकल्पिकाः समासाः ॥ क्वचिद्वा ॥ अपपरिवहिरञ्चूत्तरपदाः पञ्चम्या सह समस्यन्ते वा ॥ अपपरी वर्जनार्थकौ ग्राह्यौ ॥ वहिर्योगे तु ऋतेआदित्वात् पञ्चमी सा सर्वत्र न । "करस्य करभो वहिः" इत्यमरोक्तेः॥ अञ्चुधातुरुत्तरपदं यस्य सोऽञ्चूत्तरपदः । यथा । प्राग्वनमिति ॥ मर्यादाभिविध्यर्थकाङ्पञ्चम्यन्तेन वा समस्यते । आमुक्ति संसारः । आबालं हरिभक्तिः ॥ अभिप्रती आभिमुख्यार्थकौ चिह्नवाचिना सह वा समस्येते । अभ्यग्नि शलभाः पतन्ति । अत्र लक्ष्यलक्षणभावे विनादित्वात् द्वितीया ॥ दैर्घ्यसमीपार्थकोऽनुश्चिह्नवाचिना षष्ठ्यन्तेन सह वा समस्यते । वनस्य समीपमिति अनुवनम् अशनिर्गतः । लक्षणभूतस्य वनस्य समीपं गत इत्यर्थः ॥ गङ्गाया अनु इति अनुगङ्गं सेना । गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः ॥ समासाभावे गङ्गामनु । विनादित्वात् द्वितीयैव । समासे तु विध्यर्थत्वात्षष्ठी॥ तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गु दोहनकालः । गोरिति ह्रस्वः । निपातनाच्छतृप्रत्ययः ॥ आयन्त्यो गावो यस्मिन्काले स आयतीगवं संध्या । निपातनाट्टप्रत्ययः वोऽवित्यव् पुंवद्भावाभावश्च ॥ खले यवा यस्मिन् काले स खलेयवम् । सप्तम्या अलुग् निपातनात् । इह बहुव्रीहिविषये अव्ययीभावः॥पारमध्यशब्दौ षष्ठ्यन्तेन वा समस्येते एदन्तत्वं चानयोर्निपात्यते।गङ्गायाः पारमिति पारेगङ्गम्। गङ्गाया मध्यमिति मध्येगङ्गम् । पक्षे षष्ठीतत्पुरुषोऽपि । गङ्गायाः पारमिति गङ्गापारम् । एवं गङ्गामध्यम् । वाक्यमपि । गङ्गायाः पारम् । गङ्गाया मध्यमिति ॥ वंश्यवाचिना सह

संख्या वा समस्यते । वंशः संतानः । स द्विविधो विद्यया जन्मना च । तत्र भवो वंश्यः। द्वौ मुनी वंश्यौ पाणिनिकात्यायनाविति द्विमुनि । त्रयो मुनयो वंश्या इति त्रिमुनि । व्याकरणस्येति संबन्धे षष्ठी । अन्यपदार्थप्राधान्यविवक्षायां तु त्रयो मुनयो वंश्या यस्मिन्‌स्त्रिमुनि । बहुव्रीहिरेवायम् ॥ जन्मना वंश्यो यथा । एकविंशतिर्भारद्वाजवंश्या इति एकविंशतिभारद्वाजम् ॥ नदीवाचिना सह संख्या समस्यते । समाहारार्थे । सप्त गंगाः समाहृताः इति सप्तगंगम् । द्वे यमुने समाहृते इति पुंवद्वेति पुंवद्भावः । द्वियमुनम् । द्विगोरपवादोऽयमव्ययीभावः ॥

( तत्त्वदी० )–इत्यादयो निपात्या इति ॥ सहादित्वादिति भावः ॥

**टाड्काः ॥ समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति ॥ शरदः समीपमुपशरदम् ॥ प्रतिविपाशम् ॥**

( सुबोधिनी )–अथ समासान्तप्रत्ययानाह । समासस्य समासोत्तरपदस्य वा चरमावयवाः समासान्ता इत्यर्थः ॥ **टाडकाः** ॥ टश्च अश्च डश्च कश्च ते टाडकाः । समासे इत्यनुवर्तते । टकार ईवर्थः । अकारोऽदन्तत्वफलकः । डष्टिलोपार्थः । कः श्रवणार्थः न त्वित्संज्ञकः । प्रयोजनाभावात् ॥ अव्ययीभावे शरदादिभ्यष्टप्रत्यय एव । शरद् विपाश् अनस् मनस् उपानह् दिव् हिमवत् अनडुह् दिश् दृश् विश् चेतस् चतुर् त्यद् तद् यद् किम् एते शरदादयः । शरदः समीपमिति उपशरदम् । टः । विपाशं प्रतीति प्रतिविपाशम् । विनादित्वात् प्रतियोगे द्वितीया "विपाशा तु विपाट् स्त्रियाम्" इत्यमरः ॥

( तत्त्वदी० )–**टाडका** इति ॥ टश्च अश्च डश्च कश्च ते टाडकाः । समासश्चान्वय इत्यतोऽनुवृत्तं समास इति सप्तम्या विपरिणम्यत इत्याह–**समासे सती**ति ॥ समासे चिकीर्षिते नाम्नष्टादयो भवन्तीति बोध्यम् । ततो विभक्तिं विधाय टाद्यन्तेन समासः । तेन समासस्यान्तावयवाष्टादयः । तत्श्चोपशरदमित्यादावव्ययीभावस्यादन्तत्वाद्विभक्तेरम् सिध्यति । अन्यथा अव्ययीभावात् परत्वेनाकारस्यादन्तत्वाभावान्नाम् सिद्ध्येदिति भावः । टस्त्वीवर्थः । राजगवीत्यादौ ॥ ॥ इत्यव्ययीभावः ॥

**( जराया जरस् )** उपजरसम् । **अक्षि प्रति प्रत्यक्षम् ॥ अक्ष्णः परं परोक्षम् । परशब्दस्य परस् । परोक्ष इति ज्ञापकात् ॥ अन्वक्षम् । उपराजम् ॥ क्लीबे वाऽन्‌लोपश्च ॥ उपचर्मम्–उपचर्म ॥ झसान्ताद्वा– उपसमिधम्–उपसमित् ॥ नद्यादिभ्यो वा ॥ उपनदम्-उपनदि ॥ इत्यव्ययीभावः ॥**

( सुबोधिनी )–**जराया जरस्** ॥ अव्ययीभावे जराशब्दस्य जरसादेशष्टप्रत्ययश्च ॥ जरायाः समीपमिति उपजरसम् टः । प्रतिपरसमनुभ्योऽक्षिशब्दादव्ययीभावे टः । अक्षिप्रतीति प्रत्यक्षम् । यस्येतीकारलोपः ॥ अक्ष्णः परविषय इति परोक्षम् । परस्य परसादेशे सस्य विसर्गे च कृतेऽतोत्युरित्युत्वम् ओत्वे एदोतोत इत्यल्लोपः । परोक्ष ॥

अक्ष्णो योग्यम् इति समक्षम् ॥ अक्ष्णः पश्चादिति अन्वक्षम् ॥ अन्नन्तादव्ययीभावाट्टः ॥ राज्ञः समीपमिति उपराजम्। नोवेति टिलोपः ॥ आत्मनि इति अध्यात्मम् ॥ वैकल्पिकं टप्रत्ययमाह ॥ अव्ययीभावे नान्तनपुंसकाद्गिरिशब्दात् झसप्रत्याहारान्तात् नदीपौर्णमास्याग्रहायणीभ्यश्च वा टः। चर्मणः समीपमिति उपचर्मम्—उपचर्म ॥ गिरेः समीपमिति उपगिरम्—उपगिरि। समिधः समीपमिति उपसमिधम्—उपसमित् ॥ नद्याः समीपमिति उपनदम् ॥ नपुंसकस्येति ह्रस्वे उपनदि ॥ पौर्णमास्याः समीपमिति उपपौर्णमासम्-उपपौर्णमासि॥आग्रहायण्याः समीपमिति उपाग्रहायणम्-उपाग्रहायणि॥

॥ इत्यव्ययीभावः ॥

**अमादौ तत्पुरुषः** ॥ द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञः समासो भवति ॥ ग्रामं प्राप्तो ग्रामप्राप्तः। कृष्णाश्रितः। कूपपतितः। ग्रामगतः। खट्वारूढः। मुहूर्तसुखम्। दुःखातीतः। ग्रामगमी। अन्नबुभुक्षुः। दात्रेण छिन्नम् दात्रच्छिन्नम्। मासेन पूर्वो मासपूर्वः। मातृसदृशः। पितृसदृशः। माषोनम्। वाक्कलहः। आचारनिपुणः। गुडमिश्रः। मासावरः। हरित्रातः। नखभिन्नः। दध्योदनः। गुडधानाः। यूपाय दारु यूपदारु ॥ अर्थस्य विशेष्यलिङ्गता। द्विजायायं द्विजार्थः सूपः। द्विजार्था शाटी। द्विजार्थं पयः ॥ भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्। चौराद्भयं चौरभयम्। सुखापेतः। दुःखापोढः। व्याघ्रभीतः। राज्ञः पुरुषः राजपुरुषः। द्विजयाजकः। देवपूजकः ॥

( सुबोधिनी )—अमादौ तत्पुरुषः ॥ अम् आदिर्यस्य साऽमादिस्तस्मिन्नमादौ प्रत्यये सुप्पर्यन्ते प्रत्ययग्रहणे तदन्तग्रहणमिति परिभाषयामाद्यन्ते द्वितीयाद्यन्ते पूर्वे इत्यनुवर्तते पूर्वपदे सति यो नाम्नोऽन्वयः स तत्पुरुषसंज्ञः स्यात्। पूर्वे इत्युक्तत्वात् द्वितीयाद्यन्तस्य पूर्वनिपातश्च ॥ श्रितातीतपतितगतात्यस्तप्राप्तापन्नगमिन्बुभुक्षुभिः सह द्वितीयान्तं समस्यते। श्रितादिष्वापन्नान्तेषु गत्यर्थादकर्मकादिति कर्तरि क्तः। श्र्यादानां गतिविशेषवाचित्वात् ॥ कृष्णं श्रित इति कृष्णश्रितः। अक्ताविति षष्ठीनिषधः। कर्मणि क्तप्रत्यये तु कृष्णः श्रितो येनेति बहुव्रीहिरेव। तत्र च बहुव्रीहौ विशेषणसप्तम्यन्तक्तान्तानामिति श्रितस्य पूर्वनिपाते समासान्तकप्रत्यय च श्रितकृष्णक इति ॥ दुःखमतीत इति दुःखातीतः। अतिपूर्वकादिणेः कर्तरि क्तः ॥ 'पत, गतौ' चुरादिरदन्तोऽस्मात्कर्तरि क्ते कूपपतितः ॥ ग्रामगतः ॥ तुहिनमत्यस्त इति तुहिनात्यस्तः। अत्यासो व्यतिक्रमः। सोऽपि गतिविशेष एवेति कर्तरि क्तः ॥ सुखप्राप्तः ॥ दुःखापन्नः ॥ ग्रामं गमी ग्रामंगमी। गमेरिनिरित्यौणादिको भविष्यत्काले इन्। भविष्यत्यकस्येति सूत्रेण षष्ठी-

निषेधात्कर्माणि द्वितीया ॥ अन्नं बुभुक्षुरिति अन्नबुभुक्षुः । सान्ताऽऽशंसाभिक्षिभ्य इत्युप्रत्ययः । द्वितीयान्तः खट्वाशब्दः कालवाची च क्तान्तेन समस्यते । खट्वारूढो जाल्मः । नित्यसमासोऽयम् । " जाल्मोऽसमीक्ष्यकारी स्यात् " इत्यमरः ॥ मासं प्रमित इति मासप्रमितः । ' माङ्, माने ' कर्तरि क्तः । अत्यन्तसंयोगे द्वितीयान्तः कालवाची स्याद्यन्तेन समस्यते ॥ मुहूर्तं सुखमिति मुहूर्तसुखम् । कालाध्वनोरिति द्वितीया । तृतीयान्तं तदर्थकृतगुणवचनेन सह समस्यते । गुणमुक्त्वा यो द्रव्यमुक्तवान् स गुणवचनः । कर्तरि युट् । गुणश्चात्र 'सत्त्वे निविशते' इत्यादिलक्षणलक्षितो गृह्यते । छिन्नमस्त्यस्मिन्निति छिन्नं दात्रेण छिन्नमिति दात्रच्छिन्नम् । करणे तृतीया । 'छिदिर्, द्वैधीकरणे ।'अस्माद्भावे क्ते छिन्नशब्दः क्रियारूपापन्ने गुणे वर्तित्वा पश्चात् छिन्नमस्त्यस्मिन्निति छिन्नमित्यस्त्यर्थे लक्षणया तद्वति द्रव्ये वर्तते इति गुणवचनः ॥ तृतीयान्तं पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णावरैः सह समस्यते । तुल्यार्थयोगे इति समसदृशयोगे तृतीया । अन्यैर्योगे तु समासविधानसामर्थ्यात् तृतीया । हेतौ तृतीया वा ॥ मासेन पूर्व इति मासपूर्वः ॥ मात्रा सदृश इति मातृसदृशः ॥ पित्रा सम इति पितृसमः ॥ माषेण ऊनम् माषोनम् ॥ माषेण विकल इति माषविकलः ॥ वाचा कहल इति वाक्कलहः ॥ आचारेण निपुण इति आचारनिपुणः ॥ गुडेन मिश्र इति गुडमिश्रः ॥ आचारेण श्लक्ष्ण इत्याचारश्लक्ष्णः ॥ मासेन अवरोऽर्वागिति मासावरः । तृतीयान्ते कर्तृकरणे कृदन्तेन सह बहुलं समस्येते । हरिणा त्रात इति हरित्रातः । कर्मणि क्तः । कर्तरि तृतीया ॥ नखैर्भिन्न इति नखभिन्नः । कर्मणि क्तः । करणे तृतीया ॥ वातेन छेद्यम् इति वातच्छेद्यं तृणम् । शक्यार्थे यः ॥ काकेन पेयेति काकपेया नदी । शक्यार्थे यः ॥ बहुलग्रहणात् क्वचिन्न । दात्रेण लूनवान् । हस्तेन कुर्वन् ॥ संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन सह समस्यते । दध्ना उपसिक्त ओदन इति दध्योदनः । उपसेकक्रियाद्वारान्वयः । "भिस्सा स्त्री भक्तमन्धोन्नमोदनोऽस्त्री " इत्यमरः ॥ गुडेन मिश्रा धानाः गुडधानाः । मिश्रणक्रियाद्वारान्वयः । " धाना भृष्टयवे स्त्रियाम् " इत्यमरः ॥ तदर्थार्थबलिहितसुखरक्षितैः सह चतुर्थ्यन्तं समस्यते । यूपाय दारु इति यूपदारु । तादर्थ्ये चतुर्थी ॥ अर्थेन नित्यसमासो विशेष्यलिङ्गता च । एतद्वार्तिकाभावे तु विकल्पाधिकारात् पक्षे द्विजायार्थं इत्यपि स्यात् । द्वन्द्वतत्पुरुषयोः परपदस्यैवेति वक्ष्यमाणेन सर्वत्र पुँल्लिङ्गप्रयोगश्च स्यादर्थशब्दस्य पुँल्लिङ्गत्वादत इदमुक्तम् ॥ भूतेभ्यो बलिरिति भूतबलिः ॥ गोभ्यो हितमिति गोहितम्॥ गोभ्यः सुखमिति गोसुखम् ॥ गोभ्यो रक्षितमिति गोरक्षितम् ॥ भयभीतभीतिभीभिरपेतापोढमुक्तपतितापत्रस्तैश्च सह पञ्चम्यन्तं समस्यते । चौराद्भयमिति चौरभयम् ॥ एवं वृकभीवः ॥ सिंहभीतिः ॥ राजभीः ॥ सुखादपेत इति सुखापेतः ॥ एवं कल्पनापोढः ॥ चक्रमुक्तः ॥ स्वर्गपतितः ॥ तरङ्गापत्रस्तः इति ॥ राज्ञः

पुरुष इति राजपुरुषः संबन्धे षष्ठी । राजन् अस् पुरुष सि इत्यलौकिकविग्रहे समासे कृते समासप्रत्यययोरिति विभक्तेर्लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वा-न्नाम्नो नो लोपशिति नलोपः ॥ याजकादिभिः सह षष्ठ्यन्तं समस्यते । याजक-पूजकपरिचारकपरिवेषकस्नातकाध्यापकोत्पादकहोतृपोतृभर्तृनभृगणका याजकादयः ॥

( तत्त्वदी० )—अमादौ तत्पुरुष इति ॥ अम् आदिर्यस्य स अमादिः प्रत्ययः सुप्पर्यन्तः। पूर्वेऽन्यये इत्यतः पूर्वे इत्यनुवर्तते । अम् द्वितीयैकवचनमेव गृह्यते न त्वमो गत्यादिकर्तृवाची व्या-ख्यानात् । तस्य च प्रत्ययत्वात्प्रत्ययग्रहणे च तदन्तलाभ इत्याशयेनाह—द्वितीयाद्यन्त इति ॥ यत्तु वासुदेवेन अम् आदिर्येषां ते अमादय इत्युक्त्वा द्वितीयाद्याः सप्तम्यन्ता विभक्तयस्तासां चेत्याद्युक्तं तद-विचारैः पुंल्लिङ्गस्य समासार्थत्वेन स्त्रीलिङ्गस्य विशेष्यत्वानुचितत्वात् । बहुवचनान्तविग्रहस्याद्युक्तत्वाच॥

**( क्वचित्षष्ठी न समस्यते ) नृणां द्विजः । सतां षष्ठः । काकस्य कार्ष्ण्यम् । फलानां सुहितः । इदमेषां शयितम् । अपां स्रष्टा । ओदनस्य पाचकः । भवतः शायिका ॥**

( सुबोधिनी )—क्वचित्षष्ठी न समस्यते ॥ निर्द्धारणे या षष्ठी सा न समस्यते ॥ नृणां द्विज इत्यत्र क्रियागुणजातिसंज्ञाभिरिति षष्ठी ॥ पूरणगुणतृप्त्यर्थैः सह षष्ठ्यन्तं न समस्यते । पूरणार्थे सतां षष्ठः । षण्णां संख्यापूरणः षष्ठः । षट्कतिकतिपयचतुर्भ्य इति थट् ॥ गुणार्थे । काकस्य कार्ष्ण्यम् । कृष्णस्य भावः कार्ष्ण्यम् । अनित्योऽयं गुणेन निषेधः । संज्ञाप्रमाणमर्थगौरवं बुद्धिमान्द्यमित्यादिनिर्देशात् ॥ फलानां सुहितस्तृप्तः । करणे षष्ठी ॥ तृतीयासमासस्तु स्यादेव ॥ अधिकरणवाचिना क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा । स्थैर्यगतिभक्षणार्थेभ्य इत्यधिकरणे क्तः । एषामिति कर्तरि षष्ठी ॥ वर्तमानाधारार्थक्तस्येत्यनेन कर्त्रर्थकाभ्यां त्रकाभ्यां सह षष्ठी न सम-स्यते । अपां स्रष्टा । ओदनस्य पाचकः । तृवुणाविति कर्तरि तृवुण्प्रत्ययौ । अपामिति ओदनस्येति कर्तृकार्ययोरित्यनेन कर्मणि षष्ठी ॥ कर्तृषष्ठ्यन्तमकेन सह न समस्यते । भवतः शायिका । आधारे वुण् प्रत्ययो भवतीति । कर्तरि षष्ठी ॥ वर्तमानार्थक्तेन सह षष्ठी न समस्यते । राज्ञां मतो बुद्धः पूजितो वा । राज्ञामिति कर्तरि षष्ठी ॥

**( क्वचिदमाद्यन्तस्य परत्वम् ) रायमतिक्रान्तोऽतिराः । नावम-तिक्रान्तोऽतिनौः । पूर्वं भूतो भूतपूर्वः । कायस्य पूर्वः पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । अह्नो मध्यं मध्याह्नः । सा-याह्नः । मध्यरात्रः । पश्चिमरात्रः । अर्द्धपिप्पली ॥**

( सुबोधिनी )—क्वचिदमाद्यन्तस्य परत्वम् ॥ तत्पुरुषे क्वचिदमाद्यन्तस्य पदस्य परनिपातो भवति ॥ रायमतिक्रान्त इति अतिराः । अत्यादयः क्रान्ताद्यर्थे द्वितीययेति

समासः । रैरभिरित्यनेनाकारः ॥ पूर्वं भूत इति भूतपूर्वः ॥ पूर्वापराधरोत्तरावयवा एकसंख्यावयविना समस्यन्ते । कायस्य पूर्वं इति पूर्वकायः ॥ कायस्यापरो देशः अपरकायः ॥ कायस्याधरो देश इति अधरकायः ॥ कायस्योत्तरो देश इति उत्तरकायः॥एकदेशः कालवाचिना समस्येत अह्नो मध्यमिति मध्याह्नः । राजाहः सखिभ्य इति टः । नो वेत्युपधालोपः ॥ अह्नः पूर्वं इति पूर्वाह्णः ॥ अह्नः साय इति सायाह्नः । स्यतेर्घञि अवसानवचनः सायशब्दः॥ रात्रेर्मध्यमिति मध्यरात्रः ॥ रात्रेः पश्चिममिति पश्चिमरात्रः । टाडका इत्यनेनाप्रत्ययः ॥ नपुंसकोऽर्द्धशब्दोऽवयविना सह समस्यते । "पुंस्यर्द्धोऽर्द्धं समेंऽशके" इत्यमरः ॥ अर्द्धं पिप्पल्या इति अर्द्धपिप्पली । द्वन्द्वतत्पुरुषयोरिति परवल्लिङ्गत्वात् स्त्रीत्वम् । भाष्ये तु अर्द्धपिप्पलीति कर्मधारये उक्तम् । समुदाये दृष्टाः शब्दा अवयवेष्वपि वर्तन्ते इति न्यायात् ॥

( तत्त्वदी० )–क्वचिदमाद्यन्तस्येति ॥ अन्ते भवोऽन्त्यः स्वरेषु अन्त्यः स्वरः स आदिर्यस्य सः अन्त्यस्वरादिष्टिरिति ज्ञापकादिति भावः ॥

**( क्वचिद्वा ) द्वितीयं भिक्षायाः द्वितीयभिक्षा–भिक्षाद्वितीयम् । तृतीयभिक्षा–भिक्षातृतीयम् । चतुर्थभिक्षा–भिक्षाचतुर्थम् । तुरीयभिक्षा–भिक्षातुरीयम् । जीविकाप्राप्तः–प्राप्तजीविकः ।आपन्नजीविकः–जीविकापन्नः ॥**

( सुबोधिनी )–क्वचिद्वा ॥ द्वितीयतृतीयचतुर्थतुर्याण्येकदेशिना सह समस्यन्ते अमाद्यन्तस्य परनिपातश्च वा ॥ द्वितीयं भिक्षाया इति द्वितीयभिक्षा–भिक्षाद्वितीयम् ॥ तृतीयं भिक्षाया इति तृतीयभिक्षा–भिक्षातृतीयम् ॥ चतुर्थं भिक्षाया इति चतुर्थभिक्षा–भिक्षाचतुर्थम् ॥ तुरीयं भिक्षाया इति तुरीयभिक्षा भिक्षातुरीयम् ॥ द्वितीयान्तस्य प्राप्तापन्नयोः परयोर्वा परनिपातः । जीविकां प्राप्त इति जीविकाप्राप्तः–प्राप्तजीविकः । आन्यर्थे इति ह्रस्वः । द्विगुप्राप्तापन्नेति वक्ष्यमाणेन परवल्लिङ्गं न कालवाचकस्य ॥

( तत्त्वदी० )–प्राप्तजीविक इति ॥ तत्पुरुषसंज्ञाविधिसामर्थ्यात्तया व्यवहारोऽनुमातव्यः । स च द्वन्द्वतत्पुरुषयोः परपदस्यैव लिङ्गमित्यादि तस्य च ज्ञापकसिद्धत्वात् । ज्ञापकसिद्धं न सर्वत्रेति वचनादत्र न परस्य लिङ्गम् ॥

## ( परिमाणवता सह समस्यतेऽमाद्यन्तस्य परनिपातश्च तत्पुरुषे )

( सुबोधिनी )–परिमाणवता सह समस्यतेऽमाद्यन्तस्य परनिपातश्च तत्पुरुषे ॥ परिमीयते परिच्छिद्यते येन तत्परिमाणं परिमाणमस्यास्तीतिपरिमाणवान् । तेन यस्य हि जननादूर्ध्वं मासो जातः स मासजात उच्यते । इह विग्रहे षष्ठीनिर्दिष्टस्य प्राधान्यं द्योतयितुं यस्येत्युक्तम् । यद्यपि मासो जातो यस्येति बहुव्रीहिणापि सिद्ध्यति

बहुव्रीहौ क्वचिन्नेति क्तान्तस्य पूर्वनिपातनिषेधात् तथापि जातवतो मासो यस्येति सः मासजातवानित्याद्यर्थमिदम् ॥

**( समासे क्वचिदेकपद्यं णत्वहेतुः )** शराणां वनं शरवणम् । आम्राणां वनमाम्रवणम् । प्लक्षवणम् । शूर्पणखा ॥

( सुबोधिनी )–समासे क्वचिदैकपद्यं णत्वहेतुः ॥ एकपदस्य भाव ऐकपद्यम् । समासे क्वचित् णत्वस्य हेतुरस्ति ॥ शराणां वनमिति शरवणम् ॥ प्लक्षाणां वनमिति प्लक्षवणम् ॥ आम्राणां वनमिति आम्रवणम् ॥ शूर्पणखा । अत्र संज्ञायां णत्वम् ॥

**क्वचिद्वा ॥** माषवापिणौ–माषवापिनौ । व्रीहिवापाणि–व्रीहिवापानि । व्रीहिवापेण–व्रीहिवापेन । सुरापाणम्–सुरापानम् । अक्षेषु शौण्डोऽक्षशौण्डः ॥

( सुबोधिनी )–क्वचिद्वा ॥ क्वचित्समासे णत्वं वा भवति ॥ माषान् वारंवारं वपतीति माषवापी । बहुलमाभीक्ष्ण्ये इति णिनिः ॥ व्रीहीन्वपतीति कार्येऽणित्यण् ॥ व्रीहिवापं तानि व्रीहिवापाणि । णत्वाभावे व्रीहिवापानीति ॥ व्रीहीन् वारंवारं वपतीति व्रीहिवापी तेन व्रीहिवापेण । णत्वाभावे व्रीहिवापेनेति शौण्डधूर्तकितवव्याडप्रवीणसंवीताध्यन्तरपटपण्डितकुशलनिपुणसिद्धशुष्कपक्वबन्धैः सह सप्तम्यन्तं समस्यते । अक्षेषु शौण्डः प्रवीण इति अक्षशौण्डः ॥

**पात्रेसमितादयो निपात्याः ॥** पात्रेसमिताः । गेहेशूरः । गेहेनर्दी ॥

( सुबोधिनी )–पात्रे समितादयो निपात्याः ॥ पात्रे समितादयः शब्दा निन्दार्थे निपात्यन्ते ॥ पात्रेसमिताः । भोजनसमये एव संगता भवन्ति न तु कार्ये । संपूर्वादिणः क्तः ॥ गेहेनर्दी । 'नर्द, शब्दे ।' अस्माण्णिनिः । सप्तम्या अलुगत्र । एषां समासान्तरे प्रवेशो न भवतीत्यर्थः ॥

( तत्त्वदी० )–पात्रेसमिता इति ॥ भोजनसमय एव संगतो न तु कार्यकाल इत्यर्थः । अत्र सप्तम्या अलुक् ॥

**नञ् ॥** नञि पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञः समासो भवति ॥

( सुबोधिनी )–नञ् ॥ द्वौ नञौ प्रसज्यपर्युदासार्थकौ । पर्युदासार्थकस्य नञ एकार्थीभावे समासः व्यपेक्षायां तु वाक्यमेव भवति । प्रसज्यप्रतिषेधार्थस्य तु क्रिययैवान्वयो न नाम्ना । अनन्वयेऽपि क्वापि नाम्ना समासः । इणतन्यकर्तरीति ज्ञापकात् । कर्तरि न भवतीति तदर्थः । तेनासूर्यंपश्या राजदारा इत्यादि सिद्धम् । तदन्यतद्विरुद्धतदभावा इति त्रयो नञोऽर्थाः । "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ॥ अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥ १ ॥" इति केचित् । यथा । अब्राह्मणः । अपा-

पम्। अनश्वः। अनुदरा कन्या। अपशवः। अधर्मः। नञ्समासो हि अर्थाभावेऽव्ययीभावेन सह विकल्प्यते। अद्भुतायामसांहितामिति वार्तिकप्रयोगात्॥

(तत्त्वदी०)—**नञीति**॥ पर्युदासप्रसज्यार्थत्वेन नञो द्विविधत्वात्पर्युदासार्थस्योत्तरपदेनान्वयात्समासः। व्यपेक्षायां वाक्यमपि। प्रसज्यार्थस्य तु क्रिययैवान्वयादुत्तरपदेनान्वयाभावान्न समासः॥ नन्वेवमसूर्यपश्यानि मुखानीत्यादौ कथं समास इति चेत्सत्यम्। इणुतन्यकर्तरीत्यत्र हि न हि कर्तरीत्यर्थात्प्रसज्यार्थस्य समासदर्शनादनन्वयेऽपि क्वचित्समासः॥

**ना॥ समासे नञो नस्यादेशः॥ धर्मविरुद्धोऽधर्मः। ज्ञानविरुद्धमज्ञानम्॥**

(सुबोधिनी)—**ना**॥ न अ इति च्छेदः॥ आख्यातान्ते परेऽपि समासे नञो नकारस्याऽदादेशो भवति निन्दार्थे॥ अपचसि त्वं जाल्म। कुत्सितं पचसीत्यर्थः॥

(तत्त्वदी०)—**ना** इति॥ न अ इति च्छेदः॥ अत्र नञीत्यनुवर्तते इत्याह—**नञ** इति॥ ञकारस्यानुबन्धत्वादकारस्याकारादेशे प्रयोजनाभावात्सर्वादेशः नञ्समासस्तु प्रतिपदोक्तोऽपि नानुवर्तते। अविघ्नमित्याद्यव्ययीभावेऽविद्य इत्यादिबहुव्रीहौ चाव्याप्तेः परिभाषायास्त्वनित्यत्वात्॥

**अन्स्वरे॥ समासे नञो नस्याऽन् स्यात्स्वरे॥ अश्वादन्योऽनश्वः। संशयस्यासंभवोऽसंशयः॥**

(सुबोधिनी)—**अन्स्वरे**॥ अनश्व इत्यत्र ङ्णनो ह्रस्वादिति द्वित्वं तु न अनपीतिनिर्देशात्॥

(तत्त्वदी०)—**अनश्व** इति॥ अनपत्यादिलिङ्गात् ङ्णनो ह्रस्वादिति द्वित्वं न॥

**निरनुबन्धकस्य तु नानौ॥ नाकः। नक्षत्रम्। नक्रः। नासत्यौ। नैकधा॥**

(सुबोधिनी)—**निरनुबन्धकस्य तु नानौ**॥ निरनुबन्धस्य अश्च अन् च आनौ तौ न भवतः। सानुबन्धकस्य तु भवत इत्यर्थः॥ नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकनैकधाशब्देषु नशब्देन समासः। न भ्राजते इति नभ्राट् क्विबन्तः॥ न पातीति नपात्। शत्रन्तः॥ न वेत्तीति नवेदाः। असुप्रत्ययान्तः॥ सत्सु साधव इति सत्याः। ण्यप्रत्ययः। न सत्या असत्याः न असत्याः नासत्याः॥ न मुञ्चतीति नमुचिः। नाम्युपधात्किरीति किः॥ न कुलमस्येति नकुलः॥ न खं छिद्रमस्येति नखः॥ न स्त्रीपुंसौ इति नपुंसकः। स्त्रीपुंसयोः पुंसकभावो निपातनात्॥ न क्षरतीति नक्षत्रम्। 'क्षर, संचलने।' भ्वादिः। निवासगत्योस्तुदादिः। अनयोः क्षत्रमिति निपात्यते॥ न क्रामतीति नक्रः। डप्रत्ययः॥ न अकमस्मिन्निति नाकः॥ न एकधा नैकधा॥ इति तत्पुरुषः॥

( तत्त्वदी० )–**निरनुबन्धकस्येति** ॥ निर्गतोऽनुबन्धो यस्येति निरनुबन्धकः । स चासौ नश्चेति स तस्येत्यर्थः । लक्ष्यानुसाराच्च व्यवस्था । तस्य समासो नित्यः ॥ इति तत्पुरुषः ॥

**चार्थे द्वन्द्वः ॥ समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः ॥ तत्रेश्वरं गुरुं च भजस्वेति । प्रत्येकमेकक्रियाभिः संबन्धः समुच्चयः॥ बटो भिक्षामट गां चानयेति । क्रमेण क्रियाद्वयसंबन्धोऽन्वाचयः ॥ मिलितयोरेकत्रान्वय इतरेतरयोगः ॥ संहतिः समाहारः । तत्राद्ययोर्न समासोऽस्त्यनन्वयात् ॥**

( सुबोधिनी )–चार्थे द्वन्द्वः ॥ चस्यार्थश्चार्थः । जातावेकवचनम् । चार्थाश्चत्वारः। प्रत्येकमेकक्रियाभिसंबंधः समुच्चयः । एकमेकं प्रतीति प्रत्येकम् । परस्पर निरपेक्षस्यानेकस्यैकक्रियायामन्वय इत्यर्थः । त्वमीश्वरं गुरुं च भजस्वेत्यत्र भजनक्रियायाम् ईश्वरगुरुभ्यां प्रत्येकं संबन्धात्समुच्चयः । एकक्रियायामित्युपलक्षणम् । तेन परस्परनिरपेक्षस्यानेकस्यैकस्मिन् संबन्धिन्यन्वयः समुच्चय इत्यर्थः । राज्ञो गजश्चाश्वश्चात्र द्रव्ये द्रव्ययोः समुच्चयः । पटः शुक्लो रक्तश्चात्र द्रव्ये गुणयोः समुच्चयः । रक्तः पटः कम्बलश्चात्र गुणे द्रव्ययोः समुच्चयः। अनेके एकस्मिन्समुच्चीयन्ते इति समुच्चयः ॥ क्रमेण क्रियाद्वयसंबन्धोऽन्वाचयः । परस्परनिरपेक्षस्यानेकस्य क्रियाद्वयेऽन्वयोऽन्वाचयः । यदैकस्य प्राधान्यात् तदनुरोधेन त्वितरदन्वाचीयते तदाऽन्वाचयः। यथा । भिक्षामट गां चानयेत्यत्र भिक्षाटनस्य प्रधानता गवानयनस्य त्वानुषंगिकता ॥ मिलितयोर्मिलितानां वैकक्रियान्वय इतरेतरयोगः । परस्परसापेक्षकस्यानेकस्यैकक्रियायामन्वय इतरेतरयोगः॥ संहतिः समाहारः। परस्परसापेक्षस्यानेकस्य समूहरूपेणान्वयः समाहार इत्यर्थः॥चार्थे द्वंद्वसमासो भवति । द्वौद्वावर्थौ अभिदधात्येकोऽस्मिन्निति द्वन्द्वः । वहूनामप्युपलक्षणमिदम् । ननु द्वन्द्वसंज्ञायाः किं प्रयोजनम् । उच्यते । द्वन्द्वतत्पुरुषयोः परपदस्यैव लिङ्गमिति द्वन्द्वेऽल्पस्वरप्रधानेकारोकारान्तानां पूर्वनिपात इति 'ऋतां द्वन्द्वे' पूर्वपदस्यात्वमित्यादि च प्रयोजनम् ॥ आद्ययोः समुच्चयान्वाचययोः समासो न । परस्परसाहित्याभावात् अन्ययोः समाहारेतरेतरयोगयोः समासोऽस्ति । परस्परसाहित्यसत्त्वात् । इतरेतरयोगे साहित्यं विशेषणं द्रव्यं विशेष्यम् । समाहारे तु साहित्यं प्रधानं द्रव्यं विशेषणं साहित्यप्रधानत्वादेकवचनम् ॥

( तत्त्वदी० )–**चार्थे द्वन्द्व** इति ॥ चस्यार्थश्चार्थस्तस्मिन् । जातावेकवचनम् । चार्थानाह–**समुच्चयेत्यादि** ॥ यदा परस्परनिरपेक्षाः पदार्थाः एकस्मिन्संबन्धिनि समुच्चीयन्ते तदा समुच्चयः । तत्स्वरूपं निरुपपन्नान्वययोग्यत्वाभावात्समासाभाव इत्याह–**तत्रे**ति ॥ तेष्वर्थेष्वित्यर्थः । ईश्वरं भजस्व गुरुं च भजस्वेत्येकस्या एव भजनक्रियाया ईश्वरगुरुभ्यां प्रत्येकं संबन्धात्समुच्चयः । यदा त्वेकस्यांप्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते तदन्वाचयः । तदाह–**बटो भिक्षामटे**ति अत्र प्रधानं भिक्षाटन गवानयनं त्वप्रधानम् । अदर्शनाद्गामानयन्नप्यटत्येव भिक्षां भिक्षामटंस्तु न गामानयति । अट-

न्नपि नान्विष्य गामानयति ॥ **मिलितयो**रिति ॥ परस्परसापेक्षयोरवयवप्राधान्येन एकक्रियायामन्वय इत्यर्थः ॥ **संहति**रिति ॥ परस्परापेक्षाणामेवावयवभेदतिरोधानेन संहतिरूपेणान्वय इत्यर्थः ॥ **तत्राद्ययो**रिति ॥ समुच्चयान्वाचययोरित्यर्थः ॥ **अनन्वयादि**ति ॥ अन्वयः परस्परसापेक्षत्वं तदभावादित्यर्थः ॥

**( द्वन्द्वेऽल्पस्वरप्रधानेकारोकारान्तानां पूर्वनिपातः ) पटुश्च गुप्तश्च पटुगुप्तौ । अग्निश्च मारुतश्च अग्निमारुतौ । भोक्तृभोग्यौ । धवखदिरौ । इन्द्राश्वरथाः । तापसपर्वतौ ॥**

( सुबोधिनी )—द्वन्द्वेऽल्पस्वरप्रधानेकारोकारान्तानां पूर्वनिपातः ॥ द्वन्द्वेऽल्पस्वरशब्दस्य पूर्वनिपातः ॥ यथा धवश्च खदिरश्च धवखदिरौ । समासेनोक्तार्थत्वाच्चशब्दाप्रयोगः ॥

( तत्त्वदी० )—पूर्वनिपातनियममाह—**द्वन्द्व** इति ॥ अल्पस्वरत्वं समस्यमानपदापेक्षया ॥ **पटुश्चे**ति ॥ समासेनोक्तार्थत्वाच्चशब्दाप्रयोगः । अनेकप्राप्तावेकस्य नियमः ॥ हरिहरगुरवः हरिगुरुहराः ॥

**( द्वन्द्वे स्वराद्यदन्तस्य पूर्वनिपातः ) ईशकृष्णौ ॥**

( सुबोधिनी )—द्वन्द्वे स्वराद्यदन्तस्य पूर्वनिपातः ॥ स्वर आदिर्यस्य स स्वरादिः अत् अन्ते यस्य सोऽदन्तः स्वरादिश्चासावदन्तश्च स्वराद्यदन्तस्तस्य ॥ ईशश्च कृष्णश्च ईशकृष्णौ । बहूनां द्वन्द्वे नियमो न । इन्द्राश्वरथाः-अश्वरथेन्द्रा वा ॥ प्रधानस्य पूर्वनिपातो यथा तापसश्च पर्वतश्च तापसपर्वतौ ॥ भोक्ता च भोग्यश्च भोक्तृभोग्यौ ॥ इकारोकारान्तानां पूर्वनिपातो यथा । पटुश्च गुप्तश्च पटुगुप्तौ । अग्निमारुतौ ॥

( तत्त्वदी० )—**स्वराद्यदन्तस्ये**ति ॥ स्वर आदिर्यस्य स स्वरादिः । अत् अन्ते यस्य सोऽदन्तः सचासौ स चेति स तस्येत्यर्थः ॥

**( देवताद्वन्द्वे पूर्वपदस्याकारः ) इन्द्राबृहस्पती । अग्नाविष्णू ॥**

( सुबोधिनी )—देवताद्वन्द्वे पूर्वपदस्याकारः ॥ इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती । अग्निश्च विष्णुश्च अग्नाविष्णू ॥

( तत्त्वदी० )—**देवताद्वन्द्वे पूर्वपदस्याकार** इति ॥ यत्तु प्राचा देवताद्वन्द्वे पूर्वपदस्य दीर्घ इत्युक्तम् । यच्च तद्वासुदेवेन व्याख्यातं देवतावाचकानामन्योऽन्यद्वन्द्वसमासे पूर्वपदान्त्यस्वरस्य दीर्घो वक्तव्य इत्यर्थ इति । तत्सर्वमनाकरत्वादुपेक्षितम् ॥ तथा च पाणिनिः । देवताद्वन्द्वे च । इद्वोत्तरपदे परे आनङ् । अग्नाविष्णू इत्यादावात्मेवोक्तवान् ॥

**( क्वचिन्न ) अग्निवायू ॥**

( सुबोधिनी )—क्वचिन्न ॥ देवताद्वन्द्वे पूर्वपदस्यात्वं न भवति क्वचित् ॥ अग्निवायू व खग्नी वा ॥

( तत्त्वदी० )–क्वचिन्नेति ॥ ज्ञापकसिद्धं न सर्वत्रेत्युक्तेः । ज्ञापितं चैतत् द्वन्द्वसंज्ञासामर्थ्यात् । अन्यथा चार्थत्वेनैव व्यवहारः स्यात् ॥ इति द्वन्द्वः ॥

## ( ईदग्नेः सोमवरुणयोः )

( सुबोधिनी )–ईदग्नेः सोमवरुणयोः ॥ आत्वस्यापवादोऽयम् । देताद्वन्द्वे पूर्वपदस्य अग्नेरीत् स्यात् सोमवरुणयोः परयोः ॥

## ( अग्न्यादेः सोमादीनां सस्य षः ) अग्नीषोमौ । अग्नीवरुणौ ॥

( सुबोधिनी )–अग्न्यादेः सोमादीनां सस्य षः ॥ अग्नीषोमौ । आदिशब्दात् अग्निः स्तूयतेऽस्मिन्नित्यधिकरणे क्विप् । अग्निष्टुत् यज्ञविशेषः ॥ अग्नीनां स्तोम इति अग्निष्टोमः सोमयज्ञस्य संस्थास्वाद्यसंस्था । ज्योतिःष्टोमः । अयःष्टोमः । अंगुलिषङ्गः । भीरुष्ठानमित्यादि ॥ प्राणितूर्यसेनाङ्गानां द्वन्द्व एकवत् । प्राणितूर्यसेनानामङ्गानि प्राणितूर्यसेनाङ्गानि तेषाम् अङ्गशब्दः प्रत्येकमन्वेति द्वन्द्वान्ते श्रूयमाणत्वात् । प्राण्यङ्गानां प्राण्यङ्गैः सह सेनाङ्गानां सेनाङ्गैः सह यो द्वन्द्वः स एकवद्भवति । एकेन द्वन्द्वे त्वेकवद्भावो न । यथा । मार्दङ्गिकाश्वारोहौ । प्राण्यङ्गे । दन्ताश्च ओष्ठौ च दन्तोष्ठम् । तूर्याङ्गे मृदङ्गवादनशिल्पमस्येत्यर्थे इकप्रत्ययः । णितो वेति वृद्धिः ॥ प्रणुवन्ति स्तुतिं कुर्वन्त्यनेनेति पणवो गायनपटहः । 'णु, स्तुतौ' अस्मात्स्वराद् इत्यप्रत्ययः । सोपसर्गस्य निपातनाद्रेफलोपे नस्य णत्वे च पणव इति पणववादनशिल्पमस्येतीकप्रत्ययः । मार्दङ्गिकश्च पाणविकश्च मार्दङ्गिकपाणविकम् ॥ सेनाङ्गे । रथैन चरन्ते इति रथिकाः । चरतीत्यर्थे इकः । रथिकाश्च अश्वारोहाश्च तेषां समाहारो रथिकाश्वारोहम् ॥ ननु समाहारस्यैकत्वादेकत्वे सिद्धे किमर्थमिदम् । उच्यते । प्राण्यङ्गादीनां प्राण्यङ्गादिभिः समाहार एव यथा स्यादिति नियमार्थमिति ॥ प्राणिवर्जजातिवाचिनां क्षुद्रजन्तूनां च द्वन्द्वे एकवत् । धानाश्च शष्कुल्यश्च तासां समाहारो धानाशष्कुलि ॥ प्राणिनां तु विट्शूद्राः ॥ द्रव्यजातिरेवात्र ग्राह्या । तेन रूपरसावित्यादौ न ॥ यूकाश्च लिक्षाश्च यूकालिक्षम् ॥ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । वृक्षादिसप्तानां भेदकानां पर्यायाणामश्ववडवेत्यादीनां त्रयाणां च द्वन्द्व एकवद्वा ॥ भूताश्च अशोकाश्च तेषां समाहारो भूताशोकम्–भूताशोकाः ॥ रुरवश्च पृषताश्च तेषां समाहारो रुरुपृषतम्–रुरुपृषताः ॥ कुशाश्च काशाश्च तेषां समाहारः कुशकाशम्–कुशकाशाः ॥ व्रीहयश्च यवाश्च तेषां समाहारो व्रीहियवम्–व्रीहियवाः ॥ दधि च घृतं च तयोः समाहारो दधिघृतम्-दधिघृते ॥ गावश्च महिषाश्च तेषां समाहारो गोमहिषम्-गोमहिषाः ॥ शुकाश्च बकाश्च तेषां समाहारः शुकबकम्–शुकबकाः ॥ अश्वश्च वडवा च तयोः समाहारोऽश्ववडवमश्ववडवौ । अश्ववडवयोर्द्वन्द्वः ॥ पूर्वा च अपरा च तयोः समाहारः पूर्वापरम्-पूर्वापरे ॥ अधरा च उत्तरा च तयोः समाहारोऽधरोत्तरम्-अधरोत्तरे ॥

फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिर्द्वन्द्व एकवत्। एषां बहुवचनान्ता प्रकृतिः कारणं यस्य स बहुप्रकृतिर्द्वन्द्वे एकवद्भवतीति नियम्यते । बदराणि च आमलकानि चेति बदरामलकम् । प्राणिवर्जजातीत्यनेन एकवद्भावे प्राप्ते नियमः ॥ रथिकाश्चाश्वारोहाश्चेति रथिकाश्वारोहम् । सेनाङ्गत्वान्नित्ये एकवद्भावे प्राप्ते नियमः ॥ प्लक्षाश्च न्यग्रोधाश्चेति प्लक्षन्यग्रोधम्। विभाषा वृक्षेति वैकल्पिके एकवद्भावे प्राप्ते नियमः॥ रुरवश्च पृषताश्चेति रुरुपृषतम् ॥ शुकाश्च बकाश्चेति शुकबकम् । विभाषेति वैकल्पिके एकवद्भावे प्राप्ते नियमः ॥ नकुलपर्यन्ताः क्षुद्रजन्तवः ॥ यूकाश्च लिक्षाश्चेति यूकालिक्षम् । क्षुद्रजन्तूनामित्येकवद्भभावे प्राप्ते नियमः ॥ व्रीहयश्च यवाश्चेति व्रीहियवम् ॥ कुशाश्च काशाश्चेति कुशकाशम् । अत्रापि विभाषेति वैकल्पिके एकवद्भावे प्राप्ते नियमः । द्विप्रकृतौ एकवचनान्तयोर्द्वयोः प्रकृत्योर्द्वन्द्वे नास्त्येकवद्भाव इत्यर्थः ॥ बदरामलके रथिकाश्वारोहौ प्लक्षन्यग्रोधौ रुरुपृषतौ शुकबकौ यूकालिक्षे व्रीहियवौ कुशकाशाविति ॥ ऋतां द्वन्द्वे पूर्वपदस्यात्वमिति वक्ष्यमाणेनात्वम् । उद्गातृनप्तृ इत्यनेनार् । होतापोतारौ ॥ पञ्चसु इत्यनेनार् । मातापितरौ ॥ पुत्रे चेति वक्ष्यमाणेनात्वम् । पितापुत्रौ ॥ मातरपितरौ निपात्यौ । मातृशब्दस्यारङादेशो निपात्यते ॥ उदीचामाचार्याणां मते त्यदादीनि शिष्यन्ते सर्वैः सहोक्तौ । सर्वैः शब्दैः सहोक्तानि त्यदादीनि शिष्यन्तेऽन्यानि पदानि लुप्यानि लुप्यन्ते द्वन्द्वे इत्यर्थः ॥

## ( समाहारे एकवद्भावः )

( सुबोधिनी )–समाहारे एकवद्भावः ॥ एकवद्भवनमित्येकवद्भावः ॥

**एकत्वे द्विगुद्वन्द्वौ** ॥ नपुंसकलिङ्गौ भवतः ॥ पाणिपादम् । मार्दङ्गिकपाणविकम । रथिकाश्वारोहम्।पदकक्रमकम् ।:बदरामलकम् । शशकुशपलाशम् ॥

( सुबोधिनी )–एकत्वे द्विगुद्वन्द्वौ ॥ एकत्वे वर्तमानौ द्विगुद्वन्द्वौ नपुंसकलिङ्गौ भवतः ॥ एकत्वे किम् । पञ्चकपालाः पुरोडाशाः ॥ परवल्लिङ्गापवादोऽयं विधिः ॥ पाणी च पादौ च तेषां समाहारः पाणिपादम् ॥ मार्दङ्गिकश्च पाणविकश्च तयोः समाहारो मार्दङ्गिकपाणविकम् ॥ रथिकाश्च अश्वारोहाश्च तेषां समाहारो रथिकाश्वारोहम् ॥ पदान्यधीते इति पदकः । क्रममधीते इति क्रमकः । कप्रत्ययः पदकश्च क्रमकश्च तयोः समाहारः पदकक्रमकम् ॥ बदराणि च आमलकानि च तेषां समाहारो बदरामलकम् ॥ शशाश्च कुशाश्च पलाशाश्च तेषां समाहारः शशकुशपलाशम् ॥ अथ समासान्तप्रत्ययः । चवर्गान्तात् दषहान्ताच्च टः समाहारे । वाक्त्वचम् । वाक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् ॥ समाहारे किम् । प्रावृट्शरदौ । अहःपूर्वाद्रात्रिशब्दादः समाहारे । अहश्च रात्रिश्च तयोः समाहारोऽहोरात्रः । रात्राह्नाहान्ता इति पुंस्त्वम् ॥ ॥ इति द्वन्द्वः ॥

**संख्यापूर्वो द्विगुः ॥ तद्धितार्थे । पञ्चकपालः ॥**

( सुबोधिनी )–संख्यापूर्वो द्विगुः ॥ संख्या पूर्वा यस्य स संख्यापूर्वः समासो द्विगुसंज्ञो भवति ॥ समाससंज्ञाफलं समासप्रत्यययोरिति । द्विगुसंज्ञाफलमेकत्वे द्विगुद्वन्द्वाविति ॥ द्वौ गावौ शब्दौ यस्मिन्नित्यन्वर्थसंज्ञाबलात् द्वयोरेव द्विगुसमाहारे द्विगावेकवद्भावः । तद्धितार्थे द्विगौ तु नैकवद्भावः । किं तु विशेषनिघ्नता ॥ पञ्चसु कपालेषु संस्कृतः पुरोडाशः संस्कृतार्थेऽण् । लुग्वहुत्वे क्वचिदित्यत्र क्वचिद्ग्रहणात् द्विगोर्लुगनपत्ये द्विगोर्निमित्तस्याऽनपत्यार्थस्य स्वरादेस्तद्धितस्य लुग्वक्तव्य इत्यर्थो बोध्यः । पञ्चकपालः ॥

( तत्त्वदी० )–संख्यापूर्वो द्विगुरिति ॥ संख्या पूर्वा यस्य सः । संख्याशब्देन च तद्वाचक पदमुच्यते । तथा च संख्यावाचकपदयोर्योऽन्वयः स समाससंज्ञो द्विगुसंज्ञश्चेत्यर्थः ॥ समाहारेऽत ईवित्यस्य वक्ष्यमाणत्वात् समाहारे एवायमिष्यते तद्धितार्थे च । यत्तूत्तरपदे वेत्युक्त्वा पञ्च गावो धनमस्येति विगृह्य पञ्चगवधन इति सिद्धये वासुदेवादिभिः पाणिनीयानुसारेणोत्तरपदविषयत्वमप्यस्योक्तम् । तदिहानुपयोगीत्युपेक्षितम् । तत्र तस्य स्वरार्थत्वात् स्वरस्यात्राव्युत्पादनात् ॥ पञ्चानां गवां समाहारः पञ्चगवम् टाडका इत्यः।एतद्धनमस्येति द्विगुगर्भवहुव्रीहिणा गतार्थत्वाच । अत्राहुः । द्वयोः पुत्रो द्विपुत्रः । द्वौ च दश च द्वादश । द्वौ पुत्रौ यस्य स द्विपुत्र इत्यादौ परत्वात्तत्पुरुषद्वन्द्वबहुव्रीहिसंज्ञा भवन्तीति । अत्रेदमवधेयम् । द्विगुसमासस्य समाहारतद्धितार्थयोरेव विधानादत्र तदभावादेवाप्राप्तौ किं परत्वानुधावनक्लेशेनेति विभाव्यम् ॥ **पञ्चकपाल** इति ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः ॥ एवं चतुरो वेदानधीते चतुर्वेदः । अत्र संस्कृतादिष्वणादिः तस्य लुग्वहुत्वे क्वचिदिति लुक् । यद्वा तद्धितार्थस्य द्विगुनैवोक्ततद्धितार्थयोरप्रयोगः ॥

**समाहारेऽत ईप् द्विगुः ॥ समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारान्तादीप् प्रत्ययः ॥ दशानां ग्रामाणां समाहारो दशग्रामी । पञ्चाग्नि ॥**

( सुबोधिनी )–समाहारोऽत ईप् द्विगुः ॥ समाहरणं समाहारः । भावे घञ् । समाहारे राशीकरणेऽर्थे द्विगुः समासो भवति । अदन्तात् द्विगोः स्त्रियामीप ॥ दशानां ग्रामाणां समाहारो दशग्रामी । यस्येत्यलोपः ॥ ननु विप्रकीर्णानामेकत्र राशीकरणं समाहारार्थः स च दशानां ग्रामाणां न संभवति । उच्यते । एकक्रियायां समन्वयात् बुद्ध्या राशीकरणस्य संभवात् । उदाहरणम् ॥ पञ्च अग्नयः समाहृता इति पञ्चाग्नि ॥

( तत्त्वदी० )–समाहारेऽत ईप् द्विगुरिति ॥ औत्तराधर्यम् । राशीकरणं समाहारः ॥

**( क्वचिन्न ) पञ्चपात्रम् । चतुर्युगम् । त्रिभुवनम् ॥ आवन्ताद्वा ॥ पञ्चखट्वी–पञ्चखट्वम् ॥**

( सुबोधिनी )—क्वचिन्न ॥ क्वचिददन्तात् द्विगोरीप् न स्यात् ॥ पञ्चानां पात्राणां समाहारः पञ्चपात्रम् ॥ चतुर्णां युगानां समाहारः चतुर्युगम् ॥ त्रयाणां भुवनानां समाहारः त्रिभुवनम् ॥ समासान्तानग्रे वक्ष्यामि ॥ इति द्विगुः ॥

( तत्त्वदी० )—अत्र वौर्गुणादित्यतो वेत्यस्यानुवृत्तेस्तस्य च व्यवस्थितत्वात्—क्वचिन्नेति ॥ दशग्रामीति ॥ ननु विप्रकीर्णानामेकत्र राशीकरणं समाहारार्थः । स च ग्रामाणामसंभवतीति चेत् न एकक्रियायां समन्वयाद् बुद्ध्या राशीकरणसंभवात् ॥ एकापूपमित्यत्र तु दरिद्रस्यैकस्मिन्ननेकत्वारोपेणारोपितवहुत्वाश्रये समाहारे द्विगुः ॥ त्रिलोकनाथ इत्यादौ तु त्र्यवयवो लोकस्त्रिलोकस्तन्नाथ इत्येवं प्रकारः ॥ इति द्विगुः ॥

## बहुव्रीहिरन्यार्थे ॥ अन्यपदार्थे योऽन्वयः स बहुव्रीहिसंज्ञः ॥

( सुबोधिनी )—बहुव्रीहिरन्यार्थे ॥ बहुव्रीहिरित्यस्य पूर्वोच्चारणसामर्थ्यादन्यपदार्थाभावेऽपि बहुव्रीहिः कुत्रचिद्भवति ॥ यथा द्वौ वा त्रयो वा द्वित्राः ॥ पञ्च वा षट् वा पञ्चषाः ॥ द्वौ वा दश वा द्विदशाः ॥ त्रयश्च दश वा त्रिदशाः ॥ डमत्ययान्तानेतानग्रे प्रवक्ष्यामि । पदानां समासविधानादन्यशब्देन पदं गृह्यते । अन्यस्य समस्यमानपदाद्भिन्नस्य पदस्यार्थः अन्यार्थस्तस्मिन् अमादावित्यस्यानुवर्तनात् द्वितीयाद्यन्तं विशेषणं कर्तव्यम् । अत्र हि द्वितीयाद्यन्तपदेन प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः कर्मादिभिरभिधीयते । प्रथमान्तेन तु प्रातिपदिकार्थमात्रम् । यद्यपि त्रिकपक्षे संख्याप्रत्ययार्थस्तथापि तस्याः प्रकृत्यर्थं प्रति विशेषणत्वान्न प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः प्रथमान्तस्यास्ति । एवं च द्वितीयान्ताद्यर्थे इति स्थितम् । तथा परिशेषात् समस्यमानं प्रथमान्तमेव लब्धम् । अथाप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितम् । अनेकं प्रथमान्तमप्रथमार्थेऽन्यार्थे वर्तमानं समस्यते स बहुव्रीहिः। समस्यमानपदेतरपदार्थे समस्यमानपदानामन्वयो बहुव्रीहिरित्यर्थः ॥ कण्ठेकाल इत्यादिस्तु बहुव्रीहौ विशेषणसप्तम्यन्तक्तान्तानामिति ज्ञापकाद्भवतीत्यर्थः । अतः स द्विधा । समानाधिकरण एव व्यधिकरणस्तु कुत्रचित् संभवति समानाधिकरणे वैयधिकरण्यस्यान्याय्यत्वमित्युक्तत्वात् । किं च बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत एतदर्थं सूत्रेऽन्यग्रहणं कृतम् । द्वितीयाद्यन्तमन्यपदार्थं क्रमेणोदाहरति । प्राप्तमुदकं यमिति समासोक्तत्वात् कर्मादौ प्रथमा । प्राप्तोदको ग्रामः । ऊढो रथो येन स ऊढरथोऽनड्वान् । उपहृतः पशुर्यस्मै स उपहृतपशू रुद्रः । उद्धृत ओदनो यस्याः सा उद्धृतौदना स्थाली । पीतम् अम्बरं यस्य स पीताम्बरः । वीरः पुरुषो यस्मिन् स वीरपुरुषो ग्राम इति ॥

( तत्त्वदी० )—बहुव्रीहिरन्यार्थे इति ॥ अन्यस्य समस्यमानपदाद्भिन्नस्य पदस्यार्थः अन्यार्थस्तस्मिन् । यद्वा । अन्यस्याः प्रथमाभिन्नाया विभक्तेरर्थः अन्यार्थस्तस्मिन् । यद्वा तन्त्रादिना उभयमपि । तथा चाप्रथमार्थे बहुव्रीहिः ॥

## ( बहुव्रीहौ विशेषणसप्तम्यन्तक्तान्तसर्वादिसंख्यानां पूर्वनिपातः )

**बहु धनं यस्य स बहुधनः । अस्तिधनः । लम्बकर्णः । कण्ठेकालः । वहेगडुः । कृतकटः । सर्वप्रियः । द्विपुत्रः ॥**

( सुबोधिनी )—**बहुव्रीहौ विशेषणसप्तम्यन्तक्तान्तसर्वादिसंख्यानां पूर्वनिपातः** ॥ बहुव्रीहौ विशेषणं सप्तम्यन्तं क्तान्तं च पूर्वं प्रयोज्यम् । विशेषणं यथा । बहुधनः ॥ अस्तीति सत्तार्थेऽव्ययम् । अस्ति धनं यस्य सोऽस्तिधनः ॥ लम्बौ कर्णौ यस्य स लम्बकर्णः ॥ सप्तम्यन्तं यथा । कण्ठे कालः । वहेगडुः । सप्तम्या अलुगत्र ॥ क्तान्तं यथा । कृतः कटो येन स कृतकटः ॥ सर्वादिः संख्या च यथा । बहुव्रीहौ सर्वादिगणः संख्या च पूर्वं प्रयोज्या । सर्वः प्रियो यस्य स सर्वप्रियः । द्वौ पुत्रौ यस्य स द्विपुत्रः ॥ त्रिपुत्रः ॥

( तत्त्वदी० )—बहुव्रीहिसंज्ञाप्रयोजनं पूर्वनिपातनियममाह—**बहुव्रीहा**विति ॥ सर्वादिसंख्ययोस्तु संख्यायाः । त्र्यन्यः ॥ संख्ययोस्त्वल्पीयस्याः । द्वित्राः॥ **बहुधन** इति । अतद्गुणसंविज्ञानोऽयम् ॥ तस्यान्यपदार्थस्य गुणाः विशेषणानि समस्यमानपदार्थाः कार्यभाक्त्वेन संविज्ञायन्तेऽस्मिन्निति तद्गुणसंविज्ञानस्तदन्योऽतद्गुणसंविज्ञानः ॥ **अस्तिधन** इति ॥ अस्तीति तिबन्तप्रतिरूपकमव्ययम् । समासे भिन्नां शक्तिं मन्वानानां वैयाकरणानां मतं द्रढयितुं वाक्यसमासयोः शाब्दबोधे भेदः प्रदर्श्यते । तथाहि । प्राप्तमुदकं यमित्यस्य यत्कर्मकप्राप्तिकर्तृ उदकमिति बोधः ॥ प्राप्तोदक इत्यस्य उदककर्तृप्राप्तिकर्मीभूतो ग्राम इति बोधः ॥ एवं प्राप्तानन्दः ऊढो रथो येनेत्यस्य यदाश्रयवाहनसाध्यदेशान्तरं प्राप्त्याश्रयो रथ इति बोधः ॥ ऊढरथ इत्यस्य तु रथकर्मकवाहनाश्रयोऽश्वः ॥ छिन्नः वृक्षो येनेत्यस्य यत्करणकद्वैधीभावाश्रयो वृक्षः । छिन्नवृक्ष इत्यस्य वृक्षाश्रयद्वैधीभावानुकूलव्यापाराश्रयः कुठारः ॥ उपहृतः पशुर्यस्मै इत्यस्य यदुद्देश्यक उपहरणाश्रयः पशुरिति । उपहृतपशुरित्यस्य तु पशुकर्मकोपहारोद्देश्यो रुद्रः एवं दत्तार्घः सूर्यः ॥ उद्धृतमन्नं यस्मादित्यस्य यदवधिकोद्धरणाश्रयान्नमिति बोधः ॥ उद्धृतान्न इत्यस्यान्नकर्मोद्धरणावधिः कटाहः ॥ पीतमम्बरं यस्येत्यस्य यत्संबन्धि पीताभिन्नमम्बरमित्यर्थः ॥ पीताम्बर इत्यस्य तु पीताभिन्नाम्बरः स्वामीत्यर्थः ॥ एवं चित्रगुरित्यस्य ॥ वीराः पुरुषा यस्मिन्नित्यस्य यदाधारसत्ताश्रयवीराभिन्नः पुरुष इति बोधः ॥ वीरपुरुष इत्यस्य तु वीराभिन्नपुरुषसत्ताश्रयो ग्राम इति ॥

## ( क्वचिन्न ) चन्द्रशेखरः । पद्मनाभः । दन्तजातः । ऊरुभिन्नः ॥

( सुबोधिनी )—**क्वचिन्न** ॥ बहुव्रीहौ क्वचिद्विशेषणं सप्तम्यन्तं क्तान्तानां पूर्वनिपातो न भवति ॥ चन्द्रः शेखरे यस्य स चन्द्रशेखरः ॥ पद्मं नाभौ यस्य स पद्मनाभः । टाडका इत्यनेनाप्रत्ययः ॥ दन्ता जाता यस्य स दन्तजातः ॥ ऊरू भिन्नौ यस्य स ऊरुभिन्नः ॥

( तत्त्वदी० )—**क्वचिन्ने**ति ॥ ज्ञापकसिद्धस्यासार्वत्रिकत्वादिति भावः ॥

**( क्वचिद्वा )** प्रियगुडः। गुडप्रियः। आहिताग्निः। अग्न्याहितः। अस्युद्यतः। उद्यतासिः।

( सुबोधिनी )–क्वचिद्वा॥ बहुव्रीहौ क्वचिद्विशेषणं सप्तम्यन्तक्तान्तानां वा पूर्वनिपातो भवति॥ प्रियो गुडो यस्य स प्रियगुडः। गुडप्रियो वा॥ आहितः अग्निर्येन स आहिताग्निः अग्न्याहितो वा॥ असिरुद्यतो येन स उद्यतासिः अस्युद्यतो वा॥

**( नञ्दुःसुभ्यः प्रजामेधयोरसुक् )** अप्रजाः। दुर्मेधाः॥ सुप्रजाः॥

( सुबोधिनी )–नञ्दुःसुभ्यः प्रजामेधयोरसुक्॥ नञादिभ्यः पराभ्यां प्रजामेधाभ्यामसुक् प्रत्ययः स्याद्बहुव्रीहौ॥ न प्रजा यस्य सः ना इत्यनेनादादेशः। असुक्प्रत्यये यस्य लोप इत्यलोपः। अत्वसोरिति दीर्घः। अप्रजाः॥ दुःप्रजाः॥ सुप्रजाः॥ अमेधाः॥ दुर्मेधाः॥ सुमेधाः। अल्पमेधस इति काशिका॥

( तत्त्वदी० )–नञ्दुःसुभ्य इति॥ नञ्दुःसुभ्यः परयोः प्रजामेधाशब्दयोरसुगागमो बहुव्रीहावित्यर्थः॥ अप्रजा इति॥ न प्रजा यस्येति विग्रहेऽसुकि यस्येत्यालोपे अत्वसोः साविति दीर्घे रूपसिद्धिः। एतच्च प्राचामनुरोधेन। वस्तुतस्तु प्रजामेधाभ्यामसित्येव वक्तुमुचितम्। तथा चासप्रत्यय एव नत्वागमः। एतेन यद्यस्यासुक उकारानुबन्धित्वान्नितो नुमिति नुम् प्राप्नोति तथापि वादीपोः शतुरित्यतो वानुकर्षणान्नेति वासुदेवोक्तिः प्रत्युक्ता॥

**( धर्मादन् )** सुधर्मा। रूपवती भार्या यस्य॥

( सुबोधिनी )–धर्मादन्॥ धर्मशब्दादन् प्रत्ययः स्यात्॥ द्विपदबहुव्रीहौ सुष्ठु धर्मो यस्य स सुधर्मा॥ ननु अकारो व्यर्थः नप्रत्ययेनैव रूपसिद्धेरिति चेत्। उच्यते। धर्मं करोत्याचष्टे वेति धर्मनाम्नोर्णिडित्करणे इति ञ्यन्तात् क्विपि धर्मिति। परमो धर्मः यस्य एकदेशविकृतस्यानन्यत्वात् अन्। स परमधर्मा। इत्याद्यर्थमकारोच्चारणं बोध्यम्॥

( तत्त्वदी० )–धर्मादिति॥ केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरन्प्रत्यय इत्यर्थः केवलात्किम्। परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत्। यत्तु वासुदेवेनोक्तम्। वक्तव्यत्वात्केवलात्पदाद्यः केवलो धर्मशब्दस्तस्मादन्प्रत्ययो वक्तव्य इत्यर्थः॥ तेनेह न। परमः स्वो धर्मः परमः स्वधर्मो वा यस्य स परमस्वधर्म इत्यत्र तन्न। आद्ये परमस्व इत्यस्य कर्मधारयेणैकपद्यात्केवलमस्त्येव। अन्ते धर्मशब्दस्य केवलविशेषणत्वं व्यर्थम्। धर्मशब्दस्य बहुव्रीह्यवयवीभूतपूर्वपदात्परत्वस्याभावात्। उक्तं च दीक्षितैरपि संदिग्धसाध्यधर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः। एवं परमस्वधर्मेत्यपि साध्वेवेति॥

**अन्यार्थे॥ स्त्रीप्रत्ययान्तस्यान्यार्थे वर्तमानस्य ह्रस्वः॥**

( सुबोधिनी )–अन्यार्थे॥ अन्यार्थे गौणत्वे वर्तमानस्य स्त्रीप्रत्ययान्तस्य नाम्नो ह्रस्वो भवति॥ स्त्रीप्रत्ययस्येति किम्। अतिलक्ष्मीः। अतिचमूः॥ गौणत्वे किम्।

राजकुमारी । ब्रह्मविद्या ॥ किं च नपुंसकात्स्यमोर्लुगित्यतो लुगित्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तथाहि । अन्यः तद्धितस्यार्थे वर्तमानं यत् स्त्रीप्रत्ययान्तं तदवयवस्य स्त्रीप्रत्ययस्य लुक् स्यात् । यथा पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः ॥ पञ्चभिर्ब्राह्मणीभिः क्रीतः पञ्चब्राह्मणः ॥ पञ्चभिरिन्द्राणीभिः क्रीतः पञ्चेन्द्रः ॥ पञ्च अग्नाय्यो देवताऽस्येति पञ्चाग्निः ॥ पञ्च मनाय्यो देवताऽस्येति पञ्चमनुः ॥ अत्र हि संख्यापूर्वो द्विगुरित्यनेन तद्धितार्थे द्विगुः ततोऽण् प्रत्ययः तस्य लुग्बहुत्वे क्वचिदित्यनेन लुक् स तद्धितार्थे गौणस्य स्त्रीप्रत्ययस्यानेन लुक् क्रियते इत्यर्थः ॥ रूपवती भार्या यस्येति लौकिकविग्रहः ॥

( तत्त्वदी० )—**अन्यार्थे** इति ॥ अन्यस्यार्थः अन्यार्थस्तस्मिन् वर्तमानस्येत्यध्याहार्यं कारकविभक्तेः क्रियान्वयस्य नियमात् । ह्रस्वो वेत्यतो ह्रस्वानुवृत्तेः स्वरस्येति लभ्यते । त्रिचतुरोः स्त्रियामित्यनुवृत्तं तच्च विहितविशेषणमित्याशयेनाह—**स्त्रीप्रत्ययान्तस्येत्यादि** ॥ अन्यार्थे किम् । राजकुमारी ॥ स्त्रीप्रत्ययान्तस्येति किम् । अतिलक्ष्मीः ॥ स्त्रीप्रत्ययान्तस्येति समासविशेषणाद्विधाफलमित्यादौ न ह्रस्वः । न चात्रान्यार्थत्वमेव कथमिति चेच्छृणु । अन्यार्थवृत्तित्वं हि गौणत्वम् । तच्चात्राप्यस्त्येव । अत्रोत्तरपदार्थस्यैव प्राधान्यात्पूर्वपदार्थस्य गौणत्वस्वीकारात् वेत्यस्याप्यनुवृत्तेस्तस्य च व्यवस्थितत्वाश्रयणाद्बहुश्रेयसीत्यादौ न । यत्तु प्राचोक्तं स्त्रीलिङ्गस्येति । यच्च वासुदेवेन व्याख्यातं त्रिचतुरोः स्त्रियामित्यतो विभक्तिविपरिणामेन स्त्रिया इति षष्ठ्यन्तमनुवर्तते इति । तन्न । अतिलक्ष्मीरित्यादावतिव्याप्तेः ॥

**पुंवद्वा ॥ समासे समानाधिकरणे स्त्रीलिङ्गे परे पूर्वस्योक्तपुंस्कस्य स्त्रीलिङ्गस्य पुँल्लिङ्गस्येव रूपम् ॥ रूपवद्भार्यः उक्तपुंस्कस्य किम् । छायाद्वितीयः । गङ्गाभार्यः ॥**

( सुबोधिनी )—**पुंवद्वा** ॥ उक्तः पुमान् येन तदुक्तपुंस्कं तस्योक्तपुंस्कस्य स्त्रीवाचकप्रत्ययान्तस्य नाम्नः पुंवाचकस्येव रूपं भवति समानाधिकरणे स्त्रीलिङ्गे समासस्य चरमावयवे रूढपदमुत्तरपदं तस्मिन्नुत्तरपदे सति ॥ एकविभक्त्यन्तानाम् एकार्थनिष्ठत्वं समानाधिकरणत्वम् ॥ किं च यद्यत्र उक्तः पुमान् तदुक्तपुंस्कमित्युच्यते । तर्हि कुटीभार्यः । द्रोणीभार्य इत्यादावतिप्रसंगः स्यात् । कुटीद्रोणीशब्दाभ्यामर्थान्तरे पुँल्लिङ्गस्याप्युक्तत्वात् । तथा च । "कुटः कोटे शिलाकुट्टे घटे गेहे कुटी सुरा । चित्रगुच्छे कुंभदासी कूटं पूर्द्वारयंत्रयोः" इति हैमः ॥ "द्रोणः पार्थगुरौ काके माने द्रोणी तु नीवृति । नौभेदे शैलसंधौ च" इति हैमः ॥ उक्तपुंस्कस्येति किम् । छायाद्वितीयः ॥ गङ्गा भार्या यस्य स गङ्गाभार्यः । अत्रानयोर्नित्यस्त्रीत्वम् । अलौकिकविग्रहे रूपवती सु भार्या सु इति अन्यार्थे इत्यनेन ह्रस्वः पुंवद्वेत्यनेनेपो निवृत्तिः ॥

**( ऊप्रत्ययान्तस्य न ) वामोरूभार्यः ॥**

( सुबोधिनी )—ऊङ्प्रत्ययान्तस्य न ॥ उक्तपुंस्कस्य ऊङ्प्रत्ययान्तस्य स्त्रीलिङ्गस्य पुंवद्भावो न भवति समानाधिकरणे स्त्रीलिङ्गे परे ॥ वामोरूः भार्या यस्य स वामोरूभार्यः संहितशफलक्षणवामसहितसहादेरित्यूप्रत्ययः ॥

**( पूरणार्थप्रत्ययान्ते प्रियादौ च न )** कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । कल्याणीप्रियः ।

( सुबोधिनी )—पूरणार्थप्रत्ययान्ते प्रियादौ च न ॥ उक्तपुंस्कस्य स्त्रीलिङ्गस्य पुंवद्भावो न भवति समानाधिकरणे स्त्रीलिङ्गे पूरणार्थप्रत्ययान्ते प्रियादौ च परे ॥ अलौकिकविग्रहे कल्याणी सु पञ्चमी सु इति । अन्यार्थे इत्यनेन ह्रस्वः । पूरणार्थे पञ्चादेर्मट् इति मट्प्रत्ययः । पूरणार्थप्रत्ययान्ते इत्यनेन कल्याणी इत्यत्र पुंवद्भावो न । ततः समासान्तप्रत्ययः । यस्येतीकारलोपे ततः स्त्रियामाप् । कल्याणीपञ्चमाः ॥ प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामा अबला तनया । षोडश प्रियादयः ॥ कल्याणी प्रिया यस्य स कल्याणीप्रियः ॥

( तत्त्वदी० )—पुंवद्वेति ॥ वाशब्दस्य व्यवस्थित्वाश्रयणादप्रत्ययान्तस्य नेत्यादिकं दर्शयति—कल्याणीपञ्चमा इति ॥

**( तरतमचरट्कल्पदेश्यदेशीयरूपपाशादौ पुंवत् )** दर्शनीयतरा । दर्शनीयतमा । दर्शनीयचरी । दर्शनीयपाशा ॥

( सुबोधिनी )—तरतमचरट्कल्पदेश्यदेशीयरूपपाशादौ पुंवत् ॥ एषु परेषु स्त्रियाः पुंवद्भवति ॥अतिशयेन दर्शनीयेति दर्शनीयतरा । दर्शनीयतमा । तरतमेयस्विष्ठा इति तरतमौ॥भूतपूर्वा दर्शनीयेति दर्शनीयचरी । भूतपूर्वे चरडिति चरट् । टृङ्नित इतीप् ॥ ईषन्न्यूना दर्शनीयेति दर्शनीयकल्पा । दर्शनीयदेशीया । ईषदसमाप्तौ कल्पदेश्यदेशीया इति कल्पदेशीयौ ॥ प्रशस्ता दर्शनीयेति दर्शनीयरूपा । प्रशंसायां रूप इति रूपः ॥ कुत्सिता दर्शनीयेति दर्शनीयपाशा । कुत्सायां पाश इति पाशः ॥ आदिशब्दात् त्रतस्जातीयथाथ्यादयो ज्ञेयाः । बह्वीषु बहुत्र बहुतः । पट्वी प्रकारवती पटुजातीया । प्रकारे जातीय इति जातीयप्रत्ययः ॥ बहुधा । किंसर्वादिबहुभ्यः प्रकारे धा ॥ अजाभ्यो हिता अजथ्या । अजाविभ्यां थ्य इति थ्यप्रत्ययः ॥

( तत्त्वदी० )—दर्शनीयतरेति अतिशयेन दर्शनीयेति विग्रहः ॥

**शसि बह्वल्पार्थस्य पुंवत् ॥** बह्वीभ्यो देहि बहुशः । अल्पशः ॥

( सुबोधिनी )—शसि बह्वल्पार्थस्य पुंवत् ॥ बह्वल्पार्थस्य स्त्रीप्रत्ययान्तस्य पुंवद्भावो भवति । शसि बह्वीभ्य इति बहुशः । अल्पाभ्य इत्यल्पशः । बह्वल्पार्थात्कारकादिति शस् ॥

**त्वतलोर्गुणवचनस्य ॥** शुक्लाया भावः शुक्लत्वम्। शुक्लता ॥

( सुबोधिनी )—त्वतलोर्गुणवचनस्य ॥ गुणवचनस्य शब्दस्य पुंवद्भावो भवति त्वतलोः परयोः ॥

( तत्त्वदी० )—त्वतलोर्गुणवचनस्येति ॥ गुणवचनस्येति किम्। कर्त्र्या भावः कर्त्रीत्वम् ॥

**कुक्कुट्यादीनामण्डादिषु ॥** कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृगपदम्। मृगक्षीरम्। काकशावः ॥

( सुबोधिनी )—कुक्कुट्यादीनामण्डादिषु ॥ कुक्कुट्यादीनां पुंवद्भावो भवत्यण्डादिषु परतः कुक्कुट्या अण्डमिति कुक्कुटाण्डम्। मृग्याः पदमिति मृगपदम्। मृग्याः क्षीरमिति मृगक्षीरम्। काक्याः शाव इति काकशावः ॥

**सर्वादेः समासादौ पुंवत् ॥** दक्षिणस्याः पूर्वस्या अन्तरालं मध्ये या दिक् सा दक्षिणपूर्वा ॥ सर्वा प्रधानमस्येति सर्वमयः। सर्वां करोति सर्वकरः ॥

( सुबोधिनी )—सर्वादेः समासादौ पुंवत् ॥ सर्वादेर्गणस्य पुंवद्भावो भवति समासादौ। आदिशब्दात् कृत्तद्धितयङाद्यन्तधातुषु च ॥ समासे यथा। दक्षिणस्याः पूर्वस्याश्च दिशोर्मध्ये या दिक् सा दक्षिणपूर्वा ॥ तद्धिते यथा। सर्वा प्रधानमस्येति प्राचुर्यविकारप्राधान्यादिषु मयडिति मयट्। सर्वमयः ॥ कृति यथा। सर्वां करोतीति सर्वकरः इखखीति खः। खिति पदस्येति मुम् ॥ यङाद्यन्तधातुषु यथा। सर्वामिच्छतीति काम्यश्चेति काम्यप्रत्ययः। सर्वकाम्यः ॥

( तत्त्वदी० )—समासादाविति ॥ समासादिवृत्तावित्यर्थः। तथा च कृत्तद्धितसमासैकशेषधातुसंज्ञाप्रयोजकप्रत्ययेष्वित्यर्थः ॥

**यङ्मानिनोः पुंवत् ॥** एनीवाचरति एतायते। दर्शनीयां मन्यते दर्शनीयमानी चैत्रः ॥

( सुबोधिनी )—यङ्मानिनोः पुंवत् ॥ एतयोः परतः स्त्रीलिङ्गस्य पुंवद्भवति ॥ एनीवाचरतीति कर्तुर्यङिति यङि ईपो निवृत्तौ तन्निमित्तकस्य नत्वस्यापि निवृत्तिः। ये इति दीर्घः। एतायते ॥ दर्शनीयां मन्यते इति मनेः कर्त्तरि णिनिः। दर्शनीयमानी। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति। स्वभिन्नां कांचिद्दर्शनीयां मन्यते या सा दर्शनीयमानिनी। इहापि पुंवत्। त्रण ईप् ॥

( तत्त्वदी० )—एतायत इति ॥ ईपो निवृत्तौ तन्निमित्तकस्य नत्वस्यापि निवृत्तिः ॥

**( अकतद्धिताभ्यां कोपधस्य न )** पाचिकाभार्यः। रसिकाभार्यः ॥

( सुबोधिनी )—अकतद्धिताभ्यां कोपधस्य न ॥ अकतद्धितप्रत्ययाभ्यां कृत्वा कोपधस्य स्त्रीलिङ्गस्य पुंवद्भावो न भवति ॥ पचतीति ण्वुल्तृचाविति ण्वुल् युवोरित्यकादेशे आवत इत्याप् । काप्यत इतीत्वम् । पाचिका भार्या यस्य सः पाचिकाभार्यः । अन्यार्थे इति ह्रस्वः॥ रसोऽस्त्यस्या इति अइकौ च मत्वर्थे इतीकः । रसिका भार्या यस्येति रसिकाभार्यः । अन्यार्थे इति ह्रस्वः ॥ एवं मद्रेषु भवा मद्रिका । भवार्थे कः । आप् । काप्यत इतीत्वम् । मद्रिकेवाचरतीति मद्रिकायते । मद्रिकां मन्यते इति मद्रिकामानिनी । अत्र यङ्मानिनोरिति पुंवद्भावे प्राप्ते निषेधः ॥

**संज्ञापूरणार्थप्रत्यययोर्न** ॥ दत्ताभार्यः । पञ्चमीभार्यः ॥

( सुबोधिनी )—संज्ञापूरणार्थप्रत्यययोर्न ॥ अनयोः पुंवद्भावो न भवति । दत्ता भार्या यस्येति दत्तां मन्यते इति स्त्रियां पुंसि च संज्ञाभूतोऽयं दत्तशब्दो भाषितपुंस्कोऽस्ति । दत्ताभार्यः ॥ दत्तामानिनी ॥ पञ्चमी भार्या यस्येति । कुत्सिता पञ्चमीति पंचमीभार्यः ॥ पञ्चमीपाशा । पञ्चादेर्मडिति संख्यापूरणे मट् । पञ्चमीपाशेत्यत्र तरतमेति प्राप्ते निषेधः ॥

**वृद्धिहेतोस्तद्धितस्यारक्तविकारार्थस्य न** ॥ माथुरीभार्यः ॥ अरक्ते किम् । कषायेण रक्ता कन्था काषायी । काषायी कन्था यस्य स काषायकन्थः ॥ विकारे किम् । हेम्नो विकारो हैमी मुद्रिका यस्येति हैमसुद्रिकः ॥

( सुबोधिनी )—वृद्धिहेतोस्तद्धितस्यारक्तविकारार्थस्य न ॥ आदिस्वरस्येति सूत्रेण विहिता या वृद्धिस्तस्या हेतुर्यस्तद्धितोऽरक्तविकारार्थो यस्य सोऽरक्तविकारार्थस्तस्यारक्तविकारार्थस्य तद्धितस्य पुंवद्भावनिषेधो न भवति ॥ मथुरायां भवा माथुरी । भवार्थेऽण् आदि स्वरस्येति वृद्धिः । त्रण इतीप् । माथुरी भार्या यस्य स माथुरीभार्यः । माथुरीवाचरतीति माथुरीयते । कर्तुर्यङिति यङ् । माथुरीं मन्यते इति माथुरीमानिनी । अत्र पुंवद्भावो न ॥ वृद्धिहेतोरिति किम् । मध्ये भवा मध्यमा । मध्यान्म इति भवार्थे मः । मध्यमा भार्या यस्य स मध्यमभार्यः ॥ तद्धितस्येति किम् । काण्डं लुनातीति काण्डलावी । कार्येऽणित्यण् । कृदयम् । काण्डलावी भार्या यस्य स काण्डलावभार्यः॥ आदिस्वरस्येति विहिता वृद्धिरिति किम् । तत्परिमाणमस्या अस्तीति तावती । एतत्किंयत्तद्भ्य इति वतुः । यत्तदेतदामित्याकारः । तावती भार्या यस्य स तावद्भार्यः ॥ अरक्तविकारार्थस्येति किम् । कषायेण रक्ता काषायी । कारकात् क्रियायुक्ते इति तेन रक्तमित्यर्थेऽण् । त्रण इतीप् । काषायकन्थः । पुंवद्भावादीपो निवृत्तिः ॥ हेम्नो विकारो हैमी । विकारार्थेऽण् । त्रण इतीप् । हैमी मुद्रिका यस्य स हैममुद्रिकः । पुंवद्भावः ॥

( तत्त्वदी० )—वृद्धिहेतोरिति ॥ यस्मिन् ताद्धिते आदिस्वरस्य वृद्धिरित्यर्थः ॥

**( युटि सति पुंवत् ) वैयाकरणभार्यः ॥**

( सुबोधिनी )—युटि सति पुंवत् ॥ वृद्धिहेतोस्तद्धितस्यारक्तविकारार्थस्य स्त्रीप्रत्ययान्तस्य पुंवद्भावो भवति युडागमे कृते सति ॥ व्याकरणमधीते वेत्ति वा इत्यर्थे अण् । न संधिय्वोरिति युट् । पश्चाद्वृद्धिः । ञ्ण इतीप् । वैयाकरणी भार्या यस्य स वैयाकरणभार्यः ॥ सुष्ठु अश्वो यस्य स स्वश्वः । स्वश्वस्यापत्यं स्त्री ऊठ्वृद्धी । सौवश्वी भार्या यस्य स सौवश्वभार्यः ॥

**( स्वाङ्गादीपोऽमानिनि न ) सुकेशी भार्या यस्य स सुकेशीभार्यः। मानिनि तु सुकेशमानिनी ॥**

( सुबोधिनी )—स्वाङ्गादीपोऽमानिनि न ॥ स्वाङ्गात्परस्य ईप्प्रत्ययस्य पुंवद्भावो न भवति । मानिन्शब्दे परे तु पुंवद्भावो भवतीत्यर्थः ॥ सुष्ठु केशा यस्याः सा स्वाङ्गादितीप् सुकेशी भार्या यस्य स सुकेशीभार्यः ॥ स्वाङ्गात्किम् । पट्वी भार्या यस्य स पटुभार्यः ॥ ईप् इति किम् । न विद्यंते केशा यस्याः सा अकेशा । सहनञितीब्निषेधः । अकेशा भार्या यस्य स अकेशभार्यः । पुंवद्भावः । सुकेशी मन्यते यः स सुकेशमानी । स्त्री तु सुकेशमानिनी ॥

**( जातिवाचिनः स्त्रीप्रत्ययान्तस्य न ) शूद्राभार्यः । ब्राह्मणीभार्य इत्यादि ॥**

( सुबोधिनी )— जातिवाचिनः स्त्रीप्रत्ययान्तस्य न ॥ जातिवाचिशब्दात्परस्य स्त्रीप्रत्ययस्य पुंवद्भावो न भवति ॥ शूद्रा भार्या यस्य स शूद्राभार्यः । अजादेरित्याप् ॥ ब्राह्मणी भार्या यस्य स ब्राह्मणीभार्यः । जातेरितीप् ॥

**गोः ॥ गोशब्दस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति ॥ पञ्च गावो यस्य स पञ्चगुः ॥**

( सुबोधिनी )—गोः ॥ अन्यार्थे वर्तमानो यो गोशब्दस्तदन्तस्य नाम्नो ह्रस्वो भवति ॥ पञ्च गावो यस्य स पञ्चगुः । पञ्चभिर्गोभिः क्रीतः स पञ्चगुः । क्रीतार्थे इकस्य लुक् वा ॥ अन्यार्थे किम् । अतिशयितो गौरतिगोः ॥

( तत्त्वदी० )—गौरिति ॥ अन्यार्थे यो गोशब्दस्तदन्तस्य नाम्नो ह्रस्व इत्यर्थः ॥ यथाश्रुते तु गोक्षीरमित्यत्रापि गोशब्दस्योत्तरार्थे वर्तमानत्वेनान्यार्थत्वाद्ध्रस्वः प्रसज्येत । गोरन्यार्थे इत्येकयोगस्तु न कृतः स्त्रीप्रत्ययस्याग्रहणप्रसंगात् । गोश्चेत्यपि गौरवादेव नोक्तम् ॥

**( संख्यासुव्याघ्रादिपूर्वस्य पादशब्दस्यान्तलोपः ) सहस्रं पादा यस्य स सहस्रपात् ॥**

( सुबोधिनी )—संख्यासुव्याघ्रादिपूर्वस्य पादशब्दस्यान्तलोपः ॥ संख्यासुपूर्वस्य व्याघ्रादिपूर्वस्य च पादस्यान्तस्य लोपः स्यात् बहुव्रीहौ । समासान्तोऽयमादेशो ज्ञेयः । अन्यथा समासान्तः कः प्रसज्येत । सहस्रं पादा यस्य स सहस्रपाद् ॥

**( शसादौ स्वरे तद्धितयस्वरयोरीपीकारे च पदादेशः ) सहस्रपदः । व्याघ्रपदी कुले । वैयाघ्रपदः । वैयाघ्रपद्यः । द्विपाद्, द्विपादौ, द्विपादः । सुपात् । व्याघ्रपात ॥ टाडकाः । मध्याह्नः पूर्वाह्णः ॥**

( सुबोधिनी )—शसादौ स्वरे तद्धितयस्वरयोरीपीकारे च पदादेशः ॥ पादशब्दस्य पदादेशः स्यात् । शसादौ स्वरे ॥ सहस्रपदः ॥ ईपि । द्विपदी । पादो वेतीप् ॥ ईकारे व्याघ्रपदी कुले ॥ तद्धितयस्वरे वैयाघ्रपद्यः । ण्ययुटौ ॥ तद्धितस्वरे वैयाघ्रपदः । अण्युटौ ॥ अन्यपदार्थाभावे समानाधिकरणाऽभावे च क्वचिद्बहुव्रीहिर्भवति । यथा । पुत्रेण सहवर्तते यः स सपुत्रः । सह इत्यस्य तृतीयान्तेन समासः । संख्येयार्थया संख्यया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते स बहुव्रीहिर्भवति । दशानां समीपे ये सन्ति ते उपदशाः । नव एकादशवेत्यर्थः । उपशब्दो हि समीपे समीपिनि च वर्तते । समीपेऽव्ययीभावः । समीपिनि तु बहुव्रीहिर्भवतीति ॥ आसन्ना विंशतेर्ये सन्ति ते आसन्नविंशाः । डप्रत्ययः विंशतेस्तिलोपो डितीति लोपः ॥ अदूरात्रिंशत इति अदूरत्रिंशाः ॥ अधिकाश्चत्वारिंशत इति अधिकचत्वारिंशाः ॥ द्वौ वा त्रयो वा द्वित्राः । चार्थेऽयं बहुव्रीहिः ॥ द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः ॥ सुप्रत्ययार्थेऽयं बहुव्रीहिः ॥ दिङ्नामान्यन्तराले समस्यन्ते स बहुव्रीहिः । दक्षिणपूर्वा ॥ तेषु गृहीत्वा इदं युद्धं प्रवृत्तमित्यर्थे तेन प्रहृत्येदं युद्धं प्रवृत्तमित्यर्थे च सप्तम्यन्तयोस्तृतीयान्तयोश्च पदयोः समासो भवति क्रियाव्यतिहारे द्योत्ये स बहुव्रीहिः । अत्र पूर्वपदस्य दीर्घः वक्ष्यमाणः समासान्त इप्रत्ययः इप्रत्ययान्तस्याव्ययसंज्ञा च । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तमिति केशाकेशि ॥ दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति दण्डादण्डि ॥ मुष्टिभिर्मुष्टिभिः प्रहृत्येदं युद्धं प्रवृत्तमिति मुष्टामुष्टि ॥ बाहुषु बाहुषु गृहीत्वा इदं युद्धं प्रवृत्तमिति वोऽव्यस्वरे इत्यवादेशः । बाहूबाहवि ॥ अथ समासान्तप्रत्यया उच्यन्ते ॥ पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात् प्रमाण्यन्ताच्च बहुव्रीहेरः ॥ कल्याणीपञ्चमा रात्रयः । अत्र संख्यापूरणे मट् । पूरणार्थप्रत्ययान्ते इति पुंवद्भावे निषेधः ॥ स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । नित्यस्त्रीत्वान्न पुंवद्भावः ॥ प्रमाति अनयेति प्रमाणी । करणे युट् । प्रधाने कार्यसंप्रत्यय इति न्यायात् प्रधाने पूरणार्थप्रत्ययान्तस्त्रीलिङ्ग एवाप्रत्ययः पुंवद्भावनिषेधश्च । रात्रिः पूरणार्थप्रत्ययवाच्या चेत्युक्तोदाहरणे मुख्या । अन्यत्र तु कल्याणपञ्चमीकः पक्षः । क एव ॥ नक्षत्रार्थे नेतृशब्दान्तात् बहुव्रीहेरः । मृगो मृगशीर्षनक्षत्रं नेता नायको यासां ताः मृगनेत्रा रात्रयः ॥

अन्तर्बहिःपूर्वपदाल्लोमन्नन्ताद्बहुव्रीहेरः । अन्तर्लोमः । बाहिर्लोमः । नो वेति टिलोपः ॥ नासिकान्ताद्बहुव्रीहेरः । स्थूलपूर्वात्तु न । द्रुरिव नासिका यस्येति सहादेरिति नासिकाया नस् द्रुणसः । खरा नासिका यस्य स खरणसः । उभयत्र संज्ञायाम्रः । असंज्ञायां खुरखराभ्यां नासिकाया वा अप्रत्ययः । खुरणसः—खुरणाः । खरणसः—खरणाः ॥ उपसर्गाच्च नासिकायाम् अः असंज्ञायाम् । उन्नता नासिका यस्य स उन्नसः । प्रगता नासिका यस्य स प्रणसः ॥ स्थूलपूर्वात्किम् । स्थूलनासिकः ॥ सुप्रातिसुश्वसुदिवशारिकुक्षिचतुरस्रैणीपदाजपदप्रोष्ठपदा अप्रत्ययान्ता निपात्यन्ते बहुव्रीहौ । शोभनं प्रातरस्येति सुप्रातः । रनिवृत्तिर्निपातनात् ॥ शोभनं श्वोऽस्येति सुश्वः । स्निवृत्तिर्निपातनात् ॥ शोभनं दिवाऽस्येति सुदिवः ॥ शारेरिव कुक्षिरस्येति शारिकुक्षः ॥ चतस्रोऽश्रयोऽस्येति चतुरस्रः । तालव्यशस्य दन्त्यः सो निपातनात् ॥ एण्या एव पादा यस्येति एणीपदः ॥ अजपदः । प्रोष्ठपदः । निपातनात्पदादेशः ॥ नञ्दुःसुपूर्वपदाद्धलिसक्थिशक्त्यन्ताद्बहुव्रीहेरो वा । अहलः—अहलिः । असक्थः—असक्थिः । अशक्तः—अशक्तिः ॥ ईदूदन्तस्त्रीलिङ्गोत्तरपदाच्च बहुव्रीहेः कः । कल्याणी पञ्चमी रात्रिर्यस्मिन् स कल्याणपञ्चमीकः पक्षः ॥ बहवः कर्तारो यस्य स बहुकर्तृकः प्रासादः ॥ उरःप्रभृत्यन्ताद्बहुव्रीहेः कः । व्यूढं विशालमुरो यस्य स व्यूढोरस्कः ॥ प्रियं सर्पिर्यस्य स प्रियसर्पिष्कः । वाचस्पत्यादित्वात् सषौ । इहोरःप्रभृतौ पुमान् अनड्वान् पयः नौ लक्ष्मीरित्याद्येकवचनान्तादेव कः । द्विवचनबहुवचनान्तेभ्यस्तु वैकल्पिकः को भवतीति विवेकः । यथा । द्विपुमान्—द्विपुंस्कः । नञ्पूर्वादर्थात्को बहुव्रीहौ । अनर्थकः ॥ इन्नन्ताद्बहुव्रीहेः कः स्त्रियाम् । बहुदण्डिका नगरी ॥ अनुक्तसमासान्ताद्बहुव्रीहेर्वाकः महायशस्कः—महायशाः ॥ आवन्तस्य वा ह्रस्वः के । बहुमालाकः—बहुमालकः । काभावे बहुमालः ॥ ईयसुप्रत्ययान्तोत्तरपदाद्बहुव्रीहेर्न कः । बहवः श्रेयांसोऽस्य स बहुश्रेयान् । अन्यार्थे इति ह्रस्वे प्राप्ते ईयसुप्रत्ययान्तस्य स्त्रीलिङ्गस्य ह्रस्वो न बहुव्रीहौ । बह्व्यः श्रेयस्योऽस्य स बहुश्रेयसी ॥ बहुव्रीहौ किम् । अतिश्रेयसिः ॥ संख्येये बहुव्रीहेर्डो न तु बहुगणाभ्याम् । उपदशाः ॥ बहुगणाभ्यां किम् । उपबहवः । उपगणाः ॥ स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेष्टः । टित्वादीप् । दीर्घे सक्थिनी यस्य स दीर्घसक्थः । जलजाक्षी ॥ स्वाङ्गवाचीति किम् । दीर्घसक्थि शकटम् । स्थूलानि अक्षीणि पर्वाणि यस्याः सा स्थूलाक्षा वेणुयष्टिः । वक्ष्यमाणो डप्रत्ययः ॥ अङ्गुल्यन्ताद्बहुव्रीहेष्टो दारुण्यर्थे । पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादिविक्षेपकाष्ठम् ॥ बहुव्रीहेरिति किम् । द्वे अङ्गुली प्रमाणमस्या इति द्व्यङ्गुला यष्टिः ॥ तद्धितार्थे द्विगुः । प्रमाणे द्वयसट् दघ्नट् मात्रट् इति मात्रट् तस्य लुक् च । ततः समासान्तोऽप्रत्ययः ॥ दारुणि किम् । पञ्चाङ्गुलिर्हस्तः ॥ द्वित्रिपूर्वात् मूर्द्धान्ताद्बहुव्रीहेष्टः । द्विमूर्द्धः त्रिमूर्द्धः । नो वेति टिलोपः ॥ सुहरिततृणसोमेभ्यः परात् जम्भादन् बहुव्रीहौ । ‘जम्भो भक्ष्ये च

दन्ते च ' इति ॥ शोभनो जम्भो यस्य स सुजम्भा । हरितजम्भा । तृणं जम्भो भक्ष्यं यस्य तृणमिव जम्भा दन्ता अस्येति वा तृणजम्भा । सोमजम्भा ॥ व्याधयोगे दक्षिणेर्मे-त्यन्नन्तं निपात्यते बहुव्रीहौ । दक्षिणे ईर्मं व्रणं यस्य स दक्षिणेर्मा मृगः । व्याधेन कृत-व्रण इत्यर्थः॥ क्रियाव्यतिहारे बहुव्रीहेरिः केशाकेशि । मुसलामुसलि । प्रहरणेऽर्थे । द्विद-ण्डि । द्विमुसलि । उभाहस्ति । उभयाहस्ति । इति इप्रत्ययान्ता निपात्यन्ते बहुव्रीहौ । द्वौ दण्डौ यस्मिन् प्रहरणे तद्द्विदण्डि । द्विमुसलि । उभाहस्ति । उभयाहस्ति । निपात-नाद्वा उभयेति ॥ इति बहुव्रीहिः ॥ अथ द्विगुतत्पुरुषकर्मधारयसमासान्ताः ॥ गोन्ताद्-द्विगुतत्पुरुषकर्मधारयाट्टो न तु तद्धितलुकि ॥ पञ्चगवम् ॥ तद्धितलुकि किम् । पञ्चभि-र्गोभिः क्रीत इति पञ्चगुः । क्रीतार्थे इकस्तस्य लुक् च । देवगवी ॥ परमगवी ॥ संख्या-व्ययादेरङ्गुल्यन्ताद् द्विगुतत्पुरुषकर्मधारयादः । द्वे अङ्गुली प्रमाणमस्येति द्व्यङ्गुलं दारु । प्रमाणे द्वयसज्दघ्नञ्मात्रट् तस्य लुक् च ॥ निर्गतमंगुलिभ्य इति निरङ्गुलम् ॥ एका-ङ्गुला ॥ सर्वैकदेशसंख्यातपुण्यसंख्याव्ययेभ्यो रात्रेरः द्विगुतत्पुरुषकर्मधारये । सर्वा चासौ रात्रिश्चेति रात्राह्नाहान्ता इति पुंस्त्वम् । सर्वरात्रः । रात्रेः पूर्वमिति पूर्वरात्रः । संख्यात-रात्रः । पुण्यरात्रः । द्वयोः रात्र्योः समाहार इति संख्यापूर्वं रात्रमिति क्लीवता । द्विरा-त्रम् । अतिक्रान्तो रात्रिमित्यतिरात्रः ॥ राजाहःसखिभ्यष्टो द्विगुतत्पुरुषकर्मधारये । क-विराजः । उत्तमाहः । रात्राह्नाहान्ता इति पुंस्त्वम् ॥ पुण्याहम् । पुण्यसुदिनाभ्यामिति क्लीवता ॥ कृष्णसखः ॥ पञ्चाह्नम् ॥ मुख्यवाचिन उरसष्टः तत्पुरुषे । अश्वानामुर इत्ये-वेत्यश्वोरसम् । मुख्योऽश्व इत्यर्थः ॥ अनोऽश्माऽयःसरोभ्यष्टो जातिसंज्ञार्थे तत्पुरुषकर्म-धारये । उपानसम् ॥ अमृताश्मः ॥ कालायसः । मण्डूकसरसमिति जातिः ॥ महान-सम् ॥ पिण्डाश्मः ॥ लोहितायसम् ॥ जलसरसमिति संज्ञा ॥ ग्रामकौटाभ्यां तक्ष्णस्त-त्पुरुषकर्मधारये । ग्रामस्य तक्षा ग्रामतक्षः । साधारण इत्यर्थः । कुट्यां भवः कौटः स्वतन्त्रः कौटश्चासौ तक्षा च कौटतक्षः ॥ अतः शुनष्टस्तत्पुरुषे । श्वानमतिक्रान्तो जवे-नेत्यतिश्वो वराहः । अतिश्वी सेनेत्यर्थः ॥ अप्राणिविषयकोपमानवाचिनः शुनष्टस्तत्पुरुषे । आकृष्यतेऽनेन खलादिगतं धान्यमित्याकर्षः । काष्ठविशेषः । आकर्षः श्वेवेति आ-कर्षश्वः ॥ अप्राणिविषयकेति किम् । वानरः श्वेवेति वानरश्वा ॥ उत्तरमृगपूर्वोपमानात् सक्थ्नष्टस्तत्पुरुषे । उत्तरसक्थम् । मृगसक्थम् ॥ पूर्वसक्थम् फलकसक्थम् ॥ नौश-ब्दान्तात् द्विगोष्टो न तु तद्धितलुकि । द्विनावम् त्रिनावम् ॥ न तु तद्धितलुकीति किम् । पञ्चभिर्नौभिः क्रीत इति पञ्चनौः । अत्र क्रीतार्थे इकस्तस्य लुक् च ॥ अर्द्धपूर्वान्नावष्ट स्तत्पुरुषे । नावोऽर्द्धमित्यर्द्धनावम् । क्लीवत्वं लोकात् ॥ खारीशब्दान्ताद्द्विगोरर्द्धपूर्वात् । खार्यन्तात् तत्पुरुषाच्च वा टः द्विखारम् । टाभावे । द्विखारि । क्लीवत्वं लोकात् । अर्द्ध-खारम् ॥ द्वन्द्वतत्पुरुषयोरिति परपदलिङ्गे । अर्द्धखारी ॥ द्विगौ द्वित्रिभ्यामञ्जलेष्टो वा न तु तद्धितलुकि । द्व्यञ्जलम् द्व्यञ्जलिः ॥ न तु तद्धितलुकीति किम् । द्वाभ्यामञ्जलिभ्यां

क्रीत इति द्व्यञ्जलिः ॥ क्रीतार्थे इकस्तस्य लुक् च ॥ ब्रह्मशब्दान्तात्तत्पुरुषाट्टो जानपदेऽर्थे । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः ॥ कुमहद्भ्यां ब्रह्मणष्टो वा तत्पुरुषकर्मधारये । कुत्सितो ब्रह्मा कुब्रह्मः–कुब्रह्मा । महाब्रह्मः महाब्रह्मा । ब्राह्मणपर्यायो ब्रह्मन्शब्दः ॥ संख्यान्तात्तत्पुरुषाड्डः । निर्गतानि त्रिंशत् इति निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति निस्त्रिंशः खड्गः॥ इति द्विगुतत्पुरुषकर्मधारयसमासान्ताः ॥

अथ सकलसमाससाधारणसमासान्ताः ऋक्पूरब्धूःपथामोऽक्षे या धूस्तत्र तु न ॥ ऋचोऽर्द्धमिति अर्द्धर्चः । अर्द्धर्चादय इति पुंस्त्वम् ॥ अनृचवह्वृचशब्दावध्येतर्येव । नेह । अनृक् साम वह्वृक् सूक्तम् । वैकल्पिकः कमत्ययस्तु भवत्येव । अनृक्कम् वह्वृक्कमिति ॥ विष्णोः पूरिति विष्णुपुरम् । क्लीवत्वं लोकात् । विमलापं सरः ॥ द्व्यन्तरुपसर्गेभ्यः कृतसमासान्तस्याऽपस्यादेरीः। द्विर्गता आपो यस्मिन्निति द्वीपम् । अन्तर्गता आपोऽस्मिन्निति अन्तरीपम्।प्रतिकूला आपोऽस्मिन्निति प्रतीपम् । सङ्गता आपोऽस्मिन्निति समीपम् । कथं तर्हि समापो देवयजनमिति । समा आपो यस्मिन्निति समापः । देवा इज्यन्तेऽस्मिन्निति देवयजनम् । यज्ञभूमिरिति ज्ञेयम् । कृतसमासान्तग्रहणान्नेह । स्वप्सरः । पूजनार्थेति निषेधात्समासान्ताभावः ॥ अवर्णान्तादुपसर्गात्कृतसमासान्तस्यापस्यादेरीर्वा । प्रेपम् सान्त परेपम्-प्रापम्-परापम् ॥ अनोः कृतसमान्तस्यापस्यादेरुः। अनुगता आपोऽस्मिन्निति अनूपो देशः । "जलप्रायमनूपं स्यात्" इत्यमरः ॥ राजधुरा ॥ अक्षे इति किम् । अक्षधूः । दृढधूरक्षः । सखिपथो रम्यपथो देशः प्रत्यन्ववपूर्वाभ्यां सामलोमभ्यामः । प्रतिसामम् । अनुसमम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् । बहुव्रीह्यव्ययीभावप्रादिसमासा अत्र ॥ कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरः । कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । द्विभूमः । त्रिभूमः । प्रासादः । वहुव्रीहावेति ॥ संख्याया नदीगोदावरीभ्यामः । पञ्चनदम् । सप्तगोदावरम् । अव्ययीभावे एतौ ॥ नाभेरः । पद्मं नाभावस्येति पद्माकारा नाभिरस्येति वा पद्मनाभः ॥ अचक्षुःपर्यायादक्ष्णोऽप्रत्ययः । गवां किरणानामक्षि रन्ध्रमिवेति गवाक्षः ॥ ब्रह्महस्तिपल्यराजभ्यो वर्चसोऽप्रत्ययः । ब्रह्मवर्चसम् । हस्तिवर्चसम् । पलं मांसमर्हतीति पल्यो मांसभोजी पल्यवर्चसम् । राजवर्चसम् । षष्ठीतत्पुरुषोऽत्र ॥ अवसमन्धेभ्यस्तमसोऽप्रत्ययः । अवहीनं तम इति अवतमसम् । समन्तात् तम इति संतमसम् । अन्धयतीति अन्धम् । 'अन्ध, दृष्ट्युपघाते' । चुरादिरस्मात्पचाद्यप्रत्ययः । अन्धं गाढं तम इत्यन्धतमसम् ॥ श्वसशब्दाद्वसीयः श्रेयोभ्यागमः । वसुशब्दः प्रशस्तवाची तस्मादीयसुप्रत्यये वसीय इति श्वस्शब्दस्तु कालवाच्यप्यत्राशीर्विषयताद्योतकोऽस्ति । श्वोवसीयसम् । श्वःश्रेयसम् । कर्मधारयोऽत्र ॥ अन्ववतप्तेभ्यो रहःशब्दादः । रह इत्यनेनाऽप्रकाशमुच्यते । अनुगतं रह इत्यनुरहसम् । अवहीनं रह इत्यवरहसम् । अनुगतं रहोऽस्मिन्नित्यादि: बहुव्रीहिर्वा । तप्तं च तद् रहश्चेति तप्तरहसम् । परेणानधिगम्यमित्यर्थः ॥ प्रतेरुरस्शब्दादः । उरसि इति प्रत्युरसम् ।

सप्तम्यर्थे अव्ययीभावोऽयम् ॥ अप्रत्ययान्तमनुगवं दीर्घत्वे निपात्यते । अनुगवं यानं गोदैर्घ्यसदृशदैर्घ्योपलक्षितमित्यर्थः ॥ उपसर्गादध्वशब्दादः । प्रगतोऽध्वानमिति प्राध्वो रथः ॥ अचतुरविचतुरसुचतुरत्रिचतुरउपचतुरस्त्रीपुंसधेन्वनडुहऋक्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषऋग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । अप्रत्ययान्ता निपात्यन्ते । अविद्यमानानि चत्वार्यस्येति अचतुरः । विचतुरः । सुचतुरः । त्रयश्चत्वारो वेति त्रिचतुरः । चतुर्णां समीपे ये सन्ति ते उपचतुराः । एते पञ्च बहुव्रीहयः । तेन तत्पुरुषे अचत्वारो विचत्वार इत्येवं भवतीति भावः ॥ स्त्रीपुंसौ ॥ धेन्वनडुहौ ॥ ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । प्राण्यङ्गत्वादेकवद्भावः । दाराश्च गावश्च दारगवम् । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् । निपातनाट्टिलोपः । "जानूरुपर्वाष्ठीवदस्त्रियाम्" इत्यमरः । "सक्थि क्लीबे पुमानूरुः" इति चामरः ॥ पदष्ठीवम् । निपातनात् पादस्य पद् । प्राण्यङ्गत्वादेकवदुभयत्र । नक्तं च दिवा च नक्तंदिवम् । रात्रौ च दिवा च रात्रिंदिवम् । रात्रेर्मान्तत्वं निपातनात् । अहनि च दिवा चेति अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । एते एकादश द्वन्द्वाः ॥ रजः अपि अपरित्यज्येति सरजसम् । साकल्येऽव्ययीभावोऽयम् । बहुव्रीहौ तु रजसा सह वर्तते इति सरजसम् पङ्कजमिति । निश्चितं श्रेय इति निःश्रेयसम् । तत्पुरुष एवायम् । बहुव्रीहौ तु न । निश्चितं श्रेयो येनेति निःश्रेयान् पुरुषः । पुरुषस्यायुः पुरुषायुषम् । तत्पुरुषोऽयम् । द्व्यायुषम् । त्र्यायुषम् । एतौ द्विगू । ऋग्यजुषम् । द्वन्द्वोऽयम् । जातोक्षः । महोक्षः । वृद्धोक्षः । एते त्रयः कर्मधारयाः । शुनः समीपम् उपशुनम् । टिलोपाभावः संप्रसारणं च निपात्यतेऽव्ययीभावे । गोष्ठे श्वेति गोष्ठश्वः । सप्तमीतत्पुरुष एवायम् । षष्ठीतत्पुरुषे तु न । गोष्ठश्वा । पूजनार्थे स्वतिपूर्वकान्नाम्नः समासान्ता न । बहुव्रीहौ तु भवन्ति । सुराजा । अतिराजा । पूजनार्थेति किम् । गामतिक्रान्तोऽतिगवः । बहुव्रीहौ किम् । सुष्ठु सक्थिनी यस्य सः सुसक्थः सुष्ठु अक्षिणी यस्य सः स्वक्षः । टप्रत्ययोऽत्र निन्दार्थककिम्पूर्वान्नाम्नः समासान्ता न । कुत्सितो राजा किंराजा । किंसखा । किंगौः ॥ निन्दार्थकेति किम् । किंराजः । किंसखः । किंगवः । नञ्तत्पुरुषात्समासान्ता न । अराजा । असखा ॥ तत्पुरुषात् किम् । न विद्यते धूर्यस्य तत् अधुरं शकटम् । नञ्पूर्वपथिशब्दाद्वा समासान्तस्तत्पुरुषे । अपथम्–अपन्थाः अपथम् । तत्पुरुषे क्लीबमिति क्लीबत्वम् ॥ तत्पुरुषे किम् । अपथो देशः । बहुव्रीहिरत्र । अपथम् । अर्थाभावेऽव्ययीभावोऽयम् ॥ इति सकलसमाससाधारणाः प्रत्ययाः ॥ अथ प्रकृतमनुसरामः॥अह्नो मध्यमिति मध्याह्नः। अह्नः पूर्वं इति पूर्वाह्णः। कवीनां राजेति कविराजः । कृष्णस्य सखेति कृष्णसखः । राजाहःसखिभ्यष्ट इति टप्रत्ययः ॥

( तत्त्वदी० )–मध्याह्न इति ॥ अह्नो मध्य इति विग्रहे क्वचिदमाद्यन्तस्य परत्वमित्यहन्शब्दस्य परनिपाते नो वेत्यनेनोपधालोपे रूपसिद्धिः । रात्राह्नाहाः पुंसीति नियमात्पुंस्त्वम् ॥

**नो वा ॥** नान्तस्य टेर्लोपः स्वरे यकारे च परे । वाग्रहणात्क्वचिन्न । क्वचिदुपधालोपः ॥ कविराजः । कृष्णसखः । देवगवी । परमगवः । राजपुरम् । एकधुरम् । सर्वधुरम् । वाङ्मनसे । दक्षिणापथः । अहोरात्रः । द्वित्राः । पञ्चषाः । बहुकर्तृकः । बहुलक्ष्मीकः । स्त्रीपुंसौ । ऋक्सामे । महोक्षः । वृद्धोक्षः । द्व्यायुषम् । त्र्यायुषम् । ग्रामतक्षः । फलकसक्थम् । मृगसक्थम् । पूर्वसक्थम् । अर्द्धखारम् । अर्द्धनावम् ॥

( सुबोधिनी )—नो वा ॥ नान्तस्य नाम्नष्टेर्लोपस्तद्धिते ये स्वरे च ॥ अत्र समासान्तास्तद्धितान्तर्भूता ज्ञेयाः । अत्र वेति व्यवस्थार्थम् । तेन क्वचिट्टिलोपः । क्वचिदुपधालोपः । क्वचिन्नोभयम् । टिलोपो यथा । उडुलोम्नोऽपत्यमिति औडुलोमिः ॥ राज्ञः कर्मेति राज्यम् ॥ कविराजः ॥ उपधालोपो यथा । वृत्रघ्नोऽपत्यं वार्त्रघ्नः । तक्ष्णोऽपत्यं ताक्ष्णः । अह्नः पूर्वः पूर्वाह्णः ॥ नोभयं यथा । ब्रह्मणोऽपत्यं ब्राह्मण इत्यादि ॥ देवानां गौर्देवगवी । परमा चासौ गौश्च परमगवी । गोन्ताद् द्विगुतत्पुरुषकर्मधारयाट्ट इति टः ॥ राजपुरम् । एकधुरम् । सर्वधुरः । कर्मधारये पुंवत् । ऋक्पूरब्धूःपथाम इत्यप्रत्ययः ॥ वाक् च मनश्च वाङ्मनसम् । अचतुरविचतुरेत्यनेनाप्रत्ययो द्वन्द्वे ॥ दक्षिणापथः । ऋक्पूरब्धूःपथाम इत्यप्रत्ययः ॥ अहश्च रात्रिश्च अहोरात्रः । अहःपूर्वाद्रात्रिशब्दादः समाहारे इत्यप्रत्ययः ॥ रात्राह्नाहान्ता इति पुंस्त्वम् ॥ द्वौ वा त्रयो वा द्वित्राः । पञ्च वा षट् वा पञ्चषाः । संख्येये बहुव्रीहेर्ड इति डः ॥ बहुकर्तृकः । बहुलक्ष्मीकः । ईदूदन्तस्त्रीलिङ्गोत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः क इति कप्रत्ययः ॥ स्त्रीपुंसौ ॥ ऋक्सामे । अचतुरविचतुरेत्यनेन द्वन्द्वे डप्रत्ययः ॥ महोक्षः । जातोक्षः वृद्धोक्षः । अचतुरविचतुरेत्यनेन कर्मधारयेऽप्रत्ययः ॥ पुरुषायुषम् । अचतुरविचतुरेत्यनेन तत्पुरुषेऽप्रत्ययः द्व्यायुषम् । त्र्यायुषम् । अचतुरेत्यनेन द्विगावप्रत्ययः ॥ ग्रामतक्षः । ग्रामकौटाभ्यां तक्ष्णष्ट इति तत्पुरुषे टः ॥ फलकसक्थः । मृगसक्थः । पूर्वसक्थः । उत्तरमृगपूर्वोपमानात्सक्थ्नष्टस्तत्पुरुषे इति प्रत्ययः । फलकमिव सक्थि अस्येति । बहुव्रीहौ तु स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेष्ट इति टप्रत्ययो बोध्यः ॥ अर्द्धखारम् । खारीशब्दान्ताद् द्विगोरर्धपूर्वात्खार्यन्तात्तत्पुरुषाच्च वा ट इति टः ॥ अर्द्धनावम् । अर्द्धपूर्वान्नावष्टस्तत्पुरुषे इति टः ॥ इति बहुव्रीहिः ॥

( तत्त्वदी० )—**नो वेति** ॥ वोन्यः स्वर इत्यतः यस्वरयोरनुवृत्तिः । ङिति टेरित्यतष्टेरित्यस्य नामत्वाधिकारादेवेत्याशयेनाह—**नान्तस्येति** ॥ नाम्न इति शेषः । वेत्यस्य व्यवस्थितत्वादाह ॥ **वाग्रहणादिति** ॥ **पूर्वसक्थमिति** ॥ सक्थ्नः पूर्वमिति विग्रहः ॥ **अर्द्धखारमिति** ॥ खार्या अर्द्धमिति विग्रहः । एवमर्द्धनावमित्यपि ॥ इति बहुव्रीहिः ॥

**कर्मधारयस्तुल्यार्थे ॥** पदद्वये तुल्यार्थे एकार्थनिष्ठे सति कर्मधारयः समासो भवति ॥

( सुबोधिनी )-**कर्मधारयस्तुल्यार्थे** ॥ समस्यमानयोर्द्वयोः पदयोर्विशेषणविशेष्यधर्मयोर्यत्र परस्परं तुल्यार्थता तत्रैव समासो भवति नान्यत्र । भ्रमरादिसाधारणरूपेण प्रतिपन्नो नीलार्थः उत्पलार्थे नीलोत्पले स्थाप्यते । रक्तादिसाधारणरूपेण प्रतिपन्न उत्पलार्थोऽपि नीलार्थेन नीले स्थाप्यते इति भवति द्वयोस्तुल्यार्थता । पदयोर्द्वयं पदद्वयं तस्मिन्नथ निष्ठा वृत्तिर्यस्य भिन्नप्रवृत्तिनिमित्तकस्य पदद्वयस्य तदेकार्थनिष्ठं तस्मिन् सति य एकार्थीभावः स कर्मधारयसंज्ञकः समासो भवति ॥ भिन्नार्थानामेकरूपेणैकत्रान्वयविवक्षायां द्वन्द्वः ॥ भिन्नार्थयोर्विशेष्यविशेषणभावेनैकत्रान्वयविवक्षायां कर्मधारय इत्यर्थः ॥ विशेष्यतेऽनेनेति विशेषणम् । 'शिषॢ, विशेषणे' करणे युट् । भेदकं व्यावर्तकमिति । यत्साधारणाकारेण प्रतिपन्नं बहुप्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकस्मिन् प्रकारे व्यवस्थापयति तद्विशेषणम् । व्यवस्थाप्यमानं तु विशेष्यं भेद्यं प्रधानमिति । अत्र लौकिकविग्रहे भेदद्योतकश्चशब्दो धर्मभेदद्योतनाय प्रयुज्यते । धर्मभेदबोधनाय सर्वादिश्च । द्रव्यगुणक्रियासन्निधाने द्रव्यवाचकस्यैव प्राधान्यमित्यतो द्रव्यस्य प्राधान्यात् गुणक्रिययोश्चाप्राधान्याद् गुणद्रव्ययोः क्रियाद्रव्ययोश्च समासे गुणक्रिययोरेव पूर्वनिपातो बोध्यः । यत्र तु गुणशब्दयोः क्रियाशब्दयोर्गुणक्रियाशब्दयोर्वा समासस्तत्रानियम एव । खञ्जकुब्जः । कुब्जखञ्जः । याचकपाठकः । पाठकयाचकः । खञ्जपाचकः । पाचकखञ्जः । द्रव्यशब्दयो रूपनिपाते तु न नियमः । शिंशपावृक्षः । इह वृक्षत्वस्य व्यापकत्वात्प्राधान्यं शिंशपात्वस्य तु विपर्ययादप्राधान्यं इत्येवम् सर्वत्र विशेषणस्य पूर्वनिपातो बोध्यः । हसादिरिति निर्देशाद्विशेष्यस्यापि पूर्वनिपातश्च ॥

( तत्त्वदी० )-**कर्मधारयस्तुल्यार्थे** इति ॥ **पदद्वय** इति । **एकार्थनिष्ठे** इति ॥ भिन्ने प्रवृत्तिनिमित्ते सति एकस्मिन्नर्थे निष्ठा निवृत्तिर्यस्येत्यर्थः ॥ भिन्नार्थानामेकरूपेणैकत्रान्वयविवक्षायां द्वन्द्वः ॥ विशेषणविशेष्यभावे तु कर्मधारय इति विवेकः ॥ पूर्वनिपाते त्वनियमः ॥ हसादिरिति लिङ्गात् । तथाहि । आदिश्चासौ हसश्चेति आदिहस इति स्यात् । लक्ष्यानुसाराच्च व्यवस्था । विशेष्यतेऽनेनेति विशेषणम् । शिष्ऌ विशेषणे । इत्यतः करणे युट् । यत्साधारणेन प्रतिपन्नं बहुप्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकस्मिन् प्रकारे व्यवस्थापयति तद्विशेषणम् ॥

**( कर्मधारये पूर्वं पुंवत् ) नीलमुत्पलम् नीलोत्पलम् । रक्तलता । पुंस्कोकिलः । ब्राह्मणभार्या । दत्तभार्या । सुकेशभार्या । स्नातानुलिप्तः । एकनाथः । सर्वयाज्ञिकाः । जरन्नैयायिकाः । पुराणमीमांसकाः । नवपाठकाः । केवलवैयाकरणाः ॥**

( सुबोधिनी )-**कर्मधारये पूर्वं पुंवत्** ॥ स्त्रीलिङ्गमुक्तपुंस्कं पूर्वपदं पुंवद्भवति कर्मधारये पूरणार्थप्रत्ययान्ते प्रियादौ च नेत्यप्राप्तः पुंवद्भावो विधीयते ॥ महती चासौ

नवमी चेति पश्चादेरिति मट् पुंवद्भावे कृते सहादेरित्यात्वम् । महानवमी ॥ महाप्रिया ॥ तथाऽकृतद्धिताभ्यां कोपधस्य नेति १ संज्ञापूरणार्थप्रत्यययोर्नेति २ वृद्धिहेतोस्तद्धितस्याऽरक्तविकारार्थस्य नेति ३ खगादीपोऽमानिनीति ४ जातिवाचिनः स्त्रीप्रत्ययान्तस्य नेति ५ पञ्चसूत्र्या प्रतिषिद्धः पुंवद्भावोऽप्यत्र विधीयते । क्रमेणोदाहरणानि । यथा पाचकस्त्री ॥ दत्तभार्या ॥ पञ्चमभार्या ॥ स्रुघ्ने भवा स्रौघ्नी । भवार्थेऽण् स्रौघ्नी चासौ भार्या च स्रौघ्नभार्या ॥ सुकेशभार्या ॥ ब्राह्मणभार्या ॥ रक्ता चासौ लता च रक्तलता ॥ पुमांश्चासौ कोकिलश्च पुंस्कोलिः ॥ ब्राह्मणी चासौ भार्या च ब्राह्मणभार्या ॥ दत्ता चासौ भार्या च दत्तभार्या ॥ सुकेशी चासौ भार्या च सुकेशभार्या ॥ पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः एकश्चासौ नाथश्चैकनाथः ॥ दिक्संख्ये इति नियमबाधनार्थमुदाहरणम् । यज्ञमधीयते विदन्ति वा ते याज्ञिकाः । इकप्रत्ययः । सर्वे च ते याज्ञिकाश्च सर्वयाज्ञिकाः ॥ जरन्तश्च ते नैयायिकाश्चेति । जीर्यतेरतृ इति भूतेऽर्थेऽतृ । न्यायमधीयते विदन्ति वा ते नैयायिकाः । जरन्नैयायिकाः । जीर्णनैयायिका इत्यर्थः । युट् वृद्धिश्च ॥ मीमांसामधीयते विदन्ति वा ते मीमांसकाः । केनेयेका इति कप्रत्यये ह्रस्वत्वम् । पुराणाश्च ते मीमांसकाश्च पुराणमीमांसकाः ॥ पठन्ति ते पाठकाः । तृवुणाविति वुण् ॥ नवशब्दः संख्यावाच्यत्र न गृह्यते । दिक्संख्ये इति नियमात् । नवाश्च ते पाठकाश्च नवपाठकाः ॥ व्याकरणमधीयते विदन्ति वा वैयाकरणाः ॥ अण् युट् वृद्धिश्च । केवलाश्चते वैयाकरणाश्च केवलवैयाकरणाः ॥ इति कर्मधारयः ॥

( तत्त्वदी० )—**नीलमुत्पलमिति** ॥ अत्र हि नीलार्थो भ्रमरादिसाधारणरूपेण प्रतिपन्न उत्पलार्थेनोत्पले व्यवस्थाप्यते । उत्पलार्थोऽपि रक्तादिसाधारणरूपेण प्रतिपन्नो नीलार्थेन नीले व्यवस्थाप्यते इति । यत्तु वासुदेवेनोक्तम् । तुल्यार्थत्वं नाम समानार्थत्वं तच्च प्रायशः पदयोर्दृष्टमिति पदद्वयेत्युक्तम् । तेन नीलोज्ज्वलघट इत्यादौ बहुपदोऽप्यदोष इति । तन्न । बहुपदानां कर्मधारयत्वासंभवात् । अनेकपदत्वे द्वन्द्वबहुव्रीह्योरेवेति दीक्षितेनोक्तनियमोऽप्यत्रानुकूलः । कर्मधारयसंज्ञाविधानानुमितफलं तु पूर्वपदस्यात्तपुंसकस्य पुंवद्भाव इत्याशयेनाह—**रक्तलतेति** ॥ रक्ता चासौ लतेति विग्रहः । अत्र रक्तशब्दस्य गुणवचनत्वेन विशेषणत्वात्पूर्वनिपातः । तथा च गुणद्रव्ययोर्गुणस्य क्रियाद्रव्ययोश्च क्रियायाः गुणशब्दक्रियाशब्दयोस्त्वनियमः पूर्वनिपाते इति बोध्यम् । अत्र लौकिकविग्रहे भेदद्योतकश्चशब्दो धर्मभेदद्योतनाय प्रयुज्यते । सर्वादिश्च धर्मभेदबोधनाय प्रयुज्यते । अत्रार्थे च स्थूला चासौ पृषती चेति शेषोक्तिरनुकूला । तदभावे एकोऽसहायोऽच् एकाजिति तदुक्तिरेवेति । द्वयमपि सम्यगेवेति ॥ इति कर्मधारयः ॥

**नाम्नश्च कृता समासः ॥ प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन सह तत्पुरुषः समासो भवति ॥ व्याघ्रः । कच्छपः । कुम्भकारः ॥**

( सुबोधिनी )—**नाम्नश्च कृता समासः ॥** पुनस्तत्पुरुषमाह । साद्यन्तस्य नाम्नः कृता कृत्प्रत्ययान्तेन सह योऽन्वयः स च पुनः प्रादेः कृता योऽन्वयः स तत्पुरुष-

संज्ञः स्यात् ॥ व्याजिघ्रतीति व्याघ्रः । उपसर्गे आदन्तादिति कः । प्रशब्देन प्रादेः समासः ॥ कच्छेन पिबतीति कच्छपः । नाम्नि चेति डः । कच्छेनेति नाम्नः कृदन्तेन समासः ॥ कुम्भं करोतीति कुम्भकारः । कार्येण् इत्यण्प्रत्ययः । इह कुम्भ ङस् कार सु इत्यलौकिकं प्रक्रियावाक्यम् । अमिति तु नोक्तम् । कृद्योगे षष्ठीविधानात् । उपपदस्य कृता समासः ॥

( तत्त्वदी० )–नाम्नश्चेति ॥ प्रादिरुपसर्ग इत्यतो विभक्तिविपरिणामेन प्रादिरित्यनुवर्तते । प्रादेरपि नामत्वेन ग्रहणेऽपि नामाख्यातनिपातोपसर्गेत्यत्र भिन्नत्वेन निर्देशात्पृथगुक्तिः ॥

**( शाकपार्थिवादीनां मध्यमपदलोपः ) शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥**

( सुबोधिनी )–शाकपार्थिवादीनां मध्यमपदलोपः ॥ पृथिव्या ईश्वरः पार्थिवः । ईश्वरेऽर्थेण् । शाकः प्रियो यस्य स शाकप्रिय इत्यस्य पार्थिवशब्देन समासे कृते प्रिय इति मध्यमपदस्य लोपः । शाकपार्थिवः । बहुव्रीहिगर्भः कर्मधारयः ॥ देवानां पूजक इति षष्ठीतत्पुरुषः । तस्य ब्राह्मणशब्देन कर्मधारये पूजक इति मध्यमपदस्य लोपः । देवब्राह्मणः ॥

( तत्त्वदी० )–शाकपार्थिवादीनामिति ॥ मध्यमपदलोप इति पाठे तु पूर्वपदस्यैव द्विपदत्वापेक्षया । अन्यथा कर्मधारयस्य त्रिपदत्वासंभवादसंगतं संपद्येत । शाकपार्थिव इति बहुव्रीहिगर्भः कर्मधारयः । देवब्राह्मण इति षष्ठीतत्पुरुषगर्भः । उत्तरपदलोप इति पाठे पूर्वपदान्तर्गतमुत्तरपदं ग्राह्यं न तु कर्मधारयस्य पार्थिवत्वादेर्लोपप्रसंगात् ॥

**सहादेः सादिः ॥ समासे सति सहादेः सादिरादेशः । सह पुत्रेण सपुत्रः । सहाञ्चतीति सध्र्यङ् । समञ्चतीति सम्यङ् । तिरोऽञ्चतीति तिर्यङ् । विष्वद्र्यङ् । देवद्र्यङ् । लक्ष्मीर्जाया यस्य स लक्ष्मीजानिः । कुत्सितमन्नं कदन्नम् । ईषदुष्णम् कोष्णम् । कवोष्णम् । कदुष्णम् । द्यौश्च भूमिश्च द्यावाभूमी । जाया च पतिश्च जम्पती । दम्पती । मातरपितरौ । कुपुरुषः । कापुरुषः ॥**

( सुबोधिनी )–सहादेः सादिः ॥ अनन्ताः सहादयः । सहादयश्च प्रयोगानुसारेण बोध्याः । बहुव्रीहेरवयवस्य सहस्य सो वा । यथा । पुत्रेण सहेति स सपुत्रः सहपुत्रो वा । बहुव्रीहिरयम् ॥ सहाञ्चतीति सहस्य सध्रिरादेशः क्विबन्तेऽञ्चतौ परे । सध्र्यङ् ॥ सङ्गतमञ्चतीति संशब्दस्य समिरादेशः क्विबन्तेऽञ्चतौ परे । सम्यङ् ॥ तिरोऽञ्चतीति तिरःशब्दस्य तिरिरादेशः क्विबन्तेऽञ्चतौ । तिर्यङ् ॥ विष्वगञ्चतीति विष्वग्देवयोरदसश्च टेरद्रिरादेशः क्विबन्तेऽञ्चतौ । विष्वद्र्यङ् ॥ देवानञ्चतीति देवद्र्यङ् ॥ एते तत्पुरुषा बोध्याः ॥ लक्ष्मीर्जायाऽस्येति जायाया जानिरादेशो बहुव्रीहौ ।

लक्ष्मीजानिः ॥ कुत्सितमन्नमिति कुशब्दस्य कत् स्वराद्युत्तरपदे तत्पुरुषे । कदन्नम् ॥ त्रिवदरथतृणेषु कुशब्दस्य कत् । कुत्सितास्त्रय इति कत्त्रयः । कद्वदः । कद्रथः । कत्तृणम् ॥ ईषदर्थे कुशब्दस्य कदादेशः । ईषज्जलं काजलम् ॥ कुत्सितः पन्था इति । ऋक्पूरित्यप्रत्ययः । संख्याव्ययाभ्यामिति क्लीवता । कापथम् । काक्षः । अक्षशब्देन तत्पुरुषोऽक्षिशब्देन बहुव्रीहिर्वा समासः ॥ उष्णे परे कुशब्दस्य काकवकदादेशा ईषदर्थे । कोष्णम् । कवोष्णम् । कदुष्णम् ॥ द्यौश्च भूमिश्चेति देवताद्वन्द्वे दिवुशब्दस्य द्यावा । द्यावाभूमी । पृथिवीशब्दे दिवशब्दस्य द्यावा दिवश्च । द्यावापृथिव्यौ । दिवस्पृथिव्यौ ॥ जाया च पतिश्चेति जायाया जं दं वा द्वन्द्वे । जंपती । दंपती । जंदंशब्दावव्ययौ दारवचनौ । तयोः पत्या सह द्वन्द्वे जंपती । दंपती । इति चान्द्राः । "दाराः पुंसि बहुत्वे च दं कलत्रे नपुंसकम्" इत्यमरमाला ॥ "पत्न्यां जं दमलिङ्गत्वे" इति नामप्रपञ्चः ॥ माता च पिता चेति मातुररङ्द्वन्द्वे मातरपितरौ ॥ पुरुषे कुशब्दस्य वाचकाः । कुपुरुषः । कापुरुषः ॥

( तत्त्वदी० )-**सहादेः सादिरिति** ॥ आदिशब्द उभयत्र प्रकारे । प्रकारश्च सादृश्यम् । सः आदिः सदृशो यस्य । सादृश्यं च अविहितादेशाश्रयत्वेन ग्राह्यम् । स आदिः सदृशो यस्य । सादृश्यं चाविहितादिश्यमानत्वरूपेण ग्राह्यम् । अत्र सहादयः सादयश्चानन्ताः प्रयोगवशात् ज्ञातव्याः ॥ **सध्र्यङिति** ॥ सहस्य सध्रिरादेशः ॥ समः समिः तिरस्तिरिरित्यादि सर्वमूह्यम् ॥

**( षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वम् )** षट् च दश च षोडश । षट् दन्ता यस्य षोडन् । संख्यायाः प्रकारे धा । षट् प्रकाराः षोढा । षड्धा । महान् ईश्वरो महेश्वरः । महादेवः । खरा नासिका यस्य स खरणसः-खरणाः । खुरणसः-खुरणाः । उन्नता नासिका यस्य स उन्नसः । प्रणसः । विगता नासिका यस्य स विग्रः । विख्यः । चतस्रोऽश्रयो यस्य स चतुरस्रः । प्रोष्ठो गौस्तस्येव पादा यस्य स प्रोष्ठपदः । प्रगते जानुनी अस्य प्रज्ञुः । संज्ञुः ॥

( सुबोधिनी )-षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वम् ॥ षट् च दश चेति दतृदशधापरस्य षष उत्वं परस्य ष्टुत्वं च धाप्रत्यये व ॥ षोडश । षोढा । षड्धा । षट् प्रकारा अस्येति प्रकारे धेति धाप्रत्ययः ॥ षट् दन्ता अस्येति संख्यासुपूर्वस्य दन्तस्य दतृ वयोऽर्थे । ऋितो नुमिति नुम् । षोडन् ॥ सुदन् स्त्रियां ऋन्नित इतीप् । सुदती ॥ महांश्चासौ ईश्वरश्चेति महत आकारोन्तादेशः समानाधिकरणे उत्तरपदे जातीये च । महेश्वरः ॥ महादेवः ॥ समानाधिकरणे किम् । महतः सेवा महत्सेवा ॥ महान् प्रकारो महाजातीयः ॥ खरा नासिका यस्येति खुरवन्नासिका यस्येति च नासिकाया नस् बहुव्रीहावप्रत्यये । खुरखराभ्यां नासिकाया नस् अप्रत्ययश्च वा । खरणसः । अप्रत्ययः । पुंवद्वेति पुंवत् । अत्वसोः साविति दीर्घे खरणाः ॥ खुरणसः । अप्रत्ययः । खुरणाः ॥ उन्नता नासि-

कास्येति उन्नसः । अप्रत्ययः ॥ प्रगता नासिकास्येति प्रणसः । अप्रत्ययः ॥ "वेर्नासिकायाः ग्रख्यौ । विगता नासिकास्येति विग्रः । विख्यः । वेः खुख्यग्रा इति शाकटायनसूत्राद्विखुर्विख्यो विग्र इति रूपत्रयं च ॥ "खरणाः स्यात् खरणसो विग्रो विखुर्विनासिकः" इति रभसः ॥ चतस्रोऽश्रयोऽस्येति तालव्यस्थाने दन्त्यसो निपात्यते । चतुरस्रः । अप्रत्ययः ॥ प्रोष्ठो गौस्तस्यैव पादावस्येति पादस्य पद् निपात्यते । अप्रत्ययः । प्रोष्ठपदः ॥ प्रसम्भ्यां जानुशब्दस्य ज्ञुश्च वा बहुव्रीहौ । प्रगते जानुनी यस्य स प्रज्ञुः संज्ञुः ॥

( ऊर्ध्वाद्वा ज्ञुः ) ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ॥

( सुबोधिनी )–ऊर्ध्वाद्वा ज्ञुः ॥ ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ॥

( बहुव्रीहौ धनुषोऽनङ् ) अधिज्यधन्वा । शार्ङ्गं धनुरस्य शार्ङ्गधन्वा । उद्गन्धिः । सुगन्धिः । पूतिगन्धिः । सुरभिगन्धिः । द्विदन् । चतुर्दन् । अमुमञ्चतीति अमुमुयङ् । अदमुयङ् । अदद्र्यङ् । कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । समानं ज्योतिरस्य सज्योतिः ॥ सनाभिः । सनामा । सवयाः । सब्रह्मचारी । सतीर्थ्यः । क्षीरोदः । सुरोदः । लवणोदः । शुद्धोदः । पृषोदरः । वारिवाहको बलाहकः । गूढोत्मा । दक्षिणतीरम् । दक्षिणनारम् । इत्यादि ॥

( सुबोधिनी )–बहुव्रीहौ धनुषोऽनङ् ॥ धनुरन्तस्य बहुव्रीहेरनङ् संज्ञायां च वा ॥ शृङ्गस्य विकारः गार्ङ्गम् अण् । शार्ङ्गं धनुरस्येति । शार्ङ्गधन्वा ॥ संज्ञायां तु शतधन्वा शतधनुः ॥ उत्पूतिसुसुरभिभ्यः गुणवाचिनो गन्धस्येकारान्तादेशो बहुव्रीहौ । उद्गन्धिः पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः ॥ गुणवाचिन इति किम् । शोभना गन्धा द्रव्याण्यस्य सुगन्ध आपणिकः ॥ अल्पवाचिनो गन्धस्येत्वं बहुव्रीहौ । सूपस्य गन्धो लेशो यस्मिन् तत् सूपगन्धि भोजनम् । घृतगन्धि ॥ उपमानाद्गन्धस्येकारान्तादेशः । पद्मस्येव गन्धोऽस्य पद्मगन्धिः ॥ "गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः" इति । द्वौ दन्तावस्येति संख्यासुपूर्वस्येति दत् द्विदन् ॥ चतुर्दन् ॥ अमुमञ्चतीति अदस अच इति स्थिते । विष्वगिति टेरद्रिः । अदद्रि अच् इत्यत्र यत्वम् । अदसोऽसेर्दादुदोम इत्यनेन दाभ्यां परयोरकाराकारयोरुकारौ दकारयोश्च मकारौ । अमुमुयङ् । अन्त्यबाधेऽन्त्यसदेशस्यादेश इति वदतां मते परदकाररकारस्यैव मुत्वम् । अदमुयङ् ॥ त्यदाद्यत्वे एव मुत्वं नान्यत्रेति पक्षे अदद्र्यङ् ॥ कुमुदस्येव गन्धो यस्येति उपमानाद्गन्धस्येतीकारादेश इति कुमुदगन्धिः । कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या अपत्ये ण्यः । कौमुदगन्ध्यायाः पुत्र इति कौमुदगन्ध्यायाः पतिरीति । या इत्यस्य स्थाने ईत्वं निपात्यते । कौमुदगन्धीपुत्रः कौमुद-

गन्धीपतिः ॥ समानं ज्योतिरस्येति ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुतीर्थ्यब्रह्मचारिषु । समानस्य सः । सज्योतिः । सनाभिः । सनामा । सवयाः । ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म । ब्रह्म चरतीति ब्रह्मचारी । व्रते इति णिनिः । समानः ब्रह्मचारीति सब्रह्मचारी ॥ समाने तीर्थे वसतीति सतीर्थ्यः । वसत्यर्थे ण्यप्रत्ययः ॥ उत्तरपदोदकस्योदः । क्षीरोदः । सुरोदः । लवणोदः । शुद्धोदः ॥ पृषतः उदरमिति तलोपः । पृषोदरम् ॥ वारिणो वाहक इति पूर्वपदस्य वः उत्तरपदादेश्च लत्वं वलाहकः ॥ गूढोत्मा अत्राकारस्य स्थाने उत्वम् ॥ "भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥ १ ॥" हन्तेः पचादित्वादच्प्रत्यये सगागमात् । हंस इति । हिंसेः पचादित्वादच्प्रत्यये हकारसकारयोर्व्यत्ययात् सिंह इति ॥ दिक्शब्देभ्यस्तीरस्य तारो वा । सर्वादेः समासादाविति पुंवत् । दक्षिणतारं दक्षिणतीरमित्यादि ॥

**अलुक् क्वचित्** ॥ क्वचित्समासे तद्धिते च विभक्तेरलुक् ॥ कृच्छ्रान्मुक्तः । स्तोकान्मुक्तः । दूरान्मुक्तः । निकटान्मुक्तः । अप्सुयोनिः । सरसिजम् । उरसिलोमा । हृदिस्पृक् । कण्ठेकालः । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । खेशयः । ग्रामेवासः । ग्रामेवासी । चोरस्यकुलम् । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । पुंसानुजः । जनुषान्धः । आत्मनापञ्चमः । त्वचिसारः । गविष्ठिरः । युधिष्ठिरः । आत्मनेपदम् । आत्मनेभाषा । मध्येगुरुः । स्तम्बेरमः । कर्णेजपः । पूर्वाह्णेतरे । पूर्वाह्णेतमे । आमुष्यायणः । आमुष्यकुलिका । आमुष्यपुत्रिका । मातृपितृभ्यां स्वसुः सस्य षः मातृष्वसा । पितृष्वसा । मातृपितृभ्यां वा मातुःस्वसा–मातुःष्वसा । पितुःस्वसा–पितुःष्वसा । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुः पुत्रः । देवानांप्रिय इति च मूर्खे । दिवोदासः । शुनःशेपः । शुनः पुच्छः । इत्यादि ॥

( सुबोधिनी )–अलुक् क्वचित् ॥ समासप्रत्यययोरित्यस्यापवादः । कृच्छ्रस्तोकदूरार्थनिकटार्थेभ्यः पञ्चम्या अलुक् उत्तरपदे ॥ कृच्छ्रान्मुक्तः । "स्यात्कष्टं कृच्छ्रमाभीलम्" इत्यमरः ॥ उत्तरपदे किम् । निष्क्रान्तः स्तोकादिति निःस्तोकः ॥ द्विवचनबहुवचनान्तानां तु समासो नेष्यतेऽनभिधानात् । तेन स्तोकाभ्यां मुक्त इत्यादौ वाक्यमेव ॥ अप्सु योनिरुत्पत्तिर्यस्येति अपः सप्तम्या अलुक् योनिजचरमतिषु । अप्सुयोनिः । अप्सुजः । अप्सुचरः । अप्सुमतिः ॥ हसान्ताददन्ताच्च सप्तम्या अलुक् संज्ञायाम् । सरसिजम् । अदन्तात्तु अरण्येतिलक इत्यादि ॥ स्वाङ्गात् सप्तम्या अलुग्

अकामे परे । मूर्द्धमस्तकाभ्यां तु न । उरसिलोमा ॥ अकामेति किम् । मुखे कामोऽस्य मुखकामः ॥ मूर्द्धमस्तकाभ्यां नेति किम् । मूर्द्धशिखः । मस्तकशिखः ॥ हृदयं स्पृशतीति दिवृहृद्भ्यां सप्तम्या अलुक् । हृदिस्पृक् । कर्मणोऽधिकरणत्वविवक्षायां सप्तमी । एवं दिविस्पृक् ॥ कण्ठेकालः । स्वाङ्गात् सप्तम्या अलुगित्यलुक् ॥ वाचदिक्पश्यद्भ्यः षष्ठ्या अलुग् युक्तिदण्डहरेषु । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । पश्यन्तमनादृत्य हरतीत्यर्थः ॥ अनादराधिक्ये इति षष्ठी । अकालकात्सप्तम्या अलुग्वा शयवासवासिषु । खेशयः–खशयः । ग्रामेवासः ग्रामवासः । ग्रामेवासी ग्रामवासी ॥ षष्ठ्या अलुगाक्रोशेऽर्थे । चोरस्यकुलम् ॥ आक्रोशे किम् । ब्राह्मणकुलम् ॥ ओजसंभसस्सहस्तमसंजोभ्यस्तृतीयाया अलुक् । ओजसाकृतम् । अम्भसाकृतम् । सहसाकृतम् । तमसाकृतम् । अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः ॥ पुंसोऽनुजे जनुषोऽन्धे च तृतीयाया अलुक् । यस्याऽग्रजः पुमान् स पुंसानुजः । जनुषान्धः । जात्यन्ध इत्यर्थः । " जनुर्जननजन्मानि " इत्यमरः ॥ आत्मनस्तृतीयाया अलुक्पूरणार्थप्रत्ययान्ते परे । आत्मनापञ्चमः ॥ पूरणार्थे किम् । आत्मकृतम् ॥ त्वचिसारः ॥ हसान्ताददन्ताच्च सप्तम्या अलुक् संज्ञायामित्यलुक् ॥ गोः सप्तम्या अलुक् स्थिरे । गविष्ठिरः ॥ युधिष्ठिरः । हसान्तादिति सप्तम्या अलुक् ॥ परशब्दात्मशब्दाच्च चतुर्थ्या अलुक् वैयाकरणाख्यायाम् । परस्मैपदम् । परस्मैभाषा । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थ्या अलुगत्र ॥ मध्यान्ताभ्यां सप्तम्या अलुग्गुरौ परे । मध्येगुरुः । अन्तेगुरुः ॥ तत्पुरुषे सप्तम्या अलुक् कृत्प्रत्ययान्ते बहुलम् । स्तम्बेरमः । स्तम्बे तीरे रमते इति स्तम्बेरमो हस्ती । कर्णेजपः । कर्णेजपः सूचकः ॥ कालवाचकात्सप्तम्या अलुग् वा तरतमकालतनेषु पूर्वाह्णेतरे–पूर्वाह्णतरे । पूर्वाह्णेतमे–पूर्वाह्णतमे । पूर्वाह्णेकाले–पूर्वाह्णकाले । पूर्वाह्णेतने–पूर्वाह्णतने ॥ अदसः षष्ठ्या अलुगायनपुत्रिकाकुलिकासु । अमुष्यापत्यं नडादित्वादायनण् । आमुष्यायणः । अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका । अमुष्य कुलस्य भावः आमुष्यकुलिका । भावार्थे कः ॥ ऋदन्तात्षष्ठ्या अलुग् वा । स्वसृपत्योः । मातृपितृभ्यां स्वसुः सस्य षः स्यात्समासे । मातृष्वसा । पितृष्वसा । मातृपितृभ्यां वा । आभ्यां स्वसुः सस्य षो वा स्यात् समासे । मातुःष्वसा मातुःस्वसा । पितुःष्वसा पितुःस्वसा ॥ विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् । होतुरन्तेवासी होतुःपुत्रः । पितुरन्तेवासी पितुःपुत्रः ॥ देवानांप्रिय इति मूर्खेऽर्थे षष्ठ्या अलुक् । अन्यत्र देवप्रियः ॥ दिवो दासे परे षष्ठ्या अलुक् । दिवोदासः ॥ शुनः षष्ठ्या अलुक् शेपपुच्छलाङ्गूलेषु । शेपः सकारान्तः । "स्याल्लिङ्गं चिह्नशेफसोः" इत्यमरोक्तेः । शिङ औणादिके पप्रत्यये । पकारान्तोऽपि । शुन इव शेपमस्य स शुनःशेपः । शुन इव पुच्छमस्य स शुनःपुच्छः । शुन इव लाङ्गूलमस्य स शुनोलाङ्गूलः । बहुव्रीहयस्त्रयोऽप्यमी ऋषिविशेषाणां संज्ञा ॥ इत्यलुक् समासः ॥

( तत्त्वदी० )—**अलुक् क्वचिदि**ति ॥ समासप्रत्यययोरित्यस्यापवादः ॥ कृच्छ्रान्मुक्त इत्यस्य पक्षे सिद्धत्वेऽपि कृच्छ्रमुक्तमित्यनिष्टापत्तिवारणायेदमावश्यकम् ॥ **हृदिस्पृगि**ति ॥ हृदयं स्पृशतीति विग्रहः । कर्मणोऽधिकरणत्वाविवक्षायां सप्तमी ॥ **आमुष्यकुलिके**ति ॥ अमुष्य कुलस्य भावः । एवममुष्य पुत्रस्य भाव इत्यपि ॥ **देवानांप्रिय** इति ॥ मूर्खा हि देवानां प्रीतिं जनयन्ति देवपशुत्वात् ॥ **शुनःशेप** इति ॥ शुन इव शेपमस्येति विग्रहः । एवं पुच्छलांगूलाभ्यामपि बहुव्रीहिः । ऋषिविशेषाणामेताः संज्ञाः ॥

**( तरतमरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ईबन्तस्यानेकस्वरस्य ह्रस्वो भाषितपुंस्कस्य ) ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली ॥**

( सुबोधिनी )—**तरतमरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ईबन्तस्यानेकस्वरस्य ह्रस्वो भाषितपुंस्कस्य** ॥ अतिशयेन ब्राह्मणीति ब्राह्मणितरा । ब्राह्मणितमा । तरतमचरडिति पुंवद्भावो न । जातिवाचिनः स्त्रीप्रत्ययान्तस्येति निषेधात् । तरतमेयस्विष्ठाः प्रकर्षे इति तरतमौ प्रशस्ता ब्राह्मणीति ब्राह्मणिरूपा । प्रशंसायामिति रूपः ॥ ईषन्न्यूना ब्राह्मणीति ब्राह्मणिकल्पा । ईषदसमाप्तौ कल्पेति कल्पप्रत्ययः ॥ चेलडादीनि वृत्तिविषये समासादौ कुत्सनवाचीनि सन्ति । कुत्सिता ब्राह्मणी । ट्व्रित इतीप् । ब्राह्मणिचेली ॥ उक्तपुंस्कस्येति किम् । आमलकीतरा । कुवलीतरा । आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिङ्गौ ॥

**( अनीबन्तस्य स्त्रीप्रत्ययान्तस्येबन्तस्यैकस्वरस्य वा ह्रस्वस्तरादौ ) ब्रह्मबन्धूतरा—ब्रह्मबन्धुतरा । स्त्रीतरा—स्त्रितरा ॥**

( सुबोधिनी )—**अनीबन्तस्य स्त्रीप्रत्ययान्तस्य ईबन्तस्यैकस्वरस्य वा ह्रस्वस्तरादौ** ॥ अनीबन्तस्य स्त्रीप्रत्ययान्तस्य वा ह्रस्वः एकस्वरस्य ईबन्तस्य च वा ह्रस्वो भवति तरतमरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु परेषु ॥ उत ऊरित्यूप्रत्ययः। अतिशयेन ब्रह्मबन्धूरिति तरतमेयस्विष्ठा इति तरप्रत्ययः ब्रह्मबन्धूतरा ॥

**( व्रितः परस्य वा ) विदुषितरा—विद्वत्तरा । भवतितरा—भवत्तरा । पचतितरा—पचत्तरा ॥**

( सुबोधिनी )—**व्रितः परस्य वा** ॥ उश्च आ च तयोः समाहारः वृ वृ इत् यस्य स व्रित् तस्मात् व्रितः ॥ उकारेत ऋकारेतश्च परस्य ईप्प्रत्ययस्य ह्रस्वो वा भवति तरादौ ॥ विदुषितरा । ट्व्रित इतीप् । वसोर्व उरित्युत्वम् । ह्रस्वाभावे तरतमचरडिति पुंवद्भावः । विद्वत्तरा । विदुषीतरेत्यपि कैश्चिदुदाहृतं तन्निर्मूलम् ॥

( तत्त्वदी० )—**व्रितः परस्ये**ति ॥ उश्च आ च वरौ ताविती यस्य स तथा तस्मात् ॥

**( इष्टकेषीकामालानां चिततूलभारिषु ह्रस्वः )** इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ॥

( सुबोधिनी )—इष्टकेषीकामालानां चिततूलभारिषु ह्रस्वः ॥ इष्टकादीनां तदन्तानां च ह्रस्वो भवति चितादिषु ॥ इष्टकाभिश्चितमितीष्टकचितम् । तदन्ते पक्वेष्टकचितम् ॥ इषीकाणां तूलमिषीकतूलम् ॥ मालां बिभर्ति इति मालभारी । कर्तरि णिनिः । हारिष्विति पाठान्तरम् ॥

( तत्त्वदी० )—मालभारीति ॥ मालां बिभर्तीति विग्रहः । ताच्छील्ये णिनिः ॥

**( कारे सत्यागदस्य मुम् )** सत्यंकारः । अगदंकारः ॥

( सुबोधिनी )—कारे सत्यागदस्य मुम् ॥ सत्यागदयोर्मुम् स्यात् कारे ॥ सत्यंकारः। शपथकरणमित्यर्थः ॥ अगदंकारो वैद्यः ॥

( तत्त्वदी० )—सत्यंकार इति । समयकरणम् ॥ अगदंकारो वैद्यः ॥

**( अस्तोश्च )** अस्तुंकारः ॥

( सुबोधिनी )—अस्तोश्च ॥ अस्तु इत्यस्य मुम् स्यात् कारे ॥ अस्तुः इत्याख्यातप्रतिरूपकमव्ययम् । अस्तुंकारः अभ्युपगम इत्यर्थः ॥

( तत्त्वदी० )—अस्तुंकारोऽभ्युपगमः ॥ अस्त्विति तिबन्तप्रतिरूपकमव्ययम् ॥

**( धेनोर्भव्यायाम् )** धेनुंभव्या ॥

( सुबोधिनी )—धेनोर्भव्यायाम् ॥ धेनुशब्दस्य मुम् स्यात् भव्यायां परस्याम् ॥ धेनुश्चासौ भव्या चेति विग्रहः । धेनुंभव्या । भविष्यन्ती धेनुरित्यर्थः । निपातनाद्भविष्यति कर्तरि कृत्प्रत्ययः ॥

( तत्त्वदी० )—धेनुंभव्येति ॥ धेनुश्चासौ भव्येति विग्रहः । भविष्यन्ती धेनुरित्यर्थः ॥

**( लोकस्य पृणे )** लोकंपृणः ॥

( सुबोधिनी )—लोकस्य पृणे ॥ लोकस्य मुम् स्यात् पृणे परे ॥ पृणधातुः प्रीणनार्थः । लोकंपृणः सूर्यः ॥

**( इत्येऽनभ्यासस्य )** मुम ॥ अनभ्यासमित्यः ॥

( सुबोधिनी )—इत्येनभ्यासस्य ॥ अनभ्यासस्य मुम् स्यात् इत्ये परे ॥ अभ्यासं समीपं अभ्यासभिन्नमनभ्यासम् । एतिस्तु शासिति इणः क्यप् । अनभ्यासमित्यः । दूरतः परिहर्तव्य इत्यर्थः ॥

( तत्त्वदी० )—अनभ्यासमित्य इति ॥ दूरतः परिहर्तव्य इत्यर्थः ॥

( भ्राष्ट्राग्न्योरिन्धे ) भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥

( सुबोधिनी )–भ्राष्ट्राग्न्योरिन्धे ॥ अनयोर्मुम् स्यादिन्धे परे ॥ 'इन्धी, दीप्तौ' कार्येऽणित्यण् । भ्राष्ट्रमिन्धः । अग्निमिन्धः । नाम्नश्च कृतेति समासः ॥

( गिलेऽगिलस्य ) मुम् ॥ तिमिङ्गिलः ॥

( सुबोधिनी )–गिलेऽगिलस्य ॥ अगिलस्य गिलभिन्नस्य मुम् भवति गिले परे ॥ तिमिंगिलो मत्स्यविशेषः । गिरतेर्मूलविभुजादित्वात्कप्रत्ययः । गिरते रेफस्य वा लत्वमिति लत्वम् ॥

( तत्त्वदी० )–तिमिंगिल इति ॥ मत्स्यविशेषः ॥

( गिलगिले च ) तिमिंगिलगिलः ॥

( सुबोधिनी )–गिलगिले च ॥ अगिलस्य मुम् भवति गिलगिले परे ॥ गिलगिलः । तिमीनां गिलगिल इति तिमिंगिलगिलः ॥

( तत्त्वदी० )–गिलगिले चेति ॥ गिलं गिलतीति गिलगिलः । तिमीनां गिलगिलस्तिमिंगिलगिल इति विग्रहः ॥

( उष्णभद्रयोः करणे ) उष्णंकरणम् । भद्रंकरणम् ॥

( सुबोधिनी )–उष्णभद्रयोः करणे ॥ उष्णभद्रयोर्मुम् स्यात् करणे परे ॥

( रात्रेः कृति वा ) रात्रिंचरः–रात्रिचरः । रात्रिमटः । रात्र्यटः ॥

( सुबोधिनी )–रात्रेः कृति वा ॥ रात्रेर्मुम् वा स्यात् कृत्प्रत्ययान्ते परे ॥ अखिदर्थमिदं सूत्रम् । खिति प्रत्यये खिति पदस्येति नित्यमेव मुम् स्यात् । अटाविति टप्रत्ययः । रात्रिंचरः ॥

( नहिवृतिवृषिव्यधिरुचिसहितानिषु ) क्विबन्तेषु पूर्वस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्मावित् । नीरुक् । अभीरुक् । ऋतीषट् । परीतत् ॥

( सुबोधिनी )–नहिवृतिवृषिव्यधिरुचिसहितानिषु ॥ क्विबन्तेषु पूर्वस्य दीर्घः ॥ क्विबन्तेषु परेषु पूर्वस्योपसर्गकारकस्य दीर्घः स्यात् ॥ णह, बन्धने । वृतु, वर्तने । वृषु, सेचने । व्यध, ताडने । रुच, दीप्तौ । सह, मर्षणे । तनु, विस्तारे । उप समीपे नह्यते इति उपानत् । कर्मणि क्विप् ॥ निवर्तते इति नीवृत् । "नीवृज्जनपदो देशः" इत्यमरः ॥ प्रवर्षतीति प्रावृट् ॥ मर्माणि विध्यतीति मर्मावित् । श्वानं विध्यतीति नाम्नो नो लोपशिति नलोपः । श्वावित् । व्यधेः ग्रहां ङिति चेति संप्रसारणम् ॥ निरोचते इति नीरुक् ॥ ऋतं सहत इति ऋतीषट् । "ऋतिर्जुगुप्साकल्याणगतिस्पर्द्धास्वथो ऋतुः" इति हैमः ॥ परि तनोतीति परीतत् ॥ क्विबन्तेष्विति किम् । परिणहनम् ॥ उपसर्गकारकस्येति किम् । पटुरुक् । तिग्मरुक् ॥

(तत्त्वदी०)—नहिवृतीति ॥ उपनह्यत इति उपानत् ॥ निवर्तत इति नीवृत् ॥ प्रवर्षतीति प्रावृट् ॥ मर्माणि विध्यतीति मर्मावित् ॥ निरोचते इति नीरुक् ॥ ऋतं सहते इति ऋतीषट् ॥ परितनोतीति परीतत् ॥

**(मत्वर्थे बहुस्वरस्य) अमरावती ॥**

(सुबोधिनी)—मत्वर्थे बहुस्वरस्य ॥ बहुस्वरस्य दीर्घः स्यात् संज्ञायामस्त्यर्थे परे ॥ अमराः सन्त्यस्याममरावती । मान्तोपधाद्वत्विनौ इतिवत् । ष्ट्विन्त इतीप् ॥ संज्ञायामिति किम् । बलवती ॥ बहुस्वरस्येति किम् । व्रीहिमती ॥

**(शरादेश्च) शरावती ॥**

(सुबोधिनी)—शरादेश्च ॥ शरादेर्दीर्घः स्यात् अस्त्यर्थे । शराः सन्त्यस्यामिति शरावती ॥

**(अजिरादेर्न) अजिरवती ॥**

(सुबोधिनी)—अजिरादेर्न ॥ अजिरादेर्दीर्घो न भवति अस्त्यर्थे ॥ अजिरमस्त्यस्यां सा अजिरावती । "अङ्गणं चत्वराजिरे" इत्यमरः ॥

**(उपसर्गस्य घञ्यमनुष्ये वा दीर्घः) परिपाकः-परीपाकः । परिहासः-परीहासः ॥ अमनुष्ये किम् । निषादः ॥**

(सुबोधिनी)—उपसर्गस्य घञ्यमनुष्ये वा दीर्घः ॥ उपसर्गस्य वा दीर्घः स्यात् घञन्ते परे न तु मनुष्येऽर्थे ॥ अमनष्ये किम् । निषीदत्यस्मिन्नघमित्यधिकरणे घञ् । निषादः पुलिन्दो मनुष्यजातिः ॥

**आदेश्च द्वन्द्वे ॥ द्वन्द्वे सति क्वचिदादेर्लोपः ॥ माता च पिता च पितरौ । श्वश्रूश्च श्वशुरश्च श्वशुरौ । दुहिता च पुत्रश्च पुत्रौ । स्वसा च भ्राता च भ्रातरौ ॥**

(सुबोधिनी)—आदेश्च द्वन्द्वे ॥ द्वन्द्वविषये भिन्नार्थानां च तुल्यार्थानां नाम्नामन्त्योऽवशिष्यते । आदीनां च लोपो भवतीत्यर्थः ॥ रामश्च रामश्च रामौ । घटश्च कुम्भश्च कुम्भौ।घटश्च कुम्भश्च कलशश्च कलशाः ॥ मातृश्वश्रूभ्यां सहोक्तौ पितृश्वशुरौ वा शिष्येते । माता च पिता चेति पितरौ मातापितरौ वा । "पितुर्दशगुणा माता गौरवेणातिरिच्यते" इति स्मृतेर्मातुः प्रधानत्वात्पूर्वनिपातः। 'ऋतां द्वन्द्वे' इति पूर्वस्यात्वम् ॥ श्वशुरौ । श्वश्रूश्वशुरौ वा ॥ स्वसृदुहितृभ्यां सहोक्तौ भ्रातृपुत्रौ शिष्येते । दुहिता च पुत्रश्च पुत्रौ ॥ स्वसा च भ्राता च भ्रातरौ ॥

(तत्त्वदी०)—आदेश्च द्वन्द्वे इति ॥ द्वन्द्वे समासे क्वचिदादिभूतस्य पदस्य लोपः ॥ अत्र यस्य लोप इत्यतो लोपग्रहणमनुवर्त्य व्याख्यानम् । तदुदाहरणम् । पितरावित्यादि इति तु वृद्धाः ।

नव्यास्त्वेवमाहुः। अत्र नाम्नामित्यनुवृत्तं सद्विभक्तिपरं बोध्यं न तु पदार्थपरम्। द्वन्द्वे इत्यप्यर्थपरम्। आदेरित्येकवचनं विवक्षितम्। सूत्रे लिङ्गवचनमविवक्षितमित्युत्सर्गात्। तुल्यार्थे इत्यनुवृत्य विभक्तिव्यत्ययेन वाक्यभेदेन च व्याख्येयम्। तथा च समानानुपूर्वीकाणां भिन्नार्थानां तुल्यार्थानां भिन्नानुपूर्वीकाणां च नाम्नां मध्ये आदेः आद्योः आद्यानां चान्त्य आदेशः स्यात्। रामश्च रामश्च रामौ। घटश्च कुम्भश्च कुम्भौ। घटश्च कुम्भश्च कलशश्च कलशाः। पूर्वपदानामन्त्यपदादेशस्तु न कृतः सविभक्तिकस्यादेशे तस्यैव श्रवणप्रसंगात्। द्विवचनबहुवचनयोरभावात्। द्वन्द्वे कृते इत्यपि न सर्वे सर्वेषामित्यादावीत्वविकल्पसुडभावादेः प्रसंगात्। द्वन्द्वार्थश्च सहविवक्षया। सहविवक्षा चेयम्। "अनुस्यूते च भेदानामेका प्रज्ञा प्रजायते। यदा सहविवक्षां तामाहुर्द्वन्द्वैकशेषयोः" इति॥

**( ऋतां द्वन्द्वे ) पूर्वस्यात्वम्॥ मातापितरौ। होतापोतारौ। नेष्टोद्गातारौ॥**

**( सुबोधिनी )—ऋतां द्वन्द्वे॥ पूर्वपदस्यात्वम्। विद्यायोनिसंबन्धवाचिनां ऋदन्तानां यो द्वन्द्वस्तत्र पूर्वपदस्यात्वं भवति॥ षष्ठीनिर्दिष्टत्वादन्त्यस्यादेशः। द्वयोर्द्वन्द्वे एवात्वम्। माता च पिता च चेति एकशेषाभावे मातापितरौ। पुत्रोत्पादनेऽनयोर्योनिकृतः संबन्धोऽत्र॥ होता च पोता चेति होतापोतारौ। नेष्टा चोद्गाता च नेष्टोद्गातारौ। इह होतादिरूपविद्याकृतः संबन्ध एकस्मिन् यज्ञ आर्त्विज्यरूपो बोध्यः॥**

( तत्त्वदी० )—**ऋतां द्वन्द्व** इति॥ विद्यायोनिसंबन्धवाचिनामेव ऋदन्तानामित्यर्थः। तेनेह न कर्तृभोक्तारौ॥

**( पुत्रे च ) पितापुत्रौ। गावश्च गावश्च गाव इमाः। शुक्लश्च शुक्ला च शुक्लं च शुक्लम्। स च यश्च यौ। तौ वा॥**

**( सुबोधिनी )—पुत्रे च॥ विद्यायोनिसंबन्धवाचिनाम् ऋदन्तानामात्वं भवति पुत्रे परे॥ पिता च पुत्रश्च पितापुत्रौ। अनयोर्योनिकृतः संबन्धो जन्यजनकभावलक्षणोऽत्र। ग्राम्यपशुसमूहेष्वतरुणेष्वनेकखुरेषु सहोक्तौ स्त्रीलिङ्गोऽवशिष्यते। गावश्च गावश्चेति गावः। उभयत्र रूपस्य समानत्वात्। स्त्रीलिङ्गे शेषस्य फलमाह। इमा इति॥ ग्रामे भवाः ग्राम्याः यण्॥ ग्राम्येति किम्। रुरव इमे मृगविशेषा वनचारिण इत्यर्थः॥ पशुग्रहणं किम्। ब्राह्मण्यश्च ब्राह्मणाश्च ब्राह्मणाः॥ समूहेषु किम्। एतौ गावौ॥ अतरुणेषु किम्। वत्सा इमे॥ अनेकखुरेषु किम्। अश्वा इमे। अश्वानामेक एव खुर इत्यर्थः॥ अक्लीबेन सहोक्तौ क्लीबं शिष्यते। तच्च वा एकवत् तल्लक्षण एव विशेषश्चेत्। शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रम्। तदिदं शुक्लम्। तानीमानि शुक्लानि॥ त्यदादीनां मिथः सहोक्तौ परं पूर्वं च शिष्यते। स च यश्च यौ तौ वा॥ स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ। इह सर्वत्र एकशेषे कृतेऽनेकाभावात्**

द्वन्द्वसमासो न । तेन शिरसी शिरांसि इत्यादौ प्राण्यङ्गत्वादेकवद्भावो न । पन्थानौ पन्थान इत्यादौ समासान्तप्रत्ययो न भवति ॥ इत्येकशेषः ॥

( तत्त्वदी० )–**गाव इमा** इति ॥ ग्राम्यपशुसंघेष्वतरुणेषु स्त्रिया एव एकशेष इत्यर्थः ॥ **शुक्ल**मिति ॥ अक्लीबैः सहोक्तौ क्लीबमेव शिष्यते इत्यर्थः ॥ **यौ तौ वे**ति ॥ त्यदादिषु परं विकल्पेनेत्यर्थः ॥

**दिक्संख्ये संज्ञायाम् ॥ दिग्वाचिनः संख्यावाचिनः शब्दाः समानाधिकरणेन संज्ञायामेव समस्यन्ते स कर्मधारयः समासः ॥ दक्षिणाग्निः । सप्तर्षयः ॥ संज्ञायां किम् । पञ्चफलानि ॥ दिक्संख्ये किम् । शूर्पणखा ॥**

( सुबोधिनी )–पुनः कर्मधारयमाह–दिक्संख्ये संज्ञायाम् ॥ दिक् च संख्या च दिक्संख्ये दिग्वाचिनः संख्यावाचिनश्च शब्दास्तुल्यार्थेन सह समस्यन्ते स कर्मधारयः ॥ कर्मधारयस्तुल्यार्थे इत्यनेनैव सिद्धे नियमार्थमिदम् संज्ञायामेवेति ॥ दक्षिणश्चासौ अग्निश्चेति दक्षिणाग्निः । सप्त च ते ऋषयश्च सप्तर्षयः । "दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः" इत्यमरः ॥

( तत्त्वदी० )–**दिक्संख्ये संज्ञाया**मिति ॥ दिक् च संख्या च दिक्संख्ये । दिग्वाचिसंख्यावाचिनामित्यर्थः । कर्मधारयस्तुल्यार्थे इत्यनेनैव सिद्धे नियमार्थमिदम् । संज्ञायामेव नान्यत्रेत्यर्थः ॥ **दक्षिणाग्नि**रिति ॥ दक्षिणदिगवस्थिते वस्तुनि दक्षिणशब्दः । अतो दानादेर्व्यावृत्तौ दिगवस्थिते व्यवस्थाप्यते । अग्निशब्दोऽपि चित्रकादेर्व्यावृत्तौ हुताशे व्यवस्थाप्यते । अतो विशेषणविशेष्यभावात्कर्मधारयः ॥ संज्ञायां किम् । पञ्च फलानि ॥ दिक्संख्ये किम । शूर्पणखा ॥ दक्षिणाग्निरित्यादौ वाक्ये संज्ञानवगमान्नित्यसमासत्वम् । अविग्रहस्य नित्यसमासत्वात् । न विग्रहो यस्य लोके प्रयुज्यत इति शेषः। अन्यथा दक्षिणाग्निरुन्मत्ता गङ्गा यस्येति ॥ आदिविग्रहस्य सर्वत्र दर्शनादविग्रहत्वासंभव एव स्यात् । अयमत्र संग्रहः ॥ कृत्तद्धितसमासैकशेषयङाद्यन्तधातुरूपाः पञ्च वृत्तयः । परार्थाभिधानं वृत्तिः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विधा । लौकिकोऽलौकिकश्च । तल्लक्षणं चोक्तमेव । समासोऽपि द्विविधः। नित्योऽनित्यश्चेति । नित्योपि द्विविधः । अविग्रहोऽस्वपदविग्रहश्च । न स्वस्य समासस्य पदैर्विग्रहो यत्र सः। समासः षड्विध इति प्रायोवादः । द्विगव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिकर्मधारयाभिन्नस्यापि नाम्नश्च कृतेति विधानात् । एतेन नाम्नश्च कृता समास इति सूत्रे समासग्रहणं तत्पुरुषपरं समासस्य पूर्वेणैव विधानात् । अमादौ तत्पुरुष इत्यतो मण्डूकप्लुत्यानुवृत्तेर्वेति वासुदेवोक्तिः परास्ता ॥ तथा पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । विशेष्यपूर्वः कर्मधारयः पूर्वपदार्थप्रधानः । विशेषणपूर्वस्तूत्तरपदार्थप्रधानः । द्विगुरन्यपदार्थप्रधान इत्यपि प्राचां प्रवादः प्रायोभिप्रायः सूचयति ॥ उन्मत्तगङ्गमित्याद्यव्ययीभावे अतिमालादौ तत्पुरुषे द्वित्रा इत्यादिबहुव्रीहौ दन्तौष्ठमित्यादिद्वन्द्वे चाभावात् । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव । ऐकपद्यमेकविभक्तिकत्वं च समासप्रयोजनं पूर्वनिपातः समासान्तप्रत्ययादिश्च प्रयोजनम् ॥

( द्वन्द्वतत्पुरुषयोः परपदस्यैव लिङ्गम् ) कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्द्धपीप्पलीयम् ॥

( सुबोधिनी )—द्वन्द्वतत्पुरुषयोः परपदस्यैव लिङ्गम् ॥ इतरेतरयोगद्वन्द्वोऽत्र गृह्यते न समाहारद्वन्द्वः ॥ एकत्वे द्विगुद्वन्द्वावित्युक्तत्वात् । द्वन्द्वतत्पुरुषयोरिति संबन्धे षष्ठी । एतयोः परपदतुल्यं लिङ्गं भवति ॥ कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ । इमे इति स्त्रीलिङ्गनिर्देशः ॥ मयूरी च कुक्कुटश्च मयूरी कुक्कुटौ । इमाविति पुँल्लिङ्गनिर्देशः ॥ पिप्पल्या अर्द्धमित्यर्धपिप्पली । इयमिति स्त्रीलिङ्गनिर्देशः ॥

( द्विगुप्राप्तापन्नालंपूर्वप्रादिसमासे न ) पञ्चकपालः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै अलंकुमारिः । निष्कौशाम्बिः ॥

( सुबोधिनी )—द्विगुप्राप्तापन्नालंपूर्वप्रादिसमासे न ॥ द्विगुसमासे प्राप्तापन्नालंपूर्वसमासे प्रादिसमासे च परपदतुल्यं लिङ्गं न भवति ॥ पञ्चसु कपालेषु संस्कृतः । तद्धितार्थे द्विगुः । संस्कृतार्थेऽण् । तस्य लुक् च तद्धितार्थे द्विगुर्विशेष्यनिघ्नः । पुरो दाश्यते इति 'दाशृ, दाने' कर्मणि घञ् । निपातनाद्दस्य डः । पुरोडाशः ॥ प्राप्तजीविकः ॥ आपन्नजीविकः । अलंकुमारिः । तत्पुरुषा एते । अन्यार्थे इति ह्रस्वः ॥ प्रादिसमासो यथा । प्रादयो गताद्यर्थे प्रथमया । प्रगत आचार्यः प्राचार्यः । दुराचारः पुरुषो दुष्पुरुषः । प्रगतः पितामहः प्रपितामह इत्यादि ॥ अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अतिक्रान्तो मालाम् अतिमालः । अन्यार्थे इति ह्रस्वः ॥ अभिगतो मुखम् अभिमुखः । उद्गतो वेलाम् उद्वेलः । प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि ॥ अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टः कोकिलया अवकोकिलः । अन्यार्थे इति ह्रस्वः । परिणद्धो वीरुधा परिवीरुत् । पर्यादयो ग्लान्याद्यर्थे चतुर्थ्या । परिग्लानोऽध्ययनाय पर्यध्ययनः । गुरुकुलवासादिना परिग्लानोऽध्ययनायेत्यर्थः ॥ निरादयः क्रान्ताद्यर्थे पञ्चम्या निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । अन्यार्थे इति ह्रस्वः । उत्क्रान्ता कुलात् उत्कुला । निर्गतमंगुलिभ्यो निरंगुलम् । अस्वपदविग्रहेण नित्यसमासा एते ॥ इति प्रादिसमासाः ॥

( तत्त्वदी० )—निष्कौशाम्बिरिति ॥ कौशाम्ब्या निर्गत इति विग्रहः ॥

( अश्ववडवयोर्द्वन्द्वः पूर्ववल्लिङ्गः ) अश्ववडवान् ॥

( सुबोधिनी )—अश्ववडवयोर्द्वन्द्वः पूर्ववल्लिङ्गः ॥ सूत्रे द्विवचनमविवक्षितम् । बहुत्वेऽपि पुँल्लिङ्गस्य दर्शनात् ॥ अश्वश्च वडवा च अश्ववडवौ । निपातनादापो निवृत्तिः बहुत्वे पुँल्लिंगं दर्शयति । अश्ववडवान् । अश्ववडवैः । विभाषा वृक्षेति पक्षे समाहारद्वन्द्वेऽश्ववडवम् । क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनं च । क्रियाविशेषणानामव्ययविशेषणानां चैकवचनं क्लीबत्वं च भवति ॥

( रात्राह्नाहान्ताः पुंस्येव ) अहोरात्रः । पूर्वरात्रः । पूर्वाह्णः । द्व्यह्नः ॥

( सुबोधिनी )—रात्राह्नाहान्ताः पुंस्येव ॥ परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते ॥ अप्रत्ययान्तो रात्रिशब्दष्टप्रत्ययान्तोऽहन्शब्दः । एतदन्ता द्वन्द्वद्विगुतत्पुरुषकर्मधारयाः पुँल्लिङ्गे एव भवन्ति । अहश्च रात्रिश्च अह्न इति नस्य सः । अहोरात्रः । अहःपूर्वाद्रात्रिशब्दादः समाहारे इत्यः प्रत्ययः रात्रेः पूवभागः पूर्वरात्रः। सर्वैकदेशेत्यप्रत्यत्ययः ॥ अह्नः पूर्वं इति पूर्वाह्णः । राजाहःसखिभ्य इति टप्रत्ययः । नो वेत्युपधालोपः ॥ द्वयोरह्नोः समाहार इति टः । नो वेति टिलोपः । द्व्यहः ॥

( संख्यापूर्वं रात्रं क्लीबम् ) द्विरात्रम् । त्रिरात्रम् ॥

( सुबोधिनी )—संख्यापूव रात्रं क्लीबम् ॥ द्वयो रात्र्योः समाहारः तिसृणां रात्रीणां समाहार इति । सर्वैकदेशेत्यप्रत्ययः । द्विरात्रम् । त्रिरात्रम् ॥

( अपथं तत्पुरुषे क्लीबम् ) अपथम् ॥

( सुबोधिनी )—अपथं तत्पुरुषे क्लीबम् । नञ्पूर्वः कृतसमासान्तः पथशब्दः क्लीबे स्यात् ॥ न पन्था इत्यपथम् । ऋक्पूरब्धूःपथामित्यप्रत्ययः ॥ तत्पुरुषे इति किम् । अपथो देशः कृतसमासान्तनिर्देशात् नेह । अपंथाः । अत्र नञ्पूर्वात्पथिशब्दाद्वा समासान्तस्तत्पुरुषे इति विकल्पः ।

( अर्द्धर्चादयः क्लीबपुंसोः ) अर्द्धर्चम्—अर्द्धर्चः । ध्वजम्—ध्वजः । तीर्थम्—तीर्थः । एवं शरीरमण्डपयूषदेहदेशाङ्कुशकलश इत्यादि ॥

( सुबोधिनी )—प्रसंगादाह ॥ अर्द्धर्चादयः क्लीबपुंसोः ॥ अर्द्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः ॥

( आबन्तोत्तरपदाद् द्विगोर्वेप् ) पञ्चखट्वी—पञ्चखट्वम् ॥

( सुबोधिनी )—आबन्तोत्तरपदाद्द्विगोर्वेप् ॥ आबन्तोत्तरपदो द्विगुर्वा स्त्रियाम् । पञ्चानां खट्वानां समाहारः । नपुंसकस्येति ह्रस्वे कृते इदं प्रवर्तते । पञ्चखट्वम् । स्त्रियां तु समाहारे अत इतीप् । पञ्चखट्वी ॥

( तत्त्वदी० )—पञ्चखट्वमिति ॥ पञ्चानां खट्वानां समाहार इति विग्रहः ॥

( अनो नलोपो द्विगोर्वेप् ) पञ्चतक्षम्—पञ्चतक्षी ॥

( सुबोधिनी )—अनो नलोपो द्विगोर्वेप् ॥ अनो नलोपो द्विगोर्वास्त्रियाम् ॥ इह वाशब्दः स्त्रियामित्यनेन संबध्यते न तु नलोप इत्यनेन ॥ अन्नन्तस्य द्विगोर्नित्यं नलोपो भवति । अन्नन्तो द्विगुः स्त्रियां च वा । पञ्चानां तक्ष्णां समाहारः पञ्चतक्षम् । स्त्रियां तु समाहारेऽत इति ईप् । पञ्चतक्षी ॥

( पुण्यसुदिनाभ्यामह्नः क्लीबता ) पुण्याहम् । सुदिनाहम् ॥

( सुबोधिनी )–पुण्यसुदिनाभ्यामह्नः क्लीबता ॥ आभ्यां परस्याहन्शब्दस्य क्लीवत्वं स्यात् ॥ पुण्यं च तदहश्चेति राजाहःसखिभ्य इति टः । नो वेति टिलोपः । पुण्याहम् ॥ सुदिनं च तदहश्चेति सुदिनशब्दः प्रशस्तपर्यायः सुदिनाहम् । रात्राह्नाहान्ताः पुंस्येवेत्यस्यापवादोऽयम् ॥

( तत्त्वदी० )–सुदिनाहमिति ॥ सुदिनशब्दः प्रशस्तपर्यायः । "सुदिनासु निशासु कार्यमेतत्प्रविचिन्वीत विशेषतः स्वपक्षे" इत्यादिप्रयोगदर्शनात् ॥

**( संख्याव्ययाभ्यां परस्य पथः क्लीबता )** त्रिपथम् । विपथम् ॥

( सुबोधिनी )–संख्याव्ययाभ्यां परस्य पथः क्लीबता ॥ आभ्यां परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः ॥ त्रयाणां पन्था इति ऋक्पूरब्धूरित्यप्रत्ययः । त्रिपथम् ॥ विरूपः पन्था इति विपथम् ॥ कथं पुंस्त्वं " व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः " इत्यमरे ॥ उच्यते प्रमाद एवायामिति बहवः । वस्तुतस्तु ' पथ, गतौ ' इत्यस्मात्पचाद्यप्रत्यये पथति व्याप्नोतीति व्युत्पादितः पथशब्दः । तथा च त्रिकाण्डशेषः । " वाटः पथश्च मार्गः स्यात् " इति । अनेन समासे पुंस्त्वमुपपन्नम् । कापथ इत्यत्र कादेशस्तु ईषदर्थे बोध्यः । अथ च परवल्लिङ्गापवादत्वात्तत्पुरुषे एवेदं प्रवर्तते नान्यत्र । विपथा नगरी । बहुव्रीहिरयम् । पन्थानमतिक्रान्ता अतिपथा । इहापि न द्विगुप्राप्तापन्नालमिति परपदलिङ्गप्रतिषेधात् इति माधवः ॥

( तत्त्वदी० )–त्रिपथं विपथमिति ॥ "व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः" । इत्यमरे ॥ "विपथकापथौ" इति रभसकोशे च पथगतावित्यस्मात्पचाद्ये बोध्यम् । "वाटः पथश्च मार्गः स्यात्" इति त्रिकाण्डशेषोऽप्यत्रानुकूलः ॥

**( सामान्ये नपुंसकम् )** मृदु पचति । प्रातः कमनीयम् ॥

( सुबोधिनी )–सामान्ये नपुंसकम् ॥ अनियतलिङ्गविषयकमिदम् । तेनादिः पचतीत्यादौ पुंस्त्वमेव ॥ मृदु पचति । क्रियाविशेषणत्वात् द्वितीयान्तमिदम् । धातूपात्तक्रियां प्रति हि फलांशः कर्मीभूतः । फलसामानाधिकरण्ये द्वितीया ॥

(तत्त्वदी० )–मृदुपचतीति ॥ क्रियाविशेषणत्वाद्द्वितीयान्तम् । धातूपात्तभावनां प्रति फलांशः कर्मीभूतः । तथा च फलसामानाधिकरण्ये द्वितीया । सामान्ये नपुंसकमिति त्वनियतलिङ्गविषयम् । तेन आदिः पचतीत्यादौ प्रातरादिरिति पुंस्त्वमेव ॥

**( उपज्ञोपक्रमान्तस्तत्पुरुषः क्लीबम् )** उपज्ञायमानोपक्रम्यमाणयोः प्राथम्यं चेदाख्यातुमिष्यते । पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः ॥

( सुबोधिनी )–उपज्ञोपक्रमान्तस्तत्पुरुषः क्लीबम् ॥ अनन्तरतत्पुरुषाधिकारोऽयम् ॥ उपज्ञान्त उपक्रमान्तश्च तत्पुरुषः क्लीबं स्यात् ॥ उपज्ञायते इत्युपज्ञा । षिद्भिदादिभ्योऽङ् इति कर्मण्यङ् ॥ उपक्रम्यते इत्युपक्रमः । कर्मणि घञ् । मान्तस्य सेटो न वृद्धिरिति वृद्ध्यभावः । उपज्ञा च उपक्रमश्च उपज्ञोपक्रमौ उपज्ञोपक्रमौ अन्ते यस्य स

उपज्ञोपक्रमान्तः। "उपज्ञा ज्ञानमाद्यं स्याद् ज्ञात्वारम्भ उपक्रमः" इत्यमरः॥ उपज्ञायमानस्योपक्रम्यमाणस्य च प्रथमस्य भावः प्राथम्यं चेद्यदि आख्यातुं वक्तुमिष्यते वाञ्छ्यते। पाणिनेरिति कर्तरि षष्ठी॥ नन्दस्योपक्रम इति नन्दोपक्रमम्॥

**( छायान्तश्च पूर्वपदार्थबाहुल्ये )** इक्षूणां छाया इक्षुच्छायम्॥

( सुबोधिनी )—छायान्तश्च पूर्वपदार्थबाहुल्ये॥ छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वं च तत्पदं च पूर्वपदं पूर्वपदस्यार्थः पूर्वपदार्थः बहुलस्य भावो बाहुल्यम् पूर्वपदार्थस्य बाहुल्यं पूर्वपदार्थबाहुल्यं तस्मिन्॥ सेनासुराच्छायेत्यस्य विकल्पस्यापवादोऽयम्॥

( तत्त्वदी० )—इक्षुच्छायमिति॥ "इक्षुच्छायानिषादिन्यः" इत्यत्र त्वाङ्प्रश्लेषो बोध्यः॥

**( राजपर्यायपूर्वो रक्षःपिशाचादिपूर्वश्च सभान्तः क्लीबम् )** इनसभम्। ईश्वरसभम्। नेह। राजसभा। रक्षःसभम्। पिशाचसभम्॥

( सुबोधिनी )—राजपर्यायपूर्वो रक्षःपिशाचादिपूर्वश्च सभान्तः क्लीबम्॥ राजपर्यायपूर्वः सभान्तस्तत्पुरुषो रक्षःपिशाचादिपूर्वः सभान्तस्तत्पुरुषश्च नपुंसकं स्यात्॥ इनेश्वरशब्दौ राजपर्यायौ। इनस्य सभा इनसभम्। ईश्वरस्य सभा ईश्वरसभम्॥ राजपर्यायपूर्व इति किम्। राजसभा॥ रक्षसः सभा रक्षःसभम्। पिशाचस्य सभा पिशाचसभम्॥

( तत्त्वदी० )—इनसभमिति॥ नृपतिसभामगमन्न चेयमाना' इत्यत्र तु राजविशेषवाची नृपतिशब्दो बोध्यः॥

**( संघातार्थे सभान्तः )** स्त्रीसभम्। स्त्रीसंघात इत्यर्थः॥

( सुबोधिनी )—संघातार्थे सभान्तः॥ संघातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात्॥

**( सेनासुराच्छायाशालानिशान्तो वा )** ब्राह्मणसेनम्। यवसुरम्। कुड्यच्छायम्। गोशालम्। श्वनिशम्। पक्षे ब्राह्मणसेनेत्यादि॥

इति समासप्रक्रिया॥ ॥

( सुबोधिनी )—सेनासुराच्छायाशालानिशान्तो वा॥ एतदन्तस्तत्पुरुषः क्लीबं स्याद्वा॥ श्वनिशम्। कृष्णचतुर्दशी॥ अनञ्तत्पुरुष इत्यधिकारान्नेह। दृढसेनो राजा। दृढा सेना यस्येति बहुव्रीहिः॥ असेना अविद्यमाना सेना इति नञ्पूर्वस्तत्पुरुषः॥ अथ शेषमाह॥ कृत्तद्धितसमासैकशेषयङाद्यन्तधातुरूपाः पञ्च वृत्तयः॥ पञ्चानां वृत्तिरिति पूर्वाचार्यसंज्ञा। वृत्तिलक्षणमाह॥ परार्थाभिधानं वृत्तिः॥ परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिः। यथा। राजपुरुष इत्यत्र राजशब्देन

वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते॥ विग्रहलक्षणमाह ॥ वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विधा । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः ॥ प्रयोगानर्होऽसाधुरलौकिकः । यथा । राज्ञः पुरुष इति लौकिकविग्रहः राजन् अस् पुरुष स् इत्यलौकिकविग्रहः ॥ नित्यसमासलक्षणमाह ॥ **अविग्रहो नित्यसमासः ॥** लौकिकविग्रहरहितो नित्यसमासो ज्ञेयः । लोके यस्य विग्रहो न प्रयुज्यते इति भावः । अस्वपदविग्रहो वा । समस्यमानयावत्पदैरघटितः अस्वपदविग्रहः । समासः षड्विध इति प्रायोवादः ॥ अव्ययीभावतत्पुरुषद्वन्द्वद्विगुबहुव्रीहिकर्मधारयाधिकारबहिर्भूतस्यापि नाम्नश्च कृतोति विधानात् । तद्व्याख्याने तत्पुरुष इत्युक्तिस्तु प्राचामनुरोधेनेति ध्येयम् ॥ पूर्वपदार्थप्रधानोऽव्ययीभावः ॥उत्तरपदार्थप्रधानस्तत्पुरुषः ॥ उभयपदार्थप्रधानो द्वन्द्वः ॥ संख्यापूर्वान्यपदार्थप्रधानो द्विगुः॥अन्यपदार्थप्रधानो बहुव्रीहिः ॥ विशेषणपूर्वः कर्मधारयः उत्तरपदार्थप्रधानः विशेष्यपूर्वस्तु पूर्वपदार्थप्रधानः । न तु सार्वत्रिकः । सूपप्राति उन्मत्तगङ्गमित्याद्यव्ययीभावे । अतिमालादौ तत्पुरुषे । दन्तोष्ठमित्यादौ द्वन्द्वे । द्वित्रा इत्यादौ बहुव्रीहौ चाऽभावात् ॥ अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव । किं च "सिपां सिपा तिपां नाम्ना धातुनाथ तिपां तिपा । सिबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः॥१॥" प्रायोऽभिप्रायः । सिबन्तानां सिबन्तेन यथा । राजपुरुषः ॥ सिबन्तानां तिपा समासो वेदे एव भवति नान्यत्र । यथा पर्यभूषत् ॥ सिबन्तानां नाम्ना प्रातिपदिकेन यथा । कुम्भकारः । अत्र सिबुत्पत्तेः प्रागेवोपपदसमासः ॥ सिबन्तानां धातुना यथा । क्विब्वचिपृच्छ्यायतस्तुकटप्रुजुश्रीणामित्यादिनिपातनाद्धातुना समासः । कटप्रूः । अजस्रम् ॥ तिपां तिपा समासो यथा । क्रियासातत्ये आख्यातेन समस्यते । अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता । पचतभृज्जता । खादतमोदता ॥ तिपां सिपा यथा । एहीडादयोऽन्यार्थे समस्यन्ते । एहि ईड इति यस्मिन् कर्मणि तत् एहीडम् । कृन्त विचक्षण इति यस्यां क्रियायां सा कृन्तविचक्षणा ॥ इवेन नित्यसमासो विभक्त्यलोपश्च । जीमूतस्येव ॥ इति सर्वसमासशेषः ॥ जात्याख्यायामेकस्मिन्बहुवचनं वा । ब्राह्मणाः पूज्याः ब्राह्मणः पूज्यः । एकत्वे द्वित्वे चास्मदो बहुवचनं वा । वयं ब्रूमः । अहं ब्रवीमि । आवां ब्रूवो वा ॥ उपमानानि सामान्यवचनैः सह समस्यन्ते । घनश्यामः । इह पूर्वं पदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते । उपमानस्य पूर्वनिपातनार्थमिदम् ॥ उपमेयं व्याघ्रादिभिः सामान्याप्रयोगे समस्यते । विशेषस्य पूर्वनिपातनार्थमिदम् । पुरुषो व्याघ्र इव शूर इत्यर्थः ॥ ॥ इति सुबोधिन्यां समासप्रक्रिया ॥ ॥

( तत्त्वदी० )—श्रीविधानरस्यायिलोकेशकरशर्मणा । कृतायामिह टीकायां समासविवृतिर्गता ॥

इति तत्त्वदीपिकायां समासप्रक्रिया ॥

# अथ तद्धितप्रक्रिया ।

**अपत्येऽण् ॥ नाम्नोऽपत्येऽर्थेण् प्रत्ययः ॥**

( सुबोधिनी )–अथ तद्धितो निरूप्यते ॥ तेभ्यः स्याद्यन्तपदेभ्यो हितस्तद्धितः । विभक्त्यन्तनाम्न एव तद्धितोत्पत्तिर्भवतीत्यर्थः ॥ अपत्येऽण् । षष्ठ्यन्तान्नाम्नोऽण् प्रत्ययो भवति अन्वये सत्यपत्यार्थे । अन्वयस्तु एकार्थीभाव एव वृत्तौ । वाक्ये तु व्यपेक्षालक्षणः । "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे" इत्यमरः ॥

( तत्त्वदी० )–अपत्येऽणिति ॥ अत्र प्रकरणत्वादादिनाऽपत्यान्वयस्यासंभवात्परिशेषाद्वा नामलाभः । नाम्नोऽण् इत्यतः षष्ठ्यन्तस्यैवापत्यवद्भावसंबन्धे षष्ठ्या एवोचितत्वात् ॥

**आदिस्वरस्य ञ्णिति च वृद्धिः ॥ स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्ञिति णिति च तद्धिते ॥**

( सुबोधिनी )–आदिस्वरस्य ञ्णिति च वृद्धिः ॥ स्वरेषु आदिः आदिस्वरः निर्द्धारणार्थसप्तम्या समासः । क्वचिदमाद्यन्तस्य परत्वमिति परनिपातः। निर्द्धारणषष्ठ्या तु न समासः निर्द्धारणे या षष्ठीति निषेधात् । यद्वा वोव्यंस्वरे इत्यतः स्वरे इत्यनुवर्त्य तत्र जातावेकवचनं निर्द्धारणसप्तम्यन्तम् । तथा च स्वरेषु य आदिस्वरस्तस्य वृद्धिरिति व्याख्याने आदिश्चासौ स्वरश्चेति कर्मधारयः । ञ् च ण् च ञ्णौ तौ इतौ यस्य स ञ्णित् तस्मिन् ञ्णिति । प्रकरणात्ताद्धिते इति लभ्यते । इच्छब्दस्तु प्रत्येकं संबध्यते द्वन्द्वान्ते श्रूयमाणत्वात् ॥

( तत्त्वदी० )–आदिस्वरस्य ञ्णिति च वृद्धिरिति ॥ अत्र स्वराणां आदिः आदिस्वरः । स्वरेषु वा । निर्द्धारणार्थया षष्ठ्या सप्तम्या वा समासः । क्वचिदमाद्यन्तस्य परत्वस्येदमपि ज्ञापकम् । निर्द्धारणं च सजातीयापेक्षम् । तेन स्वर एव गृह्यते न तु हस इति लघुभाष्ये । अत्रेदमवधेयम् । निर्द्धारणषष्ठ्या समास इति तावत् व्याहतम् । तथाहि । क्वचित्षष्ठी न समस्यत इत्युक्तत्वात् क्वचित्पदेन ग्रन्थान्तरोक्तनिर्द्धारणादिलाभात् न निर्द्धारण इति पाणिनिसूत्रमेवात्रार्थेऽनुकूलमिति । तस्मात्सप्तम्यंन्तेन समासः । कर्मधारयो वा । कर्मधारये च यस्वर इत्यतः स्वरे इत्यनुवर्त्य जातावेकवचनं बोध्यम् । तथा च स्वरेषु य आदिस्वरस्तस्य वृद्धिरिति व्याख्येयम् । ञ् च ण् च ञ्णौ, ञ्णौ इतौ यस्य स ञ्णित् तस्मिन् प्रकरणात्तद्धितस्यैव विशेषणम् । अत्र णितीति वा ञितीति वा एकमेव कर्तव्यं सर्वत्र णकार एव ञकार एव चानुबन्धत्वेन कार्य इत्युक्तिस्तु अनेकस्थलेऽनुबन्धव्यत्यासकरणक्लेशादुपेक्षिता ॥ नन्वादेर्णिति च वृद्धिरित्येवास्तु किं स्वरग्रहणेनेति चेत्सत्यम् हसस्य वृद्धिग्रहणेन वारणसंभवेऽपि यत्रादावेकस्वरः स्यांत्तत्रैव वृद्धिर्न त्वादिहसात्परस्य स्वरस्येति शङ्कानिरासाय स्वरग्रहणस्यावश्यकत्वात् आदित्वं तु यस्मात्पूर्वं नास्ति तत्त्वम् । एवमन्तत्वमपि यस्मात्परो नास्ति

तत्त्वमेव। इत्थं च व्यपदेशिवद्भावो नापेक्ष्यः। यदि तु सत्यन्यस्मिन्नित्यपि विशेषणमुपादेयम्। तदा व्यपदेशिवद्भावेनैकस्वरस्य सिद्धिः॥

**वोऽव्यस्वरे॥ उवर्णस्यौतश्चाव तद्धितस्य यकारे स्वरे च॥ उपगोरपत्यमौपगवः। वैदुषः। वासिष्ठः। गौतमः। भार्गवः। आङ्गिरसः॥ वैदः। और्वः। वार्त्रघ्नः॥**

( सुबोधिनी )—**वोऽव्यस्वरे**॥ उश्च ओश्चानयोः समाहारो वो एकत्वे द्विगुद्वन्द्वाविति नपुंसकत्वेऽपि न ह्रस्वः। अनुकार्यस्वरूपस्पष्टप्रतिपत्त्यर्थत्वात्॥ यश्च स्वरश्च तयोः समाहारः यस्वरं तस्मिन् यस्वरे तद्धितसंबन्धिनि॥ अत्रौकारस्य स्वरे अवि सिद्धे यकारार्थं तद्ग्रहणम्। वस्तुतस्तु क्वचिद्यकारेऽपि स्वरकार्यातिदेशादेव सिद्धिरित्योग्रहणं व्यर्थमिति ध्येयम्॥ गामुपगत इत्युपगुः। नाम्नश्चेति समासः। गोरिति ह्रस्वः। यादवविशेषस्य उद्धवस्य पूर्वजः कश्चित्। "उद्धवं प्रकृत्यौपगविर्जगाम॥" इति भागवतात्॥ उपगोरपत्यमिति अणः प्रयोगे उक्तार्थानामप्रयोग इति न्यायादपत्यशब्दस्याप्रयोगः। वा टाङ्ञ्चोरित्यतो वेत्यनुवर्तते। तेन पक्षे षष्ठीसमासोऽपि। उपग्वपत्यमिति। समासस्य वैकल्पिकत्वाद्वाक्यमपि। औपगवः। स्त्रियां तु जातेरितीप्। औपगवी॥ अन्वये किम्। वस्त्रमुपगोरपत्यं चैत्रस्य॥ विदुषोऽपत्यं वैदुषः॥ वसिष्ठस्य ऋषेरपत्यं वासिष्ठः॥ गौतमस्य ऋषेरपत्यं गौतमः॥ भृगोर्ऋषेरपत्यं भार्गवः॥ अङ्गिरस ऋषेरपत्यम् आङ्गिरसः॥ विदस्यापत्यं वैदः॥ उर्वस्यापत्यं और्वः॥

( तत्त्वदी० )—**वोऽव्यस्वर** इति॥ वो अव् यस्वरे इति छेदः। उश्च ओश्च एतयोः समाहारः वो। एकत्वे द्विगुद्वन्द्वावित्यस्यानित्यत्वान्नपुंसकाभावः। नपुंसकत्वं वा ह्रस्वस्यैवानित्यत्वम्। यश्च स्वरश्च यस्वरं तस्मिन्। अत्र ओकारस्य स्वरे अव्विधानस्य सिद्धत्वेऽपि यकारार्थमोग्रहणस्यावश्यकत्वात् तद्ग्रहणम्। वस्तुतस्तु क्वचिद्यकारेऽपि स्वरकार्यातिदेशादव्सिद्धिरित्योकारग्रहणं न कर्तव्यं यस्वरयोश्च प्रकरणात्तद्धितयोरेव ग्रहणम्॥ **उपगोरपत्य**मिति॥ गामुपगत उपगुः। नाम्नश्चेति समासो गोरिति ह्रस्वः॥ उपगुर्यादवविशेषः उद्धवपूर्वजेषु कश्चन। अणः प्रयोगे उक्तार्थानामप्रयोग इति न्यायादपत्यशब्दस्याप्रयोगः॥ मृगापत्ये मृगत्वसत्त्वान्न तद्वाचिभ्यस्तद्धितः। उपगुत्वं त्वौपगवे नास्तीति भवत्यपत्यप्रत्ययः॥

**ऋ उरणि॥ संख्यासंभद्रपूर्वस्य मातृशब्दस्य ऋत उर्भवत्यणि परे॥ षाण्मातुरः। सांमातुरः। भाद्रमातुरः॥**

( सुबोधिनी )—**ऋ उरणि**॥ सामान्यशब्दस्यापि लक्ष्यानुसारात् विशेषपरत्वं बोध्यम्। तेन संख्यादिपूर्वस्य मातृशब्दस्य लाभः। षण्णां मातॄणामपत्यमिति तद्धितार्थे द्विगुसमासोऽयम्। न तु षण्मातॄणामपत्यमिति विग्रहः। दिक्संख्ये संज्ञायामिति नियमेनासंज्ञायां समासाभावात्। तद्धितान्तस्य संज्ञात्वेऽपि समासस्यासंज्ञात्वात् आदि-

स्वरवृद्धिः। षो ड इति डत्वम् क्वचिज्जवस्यापि ञम इति डस्य णः। उर्। षाण्मातुरः॥ द्वयोर्मात्रोरपत्यं द्वैमातुरः। द्वैमात्रेयश्च विनायकः॥ संमातुरपत्यं सांमातुरः॥ भद्रमातुरपत्यं भाद्रमातुरः॥

(तत्त्वदी०)–ऋ उरणीति॥ मातृशब्दस्येति जननीवाचकस्यैव ग्रहणं व्याख्यानात्॥ षण्णां मातॄणामपत्यमिति॥ संख्यापूर्वो द्विगुरिति तद्धितार्थे द्विगुः। ञमे ञमा वेत्यत्र व्यवस्थितत्वाश्रयणात्क्वचिज्जवस्यापि डकारस्य ञमानां मध्ये सवर्णत्वेन णकारः॥

**शिवादेश्चाण्॥ शैवः। गाङ्गः॥**

(सुबोधिनी)–शिवादेश्चाण॥ शिवादेरण् स्यादपत्येऽर्थे॥ इञपवादोऽयम्॥ शिवस्यापत्यं शैवः॥ लह्यस्यापत्यं लाह्यः॥ गङ्गाया अपत्यं गाङ्गः। पक्षे गाङ्गेयः। एयण्॥ शिव ककुत्स्थ वेतण्ड जरत्कारु विपाश तक्षन् विश्रवण् रवण ऋष्टिषेण विरूपाक्ष इतिशिवादि॥

(तत्त्वदी०)–शिवादेश्चेति॥ अत इति योगविभागात् शिवादेरकारान्तादप्यण्॥

**अत इञनृषेः॥ अकारान्तान्नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ्॥ दैवदत्तिः। श्रैधरिः। दाशरथिः। पौरंदरिः॥**

(सुबोधिनी)–अत इञनृषेः॥ ऋषिवाचकाददन्तात्तु अणेव भवति। अनृषिवाचकमदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यन्तादिञ् स्यादपत्येऽर्थे॥ देवदत्तस्यापत्यं दैवदत्तिः॥ श्रीधरस्यापत्यं श्रैधरिः॥ दशरथस्यापत्यं दाशरथिः॥ पुरंदरस्यापत्यं पौरन्दरिः॥

(तत्त्वदी०)–अत इञनृषेरिति॥ अत्रात इति योगविभागः। तेनाकारान्तादनृषिवाचकादप्यण्। भैमसेन इत्यादि॥

**(बाह्वादेश्च) बाहोरपत्यं बाहविः। औडुलोमिः। गार्गिः। बैदिः। नाडिः। कौञ्जिः॥**

(सुबोधिनी)–बाह्वादेश्च॥ बाह्वादिभ्य इञ् स्यादपत्येऽर्थे॥ बाह्वादिराकृतिगणोऽयम्। बाहोरपत्यं बाहविः॥ उडूनीव लोमानि यस्य स उडुलोमा। "तारकाप्युडु वा स्त्रियाम्" इत्यमरः॥ उडुलोम्नोऽपत्यं नो वेति टिलोपः। औडुलोमिः। बहुत्वे त्वस्मादणितो वेत्यणित्त्वान्न वृद्धिः। उडुलोमाः॥ गर्गस्यापत्यं गार्गिः॥ विदस्यापत्यं बैदिः॥ नडस्यापत्यं नाडिः॥ कुञ्जस्यापत्यं कौञ्जिः॥ बाह्वादिर्यथा। विद उर्व कश्यप कुशिक भारद्वाज उपमन्यु विश्वानर परस्त्री परशुं च इत्यादि॥

(तत्त्वदी०)–बाह्वादेश्चेति॥ इञ इति द्वितीययोगविभागादनकारान्तादपीञ् सिध्यतीति भावः। तेन सावर्णिरित्यादिसिद्धिः॥ अकङ् चेति॥ ङित्त्वादन्तस्यायमादेशः॥

**(सुधातृव्यासवरुडनिषादचण्डालबिम्बानामकङ् च)** सुधातुरपत्यं सौधातकिः । वैयासकिः । वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः ॥

( सुबोधिनी )—सुधातृव्यासवरुडनिषादचण्डालबिम्बानामकङ् च ॥ एषामकङादेशः स्यात् इञ्प्रत्ययश्चापत्येऽर्थे ॥ ङित्वादन्त्यस्य स्थानेऽकङ् ॥ सुधातुरपत्यं सौधातकिः ॥ वेदान् व्यसतीति वेदव्यासः । कार्येऽणित्यण् । भीमो भीमसेन इतिवदेकदेशस्य ग्रहणम् । व्यासस्यापत्यमिति न संधिय्वोर्युद् चेति वक्ष्यमाणेनैडागमः । ततो वृद्धिर्वैयासकिः ॥ वरुडस्यापत्यं वारुडकिः । वरुडादयो जातिविशेषाः ॥ निषादस्यापत्यं नैषादकिः ॥ चण्डालस्यापत्यं चाण्डालकिः ॥ बिम्बस्यापत्यं बैम्बकिः ॥

( तत्त्वदी० )—सौधातकिरिति ॥ सुधातुरपत्यमिति विग्रहः ॥

**ण्यायनणेयण्णीया गर्गनडात्रिस्त्रीपितृष्वस्रादेः ॥** गर्गादेर्ण्यो नडादेरायनण् अत्र्यादेः स्त्रीप्रत्ययान्ताच्च एयण् पितृष्वस्रादेर्णीयोऽपत्येऽर्थे ॥ गार्ग्यः । वात्स्यः । कात्यः । वातण्ड्यः । आवट्यः । माण्डूक्यः । पौतिमाष्यः ॥ नाडायनः । चारायणः । गार्ग्यायणः । वात्स्यायनः । आमुष्यायणः । आत्रेयः । कापेयः । नैधेयः । गाङ्गेयः । माहेयः । गौधेयः । नाटेयः ॥

( सुबोधिनी )—ण्यायनणेयण्णीया गर्गनडात्रिस्त्रीपितृष्वस्रादेः ॥ ण्यश्च आयनण् च एयण् च णीयश्च ते ण्यायनणेयण्णीयाः । गर्गश्च नडश्च अत्रिस्त्रियौ च पितृष्वसा च एषां समाहारो गर्गनडात्रिस्त्रीपितृष्वसृ गर्गनडात्रिस्त्रीपितृष्वसृ आदिर्यस्य स गर्गनडात्रिस्त्रीपितृष्वस्रादिस्तस्मात् । द्वन्द्वान्ते श्रूयमाण आदिशब्दः प्रत्येकं संबध्यते । स्त्रीशब्देन स्त्रीप्रत्ययस्य ग्रहणान्नादिशब्दप्रयोगः ॥ इह स्वरूपग्रहणं अत्र्यादिषु तस्य तु नेष्टं सुग्रहात् ॥ यथाक्रमेण गर्गादिभ्यो ण्योऽपत्येऽर्थे ॥ नडादेरायनण् अपत्येऽर्थे अत्र्यादेः स्त्रीप्रत्ययान्ताच्च एयण् अपत्येऽर्थे ॥ पितृष्वस्रादेर्णीयोऽपत्येऽर्थे ॥ इह आयनणेयणोरणन्तत्वादीप् । अन्तणकारपाठसामर्थ्यादर्थवद्ग्रहणपरिभाषाया अनित्यत्वात् । अन्यथा ण्यणीयवत् णायनणेयावित्येव ब्रूयादिति ॥ गर्गादिर्यथा । गर्ग वत्स व्याघ्रपाद पुलस्ति बभ्रु मण्डु बतण्ड शकल कण्व अगस्त्य (अगस्ति) कुण्डिनी याज्ञवल्क्य पराशर जमदग्नि इत्यादि ॥ नडादिर्यथा । कुञ्ज ब्रध्न शंख शकट इत्यादि ॥ अत्र्यादिर्यथा । अत्रि शुभ्र मृकण्डु आश्वाद नातृ विधवा गोधा प्रवाहण पाण्डु इत्यादि ॥ गर्गादिशब्दास्तदपत्ये लाक्षणिकाः । साक्षादपत्ये इञेव अनन्तरापत्ये गार्गिरित्युक्तत्वात् । गर्गस्यापत्यमितीञोऽर्थः । गार्गेरपत्यं गार्ग्यः । वत्सस्यापत्यं वात्स्यः । कतस्यापत्यं कात्यः ।

वतण्डस्यापत्यं वातण्ड्यः। अवटस्यापत्यमावट्यः। मण्डूकस्यापत्यं माण्डूक्यः। पूतिमाषस्यापत्यं पौतिमास्यः। स्त्रियां तु नदादित्वादीप्। हसात्तद्धितयस्येपीति यलोपः गार्गी। वात्सी। नदादित्वात् स्त्रियामायनणि गार्ग्यायणी। कात्यायनी। वातण्डी। वातण्ड्यायनी। माण्डूक्यायनी। अजादित्वादाप्प्रत्यये आवट्या। पौतिमाष्या। नडस्यापत्यमिति ओऽर्थः। नाडेरपत्यं नाडायनः। चरस्यापत्यं चारायणः। ण्यान्तानामिञन्तानां च नडादित्वं बोध्यम्। गार्ग्यस्यापत्यं गार्ग्यायणः। वात्स्यस्याऽपत्यं वात्स्यायनः। दाक्षेरपत्यं दाक्षायणः। अमुष्यापत्यमामुष्यायणः। षष्ठ्या अलुगत्र। अत्रेरपत्यमात्रेयः। कपेरपत्यं कापेयः॥

(तत्त्वदी०)–**ण्यायनणेयण्णीया** इति॥ ण्यश्च आयनण् च एयण् च णीयश्च ते। गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च एतेषां समाहारस्तदादिर्यस्य स तथा तस्मात्। द्वन्द्वात्पर आदिशब्दः प्रत्येकमभिसंबध्यते। स्त्रीशब्देन स्त्रीप्रत्ययग्रहणान्नादिशब्दप्रयोगः। अत्र नव्याः। आदिशब्दोऽत्र प्रकारवाची न तु व्यवस्थार्थः। एतदादिगणस्यात्रादर्शनादित्याहुः। तन्मते गर्गादेर्गणाण्ण्य इत्यादिर्वासुदेवोक्तिः प्रत्युक्ता। गर्गादिशब्दाश्च तदपत्ये लाक्षणिकाः तेन गर्गस्यापत्यं गर्ग्यम्। गार्ग्य इत्यत्र गर्गेरपत्यमित्यर्थो बोध्यः। साक्षादपत्ये तु गार्गिरित्येवेति॥

**(कल्याण्यादेरिनङ् च)** काल्याणिनेयः। कौलटिनेयः॥

(सुबोधिनी)–**कल्याण्यादेरिनङ् च**॥ एषामिनङादेशः॥ स्त्रीप्रत्ययान्तत्वादेयणप्रत्ययः॥ कल्याणी सुभगा दुर्भगा बन्धकी परस्त्री कुलटा इत्यादि। कल्याण्या अपत्यं ङित्त्वादन्त्यस्थानेऽनङ्। आदिस्वरवृद्धिः। यस्येत्यलोपः। काल्याणिनेयः॥ कुलान्यटति भिक्षार्थं हलादेरीषादाविति टेर्लोपः। सा कुलटा। सती भिक्षुक्यत्रेनङ्विधौ गृह्यते। या तु व्यभिचारार्थे कुलान्यटति तस्या एरण्प्रत्यये कौलटेरः। एयणि तु कौलटेयः। सतीपक्षे तु इनङ् वा भवति कौलटिनेयः कौलटेयः॥ "अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः॥" "कौलटेरः कौलटेयो भिक्षुकी तु सती यदि। तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः" इत्यमरः॥ सुभगाया अपत्यमिति क्वचिद्द्वयोरितिं वक्ष्यमाणेनोभयत्र वृद्धिः। इनङ्। सौभागिनेयः॥

(तत्त्वदी)–**इनङ् चेति**॥ ङित्त्वादन्त्यादेशः॥ **काल्याणिनेय** इति॥ कल्याण्या अपत्यमिति विग्रहः॥

**(गोधादेरारणेरणौ)** गौधारः। नाटारः। पाण्डारः। गौधेरः। नाटेरः। पाण्डेरः। पैतृष्वस्रीयः। मातृष्वस्रीयः॥

(सुबोधिनी)–**गोधादेरारणेरणौ**॥ गोधादेरारणेरणौ प्रत्ययौ स्तः अपत्येऽर्थे॥ गोधाया अपत्यं गौधारः॥ नट्या अपत्यं नाटारः यस्येति लोपः॥ पण्डो नपुंसकस्तस्यापत्यं पाण्डारः। एरणि तु गौधेरः नाटेरः। पितृष्वस्रादेर्णीयः। पितृष्वसेति मातृ

पितृभ्यां स्वसुरिति षत्वम् । पितृस्वसुरपत्यं पैतृष्वस्रीयः । मातृष्वसुरपत्यं मातृष्वस्रीयः ॥

( तत्त्वदी० )—**गौधार** इति ॥ गोधाया अपत्यमिति विग्रहः ॥ **पाण्डार** इति ॥ पण्डस्यापत्यमिति विग्रहः ॥

**( पितृष्वस्रादेरेयणि टिलोपः ) पैतृष्वसेयः । मातृष्वसेयः ॥**

( सुबोधिनी )—**पितृष्वस्रादेरेयणि टिलोपः** ॥ पितृष्वस्रादेष्टेर्लोपः स्यादेयणि ॥ अत्र्यादित्वादेयण् । पैतृष्वसेयः ॥

( तत्त्वदी० )—**पैतृष्वसेय** इति ॥ पितृष्वसुरपत्यमिति विग्रहः । पितृष्वस्रादेरित्यत्र कृतषत्वनिर्देशात्समासे क्वचित्पूर्वपदादुत्तरपदस्थस्य सस्य षः । तेन ज्योतिष्टोम इत्यादौ षत्वं च ॥

**( पाण्डोर्ड्यण् ) पाण्ड्यः ।**

( सुबोधिनी )—**पाण्डोर्ड्यण्** ॥ पाण्डुशब्दात् ड्यण् स्यादपत्येऽर्थे ॥ णित्करणं तु पाण्ड्या भार्या इत्यत्र वृद्धिहेतोस्तद्धितस्यारक्तविकारार्थस्येति पुंवद्भावप्रतिषेधार्थम् । पाण्डोरपत्यं पाण्ड्यः ॥

**( चटकादैरण् ) चटकस्यापत्यं चाटकैरः ॥**

( सुबोधिनी )—**चटकादैरण्** ॥ चटकशब्दादैरण् स्यादपत्येऽर्थे ॥ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया स्त्रिया अपि । चटकस्य चटकाया वापत्यं चाटकैरः ॥

( तत्त्वदी० )—**चाटकैर** इति ॥ चटकस्य चटकाया वापत्यमिति विग्रहः ॥

**( स्र्यपत्ये लुक् ) चटका ॥**

( सुबोधिनी )—**स्र्यपत्ये लुक्** । चटकादैरणो लुक् स्यात् स्र्यपत्ये ॥ चटका । अजादित्वादाप् ॥

( तत्त्वदी० )—**चटके**ति ॥ चटकस्य चटकाया वापत्यं स्त्रीति विग्रहः ॥

**( लुग्बहुत्वे क्वचित् ) प्रत्ययस्य ॥ गर्गाः । वसिष्ठाः । भृगवः । अङ्गिरसः । वत्साः । कुत्साः । गौतमाः । अत्रयः । विदाः । अङ्गाः । वङ्गाः । कलिङ्गाः । विदेहाः ॥**

( सुबोधिनी )—**लुग्बहुत्वे क्वचित्** ॥ क्वचिदपत्यप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे ॥ ण्यस्य लुक् । गर्गाः । वत्साः ॥ तत्कृते इति किम् । प्रियो गार्ग्यो येषां ते प्रियगार्ग्याः । स्त्रियां तु न । गार्ग्यः स्त्रियः ॥ अणो लक् वसिष्ठाः । भृगवः । अङ्गिरसः । कुत्साः । गौतमाः । बिदाः । उर्वाः ॥ एयणो लुक् । अत्रयः ॥ जनपदक्षत्रियवाचिनोऽपत्यप्रत्ययस्य लुक् स्यात् । बहुत्वे अणो लुक् । अङ्गाः । वङ्गाः । कलिङ्गाः । विदेहाः ॥ तद्राजन्यर्थेष्वपत्यप्रत्यया भवन्ति । इक्ष्वाकूणां राजेति निपातनाट्टिलोपः ।

ऐक्ष्वाकः ॥ पञ्चालानां राजा पाञ्चालः ॥ बहुत्वे लुक्। इक्ष्वाकवः पञ्चाला इत्यादि ॥ एवमङ्गानां राजा आङ्ग इत्याद्यपि बोध्यम् ॥

( तत्त्वदी० )–लुग्बहुत्वे क्वचिदिति ॥ क्वचिद्ग्रहणाद्ग्रन्थान्तरोक्तलक्ष्यानुसारेण लुग्भवतीति बोध्यम्। ग्रन्थगौरवभयान्न तत्सर्वमुदाहृतम् ॥

**( स्त्रियामवन्तिकुन्तिकुरुशूरसेनादिभ्यो बहुत्वेऽपि ) अवन्ती। कुन्ती। कुरूः। शूरसेनी ॥**

( सुबोधिनी )–स्त्रियामवन्तिकुन्तिकुरुशूरसेनादिभ्यो बहुत्वेऽपि ॥ एभ्योऽपत्यार्थप्रत्ययस्य लुक् स्यात् स्त्रीप्रत्यये ॥ अवन्तेरपत्यं स्त्री अवन्ती। कुन्तेरपत्यं कौन्तेयः। स्त्री कुन्ती ॥ इतो मनुष्यजातेरितीप्। कुरोरपत्यं कौरव्यः। स्त्री कुरूः। उत ऊरित्यूप्रत्ययः ॥ शूरसेनस्यापत्यं शौरसेनः। स्त्री शूरसेनी ॥ मद्रस्यापत्यं माद्रः। स्त्री माद्री। जातित्वादीप् ॥

( तत्त्वदी० )–अवन्तीति ॥ अवन्तेरपत्यमिति विग्रहः। पुमांस्त्वावन्त्यः ॥ कुन्तीति ॥ कुन्तेरपत्यमिति विग्रहः ॥ कुरूरिति ॥ कुरोरपत्यम् स्त्री कुरूः। उत ऊरित्यूः। पुमांस्तु कौरव्यः। शूरसेनस्यापत्यं शूरसेनी। पुमान् शौरसेनः ॥

**'देवतेदमर्थे ॥ देवतार्थे इदमर्थे चोक्ता वक्ष्यमाणाश्च प्रत्ययाः ॥ इन्द्रो देवतास्य ऐन्द्रम्। सौम्यम्। आग्नेयम्। गृहमेधीयम्। वास्तोष्पतीयम्। अग्नीषोमीयम्। मरुत्त्वतीयम् ॥**

( सुबोधिनी )–देवतेदमर्थे ॥ देवता च इदं च अनयोः समाहारो देवतेदं देवतेदं चासौ अर्थश्च देवतेदमर्थस्तस्मिन् देवतेदमर्थे। त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता। द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकमर्थशब्दः संबध्यते। देवतार्थे इदमर्थे च उक्ता वक्ष्यमाणाश्च प्रत्ययाः स्युः। अण् इञ् ण्यः। आयनण् एयण् णीय आरण् एरण् ढ्यण् ऐरण् एते उक्तप्रत्ययाः। इन्द्रो देवता अस्येति ऐन्द्रं हविः। अत्र प्रथमान्तात्प्रत्ययो देवतास्येति षष्ठ्यर्थे। अन्योक्ते प्रथमेति तद्धितेनोक्ते संबन्धे प्रथमा। स्त्रियां तु त्रण ईप्। ऐन्द्री दिक् ॥ सोमो देवताऽस्येति सौम्यं ण्यः। नदादित्वादीप्। सौमी ऋक्। हसात्तद्धितयस्येपीति यलोपः॥ अग्निर्देवतास्येति आग्नेयम्। एयण्। अणन्तत्वादीप्। आग्नेयी ॥ गृहमेधशब्दोऽदन्तः। गृहमेधो देवतास्येति गृहमेधीयम्। गृहमेध्यम् ॥ वास्तोष्पतिर्देवतास्येति वास्तोष्पतीयम्। वास्तोष्पत्यम्। "वास्तोष्पतिः सुरपतिः" इत्यमरः ॥ वास्तोः पतिः वास्तोष्पतिः "वेश्मभूर्वास्तुरस्त्रियाम्" इत्यमरः ॥ अग्नीषोमौ देवते अस्येति अग्नीषोमीयम्। अग्नीषोम्यम् ॥ मरुत्वान् देवतास्येति मरुत्वतीयम्। मरुत्वत्यम् "इन्द्रो मरुत्वान्मघवा" इत्यमरः ॥

( तत्त्वदी० )-**देवतेदमर्थे** इति ॥ देवता च इदं चानयोः समाहारः देवतेदम् । स चासावर्थश्च देवतेदमर्थस्तस्मिन् । द्वन्द्वान्ते श्रूयमाणत्वादर्थशब्दस्य प्रत्येकं योग इत्याशयेनाह-**देवतार्थे** इत्यादि । इन्द्रो देवतास्येति । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या च ॥ ननु देवतार्थस्यापि इदमर्थत्वाद्देवताग्रहणम् व्यर्थमिति चेत्सत्यम् इदमर्थे इन्द्रसंबन्धि हविरिति बोधः । देवतार्थे तु इन्द्रदेवतोद्देश्यकं हविरिति विशेषबोधार्थं पृथक् ॥

**( अपोनपादपान्नपातोरपोनप्तृअपान्नप्तृआदेशौ ) इयेययोः परतः ॥ अपोनप्त्रियम्-अपोनप्त्रीयम् । अपान्नप्त्रियम्-अपान्नप्त्रीयम् ॥**

( सुबोधिनी )-**अपोनपादपान्नपातोरपोनप्तृअपान्नप्तृआदेशौ ॥ इयेययोः** एतयोः परतः अपोनप्तृ अपान्नप्तृ आदेशौ स्तः ॥ अपोनपाद्देवतास्येति । अपान्नपाद्देवतास्येति ॥

( तत्त्वदी० )-**अपोनपादपान्नपातो**रिति ॥ अत्रादेशे यथासंख्यं न तु प्रत्यये व्याख्यानात् ॥

**( प्रावृष एण्यः ) प्रावृड् देवतास्य प्रावृषेण्यम् । कः प्रजापतिर्देवतास्य कायम् ॥**

( सुबोधिनी )-**प्रावृष एण्यः** ॥ अस्मादेण्यः प्रत्ययः स्यात् देवतार्थे ॥ प्रवर्षतीति प्रावृट् । नहिवृतीति दीर्घः । जातेऽर्थे तु इक् । प्रावृषि जातः प्रावृषिकः । प्रावृषेण्यः । "स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियाम्" इत्यमरः ॥ कस्येकारान्तादेशोऽणि । को ब्रह्मा देवताऽस्येति यस्येति लोपात्परत्वादादिवृद्धिः । आय् । कायं हविः ॥

( तत्त्वदी० )-**काय**मिति ॥ अत्र यस्य लोपं बाधित्वा परत्वाद्वृद्धिः ॥

**क्वचिद् द्वयोः ॥ पूर्वोत्तरपदाद्योः स्वरयोः क्वचिद्वृद्धिर्भवति ञिणति ॥ आग्निमारुतम् ॥**

( सुबोधिनी )-**क्वचिद्द्वयोः** ॥ द्वयोरिति षष्ठ्यन्तं पदविशेषणम् । अग्नामरुतौ देवते अस्येति अग्नेरिदिति वक्ष्यमाणेनेकारादेशः । उभयत्र वृद्धिः । आग्निमारुतम् । अण् । स्वाम्यर्थवाचकदेवताद्वन्द्वे एव पूर्वोत्तरपदादिस्वरवृद्धिविषयकमुदाहरणमेतत् । तेनेह न स्कन्दविशाखयोरयमिति स्कान्दविशाखः । अण् । "पार्वतीनन्दनः स्कन्दः" इत्यमरः ॥ नेन्द्रस्य परस्य उभयत्र प्राप्तौ । परस्येन्द्रशब्दस्य वृद्धिर्न भवति देवताद्वन्द्वे । सोमेन्द्रौ देवते अस्येति सौमेन्द्रः पशुः । अण् ॥ परस्येति किम् । इन्द्राग्नी देवते अस्येति ऐन्द्राग्नोऽण् । यस्येतीकारलोपः ॥ दीर्घात्परस्य वरुणस्य वृद्धिर्न भवति देवताद्वन्द्वे । इन्द्रावरुणौ देवते अस्येति देवताद्वन्द्वे पूर्वस्येत्यात्वम् । ऐन्द्रावरुणम् । मित्रावरुणौ देवते अस्येति मैत्रावरुणम् । अण् ॥ दीर्घात्किम् । "आग्निवारुणीमनड्वाहीमालभेत" ॥

(तत्त्वदी०)-**क्वचिद्द्वयो**रिति ॥ अत्रादिस्वरस्येति संपूर्णसूत्रमनुवर्त्तते । द्वयोरिति षष्ठ्यन्तं पदविशेषणम् । यद्यपि समासेनैकपदं तथाप्यन्तर्वर्तिन्या विभक्त्या पदद्वयत्वं बोध्यम् । एदोतोत इति

ज्ञापितमुत्तरस्यापदत्वं तु ज्ञापकसिद्धं न सर्वत्रेति वचनान्नेहाश्रयणीयम् ॥ **आग्निमारुत**मिति ॥ अग्नामरुतौ देवते अस्येति विग्रहः ॥

**(अग्नेरिद्वृद्धौ) वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्यात् ॥ आग्निवारुणम्। सौहार्दम्। सौभागिनेयः। सौभाग्यम्। साक्तुसैन्धवः। आनुशातिकम्। ऐहलौकिकम्। पारलौकिकम्। पौर्वाह्णिकम् ॥**

(सुबोधिनी)–**अग्नेरिद्वृद्धौ** ॥ अग्निशब्दस्येत्स्यात् वृद्धिमत्युत्तरपदे देवताद्वन्द्वे ॥ अलौकिके वाक्ये आत्वमत्वं च बाधित्वा इत्। विष्णौ परे इत्वं न। विष्णुशब्दे परेऽग्निशब्दस्येन्न। आग्नावैष्णवम्। अण् प्रत्ययः ॥ आग्निवारुणम्। उभयत्र वृद्धी। सुहृदो भावः सौहार्दम्। अण् ॥ सुभगाया अपत्यं सौभागिनेयः। एयणि नञौ वृद्धीः ॥ सुभगस्य भावः सौभाग्यम्। ण्यः ॥ सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः सक्तुसिन्धुषु भवः साक्तुसैन्धवः। अण्वृद्धी। शतेन क्रीतः शतिकः। शतिकमनुगतोऽनुशतिकः। अनुशतिकस्येदम् आनुशातिकम्। अण्वृद्धी। इह लोके भवम् ऐहलौकिकम्। इकः ॥ परलोके भवं पारलौकिकम् ॥

(तत्त्वदी०)–**अग्नेरि**दिति ॥ वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्यादित्यर्थः ॥ **सौहार्द**मिति ॥ सुहृदो भावः ॥ **सौभागिनेय** इति ॥ सुभगाया अपत्यमित्यर्थः ॥ **साक्तुसैन्धव** इति ॥ सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवस्तेषु भवः ॥ शतेन क्रीतः शतिकः तमनुगतोऽनुशतिकस्तस्येदमानुशातिकम् ॥

**णितो वा ॥ उक्ता वक्ष्यमाणाश्च प्रत्यया णितो वा ॥ स्वस्रीयः। श्वशुरस्यापत्यं श्वाशुर्यः। पित्र्यम्। गव्यम्। पयस्यम्। कुल्यम्। तदीयम्। त्वदीयम्। मदीयम् ॥**

(सुबोधिनी)–**णितो वा** ॥ अणादयः कादयश्च णितो वा भवन्ति ॥ अणादीनां णित्त्वे सिद्धे पक्षे निषेधार्थं वचनम्। कादीनामणित्त्वे सिद्धे पक्षे विधानार्थम्। स च क्वचिन्नित्यनिषेधः। क्वचिद्वैकल्पिकः। क्वचिदनिषेध एव ॥ स्वसुरपत्यं स्वस्रीयः। णीयः ॥ श्वशुरस्यापत्यं यस्येत्यलोपः। श्वाशुर्यः ॥ पितुरिदमिति क्वचित्स्वरवद्यकार इति स्वरत्वात् रत्वम्। पित्र्यम्। ण्यः ॥ गोरिदं गव्यम्। ण्यः। स्वरत्वादव् ॥ पयसि भवं पयस्यम् ॥ कुले भवं कुल्यम्। ण्यः ॥ तस्येदं तदीयम्। तवेदम्। ममेदम्। त्वन्मदेकत्वे इति त्वद् मद्। त्वदीयम्। मदीयम् ॥

(तत्त्वदी०)–**णितो वे**ति ॥ अत्र वेत्यस्य व्यवस्थितत्वात् क्वचिदणितोऽपि णित्त्वं क्वचित् णितोऽप्यणित्त्वं क्वचिद्विकल्प इति बोध्यम् ॥ णितो बहुत्वात् णित इत्युक्तिर्ब्राह्मणग्राम इतिवत्। तेन ञितोऽपि ञित्त्वविकल्पो बोध्यः ॥ **पित्र्य**मिति ॥ पितुरिदमिति विग्रहे क्वचित्स्वरवद्य इति स्वरत्वाद्रत्वम्। एवं गव्यमित्यपि ॥

**( अन्यस्य दक् )** अन्यदीयम् ॥

( सुबोधिनी )—अन्यस्य दक् ॥ अन्यशब्दस्य दगागमो भवति णीये । अषष्ठीतृतीयान्तस्यान्यशब्दस्य दगागमो वाच्यः आशीराशास्थास्थितोत्सुकोतिकारकरागणीयेषु परतः ॥ अन्यदाशीः ॥ अन्यदाशा ॥ अन्यदास्था ॥ अन्यदास्थितः ॥ अन्यदुत्सुकः ॥ अन्यदूतिः ॥ अन्यत्कारकः ॥ अन्यद्रागः ॥ अषष्ठीतृतीयान्तस्येति किम् । अन्यस्यानेन वा आशीः अन्याशीः ॥ कारकणीययोरषष्ठीतृतीयान्तस्येति निषेधो न वाच्यः ॥ अर्थे परे अन्यस्य वा दक् । अन्यदर्थः । अन्यार्थः । अन्यदीयम् ॥

**( पितुर्भ्रातरि व्यः )** पितुर्भ्राता पितृव्यः ॥

( सुबोधिनी )—पितुर्भ्रातरि व्यः ॥ पितृशब्दाद्व्यप्रत्ययो भवति भ्रात्रर्थे ॥

**( मातुर्भ्रातरि डुलः )** मातुलः ॥

( सुबोधिनी )—मातुर्भ्रातरि डुलः ॥ मातृशब्दात् डुलप्रत्ययो भवति भ्रात्रर्थे ॥ डित्वाट्टिलोपः ॥

**( मातृपितृभ्यां पितरि मातरि च डामहष् )** मातुः पिता मातामहः । पितामहः । मातुर्माता मातामही । पितामही ॥

( सुबोधिनी )—मातृपितृभ्यां पितरि मातरि च डामहष् ॥ आभ्यां डामहष् प्रत्ययः स्यात् पित्रर्थे मात्रर्थे च ॥ डित्वाट्टिलोपः॥ षित्वात्स्त्रियाम् षृन्वित इतीप् ॥

( तत्त्वदी० )—मातृपितृभ्यामिति ॥ षित्त्वादीप् ॥

**( अवेर्दुग्धे सोढदूसमरीसाः )** अवेर्दुग्धम् अविसोढम् । अविदूसम् । अविमरीसम् ॥

( सुबोधिनी )—अवेर्दुग्धे सोढदूसमरीसाः ॥ अविशब्दादेते प्रत्यया भवन्ति दुग्धेऽर्थे । सकारपाठसामर्थ्यान्न षः ॥ अविसोढमिति ॥

**( तिलान्निष्फलात्पिञ्जपेजौ )** निष्फलस्तिलस्तिलपिञ्जः । तिलपेजः ॥

( सुबोधिनी )—तिलान्निष्फलात्पिञ्जपेजौ ॥ तिलाशब्दादेतौ प्रत्ययौ स्तः निष्फलेऽर्थे ॥ तिलपिञ्जः । तिलपेजः । बन्ध्यस्तिल इत्यर्थः ॥

**कारकात् क्रियायुक्ते ॥** कारकादप्येते प्रत्ययाः क्रियायुक्ते कर्तरि कर्मणि च ॥ कुङ्कुमेन रक्तं कौङ्कुमम् । वस्त्रेण परिवृतो वास्त्रो रथः । काम्बलाः । द्वैपः । वैयाघ्रः ॥

( सुबोधिनी )—कारकात् क्रियायुक्ते ॥ कारकादणादयः कादयश्च प्रत्ययाः स्युः ॥ " कर्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणे इत्याहुः कार-

काणि षट् ॥" इत्यत्र कारकशब्दः सर्वस्मिन्नपि क्रियासाधने दृष्टः । स्वार्थिकः कारकः संगीत्यत्र तु कर्तृमात्रे दृष्टस्तस्य कस्मान्न ग्रहणम् । उच्यते । अत्राद्यस्यैव ग्रहः । अन्यथा कर्तुरित्येवावक्ष्यत् । अथ का क्रिया किं च तद्युक्तम् । उच्यते । व्यापारो भावना सैवोत्पादना सैव च क्रियेति । उक्तं च "गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पितो भेदः क्रियेति व्यपदिश्यते ॥ १ ॥" इति स्वभावतो गुणीभूतैरवयवैरवान्तरलक्षणैर्युक्तः क्रमजन्मनां क्षणानां समूहः आचार्यैः क्रिया व्यपदिश्यते । कीदृशः । संकलनात्मिकया बुद्ध्याऽभेद एकत्वं प्रकल्पितं तद्युक्तमेतया क्रियया युक्तम् । क्रिया चोत्पत्त्युत्पादनरूपा । उत्पत्तिः फलम् । उत्पादना व्यापारः । व्यापारेण युक्तः कर्ता । फलेन युक्तं कर्म । तस्मिन् क्रियायुक्ते कर्त्तरि कर्मणि च । तेन रक्तं रागात् । रज्यते अनेनेति बाहुलकात् करणे घञ् । रागो रञ्जकद्रव्यम् । तृतीयान्ताद्रागवाचकात्प्रत्ययो रक्तमित्यर्थे । कुंकुमेन रक्तं वस्त्रं कौंकुमम् । रञ्जनक्रियाया करणकारकात् कुंकुमादण् । तद्युक्तमत्र वस्त्रं कर्मेत्यादि ज्ञेयम् ॥ लाक्षया रक्तं लाक्षिकम् ॥ रोचनया रक्तं रौचनिकम् । इकः ॥ नील्या रक्तं नीलम् अण् ॥ णितो वेति न वृद्धिः ॥ पीतेन रक्तं पीतकम् । कः ॥ तेन परिवृतो रथः । समन्ताद्वेष्टितः परिवृत उच्यते । तेनेति तृतीयान्तादणादयः परिवृतो रथ इत्यर्थे वास्त्रो रथः । अण् ॥ कम्बलेन परिवृतो रथः काम्बलः । अण् ॥ द्वीपिनो विकारो द्वैपम् । द्वैपेन परिवृतो रथः द्वैपः ॥ व्याघ्रस्य विकारो वैयाघ्रम् । युड्वृद्धी । वैयाघ्रेण परिवृतो वैयाघ्रो रथः ॥

(तत्त्वदी०)–**कारकात् क्रियायुक्ते** इति ॥ कारकशब्दो यद्यपि द्व्यर्थः कर्तृपरः सर्वकारकपरश्च । तथाप्यत्र सर्वकारकार्थ एव गृह्यते । अन्यथा कर्तुरित्येवावक्ष्यत् । क्रिया च धात्वर्थः । स च फलव्यापारात्मकः फलव्यापारयोर्धातुरित्युक्तत्वात् । ततश्च फलयुक्तं कर्म व्यापारयुक्तः कर्तेत्याशयेनाह–**क्रियायुक्ते कर्त्तरी**त्यादि ॥ **कुंकुमेन रक्त**मिति ॥ रञ्जनक्रियायाः करणकारकात् कुंकुमादण् । तद्युक्तमत्र वस्त्रं कर्मेति ॥ माथुर इत्यत्रागमनक्रियाया अपादानकारकान्मथुराशब्दादण् तद्युक्तोऽत्र कर्तेत्यादिकमूह्यम् ॥ कारकादिति किम् । फलानां सुहितः ॥ क्रियायुक्ते किम् । काष्ठैः पाकः । नात्र पाकादिः क्रियायुक्तः किं तु क्रियैव ॥ क्रियेति किम् । गेहे घटः । अत्र घटत्वयुक्तो घटः न क्रियायुक्तः । क्रियायामित्युक्ते शब्दं करोति शाब्दिक इत्यादौ प्राधान्येन क्रियाया एव भानं स्यान्न तु कर्तुः यदि कर्तृकार्यग्रहणं मण्डूकप्लुत्यानुवर्त्तते तदा कारकादित्येवास्तु ॥

**( पाण्डुकम्बलादिनिः ) पाण्डुकम्बलेन संवीतः पाण्डुकम्बली रथः । वसिष्ठेन दृष्टं वासिष्ठं साम । कालेयम् । वररुचिना कृतो वाररुचो ग्रन्थः । मनुना प्रोक्तो मानवो धर्मः । मथुराया आगतो माथुरः । ग्रामादागतो ग्राम्यः । धुरं वहतीति धुर्यः–धौरेयः । सर्वधुरीणः । एकधुरीणः ॥**

( सुबोधिनी )–पाण्डुकम्बलादिनिः ॥ पाण्डुकम्बलशब्दो राजास्तरणपाण्डुवर्णकम्बलस्य वाचकः । अस्त्यर्थेनैव सिद्धे वचनमणो निवृत्त्यर्थम् । इकार उच्चारणार्थः । **तेन दृष्टं साम** ॥ तेनेति तृतीयान्तादणादयः दृष्टं सामेत्यर्थे । वासिष्ठं साम । अण् ॥ कलिना दृष्टं साम कालेयम् । एयण् ॥ वामदेवेन दृष्टं साम वामदेव्यम् । ण्यः ॥ उशनसा दृष्टं सामं निपातनाट्टिलोपो वा । औशनसम् । औशनम् । अण् ॥ **तेन कृतो ग्रन्थः** । तेनेति तृतीयान्तादणादयः कृतो ग्रन्थ इत्यर्थे । वररुचिना कृतो वाररुचो ग्रन्थः ॥ **तेन प्रोक्तम्** । तेनेति तृतीयान्तादणादयः प्रोक्तमित्यर्थे । मनुना प्रोक्तो मानवो धर्मः । अण् ॥ **तत आगतः** । तत इति पञ्चम्यन्तादणादयः आगत इत्यर्थे । माथुरः । अण् ॥ ग्रामण्यः ॥ **तद्वहति** । तदिति द्वितीयान्तादणादयो वहतीत्यर्थे । धुरं वहति धुर्यः । ण्यः । णितो वेति न वृद्धिः । य्वोर्विहसे इति दीर्घो न संज्ञापूर्वकत्वेन तस्यानित्यत्वात् । धौरेयः । एयण् ॥ सर्वा चासौ धूश्चेति ऋक्पूरित्यप्रत्ययः । कर्मधारये इति पुंवत् । सर्वधुरा तां वहति यस्येत्यालोपः । सर्वधुरीणः । ईनः ॥ एका चासौ धूश्चेति एकधुरा तां वहति एकधुरीणः । ईनः ॥ एकधुरः । अण् ॥ शकटं वहति शाकटो गौः । अण् ॥ हलं वहति हालिकः । इकः ॥ सीरं वहति सैरिकः । इकः ॥ रथं वहति रथ्यः । ण्यः ॥ युगं वहति युग्यः । ण्यः ॥

( तत्त्वदी० )–**धुर्य** इति ॥ संज्ञापूर्वकविधेरनित्यत्वात्क्वचिन्न दीर्घः ॥ **एकधुरीण** इति ॥ णित्त्वविकल्पान्न वृद्धिः ॥

**( मुखपार्श्वतसोर्लोप ईये ) मुखतो भवं मुखतीयम्।पार्श्वतीयम् ॥**

( सुबोधिनी )–**मुखपार्श्वतसोर्लोप ईये** ॥ मुखं च पार्श्वं च मुखपार्श्वे मुखपार्श्वयोस्तसौ मुखपार्श्वतसौ तयोः ॥ षष्ठीनिर्दिष्टत्वात्सलोपः । यस्येत्यलोपः । मुखतीयम् ॥ पार्श्वतो भवं पार्श्वतीयम् । णीयः ॥

( तत्त्वदी० )–**मुखपार्श्वे**ति ॥ द्वन्द्वान्ते श्रूयमाणत्वात्तसः प्रत्येकं योगः ॥ **मुखतीय**मिति ॥ षष्ठीनिर्दिष्टस्येति सकारलोपे यस्य लोपे च रूपसिद्धिः ॥

**( देवस्वराजजनपराणां कुक् ईये ) देवकीयम् । स्वकीयम् । राजकीयम् । जनकीयम् । परकीयम् ॥**

( सुबोधिनी )–**देवस्वराजजनपराणां कुक् ईये** ॥ एषां कुक् स्यात् ईये ॥ देवस्येदं देवकीयम् ॥ स्वस्येदं स्वकीयम् ॥ राज्ञ इदं राजकीयम् । नाम्नो नो लोपशिति नलोपे कृते पश्चात् कुक् बोध्यः ॥ जनस्येदं जनकीयम् । परस्येदं परकीयम् ॥

( तत्त्वदी० )–**देवस्ये**ति ॥ **देवकीय**मिति ॥ देवस्येदमिति वाक्यम् ॥ **राजकीय**मिति ॥ अत्र नलोपे यत्नः नाम्नो लोपशित्यस्य नान्तस्य नाम्न इति व्याख्यानात् प्रकृते कुको राजान्त्यावयवत्वान्नान्तताभावात् । अतोनो वेत्यत्र वेत्यस्य व्यवस्थितत्वाश्रयणादत्र न नोपः ॥

( मध्यान्मः ) मध्यमः ॥

( सुबोधिनी )—मध्यान्मः ॥ अस्मान्मः प्रत्ययः स्यात् भवाद्यर्थे ॥ मध्ये भवे मध्यमः ॥

( हेमन्तस्य वा तलोपोऽणि ) हैमनम्-हैमन्तम् ॥

( सुबोधिनी )—हेमन्तस्य वा तलोपोऽणि ॥ हेमन्तादण् स्यात् तस्य लोपश्च वा ॥ हेमन्ते भवं हैमनं हैमन्तं च ॥

( तत्त्वदी० )—हैमनमिति ॥ हेमन्ते भवमिति विग्रहः ॥ रिलोपस्तूक्त्युक्तेरेव न ॥

( चिरपरुत्परारिभ्यस्त्नः ) चिरत्नम् । परुत्नम् । परारित्नम् ॥

( सुबोधिनी )—चिरपरुत्परारिभ्यस्त्नः ॥ एभ्यस्त्नप्रत्ययः स्यात् ॥ चिरशब्दोदन्तः ॥ परुदित्यव्ययम् पूर्वस्मिन् वत्सरे ॥ परारि पूर्वतरे वत्सरेऽव्ययम् ॥

( अग्रादिपश्चादन्ताड्डिमः ) अग्रिमम् । आदिमम् । पश्चिमम् । अन्तिमम् ॥

( सुबोधिनी )—अग्रादिपश्चादन्ताड्डिमः ॥ एभ्यो डिमः प्रत्ययः स्यात् ॥ डित्वाट्टिलोपः अग्रे भवम् अग्रिमम् ॥ आदौ भवम् आदिमम् ॥ पश्चाद्भवं पश्चिमम् ॥ अन्ते भवम् अन्तिमम् ॥

( तत्त्वदी० )—पश्चिममिति ॥ पश्चाद्भवम् । डित्वादादित्यस्य लोपः ॥

( हेतुमनुष्येभ्यो वा रूप्यमयटौ ) समादागतम् समरूप्यम । सममयम् । समीयम् । देवदत्तमयम् । देवदत्तरूप्यम् । देवदत्तीयम् ॥

( सुबोधिनी )—हेतुमनुष्येभ्यो वा रूप्यमयटौ ॥ हेतुवाचकेभ्यो मनुष्यवाचकेभ्यश्च रूप्यमयटौ वा स्तः ॥ टू ईवर्थः ॥ आगतमित्यर्थे समात् मार्गादागतं समरूप्यम् । सममयम् ॥ पक्षे णीयः । समीयम् ॥ देवदत्तादागतं देवदत्तरूप्यम् । देवदत्तमय म् देवदत्तीयम् । णीयः ॥ दैवदत्तः । अण् ॥

( तत्त्वदी० )—हेतुमनुष्येभ्य इति ॥ हेतुमनुष्यवाचिभ्य इत्यर्थः ॥

( छगलिनो णेयिनः ) छगलिना प्रोक्तमधीते यः छागलेयिनः ॥

( सुबोधिनी )—छगलिनो णेयिनः ॥ छगलिन्शब्दात् णेयिनः प्रत्ययः स्यात् प्रोक्तमधीते इत्यर्थे ॥ छगलिना प्रोक्तं शास्त्रमधीयते पठन्ति ये ते छागलेयिनाः । नोवेति टिलोपः ॥

( तत्त्वदी० )—छागलेयिन इति ॥ णित्वाद्वृद्धिः ॥

( पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोर्णिनिः ) पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः ॥

( सुबोधिनी )–पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोर्णिनिः ॥ आभ्यां णिनिः स्यात् ॥ इकार उच्चारणार्थः ॥ पाराशर्यो व्यासः ॥ अनन्तरापत्येऽपि उपचाराद्गर्गादिभ्यो ण्यः। यस्येत्यलोपे क्वचिद्यलोप इति वक्ष्यमाणेन यलोपः। पाराशरीणः ॥ शिलालिना प्रोक्तं नटसूत्रमधीयते ये ते शैलालिनः ॥

( तत्त्वदी० )–पाराशर्येति ॥ भिक्षुसूत्रे वाच्ये पाराशर्यशब्दात् नटसूत्रे शिलालिशब्दादणिनिरीत्यर्थः ॥ पाराशरीण इति ॥ कन्यादित्वाद्यलोपः ॥

( कर्मन्दकृशाश्वादिनिः ) उक्तविषये ॥ कर्मन्दिनः। कृशाश्विनः ॥

( सुबोधिनी )–कर्मन्दकृशाश्वादिनिः ॥ उक्तविषये आभ्यामिनिः स्यात् ॥ कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयते ये ते कर्मन्दिनो भिक्षवः। कृशाश्वेन प्रोक्तं नटसूत्रमधीयते ये ते कृशाश्विनो नटाः ॥ भिक्षुनटसूत्रयोः किम्। पाराशर्यस्येदं पाराशरम् ॥ शिलालिन इदं शैलालम् ॥ कार्मन्दम् ॥ कार्शाश्वम्। अण् ॥

( तत्त्वदी० )–उक्तविषये इति ॥ भिक्षुनटसूत्रयोरित्यर्थः ॥

( त्रपुजतुनोः षण् विकारे ) त्रापुषम्। जातुषम् ॥

( सुबोधिनी )–त्रपुजतुनोः षण् विकारे ॥ आभ्यां षण् स्याद्विकारे ॥ त्रपुणो विकारः त्रापुषम् ॥ जतुनो विकारः। जातुषम् ॥

( शम्याः ष्लञ् ) शामीली स्रुक् ॥

( सुबोधिनी )–शम्याः ष्लञ् ॥ शमीशब्दात् ष्लञ् स्यात्। षित्वादीप् ॥शम्या विकारः शामीलं भस्म। ष्वित इतीप्। शामीली ॥

( तत्त्वदी० )–शामीलीति ॥ शम्या विकार इति विग्रहः। षित्वादीप् ॥

( शक्तियष्ट्योरीकण् प्रहरणे ) शाक्तीकः। याष्टीकः ॥

( सुबोधिनी )–शक्तियष्ट्योरीकण् प्रहरणे ॥ आभ्यामीकण् स्यात् ॥ शक्तिः प्रहरणमस्य शाक्तीकः। यष्टिः प्रहरणमस्य याष्टीकः ॥

( तत्त्वदी० )–शाक्तीक इति ॥ शक्तिः प्रहरणमस्येति विग्रहः ॥

( विंशतित्रिंशद्भ्यां डककौ वा )

( सुबोधिनी )–विंशतित्रिंशद्भ्यां डककौ वा ॥ तेन क्रीतमित्यर्थे आभ्यां डककौ प्रत्ययौ स्तः ॥ असंज्ञायामर्थे। डकः ॥

( विंशतेस्तिलोपो डिति ) विंशकः। त्रिंशकः। विंशतिकः। त्रिंशत्कः ॥

( सुबोधिनी )–विंशतेस्तिलोपो डिति ॥ तिशब्दलोपः ॥ विंशकः। त्रिंशकः। संज्ञायां तु कः। विंशतिकः। त्रिंशत्कः ॥

( कर्मण उकञ् ) कर्मणे प्रभवति कार्मुकम् ॥

( सुबोधिनी )—कर्मण उकञ् ॥ कर्मशब्दादुकञ् स्यात् तस्मै प्रभवतीत्यर्थे ॥ समर्थः शक्तः प्रभवतीत्युच्यते ॥

( मनोर्जातावपत्ये ष्यषणौ ) मनोरपत्यं मनुष्यः । मानुषः ॥ जातौ किम् । मानवः ॥

( सुबोधिनी )—मनोर्जातावपत्ये ष्यषणौ ॥ मनुशब्दादेतौ स्तः अपत्यत्वे जातौ वाच्ये ॥ समुदायार्थो जातिः । मनुष्यः । मानुषः । जातिशब्दावेतौ ॥

केनेयेकाः ॥ कारकात्क ईन इय इक इत्येते प्रत्यया भवन्ति कर्तरि कर्मणि चोक्तवक्ष्यमाणेष्वर्थेषु च णितो वा ॥ क्रममधीते क्रमकः । पदकः ॥ ग्रामादागतस्तत्र जातो वा ग्रामीणः । सध्रीचीनः । समीचीनः । तिरश्चीनः । कुलस्यापत्यं कुलीनः । महाकुलीनः आढ्यकुलीनः ॥

( सुबोधिनी )—केनेयेकाः ॥ कश्च ईनश्च इयश्च इकश्च ते केनेयेकाः ॥ क्रममधीते क्रमकः ॥ क्रमपदशिक्षामीमांसाः क्रमादयः । एभ्यः कः । पूर्वस्य ह्रस्वो निपातनात् । शिक्षकः ॥ मीमांसामधीते मीमांसकः ॥ ग्रामे भवः ग्रामीणः । ईनः ग्राम्योऽपि ण्यः ॥ सध्र्यङ्ङेव सध्रीचीनः ॥ सम्यङ्ङेव समीचीनः ॥ तिर्यङ्ङेव तिरश्चीनः । सहाञ्चतीति सध्र्यङ् ॥ अञ्चत्यन्तान्नाम्नः स्वार्थे ईनो वा ॥ दिशि न । प्राक् प्राचीनम् । प्रत्यक् प्रतीचीनम् । अवाक् अवाचीनम् । अर्वाक् अर्वाचीनम् । अर्वन्तं अञ्चतीति अर्वाक् । "निकृष्टप्रीतकृष्टार्वरेफयाप्यावमाधमाः" इत्यमरः ॥ दिशि तु प्राची दिक् ॥ अचेरदीर्घश्चेति अलोपे पूर्वेकारदीर्घः ॥ उदीची दिक् ॥ तिरश्चादय इति उदीचादेशः ॥ कुलस्यापत्यमिति कुलीनः ॥ तदन्तादपि । महच्च तत्कुलं चेति सहादेः सादिरिति । महाकुलस्यापत्यं महाकुलीनः ॥ आढ्यं च तत् कुलं च आढ्यकुलम् आढ्यकुलस्यापत्यमाढ्यकुलीनः ॥

( तत्त्वदी० )—केनेयेका इति ॥ कश्च ईनश्च इयश्च इकश्च ते । देवतेदमर्थे इत्यत्र देवतेदमोरिति वक्तव्येऽर्थग्रहणं स्पष्टार्थमिहानुवर्तते ॥ ततश्चोक्तानुक्तलाभ इत्याशयेनाह—उक्तेत्यादि ॥ सध्रीचीन इति ॥ सध्र्यङ्गेवेति विग्रहे स्वार्थे ईनः । णित्वाभावान्न वृद्धिः ॥ एवं सम्यङ्ङेव समीचीनः । अञ्चेर्लोपो दीर्घश्चेत्यकारलोपे पूर्वस्येकारस्य दीर्घः । तस्यापि तद्धिते विधानात् ॥

( क्वचिद्यलोपः ) कन्याया अपत्यं कानीनः । कात्यस्येमे कातीयाः छात्राः । गार्गीयाः । रेवत्या अपत्यं रैवतिकः । पुष्येण युक्ता पौर्णमासी पौषी । तैषी । क्षत्रस्यापत्यं क्षत्रियः । शुक्रो देवताऽस्य शुक्रियम् । इन्द्रस्य लिङ्गमिन्द्रियम् । अक्षैर्दीव्यतीत्याक्षिकः । कु-

द्दालैः खनति कौद्दालिकः । हलं वहति हालिकः । शब्दं करोति शाब्दिकः । दार्दुरिकः । धर्मं चरति धार्मिकः । आधर्मिकः । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । तैत्तिरिकः । मात्सिकः । मैनिकः । मार्गिकः । सारङ्गिकः । पुराणमधीते पौराणिकः । ऐतिहासिकः । वैदिकः ॥

( सुबोधिनी )—क्वचिद्यलोपः ॥ क्वचिद्धसात्परस्य यकारस्य लोपः स्यात् तद्धिते स्वरे न त्वाकारे ॥ कन्याया अपत्यमिति एयणोऽपवाद ईनः । यस्येत्यालोपः। ततो यलोपः। णितो वेति णित्त्वाद्वृद्धिः । कानीनो व्यासः कर्णश्च । अविवाहिताया अपत्यमित्यर्थः ॥ कात्यस्येमे गर्गादिण्यान्तात् णीये यलोपः । कातीयाः॥ गार्ग्यस्येमे गार्गीयाः। यलोपः॥ न त्वाकारे इति किम् । गार्ग्यायणः । इह न यलोपः ॥ रैवतिकः । णितो वेति णित्त्वाद्वृद्धिः । रेवती अश्वपाली मणिपाली द्वारपाली इत्यादिरेवत्यादयः ॥ नक्षत्रेण युक्तः कालः । तृतीयान्तनक्षत्रशब्दात्प्रत्यात् युक्तः काल इत्यर्थे । पुष्येण युक्तं पौषमहः । अण् । स्त्रियां तु त्रण ईप् । तिष्यपुष्ययोर्नक्षत्राणीति यलोपः । पौषी ॥ तिष्येण युक्ता तैषी ॥ क्षत्रशब्दाज्जातावियः । क्षत्रियः । क्षात्रिरन्यः ॥ शुक्रियं हविः । इयः ॥ इन्द्रस्यात्मनो लिङ्गं चिह्नमिति इन्द्रियम् ॥ तेन दीव्यति खनति जयति जितम् । तेनेति तृतीयान्तादिको दीव्यत्यादिष्वर्थेषु । णितो वेति णित्त्वाद्वृद्धिः । अक्षैः पाशकैर्दीव्यत्याक्षिकः ॥ कुद्दालैः खनति कौद्दालिकः । " गोदारणं तु कुद्दालः " इति हैमः ॥ अक्षैर्जयत्याक्षिकः । अक्षैर्जितम् आक्षिकम् ॥ हलं सीरं वहति हालिकः । इकः ॥ तेनेति तृतीयान्तादिकः संस्कृतेऽर्थे । दध्ना संस्कृतं दाधिकम्॥ मरिचैः संस्कृतं मारीचिकम् ॥ शब्दं करोति शाब्दिकः ॥ प्रकृतिप्रत्ययविभागेन शब्दं व्युत्पादयतीत्यर्थः ॥ दर्दुरं करोति दार्दुरिकः ॥ इह दर्दुरशब्दः वाद्यभाण्डवाची । कुलाल इत्यर्थः ॥ धर्मं चरति धार्मिकः । सद्वृत्त इत्यर्थः ॥ अधर्मं चरत्याधर्मिकः । असद्वृत्त इत्यर्थः ॥ पक्षिणो हन्ति नो वेति टिलोपः इकः । पाक्षिकः ॥ शकुनं हन्ति शाकुनिकः ॥ तित्तिरिं हन्ति तैत्तिरिकः ॥ मत्स्यं हन्ति मात्स्यिकः ॥ मीनं हन्ति मैनिकः ॥ मृगं हन्ति मार्गिकः॥ सारङ्गं हन्ति सारङ्गिकः ॥ मयूरं हन्ति मायूरिकः ॥ पुराणमधीते पौराणिकः ॥ इतिहासमधीते वेत्ति वा ऐतिहासिकः ॥ वेदमधीते वेत्ति वा वैदिकः ॥ णितो वेति णित्त्वाद्वृद्धिः ॥

( तत्त्वदी० )—कानीन इति ॥ णित्त्वाद्वृद्धिः ॥ व्यासः कर्णश्च । शाकुनिक इत्यादीनां शकुनीन् हन्तीत्यादिवाक्यम् । ऐतिहासिक इति ॥ इतिहासमधीते ॥

**( पील्वादिकर्णादिभ्यः कुणजाहौ पाकमूलयोः )** पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् ॥

( सुबोधिनी )—पील्वादिकर्णादिभ्यः कुणजाहौ पाकमूलयोः ॥ पील्वादिभ्यः कर्णादिभ्यश्च कुणजाहौ प्रत्ययौ स्तः पाकमूलयोरर्थयोः ॥ पाकः परिणामः । मूल-

मुपक्रमः। पीलु कर्कन्धु शमी करीर वकुल बदर खदिर पील्वादयः। कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ कर्णादयः॥

( तत्त्वदी० )—पाकमूलयोरिति॥ यथाक्रममनयोरन्वय इत्याशयेनाह—पीलूनां पाक इत्यादि॥

**( पक्षात्तिर्मूले )** पक्षस्य मूलं पक्षतिः॥

( सुबोधिनी )—पक्षात्तिर्मूले॥ पक्षशब्दात्तिप्रत्ययः स्यात् मूलेऽर्थे॥पक्षतिः प्रतिपत्॥

**( चञ्चुचणौ वित्ते )** विद्यया वित्तो विद्याचञ्चुः। विद्याचणः॥

( सुबोधिनी )—चञ्चुचणौ वित्ते॥ चञ्चुचणौ प्रत्ययौ स्तो वित्तेऽर्थे॥ वित्तो भोग्यप्रतीतयोरिति निपातनात् दस्तस्येति नत्वं न॥

**( वेः शालशंकटौ )** विस्तृतम। विशालम्। विशंकटम्॥

( सुबोधिनी )—वेः शालशंकटौ। वेः स्वार्थे एतौ स्तः॥ विस्तृतम्॥ विशालम्-विशङ्कटम्। विनञ्भ्यां नानाञौ नसह॥ असहार्थे पृथग्भावे वर्तमानाभ्यां नानाञौ स्तः। विना नाना॥

**( विसम्प्रोदः कटः )** विकटम। संकटम्। प्रकटम्। उत्कटम्॥

( सुबोधिनी )—विसंप्रोदः कटः॥ एभ्यः कटप्रत्ययः स्यात् स्वार्थे॥ विकटम्। विकृतम्॥ संकटम्। संहतम्। संवाध इत्यर्थः॥ प्रकटम्। प्रज्ञातम्। प्रकाशते इत्यर्थः॥ उत्कटमुद्भूतम्॥ रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते॥

**( अलाबूतिलोमाभङ्गाभ्यो रजसि )** अलाबूनां रजोऽलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्॥

( सुबोधिनी )—अलाबूतिलोमाभङ्गाभ्यो रजसि॥ एभ्यो रजस्यभिधेये कटप्रत्ययः स्यात्॥ रजसो विकारत्वात् विकारार्थे प्रत्ययानामपवादोऽयम्॥ अलाबूनां रजः अलाबूकटम्॥ तिलानां रजः तिलकटम्॥ उमायाः रजः उमाकटम्॥ भङ्गायाः रजः भङ्गाकटम्॥

**( गोष्ठादयः स्थानादिषु पशुनामभ्यः )** गवां स्थानं गोष्ठम्। अश्वगोष्ठम्॥

( सुबोधिनी )—गोष्ठादयः स्थानादिषु पशुनामभ्यः॥ पशुनामभ्यो गोष्ठादयः प्रत्ययाः स्युः स्थानादिष्वर्थेषु॥

**( संघाते कटः )** अवीनां संघातोऽविकटः॥

( सुबोधिनी )—संघाते कटः॥ अप्रसृतावयवसमूहः संघातस्तत्र कटप्रत्ययः॥ सामूहिकानामपवादोऽयम्॥

( विस्तारे पटः ) अविपटः ॥

( सुबोधिनी )—विस्तारे पटः ॥ प्रसृतावयवः समूहो विस्तारस्तत्र पटः प्रत्ययः ॥ सामूहिकानामपवादोऽयम् ॥

( द्वित्वे गोयुगः ) द्वावुष्ट्रौ उष्ट्रगोयुगम् ॥

( सुबोधिनी )—द्वित्वे गोयुगः ॥ प्रकृत्यर्थस्य द्वित्वे द्योत्ये गोयुगप्रत्ययः स्यात्॥ उष्ट्रगोयुगम् ॥ द्वयं युगमित्यादिवत् द्वचवयवसंघातप्राधान्यादेकवचनामित्यर्थः ॥

( षट्त्वे षड्गवः ) अश्वषड्गवम् ॥

( सुबोधिनी )—षट्त्वे षड्गवः ॥ षट्त्वे वाच्ये षड्गवप्रत्ययः स्यात् ॥ अश्वानां षट्त्वं अश्वषड्गवम् । अवयवसंघातस्य प्राधान्यादेकवचनम् ॥

( तत्त्वदी० )—अश्वषड्गवमिति ॥ षट् अश्वा इत्यर्थः ॥

( स्नेहे तैलः ) तिलतैलम् । सर्षपतैलम् ॥

( सुबोधिनी )—स्नेहे तैलः ॥ स्नेहे वाच्ये तैलप्रत्ययः ॥ तिलानां स्नेहः तिलतैलम्॥ सर्षपाणां स्नेहः सर्षपतैलम् ॥

( भवने क्षेत्रे शाकटशाकिनौ ) इक्षूणां भवनं क्षेत्रम् इक्षुशाकटम्। इक्षुशाकिनम् ॥

( सुबोधिनी )—भवने क्षेत्रे शाकटशाकिनौ ॥ भवने क्षेत्रे इत्यर्थे शाकटशाकिनौ प्रत्ययौ भवतः ॥

( अवात्कुटारकटौ ) अवाचीनोऽवकुटारः । अवकटः ॥

( सुबोधिनी )—अवात् कुटारकटौ ॥ अवशब्दात् कुटारकटौ प्रत्ययौ भवतः अवाचीने हीनेऽर्थे अवकुटारावकटशब्दौ वेदे प्रसिद्धौ ॥

( नासिकायां नते संज्ञायां टीटनाटभ्रटा अवात् ) नासिकाया नतम् अवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिकावटीटा । पुरुषोऽवटीटः ॥

( सुबोधिनी )—नासिकाया नते संज्ञायां टीटनाटभ्रटा अवात् ॥ नासिकासाधनके नमने वर्तमानादवशब्दादेते प्रत्ययाः स्वार्थे संज्ञायां वाच्यायाम् ॥ नतमिति नपुंसके भावे क्तः । नमनं नीचैस्त्वम् । कथं तर्हि नासिकायां पुरुषे चावटीटशब्दप्रयोग इत्यत आह—तद्योगादिति ॥

( नेर्बिडबिरीसौ ) निबिडम् । निबिरीसम् ॥

( सुबोधिनी )—नेर्बिडबिरीसौ ॥ उक्तेऽर्थे निशब्दान्नासिकाया नतेऽभिधेये बिडबिरीसौ प्रत्ययौ स्तः ॥

(इनपिटकाः प्रत्यया नेश्चिकचिचिकादेशाः) चिकिनम्। चिपिटम्। चिक्कम्॥

(सुबोधिनी)–इनपिटकाः प्रत्यया नेश्चिकचिचिकादेशाः॥ उक्तेऽर्थे नासिकाया नतेऽभिधेये इनपिटकाः प्रत्ययाः स्युः॥ निशब्दस्य चिकचिचिका यथाक्रममादेशाश्च॥

(तत्त्वदी०)–इनपिटका इति॥ यथाक्रमं प्रत्ययत्रयं आदेशत्रयं बोध्यम्॥

(क्लिन्नस्य चिल्पिल्चुलो लः प्रत्ययोऽस्य चक्षुषी इत्यर्थे) क्लिन्ने चक्षुषी अस्य चिल्लः। पिल्लः। चुल्लः॥

(सुबोधिनी)–क्लिन्नस्य चिल्पिल्चुलो लः प्रत्ययोऽस्य चक्षुषी इत्यर्थे। अस्य चक्षुषी एतस्मिन्नर्थे क्लिन्नशब्दाल्लप्रत्ययः स्यात् क्लिन्नस्य चिल्पिल्चुल् आदेशाश्च॥ कथं तर्हि। "स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी" इत्यमरः। इति चेत् अत्राहुः। पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्यात्र॥

(उपाधिभ्यामासन्नारूढयोस्त्यकः) पर्वतस्यासन्ना भूमिरुपत्यका। आरूढा अधित्यका॥

(सुबोधिनी)–उपाधिभ्यामासन्नारूढयोस्त्यकः॥ उपाधिभ्यां त्यकः प्रत्ययः स्यात्॥ आनन्नं समीपम्। आरूढमुच्चस्थानम्। तत्र संज्ञायाम्। पर्वतस्यासन्नं स्थलमुपत्यका। आरूढस्थलमधित्यका। क्षिपकादित्वात् काप्यत इतीत्वं न॥

(कर्मणष्ठो घटते इत्यर्थे) कर्मणि घटते कर्मठः॥

(सुबोधिनी)–कर्मणष्ठो घटते इत्यर्थे॥ सप्तम्यन्तात् कर्मशब्दात् ठप्रत्ययः स्यात् घटते चेष्टते इत्यर्थे॥ नो वेति टिलोपः। "कर्मशूरस्तु कर्मठः" इत्यमरः॥

(साक्षाद्द्रष्टरि संज्ञायां डिनिः) साक्षाद्द्रष्टा साक्षी॥

(सुबोधिनी)–साक्षाद्द्रष्टरि संज्ञायां डिनिः॥ द्रष्टर्यर्थे साक्षादित्यव्ययात् डिनिः स्यात्। डित्वाट्टिलोपः। संज्ञायामर्थे॥ इनामिति दीर्घः। साक्षी॥

(इष्टादिभ्य इनिरनेनेत्यर्थे) इष्टमनेन इष्टी। अधीती। हैयङ्गवीनं श्रोत्रियः क्षेत्रियोऽनुपदी इत्यादयो निपात्याः। ह्योगोदोहोद्भवं हैयङ्गवीनम्। छन्दोऽधीते श्रोत्रियः। परक्षेत्रे चिकित्स्यः क्षेत्रियः। अनुपदमन्वेष्टानुपदी॥

(सुबोधिनी)–इष्टादिभ्य इनिरनेनेत्यर्थे॥ एभ्य इनिप्रत्ययः स्यात् अनेनेत्यर्थे॥ अधीतमनेनेति अधीती॥ हैयङ्गवीनं श्रोत्रियः क्षेत्रियोऽनुपदी इत्यादयो निपात्याः॥ दुह्यते इति दोहः क्षीरम्। ह्योगोदोहस्य विकार इति ह्योगोदोहस्य हियङ्गुरादेशो

विकारार्थे ईनप्रत्ययश्च निपात्यते । णितो वेति णित्त्वाद्वृद्धिः । वोऽव्यस्वरे इत्यव् । हैयङ्गवीनम् नवनीतम् ॥ छन्दसः श्रोत्रभावो निपात्यते तदधीते इत्येतस्मिन्नर्थे इय्प्रत्ययश्च । णितो वेति वृद्ध्यभावः । श्रोत्रियः ॥ परक्षेत्रशब्दात् सप्तम्यन्तात् इय् प्रत्ययः परशब्दलोपश्च निपात्यते । क्षेत्रियो व्याधिः शरीरान्तरे चिकित्स्यः । अप्रतीकार्य इत्यर्थः ॥ अनुपशब्दादन्वेष्टरि इन् प्रत्ययो निपात्यते । पदस्य पश्चादनुपदम् ॥

**आख्याताव्ययसर्वादेष्टेःप्रागकः** ॥ पचतकि । उच्चकैः । नीचकैः । सर्वकः । अयकम् । असकौ । त्वकम् । अयकम् ॥

( सुबोधिनी )—आख्याताव्ययसर्वादेष्टेः प्रागकः ॥ एषां टेः प्राक् अकप्रत्ययः स्यात् स्वार्थे ॥ अन्त्योकार उच्चारणार्थः ॥

**त्यतनौ** ॥ भवाद्यर्थे त्यतनौ प्रत्ययौ स्तः अव्ययात् ॥ कुत्रभवः कुत्रत्यः । कुतस्त्यः । अमात्यः । इहत्यः ॥ अव्ययस्य तद्धितयस्वरयोष्टिलोपः ॥ बहिर्भवो बाह्यः । स्वः स्वर्गस्तत्र भवः सौवः । पौनःपुन्यम् । पौनःपुनिकः ॥

( सुबोधिनी )—त्यतनौ भवाद्यर्थे ॥ एतौ स्तः ॥ अमेहकतसत्रेभ्य एव त्यः । अमान्तिकसहार्थयोः । अमाभवः अमात्यः ॥

**दक्षिणापश्चात्पुरसस्त्यण्** ॥ दाक्षिणात्यः । पाश्चात्त्यः । पौरस्त्यः । ऐषमस्त्यम् । ऐषमस्तनम् ॥

( सुबोधिनी )—दक्षिणापश्चातपुरसस्त्यण् ॥ एभ्यस्त्यण स्यात् भवाद्यर्थे ॥ दक्षिणेत्यादन्तमव्ययम् । दक्षिणाभवः दाक्षिणात्यः ॥ ऐषमोह्यस्श्वसभ्यो वा त्यः । पक्षे तनः । अत्र वर्षे ऐषमः । अतीतेऽह्नि ह्यः । आगामिदिने श्वः ॥

**( श्वसस्तिकण्वा )** शौवस्तिकम् । अद्यतनः । ह्यस्तनः । श्वस्तनः । सनातनः । सदातनः । पुरातनः । दोषातनः सायंतनः । चिरंतनः । प्राह्णेतनः ॥

( सुबोधिनी )—श्वसस्तिकण्वा ॥ श्वसव्ययात्तिकणपि स्यात् ॥ श्वोभवमिति न संधिय्वोरित्युडागमवृद्धी । शौवस्तिकम् ॥ कालवाचिभ्योऽव्ययेभ्यः सायंचिरंप्राह्णेप्रगे इति चतुर्भ्यश्च तनः स्यात् ॥ दोषेति रात्रौ । दोषाभवः दोषातनः ॥ प्राह्णेतनः ॥ प्रगे प्रातर्भवः प्रगेतनः । सप्तम्या अलुक उभयत्र ॥ स्यतेर्घञि आतो युगिति युकि कृते सायशब्दोऽकारान्तो दिवसाऽवसाने रूढः तस्य चिरशब्दोऽप्यदन्तस्तस्यापि प्रत्ययसंनियोगेन मान्तत्वं प्राह्णप्रगयोरेदंतत्वं च निपात्यते इति वार्तिककृन्मतम् । भाष्ये तु सायं चिरं च मान्तमव्ययं स्वीकृतम् ॥

( तत्त्वदी० )–शौवस्तिकमिति ॥ श्वो भवमिति विग्रहः । द्वारादित्वाद्वकारात्पूर्वमैठि कृते पश्चाद्वृद्धिः ॥ प्राह्णेतन इति ॥ एदन्तत्वं निपातनात् ॥

**स्वार्थेऽपि ॥** उक्ता वक्ष्यमाणाश्च प्रत्ययाः स्वार्थे स्युः ॥ देवदत्त एव दैवदत्तकः । चोर एव चौरः । वय एव वायसः । रक्ष एव राक्षसः । चत्वारो वर्णाश्चातुर्वर्ण्यम् । समीपमेव सामीप्यम् । चत्वारो वेदाश्चातुर्वैद्यम् । प्रज्ञ एव प्राज्ञः । चातुराश्रम्यम् । त्रैलोक्यम् । अनन्त एवानन्त्यम् । अवसथ एवावसथ्यम् । इतिह एव ऐतिह्यम् । भेषजमेव भैषज्यम् ॥

(सुबोधिनी)–स्वार्थेऽपि ॥ प्रकृत्यर्थेऽप्यणादयः स्युः ॥ देवदत्त एव दैवदत्तकः । णितो वेति णित्त्वाद् वृद्धिः ॥ चोर एव चौरः ॥ वय एव वायसः ॥ रक्ष एव राक्षसः । अण् ॥ चत्वारश्च ते वर्णाश्चतुर्वर्णाः चतुर्वर्णा एव चातुर्वर्ण्यम् । ण्यः ॥ चतुरो वेदानधीते इति तद्धितार्थे द्विगुः । तमधीते इत्यर्थेऽण् तस्य लुक् च । चतुर्वेद एव उभयत्र वृद्धिः चातुर्वैद्यः । ण्यः ॥ चत्वारश्च ते वेदाश्च चतुर्वेदाः चतुर्वेदा एव चातुर्वैद्यमिति वा ॥ प्रज्ञ एव प्राज्ञः । अण् ॥ चत्वार आश्रमा एव चातुराश्रम्यम् । ण्यः ॥ त्रयश्च ते लोकाश्च त्रिलोकाः त्रिलोका एव त्रैलोक्यम् ॥ अनन्त एव आनन्त्यः । ण्यः ॥ आवसथं एवेति उपसर्गे वसेरथप्रत्ययः आवसथ्यं गृहम् । ण्यः ॥ इतिहेति निपातसमुदायः । ऐतिह्यम् । ण्यः ॥ भिषज्यतेः कण्वादियगन्तात् क्विप् । भिषक् । भिषजामिदं भेषजम् । अणि निपातनादेकारः । भैषज्यम् । ण्यः ॥

( तत्त्वदी० )–स्वार्थेऽपीति ॥ वय एव वायसमिति । स्वार्थिकाः प्रकृतितो लिङ्गवचनानि न व्यभिचरन्तीत्यस्यौत्सर्गिकत्वाल्लिङ्गविपर्ययः ॥

**भागरूपनामभ्यो धेयः ॥** भाग एव भागधेयम् । नामधेयम् । रूपधेयम् ॥

( सुबोधिनी )–भागरूपनामभ्यो धेयः ॥ एभ्यो धेयप्रत्ययः स्यात्स्वार्थे ॥ "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः ॥ "आख्याह्वे अभिधानं च नामधेयं च नाम च" इत्यमरः ॥

**( देवात्तः )** देव एव देवता ॥

( सुबोधिनी )–देवात्तः ॥ देवशब्दात्तप्रत्ययः स्यात् स्वार्थे ॥ तान्तं स्त्रियाम् ॥

**( मृदस्तिकः )** मृदेव मृत्तिका ॥

( सुबोधिनी )–मृदस्तिकः ॥ मृदशब्दात्तिकप्रत्ययः स्यात् स्वार्थे ॥

**( सस्नौ प्रशंसायाम् )** प्रशस्ता मृत् मृत्सा । मृत्स्ना ॥

( सुबोधिनी )—सस्नौ प्रशंसायाम् ॥ रूपप्रत्ययस्यापवादौ । मृदः सस्नौ प्रत्ययौ स्तः प्रशंसायामर्थे ॥ "मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका" इत्यमरः॥

( अणीनयोर्युष्मदस्मदोर्युस्माकास्माकौ )

( सुबोधिनी )—अणीनयोर्युष्मदस्मदोर्युष्माकास्माकौ ॥ एतयोर्द्वित्वे बहुत्वे च वर्तमानयोर्युष्माकास्माकावादेशौ स्तः अणीनयोः परतः ॥

( तत्त्वदी० )—अणीनयोरिति ॥ आदेशे यथासंख्यं न तु प्रत्यये ॥

( एकत्वे तवकममकौ) युवयोर्युष्माकं वायं यौष्माकः । यौष्माकीणः । आवयोरस्माकं वायम् आस्माकः । आस्माकीनः । तवायं तावकः । ममायं मामकः । तावकीनः । मामकीनः ॥

( सुबोधिनी )—एकत्वे तवकममकौ ॥ एकत्वे वर्तमानयोर्युष्मदस्मदोस्तवकममकावादेशौस्तः अणीनयोः परतः ॥

वत्तुल्ये ॥ सादृश्येऽर्थे वत्प्रत्ययः॥ चन्द्रेण तुल्यं चन्द्रवत्। ब्राह्मणवत्। क्षत्रियवत् । मथुरायामिव मथुरावत्। पाटलिपुत्रे इव प्राकारः पाटलिपुत्रवत् । चैत्रस्येव चैत्रवत् मैत्रस्य गृहम् ॥

( सुबोधिनी )—वत्तुल्ये ॥ तुल्यते सादृश्येनोन्मीयते ज्ञायते इति तुल उन्मानेऽस्मात् क्यप् तुल्यम् । यद्वा तोलनं तुला । षिद्भिदादिभ्योऽङ् । तुलया संमितं तुल्यम् । कारकादिति ण्यः । णितो वेत्यणित्त्वम् । तृतीयान्तात् सप्तम्यन्तात् षष्ठ्यन्ताच्च वत्प्रत्ययः स्यात् तुल्ये सादृश्येऽर्थे ॥ ब्राह्मणेन तुल्यं ब्राह्मणवदधीते ॥ तृतीयान्तात् तु क्रियातुल्ये एव गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ॥ द्रव्यतुल्येऽपि न । गवा तुल्यो गवयः ॥ सप्तम्यन्तात् षष्ठ्यन्ताच्च क्रियातुल्येऽपि भवतीत्यर्थः । मथुरावत् पाटलिपुत्रे प्राकारः । मथुरायां यादृशः प्राकारस्तादृशः पाटलिपुत्रे इत्यर्थः ॥

( तत्त्वदी० )—वत्तुल्ये इति ॥ अत्र क्रियाग्रहणमनुवर्तते । तच्च तुल्येन संबध्यते । तेन तुल्यायां क्रियायामित्यर्थो लभ्यते । तोलनं तुला तया संमितमिति विग्रहे कारकादिति ण्यप्रत्यये णितो वेति णित्वाभावाद्वृद्ध्यभावः । चतुर्वदित्यादिनिर्देशात् क्रियासादृश्याभावेऽपि षष्ठ्यन्तात्सप्तम्यन्ताच्च भवति इत्याशयेनाह—मथुरावदित्यादि ॥ योगविभागान्महानसवदित्यादावक्रियासाम्येऽपि भवति ॥

( अर्हेऽपि ) विधिमर्हति विधिवत् ॥

( सुबोधिनी )—अर्हेऽपि ॥ अर्हेऽर्थेऽपि द्वितीयान्ताद्वत् स्यात् क्रियातुल्ये ॥ विधिमर्हति विधिवत्पूज्यते । विधानं विधिः । अर्हतीति अर्हः । पचाद्यच् ॥

भावे तत्वयणः ॥ शब्दस्य प्रवृत्तिनिमित्तं भावस्तत्र वाच्ये एते स्युः ॥ तान्तं स्त्रियाम् त्वान्तं क्लीबम् । ब्राह्मणता । ब्राह्मणत्वम् । ब्राह्मण्यम् ॥ शुक्लता । शुक्लत्वम् । शौक्ल्यम् । वैदुष्यम् ॥

( सुबोधिनी )—भावे तत्वयणः॥तश्च त्वश्च यण् च ते तत्वयणः। भावे तत्वयणः प्रत्यया अणादयश्च स्युः॥ भावशब्दोऽनेकार्थवचनः। अभिप्राये यथा अयं भावः। पदार्थमात्रे यथा। विचित्रा भावशक्तयः। शृङ्गारादिषु यथा। स्थायिभावः संचारिभावः। प्रवृत्तिनिमित्ते धात्वर्थमात्रे च भावः। तेष्वत्र कस्य ग्रहणम्। उच्यते। प्रवृत्तिनिमित्तवचनस्य भावस्यात्र ग्रहणम्। भवन्ति शब्दा अनेनेति व्युत्पत्तेः। अभिप्रायादिवचनस्यात्र अग्रहोऽनभिधानात्। तथा च सिद्धान्तकौमुद्यां प्रकृतिजन्यबोधे प्रकारो भाव इति। उक्तं च हरिटीकायाम्। कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति। तेन पाचकत्वमित्यत्र कर्तृत्वरूपः संबन्धः। औपगवत्वमित्यत्र जन्यत्वरूपः संबन्धः। राजपुरुषत्वमित्यत्र स्वरूपसंबन्धः॥ तप्रत्ययान्तं स्त्रीलिङ्गम्। त्वप्रत्ययान्तं नपुंसकम्। यणन्तमुभयत्र। मत्र्यं मैत्रीत्यादि। ब्राह्मणस्य भावः। यस्येत्यलोपः। ब्राह्मण्यम्। शुक्लाया भावः त्वतयोर्गुणवचनस्येति पुंवद्भावः। शुक्लत्वम्॥

( तत्त्वदी० )—भावे तत्वयण इति॥ तश्च त्वश्च यण् च ते॥ भावशब्दोऽभिप्रायाद्यनेकार्थोऽप्यत्र प्रवृत्तिनिमित्तवचन एव गृह्यते न त्वभिप्रायाद्यर्थः। प्रवृत्तिनिमित्तमनभिधानादित्याशयेनाह— शब्दस्येत्यादि॥ प्रवृत्तेर्निमित्तं प्रवृत्तिनिमित्तं तस्मिन् प्रत्यया इत्यर्थः। यणन्तमुभयम्। मैत्र्यम्। मैत्री॥

## ( कर्मण्यपि ) ब्राह्मणस्य कर्म ब्राह्मण्यम्। राज्यम्। स्तैन्यम्॥

( सुबोधिनी )—कर्मण्यपि॥ कर्मण्यर्थेऽपि तत्वयणः प्रत्यया अणादयश्च स्युः॥ राज्ञो भावः कर्म वा नो वेति टिलोपः। राज्यम्। यण्॥ स्तेनस्य चारस्य भावः कर्म वा स्तैन्यम्। यण्॥

( तत्त्वदी० )—कर्मण्यपीति॥ अत्र क्रियानुवृत्तेः क्रियायामित्यर्थः॥

## ( लोहितादेर्डिमन् भावे वा ) लोहितिमा। लोहितता। लोहितत्वम्। लौहित्यम्। अणिमा। लघिमा। महतो भावो महिमा॥

( सुबोधिनी )—लोहितादेर्डिमन् भावे वा॥ लोहितादेर्गणात् डिमन् प्रत्ययस्तादयश्च भावे॥ लोहितस्य भावः। डित्वाट्टिलोपः। लोहितिमा॥अणोर्भावः अणिमा॥ लघोर्भावः लघिमा॥ महतो भावः। टिलोपः महिमा॥

( तत्त्वदी० )—लोहितिमेति॥ लोहितस्य भाव इत्यर्थः॥

## ( भावेऽणपि ) लाघवम्। गौरवम्। यौवनम्। शैशवम्। मौनम्। हौत्रम्। औद्गात्रम्।

( सुबोधिनी )—भावेऽणपि॥ अण् प्रत्ययोऽपि स्यात् भावे॥ गुरोर्भावो गौरवम्। 'वोऽव्ययस्वरे' इत्यव्॥ यूनो भावः नो वेति टिलोपो न। यौवनम्॥ शिशोर्भावः शैशवम्॥ मुनेर्भावः मौनम्॥ होतुर्भाव हौत्रम्॥ उद्गातुर्भावः औद्गात्रम्॥

( तत्त्वदी० )—लाघवमिति॥ लघोर्भाव इति विग्रहः॥

**ऋ र इमनि ॥** हसादेर्लघोर्ऋकारस्य रेफो भवति इमनि इष्टेयस्सोश्च ॥ पृथोर्भावः प्रथिमा । म्रदिमा । क्रशिमा । द्रढिमा ॥ लघोः किम् । कृष्णिमा ॥ हसादेः किम् । ऋजिमा ॥

( सुबोधिनी )—ऋ र इमनि ॥ ऋ इति षष्ठ्यन्तं सांकेतिकम् ॥ पृथोर्भावः टिलोपः रत्वम् प्रथिमा । अणपि । पार्थवम् । मृदोर्भावः म्रदिमा, मार्दवम् ॥ कृशस्य भावः क्रशिमा ॥ दृढस्य भावः द्रढिमा ॥ कृष्णस्य भावः कृष्णिमा । लघोरभावान्न रत्वम् ॥ ऋजोर्भावः ऋजिमा । हसादित्वाभावान्न रत्वम् ॥

( तत्त्वदी० )—ऋ र इमनि ॥ प्रयोगानुसरणमेव हसादेर्लघोरिति व्याख्यानमेव शरणम् ॥

**बहोर्लोपो भू च बहोः ॥** बहोः परेषामिमनादीनामिवर्णस्तस्य लोपो बहोर्भूरादेशश्च ॥ बहोर्भावो भूमा ॥

( सुबोधिनी )—बहोर्लोपो भू च बहोः ॥ बहुरुदन्तः । शेषं सुगमम् ॥

( तत्त्वदी० )—बहोरिति ॥ बहोरिति पञ्चम्यन्तम् । ततश्च पञ्चमीनिर्दिष्टत्वाल्लोप इवर्णस्यैवेत्याशयेनेवर्णस्येत्युक्तम् । पुनर्ग्रहणात् बहोर्भूस्थानित्वम् ॥

**( स्तेनाद्यो नलोपश्च )** स्तेनस्य कर्म भावो वा स्तेयम् ॥

( सुबोधिनी )—स्तेनाद्यो नलोपश्च ॥ स्तेनशब्दाद्यप्रत्ययः स्याद्भावे कर्मणि चार्थे नलोपश्च ॥ स्तेन, चौर्ये । पचाद्यः । स्तेयं चौर्यम् ॥

**( समूहेऽर्थेऽपि )** मयूराणां समूहो मायूरम् । कौशिकम् । क्षैत्रम् । कैदारिकम् । गाणिक्यम् । तद्धितयस्वरयोः पुंवत् । हास्तिकम् । गार्भिणम् । ग्रामता । जनता । बन्धुता । पाश्या । वात्या । खल्या । गव्या । वार्द्धकम् । कैदार्यम् । कावचिकम् । ब्राह्मण्यम् । वाडव्यम् । माणव्यम् । गजता । सहायता ॥

( सुबोधिनी )—समूहेऽर्थेऽपि ॥ समूहेऽर्थेऽपि अणादयः प्रत्ययाः स्युः ॥ मयूराणां समूहः अण् । मायूरम् ॥ काकानां समूहः काकम् ॥ क्षेत्राणां समूहः क्षैत्रम् ॥ केदाराणां समूहः । इकः । णितो वेति णित्वाद्वृद्धिः । कैदारिकम् । गणिकानां समूहः । यण् गाणिक्यम् ॥ हस्तिनां वा समूहः । इकः । यस्य लोप इति लोपे नो वेति टिलोपः । हास्तिकम् ॥ गर्भिणीनां समूहोऽण् । यस्य लोप इति लोपः । गार्भिणम् । नो वेति टिलोपाऽभावोऽत्र ॥ ग्रामाणां समूहः । तः । ग्रामता ॥ जनानां समूहो जनता ॥ बन्धून समूहो बन्धुता ॥ पाशानां समूहः । यण् । पाश्या ॥ वातानां समूहो वात्या ॥ खलानां समूहः खल्या । णितो वेति न वृद्धिः ॥ गवां समूहो गव्या । 'वोऽव् येस्वरे' इत्यव् ॥ वृद्धानां समूहः । कः । णितो वेति णित्वाद्वृद्धिः वार्द्धकम् ॥ केदाराणां समूहः ।

यण् । कैदार्यम् ॥ कवचिनां समूहः । इकः । कावचिकम् ॥ ब्राह्मणानां समूहो यण् । ब्राह्मण्यम् ॥ वडवानां समूहो वाडव्यम् ॥ माणवानां समूहो माणव्यम् ॥ गजनां समूहः । तः । गजता ॥ सहायानां समूहः सहायता ॥

( तत्त्वदी० )—पाश्येति ॥ पाशानां समूह इति विग्रहः । स्त्रीत्वं लोकात् ॥

( पर्श्वा डण ) पर्शूनां समूहः पार्श्वम् । साक्तुकम् । धैनुकम् । रथ्या ॥

( सुबोधिनी )—पर्श्वा ड्वण् ॥ पर्शुशब्दात् ड्वण् प्रत्ययः स्यात् समूहे । डित्त्वाट्टिलोपः ॥ पर्शूनां समूहः पार्श्वम् ॥ सक्तूनां समूहः साक्तुकम् ॥ धेनूनां समूहः धैनुकम् ॥ रथानां समूहः । यण् । णितो वेति न वृद्धिः । रथ्या ॥

( तत्त्वदी० )—पार्श्वमिति ॥ डित्त्वाट्टिलोपः ॥

( खलगोरथेभ्य इनित्रकटचाः ) खलिनी । गोत्रा । रथकटचा ॥

( सुबोधिनी )—खलगोरथेभ्य इनित्रकटचाः ॥ खलादिभ्यः क्रमात् एते स्युः ॥ खलानां समूहः । त्रण इतीप् । खलिनी ॥ गवां समूहो गोत्रा ॥ रथानां समूहो रथकटचा॥

( तत्त्वदी० )—खलगोरथेभ्य इति ॥ यथासंख्यं प्रत्ययाः ॥ खलिनीति ॥ खलानां समूहः । एवमन्यत्रापि ॥

( हिते च ) सूर्याय हितः सूरीयः । आत्मनीनः । विश्वजनीनः । मातृभोगीणः । अपूपाय हितम् अपूप्यम् अपूपीयम आमिक्ष्यम् आमिक्षीयम् । शङ्कव्यम् । गव्यम् । हविष्यम् । खल्यम् । यव्यम् ॥

( सुबोधिनी )—हिते च ॥ अणादयः प्रत्यया हितेऽर्थे च स्युः ॥ सूर्याय हित इति सूर्यागस्त्ययोरीये ईपि चेति यलोपः सूरीयः । णीयः ॥ आत्मने हितः । नो वेत्यस्य टिलोपो न । आत्मनीनः । ईनः ॥ विश्वजनाय हितः विश्वजनीनः । कर्मधारयादेवेष्यते । विश्वस्य जनः सर्वसाधारणो वेश्यादिरिति तत्पुरुषे विश्वो जनोऽस्येति बहुव्रीहौ च विश्वजनाय हितं विश्वजनीयम् । णीय एव ॥ मातुर्भोगः शरीरं मातृभोगः मातृभोगाय हितः मातृभोगीणः । णत्वम् । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरेण यद्यप्यहेरित्युक्तं तथापि प्रयोगबाहुल्याभिप्रायम् । तच्छक्तिस्तु शरीरमात्रेऽप्यस्ति इत्याकरः ॥ अपूपेभ्यो हितम् अपूप्यं चूर्णम् । ण्यः । णितो वेति न वृद्धिः । अपूपीयः । णीयः ॥ आमिक्षायै हितं ण्यणीयौ । आमिक्ष्यम्—आमिक्षीयम् 'हविः सान्नाय्यमामिक्षा शृतोष्णक्षीरजं दधि' इति हैमः ॥ आमीयते क्षिप्यते दधि यत्र सा आमिक्षा ॥ शङ्कवे हितं शङ्कव्यम् । ण्यः । णितो वेति न वृद्धिः । वोऽवित्यव् ॥ गवे हितं गव्यम् ॥ हविषे हितं हविष्यम् ॥ खलाय हितं खल्यम् ॥ यवेभ्यो हितं यव्यम्॥

( तत्त्वदी० )—सूरीय इति ॥ सूर्यागस्त्ययोरितीये यलोपः ॥

**( शुनो वस ऊर्वा च दीर्घः ) शुने हितं शून्यम् शुन्यम् ॥**

( सुबोधिनी-शुनो वस ऊर्वा च दीर्घः ॥ श्वन्शब्दस्य वकाराकारयोरुत्वं भवति उतश्च वा दीर्घः । नो वेति टिलोपो न भवति वाशब्दस्य व्यवस्थार्थत्वात् ॥ शून्यम् । शुन्यम् ॥

**( ऊधसो नङ् ) ऊधन्यः ॥**

( सुबोधिनी )-ऊधसोऽनङ् ॥ उधसशब्दस्य नङादेशो भवति ॥ ङित्वादन्तस्य स्थाने नङ् । अकार उच्चारणार्थः ॥ ऊधसे हितः । णितो वेति न वृद्धिः । ऊधन्यः ॥

( तत्त्वदी० )-ऊधस इति ॥ ऊधसे हितः ॥

**( अजाविभ्यां थ्यः ) अजथ्या । अविथ्या ॥**

( सुबोधिनी)-अजाविभ्यां थ्यः ॥ आभ्यां थ्यप्रत्ययः स्यात्तद्धितेऽर्थे ॥ अजेभ्यो अजाभ्यो वा हिता अजथ्या । थ्यप्रत्ययस्य तरादौ पाठात् पुंवद्भावे रूपं तुल्यम् । अविभ्यो हिता अविथ्या ॥ सर्वस्मै हितं सार्वम् । अण । सार्वीयम् । णीयः । वृद्धिः ॥

( तत्त्वदी० )-अजथ्येति ॥ अजायै हिता ॥

**अस्त्यर्थे मतुः ॥ नाम्नः ॥ गावोऽस्यास्मिन्वा सन्ति गोमान् । श्रीर्विद्यतेऽस्य श्रीमान् । विदुष्मान् । गोमती ॥**

( सुबोधिनी )-अस्त्यर्थे मतुः॥प्रथमान्तान्नाम्नो मतुप्रत्ययो भवति अस्यास्तीत्यर्थे अस्मिन्नस्तीत्यर्थे च ॥ उदित्वात्पुंसि ञितो नुमिति नुम् । स्त्रियां च ष्ट्रञित इतीप् । क्लीबे शौ नुम् । "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ संबन्धेऽस्तिविवक्षायां भवन्ति मत्विनादयः ॥ १ ॥" अस्तीत्यस्य विवक्षायां ये मत्वादयः प्रत्यया विधीयन्ते ते भूमादिषु विषयेषु भवन्ति । भूमा बहुत्वम् । यथा गावोऽस्यास्मिन्वा सन्ति स गोमान्॥ निन्दायां यथा । ककुदावर्तिनी कन्या ॥ प्रशंसायां यथा । रूपवान् ॥ नित्ययोगे यथा । क्षीरिणः वृक्षाः ॥ अतिशायने यथा । उदरिणी कन्या ॥ संबन्धः संसर्गः । संयोग इति यावत् । तत्र यथा । दण्डी पुरुषः ॥ श्रीरस्ति अस्यास्मिन्वा श्रीमान् ॥ विद्वांसो स्यास्मिन्वा सन्ति वसोर्व उरित्युत्वे षत्वम् । विदुष्मान् देशः ॥ ष्ट्रञित इतीप् । गोमती ॥

(तत्त्वदी० )-अस्त्यर्थे मतुरिति ॥ अस्तीत्यत्र लिङ्गवचने अविवक्षिते । कालस्तु विवक्षितः । तथा चास्तिकर्तृभूतादुक्तान्नाम्नः अर्थे भूमादौ मतुप्रत्ययः । अस्तीत्यनेन स्वाम्याधारयोराक्षेपः । एवं च प्रथमान्तान्नाम्नोऽस्तिकर्तुरस्यास्मिन्नित्यर्थे मतुरिति पर्यवसितोऽर्थः । उक्तं च । "भूमनिन्दाप्रशंसासुनित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां जायन्ते मत्विनादयः ॥" अत्र दीक्षिताः । अस्तिविवक्षायां ये मतुवादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः ॥ भूमा बहुत्वम् । तच्चापेक्षा यस्य यावता तस्य तावता बोध्यम् । भूम्नि गोमान् ॥ निन्दायां ककुदावर्तिनी कन्या ॥ प्रशं-

सायां रूपवान् ॥ नित्ययोगे क्षीरिणो वृक्षाः ॥ अतिशायने उदरिणी कन्या ॥ संसर्गे दण्डी । संसर्गः संयोगः तेन संयुक्त एव न तु गृहावस्थितोऽपि दण्डः । एतेन एतदुदाहृत्य अस्त्यर्थोदाहरणं चोक्तमित्युक्तवन्तो वासुदेवादयो निरस्ताः । यद्यपि यद्यस्य तत्तस्मिन्नपि यद्यस्मिन् तत्तस्य भवत्येवेत्युभयनिर्देशोऽप्यर्थस्तथापि वृक्षवान्पर्वतः पुत्रवांश्चैत्र इत्यत्र पर्वते वृक्षसंबन्धस्य चैत्रे पुत्राधारत्वस्य वा सत्त्वादुभयनिर्देशः । असन्निहितपुत्रस्यापि पुत्रवानिति प्रतीतेः सामीपिकाधारत्वस्य विवक्षणादिति ॥

**अइकौ च मत्वर्थे ॥ नाम्नोऽइकस्त्ववदन्तात् ॥ अर्शसः। वैजयन्तः। दण्डिकः । धनिकः ॥**

( सुबोधिनी )–**अइकौ च मत्वर्थे** ॥ प्रत्ययभ्रमनिरासाय संधिरत्र न कृतः ॥ अइकाविति निर्देशेन समासे संहिताया अनित्यत्वं ज्ञापितम् । तेन पदान्तानां समानानामृतीत्यनेन सप्तऋषीणामित्यत्र वा संहिता भवति ॥ अर्शोऽस्यास्मिन्वास्ति अर्शसः ॥ वैजयन्ती पताकास्यास्मिन्वास्ति वैजयन्तः । अः ॥ इकप्रत्ययस्तु अकारान्तादेव । दण्डोस्यास्मिन्वास्ति दण्डिकः ॥ धनमस्यास्मिन्वास्ति धनिकः । इकः ॥

( तत्त्वदी० )–**अइकाविति** ॥ अश्च इकश्च तौ । संध्यभावोऽसंदेहार्थः ॥

**मान्तोपधाद्वत्विनौ ॥ मान्तान्मान्तोपधादवर्णान्तादवर्णोपधाच्च वतुरिनस्त्ववदन्तात् ॥ किम्वान् । लक्ष्मीवान् । धनवान् । विद्यावान् । यशस्वान् । भास्वान् । क्षत्री । दण्डी ॥**

( सुबोधिनी )–**मान्तोपधाद्वत्विनौ** ॥ मश्च अश्च मौ अन्तश्च उपधा च अन्तोपधे मौ अन्तोपधे यस्य तत् मान्तोपधं तस्मान्मान्तोपधात् । प्रथमाद्वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे । इन् प्रत्ययस्तु अकारान्तादेव ॥ मतोरपवादोऽयं विधिः ॥ यथासंख्यं तु न गुरुकरणात् । तथाहि । म् अन्ते यस्य तन्मन्तम् अ उपधा यस्य तत् ओपधं मन्तं च ओपधं च अनयोः समाहारो मन्तोपधं तस्मान्मन्तोपधात् । इत्थं हि स्पष्टं यथासंख्यं लभ्यते । तदकरणाद्यथासंख्याभावः ॥ वतोरुकारो ञितो नुमिति नुमर्थः । ञ्वित इतीवर्थश्च । किमस्यास्मिन्वास्ति किंवान् ॥ लक्ष्मीरस्यास्मिन्वास्ति लक्ष्मीवान् ॥ धनमस्यास्मिन्वास्ति धनवान् ॥ विद्यास्यास्मिन्वास्ति विद्यावान् ॥ यशोऽस्यास्ति अस्मिन्वास्ति यशस्वान् ॥ भाः अस्यास्मिन्वास्ति भास्वान् ॥ क्षत्रमस्यास्मिन् वास्ति क्षत्री ॥ दण्डोऽस्यास्मिन्वास्ति दण्डी ॥

( तत्त्वदी० )–**मान्तोपधा**दिति ॥ मश्च अश्च मौ अन्तश्च उपधा च अन्तोपधे मौ अन्तोपधे यस्य तन्मान्तोपधं तस्मात् । यथासंख्यं नाशङ्कनीयं लाघवमुत्सृज्य गौरवस्यात्रा दृष्टत्वात् । तथाहि । मन्तोपधादित्येवोच्येत । म् अन्तं यस्य तन्मन्तम् अ उपधा यस्य तत् ओपधं मन्तं च ओपधं च मन्तोपधं तस्मात् ओदौतोर्लाघवगौरवयोर्विशेषाभावात् । इत्याशयेनाह–**मकारान्ता**दित्यादि ॥

**यशस्वानि**ति ॥ तान्तसान्तयोर्हसादावस्त्यर्थे अपदान्तता वाच्या अतो न विसर्गः । यस्वरयोस्तु सर्वेषाम् । भवदीय इत्यत्र तु सहादित्त्वाद्दत्वं बोध्यम् ॥

**( यवादेर्न ) यवमान् । भूमिमान् ॥**

( सुबोधिनी )—यवादेर्न ॥ यवादेर्गणान्मतुरेव स्यात् वत्विनौ न ॥ यवा अस्यास्मिन् वा सन्ति यवमान् ॥ भूमिरस्यास्मिन्वास्ति भूमिमान् ॥

( तत्त्वदी० )—**यवादेर्ने**ति ॥ णितो वेत्यस्य व्यवस्थितस्य मण्डूकप्लुत्यानुवर्तनान्नेत्यर्थः ॥

**( तडिदादिभ्यश्च ) तडित्वान् । विद्युत्वान् । मायी । मायिकः । व्रीही । व्रीहिकः ॥**

( सुबोधिनी )—तडिदादिभ्यश्च ॥ एभ्यो वतुइकइन्प्रत्ययाः स्युः अस्त्यर्थे ॥ तडिदस्यास्मिन् वास्ति तडित्वान् ॥ विद्युदस्यास्मिन् वास्ति विद्युत्वान् ॥ मायास्यास्मिन् वास्ति मायी । इन् ॥ मायिकः । इकः ॥ व्रीहयोऽस्यास्मिन् वा सन्ति व्रीही । इन् ॥ व्रीहिकः । इकः ॥

( तत्त्वदी० )—**तडित्वानि**ति ॥ अपदान्तत्वान्न दत्वम् ॥

**( लोमपामपिच्छादिभ्यः शनेलाः ) लोमशः । गिरिशः । पामनः । दद्रुणः । अङ्गना ।**

( सुबोधिनी )—लोमपामपिच्छादिभ्यः शनेलाः ॥ लोमादिभ्यः शः, पामादिभ्यो नः, पिच्छादिभ्य इलः, स्यादस्त्यर्थे ॥ लोमान्यस्यास्मिन्वा सन्ति लोमशः लोमवान् । वतुः ॥ गिरिरस्याऽस्मिन् वास्ति गिरिशः ॥ पामास्यास्मिन्वास्ति पामनः । नाम्नो नो लोपशधाविति नलोपः ॥ शाकीपलालीदद्रूणां ह्रस्वत्वं च नप्रत्यये । एषां ह्रस्वः । महच्छाकमिति शाकी । ईप् । तद्वत् शाकिनम् ॥ महत्पलालं पलाली । तद्वत् पलालिनम् ॥ दद्रुस्त्वग्रोगविशेषः । दद्रुरस्यास्मिन्वास्ति दद्रुणः णत्वम् ॥ अङ्गमस्या अस्यां वास्ति अङ्गना ॥

( तत्त्वदी० )—**लोमपामपिच्छादिभ्यः शनेला** इति ॥ यथासंख्यं बोध्यम् ।

**( लक्ष्म्या अच्च ) लक्ष्मणः ॥**

( सुबोधिनी )—लक्ष्म्या अच्च ॥ लक्ष्मीशब्दस्याकारान्तादेशः स्यान्नप्रत्यये ॥ लक्ष्मीरस्यास्मिन्वास्ति लक्ष्मणः । णत्वम् ॥

( तत्त्वदी० )—**लक्ष्मण** इति ॥ लक्ष्मीरस्यास्तीति विग्रहः ॥

**( विश्वगित्युत्तरपदलोपश्चाकृतसन्धेः ) विषुणः । पिच्छिलः । तुन्दिलः । फेनिलः ॥**

( सुबोधिनी )—विष्वगित्युत्तरपदलोपश्चाकृतसंधेः ॥ विष्वक्शब्दस्योत्तरपदस्य लोपः स्यात् संधावकृते सति नप्रत्यये ॥ विषु साम्येऽव्ययम् । विषु अञ्चतीति

विष्वक् । विष्वगस्यास्मिन्वास्ति ॥ विषुणः । विषुवदाख्यः कालः । 'समरात्रिंदिवे काले विषुवद्विषुवं च तत्' इत्यमरः ॥ पिच्छं चिक्कणमस्यास्मिन् वास्ति पिच्छिलः ॥ तुन्दमस्यास्मिन्वा तुन्दिलः ॥ फेनमस्यास्मिन्वा फेनिलः ॥ उरसिलः । उरस्वान् ॥ पिच्छवान् ॥

( तत्त्वदी० )–**विषुण** इति ॥ विषु नाना अञ्चन्तीति विष्वञ्चि तान्यस्य सन्तीति विषुणः विषुवदाख्यः कालः तस्यं हि नानागतानि दिनानि सन्ति दिनान्तराणां न्यूनाधिकभावस्य तन्मूलकत्वात् । यदि कृतसंधेः स्यात्तदा वलोपे विष्ण इति स्यादित्यत आह–**अकृतसन्धे**रिति ॥

**( सिध्मादेर्लः )** सिध्मलः । चूडालः ॥

( सुबोधिनी )–**सिध्मादेर्लः** ॥ सिध्मादेर्गणाल्लप्रत्ययः स्यादस्त्यर्थे ॥ पक्षे वतुः ॥ सिध्मवान् । वात दन्त वल ललाट वत्स अंस फेन धमनि क्षुद्रजन्तु उपताप गडु मणि विजय निष्पाठ पांशु हनु पार्ष्णि चूडा सिध्मादयः ॥ पार्ष्णिधमन्योर्दीर्घश्च । पार्ष्णीलः । धमनीलः ॥ क्षुद्रजन्तुर्यथा । यूकालः । मक्षिकालः ॥ उपतापो रोगः । विपादिकाऽस्यास्ति विपादिकालः । 'पादस्फोटो विपादिका' इत्यमरः ॥ सिध्ममस्यास्मिन्वास्ति सिध्मलः ॥ चूडास्यास्मिन्वास्ति चूडालः ॥ वातदन्तवलललाटानामूङ् च । वातुलः वातूलः । इत्यादि ॥

**( कुमुदनडवेतसेभ्यो ड्मतुः )** कुमुद्वान् । नड्वान् । वेतस्वान् ॥

( सुबोधिनी )–**कुमुदनडवेतसेभ्यो ड्मतुः** ॥ एभ्यो ड्मतुप्रत्ययः स्यादस्त्यर्थे ॥ डित्वाट्टिलोपः ॥ कुमुदान्यस्यास्मिन्वा सन्ति कुमुद्वान् । नडा अस्यास्मिन् वा सन्ति नड्वान् ॥ वेतसा अस्यास्मिन् वा सन्ति वेतस्वान् ॥

**( महिषाड्डमतुः )** महिष्मान् देशः ॥

( सुबोधिनी )–**महिषाड्डमतुः** ॥ महिषशब्दात् डमतुः स्यादस्त्यर्थे ॥ महिषा अस्यास्मिन् वा सन्ति महिष्मान् । टिलोपः ॥

**( नडशादाद् ड्वलः )** नड्वलः । शाद्वलः ॥

( सुबोधिनी )–**नडशादाद ड्वलः** ॥ आभ्यां ड्वलप्रत्ययः स्यादस्त्यर्थे ॥ नडा अस्यास्मिन्वा सन्ति नड्वलः । डित्वाट्टिलोपः ॥ शादोऽस्यास्मिन् वास्ति शाद्वलः । 'शादो जम्बालघासयोः' इत्यमरः ॥

**( शिखाया वलः )** शिखावलः ॥

( सुबोधिनी )–**शिखाया वलः** ॥ शिखाशब्दाद्वलप्रत्ययः स्यादस्त्यर्थे ॥ शिखास्यास्मिन्वास्ति शिखावलः ॥

**( नडादीनामीये कुक् )** नडकीयम् ॥

( सुबोधिनी )—नडादीनामीये कुक् ॥ नडादीनां कुगागमो भवति णीयप्रत्यये॥ नड प्लक्ष बिल्व वेत्र वेतस क्रुञ्चा तक्षन् नडादयः। नडा अस्यास्मिन्वा सन्ति नडकीयम् ॥

( क्रुञ्चाह्रस्वत्वं च ) क्रुञ्चकीयम् ॥

( सुबोधिनी )—क्रुञ्चाह्रस्वत्वं च ॥ क्रुञ्चाशब्दस्य ह्रस्वा भवति णीये ॥ क्रुञ्चास्यास्मिन्वास्ति क्रुञ्चकीयम् ॥ एवं तक्षकीयम् । निपातनान्नलोपः । बिल्वकीयम् ॥ वेत्रकीयम् ॥

( शृङ्गवृन्दाभ्यामारकः ) शृङ्गारकः । वृन्दारकः ॥

( सुबोधिनी )—शृङ्गवृन्दाभ्यामारकः ॥ आभ्यामारकप्रत्ययः स्यादस्त्यर्थं ॥ शृङ्गमस्यास्मिन्वास्ति शृङ्गारकः। 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः ॥ वृन्दमस्याऽस्मिन् वास्ति वृन्दारकः। 'वृन्दारकौ रूपिमुख्यौ' इत्यमरः ॥

( फलबर्हाभ्यामिनः ) फलिनः । बर्हिणः ॥

( सुबोधिनी )—फलबर्हाभ्यामिनः ॥ आभ्यामिनप्रत्ययः स्यादस्त्यर्थे ॥ फलमस्यास्मिन्वास्ति फलिनः ॥ बर्हमस्यास्मिन्वास्ति बर्हिणः । णत्वम् ॥

( मलादिनः ) मलिनः ॥ ( ईमसश्च ) मलीमसः ॥

( हृदयादालुः ) हृदयालुः ॥

( सुबोधिनी )—हृदयादालुः ॥ हृदयशब्दादालुः प्रत्ययः स्यादस्त्यर्थे ॥ हृदयमस्यास्मिन्वास्ति हृदयालुः । पक्षे हृदयी । हृदयिकः । हृदयवान् ॥

( शीतोष्णतृप्रेभ्यस्तदसहने ) शीतं न सहते शीतालुः । उष्णालुः । तृप्रं दुःखं न सहते तृप्रालुः ॥

( सुबोधिनी )—शीतोष्णतृप्रेभ्यस्तदसहने ॥ एभ्य आलुप्रत्ययः स्यात् प्रकृत्यर्थासहनेऽर्थे । शीतं न सहते स शीतालुः॥ उष्णं न सहते उष्णालुः॥ तृप्रं दुःखं न सहते तृप्रालुः ॥ तृप्रः पुरोडाशः । तृप्रं दुःखमित्यर्थः ॥

( हिमादेलुः ) हिमं न सहते हिमेलुः ॥

( सुबोधिनी )—हिमादेलुः ॥ हिमशब्दादेलुप्रत्ययः स्यात्तदसहनेऽर्थे ॥

( बलादूलः ) बलं न सहते बलूलः ॥

( सुबोधिनी )—बलादूलः ॥ बलशब्दादूलप्रत्ययः स्यात्तदसहनेऽर्थे ॥

( वातात्समूहे च ) वातं न सहते तस्य समूहो वा वातूलः ॥

( सुबोधिनी )—वातात्समूहे च ॥ वातशब्दादूलप्रत्ययः स्यात्तदसहनेऽर्थे समूहेऽर्थे च ॥ बलूलवातूलशब्दावस्त्यर्थे च व्युत्पादितौ ॥

**( तः पर्वमरुद्भ्याम् )** पर्वतः। मरुत्तः ॥

(सुबोधिनी)—तः पर्वमरुद्भ्याम् ॥ आभ्यां तः प्रत्ययोऽस्त्यर्थे ॥ पर्वास्यास्मिन्वास्ति। नाम्नो न इति नलोपः। पर्वतः। मरुदस्यास्मिन्वास्ति मरुत्तः ॥

**( ऊर्णाहंशुभंभ्यो युः )** ऊर्णायुः। अहंयुः। शुभंयुः ॥

(सुबोधिनी)—ऊर्णाहंशुभंभ्यो युः ॥ एभ्यो युः प्रत्ययः स्यादस्त्यर्थे ॥ ऊर्णास्यास्मिन् वास्ति ऊर्णायुः। अत्र निपातनाद्यस्येत्यालोपो न ॥ अहमिति मान्तमव्ययमहंकारे शुभमिति च शुभे। अहंयुरहंकारवान्। शुभंयुः शुभान्वितः ॥

**( स्वादामिन्नैश्वर्ये )** स्वमैश्वर्यमस्यास्मिन्वास्ति स्वामी ॥

(सुबोधिनी)—स्वादामिन्नैश्वर्ये ॥ ऐश्वर्ये स्वशब्दादामिन् प्रत्ययः स्यादस्त्यर्थे ॥ ईशिता हि ईश्वरस्तस्य भाव ऐश्वर्यम् ॥ ऐश्वर्ये किम्। स्ववान्। स्वं द्रव्यमस्यास्मिन्वास्ति ॥

**( वातातीसारपिशाचानामिनिः कुक् च )** वातकी। अतीसारकी। पिशाचकी ॥

(सुबोधिनी)—वातातीसारपिशाचानामिनिः कुक् च ॥ एभ्य इनिः प्रत्ययः स्यादस्त्यर्थे ॥ इकार उच्चारणार्थः ॥ एषां कुगागमश्च इनिप्रत्यये। वातोऽस्यास्मिन्वास्ति वातकी। 'वातकी वातरोगी स्यात्' इत्यमरः ॥ अतीसारोऽस्यास्मिन्वास्ति अतीसारकी। रोगे चायमिनिरिष्यते ॥ नेह। वातवती गुहा ॥ पिशाचोऽस्यास्मिन्वास्ति पिशाचकी ॥

**( ज्योत्स्नादिभ्योऽण् )** ज्यौत्स्नः। तामिस्रः। तापसः। सैकतः। शार्करः ॥

(सुबोधिनी)—ज्योत्स्नादिभ्योऽण् ॥ ज्योत्स्नादिभ्योऽण् स्यादस्त्यर्थे ॥ किं च ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसा अस्त्यर्थे निपात्यन्ते ॥ ज्योतिरस्या अस्यां वास्ति ज्योत्स्ना चन्द्रप्रभा। ज्योतिष्शब्दस्य निपातनादुपधालोपो नप्रत्ययश्च ॥ तमोऽस्याऽस्मिन्वा तमिस्रम्। तमस्शब्दस्योपधाया इत्वं रप्रत्ययश्च ॥ शृङ्गमस्याऽस्मिन्वास्ति शृङ्गिणः। अत्र इनप्रत्ययो निपातनात् ॥ ऊर्जोऽस्यास्मिन्वास्ति ऊर्जस्वी ऊर्जस्वलः। विन्वलप्रत्ययौ निपातनात् ॥ गौरस्यास्मिन् वास्ति गोमी। मिन् प्रत्ययो निपातनात् ॥ मलोऽस्याऽस्मिन्वास्ति मलिनः मलीमसः। मलशब्दादिनेमसप्रत्ययौ निपातनादिति ॥ ज्योत्स्नास्यास्मिन्वास्तीत्यणि ज्यौत्स्नः शुक्लपक्षः ॥ तमिस्रमस्यास्मिन्वास्ति तामिस्रः कृष्णपक्षो नरकविशेषश्च ॥ 'तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता' इत्यमरोक्तौ तु तमिस्रेत्येतदादन्तं न त्वणन्तमिति न विरोधः ॥ तपोऽस्याऽस्मिन्वास्ति तापसः। विन्प्रत्ययोऽपि। तपस्वी ॥ सिकतास्या-

स्मिन्वास्ति सैकतः। इलप्रत्यये सिकतिलः॥ वतौ तु सिकतावान्॥ शर्करास्यास्मिन्वास्ति शार्करः। अण्। शर्करिलः। इलः। शर्करावान्। वतुपक्षे प्रत्ययलुक् च भवति। सिकता। शर्करा। "स्त्री शर्करा शर्करिलः शार्करः शर्करावति। देश एवादिमावेवमुन्नेयाः सिकतावति॥" इत्यमरः॥

(तत्त्वदी०)—ज्यौत्स्ना इति॥ शुक्लपक्षे। तामिस्रः कृष्णपक्षे नरकविशेषश्च॥

**( ऊषशुषिमुष्कमधुखमुखकुञ्जनगपांशुपाण्डुभ्यो रः ) ऊषरः। शुषिरम्। मुष्करः। मधुरः। खरः। मुखरः। कुञ्जरः। नगरम्। पांशुरः। पाण्डुरः॥**

(सुबोधिनी)—ऊषशुषिमुष्कमधुखमुखकुञ्जनगपांशुपाण्डुभ्यो रः॥ एभ्यो रप्रत्ययः स्यादस्त्यर्थे॥ ऊषोऽस्यास्मिन्वास्ति ऊषरः। 'स्यादूषः क्षारमृत्तिका। ऊषवानूषरः' इत्यमरः॥ शुषिरस्यास्मिन्वास्ति शुषिरः। शुषिश्छिद्रम्। 'वंशादिकं तु शुषिरम्' इत्यमरः॥ मुष्कोऽस्यास्मिन्वास्ति मुष्करः। मुष्कोऽण्डः॥ मधु माधुर्यमस्यास्मिन्वास्ति मधुरः॥ खमस्यास्मिन्वास्ति खरः। महत् कण्ठविवरं खम्। गर्दभे रूढोऽयम्॥ मुखमस्यास्मिन्वास्ति मुखरः वाचालः॥ कुञ्जो हस्तिहनुरस्यास्मिन्वास्ति कुञ्जरः॥ नगा वृक्षाः पर्वताश्च ते अस्यास्मिन्वा सन्ति नगरम्। जातिशब्दोऽयम्। तेन स्त्रियां जातिलक्षण ईप्। नगरी। पांशू रजोऽस्यास्मिन्वास्ति पांशुरः॥ पाण्डुरस्यास्मिन्वास्ति पाण्डुरः। 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः॥

(तत्त्वदी०)—ऊषशुषीति॥ ऊषा हरिणाः। पांशवः रजांसि। शुषि छिद्रम्। कुञ्जो हस्तिहनुः॥ नगरमिति॥ नगाः वृक्षाः पर्वताश्च। जातिशब्दत्वान्नगरीत्यपि॥ पाण्डुर इति॥ पाण्डुः शुक्लो वर्णस्तद्वान्॥

**( कच्छ्वा ह्रस्वत्वं च ) कच्छुरः॥**

(सुबोधिनी)—कच्छ्वा ह्रस्वत्वं च॥ कच्छूशब्दाद्रः स्यादस्त्यर्थे। कच्छू इत्यस्य ह्रस्वश्च॥ कच्छूरस्यास्मिन्वास्ति कच्छुरः। कच्छू रोगविशेषः॥

(तत्त्वदी०)—कच्छुर इति॥ कच्छूः रोगविशेषस्तद्वान्॥

**( द्युद्रुभ्यां मः ) द्युमः। द्रुमः॥**

(सुबोधिनी)—द्युद्रुभ्यां मः॥ आभ्यां मप्रत्ययः स्यादस्त्यर्थे॥ द्यौरस्यास्मिन्वास्ति द्युमः। दिव 'उरसे' इत्युत्वम्॥ द्रुः शाखा वृक्षश्च। द्रुरस्यास्मिन्वास्ति द्रुमः। 'पलाशी द्रुद्रुमागमाः' इत्यमरः॥

(तत्त्वदी०)—द्युद्रुभ्यां म इति॥ द्यौरस्यास्तीति। 'दिव उरसे' इत्युत्वम्। अव्युत्पन्नोऽपि द्युशब्दो दिनवाच्यस्ति॥ द्रुर्वृक्षः सोऽस्यास्तीति जनकतयेति द्रुमोऽपि वृक्ष एव॥

(केशादिभ्यो वः) केशवः। मणिवः। हिरण्यवः॥

(सुबोधिनी)—केशादिभ्यो वः॥ एभ्यो वः स्यादस्त्यर्थे॥ केशा अस्यास्मिन्वा सन्ति केशवः। केशी। इन्। केशिकः। इकः। केशवान्। वतुः॥ मणिरस्याऽस्मिन्वास्ति मणिवः। नागविशेषः॥ हिरण्यमस्यास्मिन् वास्ति हिरण्यवो निधिविशेषः॥

(तत्त्वदी०)—केशव इति॥ प्रशस्ताः केशाः सन्त्यस्येति विग्रहः॥

(अर्णसो लोपश्च) अर्णवः॥

(सुबोधिनी)—अर्णसो लोपश्च॥ अर्णस्शब्दाद्वः स्यादस्त्यर्थे। सस्य लोपश्च॥ अर्णो जलं तद्वानर्णवः। अर्णस्वान् वतुः॥

(तत्त्वदी०)—अर्णव इति॥ अर्णांसि जलानि सन्त्यस्येति॥

(रजःकृष्यासुतिपरिषदो वलः) रजस्वला॥

(सुबोधिनी)—रजःकृष्यासुतिपरिषद्यो वलः॥ एभ्यो वलप्रत्ययः स्यादस्त्यर्थे॥ रजोऽस्या अस्यां वास्ति रजस्वला। 'रजः स्त्रीकुसुमेऽपि च' इत्यमरः॥

(कृष्यादीनां वले दीर्घः) कृषीवलः। आसुतीवलः। परिषद्वलः॥

(सुबोधिनी) कृष्यादीनां वले दीर्घः॥ वलप्रत्यये संज्ञायामेषां दीर्घः स्यात्॥ कृषिरस्यास्मिन्वास्ति कृषीवलः॥ आसुतिरभिषवः। 'मद्यसंधानमासुतिः' इति हैमः॥ 'षुञ् अभिषवे' क्तिः। आसुतिरस्यास्मिन्वास्ति आसुतीवलः शौण्डिकः॥ परितः सीदतीति परिषत्। क्विप्। पर्षदिति पाठान्तरम्। परिषदस्यास्मिन् वास्ति परिषद्वलः। पर्षद्वलश्च। 'पर्षद्वलान्महाब्रह्मैरादनैकटिकाश्रमान्' इति भट्टिः॥

(तत्त्वदी०)—परिषद्वल इति॥ परितः सीदतीति परिषत्॥

(अन्येभ्योऽपि) भ्रातृवलः। पुत्रवलः। दन्तावलः। बन्धुवलः॥

(सुबोधिनी)—अन्येभ्योऽपि॥ वलप्रत्ययः स्यादस्त्यर्थे॥ भ्रातास्यास्मिन्वास्ति भ्रातृवलः॥ पुत्रोऽस्यास्मिन्वास्ति पुत्रवलः। संज्ञाया अभावान्नेह दीर्घः॥ दन्ता अस्यास्मिन्वा सन्ति दन्तावलो हस्ती। कृष्यादीनामिति दीर्घः॥

(तुन्दिबलिवटेर्भः) तुन्दिभः। बलिभः। वटिभः॥

(सुबोधिनी)—तुन्दिबलिवटेर्भः॥ एभ्यो भप्रत्ययः स्यादस्त्यर्थे॥ वृद्धा नाभिस्तुन्दिः। तुन्दिरस्यास्मिन्वास्ति तुन्दिभः॥ बलिरस्यास्मिन्वास्ति बलिभः॥ वटिरस्यास्मिन्वास्ति वटिभः। वल्मीकगृहमित्यर्थः। पामादित्वाद्वलिनोऽपि॥

(एतत्किमिदंयत्तद्भ्यः परिमाणे वतुः)

( सुबोधिनी )-एतत्किमिदंयत्तद्भ्यः परिमाणे वतुः ॥ एभ्यो वतुप्रत्ययः स्यात् परिमाणेऽर्थे ॥ परिमाणमिह परिच्छेदकमात्रम् ॥

( तत्त्वदी० )-एतत्किमिदंयत्तद्भ्यः परिमाणे वतुरिति ॥ मान्तोपधादित्यनेनैव-सिद्धे परिमाणार्थे वचनम् ॥

**( यत्तदेतदामा वतौ ) यावान् । तावान् । एतावान् ।**

( सुबोधिनी )-यत्तदेतदामा वतौ ॥ वतुप्रत्यये परे एषामाकारान्तादेशः स्यात् यत्परिमाणमस्य यावान् ॥ तत्परिमाणमस्य तावान् ॥ एतत्परिमाणस्य एतावान् ॥

( तत्त्वदी० )-यत्तदेतदामा वताविति ॥ यत्तदेतच्छब्दानां वतुप्रत्यये परे आकारोऽन्तादेश इत्यर्थः ॥ यावानिति ॥ यत् परिमाणमस्येति विग्रहः ॥

**( किमः किर्वतोर्वस्य यः ) कियान् ॥**

( सुबोधिनी )-किमः किर्वतोर्वस्य यः ॥ किम्शब्दस्य किरादेशः स्यात् वतुप्रत्ययवस्य यकारश्च ॥ किंपरिमाणमस्य कियान् ॥

**( इदम इश्वतोर्वस्य यः ) इयान् ॥**

( सुबोधिनी )-इदम इश्वतोर्वस्य यः ॥ इदम्शब्दाद्वतुः स्यात्परिमाणेऽर्थे इदम्-स्थाने इशादेशश्च । शित्त्वात्सर्वादेशः । वतुप्रत्ययवस्य यकारश्च । इदं परिमाणमस्य स इयान् ॥

( तत्त्वदी० )-इदम इशिति ॥ शकारः सर्वादेशार्थः ॥

**( श्रद्धादेर्लुः ) श्रद्धालुः । कृपालुः । दयालुः ॥**

( सुबोधिनी )-श्रद्धादेर्लुः ॥ लुप्रत्ययः स्यादस्त्यर्थे ॥ श्रद्धास्यास्मिन्वास्ति श्रद्धालुः ॥ कृपास्यास्मिन्वास्ति कृपालुः ॥ दयास्यास्मिन्वास्ति दयालुः ॥ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाशीङ्भ्य इत्यालुप्रत्ययेनापीष्टसिद्धेरिदं सूत्रं चिन्त्यम् ॥

**( औन्नत्ये दन्तादुरः ) दन्तुरः ॥**

( सुबोधिनी )-औन्नत्ये दन्तादुरः ॥ उन्नते वर्तमानाद्दन्तशब्दादुरप्रत्ययः स्यादस्त्यर्थे ॥ उन्नता दन्ताः संत्यस्य दन्तुरः ॥ औन्नत्ये किम् । दन्तवान् ॥

**( अस्मायामेधास्रग्भ्यो विनिः ) तपस्वी । ओजस्वी । वर्चस्वी । तेजस्वी । वचस्वी । मायावी । मेधावी । स्रग्वी ॥**

( सुबोधिनी )-अस्मायामेधास्रग्भ्यो विनिः ॥ एभ्यो विन् स्यादस्त्यर्थे ॥ पक्षे वतुरपि ॥ तपोऽस्यास्मिन्वास्ति तपस्वी ॥ ओजोऽस्यास्मिन्वास्ति ओजस्वी ॥ वर्चोऽस्यास्मिन्वास्ति वर्चस्वी ॥ तेजोऽस्यास्मिन्वास्ति तेजस्वी ॥ वचोऽस्यास्मिन्वास्ति वचस्वी मनोऽस्यास्मिन्वास्ति मनस्वी ॥ मायास्यास्मिन् वास्ति मायी मायिकः । इनिकौ ॥

मेधास्यास्मिन्वास्ति मेधावी ॥ स्रगस्यास्मिन्वास्तीति चोः कुरित्यनेन सिद्धे परत्वात्प्राप्तं छशषेति षत्वं निराकृत्य दिशामिति कुत्वम् । स्रग्वी ॥

( तत्त्वदी० )–अस्मायेति ॥ अस्प्रत्ययग्रहणेन तदन्तस्य ग्रहणमिति । अस्प्रत्ययान्तात् मायादेश्च विनिरित्यर्थः ॥

**( आमयस्य दीर्घश्च ) आमयावी ॥**

( सुबोधिनी )–आमयस्य दीर्घश्च ॥ अस्मादपि विन् स्यादस्त्यर्थे विन्प्रत्ययेऽस्य दीर्घश्च ॥ आमयोऽस्याऽस्मिन्वास्ति आमयावी ॥

**( वाचो ग्मिनिः ) वाग्मी ॥**

( सुबोधिनी )–वाचो ग्मिनिः ॥ वाच्शब्दात् ग्मिन् प्रत्ययः स्यादस्त्यर्थे ॥ वागस्यास्मिन्वास्ति । चस्य कुत्वे झवे जवा इति गत्वे वाग्मी । गकारद्वयमस्ति ॥

( तत्त्वदी० )–वाचो ग्मिनिरिति ॥ गकारो मादित्वव्यावृत्त्यर्थः । तेन गत्वमेव । यद्वा ग् मिनिः इति च्छेदः ग् आदेशो मिन्प्रत्ययः ॥

**( आलाटौ कुत्सितभाषिणि ) वाचालः । वाचाटः ॥**

( सुबोधिनी )–आलाटौ कुत्सितभाषिणि ॥ वाच्शब्दादेतौ स्तः कुत्सितबहुभाषकेऽर्थ ॥ कुत्सितं बहु भाषते वाचालः । वाचाटः ॥ यस्तु सम्यग्बहु भाषते स वाग्मीत्येव ॥

( तत्त्वदी० )–कुत्सितेति ॥ कुत्सितमनन्वितं भाषितुं शीलमस्य स तथा तस्मिन्नित्यर्थः । प्रत्ययार्थे वाच्य इत्यर्थः ॥

**( ईषदसमाप्तौ कल्पब्देश्यदेशीयाः ) ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः । पटुदेश्यः । विद्वद्देशीयः । पटुदेशीयः ॥**

( सुबोधिनी )–ईषदसमाप्तौ कल्पब्देश्यदेशीयाः ॥ प्रथमान्तान्नाम्नः आख्यातान्ताच्चैते स्युरीषदूनेऽर्थ ॥ ईषदसमाप्तौ ये प्रत्ययास्तेष्वभिधेयवदेव लिङ्गवचने स्तः । तेन गुडकल्पा द्राक्षा ॥ शर्कराकल्पो गुड इति ॥ ईषदूनः सर्वज्ञः सर्वज्ञकल्पः ॥ ईषदूनः पटुः पटुदेश्यः ॥ ईषदूनो विद्वान् 'वसां रसे' इति दत्वं विद्वद्देशीयः ॥ ईषदूनं पचति पचतिकल्पम् ॥ क्रियाप्रधानमाख्यातमिति क्रियायामौत्सर्गिकमेकवचनं क्लीबत्वं च ॥

( तत्त्वदी० )–ईषदिति ॥ ईषदपरिसमाप्तौ किंचिन्न्यूनत्वे ॥

**( बहुर्वा उक्तार्थे स च प्रागेव ) ईषदूनः पटुः बहुपटुः ॥**

( सुबोधिनी )–बहुर्वा उक्तार्थे स च प्रागेव ॥ ईषदसमाप्तिविशिष्टेऽर्थे प्रथमान्तान्नाम्नो बहुप्रत्ययः स्यात् स च प्रकृतेः प्रागेव न तु परतः लिङ्गसंख्ये अपि प्रकृतेरेव न तु तद्विपर्ययः । तेन बहुगुडो द्राक्षा । 'लघुर्बहुतृणं नरः' इत्यादौ न विशेष्यनिघ्नता ॥

( तत्त्वदी० )—वहुर्वा उक्तार्थे स च प्रागेवेति ॥ उक्तार्थे किंचिन्न्यूनत्वेऽर्थे वहुप्रत्ययों विकल्पेन भवति। स च वहुप्रत्ययः प्रकृतेः प्रागेव न तु परतः। लिङ्गसंख्ये अपि प्रकृतेरेव न तु तद्विपर्ययः। तेन वहुगुडो द्राक्षा 'लघुर्वहुतृणं नरः' इत्यादौ न विशेष्यनिघ्नता ॥

( प्रकारे जातीयः ) पटुप्रकारः पटुजातीयः ॥

( सुवोधिनी )—प्रकारे जातीयः ॥ प्रकारवति जातीयप्रत्ययः स्यात् ॥ सामान्यस्य भेदकः प्रकारः ॥

( कुटीशमीशुण्डाभ्यो रो ह्रस्वत्वे ) ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः ॥

( सुवोधिनी )—कुटीशमीशुण्डाभ्यो रो ह्रस्वत्वे ॥ एभ्यो रः प्रत्ययो भवति ह्रस्वेऽर्थे ॥ ह्रस्वा कुटीति स्वार्थिकाः प्रकृतिलिङ्गमतिवर्तन्ते इति पुँल्लिङ्गतात्र। कुटीरः॥ ह्रस्वा शमी शमीरः ॥ ह्रस्वा शुण्डा शुण्डारः ॥

( कुत्वा डुपः ) ह्रस्वा कुतूः कुतुपः ॥

( सुवोधिनी )—कुत्वा डुपः ॥ कुतूशब्दात् डुपप्रत्ययः स्यात् ह्रस्वेऽर्थे। 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' इत्यमरः ॥

( तत्त्वदी० )—कुतुप इति ॥ 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान् ॥'

( कासूगोणीभ्यां ष्टरः ) ह्रस्वा कासूः कासूतरी। गोणीतरी ॥

( सुवोधिनी )—कासूगोणीभ्यां ष्टरः॥ आभ्यां ष्टरप्रत्ययः स्यात् ह्रस्वे ॥ षित्वात् ष्त्रित इतीप् ॥ ह्रस्वा कासूः कासूतरी। कासूः आयुधविशेषः॥ ह्रस्वा गोणी गोणीतरी॥

( तत्त्वदी० )—कासूरिति ॥ आयुधविशेषः कासूः। सा ह्रस्वेत्यर्थः ॥

( वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे ) तनुर्वत्सः वत्सतरः। उक्षतरः। अश्वतरी। ऋषभतरः ॥

( सुवोधिनी )—वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे ॥ एभ्यः ष्टरः स्यात् ॥ तनोर्भावस्तनुत्वम् न्यूनता। सा च प्रवृत्तिनिमित्तस्यैव प्रत्यासत्तेः। क्वचित्तु तत्सहचरितधर्मान्तराणामपि न्यूनता। तत्र वत्सः प्रथमवयाः। प्रथमवयसो न्यूनत्वं नाम वयोऽन्तरप्राप्तिः॥ उक्षा तरुणवयाः। तारुण्यस्य तनुत्वं तृतीयवयःप्राप्तिः ॥ अश्वायामश्वादुत्पन्नोऽश्वः। अश्वत्वं च जातिः। तत्सहचरितस्याश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपितृकता तथा च गर्दभेनाऽश्वायामुत्पादितोऽश्वतरः। तरतमेति पुंवद्भावः। अश्वतरो भारस्य वोढा ऋषभस्तस्य तनुत्वं भारोद्वहने मन्दशक्तिता। तद्वांस्तु ऋषभतरः। प्रवृत्तिनिमित्ततनुत्वे एवायम् ॥

( तत्त्वदी० )—वत्सतर इति ॥ द्वितीयं वयः प्राप्तः। उक्षतरः ॥

**( देवतान्तात्तादर्थ्ये यः )** अग्निदेवतायै इदमग्निदेवत्यम् ।

( सुबोधिनी )–देवतान्तात्तादर्थ्ये यः ॥ तदर्थ एव तादर्थ्यम् । स्वार्थे ष्यञ् । अग्निश्चासौ देवता च अग्निदेवता तस्यै ॥

**( पादार्घाभ्यां च )** पादार्थमुदकं पाद्यम् । अर्घ्यम् ॥

( सुबोधिनी )–पादार्घाभ्यां च ॥ आभ्यां यः स्यात्तादर्थ्ये ॥ 'पाद्यं पादाय वारिणि ' इत्यमरः ॥ ' मूल्ये पूजाविधौ चार्घः ' इत्यमरः ॥ अर्घार्थमुदकमर्घ्यम् ॥

**( नवस्य नूआदेशस्त्नप्तनखाः प्रत्ययाः स्वार्थे )** नूत्नम् । नूतनम् । नवीनम् ॥

( सुबोधिनी )–नवस्य नूआदेशस्त्नप्तनखाः प्रत्ययाः स्वार्थे ॥ नवशब्दात्स्वार्थे एते स्युर्नवस्थाने नूश्च वा ॥ ' वो व्यस्वरे ' इत्यव् । नवीनम् ॥

( तत्त्वदी० )–नवीनमिति ॥ नवशब्दस्य ईनप्रत्ययः । ऊकारस्य वोऽव्यस्वर इत्यवादेशः ॥

**( पुराणे प्रान्नश्च )** प्रणम् । प्रत्नम । प्रतनम् । प्रीणम ॥

( सुबोधिनी )–पुराणे प्रान्नश्च ॥ प्रात्पुराणेऽर्थे नप्रत्ययः स्यात् चादुक्ताः त्नतनईनाः।

**( अतिथेर्ञ्यः )** अतिथय इदमातिथ्यम् ॥

( सुबोधिनी )–अतिथेर्ञ्यः ॥ अतिथिशब्दात्तादर्थ्ये ञ्यः स्यात् ॥

**( प्रशंसायां रूपः )** प्रशस्तो वैयाकरणो वैयाकरणरूपः ॥

( सुबोधिनी )–प्रशंसायां रूपः ॥ प्रथमान्तान्नाम्न आख्यातान्ताच्च रूपप्रत्ययः स्यात् प्रशंसायामर्थे ॥ प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा । न तु स्तुतिः । तेनेहापि रूपप्रत्ययः । चोररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति । गुप्तवस्तुनोऽपहरणेन चौर्यं परिपूर्यते ॥ प्रशस्तं पचाति पचतिरूपम् ॥

**( कुत्सायां पाशः )** कुत्सितो भिषक् भिषक्पाशः ॥

( सुबोधिनी )–कुत्सायां पाशः ॥ प्रथमान्तान्नाम्नः पाशप्रत्ययः स्यात् कुत्सायामर्थे ॥

**( भूतपूर्वे चरट् )** पूर्वं दृष्टो दृष्टचरः । दृष्टचरी । आढ्यचरी ॥

( सुबोधिनी )–भूतपूर्वे चरट् ॥ पूर्वं भूतो भूतपूर्वस्तत्र वर्तमानात्प्रथमान्ताच्चरट् स्यात् टित्वादीप् ॥ भूतपूर्वाढ्या आढ्यचरी । तरतमचरडिति पुंवत् ॥

( तत्त्वदी० )–भूतपूर्व इति ॥ पूर्वं भूतः प्राप्तः. इति यावत् । टित्वादीप् ॥

**( षष्ठ्या रूप्य च )**

( सुबोधिनी )–षष्ठ्या रूप्य च ॥ षष्ठ्यन्ताद्भूतपूर्वेऽर्थे रूप्यप्रत्ययो वा । पक्षे चरट् ॥ कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः । कृष्णचरः ॥

**( प्राचुर्यविकारप्राधान्यादिषु मयट् )** अन्नं प्रचुरमत्रान्नमयो यज्ञः । मृन्मयो घटः । स्त्रीमयो जाल्मः । अमृतं स्वरूपमस्यामृतमयश्चन्द्रः । आम्रस्य विकारोऽवयवो वा आम्रमयम् । शरमयम् ॥

( सुबोधिनी )—प्राचुर्यविकारप्राधान्यादिषु मयट् ॥ नाम्न एष्वर्थेषु मयट् स्यात् ॥ प्राचुर्ये अन्नमयो यज्ञः । विशेष्यनिघ्नतात्र ॥ विकारे मृदो विकारो मृन्मयः । मयट्प्रत्ययः । ञमे जवस्यापीति नः ॥ प्राधान्ये स्त्रीप्रधानमस्य स्त्रीमयः ॥ आदिशब्दादन्येष्वप्यर्थेषु मयट् । यथा । अमृतमयोऽत्र स्वरूपे मयट् ॥ आम्रमयमत्र विकारावयवयोर्मयट् ॥ शराणां विकारोऽवयवो वा शरमयम् ॥

( तत्त्वदी० )—प्राचुर्येति ॥ प्रचुरस्य भावः प्राचुर्यं बाहुल्यम् । प्राचुर्यं च विकारश्च प्राधान्यादिश्च ते तेषु ॥ जाल्मोऽसमीक्ष्यकारी ॥ **अमृतमय** इति । आदिपदान्ताद्रूप्येऽपि ॥

**( गोः पुरीषे )** गोमयम् ॥

( सुबोधिनी )—गोः पुरीषे ॥ गोशब्दान्मयट् स्यात् पुरीषेऽर्थे ॥ गोः पुरीषं गोमयम् ॥ पुरीषे किम् । गव्यम् । पयसो ण्यः ॥

**न सन्धिय्वोर्युट् च ॥** संधिजयोर्यकारवकारयोः संबन्धिनः स्वरस्य न वृद्धिः । किं तु तयोर्युडागमो यस्येट् वस्योट् पश्चाद्वृद्धिः ॥ व्याकरणमधीते वेद वा वैयाकरणः । स्वश्वं वेद सौवश्वः । व्यासस्यापत्यं वैयासकिः ॥

( सुबोधिनी )—न सन्धिय्वोर्युट् च ॥ सन्धानं संधिः नङ्कीति किमत्ययः । सन्धौ जातौ संधिजौ, य् च व् च य्वौ सन्धिजौ च तौ य्वौ च सन्धिय्वौ । शाकपार्थिवादित्वान्मध्यमपदलोपः माधवस्तु संधेर्य्वाविति षष्ठीतत्पुरुषमाह । इश्च उश्चानयोः समाहारो यु युसहितः ट् युट् । द्वन्द्वान्ते श्रूयमाणत्वात् टकारः प्रत्येकं संबध्यते । इट् उट् इत्यर्थः ॥ वैयाकरणः । अण् इट् वृद्धिः ॥ सुष्ठु अश्वः स्वश्वः । स्वश्वं वेत्तीति सौवश्वः । अण् । उड्वृद्धी ॥ वैयासकिः । अपत्ये इञ् । सुधातृव्यासेत्यकङ् । इड्वृद्धी ॥

( तत्त्वदी० )—न संधिय्वोर्युट् चेति ॥ संधाने पूर्वपरयोर्व्यवधानेनोच्चारणं संधिः ॥ 'नङ्की' इति किः । संधौ जातौ संधिजौ । 'क्विब्वनिड्डाः' इति जनेर्डः ॥ य् च व् च य्वौ संधिजौ च तौ य्वौ च संधिय्वौ शाकपार्थिवादिः । इश्च उश्चानयोः समाहारो यु तेन सहितः ट् युट् । द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं संबन्धः ॥ इट् उट् इति सौस्थितिरित्यादिसिद्धये इदुतोरेव न संधिरिति नाशङ्कनीयम् युट्करणसामर्थ्यात् । अन्यथा सवर्णदीर्घेण तद्विधाने व्यर्थं स्यात् । न च युड्विधिसामर्थ्यात्सवर्णदीर्घ एव न भविष्यतीति वाच्यम् । नञो वैयर्थ्यप्रसंगात् । युटः षष्ठ्यभावान्न वृद्धिनिषेधः । उत्सर्गसमानदेशा अपवादा भवन्तीति न्यायात् । दध्यश्व इत्यादौ न दधिप्रियोऽश्वो दध्यश्वस्तस्यायमिति । चकारात्स्वगतस्वध्वर्य्वङ्ग्व्यवहारव्यायामप्रभृतीनां न निषेधयुटौ ॥ **वैयाकरण** इति ॥ कारकादित्यण् । यकारात्पूर्वमिट् । तस्य पश्चाद्वृद्धिः ॥

**( द्वारादीनां च )** द्वारादीनां संबन्धिनः स्वरस्य न वृद्धिः किं तु तयोर्युडागमः ॥ द्वारे नियुक्तो दौवारिकः ॥ व्यल्कशस्येदं वैयल्कशम् । सौवरम् । शौवम् । सौवग्रामिकः । नैयग्रोधम् । सौवादुमृदवम् । शौवस्तिकम् ॥

( सुबोधिनी )—द्वारादीनां च ॥ द्वारादीनामसंधिजयोर्यकारवकारयोरपि युट् स्यात् पश्चाद्वृद्धिश्च । यस्य इट् वस्य उट् इत्यर्थः ॥ दौवारिकः । नियुक्तेऽर्थे इकः । उड्वृद्धी ॥ वैयल्कशम् । इदमर्थेऽण् । इड्वृद्धी ॥ स्वरस्येदं सौवरम् । उड्वृद्धी ॥ स्वग्रामे भवः सौवग्रामिकः । इकः । उड्वृद्धी ॥ न्यग्रोधस्येदं नैयग्रोधम् । अण् । इड्वृद्धी ॥ स्वादु च तत् मृदु च स्वादुमृदु स्वादुमृदुन इदं सौवादुमृदवम् । अण् । 'वोऽव्यस्वरे' इत्यव् । उड्वृद्धी ॥ श्वो भवं शौवस्तिकम् । तिकण् । उड्वृद्धी ॥ श्वापदस्येकं निपातनात्पूर्वपदस्य दीर्घः । अण् वा उड्वृद्धी । श्वापदं—शौवापदम् ॥

( तत्त्वदी० )—**द्वारादीना**मिति ॥ संधिजत्वाभावेऽपि तौ । वस्तुतस्त्वतद्धारित्येव सुवचम् अन्तःशब्दश्च पदान्तपरतया व्याख्येयः । अनन्त इत्यादौ तथैव व्याख्यानात् । नुडादिवद्युडेव तु नागमः व्याख्यानतो विशेषप्रतिपत्तेः ॥ **सौवर**मिति ॥ स्वरस्येदम् ॥ **शौव**मिति ॥ शुन इदम् **सौवग्रामिक** इति स्वग्रामे भवः ॥ **सौवादुमृदव**मिति ॥ स्वादु च तत् मृदु च तस्येदम् ॥ **शौवस्तिक**मिति ॥ श्वोभवम् । श्वसास्तिकण् ॥

**( इतो जातार्थे )** लज्जा जातास्य लज्जितः । फलितः । तारकितम् ॥

( सुबोधिनी )—इतो जातार्थे ॥ प्रथमान्तान्नाम्नोऽस्य जातमित्यर्थे इतः प्रत्ययः स्यात् ॥ यस्य लोप इत्यालापः । लज्जितः ॥ फलानि जातान्यस्य फलितः ॥ त्रपा जाताऽस्य त्रपितः ॥ तारका जाता अस्य तारकितं नभः ॥ एवं पुष्पितं पुलकितं रोमाञ्चितम् ॥

( तत्त्वदी० )—**इतो जातार्थे** इति ॥ अस्य जातमित्यर्थे इत इत्यर्थः ॥

**तरतमेयस्विष्ठाः प्रकर्षे ॥** अतिशयेन शुक्लः शुक्लतरः । शुक्लतमः ॥

( सुबोधिनी )—तरतमेयस्विष्ठाः प्रकर्षे ॥ तरश्च तमश्च ईयसुश्च इष्ठश्च ते तरतमेयस्विष्ठाः । प्रकर्ष इति प्रकृत्यर्थे विशेषणम् । प्रकर्षणं प्रकर्षः प्रकर्षश्च नाधिक्यं किं त्वभिभवो मतः । यद्यपि कृषिः केवलो विलेखने तथापि प्रपूर्वोऽभिभवेऽर्थे । यद्यपि द्रव्यस्य स्वतः प्रकर्षो न तथापि गुणप्रकर्षात् प्रकर्षो भवति । उक्तं च । "द्रव्यस्याऽव्यपदेशस्य य उपादीयते गुणः । भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥ १ ॥" धर्मयोगं विना व्यपदेष्टुमशक्यस्य द्रव्यस्य व्यपदेशाय यो भेदको गुण उपादीयते प्रत्ययेन तस्य प्रकर्षोऽभिधीयते । गुणक्रियाजातिसंज्ञाभेदेन चतुष्टयी शब्दानां प्रवृत्तिः ।

तत्रगुणक्रिययोः प्रवृत्तिनिमित्तयोस्तत्प्रकर्षे प्रत्ययः। जातिशब्देभ्यस्तु जातेः सर्वत्रैकरूपत्वेन प्रकर्षाभावात्तत्सहचरितायैवाह । दोहादयो धर्मास्तत्प्रकर्षे प्रत्ययः। संज्ञाशब्देषु प्रकर्षो नास्ति। शब्दस्वरूपस्यैव प्रवृत्तिनिमित्तत्वात्। तस्य च सर्वत्र तुल्यत्वात्। गुणशब्दो यथा। यस्य सामान्यतः श्वेतो गुणः स शुक्लः। यस्य तदपेक्षयाधिकः स शुक्लतरः। यस्य ताभ्यामत्यधिकः स शुक्लतमः॥ यः किंचिज्जानाति स पटुः। ततोऽधिकं जानाति स पटुतरः। ततोऽप्यधिकं स पटुतमः॥ क्रियाशब्दो यथा। यो विलम्बेन पचति स पाचकः। यस्तु ततः किंचिच्छीघ्रं पचति स पाचकतरः। यस्त्वतिशीघ्रं पचति स पाचकतमः॥ जातिशब्दो यथा। गौरयं हलं वहति। गोतरोऽयं हलं शकटं च वहति। गोतमोऽयं तौ गौर्णीं च वहति॥ इष्ठेयसुप्रत्ययौ गुणवचनादेव। संख्यापरिमाणप्रमाणोन्मानवाचिभ्यो न तरादयः। संख्या एकादिः। परिमाणं कुडवद्रोणादि। प्रमाणं हस्तवितस्त्यादि। उन्मानं तुलादि॥ उक्तं च "ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः॥ १॥"

( तत्त्वदी० )—**तरतमेयस्विष्ठा** इति॥ तरश्च तमश्च ईयसुश्च इष्ठश्च ते। प्रकर्षणं प्रकर्षः। प्रकर्षश्चात्र नाधिक्यं किं त्वभिभवो मतः। यद्यपि केवलः कृषिर्विलेखनार्थस्तथाप्युपसर्गवशादभिभवार्थेऽपि। प्रकर्षस्य सजातीयप्रतियोगिकत्वात्संज्ञाजातिवाचिकयोस्तदभावान्न तरादयः। तथा संख्यापरिमाणप्रमाणोन्मानवाचिभ्यो न। उक्तं च।"ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः॥" ऊर्ध्वमानं तुलादिः॥ परिमाणं द्रोणादिः॥ प्रमाणं हस्तवितस्त्यादिः॥ संख्या एकद्वावित्यादिः॥ यद्यपि सामान्येन तरादिविधानं तथापि एकस्य द्वयोश्च प्रकर्षे तरेयसू। बहूनां तमेष्ठाविति विवेकः। याचकादिभ्यस्तु ईयस्विष्ठौ वानभिधानात्॥

**( ईयस्विष्ठौ डितौ ) अतिशयेन लघुर्लघीयान्। लघिष्ठः॥**

( सुबोधिनी )—**ईयस्विष्ठौ डितौ**॥ एतौ डित्संज्ञकौ स्तः॥ अतिशयेन लघुः ईयसौ टिलोपे उदित्त्वान्नुम्। न्सम्महतः इति दीर्घः। सिलोपसंयोगान्तलोपौ। लघीयान्॥ लघिष्ठः। इष्ठः॥

**( गुर्वादेरिष्ठेमेयःसु गरादिष्टचलोपश्च ) गुरोर्भावो गरिमा। अतिशयेन गुरुर्गरिष्ठः गरीयान्॥ प्रियस्य भावः प्रेमा। अतिशयेन प्रियः प्रेष्ठः प्रेयान्॥ अतिशयेन स्थूलः स्थविष्ठः स्थवीयान्॥ अतिशयेन प्रशस्यः श्रेष्ठः श्रेयान्॥ दीर्घः द्राघिष्ठः द्राघीयान् स्थिरः स्थेष्ठः स्थेयान्॥ स्फिरः स्फेष्ठः स्फेयान्॥ उरुः वरिष्ठः वरीयान्॥ बहुलः बंहिष्ठः बंहीयान्॥ वृद्धः वर्षिष्ठः वर्षीयान्॥ तृप्रः त्रपिष्ठः त्रपीयान्॥ वृन्दारकः वृन्दिष्ठः वृन्दीयान्॥ दूरः दविष्ठः दवीयान्॥ युवा यविष्ठः यवीयान॥**

( सुबोधिनी )–गुर्वादेरिष्ठेमेयःसु गरादिष्टचलोपश्च ॥ गुरु १ प्रिय २ स्थूल ३ प्रशस्य ४ दीर्घ ५ स्थिर ६ स्फिर ७ गुरु ८ बहुल ९ वृद्ध १० तृप्र ११ वृन्दारक १२ दूर १३ युवन् १४ अल्प १५ ह्रस्व १६ क्षिप्र १७ क्षुद्र १८ अन्तिक १९ बाढ २० गुर्वादयः। गर् रान्तः। प्र अदन्तः। स्थो ओदन्तः। श्र अदन्तः। द्राघ अदन्तः। स्थ अदन्तः। स्फ अदन्तः। वर् रान्तः। बंह अदन्तः। वर्ष् षान्तः। त्रप् पान्तः। वृन्द अदन्तः। दो ओदन्तः। यो ओदन्तः। अल्प् पान्तः। ह्रस् सान्तः। क्षेप् पान्तः। क्षोद् दान्तः। नेद अदन्तः। साध अदन्तः। एते गरादयः ॥ एषामेकस्वराणां टिलोपो यस्य लोप इत्यलोपश्च न। द्विस्वराणां तु यस्य लोप इत्यलोपो भवत्येव॥ गरिमा। इमन्। गरिष्ठः। इष्ठः। गरीयान्। ईयसुः। स्त्रियां तु ऋन्नित ङीप्। गरीयसी॥ प्रेमा। ईमन्। प्रेष्ठः। इष्ठः। प्रेयान्। ईयसुः॥ स्थविष्ठः। इष्टः। स्थवीयान्। ईयसुः॥ श्रेष्ठः। इष्ठः। श्रेयान्। ईयसुः॥ द्राघिष्ठः। यस्य लोप इत्यलोपः। इष्ठः। द्राघीयान्। ईयसुः॥ स्थेष्ठः। इष्ठः। स्थेयान्। ईयसुः॥ अतिशयेन स्फिरः 'भूर्यदभ्रं पुरु स्फिरम्' इति हैमः॥ स्फेष्ठः। इष्ठः। स्फेयान्। ईयसुः॥ अतिशयेन उरुः। वरिष्ठः। इष्ठः। वरीयान् ईयसुः॥ अतिशयेन बहुलः यस्येत्यलोपः। बंहिष्ठः। इष्ठः। बंहीयान्। ईयसुः॥ अतिशयेन वृद्धः वर्षिष्ठः। इष्ठः। वर्षीयान्। ईयसुः॥ अतिशयेन तृप्रः पुरोडाशः तृप्रं दुःखं त्रपिष्ठः। इष्ठः। त्रपीयान्। ईयसुः॥ अतिशयेन वृन्दारकः। 'वृन्दारकौ रूपिमुख्यौ' इत्यमरः॥ यस्येत्यलोपः। वृन्दिष्ठः। इष्ठः। वृन्दीयान्। ईयसुः॥ अतिशयेन दूरः दविष्ठः। इष्ठः। दवीयान्। ईयसुः॥ अतिशयेन युवा यविष्ठः। इष्ठः। यवीयान्। ईयसुः॥

( तत्त्वदी० )–टचलोपश्चेति ॥ टेरलोपष्टचलोपः ईयस्विष्ठयोर्डित्त्वाट्टिलोपे प्राप्ते निषेधः। अल्पादिप्रपञ्च एवैतानीति बोध्यम्॥

**( युवाल्पयोः कन् वा ) कनिष्ठः। कनीयान्॥ अल्पिष्ठः अल्पीयान्। कनिष्ठः। कनीयान्। ह्रस्वः ह्रसिष्ठः। ह्रसीयान्॥ क्षिप्रः क्षेपिष्ठः। क्षेपीयान्॥ क्षुद्रः क्षोदिष्ठः। क्षोदीयान्॥ अन्तिकः नेदिष्ठः। नेदीयान्॥ बाढः साधिष्ठः। साधीयान्॥**

( सुबोधिनी )–युवाल्पयोः कन्वा ॥ एतयोः कनादेशो वा स्यात् इष्ठेयस्वोः परतः॥ कनिष्ठः। इष्ठः। कनीयान्। ईयसुः॥ अतिशयेनाल्पः अल्पिष्ठः। इष्ठः। अल्पीयान्। ईयसुः। कनिष्ठः। कनीयान्॥ अतिशयेन ह्रस्वः। ह्रसिष्ठः। इष्ठः। ह्रसीयान्। ईयसुः॥ अतिशयेन क्षिप्रः क्षेपिष्ठः इष्ठः। क्षेपीयान्। ईयसुः॥ अतिशयेन क्षुद्रः क्षोदिष्ठः। इष्ठः। क्षोदीयान्। ईयसुः॥ अतिशयेनान्तिकः। यस्येत्यलोपः। नेदिष्ठः। इष्ठः। नेदीयान्। ईयसुः॥ अतिशयेन बाढः यस्येत्यलोपः। साधिष्ठः। इष्ठः। साधीयान्। ईयसुः॥

( वृद्धप्रशस्ययोर्वा )

( सुबोधिनी )-वृद्धप्रशस्ययोर्वा ॥ ज्या स्यादिष्ठेयस्वोः परतः ॥

( ईलोपो ज्याशब्दादीयसः ) ज्याशब्दात्परस्येयस ईकारस्य लोपः ॥ अतिशयेन वृद्धः प्रशस्यो वा ज्यायान् । ज्येष्ठः ॥

( सुबोधिनी )-ईलोपो ज्याशब्दादीयसः ॥ ईयसः किम् । ज्येष्ठः ॥ प्रियोरुबहुलगुरुदीर्घाणां लोहितादित्वादिमन् । प्रेमेत्यादि ॥

( तत्त्वदी० )-ईलोपो ज्याशब्दादिति ॥ आदेशादित्यर्थः प्रकरणात् ॥

( बहोरिष्ठेर्यिः ) बहोरुत्तरस्येष्ठस्येकारस्य यिरादेशो भवति ॥

( सुबोधिनी )-बहोरिष्ठेर्यिः ॥ इष्ठेति लुप्तषष्ठीकं पदम् । बहुशब्दादिष्ठप्रत्ययेकारस्य यिः स्यात् । ईयसुप्रत्यये परे ईकारस्य लोपश्च ॥

( तत्त्वदी० )-बहोरिति ॥ इष्ठेति लुप्तषष्ठीकमित्याशयेनाह-बहोरुत्तरस्येष्ठस्येकारस्येति ॥

( बहोर्भूश्च ) भूयिष्ठः भूयान् ॥

( सुबोधिनी )-बहोर्भूश्च ॥ बहोः स्थाने भूः स्यादिष्ठेयस्वोः परतः ॥ अतिशयेन बहुः भूयिष्ठः । इष्ठः । भूयान् । ईयसुः ॥

( विन्मतोर्लुक् )

( सुबोधिनी )-विन्मतोर्लुक्॥ विन्मतोश्च लुक् स्यादिष्ठेयस्वोः परतः ॥ मतुग्रहणं वतोरप्युपलक्षणं बोध्यम् ॥ अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् ॥ अतिशयेन त्वग्वान् त्वचिष्ठः । त्वचीयान् ॥

( किमोऽव्ययादाख्याताच्च तरतमयोराम्वद्रव्यप्रकर्षे ) किंतराम् । किंतमाम् । कुतस्तराम् । कुतस्तमाम् । उच्चैस्तराम् गायति । उच्चैस्तमाम । पचतितराम् । पचतितमाम् । पठतितराम् । पठतितमाम् । द्रव्यप्रकर्षे तु । उच्चैस्तमस्तरुः ॥

( सुबोधिनी )-किमोऽव्ययादाख्याताच्च तरतमयोराम्वद्रव्यप्रकर्षे ॥ किमव्ययाख्यातेभ्यः परौ यौ तरतमौ तदन्तेभ्य आम् स्यात् न तु द्रव्यप्रकर्षे ॥ उकार उच्चारणार्थः ॥ निरनुबन्धग्रहणे न सानुबन्धस्येति परिभाषया नुड्विधौ नास्य ग्रहणम् । अन्यथा पचतितराणामिति स्यात् ॥

( तत्त्वदी० )-किमोऽव्ययादाख्याताच्चं तरतमयोराम्वद्रव्यप्रकर्षे इति ॥ आमन्तस्य क्त्वाद्यन्तत्वादव्ययत्वं बोध्यम् । तेन पचतितरामित्यादौ विभक्तेर्लुक् ॥

( प्रमाणे दघ्नट्द्वयसट्मात्रटः ) जानुदघ्नम् । शिरोद्वयसम् । पुरुषमात्रम् ॥

( सुबोधिनी )—प्रमाणे दघ्नट्द्वयसट्मात्रटः ॥ प्रथमान्तान्नाम्नः तत्प्रमाणमस्येत्यर्थे एते स्युः । 'आयामस्तु प्रमाणं स्यात्' इति नेह गृह्यते किं तु प्रमाणमिह परिच्छेदकमात्रम् । तत्र मात्रट । आद्यौ तूर्ध्वमान एव भवतः । तथैव वृद्धैः स्वीकृतत्वात् । टित्वात् ष्ट्वित् इति स्त्रियामीप् । जानुप्रमाणमस्य जानुदघ्नम् । शिरः प्रमाणस्य शिरोद्वयसम् । पुरुषः प्रमाणमस्य पुरुषमात्रं जलम् ॥

( तत्त्वदी० )—प्रमाणे इति ॥ अत्र च प्रमाणशब्देन परिच्छेदकमात्रं तत्र मात्रट् । द्वयसट्दघ्नटौ तूर्ध्वमान एव न तु तिर्यङ्मानादाविति विवेकः ॥

( पुरुषहस्तिभ्यामण् च ) पौरुषम् । हास्तिनम् ॥

( सुबोधिनी )—पुरुषहस्तिभ्यामण च ॥ आभ्यां प्रमाणेऽर्थेऽणपि स्यात् ॥

( तत्त्वदी० )—हास्तिनमिति ॥ हस्ती प्रमाणमस्येति विग्रहः । नो वेत्यत्र वेत्यस्य व्यवस्थितत्वाट्टिलोपादि न ॥

( वत्वन्तात्स्वार्थे द्वयसट्मात्रटौ ) तावद्द्वयसम् । तावन्मात्रम् ॥

( सुबोधिनी )—वत्वन्तात्स्वार्थे द्वयसट्मात्रटौ ॥ वतुप्रत्ययान्तात्प्रकृत्यर्थे एतौ स्तः तावदेव तावद्द्वयसम् ॥

( तत्त्वदी० )—तावद्द्वयसमिति ॥ तावदेवेत्यर्थः ॥

( द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ ) भवतोः काण्वः कतरः । भवतां तांत्रिकः कतमः । भवतोर्यतरस्तार्किकस्ततर उद्गृह्णातु ॥

( सुबोधिनी )—द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ ॥ किमूयत्तदेकेभ्यो द्वयोर्मध्ये एकस्य निर्द्धारणे डतरः । बहूनां मध्ये एकस्य निर्द्धारणे डतमश्च स्यात् ॥ द्वयोर्बहूनामिति निर्द्धारणे षष्ठी । निर्द्धार्यमाणवाचिभ्य एवैतावभिधानस्वभावात् ॥ कतरः काण्व इति जात्या निर्द्धारणम् ॥ तन्त्रमधीते वेत्ति वा तान्त्रिकः । कतम इति गुणेन निर्द्धारणम् ॥ तर्कमधीते वेत्ति वा तार्किको यतर इति गुणेन निर्द्धारणम् । ततरस्तर्कमुद्गृह्णातु ॥ कतरोऽध्यापक इति क्रियया निर्द्धारणम् ॥ कतरो देवदत्त इति संज्ञया निर्द्धारणम् ॥ एवं यतमः ततमः । अनयोरेकतरो मैत्रः । एषामेकतमः ॥ पक्षे किमूशब्दस्य कः । यच्छब्दस्य यः । तद्शब्दस्य सः । आख्यातान्ययेत्यकप्रत्यये तु किमः कः । यकः । सकः । कक इति तु नोक्तमकसहितस्यापि किमो भाष्ये कादेशविधानात् ॥

( तत्त्वदी० )—द्वयोरित्यादि ॥ द्वयोर्मध्ये एकस्य निर्द्धारणे डतरः। बहूनां मध्ये एकस्य निर्द्धारणे डतम इत्यर्थः ॥ कतर इति ॥ डित्त्वाट्टिलोपः ॥

**( संख्येयविशेषावधारणे द्वेस्तीयः ) द्वयोः पूरणे द्वितीयः ॥**

( सुबोधिनी )—संख्येयविशेषावधारणे द्वेस्तीयः ॥ संख्यातुं योग्यः संख्येयः विशेषेणावधारणं विशेषावधारणम् संख्येयस्य विशेषावधारणं संख्येयविशेषावधारणं तस्मिन्नर्थे द्विशब्दात्तीयप्रत्ययः स्यात् पूरणे ॥ इत्यधिकारोऽयम् ॥

( तत्त्वदी० )—संख्येयेति ॥ संख्यातुमर्हं संख्येयम् । तस्य विशेषस्तत्पूरकस्तस्यावधारणे इत्यर्थः ॥

**( त्रेस्तृ च ) तृतीयः ॥**

( सुबोधिनी )—त्रेस्तृ च ॥ त्रिशब्दात्तीयः स्यात् त्रेः स्थाने तृ चादेशः ॥ त्रयाणां संख्यापूरणः तृतीयः ॥

( तत्त्वदी० )—त्रेस्तृ चेति ॥ संप्रसारणमिति विहाय तृ चेत्युक्तिस्तु लाघवाय। वस्तुतस्तु तृ-चेत्युक्तौ तृ इत्यस्य प्रत्ययान्तरत्वशङ्कानिराकरणाय तदुक्तिः ॥

**( षट्कतिकतिपयचतुर्भ्यस्थट् ) षष्ठः। कतिथः। कतिपयथः। चतुर्थः ॥**

( सुबोधिनी )—षट्कतिकतिपयचतुर्भ्यस्थट् ॥ एभ्यस्थट् स्यादुक्तेऽर्थे ॥ षण्णां पूरणः षष्ठः ॥ कतीनां पूरणः कतिथः। कतिपयानां पूरणः कतिपयथः ॥ चतुर्णां पूरणः चतुर्थः ॥ टित्त्वात् स्त्रियामीप् ॥ युष्मदस्मदोः षष्ठीचतुर्थीति निर्देशात् षष्ठे षकारस्य जवत्वं चतुर्थे रेफस्य विसर्गश्च न ॥

( तत्त्वदी० )—षष्ठ इति ॥ कत्यादित्वाड्डत्वाभावः। एवं चतुर्थ इत्यत्रापि विसर्गोऽप्रसंगः ॥

**( चतुरो येयौ चस्य च लोपः ) तुर्यः। तुरीयः ॥**

( सुबोधिनी )—चतुरो येयौ चस्य च लोपः ॥ चतुर्शब्दात् य ईय एतौ स्तः। चकाराकारयोर्लोपश्च ॥ चतुर्णां पूरणः तुर्यः। तुरीयः ॥

( तत्त्वदी० )—तुर्य इति ॥ चतुर्णां पूरण इति विग्रहः ॥

**( पञ्चादेर्मट् ) पञ्चमः। सप्तमः ॥**

( सुबोधिनी )—पञ्चादेर्मट् ॥ पञ्चप्रभृतिभ्यो मट् स्यात् ॥ पञ्चानां पूरणः नाम्नो नो लोपशिति नलोपः। पञ्चमः ॥ सप्तानां पूरणः सप्तमः ॥ अष्टानां पूरणः अष्टमः ॥ नवानां पूरणः नवमः ॥ दशानां पूरणः दशमः। टित्त्वात् स्त्रियामीप्। दशमी ॥

**( एकादशादेर्डट् ) एकादशः ॥**

( सुबोधिनी )–एकादशादेर्डट् ॥ एकादशशब्दप्रभृतिभ्यो डट् स्यात् ॥ डित्वाट्टिलोपः । टित्वादीप् ॥ एकश्च दश चेति सहादेरित्यात्वम् । एकादशानां पूरणः एकादशः ॥ द्वौ च दश चेति द्व्यधिका दशेति वा ॥

( तत्त्वदी० )–एकादश इति ॥ एकादशादेरिति निर्देशादेकशब्दस्यात्वम् ॥

**( द्व्यष्टनोरात्वं संख्यायामुत्तरपदे )** द्वादशः ॥ अष्टादशः ॥

( सुबोधिनी )–द्व्यष्टनोरात्वं संख्यायामुत्तरपदे ॥ एतयोरात्वं स्यात् बहुव्रीहौ । अशीतिपरे च न ॥ द्वादशः ॥ बहुव्रीहौ किम् । द्विरावृत्ता दशेति सुप्रत्ययार्थे बहुव्रीहिः । द्विदशः । डप्रत्ययः ॥ अशीतिपरे किम् । द्व्यशीतिः ॥ प्राक्शताद्वक्तव्यम् । नेह । द्विशतम् । द्विसहस्रम् । द्वादशानां पूरणः द्वादशः ॥ अष्टादशानां पूरणः अष्टादशः ॥

**( त्रेस्त्रयस् )** त्रयोदशः । चतुर्दशः । पञ्चदशः । षोडशः । सप्तदशः ॥

( सुबोधिनी )–त्रेस्त्रयस् ॥ त्रिशब्दस्य त्रयस् स्यात् बहुव्रीहौ । अशीतिपरे च न ॥ त्रयश्च दश चेति त्रयोदशः । बहुव्रीहौ तु त्रिर्दशेति त्रिदशाः सुप्रत्ययार्थे बहुव्रीहिः ॥ अशीतौ तु त्र्यशीतिः ॥ प्राक्शतादित्येव । त्रिशतम् । त्रिसहस्रम् ॥ त्रयोदशानां पूरणः त्रयोदशः । चतुर्दशानां पूरणः चतुर्दशः ॥ पञ्चदशानां पूरणः पञ्चदशः ॥ षोडशानां पूरणः षोडशः ॥ सप्तदशानां पूरणः सप्तदशः ॥

**( विंशत्यादेर्वा तमट् )** विंशतितमः । एकेन ऊना विंशतिः एकोनविंशतिः । एकोनविंशतेः संख्यापूरक एकोनविंशतितमः ॥

( सुबोधिनी )–विंशत्यादेर्वा तमट् ॥ विंशतिप्रभृतिभ्यो वा तमट् स्यात् । पक्षे एकादशादेरिति डट् । टित्वादीप् ॥ डट्प्रत्यये तु एकोनविंशतेः पूरणः ॥

**( विंशतेस्तिलोपो डिति )** एकोनविंशः । विंशः । त्रिंशत्तमः । त्रिंशः । द्वाभ्यामधिका अशीतिर्द्व्यशीतिः । द्व्यशीतेः संख्यापूरको द्व्यशीतितमः । द्विचत्वारिंशत्तमः । पञ्चाशत्तमः । षष्टेः सङ्ख्यापूरणः षष्टितमः । सप्ततितमः । नवतितमः ॥

( सुबोधिनी )–विंशतेस्तिलोपो डिति ॥ विंशतिशब्दस्य ति इत्यस्य लोपः स्यात् डिति प्रत्यये ॥ एकोनविंशः । तमटि एकोनविंशतितमः ॥ विंशतेः पूरणः विंशतितमः । डति तु विंशः ॥ एकविंशतेः पूरणः एकविंशतितमः । एकविंशः ॥ एवं द्वाविंशतितमः । द्वाविंशः ॥ त्रयोविंशतितमः । त्रयोविंशः ॥ चतुर्विंशतितमः । चतुर्विंशः ॥ पञ्चविंशतितमः । पञ्चविंशः ॥ षड्विंशतितमः । षड्विंशः ॥ सप्तविंशतितमः । सप्तविंशः ॥ अष्टाविंशतितमः । अष्टाविंशः ॥ किं च पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतमेते निपातेन सिद्धाः ॥ एकोनत्रिंशतः पूरणः एकोनत्रिंशत्तमः । एकोनत्रिंशः ॥ त्रिंशतः पूरणः त्रिंशत्तमः । त्रिंशः ॥ एवम् एकत्रिंशत्तमः । एकत्रिंशः ॥ द्वात्रिं

शत्तमः ॥ द्वात्रिंशः ॥ त्रयस्त्रिंशत्तमः । त्रयस्त्रिंशः ॥ चतुस्त्रिंशत्तमः । चतुस्त्रिंशः ॥ पञ्चत्रिंशत्तमः। पञ्चत्रिंशः ॥ षट्त्रिंशत्तमः। षट्त्रिंशः॥ सप्तत्रिंशत्तमः। सप्तत्रिंशः॥ अष्टात्रिंशत्तमः । अष्टात्रिंशः ॥ एकोनचत्वारिंशत्तमः । एकोनचत्वारिंशः ॥ द्व्यष्टनोरात्वं वा । त्रेस्त्रयश्च वा चत्वारिंशत्प्रभृतौ परे ॥ चत्वारिंशत्तमः । चत्वारिंशः ॥ एकचत्वारिंशत्तमः । एकचत्वारिंशः ॥ एवं सर्वत्र डट्तमटौ । द्विचत्वारिंशत् । द्वाचत्वारिंशत् ॥ त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् ॥ पञ्चचत्वारिंशत् ॥ षट्चत्वारिंशत् ॥ सप्तचत्वारिंशत् ॥ अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् ॥ एकोनपञ्चाशत् ॥ पञ्चाशत् ॥ एकपञ्चाशत् ॥ द्विपञ्चाशत् । द्वापञ्चाशत् ॥ त्रिपञ्चाशत् । त्रयःपञ्चाशत् ॥ चतुःपञ्चाशत् ॥ पञ्चपञ्चाशत् ॥ षट्पञ्चाशत् ॥ सप्तपञ्चाशत् ॥ अष्टपञ्चाशत् । अष्टापञ्चाशत् ॥ एकोनषष्टिः ॥ षष्टिः ॥ एकषष्टिः ॥ द्वाषष्टिः । द्विषष्टिः ॥ त्रिषष्टिः । त्रयःषष्टिः ॥ चतुःषष्टिः ॥ पञ्चषष्टिः ॥ षट्षष्टिः ॥ सप्तषष्टिः ॥ अष्टषष्टिः । अष्टाषष्टिः ॥ एकोनसप्ततिः ॥ सप्ततिः ॥ एकसप्ततिः ॥ द्विसप्ततिः । द्वासप्ततिः ॥ त्रिसप्ततिः ॥ त्रयःसप्ततिः ॥ चतुःसप्ततिः ॥ पञ्चसप्ततिः ॥ षट्सप्ततिः ॥ सप्तसप्ततिः ॥ अष्टसप्ततिः । अष्टासप्ततिः ॥ एकोननवतिः ॥ नवतिः ॥ एकनवतिः ॥ द्विनवतिः । द्वानवतिः ॥ त्रिनवतिः । त्रयोनवतिः ॥ चतुर्णवतिः ॥ पञ्चनवतिः ॥ षण्णवतिः ॥ सप्तनवतिः ॥ अष्टनवतिः । अष्टानवतिः ॥ एकोनशतम् ॥ शतम् ॥ शतस्य पूरणः शततमः ॥

**( शतादेर्नित्यम् )** शततमः ।

( सुबोधिनी )—शतादेर्नित्यम् ॥ शतप्रभृतिभ्यस्तमडेव स्यात् न डट् । असंख्यादेः षष्टिशब्दाच्च नित्यं तमट् । षष्टितमः । संख्यादेः षष्टेस्तु डट्तमटौ । एकषष्टः । एकषष्टितमः ॥

**( संख्यायाः प्रकारे धा )** द्विधा । त्रिधा । चतुर्धा । दशधा ॥

( सुबोधिनी )—संख्यायाः प्रकारे धा ॥ संख्यावाचिशब्दात्प्रकारेऽर्थे धाप्रत्ययः स्यात् ॥ द्वौ प्रकारौ द्विधा ॥ त्रयः प्रकारास्त्रिधा ॥ चत्वारः प्रकाराश्चतुर्धा ॥ दश प्रकाराः दशधा ॥ क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् ॥

**( द्वित्रिभ्यामेधाधमुञौ वा )** द्वेधा । त्रेधा । द्वैधम् । त्रैधम् ॥

( सुबोधिनी )—द्वित्रिभ्यामेधाधमुञौ वा ॥ आभ्यामेतौ स्तः प्रकारेऽर्थे पक्षे धा ॥ द्वौ प्रकारौ यस्य लोप इतीकारलोपः । द्वेधा । धमुञ् उकार उच्चारणार्थः । द्वैधम् । द्विधा ॥ त्रयः प्रकाराः त्रेधा । त्रैधम् । त्रिधा ॥

**( एकाद्ध्यमुञ्वा )** ऐकध्यम । एकधा ॥

( सुबोधिनी )—एकाद्ध्यमुञ्वा ॥ एकशब्दात् ध्यमुञ् वा स्यात् ॥ उकार उच्चारणार्थः । पक्षे धा ॥ एकः प्रकारः ऐकध्यम् । एकधा ॥

**( एकादाकिनिच्चासहाये )** एकाकी ॥

( सुबोधिनी )—एकादाकिनिच्चासहाये ॥ असहायवाचिन एकशब्दादाकिन् स्यात् ॥ यस्य लोपः इत्यलोपः । एकाकी । कप्रत्ययोऽपि । एककः ॥

**( क्रियाया आवृत्तौ कृत्वसुच् )** पञ्चकृत्वः । सप्तकृत्वः ॥

( सुबोधिनी )—क्रियाया आवृत्तौ कृत्वसुच् ॥ संख्यावाचिशब्दात् क्रियाया आवृत्तावर्थे कृत्वसुच् प्रत्ययः स्यात् ॥ पौनःपुन्येन गणनमावृत्तिः । पञ्चवारान् पञ्चकृत्वः । सप्तवारान् सप्तकृत्वः । क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् । वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात्कालाध्वनोरिति द्वितीया । संख्यायाः किम् । भूरिवारान् भुङ्क्ते । भूरिशब्दस्य लौकिकसंख्यावाचित्वेऽपि नेह ग्रहणम् ॥

**( द्वित्रिचतुर्भ्यः सुच् )** द्विः । त्रिः । चतुः ॥

( सुबोधिनी )—द्वित्रिचतुर्भ्यः सुच् ॥ एभ्यः सुच्प्रत्ययः स्यात् क्रियाया आवृत्तौ गणने ॥ उकार उच्चारणार्थः । कृत्वसुचोऽपवादोऽयम् ॥ द्वौ वारौ द्विः ॥ त्रीन् वारान् त्रिः ॥ चतुरो वारानिति रात्सस्येति स्लोपः । चतुः । क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् ॥ बहोर्वा धासन्नकाले । पक्षे कृत्वसुच् । बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते ॥ आसन्नकाले किम् । बहुकृत्वो मासस्य भुङ्क्ते ॥ दिवसस्येति संबन्धे षष्ठी ॥

**( एकस्य सकृच्च )** एकवारं सकृत् ॥

( सुबोधिनी )—एकस्य सकृच्च ॥ एकशब्दस्य स्थाने सकृदित्यादेशः स्याच्चात्सुच्प्रत्ययः संयोगान्तस्येति सुलोपः।गुरुत्वात्सर्वस्यादेशः । एकवारमितिसकृत्॥

**( बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् )** बहुशः । अल्पशः ॥

( सुबोधिनी )—बह्वल्पार्थात्कारकाच्छस् ॥ बहु चाल्पं च बह्वल्पे बह्वल्पे अर्थौ यस्य तद्बह्वल्पार्थं तस्माद्बह्वल्पार्थात् कारकात् शस् स्यात् ॥ बहुभ्य इति बहुशः । अल्पेभ्य इत्यल्पशः । दानपात्रे चतुर्थी ॥ बह्वल्पार्थात्किम् । गां ददाति ॥ अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च शस् । भूरिशो ददाति । त्रिशः ॥ कारकात्किम् । बहूनां स्वामी । अल्पानां स्वामी ॥

( तत्त्वदी० )—कारकादिति ॥ तेन बहूनां स्वामीत्यत्र न ॥

**( संख्यैकवचनाच्च वीप्सायाम् )** द्वौद्वौ इति द्विशो ददाति । प्रस्थशः । माषशः ॥

( सुबोधिनी )—संख्यापरिमाणाभ्यां वीप्सायाम् ॥ संख्यापरिमाणवाचककारकाभ्यां वीप्सायामर्थे शस् स्यात् ॥ द्वौद्वाविति द्विशः ॥ प्रस्थं प्रस्थमिति प्रस्थशः ॥

---

१ संख्यैकवचनाभ्यामिति पाठान्तरम् ।

माषंमाषमिति माषशः ॥ संख्यापरिमाणाभ्यां किम् । घटंघटं ददाति ॥ वीप्सायां किम् । द्वौ ददाति ॥ कारकात्किम् । द्वयोर्द्वयोः स्वामी ॥

( तत्त्वदी० )–**संख्यैकवचनाभ्यां परिमाणाभ्या**मिति ॥ संख्या च एकवचनं च संख्यैकवचने ताभ्याम् । **प्रस्थश** इति ॥ प्रस्थंप्रस्थमित्यर्थः ॥ एकवचनग्रहणेन वृत्तावेकार्थता-नियता । परिमाणशब्दा एव ग्राह्यास्तेनेह न । **घटंघट**मिति । घटादयो हि जातिशब्दा नैकार्था भव-न्ति । जातियोगस्यैकानेकसाधारणत्वात् ॥ केचित्तु कुण्डशो ददातीति प्रयुञ्जाना जातिशब्देभ्योऽपि म-न्यन्ते । एकैकश इत्यादिप्रयोगास्तु प्रामादिका एव । शसप्रत्ययेनैव वीप्सावगतेः । स्वार्थिकशसा तु न क्षतिः । "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥" इत्यत्र तु सहस्रंसहस्रं ये समवेतास्तेषामपि परिषत्त्वं नेत्यर्थः । इति समवायक्रियां प्रति सहस्रस्य कर्तृत्वं वीप्सास्त्येवेति ॥

**( तयडयटौ संख्याया अवयवे ) द्वाववयवौ यस्य द्वितयम् । त्रितयम् । चतुष्टयम् । चतुष्टयी ॥**

( सुबोधिनी )–**तयडयटौ संख्याया अवयवे ॥** अवयवे वर्तमाना या संख्या तद्वाचिनः प्रथमान्तात् षष्ठ्यर्थे तयडयटौ स्तः ॥ टकारः ङीब्विन इतीवर्थः ॥ द्वितयम् ॥ यस्येतीलोपः ॥ द्वयम् ॥ त्रयोऽवयवा यस्य त्रितयम् । त्रयम् ॥ उभाववयवौ यस्य उभयम् । नित्यमत्रायट् ॥ चत्वारोऽवयवा यस्याः सा रेफस्य विसर्गे सत्वे च ष्टुत्वम् । चतुष्टयी ॥

( तत्त्वदी० )–**तयडयटा**विति ॥ तयट् च अयट् च तयडयटौ ॥ टित्त्वमीबर्थम् ॥ यत्तु प्रा-चा तयायटाविति पठितम् । यच्च तद्व्याख्यातृभिर्वासुदेवादिभिरुक्तम् द्वितयीत्यत्र नदादित्वादीप् । द्वयी-त्यत्र तु टित्त्वादिति तत्रेपो द्विहेतुकत्वेन गौरवादुपेक्षितम् ॥ **चतुष्टय**मिति ॥ चत्वारोऽवयवा अस्ये-ति विग्रहः । रेफस्य विसर्गे तस्य सत्वे षत्वे ष्टुत्वाद्रूपसिद्धिः ॥

**( स्त्रीपुंसाभ्यां नञ्स्नञौ ) स्त्रियां भवः स्त्रैणः । पुंसि भवः पौंस्नः ॥**

( सुबोधिनी )–**स्त्रीपुंसाभ्यां नञ्स्नञौ ॥** आभ्यामेतौ स्तः भवाद्यर्थे॥ संयोगा-न्तस्येति सलोपः । स्त्रैणः । पौंस्नः ॥ अथ विभक्तिनामकप्रत्यया उच्यन्ते । इह वक्ष्यमा-णप्रत्ययानां विभक्तिसंज्ञा बोध्या ॥ इदम इश् विभक्तौ । इदम एतेतौ स्तो रथयोः । इशोऽपवादोऽयम् ॥ एतदोऽयम् । एतदः अश् विभक्तौ । शित्त्वात्सर्वादेशः । एतद एते-तौ स्तो रथयोः । अशोऽपवादोऽयम् ॥ सर्वस्य सो वादे ॥ किमः कुः तहयोः पञ्चम्यर्थे । किंसर्वादिबहुभ्यस्तस् वाऽद्व्यादिभ्यः । अद्व्यादिपर्युदासात् किमः पृथग्ग्रहणम् । तस्मा-दिति तसिः ॥ कुः । कुतः ॥ यस्मादिति तसि त्यदादेरित्यः । यतः ॥ तस्मादिति ततः॥ अस्मादिति तसि इतः ॥ एतस्मादिति तसि अशादेशः । अतः ॥ अमुष्मादिति अदस-स्तसि त्यदाद्यत्वे मत्वे उत्वे च अमुतः ॥ बहोरिति बहुतः ॥ द्व्यादेस्तु द्वाभ्यामित्यादि॥ सर्वोभयार्थाभ्यां पर्यभिभ्यां तस् । परितः । सर्वत इत्यर्थः॥ अभितः । उभयतः इत्यर्थः॥

सप्तम्यर्थे किम् । सर्वादिबहुभ्यस्तो ऽद्व्यादिभ्यः । इदमः सप्तम्यर्थे हः । त्रस्यापवादः । इशादेशः । अस्मिन्निति इह ॥ कस्मिन्निति कुत्र । किमः सप्तम्यर्थे त्रः ॥ किमः क्वश्च । यस्येत्यलोपः । क्व ॥ छन्दसि किमो हः सप्तम्यर्थे । कुह ॥ एतस्मिन्निति एतदोऽश् । अत्र ॥ पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसादयो दृश्यन्ते भवदादियोगे एव । सभवान् । ततोभवान् । तत्रभवान् । तंभवन्तम् । ततोभवन्तम् । तत्रभवन्तम् । इत्यादि ॥ एवं दीर्घायुः । देवानां प्रियः । आयुष्मान् । एतैर्योगेऽपि ॥ सर्वैकान्यकिंयत्तद्भ्यः कालार्थेभ्यः सप्तम्यर्थे दा । सर्वस्मिन् काले इति सादेशो वा । सदा सर्वदा । एकस्मिन्काले इति एकदा । अन्यस्मिन् काले इति अन्यदा । कस्मिन् काले इति । त्यदादेरित्यत्वम् । कदा । यस्मिन् काले इति यदा । तस्मिन् काले इति तदा ॥ कालार्थेभ्य इति किम् । सर्वत्र देशे । अस्मिन् काले इति कालवाचकादिदमः सप्तम्यर्थे र्हिप्रत्ययः । हप्रत्ययस्यापवादोऽयम् । एतादेशः । एतर्हि ॥ कालेति किम् । इह देशे ॥ कालवाचकादिदमः सप्तम्यर्थेऽधुनादानींप्रत्ययौ च । इशादेशः । यस्य लोप इति लोपः । अधुना । इशादेशः । इदानीम् ॥ कालवाचकात्तदा सप्तम्यर्थे दानींप्रत्ययश्च । तस्मिन्काले त्यदादेरित्यत्वम् । तदानीम् ॥ किम्यत्तदेतद्भ्योऽनद्यतनकालवाचकेभ्यः सप्तम्यर्थे र्हिप्रत्ययो वा । कस्मिन् काले इति त्यदादेरित्यत्वम् । कर्हि । पक्षे दा । कदा । यस्मिन् काले यर्हि । यदा । तस्मिन् काल तर्हि । तदा । एतस्मिन्काले एतादेशः । एतर्हि । समानेऽह्नि इति सहादेरित्यनेन समानस्य सः । समानशब्दात् सप्तम्यन्तस्याहन्शब्दस्यार्थे द्यस् निपात्यते । सद्यः ॥ पूर्वस्मिन् वत्सरे इति पूर्वतरे वत्सरे इति च सहादेरित्यनेन पूर्वपूर्वतरयोः पर इत्यादेशो निपात्यते संवत्सरेऽर्थे । पूर्वपूर्वतरशब्दाभ्यां उत्–आरि–प्रत्ययौ । यस्येत्यलोपः । परुत् । परारि ॥ अस्मिन् संवत्सरे इति संवत्सरेऽर्थे इदम्शब्दात् समसण् प्रत्ययः । इशादेशः । आदिवृद्धिः । षत्वम् । ऐषमः ॥ परस्मिन्नहनीति परस्मादहनि इत्यर्थे एद्यवि प्रत्ययो निपातनात् । परेद्यवि ॥ अस्मिन्नहनीति इदम्शब्दाद् द्यप्रत्ययो निपातनादशादेशश्च । अद्य ॥ पूर्वअन्यअन्यतरइतरअपरअधरउभउत्तरइत्यष्टभ्योऽहनीत्यर्थे एद्युस् प्रत्ययो निपातनात् । यस्येत्यलोपः । पूर्वस्मिन्नहनीति पूर्वेद्युः । अन्यस्मिन्नहनीति अन्येद्युः । अन्यतरस्मिन्नहनीति अन्यतरेद्युः । इतरस्मिन्नहनीति इतरेद्युः । अपरस्मिन्नहनीति अपरेद्युः । अधरस्मिन्नहनीति अधरेद्युः । उभयोरह्नोरिति उभयेद्युः । उभयाद्द्युः प्रत्ययः । उभयद्युः ॥ अद्व्यादिभ्यः किम् । सर्वादिबहुभ्यः प्रकारेऽर्थे वर्तमानेभ्यः स्वार्थे थाप्रत्ययः । सामान्यस्य भेदको विशेषः प्रकारः । यथा । किमिदमेतद्भ्यः प्रकारेऽर्थे वर्तमानेभ्यः स्वार्थे थम्प्रत्ययः । थाप्रत्ययस्यापवादोयम् । केन प्रकारेण त्यदादेरित्यः । कथम् । अनेन प्रकारेण एतेन प्रकारेण वा इदमेतदोरित् । इत्थम् । अव्ययत्वाद्विभक्तेर्लुक् सर्वत्र ॥ इति विभक्तिनामकाः प्रत्ययाः ॥ दिग्देशकालवृत्तिभ्यो दिशि रूढेभ्यः शब्देभ्यः सप्तमीपञ्चमी–

प्रथमाविभक्त्यर्थे स्तात्प्रत्ययः । पूर्वाधरावरेभ्योऽस्प्रत्ययोऽपि । पुरअधाऽवादेशाश्च । अस्तादसोः परयोः । पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः । अस्प्रत्ययः । पुरस्तात् । अस्तात्प्रत्ययः । पूर्वशब्दादतस् प्रत्ययः पुरादेशश्च वा । पुरतः 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः ॥ 'पुरतः प्रथमे चाग्रे' इति विश्वश्च ॥ अधरस्याम् अधरस्या अधरा वा अधः । अस् । अधस्तात् । अस्तात्प्रत्ययः ॥ अवरस्याम् अवरस्याः अवरा वा अवः । अस् । अवस्तात् । अस्तात् । अवरस्या स्तात्परेऽव् वा । अवस्तात् । अवरस्तात् ॥ एवं देशे काले च ॥ दिशि रूढेभ्यः किम् । ऐन्द्र्यां वसति ॥ सप्तम्याद्यर्थे किम् । पूर्वं ग्रामं गतः ॥ दिगादिवृत्तिभ्यः किम् । पूर्वस्मिन् गुरौ वसति ॥ दक्षिणोत्तराभ्यामतस् । अस्तात्प्रत्ययस्यापवादः । दक्षिणस्यां दक्षिणस्याः दक्षिणा वा दिक् दक्षिणतः । उत्तरस्याम् उत्तरस्याः उत्तरा वा उत्तरतः । अतस् ॥ पराऽवराभ्यामतस् वा । पक्षेऽस्तात् । परस्यां परस्याः परा वा :परतः । अवरस्याम् अवरस्याः अवरा वा अवरतः । अतस् । पक्षेऽस्तात् ।: परस्तात् । अवरस्तात् ॥ अञ्चत्यन्ताद्दिक्शब्दादस्तात्प्रत्ययस्य लुक् । तद्धितलुकि स्त्रीप्रत्ययस्य लुग् वाच्यः । प्राच्यां प्राच्याः प्राची वा दिक् प्राक् । उदक् ॥ एवं देशे काले च ॥ ऊर्ध्वशब्दाद् रिरिष्टात् प्रत्ययावस्ताद्विषये । ऊर्ध्वस्योपादेशश्च । ऊर्ध्वे ऊर्ध्वात् ऊर्ध्वो वेति उपरि । उपरिष्टाद्वा ॥ अपरशब्दादात्प्रत्ययोऽपरस्य पश्चादेशश्चास्ताद्विषये । अपरास्मिन् अपरस्मात् अपरो वेति । पश्चात् ॥ उत्तराधरदक्षिणादात्प्रत्ययोऽस्ताद्विषये । उत्तरात् । अधरात् । दक्षिणात् । अदूरे वर्तमानेभ्यः उत्तराधरदक्षिणेभ्य एनप्रत्ययो वा सप्तमीप्रथमाविभक्त्यर्थे । उत्तरस्मिन् उत्तरो वेति उत्तरेण । अधरस्मिन् अधरो वेति अधरेण । दक्षिणस्मिन् दक्षिणो वेति दक्षिणेन । पक्षे उत्तरात् । अधरात् । दक्षिणात् । आत् प्रत्ययः ॥ उत्तरतः । अधः :। अधस्तात् :। दक्षिणतः ॥ केचिद्दिक्शब्दमात्रादेनप्रत्ययमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् । दक्षिणाशब्दादाप्रत्ययः सप्तमीप्रथमाविभक्त्यर्थे । दक्षिणस्यां दक्षिणा वेति दक्षिणा । दक्षिणोत्तराभ्यां दूरेऽर्थेआआहिप्रत्ययौ । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि । दक्षिणा । उत्तरस्यां दिशि दूरे इति उत्तराहि । उत्तरा । अव्ययत्वाद्विभक्तेर्लुक् सर्वत्र ॥ इति सुबोधिन्यां तद्धिताः ॥

( तत्त्वदी० )—पौंस्न इति ॥ संयोगान्तस्येति सलोपः ॥

## ( वीप्सायां पदं द्विः ) वृक्षंवृक्षं सिञ्चति । ग्रामोग्रामो रमणीयः॥

( सुबोधिनी )—अथ सर्वं पदं द्विरुच्चारयेदित्यधिकारोऽयम् ॥ वीप्सायां पदं द्विः ॥ व्याप्तमिच्छा वीप्सा व्याप्तिप्रतिपिपादयिषेति यावत् । व्याप्तिः कात्स्न्यं तच्चाधिकारकम् । सर्वे ब्राह्मणा आमंत्रिता इत्यादौ यथा । न हि जगतीतले विद्यमाना ब्राह्मणाः सर्वेऽपि केनचिदामन्त्रयितुं शक्यन्ते इति स्वग्रामस्थस्वजातीयब्राह्मणानां संकोचो यद्यभ्युपेयते तर्ह्यत्रापि सकलवृक्षसेचनसामर्थ्यं कस्यापि मनुष्यस्य नास्तीति

यत्र वाटिकादौ वृक्षसेचनार्थमधिकारस्तद्वाटिकास्थवृक्षाणामेव कात्स्न्र्यम् वृक्षंवृक्षं सिञ्चती-त्यादौ गम्यते इत्यभ्युपेयम्। यत्र तु संकोचे कारणं नास्ति तत्रासंकोच इष्ट एव। यथा जातौजातौ निधनमुपैतीति तस्यां वीप्सायां वाच्यायामेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते इत्यर्थः। वृक्षंवृक्षमित्यत्र प्रत्येकनिष्ठमेकत्वमेव हि प्रतिभासतेऽतो न बहुवचनप्रसंगः॥

( तत्त्वदी० )—वीप्सायामिति॥ व्याप्तुमिच्छा वीप्सा व्याप्तिप्रतिपिपादयिषेति यावत्। व्याप्तिश्च कात्स्न्र्यम्॥ वृक्षंवृक्षं सिञ्चतीति॥ सेकक्रियायाः सकलवृक्षे अन्वयः। बहुवचनप्रसंगस्तु बहूनां भानेऽपि बहुत्वसंख्याया अभानादेव न प्रत्येकनिष्ठमेव हि तत्र भासते॥

**( परेर्वर्जने वा द्वित्वम् )** परिपरि वङ्गेभ्यो वृष्टो देवः। परिवङ्गेभ्यो वृष्टो देवः। वङ्गान्परिहृत्येत्यर्थः॥

( सुबोधिनी )—परेर्वर्जने वा द्वित्वम्॥ वर्जनार्थवाचिनः परेर्वा द्वित्वं स्यात्॥ परिपरिवङ्गेभ्य इत्यत्र परियोगे पञ्चमी। वाग्रहणात्परिहरेः संसार इति॥

( तत्त्वदी० )—परेर्वर्जन इति॥ अत्र वाशब्दस्य व्यवस्थितत्वात्समासे न। तेन परित्रिगर्तं वृष्टो देव इत्यादौ न॥

**( उपर्यध्यधसः सामीप्ये द्विः )** उपर्युपरि ग्रामम्। ग्रामस्योपरिष्टात्समीपदेश इत्यर्थः। अध्यधि सुखम्। सुखस्योपरिष्टात्समीपदेश इत्यर्थः॥

( सुबोधिनी )—उपर्यध्यधसः सामीप्ये द्विः॥ सामीप्यार्थवाचिन एते द्विः स्युः॥ सामीप्यं प्रत्यासत्तिस्तच्च कालकृतं देशकृतं वा। कालकृतस्य सामीप्यस्योदाहरणमध्यधिसुखमिति। अन्यद्वयं देशकृतस्य सामीप्यस्योदाहरणम्॥

( तत्त्वदी० )—उपरीति॥ उपरि शिरसो घटं धारयतीत्यत्र तु औत्तराधर्यमात्रविवक्षणेन सामीप्याभावान्न द्वित्वम्॥

**( वाक्यादेः संबोधनस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु )** असूयायामुदाहरणम्। सुन्दरसुन्दर वृथा ते सौन्दर्यम्॥ संमतौ। देवदेव वन्द्योऽसि॥ कोपे। दुर्विनीतदुर्विनीत इदानीं ज्ञास्यसि॥ कुत्सने। धानुष्कधानुष्क वृथा ते धनुः॥ भर्त्सने। चोरचोर घातयिष्यामि त्वाम्॥

( सुबोधिनी )—वाक्यादेः संबोधनस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु॥ एष्वर्थेषु विद्यमानस्य वाक्यादिस्थितस्य संबोधनस्य द्वित्वं स्यात्॥ ननु कोपासूयाभ्यां पृथक् कुत्सनभर्त्सनग्रहणमपार्थकम्। नाऽसूयां विना कुत्सयते नाप्यकुपितो भर्त्सयति।

इति चेदत्राहुः । गुरवो हि हितैषित्वात्कुपिता अपि भर्त्सनं कुर्वन्ति । विनाप्यसूयया कुत्सां कुर्वन्त्यतो पृथक् तयोर्निर्देशः संमतिः पूजा ॥

( तत्त्वदी० )—वाक्यादेरिति ॥ वाक्यादेः संबोधनस्यासूयाद्यर्थेषु द्विरित्यर्थः । गुणेषु दोषारोपोऽसूया ॥

**( द्विरुक्त एकशब्दो बहुव्रीहिवत् )** तेन विभक्तिलोपपुम्वद्भावौ ॥ एकैकमक्षरम् । एकैकयाहुत्या । इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः । पदविभागोऽवग्रहः । एकैकया इत्यादिविशेषः । एकैकस्मै देहि ॥

( सुबोधिनी )—द्विरुक्त एकशब्दो बहुव्रीहिवत् ॥ बहुव्रीहौ यत्कार्यमुक्तं तद्द्विरुक्ते एकशब्दे भवतीत्यर्थः ॥ बहुव्रीहिसमासवत्त्वात् समासप्रत्यययोरिति विभक्तिलोपः । पुंवद्वेति । पुंवद्भावश्च । एकएकमित्यत्र द्वयोरपि विभक्तेर्लुकि कृते बहुव्रीहिसमासवद्भावादेव कृत्तद्धितसमासाश्चेत्यनेन समुदायात्स्याद्युत्पत्तिः । अन्तरङ्गैकसंख्यावरुद्धो द्विरुक्तार्थः संख्यान्तरे निराकांक्ष एव इत्युक्तत्वादेकवचनमेव । एकैकयेत्यत्र सर्वादेः समासादाविति पूर्वभागे पुंवद्भावः । एकस्मैएकस्मै इत्येकैकस्मै ॥

( तत्त्वदी० )—अवग्रहे इति ॥ वैदिकानां पदपाठे इत्यर्थः ॥

**( पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च )** गतगतः । विरहात्पीड्यमानस्येयमुक्तिः । गतगता ॥

( सुबोधिनी )—पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च ॥ पीडार्थद्योतकं पदं द्विः स्यात् ॥ गतःगत इति बहुव्रीहिवद्भावाद्विभक्तेर्लुग् । गतगतः । गता गतेति पुंवद्वेति पुंवद्भावः गतगता ॥

तत्त्वदी० )—गतगतेति ॥ इह पुंवद्भावः पूर्वपदस्य बहुव्रीहिवद्भावान्नोत्तरपदस्येति भावः ॥

**( सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तो बहुव्रीहिवच्च )** पटुपट्वी । पटुपटुः । पटुसदृशः । ईषत्पटुरिति यावत् ॥ गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह । गृह्यंते शुक्लशुक्लः पटः । शुक्लशुक्लं रूपम् ॥

( सुबोधिनी )—सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तो बहुव्रीहिवच्च ॥ तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम् । पट्वी पट्वीति पुंवद्वेति पुंवद्भावः । पटुःपटुरिति बहुव्रीहिवद्भावाद्विभक्तेर्लुक् । पटुपटुः । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ' इत्युक्तत्वात् यत्र शुक्लादयः शब्दा द्रव्यवाचकास्तत्र गुणा उपसर्जनीभूता एव सन्ति । अतोऽत्र द्रव्यवाचकशुक्लादिपदस्य गुणवाचकशुक्लादिपदस्य च ग्रहणम् । शुक्लः शुक्ल इति बहुव्रीहित्वाद्विभक्तेर्लुक् । शुक्लशुक्लः पटः गुणोपसर्जनद्रव्यवाचिन उदाहरणम् । शुक्लंशुक्लमिति समासवत्त्वाद्विभक्तेर्लुक् । शुक्लशुक्लं रूपम् । केवलगुणवाचिन उदाहरणम् ॥

( तत्त्वदी० )—पटुपट्वी इति ॥ बहुव्रीहिवद्भावात्पूर्वभागे सिलोपपुंवद्भावौ । 'नवंनवं प्रीतिरहो करोति' इत्यत्र वीप्सायां द्वित्वम् । अनेकद्वित्वे सिलुक् स्यात् । कथं 'भीतभीत इव शीतमयूखः' इति भारविः ॥ इवशब्देन सादृश्यस्योक्ततया सादृश्ये द्वित्वायोगात् । सत्यम् । भीतेभ्यो भीत इति व्याख्येयम् । तेनातिभीत इति फलितम् । "खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य" इति मेघदूते एकस्यापि खेदावस्थासु च भेदं प्रकल्प्य वीप्सा बोध्या ॥ 'मन्दं मन्दं नुदति' इत्यत्र तु मन्दं स्वतो मन्दगामिनं मन्दं नुदतीत्यन्वयो बोध्यः ॥

**( अनुक्रमे द्योत्ये द्वे ) मूलेमूले स्थूलो वृक्षः ॥**

( सुबोधिनी )—अनुक्रमे द्योत्ये द्वे ॥ अनुक्रमद्योतकं पदं द्विः स्यात् ॥ वीप्साभावादयमारम्भः । एकस्य वृक्षादेरेकमेव मुख्यं मूलमग्रं च भवति । इतरेषां भागानामापेक्षिकोऽग्रमूलव्यपदेशः स्थौल्यसौक्ष्म्ये अपि नैकरूपे । यथा मूलं स्थूलं यथाऽग्रं सूक्ष्मं तथा नेतरे भागा इति वीप्साया असंभवः । मूलेमूले स्थूलस्तथाऽग्रेऽग्रे सूक्ष्मः ॥

**( संभ्रमेण प्रवृत्तावनेकधा प्रयोगः ) सर्प सर्प सर्प बुध्यस्व बुध्यस्व बुध्यस्व ॥**

( सुबोधिनी )—संभ्रमेण प्रवृत्तावनेकधा प्रयोगः ॥ संबोध्यो हि यावद्भिः शब्दैः प्रयोजनमेति तावन्तः प्रयोगा वाच्या इत्यर्थः ॥

**( क्रियासमभिहारे द्वे ) लुनीहि लुनीहि इत्येवायं लुनाति ॥**

( सुबोधिनी )—क्रियासमभिहारे द्वे ॥ पौनःपुन्यं भृशार्थश्च क्रियासमभिहारस्तत्र पदे द्विः स्यात् ॥ पौनःपुन्ये यथा । आख्यातकृदन्तयोरेव पचतिपचति । भुक्त्वाभुक्त्वा ॥ भृशार्थे यथा । लुनीहिलुनीहीति ॥

( तत्त्वदी० )—क्रियासमभिहारेइति ॥ पौनःपुन्ये भृशार्थे चेत्यर्थः ॥

**( कर्मव्यतिहारे सर्वादेर्द्वित्वं समासवच्च बहुलम् ) बहुलग्रहणादन्यपरयोर्न समासवत् । इतरशब्दस्य नित्यं समासवत् ॥**

( सुबोधिनी )—कर्मव्यतिहारे सर्वादेर्द्वित्वं समासवच्च बहुलम् ॥ क्रियाविनिमयेऽर्थे सर्वादिगणस्य द्वित्वं स्यात् । नित्यमेवेदं द्वित्वम् । बाहुलकं तु समासवद्भावस्यैव । तेनान्यपरशब्दयोः समासवद्भावो न इतरशब्दस्य च नित्यमेव समासवद्भावो भवतीत्यर्थः ॥

( तत्त्वदी० )—कर्मव्यतिहारे इति ॥ क्रियाविनिमये इत्यर्थः ॥

**( असमासवद्भावे पूर्वपदस्थाया विभक्तेः सिरादेशो वाच्यः ) अन्योन्यौ । अन्योन्यान् । अन्योन्येन कृतम् । अन्योन्यस्मै दत्तमित्यादि । 'अन्योन्येषां पुष्करैरामृशन्ते' इति माघः ॥ एवं परस्परम् । वाचस्पत्यादित्वात्सः । इतरेतरम् । इतरेतरेणेत्यादि ॥**

( सुबोधिनी )–असमासवद्भावे पूर्वपदस्थाया विभक्तेः सिरादेशो वाच्यः॥ पूर्वपदस्य प्रथमादिविभक्तीनां स्थाने सिरेव भवत्यसमासवद्भावे ॥ अन्यः अन्य इति अन्योन्यः । अन्यौ अन्याविति अन्योन्यौ । अन्ये अन्ये इति अन्योन्ये । अन्यमन्यमिति अन्योन्यामित्यादिषु सर्वत्र पूर्वपदस्थविभक्तेः सिकृते ततो विसर्गः अतोऽत्युरित्युत्वे 'उओ' इत्योत्वे एदोतोऽत इत्यलोपे च रूपसिद्धिः । एवं परः पर इति परस्परम् । परौ पराविति परस्परौ । परे परे इति परस्परे । परं परमिति परस्परमित्यादि । इतरशब्दस्य तु समासवद्भावात् समासप्रत्यययोरिति विभक्तेर्लुक् । इतर इतर इति इतरेतरः । इतरौ इतराविति इतरेतरौ । इतरे इतरे इति इतरेतरे । इतरमितरमिति इतरेतरमित्यादि ॥

**( स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा ) अन्योऽन्याम् अन्योऽन्यम् परस्पराम परस्परम् इतरेतरामितरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः । "दलद्वयेऽप्याबभावः क्लीबे तु विरहः स्यमोः । समासे सेरलुक् चेति सिद्धं बाहुलकात्रयम् ॥" समासे सेरलुक् चेत्यस्योदाहरणं तु अन्योऽन्याश्रयः । परस्पराक्षिसादृश्यमित्यादिकं बोध्यम् ॥**

( सुबोधिनी )–स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा ॥ स्त्रियां क्लीबे चोत्तरपदस्थविभक्तीनामामादेशो वा भवति ॥ स्त्रियां यथा । अन्या अन्येति पूर्वपदस्थविभक्तेः सिः परपदस्थविभक्तेश्चाम् । अन्योन्याम् । आमभावपक्षे अन्योन्यः । बहुलग्रहणात् स्त्रियामित्याप्प्रत्ययाभावो दलद्वये । अन्ये अन्ये इति अन्योन्यम् अन्योन्यौ । अन्या अन्या इति अन्योन्या अन्योन्ये । अन्यामन्यामिति अन्योन्याम् अन्योन्यमित्यादि ॥ एवं परस्परां परस्परः । परस्परां परस्परौ । परस्परां परस्परे । परस्परां परस्परमित्यादि ॥ एवमितरेतराम् इतरेतरः । इतरेतराम् इतरेतरौ । इतरेतराम् इतरेतरे । इतरेतराम् इतरेतरमित्यादि । क्लीबे तु अन्यत् अन्यदिति अन्योन्याम् । अन्योन्यम् । स्यमोः प्रत्यययोः स्थाने इत्वन्यादेरिति इत्वादेशाभावो बाहुलकादेव । इमे कर्त्र्यौ इमे कर्तृणी वा अन्यामन्यामन्यदन्यद्वा भोजनं कारयतः ॥ ननु अन्योन्यं परस्परमित्यादौ केवलपूर्वपदविभक्तीनां स्यादेशविधानस्य चरितार्थत्वमस्ति । 'अन्योऽन्यसंसक्तमहस्त्रियामम्' इति ॥ अन्योन्याश्रय इति । परस्पराक्षिसादृश्यमिति । अदृष्टपरस्परैरित्यादौ समासप्रत्यययोरित्यनेन पूर्वपदविभक्तीनां स्यादेशस्य कथं लुग् न स्यादिति चेदत्राहुः । बाहुलकात्समासविषये पूर्वपदविभक्तीनां स्यादेशस्य लुग् न भवतीत्यर्थः ॥

( तत्त्वदी० )–दलद्वये इत्यादि ॥ दलद्वये आबभावः आपः अभावः अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि आप् प्राप्तः स नेत्यर्थः । अन्योन्यमित्यत्र इत्वन्यादेस्तु प्राप्तः स नेत्यर्थः । अन्योन्याश्रय इत्यत्र समासे सेर्लुक् नेत्यर्थः ॥

( अकृच्छ्रे प्रियसुखयोर्वा द्वित्वम् ) प्रियप्रियेण ददाति प्रियेण वा । सुखसुखेन ददाति सुखेन वा । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः ॥

( सुबोधिनी )–अकृच्छ्रे प्रियसुखयोर्वा द्वित्वम् ॥ अनयोर्द्वित्वं समासवच्च वा स्यात् ॥ द्विवचने समासवद्भावात् स्यादिलुकि कृते पुनः कृत्तद्धितसमासाश्चेत्यनेन स्यादिः ॥

( यथास्वे यथायथम् ) यथाशब्दस्य द्वित्वं क्लीबत्वं च भवति ॥ यथास्वमिति वीप्सायामव्ययीभावः । योय आत्मा यद्यच्चात्मीयं तद्यथास्वम् । यथायथं ज्ञाता । यथास्वभावमित्यर्थः । यथात्मीयमिति वा ॥

( सुबोधिनी )–यथास्वे यथायथम् ॥ यथास्वे इति स्वंस्वमिति यथास्वम् । वीप्सार्थेऽव्ययीभावः । योय आत्मेत्यादि । "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्युक्तत्वादात्मात्मीययोरपि स्वशब्दवाच्यत्वमस्ति । आत्मात्मीययोरर्थे विद्यमानस्य यथाशब्दस्य द्वित्वं नपुंसकत्वं च भवति । नपुंसकत्वान्नपुंसकस्येति ह्रस्वः । यथायथं ज्ञातेत्यत्र कर्तृकार्ययोरक्तादावित्यनेन कर्मणि षष्ठी न । तृन्प्रत्ययस्य क्तादिषु गणनात् "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरोक्तत्वात् ॥ यथायथम् यथास्वभावमर्थः ॥

( द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ) एष्वर्थेषु द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते ॥ तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् । इतरे तु विषयभूताः ॥ द्वन्द्वं मन्त्रयते रहस्यमित्यर्थः ॥ मर्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेणापीति मर्यादार्थः ॥ व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्तः । द्विवर्गसंबन्धेन पृथगवस्थितः ॥ द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ॥ द्वन्द्वं संकर्षणवासुदेवौ ॥ अभिव्यक्तौ साहचर्येणेत्यर्थः ॥ चार्थे द्वन्द्व इति निपातनात्पुंस्त्वमपि ॥

( सुबोधिनी )–द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ एष्वर्थेषु द्विशब्दस्य द्वित्वं समासत्वमेकवद्भावश्च भवति ॥ तथाहि । द्वि औ

द्वि औ इति स्थिते समासवद्भावात् विभक्तिलुकि कृते पूर्वपदावयवेकारस्याम्भावः उत्तरपदावयवेकारस्यात्वं क्लीबत्वैकवद्भावौ च निपातनात् । एकवद्भावादतोऽमित्यमादेशे द्वन्द्वमिति ॥ रहसि निर्वृत्तमिति रहस्यम् । द्वन्द्वं मन्त्रयते । द्वौद्वौ भूत्वा मन्त्रयते इत्यर्थः ॥ एतदेवं द्विरहस्यम् ॥ मर्यादायां यथा । चतुरो मर्यादीकृत्येति आचतुरम् । अव्ययीभावे टप्रत्ययः । चतुरशब्दोऽत्र चतुर्णां पूरणेऽस्ति । आचतुर्थादित्यर्थः । 'स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम्' इत्यमरः ॥ मिथुनमिवाचरन्तीति मिथुनायन्ते ॥ यज्ञपात्रे प्रयोगे यथा । पात्राणि द्वन्द्वं प्रयुनक्ति । आसादयतीत्यर्थः ॥ 'संकर्षणः सीरपाणिः' इत्यमरः ॥ 'वासुदेवस्त्रिविक्रमः' इत्यमरश्च ॥ अभिव्यक्तौ तु द्विशब्दस्य स्वार्थे द्वित्वमेकवद्भावादिकं तु पूर्ववदेव ॥

(शेषा निपात्याः कत्यादयः) का संख्या येषां ते कति । दाविकः । शांशपः । दात्यौहः । दार्घसत्रः । श्रायसः ॥ इति द्विरुक्तप्रक्रिया ॥

इति श्रीरामाश्रमाचार्यविरचितायां सिद्धान्तचन्द्रिकायां पूर्वार्द्धं संपूर्णम् ॥

( सुबोधिनी )–शेषा निपात्याः कत्यादयः ॥ कत्यादयः शब्दा निपात्यन्ते संख्यापरिमाणे कर्तव्ये ॥ यः प्रश्नस्तत्र वर्तमानात् किमूशब्दाद्वा डतिप्रत्ययः । पक्षे वतुः । का संख्या येषां ते डतेरिति जसो लुक् । कति । कियन्तः ॥ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसां पञ्चानां वृद्धौ प्राप्तायामादेः स्वरस्यात्वं निपात्यते ञिति णिति च ॥ देविकायां भवो दाविकः । 'देविकायां सरय्वां च भवेद् दाविकसारवौ' इत्यमरः ॥ अण् ॥ शिंशपाया विकारः शांशपश्चमसः । अण् ॥ दित्यौहोऽयं दात्यौहः वाहो वौ इत्यौत्वम् । आत्वं निपातनात् । अण् ॥ दीर्घसत्रे भवः दार्घसत्रः । अण् ॥ श्रेयसि भवः श्रायसः अण् ॥ इति द्विरुक्तप्रक्रिया ॥

श्रीमत्पावकवर्यभक्तिविनया विख्यातकीर्तिप्रभा
राजेन्द्रैः परिपूजिताः सुकृतिनः पुंभाववाग्देवताः ।
मन्तारो जगतां पतिं गुणगणैर्विभ्राजमानाः सनत्
संवेगादियुजो जयन्तु संततं षट्शास्त्रविद्याविदः ॥ १ ॥
तेषां शिष्यः सदानन्दस्तदनुग्रहभूषितः ।
सिद्धान्तचन्द्रिकावृत्तिं पूर्वार्द्धेऽचकरीदिमाम् ॥ २ ॥

इति श्रीसिद्धान्तचन्द्रिकाव्याख्यायां सदानन्दकृतौ पूर्वार्द्धसमाप्तिमगात् ॥

( तत्त्वदी० )—तद्धितप्रत्ययानामनन्तत्वात्कार्त्स्न्येनाभिधातुमशक्यत्वादनुक्तसिद्ध्यर्थमाह-**शेषा** इति ॥ उक्तेभ्योऽन्ये शेषाः । निपातनात्साधवो निपात्याः॥ किमः संख्यापरिप्रश्ने डतिः ॥ **दाविक** इति ॥ देविकायां भव इति विग्रहः । कारकादित्यण् । एकारस्यात्वं निपात्यते ॥ **शांशप** इति ॥ शिंशिपाया विकारः । अत्राप्यादेः स्वरस्यात्वं निपात्यते ॥ **दात्यौह** इति ॥ दित्यौहोऽयमिति विग्रहः । इदमर्थेऽण् । अत्राप्यादेरात्वं निपात्यते । प्रकृतिस्तु द्वित्यवाह् इति । तत्र वाहो वौ इति वा इत्यस्यौत्वम्॥ दीर्घसत्रे भवः दार्घसत्रः । अत्रापि कारकादित्यण् । आदिस्वरस्यात्वं निपात्यते ॥ **श्रायस** इति ॥ श्रेयसि भव इति विग्रहः । अत्राप्यादिस्वरस्यात्वं निपात्यते ॥

श्रीनाथकरपौत्रेण लोकेशकरशर्मणा । कृतायामिह टीकायां तद्धितव्याकृतिर्गता ॥ १ ॥

सिद्धान्तचन्द्रिकाव्याख्या या त्वियंतत्त्वदीपिका । तत्पूर्वार्धमभूत्पूर्णं तेन तुष्यतु पार्वती ॥ २ ॥

इति श्रीलोकेशकरविरचितायां तत्त्वदीपिकायां सिद्धान्तचन्द्रिकाव्याख्यायां पूर्वार्धं समाप्तम् ॥

## इति सिद्धान्तचन्द्रिकायाः पूर्वार्धं समाप्तम् ॥



# विक्रय्यपुस्तकोंकी संक्षिप्त-सूची ।

## व्याकरणग्रंथाः ।

| नाम. | की. रु. आ. |
|---|---|
| सिद्धान्तकौमुदी–महामहोपाध्याय भट्टोजिदीक्षित विरचिता पाणिनीयशिक्षा परिभाषा अष्टाध्यायी गणपाठ धातुपाठ लिंगानुशासन सूत्रपाठ अकाराद्यनुक्रमणिका धातुसूची समेता ... ... ... ... ... | २) |
| सिद्धान्तकौमुदी–तत्त्वबोधिनीटीकासमेत संपूर्ण और वैदिकादिप्रक्रिया सुबोधिनी टीका समेत, लिंगानुशासन गणपाठ धातुपाठ सहित ... ... ... | ४) |
| सिद्धान्तकौमुदी–तत्त्वबोधिनी टीका सहित पूर्वार्द्ध ... ... ... | २।) |
| सिद्धान्तकौमुदी–तत्त्वबोधिनी टीकासहित उत्तरार्द्ध ... ... ... | २।) |
| सिद्धान्तकौमुदी–केवल तत्त्वबोधिनी टीका पूर्वार्द्ध ... ... ... | २) |
| अष्टाध्यायी–गणपाठ धातुपाठ, लिंगानुशासनं च ... ... ... | ।।।) |
| अष्टाध्यायी सूत्रपाठ–यह सूत्रपाठ पढनेसे कौमुदीका जल्दी पठन होताहै ... | ≡) |
| लघुत्रिमुनिकल्पतरु–पाणिनीय आदिका वृत्तांत ... ... ... | ।) |
| मध्यसिद्धान्तकौमुदी–टिप्पणी सहित काशीपञ्जाबादिदेशमें प्रथमश्रेणीमें पढायी जातीहै | ।।।) |
| लघुसिद्धान्तकौमुदी–टिप्पणी सहित जिल्द बडा अक्षर ... ... ... | ।।।) |
| ,, तथा छोटाअक्षर.... .... ... ... ... | ।) |
| लघुसिद्धान्तकौमुदी–पंडित ज्वालाप्रसाद मिश्र कृत उदाहरण, स्पष्टीकरण नियमाङ्क योजना भाषाटीका समेत ... .... .... .... .... | २) |
| रूपमाला–सन्धिभाग अव्ययार्थभाग प्रयोगविधिसंग्रह (कारकसमास तद्धितादिक) क्रियाकलाप आख्यातचंद्रिका धातुरूपभेद श्लोकयोजनिकोपाय विद्यार्थियोंको अतीव उययोगी है ... ... ... ... ... ... | १।) |
| रूपमाला–व्याकरण षड्लिंगविभाग–अच्छीरीतिसे लिंगबोध होता है... ... | ।=) |
| ,, संधिविभाग–शब्दोंकी पंचसंधि समझनेका सुलभ उपाय ... ... | ।-) |
| ,, अन्वयविभाग–श्लोकादिके पदोंका अन्वय जानलेते हैं .... ... | ≡) |
| ,, प्रयोगविधि ... .... ... ... ... | =) |
| ,, कारकसमास तद्धितादिक क्रियाकलाप आख्यातचन्द्रिका धातुरूपभेद श्लोकयोजनिकोपाय नामहीसे समझ लेंगे ... ... ... | ।=) |
| समासकुवलयाकर–नियमोंके साथ उदाहरण, त्वरासे पदोंका समास करसक्ते हैं .... | ।) |
| कारकस्वरूप–भाषाटीकासहित कालद्रव्यादिकका बोध होताहै ... ... | ।=) |
| कारकवादार्थ–( जयरामपंडित प्रणीत ) शब्दबोध, व्याकरण न्यायका शब्दज्ञान होता है ... .... .... .... .... ... | =) |

| नाम. | की. रु. आ. |
|---|---|
| लिंगबोधव्याकरण—भाषाटीकासमेत इसके अभ्याससे पुंलिंग स्त्रीलिंग नपुंसक आदिका ज्ञान जल्दी होता है ... ... ... ... ... | =) |
| सिद्धान्तचंद्रिका—मूल इसीका प्रचार सर्वत्र है ... ... ... | ॥=) |
| " तथा सटीक सुबोधिनी और तत्त्वदीपिका समेत संपूर्ण सुन्दर जिल्द ... | ३॥) |
| " तथा पूर्वार्द्ध ... ... ... ... ... | १।॥) |
| " तथा उत्तरार्द्ध ... ... ... ... ... | १।॥) |
| सारस्वत तीनोंवृत्ति मूल ... ... ... ... ... | ॥=) |
| सारस्वत मूल पूर्वार्द्ध—ग्लेज ... ... ... ... ... | ॥) |
| " तथा रफ ... ... ... ... ... | ।=) |
| सारस्वत प्रसादटीका ... ... ... ... ... | ।॥) |
| सारस्वत संपूर्ण—चन्द्रकीर्त्ति टीकासह ग्लेज ... ... ... ... | ३) |
| " तथा रफ ... ... ... ... ... | २॥) |
| " पूर्वार्द्ध " ग्लेज १) रफ ... ... ... ... | ।॥=) |
| " उत्तरार्द्ध " १।॥=) रफ ... ... ... ... | १।॥) |
| सारस्वत माधवीटीका— ... ... ... ... ... | २) |
| सारस्वत सुबोधिनी—भाषाटीकासमेत, विद्यार्थी सुगमरीतिसे समझ सक्ते हैं (पूर्वार्द्धमात्र) | १।॥) |
| लघुभाष्य—संपूर्ण श्रीसरस्वती कृत व्याकरण सूत्रव्याख्यान—सारस्वतके सूत्रोंपर महाभाष्यके अनुसार व्याख्या है सारस्वतचंद्रिका पढनेवालोंको बडा उपयोगी है... | २॥) |
| धातुरूपावली—लघुपाठसहित शीघ्र धातुओंका बोध होता है ... ... | ≡) |
| शब्दरूपावली—एकाक्षरीकोषसहित—शब्दज्ञान और विभक्तिकी प्रथम श्रेणीकी ... | —)॥ |
| समासचक्र—नामहीसे ज्ञात होताहै ... ... ... ... | )॥ |
| शब्ददीपिका—शब्द ज्ञानमें उत्तमहै ... ... ... ... | ।) |
| अर्थप्रकाशिका—व्याकरण पढनेवालोंको अतीव उपयोगी है भाषा भाष्यभी है ... | ॥) |
| बालसंस्कृतबोधिनी—भाषाटीकासमेत नवीन संस्कृत पढनेवालोंको बहुतही उपयोगीहै | ।—) |
| बालसंस्कृतप्रभाकर—भाषाटीका सहित ... ... ... ... | ।≡) |
| संस्कृतारोहण—पं० ज्वालाप्रसादकृत भा० टी० वाक्यरचनामें उत्तमहै ... ... | ।=) |
| संस्कृतप्रवेशिका—भाषाटीका सहित ... ... ... ... | —)॥ |
| संस्कृतशिक्षामंजरी ... ... ... ... ... | —)॥ |
| बालकोपदेशिका ... ... ... ... ... ... | ≡) |
| संस्कृतशीघ्रबोधिनी—इस ग्रंथसे संस्कृतका बोध जल्दी होताहै ... ... | ।॥) |
| सुगम कौमुदी—(प्रथम द्वितीयात्मक खंड प्रथमभाग ) ... ... ... | २) |

| नाम, | | | | | की. रु. आ |
|---|---|---|---|---|---|
| सिद्धान्तचन्द्रिका–उत्तरार्ध भाषाटीकासमेत रफ ३) तथा ग्लेज़ | | | ... | ... | ३॥ |
| मार्गोपदेशिका–सं० हिन्दी अंग्रेजी | ... | ... | ... | ... | ॥) |
| वालसंजीवनी–अतिसुगम ... | ... | ... | ... | ... | ॥) |
| संस्कृतनामावली–भा० टी० ... | ... | ... | ... | ... | =) |

## न्याय–ग्रंथाः।

| | | | | | |
|---|---|---|---|---|---|
| तर्कसंग्रह–मूलमात्र अन्नंभट्टकृत न्यायसीखनेमें प्रथम पुस्तक है | | | ... | ... | –) |
| तर्कसंग्रह–न्यायबोधिनी, पदकृत्यटीकासमेत सरल सुबोधटीका है | | | ... | ... | ।-) |
| तर्कसंग्रह–दीपिका नीलकंठीटीका समेत | .... | .... | ... | ... | ॥।) |
| तर्कसंग्रह–व्याख्यालघुबोधिनी समेत | ... | ... | .... | ... | ।=) |
| तर्कसंग्रह–भाषाटीकासमेत शीघ्रही न्यायमें प्रवेश होताहै ... | | | ... | ... | ।=) |
| भाषापरिच्छेद–कारिकावली–सिद्धान्तमुक्तावलीसमेत विश्वनाथ पंचाननकृत | | | | ... | ॥) |
| न्यायसिद्धान्त मुक्तावली–भाषाटीकासमेत साधुगोविंददास उदासकृत भलीप्रकारसे उदाहरणादि दिखलाया गया है | ... | ... | ... | ... | २) |
| कारिकावली–मुक्तावली दिनकरी रामरुद्री ... | | ... | ... | ... | ३॥ |
| सामान्यनिरुक्ति–गदाधरभट्टाचार्यकृत सबप्रकारके न्यायशास्त्रमें सुगम रीतिसे प्रवेश करसक्तेहैं ... | ... | ... | ... | ... | ३) |
| न्यायप्रदीप–पं० गंगासहायजीकृत न्यायशास्त्रके नूतनविद्यार्थियोंको स्वल्पपरिशीलनपरिश्रमसे अगाध न्यायशास्त्र सागरमें स्वच्छन्दविहारकरनेकेलिये न्यायशास्त्रके प्रेमियोंका ज्ञान निःसंदेह इस एकही ग्रंथके संग्रहसे सुलभ होजायगा. | | | .... | ... | १, |
| शतकोटि– ... | ... काश्री ... | ... | ... | ... | ।–) |
| कार्याधिकरणवाद– | ... ” ... | ... | ... | ... | ॥=) |
| प्रामाण्यवादः– ... | ... ” ... | ... | ... | ... | २॥) |
| अवच्छेदकत्वनिरुक्ति– | ... ” .... | ... | ... | ... | ॥।) |
| सिद्धान्तचिन्तामणि– | ... ” .... | ... | ... | ... | ॥।) |
| सत्प्रतिपक्ष– .... | ... ” ... | ... | ... | ... | ॥।) |
| पदवाक्यरत्नाकर– | ... ” ... | ... | ... | .... | २) |
| बोधग्रंथ– ... | ... ” ... | ... | .... | ... | ॥।) |
| भाट्टरहस्यम्– ... | ... ” ... | ... | ... | .... | १=) |
| सेश्वर मीमांसा– .... | .... ” ... | ... | .... | ... | १॥।=) |
| मीमांसाकौस्तुभ–प्रथमाध्याय द्वितीय पाद ” | | ... | ... | ... | १) |
| ” ” द्वितीयाध्याय प्रथमपाद” | | .... | ... | ... | १॥।) |

नाम. की, रु, आ.

सिद्धान्तचंद्रोदय—तर्कसंग्रहस्य टीका ... ... ... ... |||)
तर्कभाषा—केशवमिश्र ... ... ... ... ... |)
षट् दर्शन—( पातंजल योग सांख्य वैशेषिक न्याय मीमांसा वेदान्त मूल मात्र १||)

## भाषान्याय।

न्यायप्रकाश—चिद्घनानन्दस्वामीकृत भाषान्याय वेदान्तादिका अपूर्व बोध सहजसे होताहै ९)

## छन्दो-ग्रन्थाः।

श्रुतबोध—वृत्तरत्नाकर श्रीकालिदास और श्रीभट्टकेदार विरचित मूलसंस्कृत इन दोनों ग्रंथोंके अभ्याससे अनेकप्रकारके छंद और वृत्तादि काव्य सरल रीतिसे बनासक्ते हैं |=)
श्रुतबोधसान्वय भाषाटीका—उपरोक्त रीतिसे छंदज्ञान ... ... ... ≡)
छन्दश्चिह्न—अर्थात् काव्यमें किसरीतिसे छन्द पृथक् मात्रामेलसे रचनाकरना ... -)
प्रस्तारादिरत्नाकर—भाषाटीका अर्थात् श्लोक, छंद, वृत्त आदिके प्रस्तारका वर्णन... =)
छन्दरत्नमाला—पिंगल भाषा, काव्य बनानेमें अत्यंत उपयोगी है ... ... =)

## भाषा छन्दोग्रन्थाः।

छन्दपयोनिधि ... ... ... ... ... ... |||)
छन्दार्णवपिंगल—(भिखारीदासकृत ) भाषा काव्य रचना करनेमें उपयोगीहै ... ||ı)

## काव्यग्रन्थाः।

शिशुपालवध—( माघकाव्य ) मल्लिनाथकृतटीकासहित इसमें नारदजीको भगवद्दर्शन शिशुपालवधार्थ उद्धव बलराम श्रीकृष्णको निमंत्रण द्वारका समुद्र वर्णन रैवतपर्वतवर्णनादि २० सर्गमें अपूर्व काव्यहै विद्यार्थी लोग अवश्य पढके प्रसंगोपात्त उदाहरण देसकते हैं ... ... ... ... ... ... २||)
" " तथा पूर्वार्द्ध ९ सर्गमें ... ... ... ... १|)
रघुवंश महाकाव्य कालिदासकृत—मल्लिनाथकृत संजीवनी टीका और टिप्पणी समेत इसमें राजादिलीपसे लेकर लवकुशके चरित्र तक १९ सर्ग हैं विद्यार्थियोंको परम उपयोगी है इसकी महिमा कौन नहीं जानता पक्की जिल्द ... ... ... १||)
" " तथा सादीजिल्द ... ... ... १|)
रघुवंशमहाकाव्य—सटीक तथा रामकृष्णाख्य विलोमकाव्य—सटीक ये दोनोंका एक गुटका है बारिक अक्षर ... ... ... ... ... ||=)
रघुवंशमहाकाव्य—पं० ज्वालप्रसाद मिश्रकृत सान्वय भाषाटीका पदयोजना तात्पर्यार्थ और सरलार्थसहित ग्लेज ... ... ... ... ... ३||)
" " तथा उपरोक्त अलंकार सहित २५. गज ... ... ३)
कुमारसंभव—कालिदासकृत और मल्लिनाथकृत संजीवनीटीकासमेत जिसमें पार्वतीजीकी उत्पत्ति ब्रह्माजीका तारकासुरसे क्लेशित देवोंको शिक्षा मदनदहन रतिविलाप

नाम, की. रु. आ.

पार्वतीके तपका उदय पार्वतीका शिवजीसे विवाह करनेके निमित्त हिमवानके पास सप्तऋषियोंको भेजकर विवाहका निश्चय और शिवपार्वतीजीका विवाह विधिपूर्वक वर्णन है १।)

भामिनीविलास–महावीरप्रसाद द्विवेदीकृत भाषाटीका सहित इसमें प्रस्ताविकविलास शृंगारविलास करुणाविलास शान्तविलासादि विषय हैं ... ... १)

" तथा मूल मात्र ... ... ... ... .... ।)

भर्तृहरिशतक–नीति, शृंगार, वैराग्य भाषाटीका समेत इसके अनन्तर नीतिशतकमें निंदाप्रसं० विद्वत्प्रशंसा मानशौर्य प्र०दुर्जननिन्दा सुजन प्रशंसा धैर्य प्रशंसा दैव प्रशंसा कर्म प्रशंसा और शृंगारशतकमें षट्‌ऋतुवर्णन दुर्विरक्तवर्णन स्त्रीणां परित्याग प्र० यौवन प्र० कामिनीग्रहण सुविरक्त और वैराग्यशतकमें तृष्णाधिकार मदनविडंवन विषयोंका रूपतिरस्कार दुर्जन पुरुषोंको निन्दाहास्यका वर्णन भोगपद्धतिः काम निर्वेदताका स्वरूप इत्यादि वर्णन हैं देखने ही योग्य है .... .... १)

गीतगोविंद–राधाविनोदसहित भाषाटीका जयदेव गोस्वामिकृत इसमें अति ललित संस्कृतमें रागमय राधाकृष्णका प्रेममय भक्तिकी गानेकी चीजें विद्यमान हैं ... १)

" तथा मूल ... ... ... ... ... =)

नलोदय काव्य–सटीक महाराजा नल और दमयंतीका चरित्र वर्णन ... ... ॥।)

ललितरामचरित्र–काव्य सटीक ... .... .... .... .... १)

ऋतुसंहार काव्य–कालिदासकृत और चौर कविकृत चौरपञ्चाशिका काव्य इसमें षट्‌ऋतु वर्णनादि राजकुमार बाबू देवनन्दनसिंहकृत भाषाटीका छन्दोबद्ध है ... ।≡)

विद्वन्मोदतरंगिणीकाव्य–चिरञ्जीव भट्टाचार्यरचित गद्यपद्य विभूषित ( विद्वानोंको अति उपयोगी ) सर्व शास्त्र और सर्व संप्रदायोंका सिद्धान्त दिखाया है ... ।)

मेघदूतकाव्य–कालिदासकृत सान्वय मल्लिनाथी टीका और भाषाटीका समेत इसमें मेघका वर्णन है ... .... ... ... ... ॥)

शृंगारादि नवरस निरूपण–भाषाटीका सहित शृंगारका अतीव चमत्कारी वर्णन इसमें शृंगार वीर करुणा अद्भुत हास्य भयानक बीभत्स रौद्रका सूक्ष्मसे वर्णन और शान्त रस विस्तारमें वर्णन है .... .... .... .... ।)

रंभाशुकसंवाद–संस्कृत मूल व प्रत्येक श्लोकका कवित्तमें टीका व भाषाटीका सहित अति मनोरंजक काव्य है .... .... .... ... .... =)

पद्यावली–अनेक महानुभावोंके संगृहीत श्लोक ... .... .... ॥)

पुस्तक मिलनेका ठिकाना.

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" स्टीम् प्रेस–बंबई.

॥ श्रीः ॥

# सिद्धान्तचन्द्रिका-(उत्तरार्धम्)

( वाणीप्रणीतव्याकरणसूत्रवृत्तिः )

पण्डितरामाश्रमप्रणीता ।

श्रीमत्पण्डितसदानन्दकृतया सुबोधिन्या.

श्रीक्षेमकरसूनुपण्डितलोकेशकरकृतया तत्त्वदी-
पिकाख्यया व्याख्यया च समेता ।

माजराग्रामनिवासि पं० नन्दलालशास्त्रिणा संशोधिता ।

सेयं

क्षेमराजश्री[illegible]णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये

मुद्रयित्वा प्रकाशिता ।

संवत १९६५, शके १८३०.

सर्कारीनियमानुसार पुनर्मुद्रणादिसर्वाधिकार "श्रीवेङ्कटेश्वर" यन्त्रालया-
धीशने स्वाधीन रक्खाहै.

# विज्ञापना.



ज्ञात एवायमर्थः सर्वैरपि गीर्वाणवाणीविलासरसिकैः—यदिदं व्याकरणशास्त्रं वेदाङ्गेषु मुखवन्मुख्यम्. । तच्च शास्त्रं सूत्रात्मकम् । "ऐन्द्रं चान्द्रं काशकृत्स्नं जैनेन्द्रं शाकटायनम् । सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥" इति श्लोकाद्युक्तरीत्या तत्कर्तारश्च बहवः । तेषु कस्येदानीं मुख्यत्वमिति किमर्थमेतावन्ति भिन्नभिन्नपथेन प्रवृत्तानीति तेषु परस्परं बहुधा क्वचित्क्वचिद्विरोध इति चेत्यादिशङ्कास्त्वप्रकृता इतीदानीमुदास्यन्ते । तदन्तःपाति यत्सारस्वताख्यं व्याकरणशास्त्रं तच्च श्रीमतानुभूतिस्वरूपाचार्येण वाग्देवतानुग्रहभाजनेन केनापि कारणेन दिनेनैकेन सप्तशतीसूत्रात्मकं पाणिन्यादिव्याकरणाध्ययनक्लेशासहिष्णूनां सौलभ्याधायि व्यरचीति ।

तच्चेदं प्रायः भारतखण्डे नर्मदोत्तरोत्तरभागेऽध्ययनाध्यापनप्रचारपथपथिकमेव स्पष्टं दरीदृश्यते.

तस्यास्य वृत्तयो व्याख्याश्च बह्व्यो बहुभिर्विरचिताः सिद्धान्तचन्द्रिकाद्याः सुबोधिनीतत्त्वदीपिकाचन्द्रकीर्तिप्रभृतयः विद्वज्जनपठनपाठनपथसञ्चारिष्णूनां महोपकारिण्यः ॥ ताश्चासकृन्मुद्रिता अप्यशुद्धप्रायत्वाद्विद्वज्जनानां तत्पुस्तकेषु जिहासामसहिष्णुना मया मन्मुद्रालयाश्रितविद्वज्जनद्वारा संशोध्य प्रकृते उत्तरार्द्धमात्रस्य विद्वज्जनहृदयङ्गमश्रीसदानन्दपण्डितकृतसुबोधिन्याख्यव्याख्या विद्वद्वरश्रीक्षेमकरसूनुलोकेशकरशर्मकृततत्त्वदीपिकाख्यव्याख्या चेत्येवं व्याख्याद्वयोपेता सिद्धान्तचन्द्रिका विदुषां विद्यार्थिनां च तत्क्लेशनिराकरणद्वारा सन्तुष्टचित्तानामाशीरेषिषिषुणा संमुद्रापिता सती विद्योतते ।

पूर्वमस्य एकयाऽपि सुबोधिन्या साकमङ्कितस्य सिद्धान्तचंद्रिकोत्तरार्द्धस्य यन्मूल्यं तदेव मूल्यं टीकाद्वयोपेतस्य सुपुष्टस्वच्छपत्रेष्वङ्कितस्याऽप्यस्येदानीं गृह्यते । किञ्चात्र अज्ञानभ्रान्त्यादिवशाद्यदशुद्धं जातं तत्सरलहृदयैर्विद्वद्भिः परिशोधनीयमित्यलं पल्लवितेनेत्यशेषमिति मङ्गलम् ।

विद्वज्जनकृपाऽभिलाषी—

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालय—मुंबई.

# सिद्धान्तचन्द्रिकोत्तरार्द्धस्थमुख्यमुख्यविषयविभागः ।

॥ श्रीः ॥

# सिद्धान्तचन्द्रिकाउत्तरार्द्धस्थ–सूत्रादीनामकारादिवर्णक्रमः ।

इति सिद्धान्तचन्द्रिकोत्तरार्द्धस्थसूत्रादीनामकारादिवर्णक्रमः ॥



# सिद्धान्तचन्द्रिका ।

## सुबोधिनी-तत्त्वदीपिका-टीकाद्वयोपेता ।

## ( उत्तरार्धम् )

### मूलम्-

धातोः ॥ इदमधिक्रियते ॥

### सुबोधिनी-

सार्वीयं सच्चिदानन्दं नामंनामं जगत्प्रभुम् ।
सिद्धान्तचन्द्रिकाख्यातवृत्तिश्च क्रियतेतराम् ॥ १ ॥

धातोः ॥ अधिकारोऽयं प्राङ् नाम्नो य इत्यतः । किमर्थोऽयमधिकारः । उच्यते । ऊरीकरोति । शुक्लीभवति । सहार्यीस्यादित्यादौ ऊर्यादिच्व्यन्तयोर्धातोः प्राक् प्रयोगस्य नियतत्वेन विशिष्टात् प्रत्ययोत्पत्तिर्यथा न स्यात् । अन्यथा अड्द्वित्वयोर्दोषो दुर्वारः स्यादित्यधिकारः ।

### तत्त्वदीपिका-

प्रणम्य श्रीपतिं वाणीं नारायणमनामयम् ।
सिद्धान्तचन्द्रिकाख्यातव्याकृतिरुच्यतेऽधुना ॥ १ ॥

**धातोरि**ति ॥ अधिकारोऽयमित्याह ॥ इदमिति ॥ सूत्रमिति विशेष्यं पदं वा । नाम्नो य इत्यत प्रागधिकारो बोध्यः । अधिकारफलं तु ऊरीकरोति शुक्लीभवतीत्यादौ च्व्यन्तस्य धातोः प्राक् प्रयोगनियमेन तत्सहिताद्धातोः प्रत्ययोत्पत्तिर्यथा न स्यात् । अन्यथाऽड्द्वित्वयोर्दोषो दुर्वारः स्यात् । न च नामव्यावृत्तिरेव फलमिति वाच्यम् । ततः विधानेनैव तद्बाधनात् । सिबन्ततिबन्तव्यावृत्तिरपि न फलं

प्रकृत्यर्थस्याद्रव्यकादेराख्यातार्थकर्तृकर्मणोरनन्वयात् । कारकाणां क्रिययैवान्वयानियमात् । पचतीत्यत्र एकेन एकाश्रयिकायां क्रियायां बोधितायामपरेणान्याश्रयायाः क्रियाया बोधनस्याशक्यत्वात् । प्रथमस्य समासप्रत्यययोरिति लोपे तु तदर्थस्यानवबोधाच्च कर्तृद्वयादिबोधाकांक्षायां यः घटः इत्यादेरन्याय्यत्वात्॥

**भ्वादिः ॥ क्रियावाची भ्वादिर्धातुसंज्ञकः स्यात् ॥**

( सुबोधिनी )—भ्वादिः ॥ भवनं भूः क्रियासामान्यम् । आदत्ते ग्राहयत्यर्थमित्यादिः । अन्तर्भावितण्यर्थः । यद्वा । दीयते गृह्यतेऽर्थोऽनेनेति आङ्पूर्वाद्दाञः किप्रत्ययः। शब्द इति यावत् । भुवः क्रियासामान्यस्य आदिर्वाचकः शब्दो धातुसंज्ञो भवति ॥ एवं सति हिरुक् नाना इत्यादावव्यये, बभूव बंभूवे इत्यादावाख्यातान्ते चातिव्याप्तिस्तेषामपि क्रियावाचकत्वात् । अतो भ्वादिरित्यावर्त्य भूरादिर्यस्येति बहुव्रीहिर्व्याख्येयः । अत्रादिशब्दो व्यवस्थायाम् । तेन भूशब्दादारभ्य ये पठितास्ते ग्राह्याः । तेन क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वम् । नामधातूनां सधातुरिति वचनाद्धातुत्वम् । सौत्रास्तु गणे एव पाठ्याः । का पुनः क्रिया । उच्यते । करोत्यर्थभूता उत्पादनापरपर्याया उत्पत्त्यनुकूलव्यापारसंतानरूपा भावनैव क्रिया । नन्वस्तिभवतिद्यातिषु क्रियावाचित्वमव्याप्तम् । न हि तत्रोत्पादना प्रतीयते । उत्पत्तिर्हि आद्यक्षणसंबन्धस्तदनुकूलव्यापारश्चोत्पादना तदनुभवश्चास्त्यादिभ्यो नास्त्येव । उच्यते । अस्तीत्यादेः स्वरूपधारणं करोतीत्यर्थः । धारणं चोत्तरकालसंबन्धः ॥ क्रियावाचीति किम् । याः पश्यसीत्यादौ धातुत्वं मा भूत् । सति हि तस्मिन्नातो धातोरित्यालोपः ॥

( तत्त्वदी० )—भ्वादिरिति ॥ भवनं भूः क्रिया । आदीयतेऽर्थोऽनेनेत्यादिः शब्दः।आङ्पूर्वात् दाञः किः । तथा च भूशब्दः क्रियावाचक आदिशब्दः प्रकारवाचक इत्यर्थः । एवं सति हिरुक् वर्जने इत्यव्ययेऽतिव्याप्तिस्तस्यापि वर्जनरूपक्रियावाचकत्वात् । अतो भ्वादिरित्यावर्तनीयम् । अत्रादिशब्दो व्यवस्थार्थः । तथा च भूशब्दमारभ्य ये पठितास्ते धातुसंज्ञाः । एवं च क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमिति लक्षणम् । वादावव्ययेऽतिप्रसङ्गवारणाय सत्यन्तम् । तावन्मात्रोपादाने च हिरुगादावतिव्याप्तिः । अत्राहुः । क्रियावाचित्वलाभायावृत्तिर्न कर्तव्या । न च यादावतिव्याप्तिः या इत्यस्य लाक्षणिकत्वेनैवाग्रहणात् । यदस्त्यदाद्यत्वम् आपि वेति सिद्धेः। वेत्यव्ययस्य च धातुत्वेऽप्यनिष्टादर्शनात् । अथ धातुत्वे विकल्पादावपि गन्धनादाविव वातीति रूपमापद्येतेति चेत् शृणु तस्याव्ययत्वेन अव्ययादाप्सुप इति तिबादेर्लुकोऽनिवार्यत्वात् । एवं च सूत्रे विभक्तिग्रहणस्य सार्थक्यम्।न स्यादेरिति नोक्तम् । सर्वादेरुभशब्दस्य तु उभ उभे इत्यत्र पठितत्वेऽपि उभकावित्याद्यर्थतया सर्वादिपाठस्योक्तत्वेन धातुत्वबाधनात् । धातुत्वे हि स्याद्यनुत्पत्तेरुभकावित्यस्यासंभवात् ॥ अथ द्योदिवावित्यत्र स्वर्गवाचकस्य धातुत्वं स्यादेदिति वाच्यम् । न । तत्रोदितः पाठेनानुदितस्तस्याग्रहणात् । सानुबन्धकग्रहणेनातदनुबन्धकस्येत्युक्तेरिति । का पुनः क्रिया भावनैवेति गृहाण । तथाहि । अभवतो गमनादेरक्रियमाणतया भवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्त्तुः करोतिकर्मत्वम् । तथा च करोत्यर्थकर्तुर्भवितृप्रयोजकतया भवतेरुत्पत्त्यर्थप्रयोजकव्यापारे निरूप्यमानः करोत्यर्थमवलम्बते ॥

## आदनुदात्तङितः ॥ अनुदात्तेतो ङितश्च धातोरात् ॥

( सुबोधिनी )—आदनुदात्तङितः ॥ अनुदात्तश्च ङ् च अनुदात्तङौ ताविंतौ यस्य धातोः सोऽनुदात्तङित्तस्मात् । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकमभिसंबध्यते । द्वन्द्वेऽल्पस्वरेति ङस्य पूर्वनिपातो न हसान्तत्वात् । ण्यायनणित्यादिज्ञापकसिद्धं हि तत् । ज्ञापकसिद्धं न सर्वत्रेति 'देवतेदमर्थे' इत्यादिना च तस्यानित्यत्वाच्च । अनुदात्तेतो ङितश्च धातोरात्मनेपदं भवति । एधते । शेते । अन्यपदार्थत्वेन धातोराश्रयणं किम् । अगमत् । अशिश्रियत् । ङाङोर्ङित्त्वेऽपि धातुत्वाभावादात्र ॥

( तत्त्वदी० )—आदनुदात्तङित इति ॥ आत् अनुदात्तश्च ङ् च अनुदात्तङौ ताविंतौ यस्य स तथा तस्मात् । द्वन्द्वान्ते श्रयमाण इच्छब्दः प्रत्येकमभिसंबध्यते इत्यत आह—आदनुदात्तेतो ङितश्चेत्यादि ॥ अत्र ङ् इत्यस्यास्वरत्वादल्पस्वरस्येत्यप्रवृत्तेः परनिपातः द्वयोः स्वरान्तयोर्मध्येऽल्पस्वरस्य ग्रहणात् । देवतेदमर्थ इत्यादिना तस्यानित्यत्वाच्च । आत्पयोरेव सर्वत्र संज्ञात्वेन दर्शनात् नामैकदेशेन सर्वनाम लक्ष्यत इति न व्याख्येयम् । अन्यपदार्थत्वेन धातोराश्रयणात् । अगमत् । अशिश्रियदित्यत्र ङाङोर्ङित्त्वेऽपि धातुत्वाभावादात्र । अत्र विधेयस्य पश्चाद्ग्रहणस्य युक्तत्वेऽपि विपरीतकरणात्क्वचिदन्यत्राप्यात् । तेन को जानीत इत्यादि सिद्धम् ॥

## ञित्स्वरितेत उभे ॥ ञितः स्वरितेतश्च धातोरात्पे स्तः ॥

( सुबोधिनी )—ञित्स्वरितेत उभे ॥ ञ् इत् यस्य स ञित् स्वरित इद्यस्य स स्वरितेत् ञिच्च स्वरितेच्चानयोः समाहारः ञित्स्वरितेत्तस्मात् उभयपदम् । आत्तु संनिहितमेव पं तु णित्पे इत्यतः परामृश्यते ॥

( तत्त्वदी० )—ञित्स्वरितेत उभे इति ॥ ञ इत् यस्य स ञित् स्वरित इत् यस्य स स्वरितेत् ञिच्च स्वरितेच्चानयोः समाहारो ञित्स्वरितेत् तस्मात् । उभे आत्पे इत्यर्थः । यथासंख्यमत्र न शङ्कनीयं तस्य ज्ञापकसिद्धत्वेनासार्वत्रिकत्वात् । अथात्रानुबन्धद्वयं न कर्तव्यं ञित्स्वरितेत्सु स्वरितेतो वा ञितं एव विधेयास्तथा च ञित उभे स्वरितेत उभे इति वा सूत्रणीयमिति चेन्न । डुकृञ् इत्यत्र डुकृञ्ञ इति करणे गौरवात् रुधिर् इत्यत्र रुधिर्ञ् इति करणे च स्वरितञित इति कर्तुं युक्तं लाघवात् ॥ अत्र केचित् । अत्र आत्पशब्दाभ्यामवयवाभ्यामात्मनेपदपरस्मैपदसंज्ञे गृह्येते । ते चान्वर्थे । तथाहि । आत्मने कर्त्रे फलबोधकं पदमात्मनेपदम् । परस्मै कर्त्रे फलबोधकं पदं परस्मैपदम् । तेन कर्तृगामिनि फले आत्मनेपदं परगामिनि फले परस्मैपदमित्याहुस्तन्न । उभेग्रहणस्य वैयर्थ्यापत्तेः । तथाहि । ञित्स्वरितेत एतावदेव सूत्रमस्तु आदिति चानुवर्तनीयम् । तेन कर्तृगामिनि फले आत् । अन्यत्र परतोऽन्यदिति पम् । किं च करोति कुरुते वा घटमित्यत्र घटनिर्माणफलस्य कुलालादन्यगामित्वस्यासंभवात् सृष्टिं चकार चक्रे वा ईश्वर इत्यत्र जगन्निर्माणफलस्य ईश्वरेऽसंभवाच्च ॥ यजधातौ तु स्वर्गकामो यजेत होतर्यजेति श्रुतिभ्यां यजमानर्त्विजोरात्पप्रयोगनियमोऽन्यत्र तु यथेष्टं प्रयोक्तव्यम् ॥

**परतोऽन्यत् ॥ उक्तनिमित्तहीनाद्धातोः पम् ॥**

( सुबोधिनी )—**परतोऽन्यत् ॥** परस्मादिति परतः। तत्रादिर्विभक्त्यर्थे इति पञ्चम्यन्तात्तस्। परत्वस्य सावधित्वादवध्यपेक्षायामनुदात्तङित इत्यादयः संबध्यन्ते। अन्यत्वस्यापि सापेक्षत्वादादुभे चेति संबध्यते। अनुदात्तेतो ङितो निर्विशादेर्ञितः स्वरितेतश्च धातोरन्यस्माद्धातोः परतः केवलं पं भवति ॥

( तत्त्वदी० )—**परतोऽन्यदि**ति ॥ परस्मादिति परतः। तत्रादिर्विभक्त्यर्थे इति पञ्चम्यन्तात्तस् परत्वस्य सावधित्वात्। अवध्यपेक्षायामनुदात्तङित इत्यादयः संबध्यन्ते। अन्यत्वस्यापि सापेक्षत्वादादुभे वेति संबध्यते इत्याशयेनाह—**उक्तनिमित्ते**त्यादि ॥ उक्तानि निमित्तानि तैर्हीनात् रहितादित्यर्थः। तथा च अनुदात्तेतो ङितो निर्विशादेः ञितः स्वरितेतश्च धातोरन्यस्मात्पं भवतीत्यर्थः। अनुदात्तेत इत्यादि किम्। एधते। प्रवर्तते ॥

**नव पम् ॥ तिबादीनामाद्यानि नव वचनानि पसंज्ञानि ॥**

**पराण्यात् ॥ पराणि नव वचनानि आत्मनेपदानि स्युः ॥**

( सुबोधिनी )—**नव पम् ॥ पराण्यात् ॥** प्रत्येकमष्टादशवचनात्मका दशविधा आख्याता उक्तास्तेषां नवनववचनानां संज्ञा विधीयते। तिबादीनामाद्यानि नव वचनानि पसंज्ञानि पराणि नवात्संज्ञानि। पराणीति परशब्देन नवपमित्यत्राद्यानीति लभ्यते ॥

( तत्त्वदी० )—**नव पमिति** ॥ अत्र पराण्यादित्यत्र परशब्देनाद्यानीति लभ्यते। अत्र पाच्छब्दयोरेव संज्ञात्वं न तु ताभ्यामवयवभूताभ्यामाक्षिप्तयोः परस्मैपदात्मनेपदशब्दयोरवयविनोः 'दादेः पे' 'णित्पे' 'आद्भुवि' इत्यादौ पाच्छब्दयोरेवावृत्तिदर्शनाल्लाघवाच्च। न च परगामिक्रियाफलात्मगामिक्रियाफलरूपान्वर्थलाभो न पाच्छब्दाभ्यामिति वाच्यम् विवक्षयैतल्लाभात्। "कमलवनोद्घाटनं कुर्वते ये" इत्यत्रात्मगामिफलाभावेऽप्याद्दर्शनात्। याजको यजति यजमानो यजेतेत्यत्र परगामित्वात्मगामित्वलाभस्तु शिष्टाचारात्। तस्मादत्र न समुदायाक्षेपः ॥

**नाम्नि च युष्मदि चास्मदि च भागैः ॥ तिबाद्यैकार्थे नामादिषूपपदेष्वेते प्रत्ययास्त्रिभिर्भागैः स्युरात्पयोः। नाम्नि प्रयुज्यमाने चाप्रयुज्यमाने प्रथमः। युष्मदि मध्यमः। अस्मद्युत्तमः ॥**

( सुबोधिनी )—**नाम्नि च युष्मदि चास्मदि च भागैः ॥** अत्र पाच्छब्दावनुवृत्तौ सप्तम्या विपरिणमयितव्यौ। आद्भुवीत्यादेः कर्मणि कर्तरीति चानुवर्तते। नामादिशब्देन विभक्त्यन्तं गृह्यते प्रकरणात्तिबादयो दशविधा आख्याता गृह्यन्ते। नामाद्यर्थे कर्तरि कर्मणि च विहितानां तिबादीनां धातोर्यानि नव वचनानि तानि त्रिभिर्भागैर्विभज्य प्रयोक्तव्यानि। यथासंख्येन नामार्थे कर्तरि प्रयुक्तेऽप्रयुक्ते च प्रथमो भागः प्रयोक्तव्यः। प्रयुक्ते। स पचति। तौ पचतः। ते पचन्ति। स पचते। तौ पचेते। ते पचन्ते। अप्रयुक्ते। पचति। पचतः। पचन्ति। पचते। पचेते। पचन्ते। नामार्थे

कर्मणि प्रयुक्ते। ओदनः पच्यते। ओदनौ पच्येते। ओदनाः पच्यन्ते। अप्रयुक्ते। पच्यते। पच्येते। पच्यन्ते। पं तु कर्मणि नास्ति। युष्मदर्थे कर्तरि प्रयुक्ते। त्वं पचसि। युवां पचथः। यूयं पचथ। त्वं पचसे। युवां पचेथे। यूयं पचध्वे। अप्रयुक्ते। पचसि। पचथः। पचथ। पचसे। पचेथे। पचध्वे। युष्मदर्थे कर्मणि प्रयुक्ते। त्वं दुःखी क्रियसे रागैः। युवां दुःखिनौ क्रियेथे। यूयं दुःखिनः क्रियध्वे। अप्रयुक्ते। क्रियसे। क्रियेथे। क्रियध्वे। अस्मदर्थे कर्तरि प्रयुक्ते। अहं पचामि। आवां पचावः। वयं पचामः। अहं पचे। आवां पचावहे। वयं पचामहे। अप्रयुक्ते। पचामि। पचावः। पचामः। पचे। पचावहे। पचामहे। अस्मदर्थे कर्मणि प्रयुक्ते। विरागैः सुख्यहं क्रिये। आवां क्रियावहे। वयं क्रियामहे। अप्रयुक्ते क्रिये। क्रियावहे। क्रियामहे। त्वया पच्यते मया पच्यते इत्यत्र युष्मदाद्यर्थे आख्यातस्य विधानाभावान्न मध्यमोत्तमौ प्रथमातिक्रमणे कारणाभावात्प्रथम एव॥ नन्विह भवान्पचत्वित्यत्र मध्यमः प्राप्नोति भवद्युष्मच्छब्दयोरेकार्थत्वादिति चेन्न। तयोरर्थभेदात्। अलिङ्गः संबोधनविषयश्च युष्मदर्थः भवदर्थस्तु लिङ्गवान्न च संबोधनैकविषय इति। त्वद्रूपः त्वत्कल्पः त्वत्तरः पचसि। मद्रूपः मत्कल्पः मत्तरः पचामीत्यत्र तरादेर्विशेषणत्वेनाकर्तृत्वात् युष्मदस्मदर्थस्यैव कर्तृत्वात् मध्यमोत्तमौ भवतः। अतित्वं प्रियत्वं पचति। अत्यहं प्रियाहं पचतीत्यत्र पूर्वपदान्यपदार्थयोः प्राधान्येन कर्तृत्वात् युष्मदस्मदर्थयोर्गौणत्वेन कर्तृत्वाभावात् न मध्यमोत्तमौ। एवमत्वं त्वं संपद्यते त्वद्भवतीत्यादावपि च्व्यन्ते हि संघीभवन्ति ब्राह्मणा इत्यनुरोधेन प्रकृतेः कर्तृत्वम्। विकृतेः कर्तृत्वे तु संघीभवति ब्राह्मण इति स्यात्। अत्रापि युष्मदस्मदर्थयोः विकृतित्वेनाकर्तृत्वेनाकर्तृत्वम्। तदुक्तम्॥ "यदा च्व्यर्थे विनिर्देश्ये भवतो युष्मदस्मदी। द्वयोरपिः तयोर्योगे न धातोर्मध्यमोत्तमौ॥ १॥ प्रकृतेर्विकृतेर्वापि ह्येकदा प्रतिपादने। वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु॥ २॥" अत एव मृद् घटा भवति ओदनस्तण्डुला भवन्तीति प्रयुज्यते तिवादिभिः सह एकोऽर्थो येषां ते तिबाद्येकार्थास्तेषु तिबादीनां यः कर्त्रादिरित्यर्थः। स एव कर्त्रादिरर्थो नामादीनामित्यर्थः। तिबाद्येकार्थेष्विति किम्। त्वां पश्यति। त्वया क्रियते। तुभ्यं ददाति।

( तत्त्वदी० )—**नाम्नि** चेति॥ अत्राद्भुवीत्यादेः कर्मणीति कर्तरीति चानुवर्तते। पाच्छब्दानुवृत्तौ च सप्तम्या विपरिणम्येते॥ **तिबाद्येकार्थेष्विति**॥ तिबादिभिरेकार्थास्तेषु यथासंख्यं दर्शयति नाम्नि प्रयुज्यमाने चादित्यादिना॥ ननु भागैरित्युक्ते कथं त्रय एव भागा लभ्यन्ते न चत्वारः पञ्च वेति चेत्सत्यम्। कपिञ्जलालंभनन्यायेनाति गृहाण। तथाहि। कपिञ्जलानालभेतेति वाक्ये कपिञ्जलानिति बहुवचनेऽपि एकस्मिन् द्वयोश्च बहुत्वाभावात् प्रथमबहुत्वस्य त्रिषु लाभात् त्रय एव गृह्यन्ते न तु चतुःपञ्चादय इति। एवमिहापि बोध्यम्। भवान् पचतीत्यत्र तु युष्मद्भवदर्थयोः समार्थत्वाभावान्न मध्यमः। तथाहि। अलिङ्गः संबोधनविषयश्च युष्मदर्थः भवदर्थस्तु लिङ्गवान्न च संबोधनैकविषयः। त्वत्तरः पचसि मत्तरः पचामीत्यादौ तरादेर्विशेषणत्वादप्रधानत्वाद-

कर्तृता। युष्मदस्मदर्थयोरेव प्रधानत्वात्कर्तृत्वेन मध्यमोत्तमावेव। अतित्वं पचतीत्यादौ तु तथात्वाभावान्न तथा। अत्वं त्वं संपचते त्वद्भवतीत्यादौ च्व्यन्ते तु संघीभवन्ति ब्राह्मणा इत्याद्यनुरोधेन प्रकृतेरेव कर्तृत्वं न विकृतेर्युष्मदर्थस्य। उक्तं च। "यदा च्व्यर्थे विनिर्दिश्ये भवतो युष्मदस्मदी। द्वयोरपि तयोर्योगे न धातोर्मध्यमोत्तमौ॥ प्रकृतेर्विकृतेर्वापि ह्येकदा प्रतिपादने। वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु॥" मृद् घटा भवन्ति ओदनस्तण्डुला भवन्तीत्येव॥

**कर्तरि पं च॥ चादात्। भू सत्तायाम्॥**

(सुबोधिनी)—कर्तरि पं च॥ कर्तरि वाच्ये धातोः पं भवति चकारादादपि॥ पचति। आख्यातप्रत्ययेनोक्तत्वात्। कर्तरि प्रथमा॥ ननु भावकर्मकर्तृष्वाद्विधानात् कथं निर्णयः स्यात्। मैवं प्रयोगान्निर्णयसंभवात्। आस्ते शेते नर इत्यत्र कर्तरि प्रथमादर्शनात्॥ कर्तर्यात्॥ शय्यते आस्यते नरेणेत्यत्र कर्तरि तृतीयादर्शनात् भावे आत्॥ चक्रे करिष्यते वा घटं कुलाल इत्यत्र कर्तर्यात्॥ चक्रे करिष्यते वा घटः कुलालेनेत्यत्र कर्मण्यात्॥ कर्मणि प्रथमायाः कर्तरि तृतीयायाश्च दर्शनात् कृषीष्ट कर्तेत्यत्र त्वनिर्णय एव। यथा रामाभ्यामित्यत्रानिर्णयः॥

**वर्तमाने तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे॥** वर्तमानार्थक्रियावृत्तेर्धातोस्तिबादयः प्रत्यया भवन्ति॥ एषां संज्ञा लट्॥

(सुबोधिनी)—वर्तमाने तिप् तस् अन्ति, सिप् थस् थ, मिप् वस् मस्, ते आते अन्ते, से आथे ध्वे, ए वहे महे॥ वर्त्तमाने इति व्यापारे इति शेषः। व्यापारः क्रिया। सा च धातोर्वाच्या। सा त्रिविधा। अतीतानागतवर्तमानभेदात्। तत्र वर्तमानक्रियावृत्तेर्धातोस्तिबादयो भवन्ति। ते च द्योतकाः। वर्तमानक्रियाया धातुनैवोक्तत्वात्। यदि तु सद्य आदिरित्यतः काले इत्यनुवर्तते वर्तमाने काले वाच्ये तिवादय इति व्याख्यायते तदा तिवादयो वाचका अपि भवन्ति। कालस्य धातुनाभिहितत्वात्॥ अथ को वर्तमानः। प्रारब्धापरिसमाप्तो वर्तमानः। भूरस्तीत्यादौ कथं वर्तमानादिः प्रारब्धापरिसमाप्तत्वाद्यभावात्। उच्यते। सृष्टिसंहारश्रुतिप्रामाण्यस्वीकर्तॄणां मतेऽत्राप्यस्ति वर्तमानत्वम्। कल्पादौ प्रारब्धायाः स्थितेरपरिसमाप्तत्वात्। तस्थुः पर्वता भविष्यति भूरित्यादौ त्वतीतानागतकल्पावादाय भूतभविष्यत्त्वे बोध्ये। क्रियाफलयोर्वाचको धातुः। कालः संख्या। कारकं चाख्यातार्थः। तत्र तिबादित्वेन कालोऽर्थः। तिप्तस्त्वादित्वेन एकत्वद्वित्वबहुत्वरूपाः संख्यार्थाः। आत्त्वेन भावकर्मणोरर्थः। आत्त्वेन पत्वेन च कर्त्रर्थः। तत्र फलस्य कर्मण्यन्वयः। फलाश्रयस्य कर्मत्वात्। व्यापारस्य कर्तर्यन्वयो धातूपात्तव्यापाराश्रयस्य कर्तृत्वात्। संख्यायास्तु कर्तरि प्रत्यये कर्तर्यन्वयः। कर्मणि प्रत्यये कर्मण्यन्वयः। कालस्य क्रियायामन्वयः।

कर्तृकर्मणी क्रियाविशेषणे । क्रिया तु विशेष्येति शाब्दिकमतम् । वर्तमानोऽर्थो यस्याः सा वर्तमानार्था सा चासौ क्रिया चेति शाकपार्थिवादित्वात् मध्यमपदलोपः । वर्तमान-क्रिया सा वृत्तिर्यस्य स तथा । तस्मात् तिवित्यादेः समाहारे ऐकपद्यम् अन्यथाऽसमासे त्वष्टादशपदत्वम् ॥

( तत्त्वदी० )-**वर्तमाने** इति ॥ व्यापारे इति शेषः । व्यापारश्च क्रिया सा च त्रिविधातीता-नागतवर्तमानभेदात् । सा च धातुवाच्या इत्याशयेनाह-**वर्तमानार्थे**त्यादि ॥ वर्तमानः अर्थो यस्याः सा वर्तमानार्था सा चासौ क्रिया चेति सा तत्र वृत्तिर्यस्य स तथा तस्मादित्यर्थः । तिवि-त्यादेः समाहारे ऐकपद्यम् । अन्यथा त्वष्टादशपदत्वम् । तिबादयश्च वर्तमानाक्रियायाः द्योतका एव न तु वाचकास्तस्य धातुनैव लाभात् । वर्तमानत्वं तु प्रारब्धापरिसमाप्तत्वम् । विंशत्यादिवर्षपर्यन्तं वेदा-ध्ययनेऽपि अधीते इति प्रयोगदर्शनात् । भूतभविष्यद्भिन्नत्वमितिलक्षणं तु न भविष्यद्वर्तमानभिन्नत्वं भूतत्वं वर्तमानभूतभिन्नत्वं भविष्यत्वमित्यपि स्यात् । तथा चान्योन्याश्रयदोषः स्यात् । पर्वतास्तिष्ठ-न्तीत्यत्र तु स्वतो भूताद्यभावेऽपि कालत्रयवर्तिनां राज्ञां भूतादिभेदभिन्नपालनादिक्रियाभेदाद्भूतादि-व्यवहारः । तथाहि । नलादिकाले तस्थुः । कल्क्यादिकाले स्थास्यन्ति । इदानींतनराजकाले तिष्ठंति आत्मास्तीत्यत्रापि शरीराद्युपाध्यतीतत्वादिनाऽतीतत्वादिव्यवहारोऽस्तीति दिक् ॥

**अप् कर्तरि ॥ कर्त्रर्थेषु तिबादिषु चतुर्षु दिप्पर्यन्तेषु परतो धातो-रप् स्यात् ॥**

( सुबोधिनी )-**अप् कर्तरि** ॥ कर्तरीति नापोऽभिधेयमाख्यातोक्तत्वात् किं त्वनुवृत्तस्य चतुर्ष्वितयस्य विशेषणम् । धातोरप्स्यात् कर्त्रर्थेषु चतुर्षु परतः ॥ अपः पित्त्वम् अपित्तादिर्ङिदिति ङित्त्वाभावार्थं अन्यथा भवत इत्यादौ ङित्त्वाद् गुणो न स्यात् ॥

( तत्त्वदी० )-**अप् कर्तरी**ति ॥ कर्तरि विहितेषु चतुर्षु तिबादिषु ॥

**गुणः ॥ नाम्यन्तस्य धातोर्गुणो भवति ॥**

( सुबोधिनी )-**गुणः** ॥ अरेदो नामिन इति नियमान्नामिग्रहणम् । तस्य धातोर्वि-शेषणत्वात् तदन्तविधिः ॥

( तत्त्वदी० )-**गुण** इति ॥ अरेदो नामिन इति नियमान्नामिग्रहणम् । तस्य च विशेषणत्वा-त्तदन्तलाभ इत्याशयेनाह-**नाम्यन्तस्ये**ति ॥

**अपित्तादिर्ङित् ॥ पकारेतं तादिकं च विहाय अन्यप्रत्ययो ङिद्व-त्स्यात् ॥**

( सुबोधिनी )-**अपित्तादिर्ङित्** ॥ प् इत् यस्य स पित् त आदिर्यस्य सः तादिः पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः । नञिति समासः ङित् ङिद्वदित्यर्थः ॥ अत्र पर्युदासबलात् पित्तादिभिन्नः प्रत्यय एव गृह्यते । न धातुः ॥ ननु सादेः कृतां

चानेन ङित्त्वं कुतो नेति चेन्मैवं यङ्लनङोर्ङित्करणात् ज्ञापकात्। 'नानिटि से' इति सूत्रारम्भाच्च। अतः परिशेषात्तिवादीनां चतुर्विधानामाख्यातानां तद्विकरणानां चानेन ङित्त्वं नान्येषाम्। तेन बिभरांचकारेत्यादावामो न ङित्त्वम् ॥

( तत्त्वदी० )–अपित्तादिरिति ॥ प् इद्यस्य स पित् त आदिर्यस्य स तादिः पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः। नञिति समासः। ङित् ङिद्वदित्यर्थः। पर्युदासात्प्रत्यय एव गृह्यते न तु धातुः। न तु दैप्दाप्भिन्नस्य धातोर्ङित्त्वं सति ङित्त्वे आत्स्यात्। ङिदित्यपहाय किदिति तु नोक्तं वक्त इत्यादौ यजादित्वात्किति संप्रसारणप्रसङ्गात्। कुरुत इत्यत्र ङित्यदुरित्यस्याप्रसङ्गात्। तादीत्यत्रादिग्रहणं तूत्तरार्थं सिसतासीत्यत्रैव नवानां ग्रहणसंभवात्। सिस्योरीति लिङ्गान्तयोर्ग्रहणार्थमपि न। तशब्देन विग्रहस्तु व्याख्यानानुसारान्न। सादेः कृतां च ङित्त्वं तु न 'नानिटि से' इति सूत्रारम्भात्। यङनङ्ङित्करणात् ज्ञापकात्। अतस्तिबादीनां तद्विकरणानामनेन ङित्त्वं नान्येषां तेन बिभरांचकारेत्यादौ न ङित्त्वम्। यत्तु आदिशब्दादायोऽपि गृह्यते तेन गोपायतीत्यादिसिद्धिरिति वासुदेवेनोक्तं तद्भ्रमसात्।

**क्ङित्यद्व्युसि ॥ किति ङिति च परे वृद्धिगुणौ न द्विर्वचनहेतुके उसि गुणः स्यात् ॥ इति तसि गुणाप्राप्तौ अब्निमित्तो गुणः। भवतः ॥**

(सुबोधिनी)–क्ङित्यद्व्युसि ॥ क् च ङ् च क्ङौ तावितौ यस्य स तथा तस्मिन्। अद्व्युसीति विशेषणम्। द्वित्वनिमित्ते उसि न अजुहवुः ॥

( तत्त्वदी० )–संज्ञाफलमाह–क्ङित्यद्व्युसि ॥ क् च ङ् च क्ङौ तावितौ यस्य स तथा तस्मिन्। अद्व्युसीति विशेषणम्। द्विरुक्तधातोर्निमित्तभूतादुस् द्व्युस् तस्मात् अन्यस्मिन्नित्यर्थः। अतो जुहवुरित्यादौ तादृशस्य उसोऽभावान्न गुणः। यत्तु नोक्तमनित्यमित्यनेन अजुहवुरित्यादौ न गुण इति वासुदेवेनोक्तम्। तन्न आदेः स्वरेऽपि नोपधाया गुण इति सूत्रेणैवात्र गुणनिषेधे सिद्धे तदर्थं नोक्तमनित्यमित्याश्रयणस्य व्यर्थत्वात् ॥

**अदे ॥ अतो लोपो भवत्यकारे एकारे च परे ॥ भवन्ति। भवसि, भवथः, भवथ ॥**

( सुबोधिनी )–अदे ॥ अच्च ए चेति पृथक्पदे अविभक्तिके अत इत्यनुवृत्तम्। अतो लोपो भवति अति एति च परे ॥ भवन्ति। पचे ॥ अतः किम्। ब्रुवन्ति। ब्रुवे ॥ तपरः किम्। यान्ति। गै। आख्यातप्रकरणे एवायं विधिस्तेन न स्यादावतिव्याप्तिः ॥

( तत्त्वदी० )–अदे इति ॥ अच्च ए च अदे लुप्तसप्तमीकम्। अत इति त्वनुवर्तते। स्यादावतिव्याप्तिस्त्वाख्यातप्रकरणत्वान्न ॥

**म्वोरा ॥ वमयोः परयोरत आत्वं स्यात् ॥ भवामि, भवावः, भवामः। स भवति। त्वं भवसि। अहं भवामि। युगपत्प्राप्तौ परः।**

**स च त्वं च भवथः । अहं च त्वं च भवावः । अहं च त्वं च स च भवामः ॥**

( सुबोधिनी )—**व्मोरा** ॥ व् च म् च व्मौ तयोः अत आत्वं भवति व्मोः ॥ भवामि, भवावः, भवामः ॥ अतः किम् । चिनुवः, चिनुमः. आख्यातप्रकरणे एव युगपत्प्राप्तौ परः । स च त्वं च पण्डितौ भवथः । अहं च स च त्वं च पण्डिता भवाम इत्यत्र त्रयाणां नामाद्यर्थानां कर्तृत्वेनैकदा प्राप्तौ परत्वात् मध्यमोत्तमौ भवतः ॥ उक्तं च । "एकदा चेत् क्रियाकालसंबन्धप्रतिपादनम् । धातोर्नामादिषूक्तेषु यः परः स पुमान् भवेत् ॥ १ ॥" परत्वं चाभिधायकसूत्रापेक्षया न प्रयोगापेक्षया ग्राह्यम् । अस्मदर्थस्यैकत्वेऽपि समुदायाश्रिता संख्या ग्राह्या ॥ तदुक्तम् । "द्वयोर्नाम्नोर्बहूनां वा यदि वाक्ये समुच्चयः । नामत्रयाश्रिता संख्या कृति वाद्योर्विशेषणम् ॥ १ ॥" स च त्वं च अहं चाहेति विवक्षायां त्वेकशेषो भवति । संख्या तु समुदायाश्रिता ॥

( तत्त्वदी० )—**व्मोरा** इति ॥ अत्रापि स्यादावपि नातिप्रसङ्ग उक्तयुक्तेः । तेन धनवानित्यादौ नात्वम् । समानाधिकरणनामादिसन्निपाते व्यवस्थार्थमाह—**युगपदि**ति ॥ एकदा प्राप्तौ परः पुरुषः प्रथमापेक्षया मध्यमः मध्यमापेक्षया उत्तमः पुरुषो भवतीति यावत् ॥

**विधिसम्भावनयोः यात् याताम् युस् यास् यातम यात याम् याव याम ईत ईयाताम् ईरन् ईथास् ईयाथाम् ईध्वम् ईय ईवहि ईमहि ॥ विधिः कर्तव्यार्थोपदेशः । संभावनं कल्पनम् । तत्र यादादयः ॥ एषां संज्ञा लिङ ॥**

( सुबोधिनी )—**विधिसंभावनयोः** यात् याताम् युस्, यास् यातं यात, याम् याव याम, ईत ईयाताम् ईरन्, ईथास् ईयाथाम् ईध्वम्, ईय ईवहि ईमहि ॥ धातोर्यादादयः प्रत्ययाः स्युः ॥ विधिसंभावनयोर्वाच्ययोरित्ययं वाचकतापक्षः । न चात्र पक्षे विध्यादिनाऽर्थेन कर्त्राद्यर्थबाधो विरोधाभावात् । यद्वा । विधिसंभावनयोर्वर्तमानाद्धातोर्यादादयः प्रत्ययाः स्युः । विध्याद्यर्थस्य विशेष्यस्य प्रकृत्यर्थविशेषणत्वे द्योतकतापक्षोऽयम् । विपूर्वाद्धाधातोरन्तर्भावितण्यर्थान्नङ् किरिति भावे किः । 'विध विधाने' इत्यस्मादन्तर्भावितण्यर्थाद्वा किः । विधानं वेधनं वा विधिः । अनुष्ठापनं कारणा प्रवर्तनेति यावत् । सा प्रवर्तना श्रुतिवाक्यनिष्ठा । लौकिकवाक्ये पित्रादिवक्तृनिष्ठा । संपूर्वकाद्भवतेश्चौरादिकाद्वा प्रेरणे स्वार्थे वा ञिः । भावे युट् । ततः स्त्रियामाप् । संभावना कल्पना ऊहः । कर्तव्योऽर्थस्तस्योपदेशो विधिः ॥

( तत्त्वदी० )—**विधिसंभावनयो**रिति ॥ विधानं विधिः । विपूर्वाद्धातोर्नङ् किरिति । किप्रत्ययः । संभाव्यते संभावना । भावे युट् । संपूर्वाद्भवतेश्चौरादिकाद्वा । तयोरर्थमाह विधिरित्यादिना कर्तव्यः करणीयो योऽर्थस्तस्योपदेशः कल्पनमूहः ॥ **तत्रे**ति ॥ तयोरर्थयोर्वाच्ययोर्द्योत्ययोर्वा यादादये

भवन्तीत्यर्थः पक्षद्वयस्यापि भाष्ये स्वीकृतत्वात् । तत्राद्यपक्षे त्वित्थमुपपत्तिः । विध्यादिनार्थेन कर्त्राद्यर्थबाधो न जायते विरोधाभावात् । वर्तमानत्वादेरिव तिवादिवाच्यत्वाशेषेण कर्त्रादेरपि निरवकाशत्वाच्च । क्रियां प्रति प्रत्ययार्थतया विशेष्यत्वं तु तुल्यमेव । द्वितीयपक्षे त्वेषोपपत्तिः । विधिसंभावनयोर्वर्तमानाद्धातोर्यादादयः प्रत्ययाः स्युः । विध्याद्यर्थस्य विशेष्यस्यं प्रकृत्यर्थविशेषणत्वे द्योतकतापक्ष आयाति । एवं च विध्यादेः प्रत्ययार्थत्वं नोचितम् । प्रत्यायार्थत्वे कर्त्रादेरन्यत्र सावकाशत्वेन विध्यादिना बाधः स्यात् । ततश्च यादादिभिरभिधानं कर्त्रादेर्भज्येत । ततस्तु तत्प्रयुक्तैकत्वादिव्यवस्थाप्रथमपुरुषादिव्यवस्थाश्च न स्युरिति महदनिष्टं स्यात् । यद्यपि निमन्त्रणादयोऽप्यर्थाः पाणिनीये प्रदर्शितास्तथापि तेषु प्रवर्तना त्वस्यैकत्वान्नात्र भेदविवक्षा । उक्तं च वाक्यप्रदीपे । " न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा । विध्यादीनामपादानं चतुर्णामादितः कृतम् ॥ अस्तिप्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि । तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥" इति ॥ प्रवर्तना तु श्रुत्यादिवाक्यकर्त्रीश्वरादिनिष्ठा । लौकिकवाक्ये तु पित्रादिवक्तारि निष्ठा । वेदाध्ययनादौ बालानां पित्रादिप्रयुक्तप्रवृत्तिदर्शनादिष्टसाधनत्वं विध्यर्थ इति मतं नादर्तव्यं स्वप्रवृत्तेरिष्टसाधनत्वस्यानुमीयमानत्वात् । उदाहरणमाह । शिष्यो गुरुशुश्रूषको भवेदिति । एकशिष्याश्रया गुरुनिष्ठप्रीतिजननानुकूला या क्रिया तद्विषया प्रेरणेति विशेष्यपक्षः । प्रेरणाविषया एकशिष्याश्रया गुर्वाश्रयप्रीतिजननानुकूला क्रियेति विशेषणपक्षः ॥ **भवेदसाविति** । अत्रैककोटिकसंशयः स्थाणुर्वा पुरुषो वेत्यादौ तु सर्वा कोटयः समत्वेन भासन्ते । अत्र तु वेदवित्त्वावेदवित्त्वयोर्वेदवित्त्वकोटिरेवाधिका । संशयादयमेव विशेषः संभावनायाम् । ब्राह्मणत्वादिहेतोर्व्यभिचारित्वान्न निश्चयः । अवेदविदोऽपि ब्राह्मणा दृश्यन्ते । वेदविदः क्षत्रियाश्च । वेदावाप्त्यनुकूलभावनाश्रय एकोऽपरोक्षार्थस्तदाश्रयात्मधारणानुकूला या भावना तद्विषया ब्राह्मणत्वहेतुका या संभावना तद्विषया वेदावाप्त्यनुकूलभावनाश्रयपरोऽक्षैकार्थनिष्ठात्मधारणानुकूला भावनेति वा बोधः । एवं भवेदयं बलवान् क्षत्रियत्वादित्यादि बोध्यम् ॥

**या ॥ अतः परो या इः स्यात् ॥ भवेत, भवताम् ॥**

**( सुबोधिनी )–या ॥ अविभक्तिको निर्देशः । अतः परो या इः स्यात् ॥ अत किम् । युयात् ॥ तपरः किम् । यायात् ॥**

( तत्त्वदी० )–**या** इति ॥ अनुकार्यानुकरणयोरभेदविवक्षयाऽविभक्तिको निर्देशः । आदात्थइरित्यत इरित्यनुवर्तते । अन्त्यादेशः षष्ठ्यभावान्न ॥

**युस इट् ॥ अतः परस्य युस इडागमः स्यात् ॥ भवेयुः । भवेः, भवेतम, भवेत ॥**

**( सुबोधिनी )–युस इट ॥ अतः परस्य युस इट् स्यात् ॥ टित्वादादौ ॥**

( तत्त्वदी० )–**युस इट्** ॥ इति ॥ टित्त्वादागमः । अन्यथा इरित्यस्यानुवृत्तौ इड्ग्रहणं न कुर्यात् ॥

यामियम् ॥ अतः परो यामियं स्यात् ॥ भवेयम्, भवेव, भवेम । शिष्यो गुरुशुश्रूषको भवेत् । विधिः । भवेदसौ वेदवित् ब्राह्मणत्वात् ॥

( सुबोधिनी )—यामियम् ॥ अतः किम् । युयाम् ॥ तपरः किम् । यायाम् ॥

आशीःप्रेरणयोः तुप् ताम् अन्तु हि तम् त आनिप् आवप् आमप् ताम् आताम् अन्ताम् स्व आथाम् ध्वम् ऐप् आवहैप् आमहैप् ॥ अप्राप्तप्रार्थनमाशीः । परस्येष्टार्थशंसनं वा । प्रेरणं प्रवर्तनम् । तत्र तुबादयः ॥ एषां संज्ञा लोट् ॥

( सुबोधिनी )—आशीःप्रेरणयोः तुप् ताम् अन्तु, हि तम् त, आनिप् आवप् आमप्, ताम् आताम्, अन्ताम्, स्व आथाम् ध्वम्, ऐप् आवहैप् आमहैप् ॥ धातोस्तुवादयः स्युः आशीःप्रेरणयोर्वाच्ययोः । आशीःप्रेरणयोर्वर्तमानाद्धातोरिति द्योतकतापक्षः । आशासनमाशीः । 'आङः शासु इच्छायाम्' ततः क्विप् । आत इत्वं निपातितं षत्वम् । प्रपूर्वादीर्गतावित्यस्मात्प्रेरणार्थण्यन्ताद्भावे युट् । प्रेरणा प्रवर्तना विधिशब्दार्थ एव । आशीश्च प्रेरणा च आशीःप्रेरणे तयोः । आशासनं चाप्राप्तस्यैव संभवतीत्यप्राप्तप्रार्थनमाशीः । सा च स्वस्य परस्य च संभवतीति परस्येष्टार्थशंसनं वा । आशीरिदमप्यप्राप्तविषयमेव । यद्यपि यादादितुवादयो न कालविशेषे विहितास्तथापि भविष्यत्कालोऽत्र गम्यते । अतीतवर्तमानयोर्विध्याद्यसंभवात् ॥

( तत्त्वदी० )—आशीःप्रेरणयोरिति ॥ आशासनमाशीः । आङः शासु इच्छायाम् अस्मात्संज्ञायामकर्त्तरीत्यनुवर्तमाने स्त्रियां क्तिरित्याधिकारे संपदादेः क्विब्वेति क्विप् । अस्मादेव निपातनात्क्विपि आत इः । शासेरित्यनेनेत्वं तु परस्मैपदिनो ग्रहणान्न । आशिषीति निर्देशात्किलात्परस्य धातोः सस्य षः । प्रेर्यत इति प्रेरणा । प्रपूर्वादीर्गतावित्यस्मादन्तर्भावितण्यर्थाद्भावे युट् । प्रेरणा विधिरेव । आशीश्च प्रेरणा च आशीःप्रेरणे तयोः ॥ तयोरर्थमाह—अप्राप्तेत्यादिना ॥

( तुह्योस्तातङ्ङाशिषि वा ) भवतु—भवतात्, भवताम्, भवन्तु ॥

( सुबोधिनी )—तुह्योस्तातङ्ङाशिषि वा ॥ तुश्च हिश्च तुही तयोः । अनन्यार्थं हि ङित्त्वमन्त्यादेशं प्रयोजयति । अत्र तु गुणवृद्धिप्रतिषेधे संप्रसारणे चरितार्थत्वात् ङित्त्वस्य नान्त्यादेशता । ब्रूतात् । मृष्टात् । उष्टादित्यादि ॥

( तत्त्वदी० )—तुह्योरित्यादि ॥ तुश्च हिश्च तुही तयोः । अत्र तातङो ङित्त्वं गुणप्रतिषेधसंप्रसारणाद्यर्थतया संभवत्प्रयोजनमतो नान्त्यादेशं प्रयोजयति । अनन्यप्रयोजनमेव ङित्त्वमन्त्यादेशं प्रयोजयति ॥

अतः ॥ अतः परस्य हेर्लुक् स्यात् ॥ भव—भवतात्, भवतम्, भवत । भवानि, भवाव, भवाम । अध्ययनायोद्यतो भव सौम्य । आयुष्मान् भवतु भवान् ॥

( सुबोधिनी )-अतः ॥ स्थानिवद्भावेन तातङो हित्वेऽपि लोपो न । ओर्वाहेरित्यतो वेत्यनुवृत्तस्य व्यवस्थितत्वेन स्वीकारात् ॥

( तत्त्वदी० )-अत इति ॥ अत्र ओर्वाहेरित्यतो वेत्यस्यानुवृत्तेस्तस्य व्यवस्थितत्वाश्रयणात्स्थानिवद्भावेन तातङो हित्वेऽपि न लोपः ॥ आयुष्मानिति ॥ अतिशयितायुःप्राप्त्यनुकूलैकभवदर्थाश्रया यात्मधारणाऽनुकूला क्रिया तद्विषया शुभाशंसाविषयीभूता । दीर्घायुःप्राप्त्यनुकूलैकभवदर्थाश्रयात्मधारणानुकूला क्रियेति वार्थः । यादादितुवादीनां कालविशेषाकथनेऽपि भविष्यत्कालो बोध्यः। शब्दं कुर्वाणे नरे विरामाशंकायां शब्दं कुर्वित्युक्तावपि भाविशब्दाविषयत्वात्। विधेर्न वर्तमानशब्दविषयता ॥

**अनद्यतनेऽतीते दिप् ताम् अन् सिप् तम् त अमिप् व म तन् आताम् अन्त थास् आथाम् ध्वम् ई वहि महि ॥** अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमं यामद्वयं दिवसः सकलः सोऽद्यतनः नास्त्यद्यतनो यस्मिन्नतीते काले तत्र दिबादयः ॥ एषां संज्ञा लङ् ॥ दिसिमीनामिकार उच्चारणार्थः ॥

( सुबोधिनी )-अनद्यतनेऽतीते दिप् ताम् अन, सिप् तम् त, अमिप् व म, तन् आताम अन्त, थास् आथाम् ध्वम, ई वहि महि ॥ अनद्यतनेऽतीते काले द्योत्ये वाच्ये वा धातोर्दिबादयो भवन्ति ॥ अस्मिन्नहनीत्यद्यशब्दवाच्यः कियान् कालः । अतीतरात्रेरन्तिमं यामद्वयमागामिन्याः प्रथमं यामद्वयं मध्यवर्ती दिवसः स कालोऽद्यशब्दवाच्यः । अद्य भवोऽद्यतनः । त्यतनाविति तनः । अद्यतनकालस्त्रिविधः अतीतोऽनागतो वर्तमानश्च । तत्राद्यतने अतीते भूते सिः । अद्यतने वर्तमाने तिवादिः । अद्यतनेऽनागते लट् । नास्त्यद्यतनो यस्मिन्निति बहुव्रीहिः । यद्वा । अद्यतनादन्योऽनद्यतन इति नञीति नञ्तत्पुरुषः । 'अन्स्वरे' इत्यन् । नाम्नो नो लोपशिति नलोपस्तु न विधानसामर्थ्यात् । तस्मिन् ह्यस्तने काले दिबादिरर्थादपरोक्षे परोक्षेणादिविधानात् ॥

( तत्त्वदी० )-अनद्यतने इति ॥ अस्मिन्नहनीत्यद्य । सद्यआदित्वादिदम द्यप्रत्ययश्चाहनीत्यर्थे निपात्यते । तद्धितोक्तत्वात्प्रथमा । अद्यशब्दवाच्यः कियान् काल इत्याह-अतीताया इत्यादि ॥ अतीता गता या रात्रिश्चातुर्यामात्मिका तस्या यद्यामद्वयं ततोऽर्वाक् आगामिन्या रात्रेः प्रथमयामद्वयं यावद्भवति तावानष्टयामात्मकः कालोऽद्यशब्दवाच्यः । केचित्तु अरुणोदयादारभ्य अरुणोदयपर्यन्तः काल इत्याहुः । अन्ये तु सूर्योदयादारभ्यसूर्योदयपर्यन्तमित्याहुः । लौकिकानां ह्योऽद्य एव इति तत्रैव व्यवहारदर्शनात् । अद्यभवोद्यतनः । त्यतनाविति तनः । अद्यतनश्च कालस्त्रिविधः अतीतवर्तमानानागतभेदात् । अतीते सिः । वर्तमाने तिबादिः । अनागते स्यप् । नास्त्यद्यतनो यस्मिन्निति बहुव्रीहिः तस्मिन् ह्यस्तने काले दिबादिरर्थादपरोक्षे । नन्वेवं ह्यस्तन इत्येवास्तु अनागतकालशङ्कापि नेति चेत्सत्यम् । नञोक्तमनित्यमित्यद्यतनेऽपि परोक्षेऽपरोक्षे । णादिविध्यर्थमिदम् । तेन 'बहु जगद पुरस्तात्तस्य

मत्ता किलाहम्' इत्यादिप्रयोगाः सिद्धाः ॥ बहुव्रीहिपक्षेऽद्यतनेऽद्यतनाभावादद्यतने दिवादिप्रसंगाशङ्का तु न अद्यतनेऽव्यापकेऽद्यतनस्य व्याप्यस्य सत्त्वात् ॥

**दिबादावट् ॥ धातोः ॥ अभवत, अभवताम्, अभवन् । अभवः, अभवतम्, अभवत । अभवम्, अभवाव, अभवाम । ह्योऽभवत्त्वत्पुत्रः ॥**

( सुबोधिनी )—**दिबादावट्** ॥ दिबादाविति सप्तमीनिर्देशादवादिव्यवधानेऽप्राप्तावादावडेव पश्चादिबादिः ॥

( तत्त्वदी० )—**दिबादावडिति** ॥ यद्यपि प्रत्ययाधिकारस्तथापि टित्त्वादागमत्वमस्य । प्रत्ययत्वे धातोः परत्वं स्यात् । परत्वे च प्रयोजनाभावाट्टित्त्वं व्यर्थं स्यात् । धातोरिति षष्ठ्यन्तानुवृत्तेरागमत्वं तस्यैव ॥ दिवादाविति सप्तमीनिर्देशादबादिव्यवधानेऽप्राप्तेरादावडेव पश्चादवादिरिति बोध्यम् । न च वचनसामर्थ्याद्व्यवहितेऽपि भाविष्यतीति वाच्यम् । लुप्तविकरणे चारितार्थत्वात् । न च नित्यत्वादवादिनैवादौ भाव्यमिति वाच्यम् । अन्तरङ्गत्वादट् । अन्तरङ्गत्वं चास्य शब्दमात्रापेक्षत्वात् अवादेस्तु कर्त्राद्यपेक्षत्वाद्बहिरङ्गत्वम् ॥ **ह्योऽभवदिति** ॥ गतदिवसाधिकरणिका युष्मज्जन्यपुत्राश्रयात्मधारणानुकूलातीता क्रियेत्यर्थः ॥

**परोक्षे णप् अतुस् उस् थप् अथुस् अ णप् व म ए आते इरे से आथे ध्वे ए वहे महे ॥ धातोः परोक्षेऽतीते काले णबादयः ॥ एषां संज्ञा लिट् ॥**

( सुबोधिनी )—**परोक्षे** ॥ णप् अतुस् उस, थप् अथुस् अ, णप् व म, ए आते इरे, से आथे ध्वे, ए वहे महे ॥ अनद्यतनातीतपरोक्षार्थक्रियावृत्तेर्धातोर्णवादिरिति द्योतकतापक्षः । अनद्यतनातीतपरोक्षार्थे णवादिरिति वाचकतापक्षः । अक्ष्णः परः परोक्षः । टाडका इत्यः । यस्य लोपः । अक्षादिन्द्रियात्पर इति वा क्वचिदमाद्यन्तस्य परत्वमिति पञ्चम्यन्तस्य परत्वं परशब्दस्याकारस्यौकारो निपातनात् ॥

( तत्त्वदी० )—**परोक्षे** इति ॥ अक्ष्णः परः परोक्षः टाडका इत्यः अक्षादिन्द्रियात्पर इति वा । क्वचिदमाद्यन्तस्य परत्वमिति पञ्चम्यन्तस्य परत्वम् । अस्मादेव निपातनात्परशब्दस्यौकारः । अनद्यतनातीतपरोक्षार्थवृत्तेर्धातोर्णवादयः ॥ ननु पच्यर्थौ विक्लित्त्यनुकूलो व्यापारसंतानोऽधःश्रयणान्तःक्रियाशब्दवाच्यः तस्य समुदायस्य युगपदुत्पत्त्यभावादाशुविनाशित्वाच्च परोक्षत्वमस्त्येवातो णवादिरस्त्विति वाच्यम् । एकैकव्यापारस्य प्रत्यक्षत्वेन समुदायस्यापि लौकिकानां प्रत्यक्षत्वाभिमानात् । यत्र त्वेकोऽप्यवयवोऽप्रत्यक्षस्तत्र क्रिया परोक्षा ॥ अनद्यतने किम् । ग्रामान्तरे घटोऽभूत् । अत्र घटभवनपरोक्षमतीतमपि न चिरातीतम् ॥ अतीते किम् । अयं कटं कर्ता । अत्र करणस्य भविष्यदनद्यतनत्वेऽप्यतीतत्वाभावः ॥ परोक्षे किम् । 'रामो राज्यमचीकरत्' इति हनुमदुक्तिः ॥

**द्विश्च ॥ उक्तार्थणबादियोगे धातोर्द्विर्वचनम् ॥**

( सुबोधिनी )—द्विश्च ॥ णबादीत्यनुवृत्तं सप्तम्या विपरिणम्यते । धातोर्द्विर्वचनं भवति णादौ परे ॥ द्वौ वाराविति द्विः द्वित्रिचतुर्भ्य इति क्रियावृत्तौ सुः। अत्र क्रियावाचकं विना क्रियावृत्तेरसंभवाद्वचनमित्यध्याह्रियते । तच्च कृदन्तम्। तदपेक्षया धातोरिति कर्मणि षष्ठी। धातोर्द्वे उच्चारणे कर्तव्ये इत्यर्थः ॥ अनन्तरस्येति न्यायेनोक्तणादियोगेनैव द्वित्वम्। न विदो नवानामिति विहितणादियोगे। अत्र द्विर्वचनं द्विःप्रयोग एव न त्वादेशः। तेन तुतोसेत्यादौ कृतस्य सस्याभावात् षत्वं न ॥

( तत्त्वदी० )—द्विश्चेति ॥ द्वौ वाराविति द्विः। द्वित्रिचतुर्भ्यः सुरिति क्रियावृत्तौ सुः । क्रियावृत्तिश्च क्रियावाचकं विना न संभवतीति वचनपदयोगः। अत्र द्विर्वचनं द्विः प्रयोग एव न त्वादेशः। तेन तुतोसेत्यादौ कृतस्य सस्याभावात्षत्वं न अनन्तरस्येति न्यायादुक्तणादिरेव गृह्यते न तु विदो नवानामित्यादिविहितोऽपि। तेन वेदेत्यादौ द्वित्वं न ॥

**सस्वरादिर्द्विरद्विः ॥ अनेकस्वरस्य धातोः सस्वराद्योऽवयवोऽद्विरुक्तो द्विर्भवति ॥**

( सुबोधिनी )—सस्वरादिर्द्विरद्विः ॥ अद्विरुक्तः किम्। बोभूयिषते ॥

**णादिः कित् ॥ अपिण्णादिः कित् ॥**

(सुबोधिनी)—णादिः कित् ॥ अपित्तादिर्ङिदित्यतोऽपिदित्यनुवृत्तम्। ण आदिर्यस्याष्टादशात्मकस्य समुदायस्य स णादिः। कित् किद्वत्। कार्यातिदेशोऽयम्। ईजतुः। जुहुवतुः ॥

( तत्त्वदी० )—णादिः किदिति ॥ ण आदिर्यस्य स णादिः। अपित्तादिर्ङिदिति सूत्रादपिदित्यनुवर्तते ॥ नन्वत्र किदिति किमर्थं पूर्वसूत्रात् ङिदित्यस्यानुवृत्तेरेव सत्त्वादिति चेत्सत्यम्। ईजतुरित्यादौ संप्रसारणं न सिद्ध्येत्। चक्रतुरित्यादौ ङित्यदुरित्युत्वप्रसंगापत्तेश्च। अथ णादिरित्यत्र ज्वलादेर्ण इति विहितः कुतो न गृह्यते इति चेत्सत्यम्। क्यब्क्किपोः कित्त्वेन तदग्रहणस्य सिद्धत्वात्। यत्तु वासुदेवेन ऋसंयोगान्नेत्यनन्तरं क्त्वासेटः किद्वेत्यतोऽनन्तरतो वानुकर्षणात्क्वचित्संयोगाद्वा कित्त्वम्। तेन ममन्थतुः ममथतुरिति रूपद्वयमपि स्वीकृतं तदपाणिनीयत्वादुपेक्षितम्। ममन्थतुरित्यस्यैवोचितत्वात् ॥

**आभ्वोर्णादौ ॥ पूर्वस्याकारस्य भूशब्दस्य चाकारो णादौ परे ॥**

( सुबोधिनी )—आभ्वोर्णादौ ॥ अश्च भूश्च अभ्वौ तयोः पूर्वस्य हसादिरित्यतः पूर्वस्येत्यनुवृत्तम् ॥

( तत्त्वदी० )—आभ्वोर्णादाविति ॥ आ अभ्वोरिति छेदः। अश्च भूश्च अभ्वौ तयोः। पूर्वस्य हसादिरिति सूत्रात् पूर्वस्येत्यनुवर्तते। षष्ठीनिर्दिष्टत्वाद्भुव ऊकारस्य। नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे इत्यत्र अभ्यासविकारत्वान्नान्त्यस्य निषेधः। यत्तु नो वेत्यतो वेत्यनुवृत्तेर्व्यवस्थया भावकर्मणोर्भुवो नात्वम्। तेन बुभूवे सुखमनुबुभूवे इत्युक्तं वासुदेवेन। तन्न। बभूवे अनुबभूवे इति रूप-

यैव न्याय्यत्वात्। 'तस्यातपत्रं विभारांबभूवे।' 'विभावरीभिर्बिभरांबभूविरे' इत्यादौ च तथा दर्शनात्। यद्यपि भूकारस्य दीर्घोकारकरणं निरर्थकं तथाप्यानर्चेत्याद्यर्थम् ॥

**ह्रस्वः ॥ पूर्वसंबन्धिनो दीर्घस्य ह्रस्वः ॥**

( सुबोधिनी )—ह्रस्वः ॥ पूर्वस्य स्वरस्य हस्वः स्यात् ॥ बभूवेत्यत्र तु आभ्वोरिति कृतस्य दीर्घस्य ह्रस्व इत्यर्थः ॥

**झपानां जबचपाः ॥ पूर्वस्य झपानां जबाश्चपाः स्युः ॥ झढधघभानां जडदगबाः खफछठथानां चटतकपाः स्युः ॥**

( सुबोधिनी )—झपानां जबचपाः ॥ वर्ग्यो वर्ग्येणेति स्थानैक्या आदेशा भवन्ति ॥

**भुवो वुक् ॥ भुवो वुगागमो णादौ स्वरे ॥ बभूव, बभूवतुः, बभूवुः ॥**

( सुबोधिनी )—भुवो वुक् ॥ कृताकृतप्रसंगित्वेन नित्यत्वात्प्रथमं वुक् ततो वुको धात्ववयवत्वाद्गुणवृद्धी न ॥

( तत्त्वदी० )—भुव इति ॥ वुको धात्ववयवत्वाद्गुणवृद्धी न। न च प्रथमं गुणवृद्धिप्रसंग इति वाच्यम्। कृताकृतप्रसंगित्वेन नित्यत्वात्प्रथमं तस्यैव प्रवृत्तेः ॥

**क्रादेर्णादेः ॥ कृ सृ भृ वृ द्रु स्तु श्रु स्रु इत्येतेभ्यः परस्य वसादेर्णादेरिण् न भवति अन्यस्मात् भवतीति नियमादिट् स्यात् ॥ बभूविथ, बभूवथुः, बभूव। बभूव, बभूविव, बभूविम। बलिर्बलवान् बभूव ॥**

( सुबोधिनी )—क्रादेर्णादेः ॥ 'डुकृञ् करणे' 'कृञ् हिंसायाम्' इत्युभौ गृह्येते। सृ गतौ। भृ भरणे। डुभृञ् धारणपोषणयोरित्युभौ। वृङ् संभक्तौ। वृञ् वरणे इत्युभौ। द्रु गतौ। ष्टुञ् स्तुतौ। श्रु श्रवणे। स्रु गतौ। एते क्रादयः। कृ सृ भृ इति त्रयाणामनुदात्तत्वान्नैकस्वरादिति प्रकृत्याश्रये इण्निषेधे प्राप्ते वृङ्वृञोस्तूदात्तत्वात् कित इति प्रत्ययाश्रये इण्निषेधे प्राप्ते द्रुस्त्वादीनां चतुर्णां स्वरान्तत्वात् स्वरान्तादत्वतश्चेतीड्विकल्पे प्राप्ते च नियमः ॥

( तत्त्वदी० )— क्रादेरिति ॥ डुकृञ् करणे सृगतौ डुभृञ् धारणपोषणयोः। वृञ् वरणे। द्रुगतौ। ष्टुञ् स्तुतौ। श्रु श्रवणे। स्रु गतौ। एते क्रादयः ॥ **नियमा**दिति ॥ विध्यभावादिडभावे सिद्धे सत्यारम्भो नियमाय भवतीति नियमः ॥

**आशिषि यात् यास्ताम् यासुस् यास् यास्तम् यास्त यासम् यास्व यास्म सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयास्थाम् सीध्वम् सीय सीवहि सीमहि ॥ धातोराशिषि यादादयः ॥ एषां संज्ञा लिङ् ॥**

( सुबोधिनी )–आशिषि ॥ यात् यास्ताम् यासुस्, यास् यास्तम् यास्त, यासम् यास्व यास्म, सीष्ट सीयास्ताम् सीरन्, सीष्ठास् सीयास्थाम् सीध्वम्, सीय सीवहि सीमहि ॥ धातोर्यादादय आशीर्वादे वाच्ये । यद्वा । प्रार्थ्यमानक्रियावृत्तेर्धातोरीति वा ॥

( तत्त्वदी० )–आशिषीति ॥ स्वस्य परस्य चेष्टार्थस्य शासनमाशीः । तस्यां वाच्यायां यादादयः । यद्वा प्रार्थनप्रक्रियावृत्तेर्द्धातोर्यादादयः ॥

**आशीर्यादादेः पं कित् ॥ भूयात्, भूयास्ताम्, भूयासुः । भूयाः, भूयास्तम्, भूयास्त । भूयासम्, भूयास्व, भूयास्म । स श्रीमान् भूयात् ॥**

( सुबोधिनी )–आशीर्यादादेः पं कित् ॥ ननु ङित्त्वेनैव गुणवृद्धिनिषेधः सिद्ध इति चेन्न । इज्यात्सुप्यादित्यादौ सम्प्रसारणार्थं जागर्यादित्यादौ जागर्तेरिति गुणार्थं च किद्वचनम् ॥

( तत्त्वदी० )–स श्रीमानिति ॥ एकतदभिन्नाश्रया श्रीमदनुकूलाभावनाशंसना । आशंसाविषया भवनक्रिया वेति बोधः ॥

**श्वस्तने ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस् ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ॥ श्वोभाविन्यर्थे तादयः ॥ एषां संज्ञा लुट् ॥**

( सुबोधिनी )–श्वस्तने ॥ ता तारौ तारस्, तासि तास्थस् तास्थ, तास्मि तास्वस् तास्मस्, ता तारौ तारस्, तासे तासाथे ताध्वे, ताहे तास्वहे तास्महे ॥ आगामि दिने श्वोऽव्ययम् । श्वोभवः श्वस्तनः कालस्तस्मिन्वाच्ये धातोस्तादयः । यद्वा । श्वस्तने व्यापारे वर्तमानाद्धातोरिति वा ॥

( तत्त्वदी० )–श्वस्तने इति ॥ अद्यतनदिनातिरिक्तागामिदिने श्वःशब्दो वर्तते । तत्र भवः श्वस्तनः कालस्तस्मिन्वाच्ये धातोस्तादयः ॥

**सिसतासास्यपामिट् ॥ भविता, भवितारौ, भवितारः । भवितासि, भवितास्थः, भवितास्थ । भवितास्मि, भवितास्वः, भवितास्मः । श्वो भविता राज्यभारः कुमारस्य ॥**

( सुबोधिनी )–सिसतासीस्यपामिट् ॥ धातोरित्यनुवृत्तम् ॥

( तत्त्वदी० )–श्वो भवितेति ॥ चिरागामिदिनाधारा एकराज्यभाराभिन्नाश्रयकागामिकालभाविनी आत्मधारणानुकूला क्रियेत्यर्थः ॥

**त्यादौ भविष्यति स्यप् ॥ धातोर्भविष्यति काले स्यप्प्रत्ययो भवति तिबादिषु शबादिषु परतः ॥ एषां संज्ञा लृट् ॥ भविष्यति,**

भविष्यतः, भविष्यन्ति । भविष्यसि, भविष्यथः, भविष्यथ । भविष्यामि, भविष्यावः, भविष्यामः । कल्की धर्मपालको भविष्यति ॥

( सुबोधिनी )–त्यादौ भविष्यति स्यप् ॥ तिरादिर्यस्य तस्मिन् भविष्यत्यर्थे वर्तमानाद्धातोः स्यप्प्रत्ययो भवति त्यादौ परे । इति भविष्यत्त्वं द्योत्यम् । यद्वा धातोः स्यब्भविष्यति काले वाच्ये तिवादौ परे । भविष्यतीति शत्रन्तात्सप्तमी ॥

( तत्त्वदी० )–त्यादौ भविष्यतीति ॥ तिप् आदिर्यस्य स त्यादिस्तस्मिन् । स्यविशिष्टेत्यादिवाच्यं भविष्यत्वमिति द्योतयन्नाह–धातोरित्यादि ॥ शतृशानयोरपि तिसेवदतिदेशात्स्यप् । तेन यक्ष्यन् यक्ष्यमाण इत्यादि सिद्धम् ॥

**स्यप् क्रियातिक्रमे ॥** क्रियाया अतिक्रमे कुतश्चिदनिष्पत्तौ सत्यां स्यप्प्रत्ययो भवति दिबादिषु परतः ॥ एषां संज्ञा लङ् ॥ यदि सुवृष्टिः सुराज्यं चाभविष्यत् तदा सुभिक्षमभविष्यत् । अभविष्यत, अभविष्यताम्, अभविष्यन् । अभविष्यः, अभविष्यतम, अभविष्यत । अभविष्यम, अभविष्याव, अभविष्याम ॥

( सुबोधिनी )–स्यप् क्रियातिक्रमे ॥ क्रियाया अतिक्रमः अनिष्पत्तिः असिद्धिरित्यर्थः । भविष्यतीत्यनुवृत्तम् उत्तरसूत्राद्भूते इति च भूते भविष्याति चार्थे वर्तमानाद्धातोर्दिबादिर्भवति । क्रियानिष्पत्तौ गम्यायां दिवादौ च परे स्यप् भवति । यद्वा । धातोर्भूते भविष्याति चार्थे वाच्ये दिवादिर्भवति तस्मिंश्च परे स्यप् क्रियातिक्रमे गम्ये ॥

( तत्त्वदी० )–स्यप् क्रियातिक्रम इति ॥ क्रियाया अतिक्रमः अनिष्पत्तिः असिद्धिरिति यावत् । भूतत्वं भविष्यत्वं चानुक्तमपि परिशेषाल्लब्धम् ॥ यदि सुवृष्टिरिति ॥ सुवृष्ट्याश्रयात्मधारणानुकूला भूता भविष्यन्ती वा या क्रिया तदभावप्रयुक्ता सुभिक्षाश्रयात्मधारणानुकूलायाः क्रियाया असिद्धिः ॥ क्रियातिक्रमे किम् । सुवृष्टिरभूत् । सुवृष्टिर्भविष्यति । सुभिक्षमभूत् । सुभिक्षं भविष्यति ॥ दिबादिषु किम् । कृष्णं नमेच्चेत्सुखं यायात् । कर्त्रादिकमाख्यातवाच्यम् । कालस्तु धातोराख्यातस्य वार्थः । स्यपस्तु विकरणत्वादनर्थकत्वमेव । एवं त्यादावपि सिरपि । अत्र त्यादौ भविष्यतीत्यतः स्यबनुवृत्तिसम्भवे स्यब्ग्रहणं शत्रादावपि विधानार्थम् । तेन करिष्यन् करिष्यमाण इत्यादि सिद्धम् ॥

**भूते सिः ॥** धातोर्भूतमात्रे काले सिः प्रत्ययो भवति दिबादिषु परतः ॥ एषां संज्ञा लुङ् ॥

( सुबोधिनी )–भूते सिः ॥ अभूत् इति भूतः । अकर्मकत्वात्कर्तरि क्तः । भूतसामान्यार्थे वर्तमानाद्धातोर्दिबादिर्भवति । यद्वा । धातोः परः भूतसामान्ये वाच्ये दिबादि-

र्भवति तस्मिंश्च परे सिप्रत्ययो भवति । सिसहितस्य दिबादेर्भूतसामान्योऽर्थः । अबादिसाहितस्य तु भूतविशेषोऽनद्यतनोऽपरोक्षोऽर्थः ॥

( तत्त्वदी० )–भूते सिरिति ॥ अभूदिति भूतः । अकर्मकत्वात्कर्त्तरि क्तः । भूतसामान्ये सिरित्याह भूतमात्र इति । तथा च सिविशिष्टदिबादेर्भूतसामान्यार्थः। अबादिविशिष्टस्य तु भूतविशेषा द्यतनोऽपरोक्षः भूतानद्यतनपरोक्षे णबादिः ॥

**दादेः पे ॥** पे परे अपिद्दाधास्थाइणभूपिबतिभ्यः परस्य सेर्लोपः ॥

( सुबोधिनी )–दादेः पे ॥ दा आदिर्यस्य स दादिस्तस्मात्सेर्लोपः पे परे ॥ डुदाञ् दाने । दाण् दाने । दो अवखण्डने । इत्येतेषां दाशब्देन ग्रहणम् । दाप् लवने । दैप् शोधने । देङ् पालने । एषां तु लक्ष्यानुसारान्न ग्रहणम् ॥ डुधाञ् धारणपोषणयोः । ष्ठा गतिनिवृत्तौ । इण् गतौ । भू सत्तायाम् । पा पाने ॥

( तत्त्वदी० )–दादेः पे इति ॥ दा आदिर्यस्य दादिस्तस्य । अपिदिति दाप् लवने, दैप् शोधने, एतौ विहाय एतयोस्त्यागस्तु लक्ष्यानुसारादेव । डुधाञ् धारणपोषणयोः, ष्ठा गतिनिवृत्तौ, इण् गतौ, भू सत्तायाम्, पा पाने, एभ्यः सेर्लोपः । लोपोह्रस्वादित्यतो लोपोऽनुवर्तते ॥

**( शाछासाघ्राधेटां वा )**

( सुबोधिनी )–शाछासाघ्राधेटां वा ॥ एभ्यः सेर्वा लोपः ॥ शो तनूकरणे । छो छेदने । षो अन्तकर्मणि । घ्रा गन्धोपादाने । धट् पान ॥

( तत्त्वदी० )–नो वेत्यतो व्यवस्थितत्वानुवृत्तेश्शादीनां वा । शो तनूकरणे, छो छेदने, षोऽन्तकर्मणि, घ्रा गन्धोपादाने, धेट् पाने, एषां सेर्वा लोप इत्यर्थः ॥

**( भुवः सिलोपे ऽयङ्लुकि गुणो न )** अभूत, अभूताम् ॥

( सुबोधिनी )–भुवः सिलोपे ऽयङ्लुकि गुणो न ॥ भुवो गुणो न सिलोपे सति ॥ यङि लुकि तु भुवो गुणो भवति सिलोपे ॥ प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति परिभाषया गुणनिषेधे प्राप्ते विधिः । अभूत्, अबोभोत् ॥

( तत्त्वदी० )–भुव इति ॥ 'नानिटि से' इत्यतो नेत्यनुवृत्तेराह–भुव इति ॥ अयङ्लुकीति ॥ यङ्लुकि तु अबोभोदित्यत्र सिलोपेऽपि गुणो भवत्ये-

**( भुवः सिलोपे स्वरे वुक् )** अभूवन् । अभूः, अभूतम्, अभूत । अभूवम्, अभूव, अभूम ॥

( सुबोधिनी )–भुवः सिलोपे स्वरे वुक् ॥ भुवो वुगागमः स्वरे परे सिलोपे सति

**( माङि सिरेव ) ( स्मसहिते दिवादिर्वा )**

( सुबोधिनी )–माङि सिरेव ॥ माङ्शब्दे प्रयुज्यमाने धातोर्दिबादिपरः सिरेव भवति सर्वेषामाख्यातानां विषये ॥ स्मसहिते दिबादिर्वा ॥ स्मोत्तरे माङि प्रयुज्यमाने धातोर्दिबादिर्वा । पक्षे भूते सिः । सर्वलकारविषये लङ्लुङावित्यर्थः ॥

( तत्त्वदी० )—**माङि सिरिति** ॥ मेऽट इत्यत्र मे इति योगं विभज्य सिरिति अनुवृत्त्याह—माङीति । सिरेव सिसहितो दिबादिरित्यर्थः । स्मयुक्ते माङि तु विकल्पेन दिवादिः केवलः सिसहितश्च पक्षे । ननु भूते सिरित्यनेनैव सिर्विहितः पुनः किमनेनेति चेत्सत्यम् । कालान्तरेऽपि विधानार्थमेतत् । तेन माङ्योगे सर्वलकारविषये लुङेव भवति ॥

**मेऽटः ॥ माङ्योगे ऽटो लोपः ॥ मा भवान् भूत् । मा स्म भूत । मा स्म भवत् ॥**

( सुबोधिनी )—**मेऽटः** ॥ लोप इत्यनुवृत्तम् । माङ्शब्दे प्रयुज्यमाने सत्यटो लोपः॥

( तत्त्वदी० )—**मेऽट** इति ॥ मे अट इति छेदः । लोप इत्यनुवर्तते ॥ मे किम् । नाभवत् ॥ अट इति किम् । मा प्र भूत् । प्रस्य लोपो न ॥

**( भू प्राप्तावात्वान् ) भवते ॥**

( सुबोधिनी )—**भू प्राप्तावात्वान्** ॥ आद्विद्यते यस्य स आत्वान् । आत्मनेपदीत्यर्थः ॥

( तत्त्वदी० )—**भू प्राप्तावात्वान्** इति ॥ आत् विद्यते यस्य स आत्वान् ॥

**आदाथ इः ॥ अतः परस्यात आथश्चात इर्भवति ॥ भवेते, भवन्ते । भवसे, भवेथे, भवध्वे । भवे, भवावहे, भवामहे ॥ भवेत, भवेयाताम्, भवेरन् । भवेथाः, भवेयाथाम, भवेध्वम् । भवेय, भवेवहि, भवेमहि ॥ भवताम्, भवेताम, भवन्ताम् । भवस्व, भवेथाम, भवध्वम् । भवै, भवावहै, भवामहै ॥ अभवत, अभवेताम, अभवन्त । अभवथाः, अभवेथाम, अभवध्वम् । अभवे, अभवावहि, अभवामहि ॥ बभूवे, बभूवाते, बभूविरे । बभूविषे, बभूवाथे ॥**

( सुबोधिनी )—**आदाथ इः** ॥ अत इत्यनुवृत्तम् । आच्च आच्च आदात् तस्य । आते आताम् आथे आथाम् इत्येतेषां टिं विहायानुकरणम् । अतः परस्य आत आथश्चाकार इर्भवति ॥ एधेते । एधेथे । एधेताम् । एधेथाम् ॥

( तत्त्वदी० )—**आदाथ** इरिति ॥ आ आदाथ इरिति छेदः । आच आच आदात् । तस्य । आते आताम् आथे आथाम् । एषाम् आतोतः परस्य इर्भवति ॥ आ किम् । अन्त्यस्य मा भूत् ॥ तपरः किम् । गाते । अन्तरङ्गत्वादपः सवर्णदीर्घे कृते पुनः सवर्णदीर्घः ॥

**नामिनो चतुर्णां धो ढः ॥ नाम्यन्ताद्धातोः परस्य सीध्वंलुङ्लिटां धस्य ढः ॥**

( सुबोधिनी )—**नामिनो चतुर्णां धो ढः** ॥ नामिन इति धातोर्विशेषणत्वेन तदन्तविधिः ॥

( सेटो हलाद्वा ) बभूविढ्वे-बभूविध्वे, । बभूवे, बभूविवहे, बभूविमहे ॥ भविषीष्ट, भविषीयास्ताम्, भविषीरन् । भविषीष्ठाः, भविषीयास्थाम्, भविषीढ्वम्-भविषीध्वम् । भविषीय, भविषीवहि, भविषीमहि ॥ भविता, भवितारौ, भवितारः । भवितासे, भवितासाथे, भविताध्वे । भविताहे, भवितास्वहे, भवितास्महे ॥ भविष्यते भविष्येते, भविष्यन्ते । भविष्यसे, भविष्येथे, भविष्यध्वे । भविष्ये, भविष्यावहे, भविष्यामहे ॥ अभविष्यत, अभविष्येताम्, अभविष्यन्त । अभविष्यथाः, अभविष्येथाम्, अभविष्यध्वम् । अभविष्ये, अभविष्यावहि, अभविष्यामहि ॥ अभविष्ट, अभविषाताम् ॥

( सुबोधिनी )-सेटो हलाद्वा ॥ सेटो हयवरलात्परेषां सीध्वंलुङ्लिटां धस्य वा ढः ॥

आतोऽन्तोऽदनतः ॥ आतोऽन्तोऽद्भवत्यकाराद्धुत्तरस्य न ॥ अभविषत । अभविष्ठाः, अभविषाथाम् ॥

( सुबोधिनी )-आतोऽन्तोऽदनतः ॥ अन्ते अन्तु अन्ताम् एषां वचनानां टिं विहाय प्राग्भावस्यानुकरणम् । आदिति तु अन्त्यानां संज्ञेत्युक्तम् । आत्संबन्धिनोऽनकारात् परस्यान्तोऽद्भवति ॥ आतः किम् । युवन्ति ॥ अनत इति किम् । एधन्ते ॥ तपरः किम् । गाते ॥

( तत्त्वदी० )-आतोऽन्तोऽदनत इति ॥ आत इत्यात्मनेपदस्य न त्वादन्तशङ्का अनत इति प्रतिषेधात् । तपरः किम् । गाते । गा अन्ते इति स्थिते अन्तरङ्गत्वादपः सर्वर्णदीर्घे पश्चात् अत् । अनत इति पर्युदासो लाघवात् । प्रसज्यप्रतिषेधे त्वनान्वितसमासो वाक्यभेदश्चाश्रितः स्यात् ॥

( ध्वे सेर्लोपः ) अभविढ्वम्-अभविध्वम् । अभविषि, अभविष्वहि, अभविष्महि ॥ चिती संज्ञाने ॥

( सुबोधिनी )-ध्वे सेर्लोपः ॥ ध्वे प्रत्यये परे सिप्रत्ययस्य लोपः ॥ चिती संज्ञाने । सम्यग् ज्ञानं संज्ञानम् ॥

उपधाया लघोः ॥ धातोरुपधाया लघोर्नामिनो गुणः ॥ चेतति ॥

( सुबोधिनी )-उपधाया लघोः ॥ गुण इत्यनुवृत्तम् । ह्रस्वं लघु ॥

( तत्त्वदी० )-उपधाया लघोरिति ॥ गुण इत्यनुवृत्तेर्नामिन इति लभ्यते । उपधायाः किम् । भिनत्ति ॥ लघोः किम् । ऊहते ॥

पूर्वस्य हसादिः शेषः ॥ पूर्वस्यादिर्हसः शिष्यते अन्ये हसा लुप्यन्ते ॥ चिचेत । चिचेतिथ ॥

( सुबोधिनी )-पूर्वस्य हसादिः शेषः ॥ आदिश्चासौ हसश्चेति विशेषणस्याप्यनेन परनिपातो ज्ञाप्यते ॥

( तत्त्वदी० )—**पूर्वस्य हसादि**रिति ॥ हस आदिरिति छेदः । हस इति लुप्तप्रथमान्तम् ॥

**सेः ॥ विद्यमानात् सिशब्दात्परयोर्दिप्सिपोरीट् ॥**

( सुबोधिनी )—सेः ॥ अस्तेरीट् इत्येतदनुवृत्तम् । अस्तेरिति सेर्विशेषणम् । विद्यमानात् सिप्रत्ययात् परयोर्दिस्योरीडागमः ॥ विद्यमानात्किम् । अदात् । अत्र प्रत्ययलक्षणेन सेः परत्वमस्ति । विद्यमानादिति विशेषणान्नेट् ॥

( तत्त्वदी० )—सेरिति ॥ अत्रास्तेरीडिति सूत्रात् पदद्वयमप्यनुवर्तते । पूर्वपदं तु सेर्विशेषणम् । तेन विद्यमानात्सेरिति लब्धम् । अन्यथा अदादित्यत्र प्रत्ययलक्षणेन सेरीट्प्रसङ्गः स्यात् ॥

**इट ईटि ॥ इटः परस्य सेर्लोप ईटि ॥ अचेतीत, अचेतिष्टाम ॥**

( सुबोधिनी )—**इट ईटि** ॥ सेरिति लोप इति चानुवृत्तम् । लुङि अचेतिस् ईडिति स्थिते । सेर्लोपः । सिलोपो दीर्घे सिद्धो वक्तव्यः । दीर्घे कर्तव्ये सिलोपः सिद्धो वाच्यो न त्वसिद्धः । अचेतीत् ॥ इटः किम् । अहार्षीत् ॥ ईटि किम् । अचेतिष्टाम् ।

**स्याविदः ॥ विद्यमानात् सेरातो विदश्च परस्यान उस् भवति ॥ अचेतिषुः॥ च्युतिर् आसेचने॥च्योतति । च्योतेत् । च्योततु—च्योतताद्वा । अच्योतत् । चुच्योत । च्युत्यात् । च्योतिता । च्योतिष्यति । अच्योतिष्यत् ॥**

( सुबोधिनी )—**स्याविदः** ॥ सिश्च आश्च विद् च एषां समाहारः स्याविद् तस्मात् । एभ्यः परस्यान उस् स्यात् ॥ अत्राप्यस्तेरित्यनुवृत्त्य विद्यमानात् सेः परस्यान इति व्याख्यानान्नेह । अभूवन् । अदुः । अविदुः ॥ च्युतिर् आसेचने । आसेचनमार्द्रीकरणम् । इरितीरितो वेति विशेषणार्थः ॥

( तत्त्वदी० )—**स्याविद** इति ॥ सिश्च आश्च विद् च एतेषां समाहारः स्याविद् तस्मात् । अत्र वाक्यत्रयं बोध्यम् । सेरित्याद्यम् । तत्र प्रत्ययाप्रत्ययन्यायेन प्रत्यय एव गृह्यते विकरणव्यवधानेन धातोः परस्यानोऽसंभवात् । अत्राप्यस्तेरित्यनुवर्त्य विद्यमानात्सेरिति व्याख्येयम् । तेनाभूवन्नित्यत्र प्रत्ययलक्षणेन सेः परस्याप्यनोऽविद्यमानत्वान्नो सादेशः । आ इति द्वितीयं वाक्यम् । अत्र सिग्रहणं नानुवर्तते । यद्यनुवर्तते तर्हि प्रत्ययलक्षणेन आदन्तादेव सेरन उस् स्यान्नान्यस्मादिति नियमः स्यात् । तथा चानद्यतने न स्यात् । तेन विकल्पः फलितः । अयुः, अयान् । विद इति तृतीयम् । अत्राप्यनद्यतने विकल्पेन । भूतमात्रे तु सिरित्यनेनैव सिद्धम् । अत्राहुः । अत्र सिविद इति सूत्रणीयम् । तत आत इति सूत्रणीयम् । ततो णब्डाविति इत्थं चाकारग्रहणं न कर्तव्यम् इति लाघवम् । एवं कुतो न कृतमिति चिन्त्यमिति ॥ अत्रेदमवधेयम् । एकमात्रालाघवाय योगविभागस्यानिष्प्रमाणत्वेनोपेक्षणीयत्वात् । अतो न तथा कृतमिति विभाव्यम् ॥ **आसेचने** इति ॥ आसेचनमार्द्रीकरणम् । आङीषदर्थेऽभिव्याप्तौ च ॥

**इरितो वा ॥** इरितो धातोर्वा ङप्रत्ययो भवति पे । सेरपवादः ॥ अच्युतत्-अच्योतीत ॥ श्च्युतिर् क्षरणे ॥ श्च्योतति । श्च्योतेत् । श्च्योततु-श्च्योतताद्वा । अश्च्योतत् ॥

(सुबोधिनी)-इरितो वा ॥ इरित् यस्य स तस्मात् इरितो धातोर्वा ङः । भूतमात्रार्थे दिवादौ पे । सेरपवादः ॥ लित्पुषादेरित्यतो ङ इत्यनुवृत्तम् ॥

( तत्त्वदी० )-इरितो वेति ॥ इरित् यस्य स इरित् तस्मात् ॥ सेरपवाद इति ॥ भूतमात्रार्थे दिवादौ पे इत्यपि बोध्यम् । तेन अवेवेक् भूतार्थत्वेऽपि न । रुणद्धीत्यत्र दिबादिपरत्वाभावान्न । न चात्र भूतार्थताभावादेवाप्राप्तिरिति वाच्यम् वर्तमानसमीप इत्यनेन भूतेऽपि तिवादिविधानात् । अरुद्धेत्यत्र विक्षितत्वाभावात् ॥

**शसात्खपाः ॥** पूर्वशसात्पराः खपाः शिष्यन्ते न शसाः ॥ चुश्च्योत । श्च्युत्यात् । श्च्योतिता । श्च्योतिता । श्च्योतिष्यति । अश्च्योतिष्यत् । अश्च्युतत्-अश्च्योतीत् । यकाररहितोऽप्ययम् । श्चोतति । श्चोतेत् । श्चोततु-श्चोततात् । अश्चोतत् । चुश्चोत । श्चुत्यात् । श्चोतिता । श्चोतिष्यति । अश्चोतिष्यत् । अश्चुतत्-अश्चोतीत् ॥ मन्थ विलोडने । मन्थति । मन्थेत् । मन्थतु-मन्थताद्वा । अमन्थत् । नो लोप इति नलोपे प्राप्ते ॥

( सुबोधिनी )-शसात्खपाः ॥ शसः प्रत्याहारः ॥ मन्थ विलोडने । क्र्यादावपि ॥

( तत्त्वदी० )-शसादिति ॥ शसः प्रत्याहारः । खपानां शेषत्वोक्तेः शसानां निषेध इत्याह-न शसा इति ॥ यकाररहित इति ॥ 'मधुश्चुतं घृतमिव सुपूतम्' इति प्रयोगश्चानुकूलः ॥ मन्थ विलोडने ॥ हिंसासंक्लेशनयोरपीत्येके ॥

**ऋसंयोगान्न ॥** ऋसंयोगाण्णादिरकित् ॥ ममन्थ, ममन्थतुः ॥

( सुबोधिनी )-ऋसंयोगान्नेति ॥ इह ऋसंयोगान्नेति मूलसूत्रम् । तत्र णादिः किदित्यनुवृत्तम् । ऋश्च संयोगश्चानयोः समाहारः ऋसंयोगं तस्मात् णादिः किन्न ॥ जजरतुः । यादादौ कित्वात् नो लोप इति न लोपः । मथ्यात् ॥

( तत्त्वदी० )-ऋसंयोगादिति ॥ ऋश्च संयोगश्च ऋसंयोगं तस्मात् । णादिः किदिति पूर्वसूत्रमनुवर्तते । कित्वाभावात्संप्रसारणाभावोऽपि । कित्वाविधानात् ङित्त्वमपि न ॥ अत्र केचित् । आर्तिंप्रश्लिष्य आरतुरित्यादिसिद्धमित्याहुः । अन्ये तु ऋऋ अतुसिति स्थिते र इत्यत्वे अरिति च कृते पूर्ववद्ग्रहणेन आम्वोरित्यात्वे आरतुरिति । अत्रादिग्रहणमनुवर्त्य तन्त्रेण द्वितीयवाक्यार्थः । ऋदन्तात्संयोगादेर्णादिरकित् । तेन सस्मरतुरित्यादि । अथ कथं सस्वतुरिति चेत् । नञोक्तस्यानित्यत्वात् । अत्र ऋहसादित्येव सुवचम् । ऋश्च हसश्च ऋहसं तस्मात् । एवं संयोगान्तस्य लोप इत्यत्र हसान्तस्य लोप इत्यस्यैव न्याय्यत्वम् । हसावन्ते यस्येति विग्रहः ॥

**नो लोपः ॥** धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपः किति परे ॥ पूजार्थाश्चतेर्न निरुपपदात् कुञ्चेः क्विपि न ॥ मथ्यात् । मन्थिता । मन्थिष्यति । अमन्थिष्यत् । अमन्थीत् ॥ कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः ॥

( सुबोधिनी )—नो लोपः ॥ मथ्यात् ॥

**इदितो नुम् ॥** इदितोधातोर्नुम् ॥ कुन्थति । कुन्थेत् ।कुन्थतु—कुन्थताद्वा । अकुन्थत् ॥

( सुबोधिनी )—इदितो नुम् ॥ इत् इद्यस्य स इदित् तस्य नुम् स्यात् ॥

**कुहोश्चुः ॥** पूर्वस्य कवर्गहकारयोश्चुत्वं भवति । हस्य वर्गचतुर्थः॥ चुकुन्थ ॥

( सुबोधिनी )—कुहोश्चुः ॥ पूर्वस्येत्यनुवृत्तम् । कुश्च हश्च कुहौ तयोः संवारनादघोषमहाप्राणप्रयत्नस्य हस्य तादृश एव वर्गचतुर्थो भवति ॥

( तत्त्वदी० )—हस्य वर्गचतुर्थ इति ॥ स्थानेऽन्तरतम इत्यनेन घोषवत्त्वादिगुणवतो हस्य तादृशो वर्गचतुर्थ एव । एतच्चानधीतग्रन्थान्तरैर्दुर्ज्ञेयम् ॥

**( इदितो नलोपो न )** कुन्थ्यात् । कुन्थिष्यति । अकुन्थिष्यत । अकुन्थीत् ॥ चुबि वक्त्रसंयोगे ॥ चुम्बति ॥ षिधु गत्याम् ॥

( सुबोधिनी )—इदितो नलोपो न ॥ इदितो धातोर्नस्य लोपो न भवति । नो लोप इत्यस्यापवादः ॥ षिधु गत्याम् । अयमुदिदित्येके ॥

( तत्त्वदी० )—इदितो नलोपो नेति ॥ इदं च नो लोप इत्यत्र नो वेत्यतो वेत्यस्यापकृष्टस्य व्यवस्थितत्वाल्लभ्यते । न चेदितो नुम्विधिसामर्थ्यादेव लोपो नेति वाच्यम् । नदन्तीत्यादावकिति तस्य चारितार्थत्वात् ॥ षिधु गत्यामिति ॥ काश्यपादिभिरयमुदिदुक्तः । माधवादिभिस्तु वृत्तिस्वरसादनुदिदेव स्वीकृतः ॥

**आदेः ष्णः स्नः ॥** धात्वाद्योः षकारणकारयोः सकारनकारौ भवतः ॥ सेधति । सेधेत् । सेधतु-सेधताद्वा । असेधत् । सिषेध । सिध्यात् । सेधिता ॥

( सुबोधिनी )—आदेः ष्णः स्नः ॥ ष् च ण् च ष्ण् तस्य ष्णः । स् च नश्च स्नः॥ धातोः किम् । षट् ॥ आदेः किम् । लषति । अणाति ॥ षोपदेशानाह । "सेकृ सृप सृ स्तृञ् सृज् स्तृ स्त्यान्ये दन्त्याजन्तसादयः ॥ एकाचः षोपदेशाः स्युः ष्वष्क स्विद् स्वद् स्वञ्ज स्वप् स्मिङः ॥ १ ॥" दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ अव्यवहितौ यस्य स दन्त्याजन्तः दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः दन्त्याजन्तस

आदिर्येषां धातूनां ते दन्त्याजन्तसादयः। दन्त्यान्तसादयोऽजन्तसादयश्चैकाचः एक-स्वरा धातवः षोपदेशाः। कथंभूताः। सेकृ गतौ। सृपॢ गतौ। सृ गतौ। स्तृञ् आच्छादने। सृज विसर्गे। स्तॄञ् आच्छादने। स्त्यै शब्दसंघातयोः। एभ्योऽन्ये उक्तलक्षणस्यातिव्याप्तिं वारयितुमिदं विशेषणम्। पुनः कथंभूताः। ष्वष्क गतौ। ञिष्विदा गात्रप्रक्षरणे। ष्वद आस्वादने। ष्वञ्ज परिष्वङ्गे। ञिष्वप् शये। स्मिङ ईषद्धसने। एतैः सहिताः। १। एकाचः किम्। सोसूच्यते। चुरादावदन्तोऽयम्॥ दन्त्याजन्तोति किम्। चुस्कुन्दें। दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणात्। तेन स्वाद आस्वादने। इत्यस्यासिस्वददित्यादौ षत्वं न॥ णोपदेशा-नाह। नर्द नाटि नाथ नाध नन्द नक्क नॄ नृतः। नर्द शब्दे। नट अवस्पन्दने। चुरादिः। नट नृत्ताविति घटादिस्तु नेह गृह्यते नाटीति दीर्घनिर्देशात्॥ नाथृ नाधृ याच्ञादौ। टुणादि समृद्धौ। नक्क नाशने। नॄ नये। नृती गात्रविक्षेपे। एभ्योऽ-न्यभ्यो भिन्ना णोपदेशाः॥ नाधृ नन्द नॄ इति त्रयाणां केचिण्णोपदेशतामाहुः॥

( तत्त्वदी० )—आदेरिति॥ ष् च ण् च ष्ण् तस्य। स् च नश्च स्नः॥

**प्रादेश्च तथा तौ सुनमाम्॥** प्रादेः परेषां स्वादीनां नमादीनां च धातूनां सकारनकारयोः षकारणकारौ भवतः षत्वणत्वनिमित्ते सति निषेधाति॥

( सुबोधिनी )—प्रादेश्च तथा तौ सुनमाम्॥ प्रादिसंबन्धिनः किलात् परेषां स्वादीनां सस्य षः। नमादीनां नस्य णश्च। षत्वनिमित्तं किलम्। णत्वनिमित्तं षका-रेफऋवर्णाः॥ स्वादीनाह। उपसर्गस्थनिमित्तात् सुनोतिसुवतिस्यतिस्तौतिस्तो-भतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्। प्रतिभिन्नात् सदेश्चावादालम्बनाविदूर्ययोस्तम्भेश्च व्यवाभ्यां भोजने स्वनश्च परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जादेः स्कभ्ना-तेश्च सस्य षः। व्याख्या। षुञ् अभिषवे। षू प्रेरणे। षो अन्तकर्मणि। ष्टुञ् स्तुतौ। ष्टुभ स्तम्भे। एषां स्तिपा निर्देशाद्यङ्लुकि षत्वं न। तेनाभिसोषवीति। अभिसोषोती-त्यादि। ष्ठा गतिनिवृत्तौ। सेनयेति ण्यन्तो नामधातुः। सेनया अभियातीति अभिषे-णयति। षिधु गत्याम्। षिच क्षरणे। षञ्ज सङ्गे। ष्वञ्ज परिस्वङ्गे। स्तम्भु इति सौत्रो रोधनार्थः। ष्टभि प्रतिबन्धे इति तु न गृह्यते। लक्षणप्रतिपदोक्तन्यायेन सौत्रो हि नोपध इति प्रतिपदोक्तः। इदित्त्वान्नुमि कृते ष्टभिर्लाक्षणिकस्तेन विस्तम्भते इत्यादौ षत्वं न। षद्लृ विशरणादौ। प्रतिभिन्नात्किम्। प्रतिसीदति। आलम्बनमाश्रयणम्। अविदूर एवाविदूर्यम् सामीप्यम्। ण्यः। अवष्टब्धा गौः निरुद्धा। समीपे आस्ते इत्यर्थः॥ एतयोः किम्। अवस्तब्धो वृषलः शीतेन॥ स्वन शब्दे। विष्वणति। सशब्दं भुङ्क्ते इत्यर्थः॥ भोजने किम्। विस्वनाति वीणा॥ षेवृ सेवायाम्। परिषेवनम्॥ षिञ् बन्धने। क्तान्तः सितशब्दः॥ सयशब्दस्तु स्वराद इति

पचादेर्वा अप्रत्ययान्तः । विषयः ॥ षिवु तन्तुसंताने । परिषीव्यति ॥ षह मर्षणे । परिषहते ॥ सुडागमः । परिष्करोति ॥ स्तुस्वञ्जोः पुनर्वचनं सिवादीनामड्व्यवायेऽपीति विकल्पार्थम् । स्तम्भु रोधने । विष्टभ्नाति । एते स्वादयः । णोपदेशा एव नमादय इति ॥

( तत्त्वदी० )–प्रादेश्च तथा तौ सुनमाम् ॥ यद्यपि किलादित्यस्यैवानन्तरस्येति न्याये-नानुवृत्तिस्तथापि चकारेण षुर्नो ण इत्यनुवर्तते । तदेवानुवृत्तौ किं चकारेण । तथा तावित्यस्य: तेन प्रकारेण तौ स्तः ॥ षत्वणत्वनिमित्ते सतीति ॥ षत्वनिमित्तं किलम् । णत्वनिमित्तं षकार-रेफऋवर्णाः । तत्र स्वादयः । सप्रत्ययस्यप्रत्ययान्तेषु षुञ् अभिषवे । ष्टुञ् स्तुतौ । स्तुभ स्तम्भे । षोऽन्तकर्मणि । षु प्रेरणे । ष्ठा गतिनिवृत्तौ । ण्यन्तसेनाशब्दः । षञ्ज संगे । ष्वञ्ज परिष्वङ्गे । षिधु गत्याम् । अतिप्रतिपूर्वः षद्लृ विशरणगत्योः । अयङन्तः षिच् क्षरणे । अवपूर्वः ष्टम्भनिरोधे ॥ व्यवपूर्वको भोजनार्थः । स्वन शब्दे । परिनिविपूर्वकः षेवृ सेचने । सुट्प्रत्ययः । अड्वर्जितः षिवु तन्तुसन्ताने । अड्वर्जितः षह मर्षणे ॥

( सेधतेर्गतौ न षः ) गङ्गां विसेधति ॥

( सुबोधिनी )–सेधतेर्गतौ न षः ॥ उपसर्गस्थनिमित्तादृत्यर्थसेधतेः सस्य षत्वं न । स्तिपा निर्देशाद्यङ्लुकि गत्यर्थसेधतेः षत्वम् । निषेषिधीति ॥

( अड्द्वित्वव्यवधानेऽपि षः ) न्यषेधत् । निषिषेध ॥ षिधू शास्त्रे माङ्गल्ये च ॥

( सुबोधिनी )–अड्द्वित्वव्यवधानेऽपि षः ॥ सितशब्दात्प्राक्पञ्चदशानां सुनोत्यादीनामड्व्यवधानेऽपि ष वत् । अभ्यषुणोत् । सितशब्दात्प्रागदशानां स्थादीनां द्वित्वव्यवधाने षत्वमित्यर्थः । निषिषेध ॥ षिधू शास्त्रे माङ्गल्ये च । शास्त्रं शासनम् मङ्गलमेव माङ्गल्यम् । ण्यः । मङ्गलक्रियेत्यर्थः ॥

( तत्त्वदी० )–अत्रान्तरेऽपीत्यनुवर्तते । तेनाड्द्वित्वव्यवहितेऽपीत्याह–अड्द्वित्वेत्यादि ॥ षिधू शास्त्रे माङ्गल्ये च ॥ शास्त्रं शासनम् । माङ्गल्यं मङ्गलक्रिया ॥

ऊदितो वा ॥ ऊदितो धातोः परस्य वसादेरनपीड्वा ॥

( सुबोधिनी )–ऊदितो वा ॥ ऊत् इद्यस्य स ऊदित् तस्माद् । अनपीति षण्णां लेट्लिङ्लुट्लृट्लङ्लुङां लकाराणामन्येषामपीत्यादिप्रत्ययानां च संज्ञा । अपप्रत्यय-विषयताभावात् ॥

( तत्त्वदी० )–ऊदितो वा ॥ ऊत् इद्यस्य स ऊदित् तस्मात् ॥

( स्वरतिसूतिसूयतिधूञूरधनशतृप्हप्द्रुहमुहस्नुहस्निहां च स्वरतिसूतिसूयतिधूञां किद्वसादेर्णादोर्नित्यमिद स्यात् । सेधति । सेधेत् । सेधतु–सेधताद्वा । असेधत् । सिषेध । सिषेधिथ ॥

( सुबोधिनी )—**स्वरतिसूतिसूयतिधूञूरधनशतृपदृपद्रुहमुहस्नुहस्निहां च** ॥ एभ्योऽपि परस्य वसादेरनपीड्वा ॥ स्वृ शब्दोपतापयोः भ्वादिर्गृह्यतेऽव्विकरणत्वात् ॥ षूङ् प्राणिगर्भविमोचने आदादिको दैवादिकश्च गृह्यते न तु षूङ् प्रेरणे तौदादिकः ॥ धूञ् कम्पने स्वादिस्थः क्र्यादिस्थश्च न तु धू विधूनने सानुबन्धनिर्देशात् ॥ रध हिंसासंराद्ध्योः ॥ णश अदर्शने ॥ तृप प्रीणने ॥ दृप हर्षमोहनयोः ॥ द्रुह जिघांसायाम् ॥ मुह वैचित्ये ॥ ष्णुह उद्गिरणे ॥ ष्णिह प्रीतौ ॥ **स्वरतिसूतिसूयतिधूञां किद्वसादेर्णादेर्नित्यमिट्** ॥ एभ्यः परस्य कितो वसादेर्णादेर्नित्यमिड् भवति। स्वरत्यादिविकल्पं बाधित्वा किति इतीण्निषेधे प्राप्ते क्रादिनियमादिड्विधिः ॥

( तत्त्वदी० )—वाशब्दस्य व्यवस्थावाचित्वादाह—**स्वरतीत्यादि** ॥

**तथोर्धः ॥ झभान्ताद्धातोस्तकारथकारयोर्धकारो भवति दधातेर्न ॥ झबे जबाः। सिषेद्ध। सेधिता—सेद्धा। सेधिष्यति-सेत्स्यति। असेधिष्यत्—असेत्स्यत्। असेधीत् ॥**

( सुबोधिनी )—**तथोर्धः** ॥ तश्च थ् च तथौ तयोः। आदिजबानामित्यतो झभान्तस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यते ॥ झभान्तात् किम्। भूतः ॥ दधातेर्न। डुधाञ् धारणादावस्मात् परयोस्तथोर्द्धो न। धत्तः ॥

( तत्त्वदी० )—**तथोर्ध** इति ॥ तश्च थ् च तथौ तयोः ॥ वेत्यनुवृत्तेर्दधातेर्निषेधः। यद्वा तथोऽधः इति। तत्र तश्च थ् च एतयोः समाहारः तथ् तस्य तथः। अध इति दधातेर्नेत्यर्थः। आदिजबानामित्यतो झभानुवृत्तिः ॥

**अनिटोऽनामिवतः ॥ अनिटोऽनामिवतश्च धातोर्वृद्धिः स्यात्पे परे सौ ॥ असैत्सीत् ॥**

( सुबोधिनी )—**अनिटोऽनामिवतः** ॥ द्वयमिदं धातोर्विशेषणम्। यद्यपि धातुः सर्वोऽप्यनिडेव तस्य इड्विधानाभावात्। तथापि न इट् यस्मात् तस्मात्परस्य तादिप्रत्ययस्येति व्याख्येयम्। अनिटो धातोरुपधाभूतस्य नामिनो वृद्धिर्भवति पे. सौ। नाम्यन्तस्य तु धातोर्नामिन इति सूत्रेणैव वृद्धिः। कार्यातिदेशोऽयम्। नामि विद्यतेऽस्येति नामिवान् तस्य। तडिदादित्वाद्वतुः ॥

( तत्त्वदी० )—**अनिटोऽनामिवत** इति ॥ अनिटः अनामिवत इति छेदः। नन्वनिट्त्वं धातुमात्रस्यैव। न हि कस्यापि धातोरिड्विधीयते किं तु प्रत्ययस्यैव। तस्मादनिट इति व्यर्थमिति चेत्सत्यम्। न इट् यस्मात्परस्य प्रत्ययस्येति व्याख्यानात्। तथापीडभावः कस्य प्रत्ययस्य ग्राह्यः। तादेरिति गृहाण। णादेस्तु क्राद्यष्टादशातिरिक्तात्परस्य सेट्त्वात्। अश्च नामी च अनामिनौ तौ स्तोऽस्यानामिवान् तस्य। द्वद्वान्ते श्रूयमाणस्य वतोः प्रत्येकमन्वय इत्याशयेनाह—**अवतो** नामिवत इति। यद्यपि पूर्वेणाकारनामिनोः प्राप्तिस्तथाप्यनुपधाभूताकारस्योपधाभूतनामिनश्चाप्राप्तावारम्भः। नन्वत्र

मान्तोपधत्वाभावात्कथं वतुरिति चेत्सत्यम्। अन्यतोऽपि वतुर्भवतीत्यनेनैव ज्ञाप्यते। तेन तडित्वानित्यादि सिद्धमिति। अथ तथाप्यनामिन इत्येवास्तु किं वतुना इति चेन्न। नञ्समासभ्रमप्रसंगात्। मत्वर्थीयाद्विरूपो मत्वर्थीयो भवतीत्यनेन ज्ञाप्यते। तेन हस्तिमती शालेत्यादि सिद्धम्। अथानिट इत्येवास्तु स्वरादेरित्यतः स्वरस्यानुवृत्तेस्तस्य च मत्वर्थीयाकारान्तत्वेन ग्रहणात्स्वरवतोऽनिटो धातोः सिर्णित्कार्यकृदित्यर्थलाभात्। यद्वा णित्कार्यं वृद्धिरेव सा च स्वरस्यैवेति स्वरलाभात्। पूर्वेणाप्राप्तस्यैव स्वरस्य भविष्यतीत्यर्थादनुपधाभूताकारस्योपधाभूतनामिनश्च वृद्धिर्भविष्यतीत्यर्थो लभ्य एवेति चेत्सत्यम्। नामिवद्ग्रहणस्योत्तरार्थत्वादित्यलं पल्लवितेन।

**झसात्॥ झसादुत्तरस्य सेर्लोपो झसे॥ असैद्धाम्, असैत्सुः। असैत्स्व, असैत्स्म॥ खद स्थैर्ये हिंसायां च॥ खदति। खदेत्। खदतु-खदताद्वा। अखदत्॥**

( सुबोधिनी ) **झसात्॥** लोपो ह्रस्वादित्यतो लोपो झसे इत्यनुवृत्तं सेरिति सूत्रं च॥ झसात्किम्। अचेष्ट॥ झसे किम् असैत्सीत्॥ इट्पक्षे असेधीत्॥ खद स्थैर्ये हिंसायां च। चाद्भक्षणे। स्थिरस्य भावः स्थैर्यम्। ण्यः॥

( तत्त्वदी० )-**झसा**दिति॥ सेरित्यस्यानुवृत्तिः लोपो ह्रस्वादित्यतो लोपस्य॥ झसात्किम्। अचेष्ट॥ झसे किम्। अरौत्सुः॥ सेः किम्। अरुधतामित्यत्र ध्वस्य मा भूत्। अत्र लोपो ह्रस्वझसाज्झसेरिति पठितुं युक्तम्॥

**अत उपधायाः॥ धातोरुपधाया अतो वृद्धिः ञ्णिति॥ चखाद॥**

( सुबोधिनी )-**अत उपधायाः॥** आदिस्वरस्येत्यतो ञ्णितीति वृद्धिरिति चानुवृत्तम्॥ अतः किम्। तुतोद॥ उपधायाः किम्। गणयति॥

( तत्त्वदी० )-**अत उपधाया** इति॥ आदिस्वरस्य ञ्णिति चेति वृद्धेरनुवृत्तिः। अत्रात इति योगं विभज्यादन्तस्य च धातोर्वृद्धिस्तेन अज्ञापयति इत्यादि सिद्धमिति। पुनरुपधाया इत्यत्र नाम्न इति योजनीयम्। तेन नाम्न उपधाया वृद्धिरिति व्याख्येयमिति त्वादयतीत्यादिसिद्धिरिति। पुनरुभयोर्मेलनात् धातोरुपधाया अतो वृद्धिरिति॥ ञ्णिति किम्। पक्ता॥ उपधायाः किम्। ततक्ष॥ धातोः किम्। जगतोऽयम् जागतः अत्र परत्वादादिवृद्धिं बाधित्वा उपधावृद्धिः प्रसज्येत। गार्ग्यो जगादेत्यादावादिवृद्ध्युपधावृद्ध्योरवकाशः॥

**( णबुत्तमो वा णित् ) चखाद-चखद॥ णित्पे॥ पेसिर्णित्॥**

( सुबोधिनी )-**णबुत्तमो वा णित्॥** उत्तमपुरुषसंबन्धी णब् वा णित्॥ पे सिरित्यनुकृष्यते। पे परे सिर्णिद्भवति ण् इत् यस्य स णित् अणितं णिदित्याह कार्यातिदेशोऽयम्॥

( तत्त्वदी० )-**णित्पे** इति॥ ण् इद्यस्य स णित्। अणितो णित्करणाण्णिद्वदिति गम्यते। तथा च। अन्यशब्दोऽन्यत्र प्रयुज्यमानोऽपि विनापि वतिं वत्यर्थं गमयति। प्राधान्याच्च कार्यातिदेशोऽयम्। तथा च।

णितां यत्कार्यमत उपधाया इत्यादिना वृद्ध्यादि तदतिदिश्यते । यद्यपि णितां णबादीनामातो णब्डावित्यादिना विहितम् अबाद्यपि णित्कार्यं तथापि तन्नात्रातिदिश्यते कार्यविशेषत्वात् । सामान्यातिदेशोऽयम् । णबिणादयस्तु णिद्विशेषाः । यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यत्र यद्वसिष्ठे गौतमे च तन्नातिदिश्यते किं तु ब्राह्मणसामान्यत्वस्य । तथात्रापि णिति यत् दृष्टं कार्यं तददतिदिश्यते ॥

## ( अतो हसादेर्लघोर्वा वृद्धिः सेटि सौ ) अखदीत्–अखादीत् ॥

**गद् व्यक्तायां वाचि ॥**

( सुबोधिनी )–**अतो हसादेर्लघोर्वा वृद्धिः सेटि सौ ॥** हसादेर्लघोरकारस्य वा वृद्धिः स्यात् सेटि परस्मैपदे सौ ॥ अतः किम् । अदेवीत् ॥ हसादेः किम् । मा अतीत् ॥ लघोः किम् । अगर्दीत् ॥ सेटि किम् । अपाक्षीत् ॥ पे किम् । अयतिष्ट ॥ बद स्थैर्ये । पवर्गीयादिः ॥

( तत्त्वदी० )–**अतो हसादे**रिति ॥ अत इत्यस्यैव विशेषणद्वयम् । हस आदिर्यस्य स हसादिस्तस्य ॥ हसादेः किम् । मा भवानतीत् ॥ लघोः किम् । अनन्दीत् ॥ यद्यचकाशीदित्यत्र चकाराद्कारस्य वृद्धिवारणाय येन नाव्यवधानमिति न्यायेन यद्येकवर्णव्यवधानमाश्रीयते तदा त्वरक्षीदित्यत्रापि प्रसक्त्यभावाल्लघोरिति न कर्तव्यमिति केचित् । एतच्च अत उपधाया इत्यत्र नो वेत्यतो वानुवृत्त्या लभ्यते । एवमन्यत्रापि वृद्धिनिषेधविकल्पयोरिदमेव मूलमूह्यम् ॥

## ( प्रादिस्थान्निमित्तान्नेर्नस्य णो गदनदपदपतअपिदाधास्थामाङ्मेङ्स्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु )

( सुबोधिनी )–**प्रादिस्थान्निमित्तान्नेर्नस्य णो गदनदपदपतअपिदाधास्थामाङ्मेङ्स्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु ॥** प्रादिषु तिष्ठतीति प्रादिस्थः तस्मात् निमित्तात् षकाररेफऋवर्णरूपात् परस्य नेर्णत्वं गदादिषु परेषु ॥ गद व्यक्तायां वाचि । णद अव्यक्ते शब्दे । पद गतौ । पत्लृ पतने । एषां चतुर्णामपा निर्देशाद्यङ्लुकि णत्वं न । प्रनिजागदीति प्रनिनानदीति ॥ अपिदेति चत्वारः डुदाञ् दाने । प्रणिददाति । दाण् । प्रणियच्छति । दो प्रणिद्यति । देङ् प्रणिदयते ॥ धारूपौ द्वौ । धेट् । प्रणिधयति । डुधाञ् । प्रणिदधाति ॥ ष्ठा गतिनिवृत्तौ । माङ् माने । मेङ् प्रणिदाने । षो अन्तकर्मणि । हन् हिंसागत्योः । या प्रापणे । वा गतिगन्धनयोः । द्रा कुत्सायाम् । प्सा भक्षणे । टुवप् बीजतन्तुसन्ताने । वह प्रापणे । शमु उपशमे । चिञ् चयने । दिह उपचये स्यत्यादीनामेकादशानां श्तिपा निर्देशाद्यङ्लुकि णत्वं न । प्रनिसासेति । प्रनिजंघनीतीति ॥

( तत्त्वदी० )—प्रादिस्थादिति ॥ प्रादिषु तिष्ठतीति प्रादिस्थम् तस्मात् निमित्तात् णत्वनिमित्तात् षकाररेफऋवर्णरूपात् नेरुपसर्गस्य नस्य णत्वमित्यर्थः । गदादिषु धातुषु परेषु ॥ यत्तु नेर्णत्वमित्येतावन्मात्रं वासुदेवेनोक्तं तन्न निगदतीत्यादावतिव्याप्तिः । विनिगदतीत्यत्र च ॥

**( अन्यत्राकखादावषान्ते आद्योच्चारणे वा ) अकखादौ किम् । प्रनिकरोति । प्रनिखादति ॥ अषान्ते किम् । प्रनिद्विष्यति ॥ वेति किम् । प्रणिभवति । प्रनिभवति ॥ आद्योच्चारणे किम् । प्रनिचकार । प्रनिचखाद । प्रणिगदति । अगदीत् ॥ रद विलेखने । रदति । रदेत् । रदतु । अरदत् । रराद ॥**

( सुबोधिनी )—अन्यत्राकखादावषान्ते आद्योच्चारणे वा ॥ आदौ भवा आद्याः । अद्यानां पाणिनिकात्यायनपतञ्जलीनामुच्चारणमाद्योच्चारणं तस्मिन् । कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे प्रादिस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा । कश्च खश्च कखौ तावादी यस्य स कखादिः कखादेरन्योऽकखादिस्तस्मिन् । षोऽन्तो यस्य स षान्तस्तस्मादन्योऽषान्तस्तस्मिन् । अकखादौ किम् । प्रनिचकार प्रणिचखाद ॥ अषान्ते किम् । प्रनिपेक्ष्यति ॥ रद विलेखने । विलेखनं भेदनम् ॥

( तत्त्वदी० )—अन्यत्रेति ॥ अन्यत्र वा अन्यस्मिन् धातौ परे प्रादिस्थनिमित्तपूर्वकस्य नेर्णत्वं वेत्यर्थः । आद्योच्चारणे प्रथमोच्चारणसमये अकखादौ अषान्ते च । कश्च खश्च कखौ तावादी यस्य स कखादिः कखादेरन्योऽकखादिस्तस्मिन् । षः अन्ते यस्य स षान्तस्तस्मिन् । आद्योच्चारणे इत्युभयत्रान्वेति । तथा चायमर्थः । आद्योच्चारणे कादिखादिषान्तवर्जगदनदादेरन्यस्मिन् धातौ परे प्रादिस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा भवति । प्रणिभवन्ति । प्रनिभवन्ति ॥ अकखादौ किम् । प्रनिकरोति । प्रनिखादति ॥ अषान्ते किम् । प्रनिपिनष्टि ॥ **विलेखने** इति ॥ विलेखनं भेदनम् ॥

**लोपः पचां कित्ये चास्य ॥ पचादीनां लिटचनादेशादीनां पूर्वस्य लोपो भवत्यकारस्य एकहसमध्यस्थस्य चैकारः किति णादौ सेटि थपि च ॥ रेदतुः । रेदिथ ॥ णद अव्यक्ते शब्दे । प्रणिनेदुः । नेदिथ ॥ अर्द गतौ याचने च ॥ आम्वोर्णादौ ॥**

( सुबोधिनी )—लोपः पचां कित्ये चास्य ॥ पचामिति बहुवचनेन पचप्रकारा धातवो गृह्यन्ते । यथा पचधातुरेकहसमस्थाकारवान् लिटि अनादेशादिश्च तथान्येऽपि धातवः ॥ अस्य किम् । दिदिवतुः । ररासे ॥ अनादेशादीति किम् । चकणतुः ॥ एकशब्दोऽत्रासहायवचनः । एकौ च तौ हसौ च एकहसौ तयोर्मध्यस्थः एकहसमध्यस्थस्तस्य ॥ एकहसेति किम् । तत्सरतुः । त्सर छद्मगतौ ॥ आम्वोर्णादौ ॥

( तत्त्वदी० )–लोपः पचामिति॥ पचामिति बहुवचनेन पचप्रकारा धातवो गृह्यन्ते । तथा पच्धातुरेकहसमध्यस्थाकारवान् लिटि अनादेशादिश्च तथान्योऽपि धातुरिति । तथा च पप्रच्छतुरित्यत्र एकहसमध्यस्थत्वाभावान्नैत्वलोपौ ॥ अनादेशादेः किम् । चखनतुः । लिट्यनादेशविशेषणात् नेमिथ । सेहे ॥ अस्य किम् । दिदिवतुः ॥

**नुगशाम् ॥ अश्नोतेर्ऋकारादेर्हसान्तस्य संयोगान्ताकारादेश्च पूर्वस्य नुग्भवति णादौ ॥ आनर्द । आर्दीत् ॥ नर्द गर्द शब्दे ॥ तर्द हिंसायाम् । तर्दति॥ कर्द कुत्सिते शब्दे । कर्दति ॥ खर्द दन्दशूके । खर्दति ॥क्रादि चेष्टायाम् ॥ क्लिदि परिदेवने । क्लिन्दति ॥ अत सातत्यगमने । आतिथ। खाद्द भक्षणे। अखादीत् ॥ ऋादि आह्वाने रोदने च ॥ अति अदि बन्धने । अन्तति । अन्तेत् । अन्ततु । आन्तत् । आनन्त । आनन्द । अन्द्यात् । अन्दिता । अन्दिष्यति ।आन्दिष्यत् । आन्दीत् ॥ टुणदि समृद्धौ । ननन्द ॥ चदि आह्लादने दीप्तौ च । इदितो नुम् । चन्दति । चन्देत् । चन्दतु । अचन्दत् । चचन्द । चन्द्यात् । चन्दिता । चन्दिष्यति । अचन्दिष्यत् ।अचन्दीत्॥ शुन्ध शुद्धौ । शुन्धति । शुन्धेत् । शुन्धतु । अशुन्धत् । शुशुन्ध ।शुध्यात्। शुन्धिता । शुन्धिष्यति । अशुन्धिष्यत् । अशुन्धीत् ॥ तक्क कक्क हसने॥ तकि कृच्छ्र जीवने।तङ्कति । ततङ्क । अतङ्कीत् ॥ शुक गतौ । शोकति । अशोकीत् ॥ बुक्क भषणे । बुक्कति ॥ कष हसने । कषति ॥ युगि जुंगि वर्जने युङ्गति ॥ इदि परमैश्वर्ये । इन्दति ॥**

( सुबोधिनी )–नुगशाम् ॥ अशूङ् व्याप्तौ । अशामिति बहुवचनमाद्यर्थम् । संयोगोऽन्तो यस्य स संयोगान्तः स्वर आदिर्यस्य स स्वरादिः संयोगान्तश्चासौ स्वरादिश्च संयोगान्तस्वरादिस्तस्य ॥ अत सातत्यगमने । सततस्य भावः सातत्यम् सातत्येन गमनं सातत्यगमनं तस्मिन् ॥ खाद्द भक्षणे । ऋदित्वान्न रित इत्यङ्कार्यं न । अचखादत् ॥ टुणदि समृद्धौ । टु इति द्वितोऽथुरित्यथुप्रत्ययार्थः । नन्दथुः ॥ इदित्वान्नस्य लोपो न । नन्द्यात् ॥ चदि आह्लादने दीप्तौ च । हर्षे तेजसि चेत्यर्थः ॥ क्लिदि परिदेवने । परिदेवनं शोकः ॥ इदि परमैश्वर्ये । ईश्वरस्य भाव ऐश्वर्यम् । ष्यः ॥ परा उत्कृष्टा मा लक्ष्मीर्यस्य तत् परमं परमं च तदैश्वर्यं च परमैश्वर्यं तस्मिन् ॥

( तत्त्वदी० )–नुगशामिति ॥ अशामिति बहुवचनेनैतत्सर्वं लब्धमित्याह–ऋकारादेरित्यादि ॥

**स्वरादेः ॥ स्वरादेर्धातोर्द्वितीयोऽडागमो भवति दिबादा परे ॥ अइए। एऐऐ। ऐन्दत ॥**

( सुबोधिनी )—स्वरादेः ॥ दिवादावडित्यनुवृत्तम् । स्वर आदिर्यस्य सः स्वरादिस्तस्य । आरम्भसामर्थ्यात् द्वितीयोऽडित्यर्थः । अटं विना स्वरादित्वमिह विवक्षितमन्यथा दिवादावडित्यग्रे अटि चेति सूत्र्यताम् ॥

( तत्त्वदी० )—स्वरादेरिति ॥ अत्राटं विना स्वरादित्वं बोध्यम् विधानसामर्थ्यात् । अन्यथा दिवादावडित्यस्याग्रेऽट्चेति सूत्रितेन द्वितीयाटः संभवात् । यत्तु वासुदेवेन । आद्योच्चारणे स्वरादेः । अन्यथा सर्वस्यैव प्रथमाटा स्वरादित्वादव्यावृत्तेरित्युक्तम् । तन्न । औष्ट ऐज्यत इत्यादावप्रसङ्गात् ॥ द्वितीय इति । विधानसामर्थ्यात् प्रथमाबाधेन भवतीत्याशयः । करणसामर्थ्यादिकेनाटा धातुकार्यानन्तरं द्वितीयेन कार्यमित्याह ॥ ए ऐ ऐ ॥

**कासादिप्रत्ययादाम् कृसभूपरः ॥ कास् आस् दय अय गुरुनाम्याद्यनेकस्वरेभ्यो णबादौ परे आम् प्रत्ययो भवति । स च कृ अस् भूपरः प्रयोक्तव्यः ॥**

( सुबोधिनी )—कासादिप्रत्ययादाम् कृसभूपरः ॥ कासृ शब्दकुत्सायाम् । आस उपवेशने । दय दाने । अय गतौ । गुरुश्चासौ नामी च गुरुनामी स आदिर्यस्य स गुरुनाम्यादिर्धातुः । प्रत्ययग्रहणमनेकस्वरोपलक्षकम् । एभ्य आम् प्रत्ययः स्यात् । कीदृशः कृसभुवः परे यस्मात्स कृसभूपर इत्यर्थकथनेन विपर्यासव्यवहितयोर्निवृत्तिः कथिता । कथं तर्हि तं 'पातयां प्रथमास पपात पश्चात्' । 'प्रभ्रंशयां यो नहुषं चकार' इत्यादिप्रयोगाः । प्रमादत एव । कृसभुवां क्रियासामान्यवाचित्वादाम्प्रकृतीनां क्रियाविशेषवाचित्वात् तदर्थयोरभेदान्वयो भवति । सामान्यविशेषयोरभेदान्वयो लोकतः सिद्धोऽस्ति । एवं च इन्दांचकार । इन्दांबभूवेत्यादौ एककर्तृकाभूतानद्यतनपरोक्षा परमैश्वर्याभिन्नक्रियेति तुल्यो बोधः । ननु करोतिः सकर्मकः भवतिस्त्वकर्मकः । कथं द्वयोस्तुल्यबोध इति चेदत्राहुः । यदा हि करोतिरुत्पादनार्थकः स्वातन्त्र्येण प्रयुज्यते । तदा तस्य नियमेन सकर्मकत्वं भवति । घटं चक्रे । राज्यं चकारेत्यादौ । यदा तु क्रियान्तरसमानाधिकरणः करोतिः प्रयुज्यते तदा यत्समानाधिकरणः करोतिस्तत्सकर्मकत्वाकर्मकत्वाभ्यां कृत्वा स्वयमपि तथा सकर्मकाकर्मकभावौ भजते । जुहवांचकारेति । एवं भ्वस्त्योरप्याम्प्रकृतिसमानाधिकरणत्वेन क्वचित्सकर्मकत्वं बोध्यम् । तथा च ' तस्यातपत्रं बिभरांबभूव ' इति माघः ॥ ' तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे ' इति श्रीहर्षश्च ॥ इत्यत्र क्रियान्तरसमानाधि करणाद्भवतेः सकर्मकत्वात् कर्मणि लिट् । एवं चाम्प्रकृत्यर्थगतकारकसंख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति ॥ गुरुनाम्यादि किम् । इयेष ॥ अनेकस्वरेति किम् । अ इवाचचारेति औ इत्यत्र प्रत्ययान्तत्वेऽप्यनेकस्वरत्वाभावादाम् न ॥

(तत्त्वदी० )—कासादीति ॥ गुर्वो नामी स आदिर्यस्य स गुरुनाम्यादिः । प्रत्ययग्रहणमनेकस्वरोपलक्षकम् । तेन अ इवाचचार औ इत्यत्र प्रत्ययान्तत्वेऽप्यनेकस्वरत्वाभावान्नाम् ॥

**( विददरिद्राजागृषां वा ) रः ॥ पूर्वस्य ऋवर्णस्याकारः ॥**

( सुबोधिनी )–**विददरिद्राजागृषां वा ॥** एभ्यो वाऽऽम्। दरिद्राजागर्त्योरनेकस्वरत्वान्नित्यप्राप्तौ वेत्त्योषत्योश्चाप्राप्तौ विकल्पः। विद् ज्ञाने। दरिद्रा दुर्गतौ। जागृ निद्राक्षये। उष दाहे। आमो मस्य नेत्वम्। आस्कासोराम्विधानात् ज्ञापकात् ॥ रः ॥ ऋ अः इति छेदः पूर्वस्य हसादिः शेष इत्यतः पूर्वस्येत्यनुवृत्तम् ॥

( तत्त्वदी० )–अत्रोदितो वेत्यतो वानुवृत्तेराह–**विददरिद्राजागृषां** वेति ॥ दरिद्राजागर्त्योरनेकस्वरत्वान्नित्यप्राप्तौ वेत्त्योषत्योश्चाप्राप्तौ विकल्पः ॥ र इति ॥ ऋ अः इति छेदः। 'पूर्वस्य हसादिः शेषः' इत्यतः पूर्वस्येत्यनुवर्तते। यत्तु वासुदेवेन णबादौ पूर्वस्येत्यनुवर्तत इत्युक्तम्। तन्न। र इत्यत्राख्यातपादस्थे णबादाविति अस्मात्कृत्पादस्थादनुवृत्त्यसंभवात् ॥

**धातोर्नामिनः ॥ नाम्यन्तस्यादन्तस्य च धातोर्वृद्धिः ञ्णिति परे ॥ इन्दांचकार, इन्दांचक्रतुः, इन्दांचक्रुः। इन्दांचकर्थ। इन्दामास, इन्दामासतुः, इन्दामासुः। इन्दांबभूव। इन्द्यात्। ऐन्दीत् ॥ णिदि कुत्सायाम्। इदितो नुम्। प्रपूर्वः। प्रणिन्दति। प्रनिन्दति। प्रनिन्देत्। प्रणिन्दतु। प्राणिन्दत्। निनिन्द। निन्द्यात्। निन्दिता। निन्दिष्यति। अनिन्दिष्यत्। अनिन्दीत् ॥ दघि पालने। दद‌ङ्घ ॥ उख गतौ। अप् कर्तरि। उपधालघोर्गुणः। ओखति। ओखेत्। ओखतु। औखत् ॥**

( सुबोधिनी )–**धातोर्नामिनः ॥** आदिस्वरस्येत्यतो वृद्धिरिति ञ्णितीति चानुवृत्तम्। अत्र हि स्वरस्येति पदमनुवृत्य वाक्यभेदेन व्याख्येयम्। तेन स्वरान्तस्य धातोर्वृद्धिः ञ्णिति। तेन श्वानमाचष्टे शावयति। विद्वांसं विदावयतीत्यादि सिद्धम्। अदन्तस्येति अत उपधाया इत्यत्रात इति योगविभागात्तस्येहाकर्षणाद्वा लब्धम्। तेन च अङ्कापयतीत्यादि सिद्धम् ॥

( तत्त्वदी० )–**धातोर्नामिन** इति ॥ आदिस्वरस्येत्यतो वृद्धिरिति ञ्णितीति चानुवर्तते ॥ धातोः किम्। आत्रेयः। नात्रादिवृद्धिर्बाधिका। नापि यस्य लोपः। उभयोरन्यत्र सावकाशत्वादत्र परत्वादन्त्यवृद्धिरेव स्यात्। तथाहि। आदिवृद्धेरवकाशः आश्वयुज इत्यत्र। अन्त्यवृद्धेः निनाय। इहोभयप्रसङ्गे परत्वादन्त्यवृद्धिरेव अतो धातोरित्युक्तम्। अथैवमग्निभुवोऽपत्यमाग्निभव इत्यत्रान्त्यवृद्धिः प्राप्नोति भुवो धातुत्वादिति चेत्। शृणु। धातोरित्येवंशब्देन विहिते णिति वृद्धिरिति व्याख्येयम्। अत्र तु नाम्नो विहितोऽण् न तु धातोः। एवं चाग्निभुवमिच्छतीति वाक्ये नाम्नो य ईचास्येति यः। ततः क्विप्। अल्लोपयलोपौ। तस्यापत्यमाग्निभव इत्यत्रापि न भवति। नामशब्देनात्राणो विधानात्। अथात्रादिस्वरस्येत्यतः स्वरस्येत्यनुवर्त्य स्वरान्तस्य धातोरिति व्याख्येयम्। मैवम्। स्वरसहचरितादिशब्दस्याप्यनुवृत्तिप्रसंगात्। दरिद्रावित्यादावतिव्याप्तेः। स्वरमात्रानुवृत्तौ तु गणयतीत्यादावन्त्यवृद्धेर्दुर्वारत्वात्। न चात्र यत इति लोपो बाधकः तस्यानपि सामान्ये विहितत्वेनास्यानपि विशेषे ञ्णिति विहि-

तत्वादपवादत्वात् ॥ **इन्दामासेति** ॥ कृसभूपर इत्यत्र पृथग्ग्रहणादस्तेर्भूभावो न । अन्यथा हि कृभूपर इत्येवोच्येत । आमो मस्येत्वमास्कासोर्विधानान्न । अन्यथा मित्त्वादन्त्यस्वरात्परत्र विधानादास्कासोः सकारात्पूर्वविधाने सवर्णदीर्घत्वे वैलक्षण्याभावात् ।

**( असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ ) उवोख, ऊखतुः, ऊखुः । उवोखिथ । औखीत ॥ लुञ्च अपनयने ॥ अञ्चु गतिपूजनयोः । अञ्चति । अञ्चेत् । अञ्चतु । आञ्चत् । आनञ्च । अच्यात् । पूजायां अञ्च्यात् । अञ्चिता । अञ्चिष्यति । आञ्चिष्यत् । आञ्चीत् ॥ आछि आयामे । आञ्छति । आञ्छेत् । आञ्छत् ॥**

( सुबोधिनी )—**असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ** ॥ धातोः पूर्वस्येवर्णोवर्णयोरियुवौ भवतः असवर्णे स्वरे । पूर्वं द्वित्वं पश्चादुकारस्योपधाया लघोरिति गुणे कृते पूर्वस्योव् । उवोख । क्त्वाद्गुणाभावे ऊखतुः । अत्र उ उख् अतुस् इति स्थिते पर्जन्यवल्लक्षणप्रवृत्तिरिति न्यायात् पूर्वस्य ह्रस्वस्यापि ह्रस्वे कृते सवर्णदीर्घः । ततो 'ह्रस्वः' इति पुनर्ह्रस्वो न । लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते इत्युक्तत्वात् । नुगशामिति नुक् । आनञ्च । गतौ नो लोप इति नो लोपः । अच्यात् । आछि आयामे । आयामो दैर्घ्यम् ॥

**( आञ्छेर्नुग्वा णादौ ) आञ्छ आनाञ्छ ॥ हुर्छा कौटिल्ये ॥**

( सुबोधिनी )—**आञ्छेर्नुग्वा णादौ** ॥ आञ्छेः पूर्वस्य नुग् वा णादौ परे। नुगशामिति नित्ये प्राप्ते विकल्पः ॥

**य्वोर्विहसे ॥ हूर्छति । हूर्छेत् । जुहूर्छ । हूर्छ्यात् । हूर्छिता । हूर्छिष्यति । अहूर्छिष्यत् । अहूर्छीत् ॥ युच्छ प्रमादे । युच्छति ॥ वज गतौ ॥**

**( शसददवादिगुणभूताकाराणां नैत्वपूर्वलोपौ ) ववाज । ववजतुः । अवाजीत् ॥ व्रज गतौ । व्रजति । व्रजेत् । व्रजतु । अव्रजत् । वव्राज । व्रज्यात् । व्रजिता । व्रजिष्यति । अव्रजिष्यत् ॥**

( सुबोधिनी )—**शसददवादिगुणभूताकाराणां नैत्वपूर्वलोपौ** ॥ एषामेत्वपूर्वलोपौ न । शसु हिंसायाम् । दन्त्यान्तः । दद दाने । वकारो दन्तौष्ठ्यः आदौ यस्य स वादिः । गुणशब्देन भूत उत्पादितः गुणभूतः गुणभूतश्चासौ अकारश्च गुणभूताकारः शशरतुरित्यादौ गुणशब्देन क्रियमाणोऽर् तदवयवोऽकारः । लुलवियेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽकारस्तस्यैत्वपूर्वलोपौ न ॥

( तत्त्वदी० )-शसद्देति ॥ शशप्लुतगताविति तालव्यान्तस्य ग्रहणमिति कश्चिद्भ्राम तद्भाष्यविरोधादुपेक्ष्यम् ॥ गुणभूतेति ॥ गुणो भवतीति गुणशब्देन भावितो योऽकारस्तस्येत्यर्थः । तथा च शशरतुरत्रापि गुणे कृतेऽवयवस्यास्य न । लुलविथेत्यत्र ओकारे गुणे तस्यापि तदवयवस्यास्य न । गुणभूतत्वं साक्षात्परम्परासाधारणम् । तेनोक्तप्रयोगद्वयनिर्वाहः एतच्च लोपः पचामिति सूत्रे चकारादधिकाराल्लभ्यते ॥

**( वदिव्रज्योः सौ नित्यं वृद्धिः )** अव्राजीत् ॥ **अज गतौ क्षेपणे च । अजति । अजेत् । अजतु । आजत् ॥**

( सुबोधिनी )-**वदिव्रज्योः सौ नित्यं वृद्धिः** ॥ एतयोर्नित्यं वृद्धिः सौ परे ॥ अतो हसादेरिति विकल्पप्राप्तौ नित्यविधानम् ॥

( तत्त्वदी० )-**वदिव्रज्योरिति** ॥ अतो हसादेरिति विकल्पप्राप्तौ नित्यम् ॥

**( अजेरचतुर्षु वीवसादौ वा )** विवाय ॥

( सुबोधिनी )-**अजेरचतुर्षु वीवसादौ वा** ॥ अजेर्वीत्यादेशोऽनपि वसादावनपि तु वा ॥ गुरुत्वात् सर्वादेशः ॥

**नुधातोः ॥ विकरणस्य नोर्धातोश्चेवर्णोवर्णयोरियुवौ स्वरे । अनेकस्वरस्यासंयोगपूर्वस्य तु य्वौ ॥**

( सुबोधिनी )-**नुधातोः** ॥ य्वोर्धातोरिति सूत्रं य्वौ वेति चानुवृत्तम् । क्नुप्रत्ययसंबन्धिनो नु इत्यस्य न ग्रहणं निरनुबन्धकग्रहणे न सानुबन्धकस्येत्युक्तत्वात् । णु स्तुताविति धातोरपि न कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमिति परिभाषितत्वात् परिशेषात् नु इत्यस्य विकरणस्य ग्रहणम् । नुप्रत्ययान्तस्य धातोश्चेवर्णोवर्णयोरियुवौ । अनेकस्वरस्यासंयोगपूर्वस्य तु नोर्द्धातोश्चेवर्णोवर्णयोर्य्वौ धातोर्विहिते स्वरादौ परे । शक्नुवन्ति । शिश्रियतुः । ब्रुवन्ति । असंयोगपूर्वस्यानेकस्वरस्य तु सुन्वन्ति । निन्यतुः । जुह्वति ॥ अनेकस्वरस्येति किम् । रियति । पियति । रि पि गतौ । रुवन्ति । नुप्रत्ययान्तस्यानेकस्वरत्वाव्यभिचारात् प्रत्युदाहरणं न ॥ धातोर्विहिते इति किम् । सुधीशौ ॥

( तत्त्वदी० )-**नुधातोरिति** ॥ य्वोर्धातोरिति य्वौ वेति च पूर्वसूत्रद्वयमनुवर्तते । अत्र च धातोर्विहिते स्वरादौ परे इति बोध्यम् । तेन सुधीशावत्र पदादिस्वरे न । त्रस्तत्रे ह्यत्र ( ? ) क्नोरपि न ग्रहणं नुग्रहणेन निरनुबन्धकग्रहणे न सानुबंधकस्येति पारभाषया विकरणस्यैव नोर्ग्रहणात् । णु स्तुताविति धातोरपि न ग्रहणं कृत्रिमत्वात् ॥

**( उवर्णान्तेषु हुन्वोरेवापि )** विव्यतुः ॥

( सुबोधिनी )-**उवर्णान्तेषु हुन्वोरेवापि** ॥ अपि अब्विषये चतुर्षु अनेकस्वरस्यासंयोगपूर्वस्य धातोरुवर्णस्य वत्वं न । हुन्वोरेव वत्वं चतुर्षु । अनपि तु जुहुवतुः । विव्यतुरित्यत्र य्वोर्विहसे इति दीर्घो न यत्वस्यासिद्धत्वात् ॥

( तत्त्वदी० )–उवर्णान्तेषु ह्नुवोरेवापीति ॥ हु दानादनयोः । नोर्विकरणस्य अपि अत्रविषये इत्यर्थः । तेन जुहुति चिन्वतीत्यत्रैव न तु बोभुवतीत्यत्रापि । एतच्चानुवृत्त्या लभ्यते ॥

**( स्वरान्तादत्वतश्च तादौ नित्यानिटस्थपो वेट् ) विवयिथ । विवेथ । आजिथ । विव्यथुः । विव्य । आजिव । आजिम । वीयात् ॥**

( सुबोधिनी )–स्वरान्तादत्वतश्च तादौ नित्यानिटस्थपो वेट् ॥ स्वरान्तात्तादौ नित्यानिट आद्योच्चारणेऽत्वतस्तादौ नित्यानिटश्च धातोः परस्य थप इड् वा भवति ॥ अत् विद्यते यस्य स अत्वान् तस्मात् ॥ स्वरान्तात् किम् । बिभेदिथ ॥ थपः किम् । पपिव ॥ तादौ नित्यानिटः किम् । सस्वरिथ । स्वरतिसूतीत्यनेन वेट्कोऽयम् ॥ आद्योच्चारण इति किम् । चकर्षिथ ॥ अत्वतः किम् । बिभेदिथ ॥ तपरः किम् । रराधिथ ॥ तादाविति किम् । जग्रहिथ । 'वुः से' इत्यनेन समत्ययेऽयं नित्यमनिट् । नित्यानिटः किम् । आनञ्जिथ । ऊदित्त्वाद्वेट्कोऽयम् ॥

( तत्त्वदी० )–अत्वत इति ॥ अद्विद्यते यस्य सोऽत्वान् । तस्मादित्यर्थः । नित्यानिटः किम् । अंक्ता । अञ्जिता ॥

**नैकस्वरादनुदात्तात् ॥ आद्योच्चारणेऽनुदात्तादेकस्वराद्धातोः परस्य वसादेरिण्न स्यात् ॥**

( सुबोधिनी )–नैकस्वरादनुदात्तात् ॥ आद्योच्चारणे इत्युभयत्रान्वेति । आद्योच्चारणेऽनुदात्तादेकस्वराच्चेत्यर्थः । तेन बिभित्सतीत्यत्र सान्ते अनेकस्वरत्वेऽपीण्निषेधो भवत्येव ॥

( तत्त्वदी० )–नैकस्वरादिति ॥ आद्योच्चारणे इति उभयत्रान्वेति । आद्योच्चारणेऽनुदात्तादेकस्वराच्चेत्यर्थः । तेन बिभित्सतीत्यत्र सान्ताद् द्वित्वदशायामनेकाच्त्वेऽपि इण्निषेधो भवत्येव ॥

"अनिट् स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः । अदन्तमृदन्तमूतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥ १ ॥ गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोति मथो युणुक्ष्णुवः ॥ इति स्वरान्ता निपुणैः समुच्चितास्ततो हसान्तानपि सन्निबोधत ॥ २ ॥ शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी ॥ रभिश्च भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥ ३ ॥ यमिर्यमान्तेष्वनिडेक इष्यते रमिर्दिवादावपि पठ्यते मनिः ॥ नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥ दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ॥ इमेऽनिटोऽष्टाविह मुक्तसंशया

गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥ ५ ॥ दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ॥ लिशिं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥ ६ ॥ रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ॥ इमे तु धान्ता दश चाऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥ ७ ॥ शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ॥ इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ॥ ८ ॥ तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ॥ स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् गणितांस्त्रयोदश ॥ ९ ॥ अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीञ्शदिं सदिं स्विद्यतिपद्यती खिदिम् ॥ नुदिं तुदिं विद्यविनत्तिकावपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥ १० ॥ पचिं वचिं विचिरिचिरञ्चिपृच्छतीन्निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ॥ त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजि विजि विद्धचनिट्स्वरान् ॥ ११ ॥" इत्यनिट्कारिकाः ॥

( सुबोधिनी )–अथानुदात्ताः ॥ स्वरान्तो धातुरनिट् भवति । न इट् यस्मात्सोऽनिट् इति भवद्भिर्दृश्यतां ज्ञायताम् । तु पुनः स्वरान्तेष्विमान् धातून् सेटः प्रवदन्ति । तान् विदन्तीति तद्विदः । तानाह । अदन्तं धातुं कथ वाक्यप्रबन्धे इत्यादिकम् ॥ ऋदन्तं कॄ विक्षेपे इत्यादिकम् ॥ ऋतां मध्ये वृङ्वृञौ सेटौ । वृङ् संभक्तौ । वृञ् वरणे ॥ अथेवर्णेषु इवर्णान्तेषु श्विडीङ् सेट् कथ्यते । श्विश्च डीङ् चानयोः समाहारः श्विडीङ् । टु ओश्वि इर् मतिवृद्ध्योः । डीङ् विहायसा गतौ ॥ पुनस्तेषु शीङ्श्रिञावपि सेटौ कथ्येते । शीङ् स्वप्ने । श्रिञ् सेवायामिति ॥ १ ॥ गणे तिष्ठतीति गणस्थस्तं गणस्थम् ऊदन्तं धातुं भूलूप्रभृतिम् ॥ किं च पुनः उताम् उकारान्तानां मध्ये रुस्नुवौ सेटौ । रु शब्दे । रुङ् गतिरेषणयोरित्युभयम् । स्नु प्रस्रवणे । तथा क्षुवं टुक्षुशब्दे । ऊर्णोतिं । ऊर्णुञ् आच्छादने । अथो युणुक्ष्णुवः धातून् सेटः । यु मिश्रणादौ । अयं सेट् । युञ् बन्धने । क्रैयादिकस्त्वनिट् । णु स्तुतौ । क्ष्णु तेजने । प्रवदन्तीत्यनेनान्वय इति । अमुना प्रकारेण निपुणैः विचक्षणैः स्वरान्ता धातवः समुच्चिताः एकीकृताः । ततोऽनन्तरं हसान्तान् धातून् अनिटः सकाशात् यूयं निबोधत जानीत । लोटो मध्यमपुरुषस्य बहुवचनम् ॥ २ ॥ अथ हसान्तान् धातूनाह । कान्तेषु शकिः एकः अनिट् । शक्लृ शक्तौ । शक मेर्षणे दैवादिकस्तु सेट् ॥ सान्तेषु घसिः । घस्लृ अदने । अदादेशो घसिश्च ॥ तु पुनः वसिप्रसारणी । वस निवासे । प्रसारणं संप्रसारणमस्यास्तीति प्रसारणी एतेन वस् आच्छादने । आदा-

दिकः सेट् । तस्य संप्रसारणाभावात् ॥ भान्तेषु रभिः । रभ राभस्ये ॥ अथ मैथुने यभिः । यभ मैथुने ॥ ततस्तृतीयो लभिः । अनिट् । डुलभष् प्राप्तौ । अनिट् इष्यते इत्यन्वयः ॥ इतरे धातवोऽनिटो न ॥ ३ ॥ अमान्तेषु अमप्रत्याहारान्तेषु धातुषु प्रतिषेधवाचिनामिण्निषेधकानां मध्ये एकः अनिट् यमिः । यम उपरमे ॥ रमिश्च रमु क्रीडायामपि । दिवादौ दिवादिगणे यः मनिः विचक्षणैः पठ्यते स मनिः । मन् ज्ञाने दैवादिकः। मनु अवबोधने तानादिकः सेट् ॥ चतुर्थो नमिः । णम् प्रह्वत्वे शब्दे च ॥ पञ्चमो हनिः। हन हिंसागत्योः । ततस्तु षष्ठो गमिः । गम्लृ गतौ । मयोष्यते इत्यन्वयः ॥ ४ ॥ इहानिट्कारिकायामिमेऽनिटोऽष्टौ धातवो हान्ता मया कीर्तिताः कथिताः । कीदृशाः मुक्तः संशयो येषु ते मुक्तसंशयाः किं कृत्वा । गणेषु हान्तान् प्रविभज्य भिन्नीकृत्य । ते के । दिहिः दिह उपचये । दुहिः दुह प्रपूरणे । दुहिरिति दुहिर् अर्दने । भौवादिको न गृह्यते सानुबन्धकत्वात् । आदादिक एवानिडिति प्राञ्चः । मेहतिरोहती । मिह सेचने। रुह बीजजन्मनि प्रादुर्भावे च । वहिः वह प्रापणे । तु पुनः षष्ठो नहिः । णह बन्धने। दहतिः । दह भस्मीकरणे । तथा लिहिः । लिह आस्वादने ॥ ५ ॥ पुराणगाः प्राचीना विद्वांसः गणपाठेषु शान्तान् अनिट्कान् दशैव पठन्ति । इतरान्न न । तान् कान् । दिशिं दिश अतिसर्जने ॥ दृशिं दृशिर् प्रेक्षणे ॥ दशिंदंश दशने ॥ अथो मृशिं मृश आमर्शने ॥ स्पृशिं स्पृश संस्पर्शने ॥ रिशिं रुशिं रिश् रुश हिंसायाम् ॥ अष्टमं क्रोशति क्रुश आह्वाने रोदने च ॥ विशिं विश प्रवेशने ॥ लिशिं लिश अल्पीभावे दिवादिस्थो लिश गतौ तुदादिस्थ इत्युभयम् ॥ ६ ॥ तथा धान्ता धातव इमे दशानिटो मताः कथिताः । ते के । रुधिः रुधिर् आवरणे । अनोरुधकामे इति दैवादिक इत्युभयम् ॥ सराधिः राध संसिद्धौ ॥ युधिबंधिसाधयः युध संप्रहारे । बन्ध बन्धने । साध संसिद्धौ ॥ क्रुधिक्षुधी क्रुध कोपे । क्षुध बुभुक्षायाम् ॥ शुध्यतिबुध्यती । शुध शौचे । बुध अवगमने। दैवादिकौ । बुधिर् बोधने इति बुध अवगमने इत्येतौ भौवादिकौ तु सेटौ ॥ व्यधिः । व्यध ताडने ॥ ततः परं सिध्यतिरेव । षिधु संराद्धौ । अनिट् षिधु गत्याम् । षिधू शास्त्रे माङ्गल्ये चैतौ भौवादिकौ सेटौ ॥७॥ गणेषु गणपाठेषु अनिड्विधौ अनिट्प्रकरणे षान्तान् इमान् दशैवाचार्या उपदिशन्ति तान् कान् शिषिं शिषॢ विशेषणे । पिषिं पिषॢ संचूर्णने ॥ शुष्यति पुष्यती । शुष शोषणे । पुष पुष्टौ । दैवादिकावनिटौ । भौवादिकः सेट् ॥ त्विषिं त्विष दीप्तौ ॥ विषिं विषॢ व्याप्तौ । जौहोत्यादिकः ॥ श्लिषिं श्लिष आलिङ्गने । श्लिष दाहे भौवादिकः सेट् ॥ तुष्यतिदुष्यती । तुष तुष्टौ । दुष वैकृत्ये । दैवादिकौ ॥ द्विषिं द्विष अप्रीतौ । तथा कृषिकर्षती । कृष विलेखने । भौवादिकतौदादिकौ ॥ ८ ॥ स्वरेण नीचेन अनुदात्तस्वरेण गणितान् पान्तान् अनिटः त्रयोदश त्वं प्रतीहि जानीहि । तानाह। तपिं तप संतापे । तप ऐश्वर्ये । दैवादिकः । तप दाहे इति चौरादिकोऽपि । णिप्रत्ययाभावपक्षेऽनिट् ॥ तिपिं तिपृ क्षरणे ॥ च पुनः आपिं आप्लृ व्याप्तौ ॥ अथो वपिं डुवप्

वीजतन्तुसंताने ॥ स्वपिं ञिष्वप् शये ॥ लिपिं लिप उपदेहे ॥ लुपिं लुपॢ छेदने ॥ तृप्यतिदृप्यती । तृप् प्रीणने दृप् हर्षमोहनयोः । एतौ दैवादिकावनिटौ । तृप् तृप्तौ । दृप् उत्क्लेशे । एतौ तौदादिकौ सेटौ । तृप् तृप्तौ । दृप् संदीपने । एतौ चौरादिकौ च सेटौ ॥ सृपिं सृपॢ गतौ ॥ शपिं शप आक्रोशे । शप् उपालम्भे च ॥ छुपिं छुप स्पर्शे ॥ क्षिपिं क्षिप प्रेरणे । दैवादिकस्तौदादिकश्चानिट् ॥ ९ ॥ दान्तान् धातून् अनिटः पञ्चदश त्वं प्रतीहि अवेहि । तानाह । अदिं अद भक्षणे ॥ हदिं हद पुरीषोत्सर्गे ॥ स्कन्दिभिदिच्छिदिक्षुदीन् । स्कन्दिर् गतिशोषणयोः । भिदिर् विदारणे । छिदिर् द्वैधीकरणे । क्षुदिर् संचूर्णने ॥ शदिं शद्‌ॢ शातने । सदिं षद्‌ॢ विशरणादौ ॥ स्विद्यतिपद्यती । ञिष्विदा गात्रप्रक्षरणे । पद गतौ दैवादिकौ । ञिष्विदा स्नेहनमोचनयोः । भौवादिकः सेट् । पद गतौ चौरादिकः सेट् । खिदिं खिद दैन्ये । खिद परिघाते । रौधादिको दैवादिकस्तौदादिकश्चानिट् ॥ नुदिं नुद प्रेरणे ॥ तुदिं तुद व्यथने ॥ विद्यविनत्तिकावपि । विद सत्तायां दैवादिः । विद विचारणे रौधादिकः । विद ज्ञाने । विद्‌ॢ लाभे । एतौ सेटौ ॥ विद्यविनत्ती एव विद्यविनत्तिकौ स्वार्थे कप्रत्ययः ॥ १० ॥ न विद्यते इट् स्वरो येभ्यस्तेऽनिट्स्वराः तान् धातून् त्वं विद्धि जानीहि । तानाह । पचि डुपचष् पाके ॥ पचिव्यक्तीकरणे च सेट् ॥ वचिं वच परिभाषणे । ब्रुवो वचिरपि ॥ विचिरिचिरञ्चिपृच्छतीन् । विचिर् पृथग्भावे । रिचिर् विरेचने । रिच वियोजनसंपर्चनयोरिति च । रञ्ज रागे । पृच्छ ज्ञीप्सायाम् ॥ निजिं णिजिर् शौचपोषणयोः । णिजि शुद्धौ आदादिकः सेट् ॥ सिचिं षिच् क्षरणे ॥ मुचि भजि भञ्जिभृज्जतीन् । मुचॢ मोक्षणे । भज सेवायाम् । भञ्जो आमर्दने । भ्रस्ज पाके ॥ त्यजिं त्यज हानौ ॥ यजिं यज देवपूजादौ ॥ युजिरुजिसञ्जिमज्जतीन् । युजिर् योगे । युज समाधौ इति च । भाष्यमते युज समाधौ सेट् । रुज रोगे । षञ्ज सङ्गे । टुमस्जो शुद्धौ ॥ भुजिं भुज पालनाभ्यवहारयोः । भुजो कौटिल्ये इति च ॥ स्वजिं स्वञ्ज परिष्वङ्गे ॥ सृजिविजि । समाहारे एकवचनम् । सृज विसर्गे । दैवादिकस्तौदादिकश्चानिट् । विजिर् पृथग्भावे । ओविजी भयचलनयोः । तौदादिकः सेट् ॥ चान्ताः षट् । छान्त एकः । जान्ताः पञ्चदश ॥ ११ ॥

( तत्त्वदी० )—अनुदात्तस्वरान्संगृह्णाति ॥ **अनिट्स्वरान्त** इत्यादिना ॥ न इट् यस्मात् सोऽनिट् स्वरोऽन्तो यस्य स स्वरान्तः स्वरान्तो धातुरनिट् भवति इति दृश्यतामित्यन्वयः ॥ **इमानि**ति ॥ स्वरान्तेषु इमान् वक्ष्यमाणान् सेटः प्रवदन्ति । तानाह ॥ **अदन्ता**मिति ॥ अदन्ता कथ इत्यादयः । ऋदन्तास्तॄप्रभृतयः । **ऋता**मिति ॥ ऋदन्तानां मध्ये वृङ्संभक्तौ । वृञ्वरणे । टुओश्विइर् गतिवृद्ध्योः । डीङ् विहायसागतौ । शीङ् स्वप्ने । श्रिञ् सेवायाम् । ऊदन्ता भूप्रभृतयः । रुशब्दे । रुङ् गतौ रेषणे च । ष्णु प्रस्रवणे । टुक्षु शब्दे । ऊर्णुञ् आच्छादने । न चोर्णोतेर्द्विस्वरत्वात्प्राप्तिरेव न संभवति कारिकायां ग्रहणं किमर्थमिति वाच्यं ऊर्णोतेर्नेडिति निषेधादत्र ग्रहणम् । एतद्बीजं तु वाच्यम् । ऊर्णोतेर्णुवद्भाव इत्यादिविशेषोक्तिरेवेति दिक् । यु मिश्रणामिश्रणयोः । णु स्तुतौ । क्ष्णु तेजने ॥

स्वरान्तानुक्त्वेदानीं हसान्तान् कान्तादिक्रमेणाह । शक्लृ शक्तौ एक एव कान्तेषु नान्य इत्यर्थः । खगघङान्तानां न सन्त्येव । घस्लृ अदने । वस निवासे । द्वावेव सान्तेषु नान्य इत्यर्थः । अदादेशस्य घसेस्तु स्थान्यनिट्त्वेनैव सिद्धम् । रभ राभस्ये । यभ मैथुने । डुलभष् प्राप्तौ । भान्तेषु त्रय एव नापरे इत्यर्थः । यमु उपरमे । रमु क्रीडायाम् । मन ज्ञाने । णम प्रह्वत्वे शब्दे च । गम्लृ गतौ । मान्ते चत्वार एव । मन ज्ञाने दिवादिः । हन हिंसागत्योः । तान्तेषु द्वावेव । प्रतिषेधवाचिनाम् । अनिटामित्यर्थः । दिह उपचये । दुह प्रपूरणे । मिह सेचने । रुह बीजजन्मनि प्रादुर्भावे । वह प्रापणे । णह बन्धने । दह भस्मीकरणे । लिह आस्वादने । हान्तेषु अष्टावनिटः प्रकीर्तिताः कथिता इत्यर्थः ॥ मुक्तः संशयो येषु ते तथा । गणेषु प्रविभज्य गणविभागेनेत्यर्थः । दिश अतिसर्जने । दृशिर् प्रेक्षणे । दंश दशने । मृश आमर्शने । स्पृश संस्पर्शे । रिश रुश हिंसायाम् । क्रुश आह्वाने । विश प्रवेशने । लिश गतौ । लिश अल्पीभावे । शान्तेषु दश ॥ रुधिर् आवरणे । अनोरुधकामे इति दिवादिश्च । सराधिः राध संसिद्धावेतत्सहितः । युध संप्रहारे । बन्ध बन्धने । साध संसिद्धौ । क्रुध क्रोधे । क्षुध बुभुक्षायाम् । शुध शौचे । बुध अवगमने । दिवादयः ॥ व्यध ताडने । षिध संराद्धौ । धान्तेष्वेकादश इतरे नेत्यर्थः । शिष्लृ विशेषणे । पिष्लृ संचूर्णने । शुष शोषणे । पुष पुष्टौ । दिवादी । त्विष दीप्तौ । विष्लृ व्याप्तौ । श्लिष आलिङ्गने । तुष तुष्टौ । दुष वैकृत्ये । दिवादौ । द्विष अप्रीतौ । कृषि विलेखने । भौवादिकतौदादिकौ । षान्तेष्वेकादश ॥ तप संतापे । तप् ऐश्वर्ये । दिवादिः । तप दाहे इत्यपिञ्यभावपक्षे तिपृ क्षरणे । आप्लृ व्याप्तौ । टुवप् बीजतन्तुसंताने । ञिष्वप् शये । लिप् उपदेहे । लुप्लृ छेदने । तृप प्रीणने दृप हर्षविमोहनयोः । दिवादी । सृप्लृ गतौ स्वरेण नीचेन अनुदात्तेनेत्यर्थः । शप उपालम्भे । छुप स्पर्शे । क्षिप प्रेरणे । दिवादिस्तुदादिश्च । पान्तान् त्रयोदश प्रतीहि जानीहि ॥ अद भक्षणे । हद पुरीषोत्सर्गे । स्कन्दिर् गतिशोषणयोः । भिदिर् विदारणे । छिदिर्द्वैधीकरणे । क्षुदिर् संपेषणे । शद्लृ शातने । षद्लृ विशरणादिषु । ञिष्विदा गात्रप्रक्षरणे । पद गतौ । दिवादी । खिद दैन्ये । खिद्यति । खिन्दति । खिनत्तिश्च । नुद प्रेरणे । तुद व्यथने । विद सत्तायाम् । विद विचारणे । दान्तेषु पञ्चदश ॥ डुपचष् पाके । पचि व्यक्तीकरणे द्वावपि । वच परिभाषणे । ब्रुवो वचिरपि । विचिर् पृथग्भावे । रिचिर् विरेके । रिच वियोजनसंपर्चनयोरिति । षिच क्षरणे । मुच्लृ मोचने । चान्तेषु षट् ॥ प्रच्छ ज्ञीप्सायाम् । छान्तेष्वेकः ॥ त्यज हानौ । णिजिर् शौचपोषणयोः । भज सेवायाम् । भञ्जो आमर्दने । भुज पालनाभ्यवहारयोः । भुजो कौटिल्ये इति च । भ्रस्ज पाके । टुमस्जो शुद्धौ । यज पूजादौ । युजिर् योगे । रुजो भङ्गे । रञ्ज रागे । विजिर् पृथग्भावे । ष्वञ्ज परिष्वङ्गे । षञ्ज सङ्गे । सृज विसर्गे । जान्तेषु पञ्चदश । अनिट्स्वरान् अनुदात्तानित्यर्थः ।

**वेत्ता । अवैषीत ॥ क्षि क्षये । चिक्षयिथ–चिक्षेथ ॥**

**( सुबोधिनी )–स्वरान्तादत्वतश्चेति वेट् । विवयिथ–विवेथ–आजिथ । विव्यिव, विव्यिम । वीयात् । लुटि वेता अजिता । वेष्यति–अजिष्यति । अवेष्यत् आजिष्यत् । धातोर्नामिन इति वृद्धिः । अवैषीत् आजीत् ॥ क्षिं क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः नुधातोरितीय । चिक्षियतुः ॥**

**ये ॥ अनपि यकारे परे पूर्वस्वरस्य दीर्घः स्यात् ॥ क्षीयात् । अक्षैषीत् तुम्प हिंसायाम् ।**

( सुबोधिनी )–ये ॥ अनपि यकारे परे पे ॥ से दीर्घ इत्यतो दीर्घ इति अनपीति चानुवर्तते ॥ अनपि ये किम् । चिनुयात् संज्ञापूर्वकस्य विधेरनित्यत्वाद्वात्र न दीर्घः ॥ क्षि निवासगत्योरिति तौदादिकः ।

( तत्त्वदी० )–ये इति ॥ दीर्घस्तु से दीर्घ इत्यतोऽनुवर्तते । सप्तमीनिर्देशात्पूर्वस्येति लभ्यते । यकारस्तु प्रत्ययस्यैव प्रकरणत्वात् तेनेयाजेत्यादौ नातिप्रसंगः । चानुवृत्तेर्व्यवस्थया वा ॥

**( प्रात्तुम्पतेः सुट् गवि कर्तरि ) प्रस्तुम्पति गौः । अडद्वित्वव्यवधानेऽपि सुट् । प्रास्तुम्पत् । प्रतुस्तुम्प ॥ ओणृ अपनयने । ओणांचकार ॥ वन षन संभक्तौ । ववनतु अवनीत्–अवानीत् । सेनतुः ॥**

( सुबोधिनी )–प्रात्तुम्पतेः सुट् गवि कर्तरि ॥ प्रादुपसर्गात् परस्य तुम्पतेः सुट् स्यात् गौः कर्त्ता चेत् । ऋसंयोगान्नेति लिटः कित्वाभावात् नस्य लोपो न । तुतुम्पतुः आशिषि नो लोप इति नलोपः । तुप्यात् । श्तिपा निर्देशात् यङ्लुकि सुट् न । प्रतोतुम्पीति ॥ ओणृ अपनयने । अपनयनं दूरीकरणम् ॥ वन षन संभक्तौ । वन शब्दे च । संभक्तिर्भजनम् ॥

**( जनसनखनामात्वमनिटि से क्ङिति झसे यादौ क्ङिति वा ) सायात्–सन्यात् । असनीत–असानीत् ॥ चमु अदने ॥**

( सुबोधिनी )–जनसनखनामात्वमनिटि से क्ङिति झसे यादौ क्ङिति वा ॥

जन जनन जुहोत्यादिः । जनी प्रादुर्भावे दिवादिः । उभयोर्ग्रहणम् । एषामात्वं स्यात् अनिटि सप्रत्यय किति ङिति झसे च यकारादौ क्ङिति वा से परे । सिषासाति ॥

**( ष्ठिवुक्लम्वाचमां दीर्घोऽपि ) आचामति । आङ् किम् । चमति । विचमति । चेमतुः । अचमीत् ॥ ष्ठिवु निरसने ॥**

( सुबोधिनी )–ष्ठिवुक्लम्वाचमां दीर्घोऽपि ॥ एषां दीर्घः स्यात् अप्रत्यये ॥ ष्ठिवु निरसने । निरसनं थूत्करणम् ।

**नामधातुष्वष्कष्ठिवां सत्वं न ) ष्ठीवति ॥**

( सुबोधिनी )–नामधातुष्वष्कष्ठिवां सत्वं न ॥ ष्वष्क गतौ । नामधातोरुदाहरणानि । षट् दन्ता अस्येति षोडन् तमाचष्टे नाम्नो ञिर्डित्करणे इति ञिप्रत्यये टिलोपे च षोडयति षण्डमाचष्टे करोति वा षण्डयति । नाम्नो य इति यप्रत्यये षण्डमिच्छतीति षण्डीयति ॥ कटे वर्षावरणयोः । वर्षो वृष्टिः । आवरणमाच्छादनम् ॥

( तत्त्वदी० )–नामधातुष्विति ॥ एतच्च विदो नंवानामिति सूत्रस्थवानुवृत्तेर्व्यवस्थय बोध्यम् । षण्डमाचष्टे षण्डयतीत्यादौ ॥

**( ष्ठिवेः पूर्वस्य थस्य ठो वा )** तिष्ठेव–टिष्ठेव । ष्वोर्विहसे । ष्ठीव्यात् । अष्ठेवीत् ॥ कटे वर्षावरणयोः ॥

**( ह्म्यन्तक्षणश्वसजागृश्व्येदितां सेटि सौ न वृद्धिः )** अकटीत् ॥ हय गतौ । अहयीत् ॥ जु रंहसि ॥

( सुबोधिनी )–ह्म्यन्तक्षणश्वसजागृश्व्येदितां सेटि सौ न वृद्धिः ॥ ह् च म् च य् च ह्म्यः ते अन्ते येषां ते ह्म्यन्ताः । एत् इत् यस्य स एदित् । ह्म्यन्तस्य क्षणादेरेदितश्च वृद्धिर्न सेटि सौ ॥ ग्रह उपादाने । अग्रहीत् । टुवमु उद्गिरणे । अवमीत् ॥ हय गतौ । अहयीत् । क्षणु हिंसायाम् । अक्षणीत् । श्वस् प्राणने । अश्वसीत् । जागृ निद्राक्षये । अजागरीत् । टुओश्विइर गतिवृद्ध्योः । अश्वयीत् ॥ सेटि सौ किम् । दह भस्मीकरणे । अधाक्षीत् ॥ जु रंहसि । रंहो वेगः ॥

( तत्त्वदी० )–ह्म्यन्तेति ॥ ह् च म् च य् च ह्म्यः ते अन्ते येषां ते ह्म्यन्ताः हकारमकारयकारान्ता इत्यर्थः । क्षण हिंसादौ । श्वस प्राणने । जागृ निद्राक्षये । टुओश्विइर् गतिवृद्ध्योः । एत् इद्येषां त तथा तेषामित्यर्थः ॥

जुजुवतुः । जुजविथ–जुजोथ । अजौषीत् ॥ गुपू रक्षणे ॥

( सुबोधिनी )–गुपू रक्षणे । रक्षणं पालनम् ॥

**आयः ॥** गुपूधूपविच्छिपणिपनिभ्यः स्वार्थे आयः प्रत्ययः । अनपि तु वा ॥

( सुबोधिनी )–आयः ॥ गुभ्यः इत्यनुवृत्तं पणिपन्योरनुदात्ते च आयाभावे चरितार्थमात्मनेपदमित्यायान्तान्नाद्भवति ॥ गुपू रक्षणे । धूप सन्तापे । विच्छ गतौ । पण व्यवहारे स्तुतौ च । पन च ॥

( तत्त्वदी० )–आय इति ॥ इह गुभ्य इत्यनुवर्तत इत्याह–गुपूधूपेत्यादि ॥ स्वार्थे इति ॥ अपरस्यानिर्दिष्टत्वात् स्वार्थ एव लभ्यते ॥

**सधातुः ॥** यङादिप्रत्ययान्तः शब्दो धातुसंज्ञको भवति ॥ गोपायति–गोपायांचकार । जुगोप ॥

( सुबोधिनी )–सधातुः ॥ तच्छब्देन यङादिः परामृश्यते । यङादिना च प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते । तेषां केवलानां संज्ञाप्रयोजनाभावाद्वा । "यङसकाम्या ईयङ् चेति यगायञिञिङस्तथा । आचारे क्विबथो यश्च ज्ञेया दश यङादयः ॥ ॥ १ ॥" प्रत्ययविशिष्टस्य धातुत्वात् तिबादिः ॥

( तत्त्वदी० )–सधातुरिति ॥ तच्छब्दस्य तदादित्वेन तेषां च प्रधानपरामर्शित्वेन यङादिर्गृहीतः । केवलयङादेश्च संज्ञाप्रयोजनाभावात्तदन्तलाभः । अनन्तरोक्तस्य ञेरपि ग्रहणं सग्रहणेन निर्वार्यते । अन्यथानुवृत्त्यैव तद्ग्रहणे सिद्धे सग्रहणं व्यर्थं स्यात् । आदेशादिविधायकप्रकरणेन विच्छेदाद्व्यवहिततिबादेरपि न ग्रहणमतः परिशेषाद्यङादिरेव गृह्यत इत्याशयेनाह–यङादिप्रत्ययान्त इति ॥

**यतः ॥ यस्यातश्चानपि लोपः ॥ गोपाय्यात्–गुप्यात् । गोपायिता–गोपिता–गोप्ता । अगोपायीत्–अगौप्सीत् ॥**

( सुबोधिनी )–यतः ॥ य च अञ्चानयोः समाहारो यत् तस्य ॥ धातोर्विशेषणत्वात्तदन्तविधिः । यन्तस्य अदन्तस्य च लोपः अनपि । अदन्तस्य किम् । अय पय गतौ । आभ्यां क्विपि यवयोर्वसे हकारे चेति यलोपे कृते य इत्यलोपो मा भूत् । अतपत् । ऊदित्वाद्वेट् । गोपिता । गोप्ता । इडभावपक्षे अनिटो नाभिवत इति वृद्धिः । अगौप्सीत् ॥

( तत्त्वदी० )–यत इति ॥ य् च अच्च अनयोः समाहारः यत् तस्य ॥

**झसात् ॥ अगौप्ताम् ॥ एवं धूप सन्तापे ॥ तप सन्तापे । तेपिथ–ततप्थ । अताप्सीत् ॥ जप जल्प व्यक्तायां वाचि । जेपिथ । जपिता । अजापीत् ॥ क्रमु पादविक्षेपे ॥**

( सुबोधिनी )–क्रमु पादविक्षेपे । पादविक्षेपः पादविहरणम् ॥

**( भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषां यो वा कर्त्रर्थेषु चतुर्षु )**

( सुबोधिनी )–भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषां यो वा कर्त्रर्थेषु चतुर्षु ॥ प्राप्ताप्राप्तविभाषेयम् । अनवस्थानार्थो भ्रमिः क्लमिः त्रसिश्च दिवादयस्तेभ्यो नित्ये प्राप्ते इतरेषामप्राप्तेश्चारम्भः । भ्राशृ भ्लाशृ दीप्तौ । फणादावेतौ । भ्रमु चलने । भ्वादिर्ज्वलादिश्च । भ्रमु अनवस्थाने दिवादिः पुषादिः शमादिः तत्र भ्वादेः भ्रमति–भ्रम्यति । शमादेस्तु शमादीनामिति दीर्घे भ्राम्यति । इति त्रैरूप्यम् । क्लमु ग्लानौ । त्रसी उद्वेगे । त्रुट छेदने । लष कान्तौ ॥

**( क्रमः पे दीर्घोऽब्विषये ) क्राम्यति–क्रामति । अक्रमीत् ॥ यम उपरमे ॥**

( सुबोधिनी )–क्रमः पे दीर्घोऽब्विषये ॥ क्रमो दीर्घः स्यात् पे चतुर्षु ॥ प किम् । उपक्रमते । प्रोपाभ्यामित्यात् । स्नुक्रमोरेति नेट् । स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोऽयम् । आभ्यां परस्य परस्मैपदस्यैवेट् स्यान्नातः । स्नु प्रस्रवणे । उपस्नोष्यते जलेन । उपक्रंस्यते । यमु उपरमे । उपरमो निवृत्तिः ॥

**गमां छः ॥ गमयमइषूणां छः स्यादब्विषये ॥ यच्छति । येमिथ–ययंथ ॥**

( सुबोधिनी )—गमां छः ॥ गम्लृ गतौ । यम उपरमे । इषु इच्छायाम् । एते गमादयः । बहुवचनमाद्यर्थम् ॥

( तत्त्वदी० )—गमामिति ॥ बहुवचननिर्देशस्य फलमाह—गमादय इत्यादि ॥

( यमिरमिनमातां सक्सेरिट्पे ) अयंसीत, अयंसिष्टाम् ॥ णम प्रह्वत्वे शब्दे च । नेमिथ—ननन्थ । अनंसीत् ॥ ईर्क्ष्य ईर्ष्य ईर्ष्यायाम् । ईर्क्ष्यति । ऐर्क्ष्यीत् । ऐर्ष्यीत् ॥ गम्लृ गतौ । गच्छति ॥

( सुबोधिनी )—यमिरमिनमातां सक् सेरिट् पे ॥ एषां सक् स्यात् एभ्यः सेरिट् पे परे ॥ अयंसीत्, अयंसिष्टाम् । व्यरंसीत्, व्यरंसिष्टाम् । अनंसीत्, अनंसिष्टाम् । पे किम् । उदायत । अरंसाताम् ॥

गमां स्वरे ॥ गम्हन्जन्खन्घसामुपधाया लोपः स्यात्स्वरे क्ङिति न तु ङे ॥ जग्मतुः । जगमिथ—जगन्थ ॥

( सुबोधिनी )—गमां स्वरे ॥ गम्लृ गतौ । हन् हिंसागत्योः । खनु अवदारणे । घस्लृ अदने । एषामुपधाया लोपः स्यात् स्वरादौ क्ङिति प्रत्यये न तु ङे । नो वेत्यतो व्यवस्थितार्थकवानुवर्त्तनात् जग्मतुः । जघ्नतुः । चख्नतुः । जक्षतुः ॥ ङे किम् । अगमत् ॥

( तत्त्वदी० )—गमां स्वर इति ॥ बहुवचनस्य बहूपलक्षकत्वमभिप्रेत्य गणयति गमहनेत्यादि । नो वेत्यतो वानुवृत्तेर्व्यवस्थया क्वचिन्नेत्यभिप्रेत्याह—न तु ङे इति ॥ तेन अगमादित्यत्र लोपो न ॥

हन्नृतः स्यपः ॥ हन्तेर्ऋदन्ताच्च परस्य स्यप इड् भवति गमेस्तु पे गमिष्यति ॥

( सुबोधिनी )— हन्नृतः स्यपः ॥ अनुदात्तत्वादिण्निषेधे प्राप्ते विधिः । हन् च ऋच्चानयोः समाहारो हन्नृत् तस्मात् हन्नृतः । गमेः परस्मैपदस्यैवेट् नातः । तेन संगंस्यते इत्यादौ न ॥

( तत्त्वदी० )—हन्नृतः ॥ हन् च ऋच्च हन्नृत् तस्मात् । ऊदितो वेत्यतो वेत्यनुवृत्तेर्व्यवस्थया गमेः परस्मैपदमेवेत्याह—गमेस्त्विवाति ॥ तेन संगंस्यते इत्यादौ न ॥ हन्तेः ऋदन्ताच्चोभयपदेऽपि । आहनिष्यते । करिष्यते ।

लित्पुषादेर्ङः ॥ लितो धातोः पुषादेश्च ङः प्रत्ययः स्यात् पे । सेरपवादः ॥ अगमत् ॥ म्रुचु म्लुचु गतौ । म्रोचति ॥

( सुबोधिनी )—लित्पुषादेर्ङः ॥ लृ इत् यस्य स लित् । पुष आदिर्यस्य स पुषादिः । लिच्च पुषादिश्चानयोः समाहारो लित्पुषादिः तस्मात् । सौत्रत्वात्पुंस्त्वम् । संज्ञापूर्वकविधेरनित्यत्वान्न नुम् । ञेरङ् द्विश्चेत्यतोऽङित्यनुवृत्त्यैव सिद्धे ङ इति योगविभागेन तु

द्युतादिभ्योऽस्यतिवक्तीति च लब्धम्। पुषादिश्च दिवाद्यन्तर्गणो ग्राह्यः लित्साहचर्यात्। लितो हि प्रायेणानिटः तत्साहचर्यात्पुषोऽप्यनिड् ग्राह्यः स च दिवादिः न भ्वादिः सेट्त्वात् न चुरादिर्ञिना व्यवधानाच्च ॥

( तत्त्वदी० )–लित्पुषादेरिति ॥ ऌ इत् यस्य स लित्। पुष् आदिर्यस्य स पुषादिः। लिच्च पुषादिश्चानयोः समाहारः लित्पुषादिस्तस्य। नुमोऽनित्यत्वात्क्लीबत्वस्यैव वा पुंस्त्वम् ॥ ननु जेरङ्द्विश्चेत्यनन्तरोक्तसूत्रादङनुवृत्तेः किं ङग्रहणेनेति चेत्सत्यम्। ङग्रहणं योगविभागेनान्यतोऽपि विधानार्थम्। तेन द्युतादिभ्योऽपि अस्यतिवक्तिख्यातिभ्यश्च भवति। अथैकयोगनिर्दिष्टन्यायेनाङि द्वित्वं भवेदिति वाच्यम्। जेरिति ग्रहणात्। ज्यन्तादेवाङि द्वित्वविधानात् न त्वन्यस्मात्। अङि लघोर्ह्रस्व उपधाया इति ह्रस्वस्तु लित्पुषादेर्दीर्घोपधत्वाभावादेवं न द्वित्वाभावेन पूर्वपदत्वाप्रसङ्गाच्च ॥

**( म्रुचादेर्वा ङः ) अम्रुचत्–अम्रोचीत्। अम्लुचत्–अम्लोचीत् ॥**

**ग्रुचु ग्लुचु चौर्ये। अग्रुचत–अग्रोचीत्। अग्लुचत्–अग्लोचीत् ॥ ग्लुञ्चु गतौ। अग्लुचत–अग्लुञ्चीत ॥ ञिफला विशरणे ॥**

( सुबोधिनी )–म्रुचादेर्वा ङः ॥ म्रुचु म्लुचु ग्रुचु ग्लुचु ग्लुञ्चु इति म्रुचादयः ॥ ञिफला विशरणे। विशरणमवयवानां विभागः ॥

**( तॄफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ ) फेलतुः। फेलिथ ॥**

( सुबोधिनी )–तॄफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ। तरतेरकारस्य गुणशब्देन भावितत्वात् फलभजोस्तु वैरूप्यसंपादकादेशत्वात् त्रपतेश्च एकहसमध्यस्थत्वाभावादप्राप्ते विधिः। तेरतुः। तेरुः। फेलतुः। फेलुः। भेजतुः। भेजुः। त्रेपे। त्रेपाते ॥

**ऌान्तस्य ऌसमीपाकारस्य सौ नित्यं वृद्धिः ॥ अफालीत् ॥ : फलनिष्पत्तौ। फेलतुः। अफालीत् ॥ चर गतिभक्षणयोः। अचारीत् ॥ जि जये ॥**

( सुबोधिनी )–ऌान्तस्य ऌसमीपाकारस्य सौ नित्यं वृद्धिः ॥ अतो हसादेरिति विकल्पस्यापवादः ॥ ऌान्तस्य किम्। अलपीत्। अरणीत्। अत्र ऌसमीपत्वेऽपि ऌान्तत्वाभावान्न नित्यं वृद्धिः ॥ ऌसमीपाकारस्य किम्। श्वल्ल आशुगमने। अश्वल्लीत्। अत्र अस्य ऌसमीपत्वेऽपि अन्त्यऌसमीपत्वाभावान्न वृद्धिः ॥ जि जये। जय उत्कर्षप्राप्तिः। अकर्मकोऽयम् ॥

( तत्त्वदी० )–ऌान्तस्येति ॥ ऌान्तस्य किम्। अलपीत्। अरणीत्। अत्र ऌसमीपत्वेऽपि ऌान्तत्वाभावान्न ॥ ऌसमीपाकारस्य किम्। श्वल्ल आशुगमने इत्यस्य अश्वल्लीत्। अत्र

ऌसमीपत्वेऽपि। अन्त्यलसमीपत्वाभावान्न। अतो हसादेरिति प्राप्तविकल्पस्यापवादः ॥ **जि जय इति** ॥ जय उत्कर्षप्राप्तिः ॥

**( सपरोक्षयोर्जेर्गिः ) जिगाय, जिग्यतुः, जिग्युः। जिगयिथ–जिगेथ। जीयात्। अजैषीत्॥ कृष विलेखने। कर्षति। चकर्ष। चकर्षिथ॥**

( सुबोधिनी )–सपरोक्षयोर्जेर्गिः॥ जेर्गिः स्यात् सप्रत्यये णवादौ च। द्वित्वनिमित्तयोरिति व्याख्येयम्। तेन यङ्लुगंताज्जेर्ग्यादेशो न जेजयांचकारेत्यत्र॥ कृष विलेखने। विलेखनमाकर्षणम्॥

( तत्त्वदी० )–सपरोक्षयोरिति॥ परोक्षशब्देन तदर्थकणवादिग्रहः। द्वित्वनिमित्तयोरिति व्याख्येयम्। यथाश्रुतव्याख्याने तु यङ्लुगंताज्जेर्ग्यादेशः स्यात्॥

**रारो झसे दृशाम्॥ दृशसृजकृषमृषतृपदृपसृपां झसेऽरो रो भवत्यारो रश्च॥**

( सुबोधिनी )–रारो झसे दृशाम्॥ अश्च आश्च तयोः समाहारः अं तेन सहितो र् अर तस्य अरः। अरः स्थाने आरः स्थाने च रो भवति। तेन द्रक्ष्यति अद्राक्षीदित्युभयत्रापि गुणवृद्धिस्थाने र आदेशः सिध्यति। बहुवचनं त्वाद्यर्थम्। दृशिर् प्रेक्षणे। सृज विसर्गे। कृष विलेखने। मृश आमर्शने। स्पृश स्पर्शने। तृप प्रीणने। दृप हर्षमोहनयोः। सृप्लृ गतौ॥

**( कृषादीनां वा ) क्रष्टा–कर्ष्टा॥**

( सुबोधिनी )–कृषादीनां वा॥ कृषादीनां षण्णां तु वाऽरः स्थाने रः॥

**षढोः कः से॥ धातोः षढयोः कत्वं स्यात्से परे॥**

**क्रक्ष्यति–कर्क्ष्यति। अक्राक्षी–अकार्क्षीत्॥**

( सुबोधिनी )–षढोः कः से। धातोरित्यनुवृत्तम्॥ से किम्। क्रष्टा॥ षढोः किम्। त्रप्स्यति॥ धातोः किम्। लिट्सु॥

( तत्त्वदी० )–षढोः कः से इति॥ धातोरिति॥ अत्र धातुग्रहणद्वयानुवर्तनं विधेयम्। तेन धातोरेव धातोर्न तु नामत्वविशिष्टस्यापि। अतो लिड्य इत्यत्र नातिप्रसङ्गः। न चात्र क्यस्य बाधकत्वं तदपवादकत्वादस्य। न चात्र नामत्वेन धातुत्वमिति भ्रमितव्यम्। तेन तदनपायात्॥

**( कृषमृषस्पृशमृशतृपदृपां वा सिः ) हशषान्तात्सक्॥ हान्ताच्छान्तात्षान्तान्नाम्युपधादनिटः सक्प्रत्ययः स्याद्विबादिपरो न तु दृशेः॥ सेरपवादः। अकृक्षत्॥ सृप्लृ गतौ। सर्पति। स्रप्ता–सर्प्ता। असृपत॥ क्रुश आह्वाने रोदने च। क्रोशति। क्रोष्टा। अक्रुक्षत्॥ रुष रिष शिष हिंसायाम्॥**

( सुबोधिनी )–क्रुषमृषस्पृशमृशतृपदृपां वा सिः ॥ एभ्यो वा सिः स्यात् पक्षे हशषान्तात्सक् ॥ तृपदृपभ्यां षादित्वात्तु ङः हशषान्तात्सक् । अनिटो ऽनामिवत इत्यनुवृत्तम् ॥ हशषान्तात्किम् । अतिप्त । नाम्युपधात्किम् । अगाढ ॥ अनिटः किम् । औहिष्ट ॥ दृशेस्तु अद्राक्षीत् । हश्च शश्च षश्च हशषाः ते अन्ते यस्य स तस्मात् । अत्रान्तग्रहणं चिन्त्यम् । हशषादिति पाठ्यम् । तेन च धातोर्विशेषणादन्तलाभः ॥

( तत्त्वदी० )–हशषान्तात्सगिति ॥ हश्च शश्च षश्च ते अन्ते यस्य स तस्मात् । अत्र चानिटो ऽनामिवत इति पूर्वसूत्रान्नामिवत इत्यनुवर्त्य स च विशेषार्थतया विवक्षणान्नाम्युपधात्वलाभः । इत्यभिप्रेत्याह–नाम्युपधादिति ॥ तेन स्तृंहेरस्तार्क्षीदित्येव रूपमिति बोध्यम् । हशषादित्येव युक्तं धातोर्विशेषणत्वेनान्तलाभात् ॥

( इषुसहलुभरिषरुषामनपि तस्येड्वा ) रेषिता–रेष्टा । रोष्टा–रोषिता । अशिक्षत् ॥ उष गतौ । ओषति । ओषाञ्चकार–उवोष ॥ मिह सेचने ॥

( सुबोधिनी )–इषुसहलुभरिषरुषामनपि तस्येड्वा ॥ इषु इच्छायाम् । षह मर्षणे । लुभ गार्ध्ये । रुष रिष हिंसायामेभ्यः परस्य तकारस्य इड्वा भवति अनपि परे ॥ विददरिद्रेत्याम् । उपधाया लघोरिति गुणः । ओषांचकार । असवर्णे स्वरे इत्युव् । उवोष ॥ मिह सेचने । सेचनमार्द्रीकरणम् ॥

ढि ढो लोपो दीर्घश्च ॥ ढे परे ढस्य लोपः पूर्वस्य चानृतो दीर्घः मेढा । षढोः कः से । अमिक्षत् ॥ दह भस्मीकरणे । देहिथ–ददग्ध । धक्ष्यति । अधाक्षीत, झसात् अदाग्धाम् ॥ इवि व्याप्तौ । इन्वति । इन्वांचकार । ऐन्वीत् ॥ हिवि दिवि धिवि जिवि प्रीणने । हिन्वति ॥

( सुबोधिनी )–ढि ढो लोपो दीर्घश्च ॥ अनृतः किम् । जर्गृढात् ॥ हो ढ इति ढत्वम् । तथोर्ध इति तस्य धः । ष्टुभिः ष्टुः इति ढः । ढलोपे मेढा । हशषान्तात् इति सक् । अमिक्षत् ॥ हिवि दिवि धिवि जिवि प्रीणने । प्रीणनं तर्पणम् । इदितो नुमिति नुम् । हिन्वति ॥

( तत्त्वदी० )–ढि ढोलोप इति ॥ वान्यत्रेत्यतो वानुवृत्तेर्व्यवस्थयाऽनृतः पूर्वस्येति बोध्यम् । ढ्रि ढ्रो लोपो दीर्घश्चेति सुवचम् । एवं च रिलोपो दीर्घश्चेति न सूत्रणीयम् ॥ प्रीणन इति ॥ प्रीणनं तृप्तिस्तर्पणं च ॥

( धिन्विकृण्व्योर्वस्य लोपो गुणाभाव उप्प्रत्ययश्चाविषये ) विकरणस्य नुप्रत्ययस्योप्प्रत्ययस्य च गुणो भवति पिति परे ॥ धिनोति ॥

( सुबोधिनी )—धिन्विकृण्व्योर्वस्य लोपो गुणाभावः उप्रत्ययश्चाब्विषये ॥ आभ्यामुप्रत्ययः स्यात् धातोर्वकारस्य लोपो गुणाभावश्च चतुर्षु । अपोऽपवादः ॥ धिवि प्रीणने । कृवि हिंसायाम् । नूप इति गुणे धिनोति ॥

**ओर्म्वोर्वा लोपः ॥ असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा वमयोः ॥ धिन्वः—धिनुवः, धिन्मः—धिनुमः । मिपि तु गुणो बाधकः । धिनोमि ॥**

( सुबोधिनी )—ओर्म्वोर्वा लोपः ॥ उकारः प्रत्ययावयवः प्रत्ययरूपश्च गृह्यते ओर्वाहेरित्यतो वेत्यनुवृत्तम् । तस्यासंयोगपूर्वस्य प्रत्ययस्येत्यर्थः । प्रत्ययोकारस्य किम् । युवः । युमः ॥ असंयोगपूर्वस्य किम् । शक्नुवः । तक्ष्णुमः ॥ धिनोमीत्यत्र परत्वाद्गुणः ॥

( तत्त्वदी० )—ओर्म्वोर्वा लोप इति ॥ ओर्वाहेरित्यतो वेत्यनुवर्त्य व्यवस्थया संयोगपूर्वप्रत्ययोकारलाभः । उकारश्च प्रत्ययस्तदवयवश्च ॥

**ओर्वा हेः ॥ असंयोगपूर्वात्प्रत्ययोकाराद्धेर्लोपो वा भवति ॥ धिनु—धिनुतात् ॥ कृवि हिंसाकरणगतिषु । कृणोति । कृण्वन्ति । चकृण्व ॥ अक्षू व्याप्तौ । ( अक्षेर्वा नुप्रत्ययोऽब्विषये ) अक्ष्णोति । अक्ष्णुवंति । अक्षति । आनक्षिथ—आनष्ठ । अक्षिता—अष्टा । अक्षिष्यति—अक्ष्यति । आक्षीत्, आक्षिष्टाम् । आक्षीत, आष्टाम्, आक्षुः तक्ष त्वक्षू तनूकरणे ॥**

( सुबोधिनी )—ओर्वा हेः ॥ वेति न विकल्पार्थं किं तु प्रत्ययसंबन्धिनोऽसंयोगपूर्वादित्यस्यार्थस्य प्रतिपादनार्थम् । उः प्रत्ययरूपः प्रत्ययावयवश्च गृह्यते ॥ प्रत्ययसंबन्धिनः किम् । युहि । रुहि ॥ असंयोगपूर्वादिति* । शक्नुहि ॥ अक्ष व्याप्तौ । व्याप्तिः कात्स्न्यम् । अक्षेर्वा नुप्रत्ययोऽब्विषये । अक्षेर्नुप्रत्ययो वा स्यात् चतुर्षु । अपोऽपवादः । लटि स्कोरिति कलोपः । षढोः कः से इति कः । षत्वम् । अक्ष्यति । लुङि ऊदित्वाद्वेट् । आक्षीत् । आक्षिष्टाम् । इडभावपक्षे तु आक्षीत् । झसादिति सिलोपे आष्टाम्, आक्षुः ॥

( तत्त्वदी० )—ओर्वाहेरिति ॥ वाशब्दोऽत्र न विकल्पार्थः किंतु व्यवस्थार्थः । तत्फलं तूक्तमेव ॥

**( तक्षेस्तनूकरणे नुर्वाऽब्विषये ) तक्ष्णोति—तक्षति वा काष्टम् । ततक्षिथ—ततष्ठ । अतक्षीत, अतक्षिष्टाम् । अताक्षीत, अताष्टाम् ॥ तनूकरणे किम् । वाग्भिः संतक्षति । भर्त्सयतीत्यर्थः ॥ णिक्ष चुम्बने । प्रणिक्षति । निक्षति ॥ ग्लै म्लै हर्षक्षये ॥**

( सुबोधिनी )—तक्षेस्तनूकरणे नुर्वाऽब्विषये ॥ तनूकरणेऽर्थे तक्षेर्नुप्रत्ययो वा चतुर्षु । अपोऽपवादः ग्लै म्लै हर्षक्षये हर्षक्षयो धातुक्षयः ॥

**संध्यक्षराणामा ॥ अनपि ॥**

( सुबोधिनी )–संध्यक्षराणामा ॥ संध्यक्षरान्तानां धातूनामा अनपि ॥ धातोः किम् । गोभ्याम् । नौभ्याम् ॥

**आतो णब् डौ ॥ आदन्ताद्धातोः परो णब् डौ ॥ जग्लौ ॥**

( सुबोधिनी )–आतो णब् डौ ॥ आत इति धातोर्विशेषणात्तदन्तावीधिः । आदन्तादाकाररूपाच्च धातोः परो णब् डौ स्यात् अइवाचचारेति औ ॥

( तत्त्वदी० )–आतो णब् डाविति ॥ धातोर्विशेषणत्वात्तदन्तलाभं इत्यीभप्रेत्याह–आदन्तादिति ॥ आदन्तादाकाररूपाच्चेति बोध्यम् । णबित्यत्रानुबन्धद्वयग्रहणम् । प्रथमपुरुषबहुवचने गाते इत्यादावतिप्रसंगवारणाय डित्करणम् । आतो युग्वारणाय णित्त्वं वा स्थानिवत्त्वात् तज्ज्ञापकं चात्र डग्रहणमेव । नित्यत्वात्प्रथमप्राप्तोऽपि युक् सावकाशन्यायेन वारितः ॥

**आतोऽनपि ॥ धातोरातो लोपोऽनपि क्ङिति स्वरे इटि च ॥ जग्लतुः । जग्लिथ–जग्लाथ ॥**

( सुबोधिनी )–आतोऽनपि ॥ आत इति योगविभागात् सेटि थपि चेति लब्धम् ॥

( तत्त्वदी० )–आतोऽनपि ॥ आत इति योगविभागात्सेटि थपि चेत्यस्य लाभः ॥

**( संयोगादेरादन्तस्य किति लिङ्येकारो वा ) ग्लायात्–ग्लेयात् । अग्लासीत् ॥ कै गै रै शब्दे । जगौ ॥**

( सुबोधिनी )–संयोगादेरादन्तस्य किति लिङ्येकारो वा ॥ संयोगादेरादन्तस्य धातोरेत्वं वा किति लिङि ॥

**दादेरे ॥ अपिदाधामागैहाक्पिबतिसोस्थामात एकारो भवत्याशीर्यादादौ ये ॥ गेयात् । अगासीत् । स्त्यै ष्ट्यै शब्दसंघातयोः । स्त्यायति । तस्त्यौ । स्त्यायात्–स्त्येयात् अस्त्यासीत् ॥ दैप् शोधने । ददौ । दायात् । अदासीत् ॥ धेट् पाने । दधौ । धेयात् । अधासीत् । सिलोपपक्षे । अधात् । अधाताम् ॥**

( सुबोधिनी )–दादेरे ॥ इह दारूपास्त्रयः । डुदाञ् दाने । दाण् दाने । दो अवखण्डने । न देङ् रक्षणे गृह्यते लिङि कित्त्वासंभवात् ॥ धारूपौ द्वौ । डुधाञ् धारणपोषणयोः । धेट् पाने । दाश्च दाश्च दाश्च दाः धाश्च धाश्च धौ दाश्च धौ च दाधा- इति विग्रहः । दाप् लवने । दैप् शोधने । एतौ पित्त्वात् न ग्राह्यौ ॥ मा माने । माङ्मेङौ नेह गृह्येते लिङि कित्त्वासंभवात् ॥ गै शब्दे । गाङ् गताविति तु न गृह्यते लिङि कित्त्वासंभवात् ॥ ओहाक् त्यागे । पा पाने । षोऽन्तकर्मणि । ष्ठा गतिनिवृत्तौ । एषामेत्वं किति लिङि । देयात् । धेयात् । मेयात् । हेयात् । पेयात् । अवसेयात् । स्थेयात् ॥ किति किम् । दासीष्ट ॥

( तत्त्वदी० )—दादेरित्यत्र दादेरित्यतो दादेरित्यस्यानुवृत्त्यैव सिद्धेऽत्र दादेरिति ग्रहणसामर्थ्यादेतल्लाभः ॥ याद्यादौ पे इति ॥ एतदप्युक्तयुक्तेर्लभ्यते । ष्टयै स्त्यै इति । अत्र वासुदेवः नामधातुष्वस्कष्टयैष्टिवां सत्वं नेत्युक्तवान् तद्भाष्यविरुद्धम् । पृथक्पाठस्तु तिष्ट्यासाति अतिष्टयासदित्यत्र षत्वार्थः ॥

**( उस्यालोपः ) अधुः ॥**

( सुबोधिनी )—उस्यालोपः ॥ आदन्तस्य धातोरातो लोप उसि परे ॥

**( धेटो भूतमात्रे दिबादिपरो ङो वा द्वित्वं च ) आतोऽनपि ॥ अदधत् ॥ दृशिर् प्रेक्षणे ॥**

( सुबोधिनी )—धेटो भूतमात्रे दिबादिपरो ङो वा द्वित्वं च ॥ धेटो ङप्रत्ययो वा स्यात् द्वित्वं च लुङि । सेरपवादः ॥ पक्षे यमिरमिनमातामिति सक् । अधासीत् ॥ शाछेति सिलोपे अधात् ॥ दृशिर् प्रेक्षणे । प्रेक्षणं दर्शनम् ॥

**दृशादेः पश्यादिः ॥ चतुर्ष्वपि दृशऋसृशदसदपाघ्राध्माम्नादाणस्थां पश्यऋच्छधौशीयसीदपिबाजिघ्रधममनयच्छतिष्ठाः ॥ पश्यति ॥ ददर्श, ददृशतुः ॥**

( सुबोधिनी )—दृशादेः पश्यादिः ॥ दृशिर प्रेक्षणे । ऋ गतौ । सृ गतौ । शद्लृ शातने । षद्लृ विशरणादौ । पा पाने । पा रक्षणे इति तु न गृह्यते लुग्विकरणत्वात् । घ्रा गन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः । म्ना अभ्यासे । दाण् दाने । ष्ठा गतिनिवृत्तौ । एषामेकादशानां यथासंख्यमेकादश पश्यादयं आदेशा भवन्ति अप्प्रत्यये परे ॥

( तत्त्वदी० )—दृशादेः पश्यादिरिति ॥ पा पाने इत्यस्यैव ग्रहणं न तु पा रक्षणे इत्यस्यापि लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति केचित् । तन्न । न्यायेन सिद्धौ साहचर्यस्यागतिकत्वात् ॥

**( सृजिदृशोस्थपो वेट् ) ददर्शिथ-दद्रष्ठ । द्रष्टा । अद्राक्षीत, अद्राष्टाम् ॥**

( सुबोधिनी )—सृजिदृशोस्थपो वेट् ॥ क्रादेर्णादेरिति नियमान्नित्ये प्राप्ते विभाषेयम् । लुङि इरितो वेति ङः ॥

**( ऋवर्णदृशोर्ङे गुणः अदर्शत् ॥ ऋ गतौ । ऋच्छति । आर्च्छत् ॥**

( सुबोधिनी )—ऋवर्णदृशो गुणः ॥ ऋवर्णान्तस्य धातोर्दृशेश्च गुणः स्यात् ङप्रत्यये ॥ ङाभावे अनिटोऽनामिवत इति वृद्धिः । ततो रारो झसे दृशामित्यारोरः अतं उपधाया इति पुनर्वृद्धौ अद्राक्षीत् ॥

**गुणोर्तिसंयोगाद्योः ॥** अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि याङ किति णादावाशीर्यादादौ च ये ॥ आरतुः, आरुः ॥

( सुबोधिनी )—गुणोर्तिसंयोगाद्योः ॥ अर्तीतिभ्वादिह्वाद्योर्ग्रहणम्। लुका निर्देशस्तु सौत्रास्तिन्निर्देशो यङ्लुङ्निवृत्त्यर्थः। व्याख्यानात् ऋत इति लभ्यते। तच्च संयोगादित्वेन विशिष्यते। तेन अर्तेः संयोगादेः ऋदन्तस्य च धातोर्गुणः यग्यङोः परयोः कितोर्लिङ्लिङोश्च ॥ संयोगादेरिति किम्। क्रियात् ॥

( तत्त्वदी० )—गुणोर्तिसंयोगाद्योरिति ॥ आर्तिश्च संयोगादिश्च तौ तयोः ॥ ऋदन्तस्य चेति ॥ अर्तिसाहचर्यादेवैतल्लभ्यते ॥

**( अत्त्यर्तिव्ययतीनां थपो नित्यमिट् )** आरिथ। अर्यात्। अर्ता। अरिष्यति। आरिष्यत् ॥

( सुबोधिनी )—अत्त्यर्तिव्ययतीनां थपो नित्यमिट् ॥ अद भक्षणे। ऋ गतौ। व्येञ् संवरणे। स्वरान्तादत्वतश्चेति विकल्पे प्राप्ते विधिः ॥

**( सर्तिशास्त्यर्तिभ्यो ङो लुङि सेरपवादः )** स्वरादेः। आरत, आरताम्। अर्तेर्ह्वादेरिति केचित्। आर्षीत, आर्ष्टाम् ॥ सृ गतौ। धावति। अधावत्। शीघ्रगतावेवायम्। अन्यत्र सरति। ससार, सस्रतुः। ससर्थ। सस्रव, सस्रम ॥

( सुबोधिनी )—सर्तिशास्त्यर्तिभ्यो ङो लुङि ॥ इह लुका निर्देशात् सर्त्यर्ती जौहोत्यादिकावेव गृह्येते। तेन भ्वाद्योर्न ङ इति केचित् ॥ शासु अनुशिष्टौ। अस्यैव ग्रहणं न तु आङः शासु इच्छायामित्यस्य। परस्मैपदिसर्त्यर्तिभ्यां साहचर्यात् परस्मैपदिनः शासेर्ग्रहणात् क्रादेरिति नेट्। ससर्थ। सस्रृव ॥

( तत्त्वदी० )—शीघ्रगतावेवेति ॥ एतच्च विदो नवानामित्यतो वेत्यस्यानुवृत्तेर्व्यवस्थया बोध्यम् ॥

**यादादौ ॥** ये यादौ धातोः ऋतो रिङ् भवति ङो व्यवधानार्थस्तेन ये इति न दीर्घः ॥ स्रियात्। सर्ता। सरिष्यति। असरत, असरताम् ॥ स्रु गतौ। स्रवति। अस्रवत्। सुस्राव, सुस्रुवतुः। सुस्रोथ। स्रूयात्। स्रोता ॥

( सुबोधिनी )—यादादौ ॥ ये धातोर्ऋतो रिङ् स्यात् किति लिङि ॥ ङकारोऽन्त्यादेशार्थो न किं तु मध्यव्यवधानार्थः ॥

( तत्त्वदी० )—ङो व्यवधानार्थ इति ॥ न त्वन्त्यादेशार्थः। धातोरधिकारात्षष्ठीनिर्दिष्टत्वेनैतल्लाभात्। व्यवधानफलमाह—तेनेति ॥

( श्रिस्रुद्रुभ्यो ङो धातोश्च द्वित्वं लुङि सेरपवादः ) असुस्रुवत ॥ दुद्रु गतौ । दुदविथ-दुदोथ । दोता । अदौषीत् ॥ द्रवति । दुद्रोथ । दुद्रुव । अदुद्रुवत् ॥ श्रु श्रवणे ॥

( सुबोधिनी )—श्रिस्रुद्रुभ्यो ङो धातोश्च द्वित्वं लुङि ॥ एभ्यो ङप्रत्ययः स्यादेषां द्वित्वं च लुङि न तु सिः ॥

( श्रुवः शृआदेशो नुप्रत्ययश्चाब्विषये ) नूपः । शृणोति । शृणोमि । ओर्व्मोर्वा लोपः । शृणुवः-शृण्वः-शृणुमः-शृण्मः । शृणुयात् । शुश्राव । श्रूयात् । अश्रौषीत् ॥ शद्लृ शातने ॥

( सुबोधिनी )—श्रुवः शृआदेशो नुप्रत्ययश्चाब्विषये ॥ श्रुवो नुप्रत्ययः स्यात् धातोः शृ इत्यादेशश्च चतुर्षु । अपोऽपवादः । षद्लृ शातने । शातनं विशीर्णता ॥

( तत्त्वदी० )—शातन इति ॥ विशीर्णतायामित्यर्थः ॥

( शीयादेशे आत् ) शीयते । अशीयत । शशाद । शेदिथ-शशत्थ । शत्ता । अशदत् ॥ षद्लृ विशरणगत्यवसादनेषु । सीदति ॥

( सुबोधिनी )—शीयादेशे आत् ॥ शदेरात्मनेपदं भवति शीयादेशे कृते सति । षद्लृ विशरणगत्यवसादनेषु । विशरणमवयवानां विभागः । अवसादो नाशः ॥

( सदिस्वञ्जोर्लिटि परस्य न षः ) निषसाद । सत्ता । सत्स्यति । असदत् ॥ पा पाने । पिबति । पपौ । पेयात् । पाता । पास्यति । दादेः पे । अपात् ॥ घ्रा गन्धोपादाने जिघ्रति । जघ्रौ । घ्रेयात् । घ्रायात् । घ्रास्यति । अघ्रासीत्-अघ्रात् ॥ ध्मा शब्दाग्निसंयोगयोः । धमति । दध्मौ । ध्मेयात्-ध्मायात् । अध्मासीत् ॥ ष्ठा गतिनिवृत्तौ । तिष्ठति । तस्थौ । दादेरे । स्थेयात् ॥ म्ना अभ्यासे । मनति । मम्नौ । म्नायात्-म्नेयात् । अम्नासीत् ॥ दाण् दाने । यच्छति । ददौ । देयात् । अदात् ॥ ह्वृ कौटिल्ये । ह्वरति । जह्वार । गुणोर्तिसंयोगाद्योः । जह्वरतुः ॥

( सुबोधिनी )—सदिस्वञ्जोर्लिटि परस्य न षः ॥ द्वित्वात्परस्यैतयोः सस्य षो न लिटि । अड्द्वित्वव्यवधानेऽपीति प्राप्तौ निषेधः ॥ लिटि किम् । निषिषत्सति । पिबतीत्यत्र पिबादेशोऽदन्तः । अदे इत्यलोपः । अल्लोपस्यासिद्धत्वादुपधाया लघोरिति गुणो न । अकारयुक्तोच्चारणसामर्थ्याद्वा ॥ घ्रा गन्धोपादाने । गन्धोपादानं गन्धग्रहणम् । शाच्छासेति वा सिलुक् । यमिरमीतीट्सकौ । अघ्रात्-अघ्रासीत् ॥ ध्मा शब्दाग्निसंयोगयोः । शब्दशब्देन तदनुकूलो वायुरिह गृह्यते । तेन शंखं धमतीतिवत्

मृदङ्गं धमतीति प्रयोगो न । अग्निसंयोगे सुवर्णं धमति अग्निना संयुनक्तीत्यर्थः ॥ म्ना अभ्यासे । मनति विद्याम् अभ्यस्यतीत्यर्थः ॥ अदादित्यत्र दादेः पे इति सिलुक् । गुणोऽर्तीति गुणः । जह्वतुः ॥

( तत्त्वदी० )—सदिस्वञ्जोरिति । लिटि परे परस्य सस्येति शेषः । स्वञ्जेर्ग्रहणं तु भाष्याननुगुणमपि वृत्त्यादिसंमतत्वात्कृतम् ॥

**( ऋदन्तात्थपो नेट् )** जह्वर्थ । ह्वर्यात् । ह्वर्ता । ह्वरिष्यति । अह्वरिष्यत् । अह्वार्षीत् ॥ स्वृ शब्दोपतापयोः । स्वरति । सस्वरिथ । सस्वर्थ । सस्वरिव । स्वरिता-स्वर्ता । स्वरिष्यति । अस्वरिष्यत् । अस्वारीत् । अस्वार्षीत्, अस्वार्ष्टाम, अस्वार्षुः ॥ बुध अवगमने । बोधति । बोधिता ॥ रुह बीजजन्मनि प्रादुर्भावे च । रोढा । रोक्ष्यति । अरुक्षत् ॥ स्कन्दिर् गतिशोषणयोः । स्कन्दति । चस्कन्दिथ-चस्कन्त्थ । स्कद्यात् । स्कन्त्ता । स्कन्त्स्यति । अस्कान्त्सीत्-अस्कदत् ॥ यभ मैथुने । यभति । ययाभ, येभतुः, येभुः । येभिथ-ययब्ध । यभ्यात् । यब्धा । अयाप्सीत्, अयाब्धाम्, अयाप्सुः ॥ तॄ प्लवनतरणयोः । तरति । ततार, तेरतुः । तेरिथ ॥

( सुबोधिनी )—ऋदन्तात् थपो नेट् ॥ ऋदन्तात् धातोः परस्य थप इण्न भवति॥ स्वरान्तादिति पाक्षिके प्राप्ते निषेधः हन्नृत इतीट् । ह्वरिष्यति ॥ स्वृ शब्दोपतापयोः । उपतापो रोगः । स्वरति स्तृतीति वेट् । सस्वरिथ-सस्वर्थ । गुणोऽर्तीति गुणः । स्वर्यात् । लटि हन्नृत इति नित्यमिट् । स्वरिष्यति । लुङि अस्वारीत्, अस्वारिष्टाम् । इडभावे अस्वार्षीत्, अस्वार्ष्टाम् ॥ स्वरान्तादत्वत इति वेट् । चस्कन्दिथ-चस्कन्त्थ । आशिषि नो लोप इति नलोपः । स्कद्यात् । लुङि इरितो वेति वा ङः । अस्कदत् । ङाभावे सावनिटो नित्यं वृद्धिः । अनिटो धातोरनुपधाभूतस्यातो वृद्धिः स्यात् सिप्रत्यये । अस्कान्त्सीत् ॥ तॄफलेत्येत्वपूर्वलोपौ । तेरतुः ॥

**ऋत इर् ॥** ऋकारस्य इर् भवत्यगुणवृद्धिविषये ॥ तीर्यात् ॥

( सुबोधिनी )—ऋत इर् ॥ धातोर्ऋकारस्य इर् भवति गुणवृद्धिनिमित्ताभावे ॥ य्वोर्वीति दीर्घः । तीर्यात् ॥

**ईटो ग्रहाम् ॥** ग्रहादीनामिट ईकारो न तु णादौ ॥

( सुबोधिनी )—ईटो ग्रहाम् ॥ ग्रहादेः परस्येटो दीर्घः स्यान्न तु लिटि । ग्रहामिति बहुवचनेन वक्ष्यमाणव्यवस्था ॥

( तत्त्वदी० )—न तु णादाविति ॥ उदितो वेत्यतो वानुवृत्तेर्व्यवस्थया लाभः ॥

**( वृङ्वृञृदन्तानां वा )** तरिता-तरीता ॥

( सुबोधिनी )–वृङ्वृञृकॄदन्तानां वा ॥ एभ्यः परस्येटो वा दीर्घः ॥ न तु लिटि किम् । तेरिथ ॥

**( पे सेरिटो न दीर्घः सीष्टादेश्च )** अतारीत्, अतारिष्टाम्, अतारिषुः ॥ दंश दशने ॥

( सुबोधिनी )–पे सेरिटो न दीर्घः सीष्टादेश्च ॥ वृङ्वृञृकॄदन्तात्परस्येटो न दीर्घः पे सौ सीष्टादौ च परे ॥ दंश दशने । दशनं दंष्ट्राव्यापारः । निपातनान्नस्य लोपः॥

( तत्त्वदी० )–दशन इति ॥ इहैव निपातनान्नलोपः ॥

**( अपि रञ्जदंशसञ्जस्वञ्जां नस्य लोपो वाच्यः )** दशति । दंष्टा । अदाङ्क्षीत् ॥ षञ्ज सङ्गे । ससञ्जिथ–ससङ्क्थ । व्यषाङ्क्षीत् ॥ कित रोगापनयने संशये च ॥

( सुबोधिनी )–अपि रञ्जदंशसञ्जस्वञ्जाम् ॥ रञ्ज रागे । दंश दशने । सञ्ज सङ्गे । ष्वञ्ज परिष्वङ्गे । एषामुपधाभूतस्य नस्य लोपो भवति अप्प्रत्यये । लुङि सावनिट इति वृद्धिः । छशषेति षत्वम् । षढोरिति कत्वम् । यमायपेस्येतियं परसवर्णः । अदाङ्क्षीत् । अड्द्वित्वव्यवधानेऽपीति षत्वम् । व्यषाङ्क्षीत् ॥ कित रोगापनयने संशये च । रोगापनयनं व्याधिप्रतीकारः । संशये प्रायेण विपूर्वः । "विचिकित्सा तु संशयः" इत्यमरः ॥

**गुब्भ्यः ॥ गुप्तिज्कित्मान्बध्दान्शान्भ्यः स्वार्थे सप्रत्ययो भवति धातोश्च द्वित्वम् ॥** चिकित्सति । चिकित्सांचकार । चिकित्सिता । अचिकित्सीत् ॥ पत्लृ पतने पपात, पेततुः ॥

**( पतेर्ङे पुम् )** अपप्तत् ॥ भ्रमु चलने । यो वा । भ्रम्यति–भ्रमति ॥

(सुबोधिनी)–गुब्भ्यः ॥ गुप् गोपने । तिज निशाने । मान पूजायाम् । बंध बन्धने । दान आर्जवे । शान तेजने बहुवचनमाद्यर्थम् । गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने वाच्ये नित्यं स्वार्थे सप्रत्ययः धातोर्द्वित्वं च । गुपिप्रभृतयः किद्भिन्ना अनुदात्तेतः । दानशानौ स्वरितेतौ । अत्र सप्रत्ययस्य सिसंतेत्यनेनेण् न भवति आगमजमनित्यमित्युक्तत्वात् । 'नानिटि से' इत्युपधाया गुणो न । स धातुरिति धातुत्वात्तिबादिः । कितेर्व्याधिप्रतीकारादावेव स इत्युक्तम् । तदुदाहरति । चिकित्सति । रोगमपनयतीत्यर्थः ॥ शत्रुं चिकित्सति । निगृह्णातीत्यर्थः ॥ क्षेत्रे तृणानि चिकित्सति । अपनयति नाशयति वेत्यर्थः ॥ कासादिप्रत्ययादाम् इत्याम् । यत इत्यलोपः । चिकित्सांचकार । भ्रमु चलने । मण्डलाकारेण चलनमेव धात्वर्थो न किंतु चलनमात्रम् । भ्राशभ्लाशिति वा यः । भ्रम्यति–भ्रमति ॥

(तत्त्वदी०)–**गुभ्य** इति ॥ बहुवचनमाद्यर्थमतो गणयति ॥ **गुपतिज्** इत्यादि ॥ **स्वार्थ** इति॥ अन्यार्थानुक्तेरिति भावः ॥ **चिकित्सतीति** ॥ आगमजस्यानित्यत्वादिड्भावस्ततो 'नानिटि से' इति गुणाभावः। **भ्रमु** इति ॥ उदित्त्वं क्त्वाप्रत्यये भ्रमित्वा भ्रान्त्वेतीड्विकल्पार्थम् ॥

**(फणूराजृभ्राजृभ्राशृभ्लाशृस्वनृस्यमुजॄष्भ्रमुत्रसामेत्त्वपूर्वलोपौ वा ॥ भ्रेमतुः–बभ्रमतुः। अभ्रमीत् ॥ टुवम् उद्गिरणे। (वम एत्वपूर्वलोपौ वेति केचित्) वेमतुः–ववमतुः। अवमीत् ॥ फण गतौ। फेणतुः–पफणतुः। अफाणीत–अफणीत् ॥ स्वन स्यमु शब्दे। स्वेनतुः–सस्वनतुः। अस्वानीत्–अस्वनीत् ॥ स्येमतुः–सस्यमतुः। अस्यमीत् ॥ शसु हिंसायाम्। शशसतुः। शशसिथ ॥ तुहिर् दुहिर् उहिर् अर्दने। अतुहत्–अतोहीत्। दोहिता। अदुहत्–अदोहीत्॥ उवोह, ऊहतुः ॥ वस निवासे।**

(सुबोधिनी)–**फणूराजृभ्राजृभ्राशृभ्लाशृस्वनृस्यमुजॄष्भ्रमुत्रसामेत्त्वपूर्वलोपौ वा** ॥ फणू गतौ। राजृ दीप्तौ। टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ। स्वन स्यमु शब्दे। जॄष्झॄ वयोहानौ। भ्रमु चलने। त्रसी उद्वेगे। एषामेत्वपूर्वलोपौ वा किति लिटि सेटि थपि च। टुवम उद्गिरणे। केचिदमुमुदितं पठन्ति। वामनस्तु नोदितम्। गॄधातोर्युट्प्रत्यये गुणे कृते तूद्गिरण इति स्यात्ततो निपातनादिरिति सुधाकरः। उद्गिरणं वमनम्। वादित्वादेत्वपूर्वलोपौ न। ववमतुः। 'वेमुश्च केचिद्रुधिरम्' इत्यादिप्रयोगा भाष्यविरुद्धाः ॥

(तत्त्वदी०)–**अभ्रमीदिति** ह्म्यन्तेत्यादिना न वृद्धिः। **टुवम उद्गिरण** इति॥ वेमथुरित्यथुप्रत्ययार्थं टित्त्वम्। इहैव निपातनादुद्गिरणे इत्यत्र गुणाभावः ॥ **शशसतुरिति** ॥ न शसददेति निषेधः ॥

**णबादौ पूर्वस्य ॥ यजादीनां ग्रहादीनां च पूर्वस्य संप्रसारणं णबादौ ॥**

(सुबोधिनी)–**णाबादौ पूर्वस्य** ॥ यजामिति ग्रहामिति चानुवृत्तेः। यद्यपि ग्रहिवृश्चिप्रच्छतिभ्रज्जतीनां पूर्वस्य संप्रसारणे कृते विशेषो नास्ति तथापि पर्जन्यवल्लक्षणं प्रवर्त्तते। जग्राह। वव्रश्च। पप्रच्छ। बभ्रज्ज ॥ लिटि किम्। विवक्षति। पिपृक्षति।

**(यवराणामिदुदृतः) सस्वरस्य संप्रसारणम्। दीर्घस्य दीर्घो ह्रस्वस्य ह्रस्वः। उवास ॥**

(सुबोधिनी)–**यवराणामिदुदृतः** ॥ यकारवकाररकाराणां स्थाने इकारोकारऋकारा भवन्ति। ते संप्रसारणसंज्ञकाः स्युः ॥

**यजां यवराणां य्वृतः संप्रसारणं किति ॥** यजादीनां संप्रसारणं किति "यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिः स्वपिः । वद्वसी श्वयतिर्वक्तिरेकादश यजादयः ॥"

( सुबोधिनी )—यजां यवराणां य्वृतः संप्रसारणं किति ॥ यजादिधातूनां यकारवकाररकाराणामिकारोकारऋकाराः संप्रसारण भवन्ति किति प्रत्यये परे॥"यजिर्वपिर्वहिश्चैव वेञ्व्येञ्ह्वेञ्स्वपवदस्तथा ॥ वसिश्च श्वयतिर्वक्तिरेकादश यजादयः॥ १ ॥" यज देवपूजादौ । टुवपू बीजतन्तुसंताने । वह प्रापणे । वेञ् तन्तुसंताने । व्येञ् संवरणे। ह्वेञ् स्पर्द्धायाम् । ञिष्वप् शये । वद व्यक्तायां वाचि । वस निवासे । टुओश्विइर् गतिवृद्ध्योः । वच परिभाषणे । एते एकादश धातवो यजादयो ज्ञेयाः ॥

**घसादेः षः ॥** घसिशासिवसीनां सस्य षो निमित्ते सति ॥ ऊषतुः । उवसिथ—उवस्थ । उष्यात् । वस्ता ॥

( सुबोधिनी )—घसादेः षः ॥ सस्याकृतत्वादप्राप्ते विधिरयम् । घस्लृ अदने । शासु अनुशिष्टौ । वस निवासे । क्विलात्परस्यैषां सस्य षः । स्वरान्तादत्वत इति वेट् । उवसिथ—उवस्थ ॥

( तत्त्वदी० )—निमित्त इति । क्लिात्परस्येत्यर्थः ॥

**सस्तोऽनपि ॥** सस्य तोऽनपि से ॥ वत्स्यति । अवात्सीत्,अवात्ताम् ॥ वद व्यक्तायां वाचि । वदति । उवदिथ । उद्यात् । वदिव्रज्योः सौ नित्यं वृद्धिः । अवादीत् ॥ टुओश्विइर् गतिवृद्ध्योः ॥

( सुबोधिनी )—सस्तोऽनपि ॥ धातोः सस्य तोऽनपि सकारे परे ॥ से किम् । वस्ता ॥ सस्येति किम् । रप्स्यते ॥ धातोः किम् । वेधः ॥ से लुङि 'णिपे' इति सेर्णित्वादत उपधाया इति वृद्धिः । अवात्सीत् । सस्य ते कृते झसादिति सिलोपः अवात्ताम्। वदिव्रज्योरिति वृद्धिः । अवादीत् ॥ टुओश्वि इर् गतिवृद्ध्योः । टु इतीत्संज्ञकः । द्वितोथुरित्येतदर्थः । श्वयथुः । ओरिति ल्वाद्योदितश्चैतदर्थः । इरितीरितो वेति ङप्रत्ययार्थः ॥

**( श्वयतेर्णादौ यङि च संप्रसारणं वा)** ततोद्वित्वम् ॥ शुशाव, शुशुवतुः । शुशविथ । शिश्वाय, शिश्वियतुः ॥ शिश्वयिथ । शूयात् । श्वयिता । अश्वयीत् ॥

( सुबोधिनी )—श्वयतेर्णादौ यङि च संप्रसारणं वा ॥ ततो द्वित्वम् । श्वयतेः पूर्वं संप्रसारणं स्याद्वा पश्चाद् द्वित्वं लिटि । नुधातोरित्युव् । शुशुवतुः । आशिषि यजामिति संप्रसारणे कृते ये इति दीर्घः । शूयात । ह्म्यन्तेति न वृद्धिः । अश्वयीत् । पक्षे इरितो वेति ङप्रत्यये ॥

( श्वयतेरितो लोपो ङे ) अश्वत् ॥

( सुबोधिनी )–श्वयतेरितो लोपो ङे ॥ श्वयतेरिकारस्य लोपः स्यात् ङप्रत्यये। अश्वत् ॥

( श्वयतेर्ङे द्वित्वं वा एरलोपः ) अशिश्वियत् ॥ घस्लृ अदने । घसति । घसेत् । घस्ता । घत्स्यति । अघत्स्यत् ॥ इति पप्रक्रिया ॥

( सुबोधिनी )–श्वयतेर्ङे द्वित्वं वा एरलोपः ॥ श्वयतेर्वा द्वित्वं भवति इकारस्य लोपाभावश्च ङे परे । नुधातोरितीय् । अशिश्वियत् ॥ ॥ इति सुबोधिन्यां पप्रक्रिया ॥

( तत्त्वदी० )–श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायां दीपिकायां हि परस्मैपदपूरणम् ॥

इति तत्त्वदीपिकायां पप्रक्रिया ॥

एध वृद्धौ ॥ एधते । एधांचक्रे ॥

( सुबोधिनी )–एध वृद्धौ ॥ अकारोऽनुदात्त आत्मनेपदार्थः ॥

( तत्त्वदी० )–एध वृद्धाविति ॥ अकारोऽनुदात्त आत्मनेपदार्थः ॥

( आमो भ्वसोर्नात्कर्तरि ) एधामास । एधांबभूव । ऐधिष्ट ॥ ईक्ष दर्शनाङ्कनयोः । ईक्षांचक्रे । ऐक्षिष्ट ॥ ष्वष्क गतौ । ष्वष्कते । ष्वष्किषीष्ट । अष्वष्किष्ट ॥ वेष्ट वेष्टने । विवेष्टे ॥ चेष्ट चेष्टायाम् । अचेष्टिष्ट ॥ ऋज गतौ स्थैर्ये च । अर्जते । आनृजे । आर्जिष्ट ॥ ष्वञ्ज परिष्वङ्गे । स्वजते ॥

( सुबोधिनी )– आमो भ्वसोर्नात्कर्तरि ॥ आम्प्रत्ययान्तात्परयोर्भ्वसोः कर्तर्यर्थे आत्मनेपदं न भवति । भावकर्मणोस्त्वात्मनेपदमेव । नामधातुष्वष्कष्ठिवामिति सत्वाभावः । ष्वष्कते ॥ आनृजे इत्यत्र द्वित्वम् । हसादिः शेषः । र इत्यत्वम् । आभ्वोरित्यात्वम् । नुगशामिति नुक् ॥ ष्वञ्ज परिष्वङ्गे । परिष्वङ्ग आलिङ्गनम् । अपि रञ्जेति नलोपः ॥

( तत्त्वदी० )–नात्कर्तरीति ॥ आत् आत्मनेपदम् । कर्तरीत्युक्तेर्भावादात्मनेपदमेव ॥ ष्वष्केति ॥ नामधातुष्वष्कष्ठिवामिति सत्वनिषेधः ॥ आनृजे इति ॥ द्वित्वं हसादिः शेषः र इत्यत्वम् । आभ्वोरित्यात्वम् । नुगशामिति नुक् ॥

( स्वजतेर्णोदेर्वा कित्त्वम् ) सदिस्वञ्जोर्लिटि परस्य न षः ॥ परिषस्वञ्जे–परिषस्वजे । स्वङ्क्षीष्ट । स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्त, अस्वङ्क्षाताम् । पर्यष्वङ्क्त–पर्यस्वङ्क्त ॥ त्रपूष लज्जायाम् । त्रपते त्रेपे । ऊदितो वा । त्रपिषीष्ट–त्रप्सीष्ट । अत्रपिष्ट–अत्रप्त ॥ तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे । तेपते । तितिपे । तिप्सीष्ट । अतिप्त ॥ तेपृ । ते-

१–नाऽयं सर्वत्रेति लक्ष्यानुसारिणी व्यवस्था, यत्र लिङ्गं वचनं चास्ति तत्रैवास्य प्रयोगः ॥

पते । तितिपे । तेपिषीष्ट । अतेपिष्ट ॥ ष्टिपृ । स्तेपते । तिष्टिपे । तेपिषीष्ट ॥ ष्टेपृ । स्तेपते । तिष्टेपे । स्तेपिषीष्ट ॥ जभीजृभि गात्रविनामे । ( रधिजभोः स्वरे नुम् ) जम्भते । अजम्भिष्ट ॥ जृम्भते । जजृम्भे ॥ ष्टुभ स्तम्भे । विष्टोभते । तुष्टुभे । स्तोभिता । स्तोभिषीष्ट ॥ क्षमूष् सहने । क्षमते चक्षमे । चक्षमिषे–चक्षंसे ॥

मो नो धातोः ॥ मान्तस्य धातोर्मकारस्य नः स्यात् झसे पदान्ते वमयोश्च ॥ चक्षमिवहे–चक्षण्वहे । चक्षमिमहे–चक्षण्महे । अक्षमिष्ट–अक्षंस्त ॥ क्नूयी शब्दे उन्दे च । क्नूयते । अक्नूयिष्ट ॥ क्ष्मायी विधूनने । क्ष्मायते । चक्ष्माये । अक्ष्मायिष्ट ॥ स्फायी ओप्यायी वृद्धौ । स्फायते । पस्फाये । अस्फायिष्ट ॥ प्यायते ॥

( सुबोधिनी )–स्वजतेर्णादेर्वा कित्त्वम् ॥ स्वजतेः परस्य लिटो वा कित्त्वं भवति । सदिस्वञ्जोरिति परस्य न षः । परिषस्वजे । झसादिति सिलोपः । अस्वङ्क्त ॥ तॄफलभजत्रपामित्येत्वपूर्वलोपौ । त्रेपे । ऊदितो वेति वेट् । त्रप्सीष्ट–त्रपिषीष्ट । लुङि झसादिति सिलोपः । अत्रप्त ॥ तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे । आद्योऽनिट् । क्षीरस्वामी त्वयं सेडिति बभ्राम । क्रादेर्णादेरिति नित्यमिट् । तितिपिषे । सिस्योः । उपधाभूतस्य नामिनो गुणो नानिटि सिप्रत्यये सीष्टादौ च परे । लुङि झसादिति सिलोपः । अतिप्त ॥ जभी जृभि गात्रविनामे । गात्रस्वेदे इत्यर्थः । ईदित्त्वात् आदीदित इति क्तक्तवत्वोर्नेट् । रधिजभोः स्वरे नुम् । एतयोर्नुमागमस्यात् स्वरे ॥ रधः हिंसायाम् । ञिप्रत्यये तु रन्धयतीत्यत्र ञिनिमित्ता परापि वृद्धिर्नित्येन नुमा बाध्यते । स्वरे किम् । रब्धा । जब्धा ॥ ष्टुभ स्तम्भे । स्तम्भो निरोधः ॥ क्षमूष् सहने । षकारः षिद्भिदामङ् इत्यङ्प्रत्ययार्थः । मो नो धातोरिति मस्य नः । अवकुप्वन्तरेऽपीति णत्वम् । चक्षण्वहे ॥ क्नूयी शब्दे उन्दे च । उन्दः क्लेदनमार्द्रीभाव इत्यर्थः ॥

( तत्त्वदी० )–परिषस्वजे इति । कित्त्वान्नलोपः । सदिस्वञ्जोरिति परस्य षत्वनिषेधः ॥ त्रप्सीष्टेति ॥ ऊदितो वेति वेट् ॥ चक्षण्महे इति ॥ इडभावपक्षे वमयोश्चेति मस्य नत्वम् ॥ क्नूयी शब्दे उन्दे चेति ईदित्त्वं क्तक्तवत्वोरिडभावार्थम् ।

( लिड्यङोः प्यायः पी ) पिप्ये ॥

( सुबोधिनी )–लिडयङोः प्यायः पी ॥ लिटि यङि च प्यायः पी । आदौ परत्वात् पीभावे पश्चात् पीशब्दस्य द्वित्वे कृते नुवातारात्ते यः । पिप्ये । यङि पेपीयत ॥

( तत्त्वदी० )–पिप्ये इति ॥ आदौ परत्वात्पीभावे पुनः प्रसङ्गविज्ञानात्पीशब्दस्य द्वित्वम् । ततोनेकस्वरपूर्वकत्वाद्यत्वम् ॥

**( दीपजनबुधपूरितायिप्यायिभ्यो वा इण् तनि कर्तरि सेरपवादः)**

(सुबोधिनी )-दीपजनबुधपूरितायिप्यायिभ्यो वा इण् तनि कर्तरि सेरपवादः ॥ दीपी दीप्तौ । जनी प्रादुर्भावे । बुध अवगमने । पूरी आप्यायने । एते दिवादयः ॥ तायृ संतानपालनयोः । ओप्यायी वृद्धौ । एतौ भौवादिकौ ॥ एभ्य इण् प्रत्ययो वा स्यात् कर्त्रर्थे तनि परे सेरपवादः ॥

( तत्त्वदी० )-दीपजनेति ॥ अत्र पण्डिताः । दीपपूरादिभिरात्मनेपदिभिः साहचर्यात् बुध बोधने बुध जनने इति परस्मैपदिनो न ग्रहणम् । तेनाभ्यां कर्मव्यतिहारे आत्मनेपदे तानि न भवति॥

**लुक् ॥ इणः परस्य तनो लुक् ॥ अप्यायि-अप्यायिष्ट ॥ तायृ संतानपालनयोः । ततायें । अतायिष्ट ॥ वल वल्ल संवरणे । वलते । वल्लते ॥ टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । भ्रेजे-बभ्राजे । भ्राश्यते-भ्राशते । भ्रेशे-बभ्राशे । भ्लाश्यते-भ्लाशते । भ्लेशे-बभ्लाशे ॥ तिज निशाने क्षमायां च । गुब्भ्यः । तिक्षते । तितिक्षांचक्रे ॥ गुप् गोपनकुत्सनयोः । जुगुप्सते ॥ मान विचारणे ॥**

( सुबोधिनी )-लुक् ॥ इण् तनीत्यत इणिति तनीति चानुवृत्तम् । इणिति पञ्चम्या विपरिणमनियं तनीति षष्ठ्या च । अप्यायि-अप्यायिष्ट॥तायृ संतानपालनयोः । संतानः प्रबन्धः॥ टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । दीप्तिस्तेजः । फणिराजृभ्राजृ इत्येत्वपूर्वलोपौ । भ्रेजे-बभ्राजे । भ्राशभ्लाशिति वा यप्रत्ययः । भ्राश्यते ॥ तिज निशाने । निशानं तीक्ष्णीकरणम् । गुब्भ्य इति तिजेः क्षमायां सः । तितिक्षते । क्षमां करोतीत्यर्थः ॥ गुप गोपनकुत्सनयोः । गोपनं रक्षणम् । गुपेर्निन्दायां सः । जुगुप्सते । निन्दां करोतीत्यर्थः ॥

( तत्त्वदी० )-लुक् ॥ अत्रेण् तन्यकर्तरीति पूर्वसूत्रादनुवृत्तं तनीति षष्ठ्या विपरिणमनीयमिणिति पञ्चम्या । तत्र षष्ठीनिदशादन्त्यलोपः । आदेरित्यस्यानुवृत्त्या आदेरपि लोप इति सूत्रपाठपक्षे । क्वचित्तु लुगिति पाठः । तत्र सर्वस्य तनो लुग्भवतीति । अत्रेदं वक्तव्यम् । अत्र तनीति नानुवर्त्यम् । इणः परस्य लुक् स्यात् इत्येव व्याख्येयम् । तथा चेणः परस्यान्यस्यासंभवात्तन एव लुग्भविष्यति । न चाकारितरामित्यत्रातिप्रसंङ्गः तत्रासिद्धत्वेन तनः इण्ः परत्वाभावात् ॥ **निशाने** इति ॥ निशानं तीक्ष्णीकरणम् ॥

**यः से ॥ पूर्वस्यात इत्से ॥**

( सुबोधिनी )-यः से ॥ इ अः से इति पदच्छेदः । पूर्वस्येत्यनुवृत्तम् ॥ तपरः किम् । पापचिषति । यङन्तात्सः ॥

( तत्त्वदी० )-यः से इति ॥ इ अः से इति छेदः ॥

( मानादीनां पूर्वस्येतो दीर्घः ) मीमांसते । बध निन्दायाम् । आदिजबानामिति भः । बीभत्सते ॥ पण व्यवहारे स्तुतौ च । पन च । पणायति । स्तुतावेवायः । पणते । पणायांचक्रे । पेणे ॥ एवं पन् ॥ कमु कान्तौ ॥

(सुबोधिनी)—मानादीनां पूर्वस्येतो दीर्घः ॥ एषां पूर्वस्येकारस्य दीर्घः स्यात् । मान विचारणे । बध निन्दायाम् । दान आर्जवे । शान् तेजने । इत्यादि । मान-जिज्ञासायां सः मीमांसते । जिज्ञासां करोतीत्यर्थः । बध निन्दायाम् । निन्दा परापवादः । वधेश्चित्तविकारे सः । आदिजबानामिति भः । खसे चपा झत तः । बीभत्सते । ग्लानिं करोतीत्यर्थः ॥ पण व्यवहारे स्तुतौ च । पन च । क्रयविक्रयरूपो व्यवहारः । पनेति स्तुतावित्यनेन संबध्यते । पृथग्निर्देशात् । पनिसाहचर्यात् पणेरपि स्तुतावेवायप्रत्ययः । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तादात्मनेपदं न भवति । पणायति । यत इत्यल्लोपे पणायांचकार । भट्टिस्तु व्यवहारेऽप्यायप्रत्ययं कृतवान् । "न चोपलेभे वणिजा पणायाम्" इति व्यवहारमित्यर्थः । आयान्तादङ्प्रत्यये आप् ॥ कमु कान्तौ । कान्तिरिच्छा । णिङभावे उदित्त्वात् क्त्वायामिड्विकल्पः । कमित्वा—कान्त्वा । क्तक्तवत्वोस्तु क्वचिद्वेट इति निषेधात् । कान्तः कान्तवान् ॥

( तत्त्वदी० )—पन चेति ॥ व्यवहारे स्तुताविति चार्थः ॥ पणायतीति । व्यवहारे पणते इत्यत्र चरितार्थत्वादनुबन्धस्यायप्रत्ययान्त त्वात् ॥

( कमेः स्वार्थे णिङनपि तु वा ) कामयते । कामयांचक्रे । चकमे ।

( सुबोधिनी )—कमेः स्वार्थे णिङनपि तु वा ॥ कमेर्णिङ् स्याच्चतुर्षु नित्यमनपि वा धात्वर्थे ॥

णेरङ् द्विश्च ॥ ण्यन्ताद्धातोः कर्तरि अङ् लुङि ॥ सेरपवादः । धातोश्च द्वित्वम् ॥

( सुबोधिनी )—णेरङ् द्विश्च ॥ णेरित्यस्य प्रत्ययत्वात्तदन्तलाभः । अप् कर्तरीत्यतो मण्डूकप्लुत्या कर्तरीत्यनुवृत्तम् । ङकारोऽङि लघाविति विशेषणार्थः । अङि परे चकारात् ण्यन्तस्य धातोर्द्वित्वम् । तच्च नित्यत्वात् णिलोपे कृते प्रवर्त्तते ॥ कर्तरि किम् । अकारयिषातां घटौ कुलालेन ॥

( तत्त्वदी० )—णेरङ् द्विश्च ॥ अस्य प्रत्ययत्वात्तदन्तलाभः । अप् कर्तरीत्यतो मण्डूकप्लुत्या कर्तरीत्यनुवर्तते ॥ कर्तरि किम् । अकारयिषातां घटौ कुलालेन । अत्राहुः । ङकारोऽङि लघाविति विशेषणार्थः । चकारस्य वाक्यभेदेन व्याख्यानात् । श्रिश्रुद्रुस्र्यो ङ क्वचिद्विकल्पेनेत्यादि । अत्रेदं वक्तव्यम् । अशिश्रियदित्यादौ ङकारस्य गणप्रतिषेधार्थतया दृष्टत्वेनान्यार्थताया अन्याय्यत्वात् । अचूचुरदित्यादौ तु ह्रस्वविधिसामर्थ्यादेव न ॥

**ञेः ॥ अनपि ञेर्लोपो न त्विडामन्तालवाय्येत्न्विष्णुषु ॥**

( सुबोधिनी )–ञेः ॥ ञेरिति णिञिङोः सामान्येन ग्रहणम् । इडादिषु प्रत्ययेषु परेषु ञेर्लोपो नान्यत्र । अनपि ञेर्लोपः स्यात् इटे । कारयिता । आमि कामयामास । विशादेरन्त इत्यौणादिकेऽन्ते मण्डयन्तः । आलुप्रत्यये स्पृहयालुः । श्रृदेराय्य इत्यौणादिके आय्ये स्पृहयाय्यः । इत्नुप्रत्यये औणादिके स्तनयित्नुः । इष्णुप्रत्यये छान्दसिके वीरुधः पारयिष्णवः ॥

( तत्त्वदी० )–ञेरिति ॥ णिञिङोः सामान्येन ग्रहणम् । न त्विडित्यादि । इट् कारयिता । आम् । कारयामास । अन्तः । मण्डयन्तः । औणादिकोऽन्तः । आलुः । स्पृहयालुः । स्पृहीत्यादिनोक्त आलुः । आय्यः । स्पृहयाय्यः । औणादिक आय्यः । इत्नुः । स्तनयित्नुः । इष्णुः । पारयिष्णवः । एषु ञेर्लोपो नेत्यर्थः ॥

**अङि लघौ ह्रस्व उपधायाः ॥ अङि सत्युपधाया ह्रस्वो भवति पूर्वस्यातो लघुनि धात्वक्षरे इकारः ॥**

( सुबोधिनी )–अङि लघौ ह्रस्व उपधायाः ॥ येन नाव्यवधानं तेन व्यवहितेऽपीति वचनसामर्थ्यात् धात्वक्षरस्थककारेण व्यवधानेऽपि पूर्वस्यातोऽत्रेत्वम् । अजजागरदित्यत्र त्वनेकवर्णव्यवधानत्वान्नेत्वम् ॥ उपधायाः किम् । अचकाङ्क्षत् ।

( तत्त्वदी० )–अङि लघौ ह्रस्व उपधायाः ॥ धात्वक्षरस्य ककारेण व्यवधानेऽपि येन नाव्यवधानं संभवति तेन व्यवहितेऽपीति वचनसामर्थ्याद्भवति । अजजागरदित्यत्र त्वनेकवर्णव्यवधानत्वान्न भवति । न चाचिक्षणदित्यत्राप्यनेकवर्णव्यवधानत्वान्न भविष्यतीति वाच्यम् । अत्स्मृद्त्वरेतीत्वबाधनार्थमत्वेन संयोगव्यवधाने भवतीति ज्ञापितत्वात् । तेन स्वरहससमुदाय एव न भविष्यतीति बोध्यम् ॥

**लघोर्दीर्घः ॥ अङि सति पूर्वस्य लघोर्दीर्घो भवति लघुनि धात्वक्षरे परे ॥ अचीकमत । ञेरभावे ॥**

( सुबोधिनी )–लघोर्दीर्घः ॥ अङि लघावित्यतो लघावित्यनुवृत्तम् ॥ लघोः किम् । अचिक्षणत् । ञेरभावे ॥

( तत्त्वदी० )–लघोर्दीर्घः ॥ अत्राङि लघावित्यनुवर्तते इत्याह–**लघुनीत्यादि** ॥ अत्र प्राञ्चः हसादेर्धातोः पूर्वस्य लघोर्दीर्घो भवति । तेनारिरक्षदित्यादावप्रसङ्ग इति । वस्तुतस्तु अत्र दीर्घाप्राप्तिरेव लघुधात्वक्षरपरत्वाभावात् ॥

**( कमेरङ्द्वित्वे ) अचकमत ॥ अय गतौ । अयते ॥**

( सुबोधिनी )–कमेरङ्द्वित्वे ॥ अञ्यन्तात्कमेरङ् स्यात् धातोर्द्वित्वं लुङि सेरपवादः ॥

**( अयतौ प्रादेरेफस्य लत्वम् )** प्लायते । अयांचक्रे । आयिष्ट ॥ दय दानगतिरक्षणहिंसादानेषु । दयते । दयांचक्रे ॥ घट चेष्टायाम् । घटते । जघटे । अघटिष्ट ॥ ईह चेष्टायाम् । ईहांचक्रे ॥ ऊह वितर्के । ऊहांचक्रे ॥ कासृ शब्दकुत्सायाम् । कासांचक्रे ॥ षेवृ सेवने । सिषेवे । असेविष्ट ॥ प्रुङ् प्लुङ् च्युङ् गतौ । अप्रोष्ट । अप्लोष्ट । अच्योष्ट ॥ गाङ् गतौ । गाते । अन्तरङ्गत्वात्सवर्णे दीर्घः सह । गाते, गाते । गै, गावहे, गाम्हे । जगे । अगास्त ॥ रुङ् गतौ भाषणे च । रवते । रुरुवे । अरविष्ट । अनिडयमित्येके ॥ मूङ् बन्धने । भविता । अभविष्ट ॥ पूङ् पवने । अपविष्ट ॥ देङ् त्रैङ् पालने । दयते ॥

( सुबोधिनी )–अयतौ प्रादे रेफस्य लत्वम् ॥ प्रादिस्थरेफस्य लत्वमयतौ । अयताविति रेफस्य विशेषणं न तु प्रादेः । येन नाव्यवधानमिति वचनादेकव्यवधाने लत्वम् । पलायते । प्रत्यय इत्यादौ त्वनेकव्यवधानान्न । कासादिप्रत्ययादाम् । अयांचक्रे । आशिषि सेटो हलाद्वेति वा ढः । अयिषीढ्वम्–अयिषीध्वम् । लुङि आयिष्ट । आयिढ्वम्–आयिध्वम् । अथ कथम् 'उदयति विततोर्ध्वरश्मिरज्जौ' इति माघः ॥ अत्र शानप्रत्ययेन भाव्यमिति शङ्कितुराशयः । उच्यते । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं चक्षिङो ङित्करणाज्ज्ञापितम् ॥ दय दानगतिरक्षणहिंसादानेषु । हिंसा हननम् । आदानं ग्रहणम् । कासादिप्रत्ययादित्याम् । दयांचक्रे ॥ ऊह वितर्के । वितर्को विचारः ॥ गाते इत्यत्र पूर्वमप्प्रत्ययेन सह सवर्णदीर्घे कृते पश्चादादाथ इरिति न आतोन्तोदनत इति तु प्रवर्तते एव । ते अन्ते परतः तुल्यं रूपमिति भावः । गातेऽत्र आदादिकोऽयमिति हरदत्तादयः । फले तु न भेदः ॥ रुङ् गतौ रेषणे च । रेषणं हिंसा । देङ् त्रैङ् पालने । पालनं रक्षणम् ॥

( तत्त्वदी० )–**अयता**विति ॥ अयताविति रेफस्य विशेषणं न तु प्रादेरित्यभिप्रेत्याह–**प्रादे रेफस्ये**ति ॥ तेन रेफस्याव्यवधानेनायतौ परे लत्वं नान्यत्र प्रत्ययत इत्यादौ तिशब्देन व्यवधानात् । न च प्लायत इत्यत्राप्यकारेण व्यवधानमेवास्तीति वाच्यम् । येन नाव्यवधानमिति वचनादेकव्यवधानेऽपि प्रवृत्तिसंभवात् । अथ निर्दुरोरव्यवधानसंभवः तदर्थं निर्दुरोरित्येव ब्रूयात् ॥ **अन्तरङ्गत्वा**दिति ॥ गा अ आते इति स्थिते प्रकृत्याश्रयत्वे सवर्णदीर्घे आदाथ इरिति न भविष्यतीति भावः ॥ **गै** इति । ए ऐ ऐ इति वृद्धिरेव । यत्तु कैश्चिदालोपे गे इत्युक्तम् तद्भ्रमसात् ॥

**( देङो णादौ दिग्यादेशो द्वित्वाभावश्च )** दिग्ये । दासीष्ट ॥

( सुबोधिनी )–देङो णादौ दिग्यादेशो द्वित्वाभावश्च ॥ देङः स्थाने दिगिः स्यात् दिगेर्द्वित्वाभावश्च । लिटि नुधातोरीति यत्वम् । दिग्ये ॥

( अपिद्वाधास्थामित्सेर्ङित्त्वमाति न तु दीङः )

( सुबोधिनी )—अपिद्वाधास्थामित्सेर्ङित्त्वमाति न तु दीङः ॥ एभ्यः परस्य सेर्ङित्त्वं भवति । एषामात् इत्व आत्मदेपदे लुङि ॥

लोपो ह्रस्वाज्झसे ॥ ह्रस्वात्परस्य सेर्लोपो झसे ॥ अदित, अदिषाताम् ॥ त्रायते । तत्रे । अत्रास्त ॥ ष्मिङ् ईषद्धसने । स्मयते । सिष्मिये । स्मेषीष्ट । स्मेता । अस्मेष्ट । डीङ् विहायसा गतौ । डयते । डिड्ये । अडयिष्ट ॥ द्युत दीप्तौ । द्योतते ॥

( सुबोधिनी )—लोपो ह्रस्वाज्झसे ॥ सेः इति सूत्रमनुवृत्तम् ॥ ह्रस्वात्किम् । अनेष्टाम् ॥ झसे किम् । अकृषाताम् ॥ डीङ् विहायसा गतौ । आकाशेन गमने ॥

( तत्त्वदी० )—लोपो ह्रस्वाज्झसे ॥ लोपो ह्रस्वझसात्सेरित्येव सूत्रयितुमुचितम् । पृथक्करणस्य व्यर्थत्वात् ॥ डीङ् विहायसा गतौ ॥ विहायसा आकाशेनेत्यर्थः । 'वा तु पुंस्याकाशविहायसी' इत्यमरोक्तेः ॥ विहायसामिति त्वपपाठः ॥

( द्युतेः पूर्वस्य संप्रसारण स्वापेश्च ) दिद्युते ॥

( सुबोधिनी )—द्युतेः पूर्वस्य संप्रसारणं स्वापेश्च ॥ द्युतेः पूर्वरूपस्य स्वापेश्च संप्रसारणं भवति । सस्वरयकारस्य इः ॥

( द्युतादिभ्यो लुङि वा पं पे ङः ) अद्युतत्—अद्योतिष्ट ॥ श्विता वर्णे । अश्वितत्—अश्वेतिष्ट ॥ ञिष्विदा स्नेहनमोचनयोः । अश्विदत्—अश्वेदिष्ट ॥ ञिक्ष्विदा च । अक्ष्विदत्—अक्ष्वेदिष्ट ॥ ञिमिदा स्नेहने । अमिदत्—अमेदिष्ट ॥ रुच दीप्तावभिप्रीतौ च । अरुचत्—अरोचिष्ट ॥ घुट परिवर्तने । अघुटत्—अघोटिष्ट ॥ रुट लुट लुठ प्रतिघाते । अरुटत्—अरोटिष्ट । अलुटत्—अलोटिष्ट । अलुठत्—अलोठिष्ट ॥ शुभ दीप्तौ । अशुभत्—अशोभिष्ट ॥ क्षुभ संचलने । अक्षुभत्—अक्षोभिष्ट ॥ णभ तुभ हिंसायाम् । नेभे । अनभत्—अनभिष्ट ॥ स्रंसु ध्वंसु भ्रंसु अवस्रंसने । अस्रसत्—अस्रंसिष्ट ॥ ध्वंसु गतौ च । अध्वसत्—अध्वंसिष्ट ॥ स्रम्भु विश्वासे । अस्रभत्—अस्रम्भिष्ट ॥ वृतु वर्तने । वर्तते ॥

( सुबोधिनी )—द्युतादिभ्यो लुङि वा पं पे ङः ॥ द्युतादयः कृपिपर्यन्तास्त्रयोविंशतिधातवस्तेभ्यः परस्मैपदं वा भवति पक्षे आत्मनेपदं च लुङि पे । पक्षे लित्पुषादेरिति ङप्रत्ययः । अनिट्कारिकायां स्विद्यतिरिति निर्देशादयं सेट् । स्वेदिता ॥ घुट परिवर्तने । परिवर्तनमितस्ततो भ्रमणम् । णादिः किदिति कित्त्वात् गुणाभावः । जुघुटे ॥ क्षुभ संचलने । संचलनं प्रकृतिविपर्यासो मथनं च । क्षोभते । दैवादिकः क्र्यादिश्च ॥

णभ तुभ हिंसायाम् । आद्योऽभावेऽर्थेऽपि । 'नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे' इति निरुक्तम् । इमौ दिवादी क्र्यादी च ॥ स्रंसु ध्वंसु भ्रंसु अवस्रंसने । अवस्रंसनमधःपतनम् । परस्मैपदपक्षे ङः । नो लोप इति नलोपः । अस्रसत् 'नास्रसत् करिणां ग्रैवम्' इति रघुकाव्ये ॥ नास्रंसदित्यपपाठ एव । न चैवं लङो रूपं तत्र परस्मैपदासम्भवादिति भावः ॥ भ्रसु भ्रंसु अधः पतने इति दैवादिकौ च । ऋजी भृजी भर्जने । भर्जनं जलं विना तण्डुलादेः सन्तापविशेषः । ईदित्त्वादादीदित इति क्तक्तवत्वोर्नेट् । भृक्तः । भृक्तवान् ॥

(तत्त्वदी० )– क्षुभ संचलने ॥ संचलनं प्रकृतिविपर्यासो मथनं च ॥

**( वृतादिभ्यः स्यसयोर्वा पं पेऽनिट्त्वं च ) वर्त्स्यति–वर्तिष्यते । अवृतत्–अवर्तिष्ट ॥ वृधु वृद्धौ । वर्त्स्यति–वर्धिष्यते । अवर्त्स्यत–अवर्धिष्यत । अवृधत्–अवर्धिष्ट ॥ शृधु शब्दकुत्सायाम् । शर्धते ॥ स्यन्दू प्रस्रवणे । स्यंदते । स्यन्त्स्यति–स्यन्दिष्यते–स्यन्त्स्यते । अस्यदत्–अस्यन्दिष्ट–अस्यन्त ॥ कृपू सामर्थ्ये ॥**

( सुबोधिनी )–वृतादिभ्यः स्यसयोर्वा पं पेऽनिट्त्वं च ॥ वृतु वृधु शृधु स्यन्दू कृपू इति वृतादयः । स्यन्दिकृप्वोरुदित्त्वादिड्विकल्पे प्राप्ते इतरेषां नित्यमिटि प्राप्ते निषेधः । वृतादिभ्यः परस्मैपदं वा स्यात् । परस्मैपदे इडभावश्च । स्यपि सम्प्रत्यये च गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः । वर्तिष्यति । विवर्तिषते ॥ शृधु शब्दकुत्सायां शब्दकुत्सा पर्दनम् । शर्द्धजहा माषाः । अपानशब्दं त्यजन्तीत्यर्थः ॥

**कृपो रो लः ॥ कृपो रेफस्य लः ऋकारस्य लृकारः ॥ कल्पते । चक्लृपे । कल्पिषीष्ट ॥**

( सुबोधिनी )–कृपो रो लः ॥ कृपः उः रः लः इति छेदः । कृपेति लुप्तषष्ठीकं पदम् । आवृत्त्याऽत्र वाक्यद्वयं बोध्यम् । उः ऋकारस्येत्यर्थः ॥

( तत्त्वदी० )–कृपो रो ल इति ॥ कृपः उः रः ल इति छेदः । कृपेति लुप्तषष्ठीकम् । आवृत्त्या वाक्यद्वयसिद्धिरित्याह–ऋकारस्येति ॥ तत्फलं तु अक्लृपदित्यादीसिद्धिः । यद्यपि क्लृपू सामर्थ्ये इति पाठेनैव रूपसिद्धिः सूत्राकरणलाघवं च । कृपणादसिद्धिस्तु कृप कृपायामित्यस्योणादयो बहुलमिति बहुलग्रहणात्संप्रसारणे । तथापि अचीक्लृपदिति सिद्ध्यर्थस्तथा पाठः । तथाहि । ऋलृवर्णयोः सावर्ण्यादुपधाभूतलृकारस्य ऋदादेशे अचीक्लृपदिति स्यात् । लत्वविधौ लसिद्धम् कृपेत्यादौ तु कृपेः संप्रसारणं चेत्यादि कृपेर्बोध्यम् ॥

**सिस्योः ॥ उपधाया गुणो न सिस्योरनिटोः परतः ॥ क्लृप्सीष्ट ॥**

**( कृपेस्तादौ पं वा पेऽनिट्त्वं च ) कल्प्ता । आति । कल्पिता–कल्प्ता । कल्प्स्यति–कल्पिष्यते–कल्प्स्यते । अक्लृपत्–अकल्पिष्ट–**

अक्लृप्त ॥ एते द्युतादयो वृतादयश्च ॥ व्यथ दुःखसंचलनयोः । व्यथते ॥

( सुबोधिनी )कृपेस्तादौ पं वा पेऽनिट्त्वं च ॥ कृपेः परस्मैपदं वा भवति परस्मैपदे इडभावश्च। लुटि कल्प्ता–कल्पिता । लुङि परस्मैपदे लित्पुषादेरिति ङः । अक्लृपत्। ऊदितो वेति वेट् । अकल्पिष्ट। इडभावे झसादिति सिलोपे अक्लृप्त ॥ व्यथ दुःखसंचलनयोः । संचलनं प्रकृतिविपर्यासो मथनं च ॥

**व्यथेर्णादौ पूर्वस्य यस्य इः ॥** विव्यथे । अव्यथिष्ट ॥ ज्युङ् गतौ। ज्यवते । जुज्युवे । अज्योष्ट ॥ रमु क्रीडायाम्। रमते ॥

( सुबोधिनी )–व्यथेर्णादौ पूर्वस्य यस्य इः ॥ व्यथतेः पूर्वरूपस्य यकारस्येत्वं भवति लिटि पूर्वस्य हसादिः शेषः इत्यस्यापवाद इस्ततः थस्य हसादिशेषेण निवृत्तिः । विव्यथे ॥ रमु क्रीडायाम् । माधवस्तूदितमाह । पचाद्यप्रत्यये आप्। रमा। घञि तु रामः ॥

**( व्याङ्पर्युपेभ्यो रमः पम् )** विरमति । आरमति । परिरमति । उपरमति। रेमे। अरंसीत–अरंस्त ॥ लोकृ दर्शने ।लुलोके ॥ श्लोकृ संघाते । अश्लोकिष्ट ॥ शकि शङ्कायाम् । शशङ्के। अशङ्किष्ट ॥ अकि लक्षणे। आनङ्के ॥ ढौकृ त्रौकृ रघि गतौ। डुढौके । तुत्रौके। अत्रौकिष्ट ॥ लघि भोजननिवृत्तौ। ललङ्घे । अलंघिष्ट ॥ बाधृ विलोडने। बाधते । बबाधे। अबाधिष्ट ॥ नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु ॥

( सुबोधिनी)–व्याङ्पर्युपेभ्यो रमः पम् ॥ एभ्यः परस्माद्रमतेः परस्मैपदं भवति ॥ श्लोकृ संघाते । संघातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मकः। द्वितीये सकर्मकः ॥ अकि लक्षणे। लक्षणं चिह्नम् । नुगशामिति नुक्। आनङ्के ॥ बाधृ विलोडने। विलोडनं प्रतिघातः॥ नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु। याच्ञा भिक्षा। उपतापो रोगः ॥

**( नाथ आशिष्येवात्मनेपदम् )** नाथते। अन्यत्र नाथति।ननाथे। अनाथिष्ट ॥ दध धारणे । देधे । अदधिष्ट ॥ स्कुदि आप्लवने । चुस्कुन्दे । अस्कुन्दिष्ट ॥ वदि अभिवादनस्तुत्योः । वन्दते । ववन्दे। अवन्दिष्ट ॥ भदि कल्याणे सुखे च। बभन्दे ॥ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। मन्दते। ममन्दे । अमन्दिष्ट ॥ स्पदि किंचिच्चलने। पस्पन्दे ॥ मुद हर्षे । मुमुदे ॥ दद दाने । ददे ।

यती प्रयत्ने। येते॥ ञित्वरा संभ्रमे। त्वरते। तत्वरे। अत्वरिष्ट॥ षह मर्षणे। सहते। सेहे। सहिता। इषसहलुभरुषरिषामनापि तस्येड्वा॥

( सुबोधिनी )-नाथ आशिष्येवात्मनेपदम्॥ नाथतेरात् स्यादाशीर्वादेऽर्थे एवान्यत्र तु पम्॥ स्कुदि आप्रवणे। आप्रवणमुत्प्लवनमुद्धरणं च। इदितो नुमिति नुम्। स्कुन्दते। वदि अभिवादनस्तुत्योः। अभिवादनं नमस्कारः॥ मदि स्तुतिमोद-मदस्वप्नकान्तिगतिषु। मोदः संतोषः। मदो गर्वः। स्वप्न आलस्यम्। कान्तिः शोभा। गतिः प्रसिद्धा॥ यती प्रयत्ने। प्रयत्न उद्यमः॥ षह मर्षणे। मर्षणम् अपराधे सत्यपि-कोपाद्यनाविष्करणम्॥

( तत्त्वदी० )-भदि कल्याणे सुखे च॥ कल्याणं मङ्गलम्। सुखमात्मगुणः॥ मदीति। मोदो हर्षः। मदो गर्वः। स्वप्न आलस्यम्॥ ददद् इति॥ न शसंददेत्येत्वपूर्वलोपाभावः॥ षह मर्षणे॥ मर्षणं क्षमा। सहिता। इषुसहेति वेट्॥

( सहिवहोरोदवर्णस्य ढलोपे सति ) सोढा। असहिष्ट॥ गाहू विलोडने। गाहते। जगाहिषे-जघाक्षे। जगाहिढ्वे-जगाहिध्वे-जघाढ्वे। गाहिषीष्ट-घाक्षीष्ट। गाहिता-गाढा। गाहिष्यते-घाक्ष्यते। अगाहिष्ट-आगाढ, अघाक्षाताम्। अघाढ्वम्॥ गृहू ग्रहणे। जगृहिषे-जघृक्षे। जगृहिढ्वे-जगृहिध्वे-जघृढ्वे। गर्हिषीष्ट-घृक्षीष्ट। गर्ढा। गर्हिष्यते-घर्क्ष्यते। अगर्हिष्ट-अघृक्षत॥

( सुबोधिनी )-सहिवहोरोदवर्णस्य ढलोपे सति॥ सहिवहोरवर्णस्यौत्वं भवति ढस्य लोपे सति। इषसहेति वेट्। सहिता। इडभावे हो ढ इति ढत्वम्। तथोर्द्ध इति धत्वम्। ष्टुभिः ष्टुरिति ष्टुत्वम्। ढि ढो लोप इति ढलोपः। ततोऽनेन ओत्वे सोढा॥ गाहू विलोडने। ऊदित्त्वादिड्वा। जगाहिषे। इडभावे तु हो ढ इति ढत्वम्। आदिजबानामिति घः। षढोः कः से इति कः। कात्परस्य सस्य षत्वम्। जघाक्षे। सेटो हला-दिति वा ढः जगाहिढ्वे-जगाहिध्वे। इडभावे तु आदिजबानामिति घः। ढि ढो लोप इति ढलोपः। जघाढ्वे। लुङि अगाहिष्ट। इडभावे तु ढत्वे कृते झसादिति सिलोपः। ततो धत्वष्टुत्वढलोपाः। अगाढ॥ गृहू ग्रहणे। ऊदितो वेति वेट्। इडभावे हो ढ इति ढत्वम्। आदिजबानामिति घः। षढोरिति कत्वम्। षत्वं च। जिघृक्षे। सेटो हलादिति वा ढः। जगृहिढ्वे-जगृहिध्वे। इडभावे जघृढ्वे। आशिषि गर्हिषीष्ट। सिस्योरिति गुणाभावे घृक्षीष्ट। लुटि गर्हिता-गर्ढा। लृटि गर्हिष्यते-घर्क्ष्यते। लङि अगर्हिष्यत-अघर्क्ष्यत।

लुङि अगर्हिष्ट । इडभावे हशषान्तादिति सक् । हो ढ इति ढत्वम् । आदिजबानामिति घः । षढोरिति कः । षत्वं च । अघृक्षत ॥

( तत्त्वदी० )–सोढेति । इडभावपक्षे ॥

( आति सको लोपः स्वरे ) अघृक्षाताम्, अघृक्षन्त । अघृक्षध्वम् । इत्यात्मक्रिया ॥

( सुबोधिनी )–आति सको लोपः स्वरे ॥ स्वरादावात्मनेपदे परे सको लोपः । षष्ठीनिर्दिष्टस्येत्यन्त्यलोपः । अघृक्षाताम् ॥ इति सुबोधिन्यामात्मक्रिया ॥

( तत्त्वदी० )–आति सक इति ॥ षष्ठीनिर्दिष्टत्वादन्त्यस्य ॥

लोकेशकरसंज्ञेन विद्यानगरवासिना । कृतायामिह टीकायामगादातोनिरूपणम् ॥

इति तत्त्वबोधिन्यामात्प्रक्रिया ॥

राजृ दीप्तौ । रेजतुः–रराजतुः । रेजे–रराजे । अराजीत, अराजिष्टाम् । अराजिष्ट ॥ खनु खनने । चखान, चख्नतुः, चख्नुः । खायात्–खन्यात् । अखानीत्–अखनीत् । अखनिष्ट ॥ हृञ् हरणे । जहार । ऋदन्तात्थपो नेट् । जहर्थ । जह्रे । ह्रियात् ॥

( सुबोधिनी )–राजृ दीप्तौ ॥ दीप्तिस्तेजः । फणराजृ इत्येत्वपूर्वलोपौ । रेजतुः–रराजतुः ॥ खनु खनने । खननमवदारणम् । उदित्त्वात् क्त्वायां वेट् । खनित्वा–खात्वा । गमां स्वरे इत्युपधालोपः । चख्नतुः । जनसनखनामित्यात्वं वा । खायात्–खन्यात् । अतो हसादेरिति वा वृद्धिः । अखानीत्–अखनीत् ॥ हृञ् हरणे । हरणं प्रापणं स्वीकारः स्तेयं नाशनं चेति चत्वारोऽर्थाः । भारं हरति प्रापयतीत्यर्थः । अंशं हरति स्वीकरोतीत्यर्थः । स्वर्णं हरति चोरयतीत्यर्थः । पापं हरति नाशयतीत्यर्थः । ऋदन्तात् थप इति नेट् । जहर्थ । ऋादेर्णादेरितीट् जहिव । यादादाविति रिङ् । ह्रियात् ॥

( तत्त्वदी० )–राजृ ॥ ऋदित्त्वमङ्युक्तोपधाह्रस्वादिनिवृत्त्यर्थम् ॥ हृञ् हरणे ॥ हरणं प्रापणं स्वीकारस्तेयं नाशनं च । ग्रामं हरति । अंशं हरति । स्वर्णं हरति । पापं हरति ॥

उः ॥ ऋवर्णस्य सिस्योरनिटोर्न गुणः ॥ हृषीष्ट । अहार्षीत् । अहृत ॥ दान आर्जवे । गुभ्यः । दीदांसति । दीदांसांचकार ॥ शान तेजने । शीशांसांचक्रे ॥ गुहू संवरणे ॥

( सुबोधिनी )–उः ॥ षष्ठ्येकवचनान्तमिदम् । ऋवर्णान्तस्य धातोर्गुणो न स्यात् अनिटि सिप्रत्यये सीष्टादौ च । हन्नृतः स्यप इतीट् । हरिष्यति । लोपो ह्रस्वादिति सिलोपः । अहृत ॥ दान आर्जवे । ऋजोर्भाव आर्जवम् तस्मिन्नर्थे । अस्मात् गुभ्यः इति सः । यः से इति पूर्वस्येत्वम् । मानादीनामिति पूर्वस्य दीर्घः । दीदांसति ॥ शान

तेजने । तेजनं तीक्ष्णीकरणम् । शानेर्निशाने सः । अर्थान्तरे त्वननुबन्धकौ चौरादिकाविमौ । दानयति । शानयति ॥

( तत्त्वदी० )–उः ॥ षष्ठ्येकवचनान्तम् । सिस्योरिति ॥ भूते सिः सीष्टादिः सी तयोर्ङित्त्वादेव गुणाप्राप्तौ नियमार्थमिदम् । ऋवर्णस्यैवानयोः परतो गुणो न तेन वेवेष्टित्यादौ भवत्येव । विशेषाप्रतिपादकलिङ्गाभावाद्वर्णमात्रं गृह्यते न तु ऋगंताविति । आरम्भसामर्थ्यादुपधाया न । अन्यथा सिस्योरित्येव सिद्धे किमनेन ॥

( गुहेरुपधाया ऊद् गुणहेतौ स्वरे ) जुगूहतुः । जुगूहिथ–जुगोढ । जुगूहिषे–जुघुक्षे । जुगुहिध्वे–जुगुहिढ्वे–जुघूढ्वे । गूहिषीष्ट–घुक्षीष्ट । गूहिता–गोढा । गूहिष्यति । घोक्ष्यति ॥

( सुबोधिनी )–गुहेरुपधाया ऊद्गुणहेतौ स्वरे ॥ गुह उपधाया ऊत्स्यात् गुणविधायके स्वरादौ प्रत्यये परे । गूहति । ऊदितो वेति वेट् । जुगूहिथ । इडभावे हो ढ इति ढत्वम् । तथोर्द्ध इति थस्य धः ष्टुत्वं च । जुगोढ । हो ढ इति ढत्वम् । आदिजबानामिति घः । षढोरिति कः षत्वं च । जुघुक्षे । जुगुहिध्वे । सेटो हलादिति वा ढः । जुगुहिढ्वे । इडभावे हो ढ इति ढत्वम् । आदिजबानामिति घत्वं ष्टुभिः ष्टुरिति ढः । ढि ढो लोप इति ढलोपदीर्घौ जुघूढ्वे । लुङि अगूहीत् । इडभावे हशषान्तादिति सक् । आदिजबानामिति घः । अघुक्षत् । आति अगूहिष्ट । इडभावे तु सक् ॥

( दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोराति ) अगूढ–अघुक्षत, अघुक्षाताम, अघुक्षन्त । अगूढाः–अघुक्षथाः, अघुक्षाथाम्, अघूढ्वम्–अघुक्षध्वम् । अघुक्षावहि–अगुह्वहि, अघुक्षामहि । अगूहिष्ट । अघुक्षत–अगूहीत् ॥ भज सेवायाम् । भेजिथ–बभक्थ । भेजे । भक्षीष्ट । अभाक्षीत् । अभक्त ॥ श्रिञ् सेवायाम् । शिश्रियतुः । शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयितां । श्रयिता । आशिश्रियत् । अशिश्रियत ॥ त्विष दीप्तौ । तित्विषे । त्विक्षीष्ट । त्वेष्टा । त्वेक्ष्यते । अत्विक्षत ॥ स्पश बाधनस्पर्शनयोः । पस्पाश–पस्पशे । अस्पशीत्–अस्पाशीत् । अस्पशिष्ट ॥ लष कान्तौ । लष्यति–लषति । लष्यते–लषते । लषिता ॥ रञ्ज रागे । रजति । ररञ्जिथ–ररङ्थ । ररञ्जे । रज्यात् । रङ्क्षीष्ट । अराङ्क्षीत् । अरङ्क्त ॥ भृञ् भरणे । भरति । बभर्थ । बभृव । बभृढ्वे । भर्ता ॥ धृञ् धारणे । दधर्थ । दध्रिध्वे–दीध्रढ्वे । अधार्षीत् । अधृत ॥ णीञ् प्रापणे । निनयिथ–निनेथ । निन्ये । अनैषीत् । अनेष्ट ॥ टुयाचृ याच्ञायाम् । याचति । ययाचे । अयाचीत् । अयाचिष्ट ॥ यज देवपूजासंगतिकरणदानेषु । इयजि.थ–इयष्ठ ।

अयाक्षीत् । अयष्ट । अयड्ढ्वम् ॥ डुवप् बीजसंताने । उवपिथ--उवपूथ । ऊपे । उप्यात् । वप्सीष्ट । अवाप्सीत, अवाप्साताम् । अवप्त ॥ वह प्रापणे । वहति । उवहिथ–उवोढ । ऊहे । उह्यात् । वक्षीष्ट । वोढा । अवाक्षीत, अवोढाम् । अवोढ, अवक्षाताम् ॥ वेञ् तन्तुसन्ताने ॥

( सुबोधिनी )–दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोराति ॥ लोप इत्यनुवर्तमाने लुग्ग्रहणं सर्वलोपार्थम् । दुह प्रपूरणे। दिह उपचये । लिह आस्वादने । गुहू संवरणे । एभ्यः सको लुग्वा आत्मनेपदस्थवकारे तवर्गे च परे । अदुग्ध--अधुक्षत । अदिग्ध--अधिक्षत । अलीढ–अलिक्षतेत्यादि । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ । पक्षे अघुक्षत । आतिसको लोप इत्यल्लोपे अघुक्षाताम्–अघुक्षन्त । तॄफलभजेत्येत्वपूर्वलोपौ । भेजतुः । स्वरान्तादत्वत इति वेट् । भेजिथ–बभक्थ । कुत्वषत्वे भक्ष्यति । झसादिति सिलोपः । अभक्त ॥ श्रिश्रुद्रुभ्यो ङ इति ङो द्वित्वं च । अशिश्रियत् । अशिश्रियत ॥ त्विष दीप्तौ दीप्तिस्तेजः । हशषान्तादिति सक् । कत्वषत्वे । अत्विक्षत । आति सको लोप इत्यल्लोपः । अत्विक्षाताम् ॥ स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् ॥ लष कान्तौ । कान्तिरिच्छा । भ्राशभ्लाशिति वा यः । लष्यति–लषति । लोपः पचामित्येत्वपूर्वलोपौ । लेषतुः ॥ अपि रञ्जेति न लोपः । रजति । कुत्वषत्वे । अराङ्क्षीत् । सावनिटो नित्यमिति वृद्धिः । अरङ्क । स्याविद इत्यन उस् । अराङ्क्षुः ॥ ऋादेर्णादेरितीण् न । बभर्थ । आशिषि यादादाविति रिङ् । भ्रियात् । उरिति न गुणः । भृषीष्ट । लटि हन्नृतः स्यप इट् । भरिष्यति । लोपो ह्रस्वादिति सिलोपः । अभृत ॥ यज देवपूजासंगतिकरणदानेषु । देवपूजा त्विह देवतोद्देशेन विधिबोधितद्रव्यत्यागः । संगतिकरणं मैत्रीकरणम् । णवादौ पूर्वस्येति पूर्वस्य संप्रसारणम् । अत उपधाया इति वृद्धिः । इयाज । यजामिति संप्रसारणम् । ईजतुः । छशषेति षः । षढोरिति कः । यक्षीष्ट । लुङि । अयाक्षीत् । अयष्ट । ध्वे चेति सलोपः । अयड्ढ्वम् ॥ डुवप् बीजसन्ताने । बीजसंतानं क्षेत्रे विकरणं गर्भाधानं च । अयं छेदनेऽपि । केशान् वपति । ड्वितस्त्रिमगिति त्रिमक् प्रत्ययः । उप्त्रिमम् ॥ वहतेर्लिङि हो ढ इति ढः । षढोरिति कत्वम् । वक्षीष्ट । लुटि ढत्वं तथोर्द्ध इति धत्वं ष्टुत्वं ढि ढो लोप इति ढलोपः । सहिवहोरोदित्योत्वम् । वोढा । लुङि पूर्वं वृद्धिस्ततो ढत्वे कृते झसादिति सिलोपः । धत्वष्टुत्वढलोपाः । ओत्वं च । अवोढाम् । ध्वे चेति सलोपः । अवोढ्वम् ॥

( तत्त्वदी० )–डुवप् बीजसंताने ॥ बीजसंतानं क्षेत्रे विस्तारणं गर्भाधानं च । केशान्वपतीति प्रयोगाच्छेदनेऽपि । त्रिमगर्थं ड्वित्त्वम् । तेनोप्त्रिममिति सिद्ध्यति ॥

**( वेञो णादौ न संप्रसारणम् ) ववौ । ववे ॥**

(सुबोधिनी)—वेञो णादौ न संप्रसारणम् ॥ वेञः संप्रसारणं न स्यात् णादौ ॥ णादौ किम् । उतः । उतवान् । संध्यक्षराणामित्यात्वम् । आतो णव् डौ इति णपो डौत्वम् । ववौ ॥

**( वेञो वय् वा णादौ ) उवाय ॥**

(सुबोधिनी)—वेञो वय् वा णादौ ॥ वेञो वय् वा स्यात् णादौ । अत उपधाया इति वृद्धिः । उवाय ॥

**ग्रहां ङिति च ॥ ग्रहिज्यावयिव्यधिवष्टिवृश्चतिपृच्छतिविचतिभृज्जतीनां संप्रसारणं किति ङिति च ॥ वयो यस्य नेत्वम् । ऊयतुः, ऊयुः । ऊवयिथ । ऊये ॥**

(सुबोधिनी)—ग्रहां ङिति च ॥ यजामित्यतः कितीति संप्रसारणमिति चानुवृत्तम् । एषां किति ङिति च सम्प्रसारणं स्यात् ॥ ग्रह उपादाने । ज्या वयोहानौ । वेञ् तन्तुसन्ताने । व्यध ताडने । वश् कान्तौ । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । व्यच व्याजीकरणे । भ्रस्ज पाके । ङिति गृह्णाति । जिनाति । किति । गृहीतः । जीनः । ङिति वयेरुदाहरणं न । किति तु यजामिति सम्प्रसारणं सिद्धं यजादिषु वेञः पाठात् । अत एव णवादाविति पूर्वसंप्रसारणमपि सिद्धम् । वेञो णादाविति संप्रसारणनिषेधस्तु वयो यस्येति निषेधारम्भान्न प्रवर्तते । तस्मात् ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थम् । वयो यस्य नेत्वम् । ग्रहामिति यकारस्य संप्रसारणे प्राप्ते निषेधः । लिटि वयो यस्य संप्रसारणं नेत्यर्थः । वयेस्तादावभावात् थपि नित्यमिट् । उवयिथ । स्थानिवद्भावेन ञित्वादात्मनेपदम् । ऊये ॥

**( वयो यस्य किति लिटि वो वा) ऊवतुः । ऊवे । ऊयात । वासीष्ट । अवासीत् । अवास्त ॥ व्येञ् संवरणे ॥**

(सुबोधिनी)—वयो यस्य किति लिटि वो वा ॥ वयो यकारस्य वत्वं वा भवति किति लिटि ॥ ऊवे । वयादेशाभावे । ववे । आशिषि संप्रसारणे कृते । ऊयात् । संध्यक्षराणामित्यात्वे । वासीष्ट ॥

**( व्येञो लिटि नात्वम् ) विव्याय । विव्ययिथ । वीयात् । व्यासीष्ट । अव्यासीत । अव्यास्त ॥ ह्वेञ् स्पर्धायां शब्दे च । द्विरुक्तस्य ह्वयतेः संप्रसारणम् । जुहाव । जुहविथ—जुहोथ । जुहुवे । हूयात् । ह्वासीष्ट ॥**

(सुबोधिनी)—व्येञो लिटि नात्वम् ॥ व्येञ आत्वं न भवति लिटि ॥ संध्यक्षराणामित्यस्यापवादः ॥ लिटि किम् । व्याता । व्यास्यति । व्ये व्ये णप् इति स्थिते परत्वात् हसादिः शेषं बाधित्वा यस्य संप्रसारणम् । यजादीनां ग्रहादीनामित्युभयेषां ग्रहण-

मर्थ्याच्च । धातोर्नामिन इति वृद्धिः । विव्याय । नुधातोरिति यः । विव्यतुः । अत्त्यर्तिव्ययतीनामिति नित्यमिट् । विव्ययिथ । यमिरमिनमातामितीट्सकौ । अव्यासीत् । अव्यासिष्टाम् ॥ ह्वेञ् स्पर्द्धायां शब्दे च । शब्दे इति सामान्योक्तावपि संबोधनरूपः शब्द एवात्र गृह्यते । तथा च माघे–'यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः' इति कर्मणि प्रयोगः ॥ द्विरुक्तस्य ह्वयतेः संप्रसारणम् । ह्वेञः पूर्वं द्वित्वम् । तन उभयत्र संप्रसारणं स्यात् ॥

( लिपिसिचिह्वयतीनां ङो लुङि वा आति ) अह्वत । आह्वास्त-अह्वत ॥ डुपचष् पाके । पचति । पेचिथ–पपक्थ । पेचे । अपाक्षीत्, अपाक्ताम्, अपाक्षुः ॥ षच समवाये । सेचे । असाचीत् । असचिष्ट ॥ शप आक्रोशे । शेपे । शप्ता । अशाप्सीत् । अशप्त ॥ हिक्क अव्यक्ते शब्दे । जिहिक्क । अहिक्कीत् ॥ अञ्चु गतौ याचने च । आनञ्चे । आञ्चीत ॥ रेटृ परिभाषणे । रिरेटे । अरेटीत् ॥ चते चदे याचने च । चेते । अचतीत् । चेदे । अचदीत् । अचेदिष्ट ॥ प्रोथृ पर्याप्तौ । पुप्रोथ । पुप्रोथे । अप्रोथीत् । अप्रोथिष्ट ॥ मिदृ मेदृ मेधाहिंसनयोः । मिमिदे । अमेदीत् । अमेदिष्ट । मिमेदे । अमेदीत् । अमेदिष्ट ॥ मेधृ संगमे च । मिमेधे । मेधिता ॥ णिदृ णेदृ कुत्सासंनिकर्षयोः । निनेदे । नेदिता ॥ शृधु मृधु क्लेदने । शर्द्धति । शशर्द्ध । शशृधतुः । शशृधे । मर्द्धति । ममृधे । अमर्द्धीत् । अमर्द्धिष्ट ॥ बुधिर् बोधे । बोधति । बोधते । अबुधत्–अबोधीत् । अबोधिष्ट । उबुन्दिर् निशामने । बुन्दति । बुबुन्दे । अबुदत्–अबुन्दीत् । अबुन्दिष्ट ॥ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेणते । विवेण । अवेणीत् । अवेणिष्ट । नान्तोऽप्ययम् । वेनति ॥ चीवृ आदानसंवरणयोः । चीवति । चिचीव । चिचीवे । अचीवीत । अचीविष्ट ॥ चायृ पूजानिशामनयोः । चायति । चचाय । चचाये । अचायीत् । अचायिष्ट ॥ व्यय गतौ । व्ययति । वव्याय । वव्यये । अव्ययीत् । अव्ययिष्ट ॥ दाशृ दाने । दाशति । दाशते । ददाश । ददाशे । अदाशीत् । अदाशिष्ट ॥ भ्रेशृ भ्लेशृ गतौ । भ्रेशति । भेषृ भ्लेषृ गतौ भये च । भेषति । बिभेषे । विभेष । बिभ्लेष । अभेषीत् । अभेषिष्ट ॥ अस गतिदीप्त्यादानेषु । असति । आस । आसे । आसीत् । आसिष्ट । अयं षान्तोऽपि । अषति ॥ चष भक्षणे । चचाष । चेषतुः । चेषे । अचषित्–अचषीत् । अचषिष्ट । छष हिंसायाम् । छषति । छषते । चच्छाष । चच्छषे । अच्छाषीत–अच्छषीत् ।

अच्छषिष्ट ॥ झष आदानसंवरणयोः । झषति । जझाष । जझषे । अझाषीत्-अझषीत् । अझषिष्ट ॥ भ्रक्ष भ्लक्ष अदने । बभ्रक्षे । अभ्रक्षीत् । अभ्रक्षिष्ट ॥ दासृ दाने । दासते । ददासे ॥ माहृ माने । ममाह । ममाहिषे । अमाहीत् । अमाहिष्ट ॥ इत्युभयपदप्रक्रिया ॥

( सुबोधिनी )-लिपिसिचिह्वयतीनां ङो लुङि वा आति ॥ एभ्यो ङप्रत्ययो नित्यं स्यात्परस्मैपदे लुङि । आत्मनेपदे लुङि तु वा ॥ लिप उपदेहे । षिच क्षरणे । अलिपत् । असिचत् ॥ आतोऽनपीत्यालोपः । अह्वत् ॥ षच समवाये । समवायः संबन्धः । शप आक्रोशे । आक्रोशो विरुद्धाऽनुध्यानम् । अञ्चु गतौ याचने च । नुगञ्ज्ञामिति लुक् । आनञ्चे । नो लोप इति नलोपः । अच्यात् । अयमिदिदिति मते तु इदितो नलोपो नेति निषेधात् । अञ्च्यात् ॥ रेटृ परिभाषणे । 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्' इत्यमरः ॥ ऋदित्वात् नरित इत्युपधाया ह्रस्वो न । अरिरेटत् ॥ प्रोथृ पर्याप्तौ । पर्याप्तिः समाप्तिः ॥ मिदृ मेदृ मेधाहिंसनयोः । थान्ताविमाविति स्वामी। धान्ताविति न्यासः ॥ मेधृ संगमे च । चात्पूर्वोक्तेऽर्थे । 'प्रजायै गृहमेधिनाम्' इत्यत्र गृहैर्दारैर्मेधंते संगच्छन्ते इति विग्रहः । णिनप्रत्ययान्तः ॥ णिदृ णेदृ कुत्सासंनिकर्षयोः। संनिकर्षः संबन्धः ॥ शृधु मृधु उन्दने । उन्दनं क्लेदनम् । आर्द्रीभाव इत्यर्थः । उदित्वात् क्त्वायां वेट् । शर्धित्वा । शृद्ध्वा ॥ बुधिर् बोधने । ह्रु एतेरेवानिट्कारिकासु पाठादयं सेट् । इरितो वेति वा ङः । अबुधत्-अबोधीत् । दीपजनेतीण् तु न पूर्वोत्तरसाहचर्येण दैवादिकस्यैव सूत्रे ग्रहणात् । उबुन्दिर् निशामने । निशामनं चाक्षुषं ज्ञानमित्यर्थः । वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । गत्यादयः पदार्थाः । वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः ॥ चीवृ आदानादौ । चीवते । औणादिके रप्रत्यये चीवरं वस्त्रम् । ह्म्यन्तेति न वृद्धिः । अव्ययीत् ॥ भेषृ भये च । चाद्गतौ ॥ इति सुबोधिन्यामुभयपदप्रक्रिया ॥

( तत्त्वदी० )-शप आक्रोश इति ॥ आक्रोशो विरुद्धानुध्यानम् ॥ अचदीदिति ॥ एदित्वान्न वृद्धिः ॥ प्रोथृ इत्यादीनाम् ऋदित्त्वमङ्युक्ताभावार्थम् ॥ अबोधीदिति ॥ दीपजन इत्यात्मनेपदिभिः साहचर्यात्तथाभूतस्यैव ग्रहणात् । उबुन्दिर् । उदित्त्वाद्वेट् । बुन्दित्वा । बुत्त्वा । निशामनं चाक्षुषज्ञानम् । वेणृ । वाद्यभाण्डस्य वादनापादनं वादित्रग्रहणम् ॥ इति तत्त्वदीपिकायामुभयपदप्रक्रिया ॥

**ऋत जुगुप्सायां कृपायां च ॥**

( सुबोधिनी )-ऋत जुगुप्सायां कृपायां च ॥ 'अर्तनं च ऋतीया च हृणीया च घृणार्थकाः' इति ॥ 'जुगुप्सा करुणे घृणे' इति चामरः ॥

**( ऋतेरीयङ् स्वार्थेऽनपि तु वा ) ऋतीयते । ऋतीयेत । ऋतीयताम् । आर्तीयत । ऋतीयांचक्रे । ऋतीयिषीष्ट । ऋतीयिता ।**

ऋतीयिष्यते । आर्तीयिष्यत । आनर्त । ऋत्यात् । अर्तिता । अर्तिष्यति । आर्तिष्यत् । आर्तीत् । आर्तीयिष्ट ॥ ॥ इति भ्वादिप्रक्रिया ॥

( सुबोधिनी )—ऋतेरीयङ् स्वार्थेऽनपि तु वा ॥ ऋतिः सौत्रस्तस्मादीयङ् स्यात् स्वार्थे अनपि तु वा । सधातुरिति धातुत्वम् । आदनुदात्तङित इत्यात्मनेपदम् । ऋतीयते । ईयङभावे परतोऽन्यदिति परस्मैपदम् ॥ नुगशामिति नुक् । आनर्त ॥ इति सुबोधिन्यां भ्वादिप्रक्रिया ॥

( तत्त्वदी० )—रामाश्रमेण विहिता या हि सिद्धान्तचन्द्रिका । तट्टीकायामगादेतद्भव्यं भ्वादिनिरूपणम् ॥

इति तत्त्वदीपिकायां भ्वादिप्रक्रिया ॥ १ ॥

---

# अथाऽदादयः ।

**अद भक्षणे ॥ अदादेर्लुक् ॥ अदादेः परस्यापो लुक् ॥ अत्ति, अत्तः, अदन्ति । अत्सि, अत्थः, अत्थ । अद्मि, अद्वः, अद्मः । अद्यात् ॥**

( सुबोधिनी )—अद भक्षणे ॥ भक्षणं खादनम् ॥ अदादेर्लुक् ॥ अप् कर्तरीत्यतः अवित्यनुवृत्तम् । तच्च षष्ठ्या विपरिणम्यते । अद आदिर्यस्य सोऽदादिस्तस्मादादेः ॥

( तत्त्वदी० )—अदादेर्लुक् ॥ अद आदिर्यस्य सोऽदादिस्तस्मात् । अप् कर्तरीत्यतोऽनुवृत्तमवित्ति षष्ठ्या विपरिणम्यते । चतुर्थी तु न तत्रापोऽभावात् । तद्गुणसंविज्ञानबहुव्रीहेरदेरप्यपो लुक् ॥

**झसाद्धिर्हेः ॥ झसाद्धकाराच्च परस्य हेर्धिर्भवति ॥ अद्धि—अत्तात्, अत्तम्, अत्त ॥**

( सुबोधिनी )—झसाद्धिर्हेः ॥ झसात् ह धिः हेरिति पदच्छेदः । हस्य हो झभा इति धत्वे झबे जबा इति दत्वे हसात्परस्य झसस्येति दलोपः । अत्तादित्यत्र स्थानिवद्भावेन तातङो हित्वेऽपि सकृद्गताविति न्यायेन धिरादेशो न ॥

( तत्त्वदी० )—झसाद्धिर्हेः ॥ झसात् ह् धिः हेरिति छेदः । हस्य हो झभा इति धत्वे झबे जबा इति दत्वे हसात्परस्य झसस्येति लोपेन सिद्धेः । इह लुप्तपञ्चमीकं पदमित्यभिप्रेत्याह—हकाराच्चेति ॥ अत्र स्थानिवद्भावेन तातङो हित्वेऽपि सकृद्गतावितिन्यायेन न धिरादेशः ॥

**अद्रुदादेरट् ॥ अत्तेरुदादेश्च परयोर्दिप्सिपोरडागमः ॥ आदत् । आदः ॥**

( सुबोधिनी )–अद्गुदादेरट् ॥ अत्तेरुदादेश्च परयोर्दिप्सिपोरडागमः स्यात् ॥

**( सिसयोरदेर्घस्लृ लिटि तु वा )** जघास । गमां स्वरे । घसादेरिति षः । जक्षतुः । जघसिथ । जक्षथुः । जक्ष । आद, आदतुः, आदुः । आदिथ । अत्ता । लृदित्वात् ङः । अघसत् ॥ प्सा भक्षणे । प्साति । प्सायात् । प्सातु । अप्सात् ॥

( सुबोधिनी )–सिसयोरदेर्घस्लृ लिटि तु वा ॥ अदो घस्लृ इत्यादेशः स्यात् सिप्रत्यये सप्रत्यये च लिटि तु वा ॥ सप्रत्यये जिघत्सति । जघास । गमामित्युपधालोपः । खसे चपा इति घस्य कः । घसादेरिति षत्वं कत्वं च । जक्षतुः । घसस्तादवभावात् थपि नित्यमिट् । जघसिथ । पक्षे अत्त्यर्त्तिव्ययतीनामिति नित्यमिट् । आदिथ ॥

**( आदन्ताद्द्विषोऽन उस् वा )** अप्सुः–अप्सान् । पप्सौ । आतोऽनपि । पप्सुः । प्सायात्–प्सेयात् । अप्सासीत ॥ मा माने । माति । अमात । अमुः–अमान् । ममौ । मेयात् । अमासीत् ॥ या प्रापणे । याति । ययौ । अयासीत् ॥ वा गतिगन्धनयोः । वाति ॥ रा दाने । राति ॥ ला दानग्रहणयोः । लाति । ललौ । अलासीत् ॥ श्रा पाके । श्राति । श्रायात्–श्रेयात् ॥ दाप् लवने । दाति । ददौ । दायात् । अदासीत् ॥ ख्या प्रकथने । ख्याति । ख्यायात् । ख्यातु । अख्यात् । द्रा कुत्सायाम् । द्राति । द्रेयात्–द्रायात् । अद्रासीत् ॥ पा रक्षणे । पाति । पपौ । पायात् । अपासीत् ॥ भा दीप्तौ । भाति । बभौ ॥ ष्णा शौचे । स्नाति । स्नायात्–स्नेयात् ॥ वश कान्तौ । वष्टि, उष्टः, उशन्ति । वक्षि, उष्ठः, उष्ठ । वश्मि, उश्वः, उश्मः । उश्यात् । वष्टु–उष्टात्, उष्टाम्, उशन्तु । उड्ढि, उष्टम, उष्ट । वशानि, वशाव, वशाम ॥

( सुबोधिनी )–आदन्ताद्द्विषोऽन उस् वा ॥ आदन्ताद्धातोर्द्विषश्च परस्यानो वा उस् स्यात् ॥ उस्यालोप इत्यालोपः अप्सुः । लिटि आतो णब् डावित्यौ । पप्सौ । संयोगादेरादन्तस्येकारो वा । प्सेयात्–प्सायात् । यमिरमिनमातामितीट्सकौ । अप्सासीत् ॥ मा माने । अकर्मकः । ' तनौ ममुस्तत्र न कैटभद्विषः ' इति माघे ॥ उपसर्गवशेनार्थान्तरे सकर्मकः । 'उदरं परिमाति मुष्टिना' इति नैषधे ॥ या प्रापणे । प्रापणमिह गतिः ॥ रा दाने ॥ ला आदाने आदानं ग्रहणम् । द्वावपि दाने इति चन्द्रः । ख्या प्रकथने । चतुर्ष्वेवास्य प्रयोग इति भाष्यम् ॥ द्रा कुत्सायाम् । पा रक्षणे । भा दीप्तौ । ष्णा शौचे । वश कान्तौ कान्तिरिच्छा । छशषेति षत्वम् । वष्टि । ग्रहामिति संप्रसारणम् । उष्टः । उश्यात् । वष्टु–उष्टात्, उष्टाम्, उशन्तु । हौ संप्रसारणम् । छशषेति षत्वम् । झसाद्धेरिति धः । षो ड इति डत्वम् । ष्टुभिः ष्टुरिति ढत्वम् । उड्ढि ॥

**दिस्योर्हसात् ॥** हसात्परयोर्दिस्सिपोर्लोपः ॥ अवट्-अवड्, औष्टाम्, औशन् । अवट्-अवड्, औष्टम्, औष्ट । अवशम्, औश्व, औश्म । उवाश, ऊशतुः । उवशिथ । उश्यात् । वशिता । अवाशीत्-अवशीत् ॥ हन हिंसागत्योः । हन्ति ॥

( सुवोधिनी )-**दिस्योर्हसात्** ॥ दिप्सहचरितस्य सेर्ग्रहणान्नेह । अत्सि ॥ ननु संयोगान्तलोपेनैव गतार्थमिदम् । सत्यम् । सभिन्नस्य रान्नोति सूत्रमनेन ज्ञाप्यते । तेन अविभर्भवानित्यादौ । संयोगान्तलोपाभावादस्यारम्भः । अवट्, औष्टाम्, औशन् । उवाश, ऊशतुः । उश्यात् । वशिता । वशिष्यति । अवशिष्यत् । अतो हसादेरिति वा वृद्धिः । अवासीत्-अवशीत् ॥

( तत्त्वदी० )-**दिस्योर्हसात्** ॥ दिश्च सिश्च दिसी तयोः । अत्र दिसाहचर्याल्लङ एव सिप् गृह्यते न त्वन्यः । तेनात्सीदित्यादौ नातिप्रसंगः । संयोगान्तलोपेनैव सिद्धे सभिन्नस्य रान्नेति ज्ञापयितुमस्यारम्भः । सिग्रहणं तूत्तरार्थम् ॥ ननु अरोदीदरोददित्यत्रातिप्रसंगः यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इति न्यायादिति चेन्न । तेन विभक्तित्वप्रत्ययत्वयोरेव ग्रहणान्न तु दित्वसित्वयोः ॥

**लोपस्त्वनुदात्ततनाम् ॥** अनुदात्तानां तनादीनां वनतेश्च ञमस्य लोपो भवति झसे क्ङिति हकारे च ॥ हतः, घ्नन्ति । हन्यात् । हन्तु-हतात्, हताम्, घ्नन्तु ॥

( सुवोधिनी )-**लोपस्त्वनुदात्ततनाम्** । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्ताः षट् । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु इति तनोत्यादयो नव । अनुदात्तेति लुप्तषष्ठीकं पदम् । तुशब्देन ञमान्तानां ग्रहणम् । वन संभक्तौ । वनति । इह हवत्योर्नेडिति इड्निषेधात् किति झसे नस्य लोपः ॥ झसे किम् । गम्यते ॥ क्ङितीति किम् । गन्ता । गमां स्वरे इत्युपधालोपः हनो घ्न इति घः । घ्नन्ति ॥

( तत्त्वदी० )-**लोपस्त्वनुदात्ततनाम्** ॥ यमिरमिनमिगमिहनिमन्यतयोऽनुदात्ताः । तनुषणुक्षणुक्षिणुऋणुतृणुघृणुवनुमनु इति तनोत्यादयः ॥ अनुदात्तेति लुप्तषष्ठीकं पृथक्पदम् । तुशब्दोऽपरलाभार्थ इत्याह-**तनादीना**मिति ॥ लुप्तषष्ठीनिर्दिष्टन्यायेनान्त्यलोप इत्याशयेनाह-**ञमस्ये**ति ॥ अन्यथा ञम्यादिष्वनन्त्यस्यापि ञमस्य संभवाल्लोपः स्यात् ॥

**जह्येधिशाधि ॥** हन्तेर्जहिरस्तेरेधिः शास्तेः शाधिर्निपात्यते हिविषये ॥ जहि । हनानि । अहन्, अहताम्, अघ्नन् ॥

( सुवोधिनी )-**जह्येधिशाधि** ॥ हिसहितानां हनासशासीनां यथासंख्यमेते स्युः ॥

**( पूर्वाद्धन्तेर्हस्य घः )** जघान, जघ्नतुः, जघ्नुः । जघनिथ-जघन्थ ॥

( सुवोधिनी )-**पूर्वाद्धन्तेर्हस्य घः** ॥ द्वित्वे सति पूर्वरूपात् परस्य हन्तेर्हस्य घत्वं भवति । जघनिथ ॥

( हनो लुङ्लिङोर्वधो लुङ्यात्मनेपदे वा ) वध्यात् । हनिष्यात ॥

( सुबोधिनी )—हनो लुङ्लिङोर्वधो लुङ्यात्मनेपदे वा ॥ लुङ्लिङोः परतो हन्तेर्वधः स्यात् आत्मनेपदे लुङि तु वा ॥ वध्यात् । हन्यत इतीट् । हनिष्यति ॥

( तत्त्वदी० )—हन इति ॥ लुङ्साहचर्यादनद्विषय एव लिङ् गृह्यते । तेन विधौ नातिप्रसंगः । यत्तु विधावतिप्रसंगवारणाय किदिति लिङो विशेषणमुपन्यस्तं तद्भ्रमासात् । वृश्चिकभियेति न्यायेन कर्मणि पक्षे वधिषीष्टेत्यत्रातिव्याप्तेरनिवारणात् ॥

( जनिवध्योर्न वृद्धिः ) अवधीत् ॥ यु मिश्रणे अमिश्रणे च ॥

( सुबोधिनी )—जनिवध्योर्न वृद्धिः ॥ अनयोर्वृद्धिर्न भवति ॥ जन जनने । जनी प्रादुर्भावे च । वध हिंसायाम् । वधादेशोऽदन्तः । तेनाद्योच्चारणेऽनेकस्वरत्वात् नैकस्वरादितीण्निषेधो न प्रवर्तते । यत इत्यल्लोपः । अवधीत् ॥

ओरा ॥ उकारस्याऽद्विरुक्तस्यौकारो भवत्यबादौ पिति ॥ यौति, युतः, युवन्ति । यौषि । यौमि, युवः । युयात् । यौतु । युहि । अयौत् । अयोः । युयाव । युयविथ । यूयात् । यविता । अयावीत् ॥ तु गतिवृद्धिहिंसासु ॥

( सुबोधिनी )—ओरौ ॥ अद्विरुक्तस्य धातोरुत औः स्यात् पिति तकारसकारदकारादौ लुग्विषये । उतः किम् । एति । एषि । लुकि किम् । सुनोति । पिति किम् । रुतः । अद्विरुक्तस्य किम् । योयोति । नुधातोरित्युव् । युवन्ति । ये दीर्घः स्यात् । यूयात् । धातोर्नामिन इति वृद्धिः । अयावीत् ॥ तु इति सौत्रो धातुः गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति स्मरन्ति ॥

( तत्त्वदी० )—ओरौ इति ॥ विदो नवानामित्यतो वेत्यनुवर्त्य व्यवस्थयाऽद्विरुक्तस्येति बोध्यम् । तेन जुहोतीत्यादौ नातिप्रसंगः ॥

( तुरुस्तुभ्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड्वा ) तौति–तवीति, तुतः–तुवीतः, तुवन्ति । तौषि–तवीषि, तुथः–तुवीथः, तुथ–तुवीथ । तौमि–तवीमि । तुयात्–तुवीयात् । तौतु–तवीतु–तुवीतात्–तुवीताद्–तुतात्–तुताद् । तुहि–तुवीहि । अतौत्–अतवीत् । तुताव । तोता । तोष्यति । अतौषीत् ॥ रु शब्दे । रौति–रवीति । रुरविथ । अरावीत् ॥ णु स्तुतौ । नौति, नुतः । नुनाव । नुनविथ । अनावीत् ॥ टुक्षु शब्दे । क्षौति । क्षुयात् । क्षौतु । अक्षौत् । चुक्षविथ ॥ क्षविता । अक्षावीत् ॥ क्ष्णु तेजने । क्ष्णौति । चुक्ष्णविथ । अक्ष्णावीत् । ष्णु प्रस्रवणे । स्नौति । सुष्णविथ । अस्नावीत् ॥ द्यु अभिगमने । द्यौति । दुद्यविथ–दुद्योथ । अद्यौषीत् ॥

षु प्रसवैश्वर्ययोः। सौति। सुषाव। सुषविथ-सुषोथ। असौषीत् ॥ कु शब्दे। कौति। चुकविथ-चुकोथ। अकौषीत् ॥ वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु। वेति, वीतः, वियन्ति। वेषि। वेतु। वीहि। अवेत्, अवियन्। विवायिथ-विवेथ। अवैषीत् ॥ एति, ईतः। ईयात्। ऐत्, ऐयन्। आयम्। अयांचकार। एता। ऐषीत् ॥ इण् गतौ। एति, इतः ॥

( सुबोधिनी )-तुरुस्तुम्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड् वा ॥ अद्विरुक्तेभ्य एभ्यः परेषां हसादिचतुर्णामीडागमो वा भवति। क्ष्णु तेजने। तेजनं तीक्ष्णीकरणम्। ष्णु प्रस्रवणे। प्रस्रवणमुत्कण्ठा। षु प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानम्। वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु। प्रजजनं गर्भग्रहणम्। असनं क्षेपणम्। अडागमात्प्राग् नु धातोरितीय्। अवियन्। नित्यत्वादडागमे कृते सत्यनेकस्वरत्वाद्य इति केचित्। अव्यन्। अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते। तथा च प्रयुञ्जते। 'न हि तरणिरुदीते दिक्पराधीनवृत्तिः' इति। व्याख्यातं च मनोरमायाम्। कर्मव्यतिहारे आत्। न च गतिहिंसार्थेत्यान्निषेधः शङ्क्यः। उत्पूर्वस्याविर्भावार्थत्वादिति। इण् गतौ ॥

( तत्त्वदी० )-तुरुस्तुभ्य इति ॥ यत्तु प्राचा युरुणुस्तुभ्य इत्युक्तं यच्च वासुदेवेन व्याख्यातम्। यु मिश्रणे। रु शब्दे। णु स्तुतौ। ष्टुञ् स्तुतौ। एभ्यः पिति त्सि ईकारो वक्तव्यः इति तत्सर्वं प्रामादिकम्। युणु एतयोरत्राग्रहणस्य सर्वसंमतत्वात्। पितित्सीति निमित्तोपादानमप्ययुक्तम्. स्तवीत इत्यादावव्याप्तेः ॥

( इणः क्ङिति स्वरे यः ) यन्ति। एषि। इयात्। एतु, यन्तु। इहि। आयम, ऐव, ऐम। इयाय ॥

( सुबोधिनी )-इणः क्ङिति स्वरे यः ॥ इणो यत्वं भवति किति ङिति च स्वरे। यन्ति। लिटि द्वित्वे वृद्धौ च कृतायाम् असवर्णे स्वरे इतीय्। इयाय ॥

( इणः किति णादौ पूर्वस्य दीर्घः ) ईयतुः, ईयुः। इययिथ-इयेथ। ईयात्। एता। दादेः पे। इणः सिलोपे गा। अगात, आगाताम्, अगुः ॥ इक् स्मरणे। इङिकावध्युपसर्गतो न व्यभिचरतः। अध्येति, अधीतः, अधियन्ति। अध्यैत्-अध्यैद् ॥

( सुबोधिनी )-इणः किति णादौ पूर्वस्य दीर्घः ॥ इणः पूर्वरूपस्य दीर्घो भवति किति लिटि। आशिषि ये इति दीर्घः। ईयात्। इक् स्मरणे। ककार इहेण्वदिक इति विशेषणार्थः। अयमधिपूर्वः। तथा च भट्टिः 'ससीतयो राघवयोरधीयन्।' स्मरन्नित्यर्थः। राघवयोरित्यत्र कर्मणि षष्ठी। इङिकाविति। इङिकावध्युपसर्गं विना प्रयोगं नार्हत इत्यर्थः ॥

**( इण्वदिकः )** अधीयाय । अधीयतुः । अधीययिथ-अधीयेथ । अधीयिव । अधीयात् । अध्येता । अध्यगात् ॥ विद ज्ञाने । वेत्ति, वित्तः, विदन्ति । वेत्सि, वित्थः, वित्थ । वेद्मि ॥

( सुबोधिनी )-इण्वदिकः ॥ इणो यत् कार्यमुक्तं तदिकोऽपि भवति । कार्यातिदेशोऽयम् ॥ विद ज्ञाने । ज्ञप्तिर्ज्ञानम् ॥

**विदो नवानां त्यादीनां णबादिर्नवको वा ॥** विदः परेषां त्यादीनां नवानां णबादिर्नवको वा ॥ वेद, विदतुः, विदुः । वेत्थ, विदथुः, विद । वेद, विद्व, विद्म । विद्यात । वेत्तु । विद्धि ॥

( सुबोधिनी )-विदो नवानां त्यादीनां णबादिर्नवको वा ॥ वर्तमानार्थकणादियोगे धातोर्द्वित्वं न उक्तार्थणादियोगे इत्युक्तत्वात् । झसादिति धिः । विद्धि ॥

( तत्त्वदी० )-वेदेति ॥ अनन्तरस्येति न्यायादुक्तार्थणादियोग एव द्वित्वं नान्यत्र ॥

**( वेत्तेर्लोटयाम्गुणाभावः करोत्यनुप्रयोगश्च वा )**

( सुबोधिनी )-वेत्तेर्लोटयाम् गुणाभावः करोत्यनुप्रयोगश्च वा ॥ वेत्तेराम् प्रत्ययो गुणनिषेधः करोतेरनुप्रयोगश्च वा स्याल्लोटि ॥

**तनादेरुप् ॥** विदांकरोतु ॥

( सुबोधिनी )-तनादेरुप् ॥ तन आदिर्यस्य स तनादिस्तस्मात्तनादेरुप् प्रत्ययः स्यात् कर्तरि चतुर्षु । नूप इति गुणे कृते विदांकरोतु ॥

**ङित्यदुः ॥** कृञोऽत उत् ङिति ॥ विदांकुरुतात् । विदांकुर्वन्तु । अवेत्-अवेद् । स्याविदः । अविदुः ॥

( सुबोधिनी )-ङित्यदुः ॥ कृञो ये इत्यतः कृञ इत्यनुवृत्तम् । लङि दिस्योरिति दिप्सिपोर्लोपः स्यात् । अवेत् । स्याविद इत्यन उस् अविदुः ॥

( तत्त्वदी० )-ङित्यदुः ॥ ङिति अत् उरीति च्छेदः । कृञो ये इत्यतः कृञ इत्यनुवर्तते । विदांकुरुतादित्यत्र तपरत्वादुप्रत्ययनिमित्तो गुणो न । कुर्वन्त्वित्यत्र तु संज्ञापूर्वकत्वेनानित्यत्वात् य्वोर्विहस इति दीर्घो न । तपरः किम् अकारि । तपरकरणं सुखमुखोच्चारणार्थमिति वासुदेवः तन्न ङित्य उरीति पाठेऽपि सुखोच्चारस्याव्याहतत्वात् ॥

**दः ॥** पदान्ते दस्य रो वा सिपि ॥ अवेः-अवेद्-अवेत् ॥

( सुबोधिनी )-दः ॥ पदान्ते धातोर्दस्य रो वा स्यात् सिपि ॥ सिपि किम् । अवेद् । पदान्ते किम् । वेत्सि ॥

( तत्त्वदी० )-दः इति ॥ अत्र रोऽरात्रिष्वित्यतो मण्डूकप्लुत्या र इत्यनुवर्तते अजर्घा इत्यादिसिद्ध्यर्थम् । स इति त्वव्यवहितमपि न । दोषादिकल्पने च गौरवम् । यदि दोषादिकल्पनं व्यवहितानुवृत्त्या गौरवं समानं तदा सानुवृत्तिरप्यस्तु ॥

**(आमि विदेर्न गुणः)** विदांचकार। अवेदीत् ॥ अस भुवि। अस्ति ॥

(सुबोधिनी)—आमि विदेर्न गुणः ॥ वेत्तेर्गुणो न स्यात् आमि। विददरिद्रे-स्याम्। विदांचकार। अस भुवि। सत्तायामित्यर्थः ॥

**नमसोऽस्य** ॥ प्रत्ययस्य नमोऽस्तेश्चाकारस्य लोपो ङिति। स्तः, सन्ति ॥

(सुबोधिनी)—नमसोऽस्य ॥ नम् च अस् चानयोः समाहारो नमस् तस्य। नमिति प्रत्ययो गृह्यते प्रतिपदोक्तत्वात्। न धातुः लाक्षणिकत्वात्। तस्य हि आदेः ष्णः स्न इति कृते नमिति रूपम्। अस्तेरीडित्यतोऽस्तेरित्यनुवृत्त्याऽस्तेरित्यस्य योऽस् तस्येति व्याख्यानात् अस्प्रत्ययस्य अस दीप्तौ, असु क्षेपणे इत्यादीनां च ग्रहणं न भवति। ङित्यदुरित्यतो ङितीति ओव्मोरित्यतो लोप इति चानुवृत्तम् ॥

(तत्त्वदी०)—नमसोऽस्य ॥ नम् च अस् चानयोः समाहारः नमस् तस्य। नमधातोरादेः ष्णः स्न इति सूत्रेण नत्वकरणाल्लाक्षणिकत्वेनाग्रहात्। अस्तेरीडित्यतोऽस्तेरित्यनुवृत्तेरस्तेरिति रूपस्य प्रकृतिभूतो योऽस् तस्येति व्याख्येयम्। तेनास्प्रत्ययः। अस दीप्तौ असु क्षेपणे इत्यादीनां न ग्रहणम्। यत्तु वासुदेवेन नन्वसा धातुना साहचर्यान्नमपि धातुरेव गृह्यताम् इत्युक्तम् तन्न अस्प्रत्ययस्यापि संभवेन धातोर्ग्रहणमिति निर्णयाभावात् ॥

**सि सः** ॥ अस्तेः सस्य लोपो भवति सादौ ॥ असि, स्थः, स्थ। अस्मि, स्वः, स्मः। स्यात्। अस्तु-स्तात्, सन्तु। जह्येधिशाधि। एधि। असानि ॥

(सुबोधिनी)—सि सः ॥ नमसोऽस्येत्यतोऽस्ग्रहणमप्यनुवृत्तम् ॥ जह्येधीति एध्यादेशः। एधि ॥

(तत्त्वदी०)—सि सः ॥ अत्र नमः सकारासंभवादस एवानुवृत्तिः ॥

**अस्तेरीट्** ॥ विद्यमानादस्तेः रुदादेश्च परयोर्दिप्सिपोरीट् ॥ आसीत्, आस्ताम्। आसीः। आसम ॥

(सुबोधिनी)—अस्तेरीट् ॥ दिस्योर्हसादित्यतो दिस्योरित्यनुवृत्तम्। अस्तेरिति तु तन्त्रादिना व्याख्येयम्। तेन विद्यमानादस्तेरिति लभ्यते ॥ विद्यमानात्किम्। अस्तेर्भूरित्यादेशेऽभूदित्यादौ मा भूत्। स्थानिवद्भावेन नमसोऽस्येत्यत्र ओव्मोर्वेत्यतो वानुवृत्त्या व्यवस्थया लोपाभावे स्वरादित्वात् द्वितीयोऽट् आस्ताम् ॥

(तत्त्वदी०)—अस्तेरीट् ॥ अत्राद्रुदादेरिति सूत्रात् रुदादेरित्येकदेशोऽनुवर्तते। न त्वदिति क्वचिदेकदेशोऽनुवर्तत इति स्वीकारात्। अस्तेरित्यस्य तन्त्रादिना लब्धं विद्यमानादिति। तेन भ्वादे-

शे अभूदित्यादौ नातिप्रसंगः ॥ **आस्तामिति** ॥ अत्र ओर्मोर्वेत्यतो वानुवृत्त्या व्यवस्थया लोपाभावे द्वितीयोऽट् । उपदेशस्वरादिति तु न अगादित्यत्रातिव्याप्तेः ॥

**( अस्तेरनपि भूः ) बभूव इत्यादिसिद्धम् ॥ मृजू शुद्धौ ॥**

( सुबोधिनी )—अस्तेरनपि भूः ॥ अस्तेर्भूरादेशः स्यादचतुर्षु । मृजू शुद्धौ । अयं न षित् भिदादिपाठसामर्थ्यात् ॥

**( मृजेर्वृद्धिः क्ङिति स्वरे वा ) मार्ष्टि, मृष्टः,मृजन्ति-मार्जन्ति। मार्क्षि । मृज्यात् । मार्ष्टु । मृड्ढि मार्जानि । अमार्ट्-अमार्ड् । ममार्ज, ममृजतुः-ममार्जतुः । ममार्जिथ--ममार्ष्ठ । मृज्यात् । मार्जिता--मार्ष्टा ॥ अमार्जीत् ॥ वच परिभाषणे । वक्ति । नहि वचिरन्तिपरः । वक्षि, वक्थः । वच्मि । वच्यात् । वक्तु । वग्धि । अवक्--अवग् । उवाच, ऊचतुः । उवचिथ--उवक्थ । उच्यात्। वक्ता । वक्ष्यति । अवक्ष्यत् । अस्यतिवक्तीति ङः ॥**

( सुबोधिनी )—मृजेर्वृद्धिः क्ङिस्वरे वा ॥ गुणापवादः । अक्ङिति प्रत्यये परे मृजेर्वृद्धिर्भवति क्ङिति स्वरे वेष्यते । छशषेति षत्वम् । मार्ष्टि ॥ झसादिति हेर्धिः । छशषेति षत्वम् ष्टुत्वम् । झव जवा इति षस्य डः स्थानैकत्वात् । मृड्ढि । दिस्योरिति दिप्सिपोर्लोपः । अमार्ट्--अमार्ड् । लुङि इडभावे षत्वकत्वे । अमार्क्षीत् । झसादिति सिलोपः । अमार्ष्टाम् । स्याविद इत्यन उस् । अमार्क्षुः । वच परिभाषणे । अयमन्तिपरो न प्रयुज्यते इत्येके । बहुवचनपरो न प्रयुज्यते इत्यपरे । झसादिति हेर्धिः । चोः कुरिति कः । झवे जवा इति गः । वग्धि । दिस्योरिति दिप्सिपोर्लोपः । अवक् । णबादौ पूर्वस्येति संप्रसारणम् । अत उपधाया इति वृद्धिः । उवाच । अस्यतिवक्तिख्यातिभ्य इति ङः ॥

( तत्त्वदी० )—नहि वचिरिति ॥ बहुवचनपर इत्येके । अन्तमात्रपर इत्यन्ये ॥

**( ङे वचेरुम् ) अवोचत्, अवोचताम, अवोचन् ॥ रुदिर् अश्रुविमोचने ॥**

( सुबोधिनी )—ङेवचेरुम् ॥ वचेरुमागमः स्यात् ङप्रत्यये । अवोचत् ॥ रुदिर् अश्रुविमोचने । अश्रुविमोचनं रोदनम् ॥

**रुदादेश्चतुर्णां ह्वसादेः ॥ रुदादेः परस्य तिबादिचतुर्णां मध्ये हकारवसादेः प्रत्ययस्येट् ॥ रोदिति, रुदितः, रुदन्ति । रोदिषि, रुदिथः,रुदिथ । रुद्यात् । रोदितु । रुदिहि । अरोदीत्–अरोदत,अरुदिताम, अरुदन् । इरितो वा । अरुदत् ॥ ञिष्वप् शये । स्वपिति ।**

स्वप्यात् । स्वपितु । अस्वपीत्-अस्वपत् । सुष्वाप । स्वप्ता । अस्वाप्सीत् ॥ श्वस् प्राणने । श्वसिति । श्वस्यात् । श्वसितु । अश्वसत् । अश्वसीत् । शश्वास ॥ अन प्राणने । अनिति ॥

( सुबोधिनी )-रुदादेश्चतुर्णां ह्वसादेः॥ ह् च वसश्च ह्वसौ तौ आदी यस्य स ह्वसादिस्तस्य ॥ " रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा । जक्षितिश्चेति विज्ञेयो रुदादिः पञ्चको गणः ॥ " ह्वसादेः किम् । रुदन्ति ॥ चतुर्णां किम् । स्वप्ता । हौ परत्वादिटि कृते धिरादेशो न । रुदिहि । लुङि इरित इति वा ङः । अरुदत् । णवादौ पूर्वस्येति संप्रसारणम् । यजामिति संप्रसारणम् । सुषुपतुः । अत उपधाया इति वृद्धौ अस्वाप्सीत् । ह्म्यन्तेति न वृद्धिः । अश्वसीत् ॥

( तत्त्वदी० )-रुदादेरिति ॥ ह् च वसश्च ह्वसौ तौ आदी यस्य स तथा । "रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा । जक्षितिश्चेति विज्ञेयो रुदादिः पञ्चको गणः ॥ १ ॥" अरोदीदिति ॥ अद्रुदोदरडित्यट् । अस्तेरीडिति पक्षे ईट् ॥

**( प्रादे रेफादनितेर्नस्य णत्वम् )** प्राणिति । प्राणिहि । आनीत् । आनत् । आन, आनतुः । अन्यात् । अनिता । आनीत् ॥ जक्ष भक्षहसनयोः । जक्षिति, जक्षितः ॥

( सुबोधिनी )-प्रादे रेफादनितेर्नस्य णत्वम् ॥ प्रादिस्थरकारात्परस्यादेर्नस्य णत्वं स्यात् ॥

**( जक्षादेरन्तोऽदन उस् )** जक्षजागृदरिद्राशास्चकास्भ्यः परस्यान्तोऽत् अन उस् च ॥ जक्षति । जक्ष्यात् । जक्षितु । जक्षिहि । अजक्षीत् । अजक्षत् । जक्षिता ॥ इति रुदादयः ॥ जागृ निद्राक्षये । जागर्ति, जागृतः, जाग्रति । जागृयात् । जागर्तु । अजागः, अजागृताम् ॥

( सुबोधिनी )-जक्षादेरन्तोऽदन उस् ॥ जक्षप्रभृतयः सप्त । उक्तं च । "जक्षजागृदरिद्रातिचकास्तिशास्तयस्तथा । दीधीङ् वेवीङ् च विज्ञेयो जक्षादिः सप्तको गणः ॥ १ ॥" दिस्योरिति दिप्सिपोर्लोपः । अजागः ॥

**( उसि गुणः )** अजागरुः । जजागार ॥

( सुबोधिनी )-उसि गुणः ॥ नाम्यन्तस्य धातोर्गुणः स्यादनादेशे उसि परे । विदर्दरिद्रेति वाम् । जागरांचकार ॥

**( जागर्तेर्वीणणबिङ्द्भिन्नेषु गुणः )** जजागरतुः, जजागरुः । जजागरिथ । जागराञ्चकार । जागर्यात् । जागरिता । जागरिष्यति । अजागरिष्यत् । अजागरीत् ॥ दरिद्रा दुर्गतौ । दरिद्राति ॥

( सुबोधिनी )—जागर्तेर्वीण्णब्ङिद्भिन्नेषु गुणः ॥ जागर्तेर्विइणूणवुङिद्भिन्नप्रत्यये गुणः स्यात् । विइण्णबुङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च । विशब्देन वादिः प्रत्ययो गृह्यते । इकारस्तु उच्चारणार्थः । क्सुप्रत्यये जजागृवान् जजागृवांसौ इति । इणि अजागारि । णपि जजागार । ङिति जागृतः । वृद्धिविषये वुणि जागरकः । घञि जागरः । ञिप्रत्यये जागरयति । न चैतेषु गुणे कृतेऽप्यत उपधाया इति वृद्धिः स्यादिति वाच्यम् । गुणविधेरिणूणप्प्रतिषेधस्य चानर्थक्यापत्तेः । लुङि जागृ इ स् ईदित्यत्र रत्वं प्राप्तं तद् गुणो बाधते । तं णित्पे इति सेर्णित्वाद्धातोर्नामिन इति वृद्धिर्बाधते । तां जागर्तेरिति गुणो बाधते । तत्र गुणे कृते अतो हसादेरिति विकल्पं बाधित्वा ल्लान्तस्येति वृद्धिः प्राप्ता ह्म्यन्तेति सूत्रेण निषिध्यंते ॥ अजागरीत् ॥ दरिद्रा दुर्गतौ ॥

**दरिद्रातेरिद्दालोपश्च ङिति ॥** दरिद्रातेरातो लोपो ङिति स्वरे इकारश्च ङिति हसे ॥ दरिद्रितः, दरिद्राति । दरिद्रियात् । दरिद्रातु । अदरिद्रात, अदरिद्रिताम्, अदरिद्रुः ॥

( सुबोधिनी )—दरिद्रातेरिदालोपश्च ङिति ॥ हसे इति स्वरे इति चानुवृत्तम् ॥

( तत्त्वदी० )—अदरिद्रुरिति ॥ जक्षादेरित्यन उस् दरिद्रातेरिदालोप इत्यनेन परत्वादालोप आदन्तत्वाभावादादन्ताद्द्विष इत्यादिलक्षणविकल्पाप्रवृत्तिः ॥

**( दरिद्रातेरनप्यालोपः सौ वा णब्वुणनिट्सयुट्सु न )** ददरिद्रौ, ददरिद्रतुः । दरिद्रांचकार । दरिद्र्यात् । दरिद्रिता । अदरिद्रीत्, अदरिद्रिष्टाम् । अदरिद्रासीत् ॥ शासु अनुशिष्टौ । शास्ति ॥

( सुबोधिनी )—दरिद्रातेरनप्यालोपः सौ वा णब्वुणनिट्संयुट्सु न ॥ दरिद्रातेरातो लोपः स्यात् अचतुर्षु सिप्रत्यये तु वा णवादिषु परेषु न । वुणि दरिद्रायकः ॥ अनिटि सप्रत्यये दिदरिद्रासाति ॥ युटि दरिद्राणः । लुङि आलोपाभावे यमिरमीतीट्सकौ । अदरिद्रासीत् । अदरिद्रासिष्टाम् ॥ शासु अनुशिष्टौ अनुशिष्टिरनुशासनम् ॥

**शासरिः ॥** शासेरातो हसे क्ङिति ङे च इद्भवति ॥ घसादेः षः । शिष्टः, शासति । शास्सि, शिष्ठः, शिष्ठ । शास्मि । शिष्यात् । शास्तु । जह्योर्धिशाधि । शाधि ॥ **दिपि ॥** धातोः सस्य तः स्यादिपि ॥ अशाद्-अशात, अशिष्टाम, अशासुः ॥ **सिपि वा ॥** धातोः सस्य वा तः स्यात्सिपि ॥ अशाः-अशात्-अशाद् । शशास । शिष्यात् । शासिता । अशासिष्यत् । अशिषत ॥ चकासृ दीप्तौ । चकास्ति, चकास्तः, चकासति । झसाद्धिर्हे: । धे सलोपः । चका-

धि । अचकात् । अचकासुः । अचकाः-अचकात्-अचकाद् । च-
कासांचकार । अचकासीत् ॥ इति परस्मैपदम् ॥

( सुबोधिनी )-शासेरिः ॥ शास उपधाया इत् स्यात् ङप्रत्यये हसादौ क्ङिति च । ङस्यानुवर्तनात् आङः शासु इच्छायामित्यस्य तु न ग्रहणम् । अर्तिसर्तिसाहचर्यात्परस्मैपदिन एव शासेर्ङविधानात् । तेन पे एवेत्वम् । नेह । आशास्ते । अन्ये तु व्यतिशिष्टे । व्यतिशिड्ढ्वे । इत्यात्मनेपदेऽपि इत्वं स्वीकुर्वन्ति । हौ जह्योधिशाधीति शाधिरादेशः । शाधि । सर्तिशास्तीति ङः । अशिषत् ॥ चकासृ दीप्तौ । दीप्तिस्तेजः । जक्षादेरित्यन्तोऽत् । चकासति । धे च सलोपः । धातोः सकारस्य लोपः स्यात् धकारे परे । दिस्योरिति दिप्सिपोर्लोपः । दिपि सस्येति तः । अचकात् । सिपि तु वा तः । अचकाः-अचकात् । कासादिप्रत्ययादित्याम् । चकासांचकार । दीधीङ् दीप्तिदेवनयोः । देवनं शोकः । वेवीङ् वेतिना तुल्ये । वीगतीत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः । छान्दसाविमौ । अत एव न व्याख्यातौ ॥ ॥ इति सुबोधिन्यां परस्मैपदम् ॥

( तत्त्वदी० )-शासेरिः ॥ ङे चेति ॥ ङानुवृत्तेराङः शासु इच्छायामित्यस्य नेत्वम् । अर्तिसाहचर्यात्परस्मैपदिन एव शास्तेर्ङविधानात् । भाष्यमतमाह-धे सलोप इति ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । अगाददादिमध्यस्थं परस्मैपदसाधनम् ॥

इति तत्त्वदीपिकायां परस्मैपदम् ॥

चक्षिङ् व्यक्तायां वाचि । स्कोराद्योश्च । चष्टे, चक्षाते । आतोऽन्तोऽदनतः । चक्षते । चक्षे, चक्षाथे, चड्ढ्वे । चक्षे, चक्ष्वहे, चक्ष्महे । चक्षीत । चष्टाम् । अचष्ट ॥

( सुबोधिनी )-चक्षिङ् व्यक्तायां वाचि ॥ अयं दर्शनेऽपि । इकारोऽनुदात्तः । इदितो नुमिति नुम् तु न अन्ते इदित इति व्याख्यानात् । ङकारस्तु अनुदात्तेत्त्वप्रत्युक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः । स्कोरिति कलोपः । ष्टुत्वम् । चष्टे । आतोऽन्तोऽदनत इत्यत् । चक्षते । मध्यमे तु स्कोरिति कलोपः । षढोरिति कः । षत्वम् । चक्षे । कलोपे ष्टुत्वे झबे जबा इति डः चड्ढ्वे । लङि अचष्ट ॥

( तत्त्वदी० )-चक्षिङ् ॥ अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति ज्ञापनार्थो ङकारः । तेन 'अनुक्तमप्यूहति पण्डितो जनः' इत्यादि सिद्धम् । इदित इति नुम् तु न भवति अन्ते इदिति व्याख्यानात् । अकारस्तु वक्तुमुचितः ॥

( चक्षिङोऽनपि ख्याञ्क्शाञौ णादा तु वा ) चख्यौ, चख्यतुः । चख्ये, चख्याते । चक्शौ । चक्शे । चचक्षे । ख्येयात्-ख्यायात् ख्यासीष्ट । क्शायात्-क्शेयात् । ( अस्यतिवक्तिख्यातिभ्यो ङो-लुङि सेरपवादः ) अख्यत-अख्यत-अक्शास्त ॥ ईर् गतौ

कम्पने च । ईर्ते, ईराते । ईर्ताम्, ईराताम् । ऐर्त । ईरांचक्रे ॥ ईरिषीष्ट । ऐरिष्ट ॥ आङः शासु इच्छायाम् । आशास्ते । आशशासे । आशासिष्ट ॥ कसि गतिशासनयोः । कंस्ते, कंसाते । अयमनिदिदित्येके । कस्ते । तालव्यान्तोऽप्यनिदित् । कष्टे, कशाते । कक्षे, कड्ढ्वे । अकशिष्ट ॥ णिसि चुम्बने । निंस्ते, निंसाते । निंस्से । निंसिता ॥ णिजि शुद्धौ । चोः कुः । निङ्क्ते । निङ्क्ष्वे । निञ्जिता ॥ शिजि अव्यक्ते शब्दे । शिङ्क्ते । शिङ्क्षे । शिञ्जिता ॥ पिजि वर्णे संपर्चने च । पिङ्क्ते । पिपिञ्जे । पिञ्जिता ॥ पृचि संपर्चने । पृङ्क्ते । पपृञ्चे । पृञ्चिता ॥ पृची संपर्चने । पृक्ते । पपृचे । अपर्चिष्ट ॥ ईड स्तुतौ । ईट्टे ॥

( सुबोधिनी )—चक्षिङोऽनपि ख्याञ्क्शाञौ णादौ तु वा ॥ चक्षिङः ख्याञ्क्शाञावादेशौ भवतः अचतुर्षु । लिटि परे तु वा ॥ ञित्वात्पदद्वयम् ॥ ( अस्यतिवक्तिख्यातिभ्यो ङो लुङि सेरपवादः ) असु क्षेपणे । ब्रुवो वचिः । वच परिभाषणे । इत्युभयोर्ग्रहणम् एभ्यो ङप्रत्ययः स्याल्लुङि सेरपवादः ॥आतो णव् डाविति डौ।चख्यौ । आतोऽनपीत्यालोपः । चख्ये । चक्शौ । चक्शे । चचक्षे । संयोगादेरादन्तस्यैकारो वा । ख्यायात्—ख्येयात् । क्शायात् । क्शेयात्—ख्यासीष्ट । क्शासीष्ट । ख्याता।क्शाता। ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । अख्यास्यत् । अख्यास्यत । अक्शास्यत् । अक्शास्यत । अस्यतिवक्तीति ङः । आतोऽनपीत्यालोपः । अख्यत्—अख्यद् । अक्शासीत् । अक्शास्त । वर्जने ख्याञ्क्शाञौ नेष्टौ । समचक्षिष्ट ॥ आङः शासु इच्छायाम् । आङ्पूर्वकत्वं प्रायिकम् । तेन 'नमो वाकं प्रशास्महे' इति सिद्धम् ॥ वचेर्घञ् । चजोरिति कः ॥ कसिगतिशासनयोः । शासनमाज्ञा । तालव्यान्तोऽप्यनिदित् । छशषेति षत्वम् । ष्टुत्वम् कष्टे । षढोरिति कः षत्वं च कक्षे । षत्वष्टुत्वे । झवे इति डः कड्ढ्वे ॥ णिजि शुद्धौ । अनिट्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेट् । चोः कुरिति जस्य गः । खसे चपा इति कः निङ्क्ते । गत्वकत्वषत्वानि । निङ्क्षे । शिचि अव्यक्ते शब्दे । क्तप्रत्यये शिञ्जितम् । णिन्यन्तादीपि कृते शिञ्जिनी । 'भूषणानां तु शिञ्जितम्' इत्यमरः ॥ 'मौर्वी ज्या शिञ्जिनी गुणः' इति चामरः ॥ चोः कुरिति जस्य गः । खसे चपा इति कः । शिङ्क्ते ॥ पिजि वर्णे । संपर्चनं मिश्रीभावः ॥

( ईडीशिभ्यां सध्वयोरिट् ) ईडिषे । ईडिध्वे । ऐड्ढ्वम् ॥

( सुबोधिनी)—ईडीशिभ्यां सध्वयोरिट्॥आभ्यां परयोः सध्वशब्दयोरिट्स्यात्॥

( लङो ध्वस्य नेट् ) ऐड्ढ्वम् । ईडांचक्रे । ऐडिष्ट ॥ ईश ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे । ईशांचक्रे । ईशितासे ॥ आस उपवेशने ।

आस्ते। आध्वे। आसांचक्रे॥ वस आच्छादने । वस्ते । ववसे । अवसिष्ट ॥ षूङ् प्राणिगर्भविमोचने । सूते । नुधातोः । सुवाते । सूताम् ॥

( सुबोधिनी )–लङो ध्वस्य नेट् ॥ ईडीशिभ्यां परस्य लङो ध्वशब्दस्य इण्न स्यात् ॥ आस उपवेशने । उपवेशनं स्थितिः । धे चेति सलोपे आध्वम् ॥ कासादिप्रत्ययादित्याम् । आसांचक्रे ॥ वस आच्छादने । धे चेति सलोपे । वध्वे । शसददेत्येत्वपूर्वलोपौ न । ववसे ॥ षूङ् प्राणिगर्भविमोचने । प्राणिगर्भविमोचनं प्रसवः ॥

**( सुवो न गुणश्चतुर्षु )** सुवावहै । सुषुवे । सविषीष्ट–सोषीष्ट । सविता–सोता ॥ शीङ् स्वप्ने ॥

( सुबोधिनी )–सुवो न गुणश्चतुर्षु ॥ सुवो गुणो न स्यात् त्यादिषु चतुर्षु ॥ स्वरतिसूतीति विकल्पं बाधित्वा कित इति निषेधे प्राप्ते क्रादेर्णादेरिति नित्यमिट् ॥ नुधातोरित्युव् । सुषुविषे ॥ स्वरतिसूतीति वेट् । सविषीष्ट–सोषीष्ट ॥ शीङ् स्वप्ने । स्वप्नमालस्यं निद्रा च ॥

**( शीङो गुणश्चतुर्षु )** शेते, शयाते ॥

( सुबोधिनी )–शीङो गुणश्चतुर्षु ॥ क्ङित्यद्युसीत्यस्यापवादः ॥

**शीङोतो रुट्** ॥ शीङः परस्यातो रुडागमः ॥ शेरते । शेताम् । अशेत, अशेरत । शिश्ये । अशयिष्ट ॥ इङ् अध्ययने । अधिपूर्वः । अधीते, अधीयाते, अधीयते । अधीयीत, अधीयीयाताम् । अध्ययै । अध्यैत, अध्यैयाताम् ॥

( सुबोधिनी )–शीङोऽतो रुट् ॥ शीङः परस्यातः प्रत्ययस्य रुडागमः स्यात् । नुधातोरिति यः । शिश्ये ॥ इङ् अध्ययने । अध्ययनं पठनम् । नुधातोरितीय् । अधीयाते । आतोऽन्तोऽदनत इत्यत् । अधीयते । लोटि उत्तमपुरुषे गुणायादेशयोः कृतयोरुपसर्गस्य इ य स्वरे इति यत्वम् । अध्ययै । लङि । अध्यैत । प्रथममियू ततोऽटौ । अध्यैयाताम् । अध्यैयत । उत्तमे तु । अध्यैयि, अध्यैवहि ॥

( तत्त्वदी० )–अध्यैयातामिति ॥ परत्वादियादेशे पुनरडागमद्वयेन सिद्धिः ॥

**( इङो णादौ गाङ् )** अधिजगे । अध्येषीष्ट ॥

( सुबोधिनी )–इङो णादौ गाङ् ॥ इङो गाङादेशः स्याल्लिटि ॥ आतोऽनपीत्यालोपे अधिजगे ॥

**( इङो वा गीर्लुङ्लङोर्गुणाभावश्च )** अध्यगीष्यत–अध्यैष्यत । अध्यगीष्ट–अध्यैष्ट ॥

( सुबोधिनी )-इङो वा गीलुँङ्लृङोर्गुणाभावश्च ॥ इङो गी इत्यादेशो वा स्यात् गुणनिषेधश्च लुङ्लृङोः परयोः ॥ इति सुबोधिन्यामात्मनेपदम् ॥

( तत्त्वदी० )-कृतायामिह टीकायां लोकेशकरशर्मणा । अगाददादिमध्यस्थमात्मनेपदसाधनम् ॥

इति तत्त्वदीपिकायामात्मनेपदम् ॥

**द्विष अप्रीतौ । द्वेष्टि, द्विष्टः । द्वेष्टु । द्विड्ढि । अद्वेट्-अद्वेड्, अद्विष्टाम, अद्विषुः-आद्विषन् । दिद्वेषिथ । द्विक्षीष्ट । अद्विक्षत ॥ दुह प्रपूरणे । दादेर्घः । तथोर्धः । दोग्धि, दुग्धः, दुहन्ति । धोक्षि । दुग्धे । दोग्धु । दुग्धि । दोहानि । अधोक्-अधोग् । दुदोह । धुक्षीष्ट । अधुक्षत् । अदुग्ध-अधुक्षत, अधुक्षाताम् । अदुग्धाः-अधुक्षथाः । अधुग्ध्वम-अधुक्षध्वम् । अदुह्वहि-अधुक्षावहि ॥ दिह उपचये । देग्धि ॥ लिह आस्वादने । लेढि, लीढः ॥ ष्टुञ् स्तुतौ । स्तौति-स्तवीति, स्तुतः-स्तुवीतः, स्तुवन्ति । स्तौषि-स्तुवीषि । स्तुते-स्तुवीते । स्तुवीष्व । अस्तौत् । तुष्टोथ । तुष्टुव, तुष्टुम । स्तोषीष्ट ॥**

( सुबोधिनी )-द्विष अप्रीतौ ॥ अप्रीतिः शत्रुता । ष्टुत्वम् । द्वेष्टि । द्विष्टे । द्विष्यात् । द्विषीत । द्विष्टाम् । हौ ष्टुत्वम् । झभे जबा इति डत्वम् । द्विड्ढि । द्वेषाणि । द्वेषै । दिद्विषीत । द्विष्टाम् । हौ ष्टुत्वम् । झभे जबा इति डत्वम् । द्विड्ढि । द्वेषाणि । द्वेषै । दि-

द्विषीत । द्विष्टाम् । हौ ष्टुत्वम् । झभे जबा इति डत्वम् । द्विड्ढि । द्वेषाणि । द्वेषै । दिस्योरिति दिप्सिपोर्लोपः । वावसाने इति वा टः । अद्वेट्-अद्वेड् । आदन्ताद्विष इत्यन उस् वा । अद्विषुः-अद्विषन् । आति तु अद्विष्ट । दिद्वेष । दिद्विषे । द्विष्यात् । षढोरिति कः षत्वं च । द्विक्षीष्ट । द्वेष्टा । द्वेक्ष्यति । द्वेक्ष्यते । अद्वेक्ष्यत् । अद्वेक्ष्यत । हशषान्तादिति सक् । अद्विक्षत् । अद्विक्षत । आति सको लोप इत्यल्लोपे अद्विक्षाताम् ॥ दुह प्रपूरणे । प्रपूरणं त्यजनम् । दादेर्घ इति घः । तथोरिति तस्य धः । झभे जबा इति गः । दोग्धि । सिपि तु घत्वम् । आदिजबानामिति घः । खसे चपा इति कः षत्वं च । धोक्षि । लङि दिस्योरिति दिप्सिपोर्लोपः । घत्वधत्वकत्वानि । अधोक् । लुङि हशषान्तादिति सक् । घत्वधत्वकत्वषत्वानि । अधुक्षत् । आति तु अधुक्षत । दुहदिहेति सको लुक्पक्षे तन्थासध्वंवहिषु लङ्वत् । घत्वं तथोर्ध इति धत्वम् । झभे जबा इति गः । अदुग्ध । अदुग्धाः । धत्वे अदुग्ध्वम् । अदुह्वहि ॥ दिह उपचये । उपचयो वृद्धिः ॥ लिह आस्वादने । हो ढ इति ढः । तथोर्द्ध इति धः । ष्टुत्वम् । ढि ढो लोप इति ढलोपः लेढि । सिपि ढत्वम् । षढोरिति कः । षत्वम् । लेक्षि । हौ ढत्वं झसादिति हेर्धिः ष्टुत्वम् ढि ढ इति ढलोपपूर्वदीर्घौ । लीढि । लुङि हशषान्तादिति सक् । अलिक्षत् । आति तु अलिक्षत । दुहदिहेति सको लुक्पक्षे ढत्वधत्वष्टुत्वढलोपपूर्वदीर्घाः । अलीढ । आति सक इत्यल्लोपे । अलिक्षाताम, अलिक्षन्त । अलीढाः-अलिक्षथाः । अलोपः ।

अलिक्षाथाम् । अलीढ्वम्–आलिक्षध्वम् । अलिक्षि, अलिह्वहि–अलिक्षावहि, अलिक्षामहि । ओरौ इत्यौ । स्तौति । तुरुस्तुभ्य इतीड्वा । स्तवीति । ब्रुधातोरित्युव् । स्तुवन्ति ॥

**( स्तुसुधुञ्भ्यां पे सेरिट् )** अस्तावीत् । अस्तोष्ट ॥ ब्रूञ् व्यक्तायां वाचि ॥

( सुबोधिनी )–स्तुसुधूञ्भ्यां पे सेरिट् ॥ ष्टुञ् स्तुतौ । षुञ् अभिषवे । धूञ् कम्पने । एषां परस्मैपदस्य सेरिट् आति तु न । धातोर्नामिन इति वृद्धिः । अस्तावीत् । आति तु गुणः । षत्वष्टुत्वे । अस्तोष्ट ॥

**अबादावीप्पिति त्स्मि ॥** ब्रुव ईप्प्रत्ययोबादौ पिति त्स्मि । ब्रवीति, ब्रूतः, ब्रुवन्ति ॥

( सुबोधिनी )–अबादावीप्पिति त्स्मि ॥ ब्रुवः परेषां पितां तिवादीनां चतुर्णां तकारसकारमकारादिप्रत्ययानामीबागमः स्यात् ॥

( तत्त्वदी० )–अबादावीति ॥ अप् आदिः स्थानी यस्य स तथा अब्लुक् तेन लुग्विषय इत्यर्थः । त्स्मीत्यत्र हि सतकारको निर्देशः । दस्य खसे चपा इति तः । तेनाब्रवीदिति सिद्ध्यति ॥

**ब्रुव आहश्च पञ्चानाम् ॥** ब्रुवः परेषां तिबादीनां पञ्चानां णबादयः पञ्चादेशा वा स्युः ब्रुव आहश्च ॥ आह, आहतुः, आहुः ॥

( सुबोधिनी )–ब्रुव आहश्च पञ्चानाम् ॥ ब्रुवः धातोराहादेशः । अकार उच्चारणार्थः । तिवादीनां पञ्चानां क्रमेण णवादयः पञ्चादेशाश्च ॥ अत्र द्विश्चेति द्वित्वं न उक्तार्थ इत्युक्तत्वात् ॥

(तत्त्वदी० )–पञ्चानामिति ॥ आदेशादेशिनोः संख्यासाम्यादादेशा अपि पञ्चैव ग्राह्याः । द्विश्चेत्यत्र परोक्षार्थणादियोगे द्वित्वविधानादेतद्योगे द्वित्वं न ॥

**तस्थे ॥** आहो हस्य तस्थे परे ॥ आत्थ, आहतुः । ब्रूते । ब्रवीतु । अब्रवीत् ॥

( सुबोधिनी )–तस्थे ॥ आह इत्यनुवर्त्तते । तच्च षष्ठ्या विपरिणम्यते । षष्ठीनिर्दिष्टत्वेनान्त्यस्य हस्येत्यर्थः ॥

( तत्त्वदी० )–तस्थ इति ॥ आह इत्यनुवर्त्य तच्च षष्ठ्या विपरिणम्य षष्ठीनिर्दिष्टत्वेनान्त्यस्येत्याह–हस्येति ॥

**( ब्रुवोऽनपि वच् )** उवाच । ऊचे । अवोचत् । अवोचत । आदाथ इः ॥ अवोचेताम्, अवोचन्त । अवोचेथाः। अवोचेथाम्, अवोचध्वम् । अवोचे । अवोचावहि ॥ ऊर्णुञ् आच्छादने ॥

( सुबोधिनी )—ब्रुवोऽनपि वच् ॥ ब्रुवो वचादेशः स्यादचतुर्षु । णबादौ पूर्वस्येति पूर्वस्य संप्रसारणम् । उवाच । यजामिति संप्रसारणम् । ऊचतुः । अस्यतिवक्तीति ङः । ङे वचेरित्युम् । अवोचत् ॥ ऊर्णुञ् आच्छादने । आच्छादनमावरणम् ॥

( ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु ) ऊर्णोति-ऊर्णौति, ऊर्णुतः, ऊर्णुवन्ति । ऊर्णुते । ऊर्णुयात् । ऊर्णुवीत । ऊर्णौतु-ऊर्णोतु । ऊर्णुहि ॥

( सुबोधिनी )—ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु ॥ ओरौ इति नित्ये औत्वे प्राप्ते इति विभाषा ॥ हसादौ किम् । ऊर्णवानि । पिति किम् । ऊर्णुतः । वृद्ध्यभावे गुणः । ऊर्णोति । नुधातोरित्युव् । ऊर्णुवन्ति ॥

( तत्त्वदी० )—ऊर्णोतेरिति ॥ श्तिपा निर्देशो यङ्लुग्व्यावृत्त्यर्थः ॥

( ऊर्णोतेर्गुणो दिस्योर्वृद्धेरपवादः ) और्णोत् । और्णोः ॥

( सुबोधिनी )—ऊर्णोतेर्गुणो दिस्योर्वृद्धेरपवादः ॥ ऊर्णोतेर्गुणः स्यात् दिपि सिपि च ऊर्णोतेर्वा इत्यस्यापवादः ॥

( ऊर्णोतेराम्न

( सुबोधिनी )—ऊर्णोतेराम्न ॥ अनेकस्वरत्वात्प्राप्त आम् अनेन निषिध्यते ॥

स्वरादेः परः ॥ स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति ॥

( सुबोधिनी )—स्वरादेः परः ॥ सस्वर आदिरित्यस्यापवादः । अद्विरुक्तेत्युक्तत्वात् ।

( तत्त्वदी० )—स्वरादेरिति ॥ सस्वर आदिरित्यस्यापवादः ॥ अद्विरुक्त इति ॥ तेन इयाजेत्यादौ नातिप्रसंगः ॥

स्वरात्पराः संयोगादयो नदरा द्विर्न ) ऊर्णुनाव, ऊर्णुनुवतुः ॥

( सुबोधिनी )—स्वरात्पराः संयोगादयो नदरा द्विर्न ॥ संयोगस्यादयः संयोगादयो नकारदकाररकारास्तेषां द्वित्वं नेत्यर्थः ॥ यथा । उन्दी । उन्दिदिषति । इन्दि । इन्दिदिषति । अड्ड । अड्डिडिषति । अर्च । अर्चिचिषति ॥ इयायेत्यादौ नातिप्रसंगः ॥

( तत्त्वदी० )—आद्योच्चारणनकार एव णत्वं तु ष्वर्णे इत्यनेन विधीयते तेन नुशब्दस्य द्वित्वम् ॥

( ऊर्णोतेरिडादिप्रत्ययो वा ङित् ) ऊर्णुनुविथ-ऊर्णुनविथ । ऊर्णुविता-ऊर्णविता । ऊर्णोतेर्वा वृद्धिः सौ पे । पक्षे वा गुणः । और्णावीत, और्णाविष्टाम् । और्णवीत्-और्णुवीत, और्णुविष्टाम् । और्णविष्ट-और्णुविष्ट ॥ इत्यदादयः ॥

( सुबोधिनी )–ऊर्णोतेरिडादिप्रत्ययो वा ङित् ॥ ङित्वपक्षे तु नुधातोरित्युव् । ऊर्णुनुविथ । पक्षे गुणः । ऊर्णुनविथ । और्णावीत्--और्णवीत्–और्णुवीत् ॥ इत्यात्पे ॥ ॥ इति सुबोधिन्यामदादयः ॥

( तत्त्वदी० )–कृतायामिह टीकायां लोकेशकरशर्मणा । गणोऽदादिरगादेष शेषभाषितपृष्ठगः ॥ इति तत्त्वदीपिकायामदादयः ॥ २ ॥

## अथ ह्वादयः ।

**हु दानादनयोः । ह्वादेर्द्विश्च ॥ हु इत्यादेरुत्पन्नस्यापो लुक् धातोश्च द्वित्वम् ॥ जुहोति, जुहुतः ॥**

( सुबोधिनी )–हु दानादनयोः ॥ आदाने चेत्येके । प्रीणनेऽपीति भाष्यम् । दानं चेह प्रक्षेपः ॥ ह्वादेर्द्विश्च ॥ हु आदिर्यस्य स ह्वादिस्तस्य ह्वादेः । अदादेरित्यतो लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते ह्वादेरिति कर्मणि षष्ठी । उच्चारणक्रियायाः कर्मत्वात् । तथा च लुकि सति ह्वादिर्द्विर्द्विवारमुच्चारणीय इति फलितम् । द्विः प्रयोगो द्विर्वचनमिति सिद्धान्तः ॥

( तत्त्वदी० )–हु दानादनयोः ॥ दानमिह प्रक्षेपमात्रम् अग्नौ हविषश्चेति स्वभावाल्लभ्यते अस्य च नित्यपरस्मैपदित्वात् कुत्रचिद्धोष्यत इत्यादिप्रयोगाः प्रामादिका एव । 'स्मराग्नौ जुह्वाना' इत्यत्र न शानः किं तु आनश्प्रत्ययान्तम् ॥ ह्वादेः ॥ हु आदिर्यस्य स तथा तस्य । द्वौ वाराविति द्विः । योग्यतयेहोच्चारणक्रिया लभ्यते । तदावृत्तौ द्विशब्दात्सुः । लुगित्यनुवृत्तं सप्तम्या, विपरिणम्यते । तस्मिन्सतीत्यर्थः ॥

**द्वेः ॥ द्विरुक्तात्परस्यान्तोऽत् ॥ जुह्वति । जुहोषि, जुहुथः, जुहुथ । जुहोमि, जुहुवः, जुहुमः । जुहुयात् ॥**

( सुबोधिनी )–द्वेः ॥ द्वेः किम् । युवन्ति । हुन्वोरिति वः । जुह्वति ॥

( तत्त्वदी० )–द्वेः ॥ द्विर्वचनमस्यास्तीति विग्रहे मत्वर्थीयः इप्रत्ययोऽव्ययस्य तद्धिते यस्वरयोष्टिलोपश्चास्मादेव लिङ्गात् द्विस्तस्मात् । अन्तोऽन्त् इति द्वयमप्यनुवृत्तम् ॥

**( जुहोतेर्हेर्धिः )जुहुधि । अजुहोत् ॥**

( सुबोधिनी )–जुहोतेर्हेर्धिः ॥ जुहोतेः परस्य हेर्धिः स्यात् ॥ लोडुत्तमे तु परत्वाद्गुणः । जुहवानि ॥

**अन उस् ॥ द्विरुक्तादन उस् ॥ उसि गुणः ॥ अजुहवुः । जुहाव ।**

( सुबोधिनी )–अन उस् ॥ द्वेरित्यनुवृत्तम् । परत्वादुसि चेति गुणः । अजुहवुः ॥

( तत्त्वदी० )–अन उस् ॥ द्वेरित्यनुवृत्तेराह–द्विरुक्तादिति ॥

**( भीह्रीभृहुवामाम्वा स च लुग्वत् )** जुहवांचकार। ये। हूयात्। होता। होष्यति। अहौषीत्॥ ञिभी भये। बिभेति॥

( सुबोधिनी )—भीह्रीभृहुवामाम्वा स च लुग्वत्॥ एभ्यश्चतुर्भ्यो वाम् प्रत्ययो भवति लिटि स चाम् लुग्वत्॥ कार्यातिदेशोऽयम्। तेन लुकि सति यत्कार्यं द्वित्वादि तदामि परेऽपि भवतीत्यर्थः। जुहवांचकार। पक्षे जुहाव।ये इति दीर्घः। हूयात्। होता। होष्यति। अहोष्यत्। धातोर्नामिन इति वृद्धिः। अहौषीत्॥

**( ङिति हसे भीहाकोरिद्वा )** बिभीतः–बिभितः, बिभ्यति। बिभीयात्–बिभियात्। बिभेतु–बिभीतात्–बिभितात्। अबिभयुः। बिभयांचकार–बिभाय। अभैषीत्॥ ह्री लज्जायाम्। जिह्रेति। अजिह्रयुः। जिह्रयांचकार–जिह्राय। ह्रीयात्। ह्रेता। अह्रैषीत्॥ पॄ पालनपूरणयोः॥

( सुबोधिनी )—ङिति हसे भीहाकोरिद्वा॥ अनयोः स्वरस्य वेकारो भवति ङिति हसे परे॥

**ऋप्रोरिः पूर्वस्य॥** ऋप्रोः पूर्वस्यात इत् लुकि॥ पिपर्ति॥

( सुबोधिनी )—ऋप्रोरिः पूर्वस्य॥ ऋ गतौ। पृ पालनादौ। गुणे कृते। पिपर्ति॥

**पोरुर्॥** पवर्गात् वकाराच्च ॠत उर् अगुणवृद्धिविषये। य्वोर्वि हसे। पिपूर्तः, पिपुरति। पिपूर्यात्। पिपर्तु–पिपूर्तात्, पिपूर्ताम्, पिपुरतु। दिस्योर्हसात्। अपिपः। पपार, पपरतुः। पपरिथ। पूर्यात्। परिता–परीता। परिष्यति–परीष्यति। अपारीत्॥ पृ पालनपूरणयोः। पिपर्ति, पिपृतः, पिप्रति। पिपृयात्। पिपर्तु–पिपृतात्, पिपृताम्, पिप्रतु। पिपृहि–पिपृतात्। पिपृतम्, पिपृत। पिपराणि, पिपराव, पिपराम। अपिपः, अपिपृताम्। पपार, पप्रतुः, पप्रुः। पपर्थ। प्रियात्। पर्ता। परिष्यति। अपरिष्यत्। अपार्षीत्, अपार्ष्टाम्॥ ओहाक् त्यागे। जहाति॥

( सुबोधिनी )—पोरुर्॥ पवर्गात् वकाराद्युत्तरस्य ॠत उर् अगुणवृद्धिविषये॥ यथा वुवूर्षति। य्वोर्वि हसे इति दीर्घः। पिपूर्तः। द्वेरित्यन्तोऽत्। पिपुरति। दिस्योरिति दिपूसिपोर्लुक्। अपिपः। उसि तु गुणः। अपिपरुः। ऋसंयोगादित्यकित्वाद्गुणः। पपरतुः। वृङ्वृञिति वेटो दीर्घः। परिता–परीता॥

(तत्त्वदी०)—पोरुर्॥ धात्ववयवात्पवर्गादिति बोध्यम्। तेन समीर्णमित्यादौ नातिप्रसंगः॥

द्वेस्तौ ॥ द्विरुक्तस्य धातोरातो लोपो ङिति स्वरे ईकारश्च ङिति हसे ॥ जहितः-जहीतः। जहति ॥ (हाको यादादावालोपः) जह्यात् ॥

( सुबोधिनी )-द्वेस्तौ ॥ द्वौ वाराविति द्विरुच्चारणे सुप्रत्ययः । द्विरकारि इति ञिर्डित्करणे इति ञिः । ञौ स्वन्तस्य टिलोपः । औणादिके इप्रत्यये ञिलोपः । अत्रा-नुवृत्त्यैव ईलोपयोर्लाभेऽपि अनन्तरत्वादीकारस्यैव ग्रहणं मा भूदित्येतदर्थं तावित्युक्तम् ॥ ननु तर्हि द्वेश्चेति पाठ्यम् अनन्तरत्वादीश्चालोपोऽनुवर्तताम् । एवं ङिति हसे लोपः । ङिति स्वरे ईरिति विपर्ययस्यापि संभवात् । तावित्युक्ते तु नातः ईहसे अनयोर्यादृशौ दृष्टौ तावेवाऽत्र स्त इति न दोषः । पक्षे भीहाकोरिति इत्वम् । जहितः । हाको यादा-दावालोपः ॥

( तत्त्वदी० )-द्वेस्तौ ॥ द्वेरित्यस्य पूर्ववत्प्रक्रिया । अनुवृत्त्यैव ईलोपयोर्लाभेऽपि अन्तरत्वा-दीकारस्यैव ग्रहणं मा भूदित्येतदर्थं तावित्युक्तम् ॥ ओर्म्योरितो लोपः । ई हसे इत्यत ईकारस्तस्य हसे इत्यनेन योगाद्धसे ईकारः । पारिशेषात्स्वरे लोपः ॥

ईर्वा हौ ॥ जहातेर्हौ परे इकार ईकारश्च वा । जहिहि-जहीहि-जहाहि । अजहात्, अजहिताम्-अजहीताम्, अजहुः । जहौ । दादेरे । हेयात् । अहासीत् ॥ ऋ गतौ । असवर्णे स्वरे इय् ॥ इयर्ति, इयृतः, इयृति । इयृयात् । इयर्तु । ऐयः, ऐयृताम्, ऐयरुः । आर, आरतुः, आरुः । अत्यर्तिव्ययतीनामितीट् ॥ आरिथ । आरत् ॥ सृ गतौ । ससर्ति । ससर्थ । स्रियात् । असरत् ॥ इति पम् ॥

( सुबोधिनी )-ईर्वा हौ ॥ जहातेर्हौ परे इत्वमीत्वमात्वं च भवति ॥ अत एव भट्टिः प्रायुङ्क्त । 'जहिहि जहीहि जहाहि रामभार्याम्' इति ॥ दादेरित्येत्वम् । हेयात् । यमि-रमिनमातामितीट्सकौ । अहासीत् ॥ ऋप्रोरिति पूर्वस्येत्वम् । असवर्णे स्वरे इतीय् । इयात । लङि अडागमो दिस्योरिति दिप्सिपोर्लोपः । ऐयः । उसिं तु गुणः । ऐयरुः । अत्यर्तिव्ययतीनामिति थपि नित्यमिट् । आरिथ । आशिषि गुणोऽर्त्तीति गुणः । अर्यात् । हन्नृत इतीट् । अरिष्यति । सर्तिशास्त्यर्तिभ्य इति ङः । ऋवर्णदृशोरिति गुणः । आरत्, आरताम्, आरन् ॥ इति सुबोधिन्यां परस्मैपदम् ॥

( तत्त्वदी० )-ईर्वा हौ ॥ ई इरिति छेदः, तयोरभावपक्षे आकारः स्थित एव ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । अगमह्वादिमध्यस्थपरस्मैपदसाधनम् ॥

इति तत्त्वदीपिकायां पम् ॥

**ओहाङ् गतौ। भृञां लुकि॥** डुभृञ्हाङ्माङां पूर्वस्यात इत् लुकि॥ जिहीते, जिहाते, जिहते। जहे। अहास्त॥ माङ् माने। मिमीते। ममे। अमास्त॥ इत्यात्॥

( सुबोधिनी )—भृञां लुकि॥ बहुवचनेन डुभृञ्हाङ्माङामिति त्रयाणां ग्रहणम्। द्वेरित्यन्तोऽत्। जिहते। आतोऽनपीत्यालोपः। जहे, जहाते॥ इति सुबोधिन्यामात्मनेपदम्॥

( तत्त्वदी० )—भृञामिति॥ कपिञ्जलाधिकरणन्यायेन धातुत्रयमेव लभ्यत इत्याह—डुभृञ्हाङ्माङामिति॥

कृतायामिह टीकायां लोकेशकरशर्मणा। अगमद्ध्वादिमध्यस्थमात्मनेपदसाधनम्॥
इति तत्त्वदीपिकायामात्मनेपदम्॥

**डुभृञ् धारणपोषणयोः।** बिभर्ति, बिभृतः, बिभ्रति। बिभृयात्। बिभर्तु। अबिभः। बिभरांचकार। बभर्थ। बभृव। बभ्रे। बभृम। बभृढ्वे। भृषीष्ट। अभार्षीत्। अभृत॥ **डुदाञ् दाने।** ददाति॥

( सुबोधिनी )—डुभृञ् धारणपोषणयोः॥ ड्वितस्त्रिमक् इति त्रिमक्। भृत्रिमम्। भृञां लुकि इति पूर्वस्येत्वम्। बिभर्ति। बिभृते। बिभृयात्। बिभ्रीत। बिभर्तु, बिभृताम्। दिस्योरिति दिप्सिपोर्लोपः। अबिभः। उसि तु गुणः। अबिभरुः। अबिभृत। भीहीभृहुवामामिति वाम्। बिभरांचकार। बिभरांचक्रे। पक्षे बभार। बभ्रे। यादादौ इति रिङ्। भ्रियात्। उरिति न गुणः। भृषीष्ट। भर्त्ता। हन्नृत इतीड्। भरिष्यते। अभरिष्यत्। अभरिष्यत। धातोर्नामिन इति वृद्धिः। अभार्षीत्। लोपो ह्रस्वादिति सिलोपः। अभृत॥

( तत्त्वदी० )—डुभृञिति। ड्वितस्त्रिमगर्थो डुः॥

**दादेः॥** द्विरुक्तानामपिद्धाधामातो लोपो ङिति॥ दत्तः, ददति। दत्ते। ददातु॥

( सुबोधिनी )—दादेः॥ द्वेरित्यनुवृत्तम्। द्वेस्तौ इत्यस्यापवादो येन नाप्राप्तिन्यायात्॥

( तत्त्वदी० )—दादेरिति॥ द्वेस्तावित्यस्यापवादो येन नाप्राप्तिन्यायात्॥

**दां हौ॥** अपिद्धाधामेत्वं पूर्वस्य च लोपो हौ॥ देहि। अददात्। ददौ। ददिथ-ददाथ। देयात्। अदात्। अदित, अदिषाताम्॥

**डुधाञ् धारणपोषणयोः।** दधाति॥

( सुबोधिनी )—दां हौ॥ बहुवचनेन धाञो ग्रहणम्। लिटि आतो णवित्यौकारः। ददौ। आतोऽनपीत्यालोपः। ददे। दादेरित्येत्वम्। देयात्। दादेः पे इति सेर्लुक्।

अदात् । आति तु अपिह्वाधास्थामितीत्वम् । लोपो ह्रस्वादिति सिलोपः । अदित ॥ डुधाञ् धारणपोषणयोः । दानेऽपीत्येके ॥

( तत्त्वदी० )—दामिति ॥ बहुवचनेन दारूपाणां ग्रहणं धाग्रहणं च ॥

**पूर्वस्य ङिति झसे धः ॥** धाञः पूर्वस्य दकारस्य धो भवति ङिति झसे परे ॥ धत्तः, दधति । धत्ते । धेहि । अधात् । धेयात् । अधित, अधिषाताम् ॥ णिजिर् शौचपोषणयोः ॥

( सुबोधिनी )—पूर्वस्य ङिति झसे धः ॥ धाञ्धातोरेवेत्यर्थः ॥ ङिति झसे किम् । दधाति । दधाति । दादेरित्यालोपे तथोर्ध इति धत्वं न दधातेर्नेत्युक्तत्वात् । धत्तः । धत्ते । दादेरित्यालोपः । दध्यात् । दधीत । दधातु । धत्ताम् । अदधात् । अधत्त । दधौ । दधे । धेयात् । धासीष्ट । धाता । धास्यति । धास्यते । अधास्यत् । अधास्यत । दादेः पे इति सिलोपे । अधात् । अपिह्वास्थामितीत्वम् । अधित ॥

( तत्त्वदी० )—धत्त इति ॥ तथोर्द्ध इत्यत्र वावसान इत्यतो वानुवृत्तेर्व्यवस्थया तस्य धत्वाभावः ॥

**निजां गुणः ॥** णिजिविजिविषां पूर्वस्य गुणो लुकि ॥ नेनेक्ति, नेनिक्तः, नेनिजति । नेनेक्षि । नेनिक्ते । नेनिज्यात् । नेनेक्तु । नेनिग्धि ॥

( सुबोधिनी )—निजां गुणः ॥ बहुवचनमाद्यर्थम् । बहुवचनेन त्रयाणां ग्रहणम् । णिजिर् शौचपोषणयोः । विजिर् पृथग्भावे । विष्लृ व्याप्तौ । एषां पूर्वस्य गुणो लुकि ॥

**द्वेः स्वरेपि नोपधागुणः ॥** द्विरुक्तस्य धातो रब्विषये स्वरे परे उपधाया गुणो न ॥ नेनिजानि । अनेनेक्-अनेनेग् । निनिजिषे । निनेज । निनिजे । निक्षीष्ट । अनिजत्-अनैक्षीत्, अनैक्ताम् । अनिक्त ॥ विजिर् । पृथग्भावे । वेवेक्ति । विवेजिथ । विक्षीष्ट । अविजत्-अवैक्षीत् । अविक्त ॥ विष्लृ व्याप्तौ । वेवेष्टि । विविषीध्वे । विक्षीष्ट । अविषत् ॥ तनि ह्रसषान्तात्सक् । अविक्षत , अविक्षाताम्, अविक्षन्त ॥ इत्युभयपदप्रक्रिया ॥ इति ह्वादयः ॥

( सुबोधिनी )—द्वेः स्वरेपि नोपधागुणः ॥ द्विरुक्तस्य धातोरुपधाया गुणो न चतुर्षु पिति स्वरे ॥ द्विरुक्तस्य किम् । द्वेषाणि । स्वरे किम् ः। वेवेष्टि ॥ चतुर्षु किम् । निनिजे ॥ नेनेक्ति । नेनिक्ते । नेनिज्यात् । नेनिजीत । नेनेक्तु । नेनिक्ताम् । दिस्योरिति दिप्सिपोर्लोपः । अनेनेक । अन ऊसि अनेनिजुः । अनेनिक्त । निनेज । निनिजे । निज्यात् । सिस्योरिति न गुणः । निक्षीष्ट । नेक्ता । नेक्ष्यति । नेक्ष्यते । अनेक्ष्यत् । अनेक्ष्यत । इरितो वेति वा ङः । अनिजत् । अनिटोनामीति वृद्धिः । अनैक्षीत् ।

आति तु । झसादिति सिलोपः । अनिक्त, अनिक्षाताम् ॥ विजिर् पृथग्भावे । विवेजिथ । अत्र विजेरिडादिप्रत्यय इति ङित्वं न । ओविजीभयचलनयोरित्यस्यैव तत्र ग्रहणात् । णिजिविजी रुधादावपि ॥ विष्लृ व्याप्तौ । व्याप्तिः कात्स्न्यम् । लित्पुषादेरिति ङः । अविषत् । आति तु । हशषान्तादिति सक् । षढोरिति कः । अविक्षत । आति सको लोपः स्वरे इति अल्लोपः । अविक्षाताम्, अविक्षन्त ॥ इत्यात्पे ॥ ॥ इति सुबोधिन्यां ह्वादयः ॥

(तत्त्वदी०)—कृतायामिह टीकायां लोकेशकरशर्मणा । संक्षिप्तो बालबोधार्थं जुहोत्यादिगणोऽगमत् ॥

इति तत्त्वबोधिन्यां ह्वादयः ॥ ३ ॥

---

# अथ दिवादयः ।

**दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ दिवादेर्यः ॥ कर्तरि चतुर्षु । अपोऽपवादः ॥ य्वोर्वि हसे ॥ दीव्यति । दीव्येत् । दिदेव । दीव्यात् । अदेवीत् ॥ षिवु तन्तुसंताने । सीव्यति । ( सिवादेरड्व्यवाये वा षः ) न्यषेवीत् । न्यसेवीत् ॥ स्रिवु गतिशोषणयोः ॥ स्रीव्यति । सिस्रेव ॥ ष्ठिवु निरसने । ष्ठीव्यति ॥ ष्णुसु अदनादानदर्शनेषु । सुष्णोस ॥ ष्णसु निरसने । स्नस्यति ॥ क्नसु कौटिल्ये दीप्तौ च । चक्नसिथ । अक्नासीत्—अक्नसीत् ॥ व्युषु प्लुषु दाहे । वुव्योष ॥ नृती गात्रप्रक्षेपे । नृत्यति । ननर्त ॥**

(सुबोधिनी)—दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ उदित्करणं क्त्वाप्रत्यये इड्विकल्पार्थं क्तक्तवत्वोरनिडर्थं च । क्ङिति झसे कौ ञमे चेत्यूः । द्यूत्वा—देवित्वा । द्यूतेन दीव्यन्ति माणवकाः क्रीडन्तीत्यर्थः । शत्रुं दीव्यति विजिगीषतीत्यर्थः । कान्तिरिच्छा द्युतेः पृथग्ग्रहणात् । दिवादेर्यः । दिव आदिर्यस्य स दिवादिस्तस्माद्यप्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु परतः । य्वोरिति दीर्घः । दीव्यति ॥ षिवु तन्तुसंताने । आदेः ष्णः स्न इति सः । सीव्यति । सिवादेरड्व्यवाये वा षः । उपसर्गस्थान्निमित्तात्परस्य सिवादेः सस्याड्व्यवधाने वा षः स्यात् ॥ प्रादेश्चेत्यत्र सिवादिरुक्तः ॥ नृती गात्रविक्षेपे । नर्तने इत्यर्थः । ईदित्करणमादीदित इत्यनेन क्तक्तवत्वोरिण्निषेधार्थम् । यद्यपि नृतदृदेतीटो विकल्पितत्वात् क्वचिद्वेट् इत्यनेनैवेष्टं सिद्ध्यति तथापि क्वचिद्वेट् इति सूत्रस्यानित्यत्वज्ञापनार्थमीदित्करणम् । तेन धावु गतिशुद्ध्योरित्यस्मात् क्तप्रत्यये इटि च 'धावितमिभराजधिया' इत्यादि सिद्धम् ॥

( तत्त्वदी० )–**दिवु** ॥ व्यवहारः क्रयादिः । उकारः क्त्वाप्रत्यये इड्विकल्पार्थः ॥ **दिवादेर्यः** दिव् आदिर्यस्य स तथा तस्मात् ॥ **अपोऽपवाद** इति ॥ अपो गणविशेषाकांक्षाभावात्प्राप्तेः ॥ **दीव्यतीति** ॥ यप्रत्ययस्य ङित्त्वाद्गुणो न ॥

**( नृततृदछृदचृतकृद्भ्योऽसेः सादेरिड्वा )** नर्तिष्यति–नर्त्स्यति । अनर्तीत् ॥ त्रसी उद्वेगे । भ्राशभ्लाशेति वा यः । त्रस्यति–त्रसति । तत्रास, तत्रसतुः ॥ कुथ पूतीभावे । कुथ्यति । चुकोथ–चुकोथिथ ॥ पुथ हिंसायाम् । पुथ्यति । अपोथीत् ॥ गुध परिवेष्टने । गुध्यति अगोधीत् ॥ क्षिप प्रेरणे । क्षिप्यति । क्षेप्ता । अक्षैप्सीत् ॥ पुष्प विकसने । पुष्प्यति ॥ पुपुष्प ॥ तिम् तीम् ष्टिम् ष्टीम् आर्द्रीभावे । तिम्यति । तीम्यति । तितिम । तिष्टीम ॥ व्रीड लज्जायाम् । व्रीड्यति । विव्रीड ॥ इष गतौ । इष्यति । इयेष । ईषतुः । एषिता । ऐषीत् ॥ षह षुह तृप्तौ । सह्यति । ससाह, सेहतुः, सेहुः । असहीत् । सुह्यति ॥ जॄषिर् झॄष् वयोहानौ । जीर्यति । जजरतुः–जेरतुः । जीर्यात् । जरिता–जरीता । ऋवर्णदृशोरित्यनेन गुणः । अजरत्–अजारीत् । झीर्यति । जझरतुः । अझारीत् ॥ शो तनूकरणे ॥

( सुबोधिनी )–नृततृदछृदचृतकृद्भ्योऽसेः सादेरिड्वा ॥ एभ्यः परस्य सिभिन्नस्य सादेः प्रत्ययस्येड्वा स्यात् ॥ उतृदिर् हिंसानादरयोः । उछृदिर् दीप्तिदेवनयोः । कृती छेदने । असेरित्युक्तत्वादिह नित्यमिट् । अनर्तीत् । सप्रत्यये निनर्तिषति–निनृत्सति । भ्राशभ्लाशेति वा यः । त्रस्यति–त्रसति । फणराजृ इत्येत्वपूर्वलोपौ । त्रेसतुः । अतो हसादेरिति वा वृद्धिः । अत्रासीत्–अत्रसीत् ॥ कुथ पूतीभावे । पूतीभावः पवित्रभवनम् । कुथ्यति भूमिः पवित्रीभवतीत्यर्थः । पुष्प विकसने । पान्तोऽयम् । शतृप्रत्यये पुष्प्यन् । पचाद्यप्रत्यये पुष्पम् । संज्ञायां कप्रत्यये पुष्पकम् ॥ व्रीड चोदने लज्जाया च । चोदनं प्रेरणम् । गुरोर्हसादित्यङ्प्रत्यये आवत इत्याप् । व्रीडा । घञि तु व्रीडः । अत एव 'वीडादिवाभ्यासगतैर्विलिल्ये' इति माघः ॥ 'व्रीडमावहति मे स संप्रति' इति कालिदासः ॥ षह षुह तृप्तौ । तृप्तिस्तर्पणम् । इषुसहेतीड्विकल्पस्त्वस्य न भवति सहेत्यपा निर्देशात् । नपुंसके भावे क्तप्रत्यये सुहितं तृप्तिः ॥ जॄषिर् झॄष् वयोहानौ । षित्वात् षिद्भिदामित्यङ्प्रत्यये जरा । ऋत इर इतीर् । य्वोरिति दीर्घः । जीर्यति । ऋसंयोगाण्णादिरित्यकित्त्वाद्गुणे कृते शशददेति गुणशब्देन भावितस्य निषेधाल्लोपः पचामित्यस्याप्रवृत्तौ फणराजृ इत्येत्वपूर्वलोपविकल्पः । जेरतुः–जजरतुः । वृङ्वृञृदन्तानामिति वा दीर्घः । जरिता–जरीता । इरितो वेति वा ङः । ऋवर्णदृशोरिति गुणः । अजरत्, पक्षे णिन्पे इति णित्वाद्धातोर्नामिन इति वृद्धिः।अजारीत्॥

( तत्त्वदी० )–नृतेति॥ उतृदिर् हिंसानादरयोः। उच्छृदिर् दीप्तिदेवनयोः। त्रस्यति। भ्राशेति वा यः। पक्षेऽङ्। पुष्प विकसने। पान्तः। 'तया नभः पुष्प्यतु कोरकेण'' इति श्रीहर्षः॥ व्रीड॥ 'व्रीडादिवाभ्यासगतैर्विलिल्ये' इत्यत्र घञ्। 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यत्र गुरोश्चेत्यः॥ षह॥ अत्रेषुसहेतीड्विकल्पः कस्यचिन्मते न भवति अवन्तनिर्देशाद्दैवादिकस्यैव तत्र ग्रहणात्। महान्तस्तु विकल्पं मन्यन्ते अकारस्योच्चारणार्थत्वात्॥ जृषिर्॥ षकारो जरेत्यत्राङर्थः। अजरत्। ऋवर्णदृशोरिति गुणः॥

**य्योः॥ यप्रत्यये परे धातोरोतो लोपः॥ श्यति। शशौ। शाता। अशात्–अशासीत्॥ छो छेदने। छ्यति। अच्छात्–अच्छासीत्॥ षो अन्तकर्मणि। स्यति। सेयात्। असात्–असासीत्॥ दो अवखण्डने। द्यति। देयात्। अदात्॥ राध साध संसिद्धौ॥**

( सुबोधिनी )–य्योः॥ यि ओरिति च्छेदः। धातोरोतो लोपः स्यात् दिवादिविकरणे ये परे॥ तेन लव्यमित्यादौ न। शाछेति वा सेर्लुक्। अशात्। लुगभावे यमिरमीतीट्सकौ। अशासीत्॥ षोऽन्तकर्मणि। अन्तकर्म नाशः। दादेरे इत्येत्वम्। सेयात्। 'रावव स्य शरैर्घोरैर्घोरं रावणमाहवे' इत्यत्र राघवेति संबोधनम्। स्येति लोटो मध्यमस्यैकवचनान्तम्॥ दादेरित्येत्वम्। देयात्। उपसर्गस्थान्निमित्तान्नेरिति णत्वम्। प्रणिदाता। दादेः पे इति सिलुक्। अदात्॥

( तत्त्वदी० )–य्योः॥ यि ओरिति च्छेदः। विकरणप्रकरणत्वाद् दिवादेर्य इति विहित एव गृह्यते न त्वन्यः। तेन लव्यमित्यादौ नातिप्रसंगः॥ षो॥ अन्तकर्म नाशः॥

**( राधोऽकर्मकादेव यः ) राध्यति। रराधिथ। राद्धा। रात्स्यति। अरात्सीत्॥ व्यध ताडने। ग्रहां ङिति च। विध्यति। विव्याध। विविधतुः। विव्यधिथ–विव्यद्ध। व्यद्धा। अव्यात्सीत्॥ पुष पुष्टौ। पुष्यति। पुपोषिथ। पोष्टा। पोक्ष्यति। पुषादित्वात् ङः। अपुषत्॥ शुष शोषणे। शोष्टा। शोक्ष्यति। अशुषत्॥ तुष तुष्टौ। तोष्टा। तोक्ष्यति। अतुषत्॥ दुष वैकृत्ये। दोष्टा। अदुषत्॥ श्लिष आलिङ्गने। श्लेष्टा॥**

( सुबोधिनी )–राधोऽकर्मकादेव यः॥ अकर्मकाद्राधेर्यप्रत्ययः स्यात् सकर्मकात्तु न॥ 'यन्मह्यमपराध्यति' द्रुह्यतीत्यर्थः। 'विराध्यन्तं क्षमेत कः' द्रुह्यन्तमित्यर्थः। राध्यत्योदनः सिध्यतीत्यर्थः॥ अकर्मकात् किम्। शत्रुमपराध्नोति हिनस्तीत्यर्थः। राध संसिद्धौ हिंसायां च स्वादिश्चुरादिश्चायम्। राधो हिंसायामित्यनेनैत्वपूर्वलोपाविह न हिंसार्थकस्य सकर्मकतया दैवादिकत्वाऽयोगात्॥ ग्रहामिति संप्रसारणम्। विध्यति। लिपुषादेरिति ङः। अपुषत्॥ षढोरिति कत्वं षत्वं च। शोक्ष्यति॥

**( आलिङ्गने श्लिषेः सक् ङाऽपवादः )** अश्लिक्षत्कन्यां चैत्रः । अनालिङ्गने तु समाश्लिषज्जतु काष्ठम् ॥ ष्विदा गात्रप्रक्षरणे । स्वेत्ता । अस्विदत् ॥ क्रुध क्रोधे क्रोद्धा । अक्रुधत् ॥ क्षुध बुभुक्षायाम् । क्षोद्धा । अक्षुधत् ॥ शुध शौचे । शोद्धा । अशुधत् ॥ षिधु संराद्धौ । सेद्धा । असिधत् ॥ रध हिंसायां च । रध्यति । ररन्ध, ररन्धतुः । ररन्धिथ–ररद्ध । ररन्धिव–रेध्व । ररन्धिम–रेध्म ॥

( सुबोधिनी )–आलिङ्गने श्लिषेः सक् ङाऽपवादः॥ अनिटः श्लिषेः सक् प्रत्ययः स्यात् आलिङ्गनेऽर्थे । नान्यत्र । प्राणिकर्तृकमुपगूहनमालिङ्गनम् । लित्पुषादेरित्यस्यापवादः ॥ अनिटः किम् । श्लिष दाहे इति सेटो भौवादिकस्य मा भूत् । अश्लेषीत् । हशषान्तादिति सकि सिद्धे पुनः सको विधानं नियमार्थम् । तेन कर्मणि आतांप्रभृतिषु परतोऽनालिङ्गने सिरेव न तु सक् । यथा इण्तनीतीण् । अश्लेषि, अश्लिक्षाताम्, अश्लिक्षत । अश्लिष्ठाः, अश्लिक्षाथाम्, अश्लिड्ढ्वम् । अश्लिक्षि, अश्लिक्ष्वहि, अश्लिक्ष्महि॥ ष्विदा गात्रप्रक्षरणे । गात्रप्रक्षरणं घर्मस्रुतिः । ञीदिति न्यासकारः । नेति हरदत्तः । ञीतां तक् वर्तमानेऽपीति तक् । आदीदित इति नेट् । स्विन्नः । भावे कर्तरि चादित इतीड् वा । स्विन्नम्–स्वेदितम् ॥ क्षुध बुभुक्षायाम् । भोक्तुमिच्छा बुभुक्षा । अनिडयम् । कथं तर्हि क्षुधित इति । क्विबन्तादितो जातार्थे इतीतप्रत्यय इति माधवः ॥ वस्तुतस्तु वसिक्षुध्योरिडिति वक्ष्यते ॥ षिधु संराद्धौ । संराद्धिर्निष्पत्तिः । उदितः क्त्वो वेति क्त्वाप्रत्यये इड्विकल्पः । सिद्ध्वा । इट्पक्षे इवर्णोवर्णोपधाद्धसादेरिति वा कित्वम् । सेधित्वा–सिधित्वा ॥ रधिजभोः स्वरे इति नुम् । ररन्ध । नुमि कृते संयोगात् परत्वेनाकित्वात् नलोपो न । ररन्धतुः । स्वरति सूतीति सूत्रे रधाद्यष्टकोऽन्तर्गणो ज्ञेयः । तेन गणनिर्दिष्टत्वाद्यङ्लुकि न वेट् । राराधिता । स्वरतीति वेट् । ररन्धिथ–ररद्ध । लोपः पचामित्येत्वपूर्वलोपौ । रेध्व । इट्पक्षे ररन्धिव ॥

( तत्त्वदी० )–अनालिङ्गने त्विति ॥ आलिङ्गनं प्राणिकर्तृकमुपगूहनम् ॥ षिधु ॥ उदितो वेति वेट्क्त्वार्थ उः । संराद्धिर्निष्पत्तिः ॥ रध हिंसायां चेति । चात्संराद्धावित्यर्थः ॥ ररन्धिवेति ॥ नित्यत्वान्नुमि संयोगात् कित्त्वाभावे नलोपो न ॥

**( लिड्वर्जिते इटि रधेर्नुम्न )** रधिता–रद्धा । रधिष्यति–रत्स्यति । अरधत् ॥ णश् अदर्शने । नश्यति । ननाश । नेशतुः । नेशिथ ॥

( सुबोधिनी )–लिड्वर्जिते इटि रधेर्नुम्न ॥ रधेर्नुम्न न स्यात् इटि परे । लिट्संबन्धिनीटि तु नुम् स्यादेव ॥ इटि किम् । रन्धकः ॥ लित्पुषादेरिति ङः । नुम् । नो लोप इति नस्य लोपः । अरधत् ॥

( मस्जिनशोर्झले नुम् ) ननंष्ठ । नेशिव–नेश्व, नेशिम–नेश्म । नशिता–नंष्टा । नशिष्यति–नङ्क्ष्यति । अनशत् ॥ तृप प्रीणने । तृप्यति । ततर्पिथ–तत्रप्थ–ततर्थ । तर्पिता–त्रप्ता–तर्प्ता । तर्पिष्यति–त्रप्स्यति–तर्प्स्यति । अतृपत्–अतर्पीत–अत्राप्सीत्–अतार्प्सीत् ॥ दृप हर्षगर्वयोः । दृप्यति । अद्राप्सीत्–अदृपत् ॥ द्रुह जिघांसायाम् । दुद्रोहिथ–दुद्रोढ–दुद्रोग्ध । दुद्रुहिव–दुद्रुह्व, दुद्रुहिम–दुद्रुह्म । द्रोहिता–द्रोग्धा–द्रोढा । द्रोहिष्यति–ध्रोक्ष्यति । अद्रुहत् ॥ मुह वैचित्ये । मुह्यति । मुमोहिथ–मुमोढ–मुमोग्ध ॥ ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोहिथ–सुष्णोढ–सुष्णोग्ध ॥ ष्णिह प्रीतौ । सिष्णेहिथ–सिष्णेढ–सिष्णेग्ध ॥ शमु उपशमे ॥

(सुबोधिनी)–मस्जिनशोर्झले नुम् ॥ अनयोर्नुम् स्यात् झले परे ॥ टुमस्जे शुद्धौ । णश् अदर्शने । छशषेति षत्वम् । ष्टुत्वम् । ननंष्ठ । नशेरिति कत्वमिह कर्तुं न शक्यं पदान्त एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्यति ॥ तृप् प्रीणने। प्रीणनं तृप्तिस्तर्पणं च । 'नाग्निस्तृप्यति काष्ठानाम्' । करणस्य संबन्धविवक्षायां षष्ठी । पितॄन् अतार्प्सीत् इत्युभयत्र दर्शनात् । स्वरतीति वेट् । ततर्पिथ । कृशादीनामिति वा रः । ततर्प्थ–तत्रप्थ । कृषस्पृशमृशतृपदृपामिति वा सिः । अतर्पीत् । इडभावे अनिटो नामिवत इति वृद्धिः । अतार्प्सीत् । रत्वे अत उपधाया इति पुनर्वृद्धिः । अत्राप्सीत् । अतृपत् ॥ दृप हर्षमोहनयोः । मोहनं गर्वः ॥ मुह वैचित्ये । वैचित्यमविवेकः । द्रुहादेरिति घत्वढत्वे । तथोर्द्ध इति थस्य धत्वम् । झबे इति गः । मुमोग्ध । ष्टुत्वे ढि ढ इति ढलोपः । मुमोढ–मुमोहिथ । लटि घत्वढत्वयोस्तुल्यं रूपम् । खसे इति षढोरिति च कत्वविधानात् । मोक्ष्यते ॥ शमु उपशमे । उदित्त्वात् क्त्वाप्रत्यये वेट् । शमित्वा । शान्त्वा । क्वचिद्वेद इति क्तक्तवतोरनिट् । शान्तः ॥

(तत्त्वदी०)–नंष्टेति ॥ अत्र नशः को वेति पक्षे ककारोऽस्त्विति न भ्रमितव्यं तस्य पदान्त एव विधानात् । स्याद्यधिकाराच्च ॥

शमां दीर्घः ॥ शमादीनामष्टानां दीर्घः कर्तरि ये ॥ शाम्यति । शमिता ॥ अशमत् ॥ तमु काङ्क्षायाम् । ताम्यति । ततास । तेमतुः । अतमत् ॥ दमु शमनायाम् । दाम्यति । देमतुः । अदमत् ॥ श्रमु तपसि खेदे च । श्राम्यति । शश्राम, शश्रमतुः । अश्रमत् ॥ भ्रमु अनवस्थाने । भ्राम्यति–भ्रमति । बभ्राम । भ्रेमतुः–बभ्रमतुः । अभ्रमत् ॥ क्षमू सहने । क्षाम्यति । चक्षमिथ–चक्षन्थ । अक्षमत् ॥ क्लमु ग्लानौ । भ्राशभ्लाशेति यो वा । क्लाम्यति । ष्ठिवुक्लम्वाचमां

दीर्घोऽपि । क्लामति ॥ मदी हर्षे । माद्यति ॥ मेदिथ । अमदत् ॥ शमादयोऽष्टौ ॥ असु क्षेपणे । अस्यति । अस्येत् । आस, आसतुः, असिथ ॥

(सुबोधिनी)—शमां दीर्घः ॥ शमादीनामष्टानां दीर्घः स्यात् ये परे ॥ लोपः पचामित्येत्वपूर्वलोपौ । शेमतुः ॥ दमु शमनायां सकर्मकः । भ्राशभ्लाशिति यो वा । भ्राम्यति–भ्रमति । फणूराजृ इत्येत्वपूर्वलोपौ वा । भ्रेमतुः ॥ क्षमू सहने । नायं षित् । भ्वादिस्तु षित् । 'अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा ।' ऊदित इति वेट् । चक्षमिथ–चक्षन्थ । मोनो धातोरिति मस्य नत्वणत्वे । चक्षण्व ॥ क्लमु ग्लानौ । अत्रापि यप्रत्ययेऽपि ष्ठिवुक्लम्वाचमामित्येव दीर्घे सिद्धे शमादिपाठः शमादिभ्य इति घिनुणर्थः ॥

( अस्यतेस्थुक् ङे ) आस्थत् ॥ यसु प्रयत्ने ॥

(सुबोधिनी)—अस्यतेस्थुक् ङे ॥ असेः थुगागमः स्यात् ङे परे । असेः पुषादित्वात् ङप्रत्यये सिद्धे अस्यतिवक्तीति वचनमात्मनेपदार्थम् । उपसर्गादस्यत्यूहोरित्यात्मनेपदं वक्ष्यते । पर्यास्थत ॥

( अनुपसर्गाद्यसः सम्पूर्वाच्च यो वा ) यस्यति–यसति । संयस्यति संयसति । ययास । येसिथ । अयसत् । उपसर्गे तु प्रयस्यति ॥ जसु मोक्षणे । जस्यति । जजास । जेसिथ । अजसत् ॥ तसु दसु उपक्षये । तस्यति । दस्यति । ददास । देसिथ । अदसत् ॥ वसु स्तम्भे । वस्यति । ववास, ववसतुः । अवसत् ॥ बिस प्रेरणे । बिस्यति । बिबेस । अबिसत् ॥ कुश संश्लेषणे । कुश्यति । चुकोश । कोशिता । अकुशत् ॥ बुस उत्सर्गे । बुस्यति । बुबोस । बोसिता । अबुसत् ॥ मुस खण्डने । मुस्यति । मोसिता । अमुसत् ॥ मसी समी परिणामे । मस्यति । मेसिथ । अमसत् ॥ लुठ् विलोडने । लुठ्यति । लोठिता । अलुठत् ॥ उच समवाये । उच्यति । उवोच, ऊचतुः । औचत् ॥ भृशु भ्रंशु अधःपतने । भृश्यति । बभर्शिथ । अभृशत् ॥ भ्रश्यति । बभ्रंश । अभ्रशत् ॥ वृश वरणे । वृश्यति । ववर्शिथ । अवृशत् ॥ कृश् तनूकरणे । कृश्यति । चकर्शिथ । अकृशत् ॥ ञितृष् पिपासायाम् । तृष्यति । ततर्षिथ । अतृषत् ॥ हृष तुष्टौ । हृष्यति । जहर्षिथ । अहृषत् ॥ रुष् रिष् हिंसायाम् । रुष्यति । रोषिता–रोष्टा । अरुषत् ॥ रिष्यति । रेषिता–रेष्टा । अरिषत् ॥ डिप क्षेपे । डिप्यति । अडिपत् ॥ कुप् क्रोधे । कुप्यति । अकुपत् ॥ गुप् व्याकुलत्वे । गुप्यति । अगुपत् ॥ युप् रुप् लुप् विमोहने । युप्यति । युयोपिथ । अयुपत् ॥ रुप्यति । रुरोपिथ ।

अरुपत् ॥ लुप्यति । लुलोपिथ । अलुपत् ॥ लुभ आकाङ्क्षायाम् । लुभ्यति । लुलोभ । लोभिता–लोब्धा । अलुभत् ॥ क्षुभ संचलने । क्षुभ्यति । चुक्षोभ । अक्षुभत् ॥ क्लिदू आर्द्रीभावे । क्लिद्यति । चिक्लेद । क्लेत्ता । अक्लिदत् ॥ ञिमिदा स्नेहने ॥

( सुबोधिनी )–अनुपसर्गाद्यसः संपूर्वाच्च यो वा ॥ अनुपसर्गात् संपूर्वाच्च यसेर्यप्रत्ययो वा स्यात् ॥ वादित्वान्नैत्वपूर्वलोपौ । ववसतुः ॥ बुस उत्सर्गे । उत्सर्गस्त्यागः॥ मसी समी परिणामे । परिणामो विकारः ॥ इषु सहेति वेट् । रोषिता–रोष्टा ॥ लुप्यतिसेट्कः । अनिट्कारिकासु लिपिसाहचर्यात् तौदादिकस्यैव ग्रहणात् । इषुसहेति वेट् । लोभिता–लोब्धा ॥

( मिदेर्गुणो ये ) मेद्यति । मिमेद । मिद्यात् । अमिदत् ॥ ञिक्ष्विदा स्नेहनमोचनयोः । क्ष्वेदिता । अक्ष्विदत् ॥ ऋधु वृद्धौ । ऋध्यति । आर्ध्यत् । आनर्ध । ऋध्यात् । आर्धत् ॥ गृधु अभिकाङ्क्षायाम् । गृध्यति । जगर्धिथ । अगृधत् ॥ इति पुषादयः ॥ इति परस्मैपदम् ॥

( सुबोधिनी )–मिदेर्गुणो ये ॥ मिदेर्गुणः स्यात् दिवादिविकरणे ये परे ॥ नुगशामिति नुक् । आनर्द्ध ॥ ॥ इति सुबोधिन्यां परस्मैपदम् ॥

( तत्त्वदी० )–कृतायामिह टीकायां लोकेशाकरशर्मणा । अगाद्दिवादिमध्यस्थपरस्मैपदसाधनम् ॥

इति तत्त्वबोधिन्यां परस्मैपदम् ।

षूङ् प्राणिप्रसवे सूयते । सुषुवे । सुषुविषे । सविता–सोता । असाविष्ट ॥ दूङ् परितापे । दूयते । दुदुविढ्वे–दुदुविध्वे । अदविष्ट ॥ दीङ् क्षये । दीयते ॥

( सुबोधिनी )–षूङ् प्राणिप्रसवे ॥ प्रसव उत्पत्तिः । मृत्पिण्डो घटं सूयते इत्यादिप्रयोगाभावात् प्राणीत्युक्तम् ॥ स्वादय ओदितः । वक्ष्यमाणत्वात् ल्वाद्योदितश्चेति नत्वम् । प्रसूनम् ॥ नुधातोरित्युव् । सुषुवे । स्वरतिसूतीति विकल्पं बाधित्वा कित इतीण्निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे ॥

( तत्त्वदी० )–सवितेति ॥ स्वरतिसूतीति वेट् ॥ ओदित इति फलं तु क्तक्तवत्वोस्तस्य नत्वम् ॥

( दीङो युट् क्ङितः स्वरस्य ) दिदीये ॥

( सुबोधिनी )–दीङो युट् क्ङितः स्वरस्य ॥ दीङः परस्य स्वरादेः क्ङितः प्रत्ययस्य युट् स्यात् । स्वरादेः किम् । देदीयते । क्ङितः किम् । उपादानम् ॥

( मीनातिमिनोतिदीङां गुणवृद्धिविषये क्यपि चात्वम् ) दासीष्ट । दाता । दास्यते । अदास्त ॥ डीङ् विहायसा गतौ । डीयते । डयि-

ष्यते। अडयिष्ट ॥ धीङ् धारणे। धीयते । दिध्यिढ्वे-दिध्यिध्वे । अधेष्ट ॥ मीङ् प्राणवियोगे। मीयते। मेता ॥ रीङ् स्रवणे। रीयते। रिर्ये। अरेष्ट ॥ लीङ् श्लेषणे। लीयते। लिल्ये ॥

( सुबोधिनी )-मीनातिमिनोतिदीङां गुणवृद्धिविषये क्यपि चात्वम् ॥ एषामात्वं स्यात् गुणवृद्धिविधायके प्रत्यये क्यपि च ॥ मीञ् हिंसायाम्। डुमिञ् प्रक्षेपणे। दीङ् क्षये ॥ घञि उपादायः। तव्यप्रत्यये प्रमातव्यम् । लुङि आदास्तेत्यत्रापिद्दाधास्थामितीत्वं न। दीङोऽनुकरणे दारूपासंभवात् ॥ डीङ् विहायसा गतौ। आकाशेन गमने। डीनः। डीनवान्। डीङः स्वादिषु पाठसामर्थ्यान्न क्तक्तवत्वोरिति इट् । इटि सति व्यवधानात् ल्वाद्योदितश्चेति नत्वं न स्यादित्यर्थः ॥ मीङ् प्राणवियोगे । मीयते। प्राणैर्वियुज्यते इत्यर्थः ॥

( लीलीङोरात्वं वा गुणवृद्धिविषये क्यपि च ) लाता-लेता। अलास्त-अलेष्ट ॥ व्रीङ् वरणे। व्रीयते। विव्रिये। व्रेष्यते । अव्रेष्ट ॥ स्वादय ओदितः ॥ पीङ् पाने। पीयते। अपेष्ट ॥ माङ् माने। मायते। ममे। अमास्त, अमासाताम् ॥ ईङ् गतौ । ईयते । अयांचक्रे ॥ प्रीङ् प्रीतौ। प्रीयते। पिप्रिये। अप्रेष्ट ॥ जनी प्रादुर्भावे ॥

( सुबोधिनी )-लीलीङोरात्वं वा गुणवृद्धिविषये क्यपि च ॥ अनयोरात्वं वा स्यात् गुणवृद्धिविधायके प्रत्यये क्यपि च परे। ली श्लेषणे। क्र्यादिः । लीङ् श्लेषणे। दिवादिः ॥ क्यपि विलाय-विलीय ॥ व्रीङ् वरणे । वरणमङ्गीकारः ॥ व्री वरणे। क्र्यादिः ॥ स्वादयः ओदित इति ॥ तत्फलं तु क्तक्तवत्वोस्तस्य नत्वं ल्वाद्योदित इत्यनेन वक्ष्यते ॥ प्रीङ् प्रीतौ। सकर्मकः ॥

ज्ञाजनोर्जा ॥ कर्तरि चतुर्षु ॥ जायते। गर्भो स्वैरं। जज्ञे। जनिता। दीपजनेति इण् वा। जनिवध्योर्न वृद्धिः। अजनि-अजनिष्ट ॥ तूरी गतित्वरणहिंसनयोः। तूर्यते। तुतूरिषे ॥ दीपी दीप्तौ। दीप्यते। अदीपि-अदीपिष्ट ॥ पूरी आप्यायने। अपूरि-अपूरिष्ट ॥ तप ऐश्वर्ये। तप्यते। तेपे। तप्ता। अतप्त ॥ वावृतु वरणे। वावृत्यते। वावर्तांचक्रे ॥ पद गतौ। पेदे। पत्ता ॥

( सुबोधिनी )-ज्ञाजनोर्जा ॥ अनयोर्जादेशः स्याच्चतुर्षु। ज्ञा अवबोधने । जनी प्रादुर्भावे। चतुर्षु किम्। ज्ञाता। दीपजनेतीण् वा। अजनि ॥ वावृतु वरणे । 'ततो वावृत्यमाना सा रामशालां न्यविक्षत, इति भट्टिः ॥

( तत्त्वदी० -अजनि ॥ दीपजनेति वा इण् ॥

( पदेरिण्तनि ) अपादि, अपत्साताम् ॥ खिद दैन्ये । खेत्ता ॥ विद सत्तायाम । विद्यते । वित्सीष्ट । वेत्ता । अवित्त ॥ बुध अवगमने । बुध्यते । भुत्सीष्ट । दीपजनेति इण् वा । अबोधि-अबुद्ध ॥ युध संप्रहारे । युध्यते । युयुधे । युत्सीष्ट । अयुद्ध ॥

( सुबोधिनी )-पदेरिण्तनि ॥ पदेरिण् प्रत्ययः स्यात्कर्त्रर्थे तनि परे । अपादि ॥ दीपजनेतीण् वा । लुगिति तनो लुक् । अबोधि । झसादिति सिलोपः । अबुद्ध । आदिजबानामिति भः । अभुत्साताम् ॥

( अनो रुध कामे ) अनुरुध्यते । अनुरुरुधे । अनुरुत्सीष्ट । अनुरोद्धा । अन्वरुद्ध ॥ मन ज्ञाने । मन्यते । मेने । मेनिषे । मन्ता । अमंस्त ॥ युज् समाधौ । युज्यते । योक्ता । अयुक्त ॥ सृज विसर्गे । सृज्यते । रारो झसे दृशाम् । स्रष्टा । असृष्ट, असृक्षाताम् ॥ लिश अल्पीभावे । लिश्यते । लिक्षीष्ट । लेष्टा । अलिक्षत, अलिक्षाताम् ॥ इत्यात् ॥

( सुबोधिनी )-अनो रुध कामे ॥ अनूपसर्गात् परो रुध् धातुरिच्छायामस्ति । दिवादिपाठसामर्थ्यात् रुधादेरिति नमं बाधित्वा यः ॥ युज समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः ॥ सृज विसर्गे । अकर्मकः । 'संसृज्यते सरसिजैररुणांशुभिन्नैः' इति कालिदासः । सिस्योरिति न गुणः । सृक्षीष्ट । छशषेति षत्वं ष्टुत्वं झसादिति सिलोपः । असृष्ट ॥ लिश् अल्पीभावे । अनल्पस्याल्पत्वेन भवनमल्पीभावः । सिस्योरिति न गुणः । छशषेति षत्वम् । षढोरिति कत्वम् । लिक्षीष्ट । लुङि हसषान्तादिति सक् । अलिक्षत । इति सुबोधिन्यामात् ॥

( तत्त्वदी० )-कृतायामिह टीकायां लोकेशकरशर्मणा । अगाद्दिवादिमध्यस्थमात्मनेपदसाधनम् ॥ इति तत्त्वदीपिकायामात् ॥

मृष् तितिक्षायाम् । मृष्यति । मृष्यते । ममर्ष । ममृषे । अमर्षीत् । अमर्षिष्ट ॥ ईशुचिर् क्लेदने । शुच्यति । शुच्यते । अशुचत्-अशोचीत् । अशोचिष्ट ॥ रञ्ज रागे । अपि रञ्जदंशेति नलोपः । रज्यति । रज्यते । अराङ्क्षीत् । अरङ्क्त ॥ शप् आक्रोशे । शप्यति । शप्यते । शेपतुः । शेपे । शप्ता । अशाप्सीत् । अशप्त ॥ शक् मर्षणे शेकिथ-शशक्थ । पुषादित्वात ङः । अशकत् । अशक्त । सेट्कोऽयमित्येके । शकिता ॥ णह बन्धने । नह्यति । नह्यते । नेहिथ-ननद्ध । नत्सीष्ट । नद्धा । अनात्सीत् । अनद्ध इत्युभयपदम् ॥ इति दिवादयः ॥

( सुबोधिनी )–ईशुचिर् क्लेदने । आदीदित इति नेट् शुक्तम्–क्लिन्नम् । इरित इति वा ङः ॥ अशुचत् ॥ स्वरान्तादत्वतश्चेति वेट् । नेहिथ । नह इति धः । तथोरिति थस्य धः । ननद्ध । अत उपधाया इति वृद्धिः । अनात्सीत् ॥ इति दिवादिगणः ॥

( तत्त्वदी० )–ननद्धेति ॥ नहो ध इति धत्वे तथोर्द्ध इति धत्वमित्यर्थः ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । अगात्समाप्तिं संक्षिप्तं दिवादिगणसाधनम् ॥

इति तत्त्वदीपिकायां दिवादयः ॥ ४ ॥

---

# अथ स्वादयः ।

षुञ् अभिषवे ॥ स्वादेर्नुः ॥ कर्तरि चतुर्षु ॥ नूपः ॥ नुप्रत्ययस्य उप्रत्ययस्य च गुणो भवति पिति ॥ सुनोति । सुनुते । ओर्म्वोर्वा लोपः । सुन्वः–सुनुवः । सुनोतु । ओर्वा हेः । सुनु । सुनवानि । सुनवै । असुनोत्, असुनुताम् । सुषाव, सुषुवतुः । सोषीष्ट । असावीत् । स्तुसुधूञ्भ्यां पे सोरिट् । असोष्ट ॥ षिञ् बन्धने । सिनोति । सिनुते । सिष्ये, सिष्याते । असैषीत् । असेष्ट ॥ शिञ् निशाने । शेता । अशैषीत । अशेष्ट ॥ डुमिञ् प्रक्षेपे । मीनातिमिनोतीत्यात्वम् । ममौ, मिम्यतुः । ममिथ–ममाथ । मिम्ये । अमासीत् । अमास्त ॥ चिञ् चयने । चिनोति ॥

( सुबोधिनी )–षुञ् अभिषवे ॥ स्नपनं स्नानं पीडनं सुरासंधानं चाभिषवः । स्नानेऽकर्मकः ॥ स्वादेर्नुः ॥ सुरादिर्यस्य स स्वादिस्तस्मान्नुप्रत्ययः स्यात् कर्त्रर्थेषु परेषु नूपः ॥ उप्साहचर्यान्नुः प्रत्यय एव गृह्यते न धातुः । हुन्वोरिति वः । सुन्वन्ति । ओर्म्वोरित्युकारलोपो वा । सुन्वः, सुनुवः । ओर्वाहेरिति हेर्लुक् । सुनु । नुधातोरित्युव् । सुषुवे । स्तुसुधूञामितीट् । असावीत् ॥ मीनातिमिनोतीत्यात्वम् । आतो णवित्यौकारः । ममौ । नुधातोरिति यः । मिम्यतुः । यमिरमीतीट्सकौ । अमासीत् ॥ चिञ् चयने । चयनं रचनविशेषः ॥

(तत्त्वदी०)–षुञ् ॥ अभिषवः स्नपनं स्नानं पीडनं सुरासंधानं च । तत्र स्नानेऽकर्मकः ॥ स्वादेर्नुः ॥ सुः आदिर्यस्य स तथा तस्मात् ॥ नूपः ॥ उपा साहचर्यान्नुः प्रत्यय एव गृह्यत इत्याह ॥ नुप्रत्ययस्येति ॥

( चिनोतेः सणादौ किर्वा ) चिकाय–चिचाय । चिच्यतुः । अचैषीत् । अचेष्ट ॥ स्तृञ् आच्छादने । स्तृणोति, स्तृणुतः, स्तृण्वन्ति । तस्तार । गुणोर्तिसंयोगाद्योः । तस्तरतुः । ऋदन्तात्थपो नेट् । तस्तर्थ । तस्तरे । स्तर्यात् ॥

( सुबोधिनी )—चिनोतेः सणादौ किर्वा ॥ चिनोतेः किरादेशः स्याल्लिटि सप्रत्यये च से परे । चिकीषति–चिचीषति । णादौ तु चिकाय–चिचाय । गुणोर्तिसंयोगाद्योरिति गुणः तस्तरतुः । स्तर्यात् ॥

( ऋदन्तात्संयोगादेः सिस्योरिड्वाति ) स्तरिषीष्ट–स्तृषीष्ट । अस्तारीत् । अस्तरिष्ट–अस्तृत । लोपो ह्रस्वाज्झसे ॥ कृञ् हिंसायाम । कृणोति । कृणुते । चकर्थ । चकृवहे । अकार्षीत् । अकृत ॥ वृञ् वरणे । ववार । वव्रतुः ॥

( सुबोधिनी )—ऋदन्तात्संयोगादेः सिस्योरिड्वाति ॥ ऋदन्तात्संयोगादेर्धातोः परयोः सिस्योरिड्वा स्यादात्मनेपदे परे । स्तरिषीष्ट । उरिति न गुणः । स्तृषीष्ट॥ ऋदन्तात्थपो नेट् । चकर्थ । यादादौ इति रिङ् । क्रियात् । उरिति न गुणः । कृषीष्ट॥

( वृञस्थप इट् ) ववरिथ ॥

( सुबोधिनी )—वृञस्थप इट् ॥ वृञः परस्य थप इट् स्यात् । ववरिथ ॥

( वृङ्वृञूॠदन्तात्सिस्योरिड्वाति ) वरिषीष्ट–वृषीष्ट । वरिता–वरीता । वरिष्यति–वरीष्यति । अवारीत्, अवारिष्टाम । अवरिष्ट–अवरीष्ट–अवृत ॥ धुञ् कम्पने । धुनोति । धुनुते । दुधाव, दुधुवतुः । धोष्यति । अधौषीत् । अधोष्ट । दीर्घान्तोऽप्ययम् । धूनोति । स्तुसुधूञामितीट् । अधावीत् । स्वरतिसूतीति वेट् । अधविष्ट–अधोष्ट ॥ इत्युभयपदिनः ॥ टुदु उपतापे । दुनोति । दुदाव, दुदुवतुः । अदौषीत् ॥ हि गतौ वृद्धौ च । हिनोति ॥

( सुबोधिनी )—वृङ्वृञॠदन्तात्सिस्योरिड्वाति ॥ वृङ्वृञ्भ्यामॄदन्ताच्च परस्य सिप्रत्ययस्य सीष्टादेश्चेड् वा स्यादात्मनेपदे परे । पे सेरिटो न दीर्घः । सीष्टादेरिति न दीर्घः । वरिषीष्ट । वृङ्वृञिति वा दीर्घः । वरिता, वरीता । स्वरतिसूतीति वेट् । दुधविथ–दुधोथ । किति लिटि तु कित इतीण्निषेधं बाधित्वा क्रादिनियमान्नित्यमिट् । नानप्योरित्युव् । दुधुविव । स्तुसुधूञामितीट् अधावीत् ॥ इत्यात्ते ॥

( तत्वदी० )—धुञ् ॥ दीर्घान्तोऽप्ययमिति ॥तथा च कविरहस्ये—"धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणूत्यत्कानने धवति चन्दनमञ्जरीश्च" इति ॥ हि गतौ वृद्धौ च ॥

( पूर्वाद्धिनोतेर्हस्य घो न त्वङि ) जिघाय, जिघ्यतुः । अहैषीत् ॥ आप्लृ व्याप्तौ । आप्नोति, आप्नुवन्ति । आप्नुहि । आप, आपतुः । आप्ता । आपत् ॥ शक्लृ शक्तौ । शक्नोति । शशाक, शेकतुः ।

शक्ता। अशकत्। राध साध संसिद्धौ। राध्नोति, राध्नुवन्ति॥

( सुबोधिनी )–पूर्वाद्धिनोतेर्हस्य घो न त्वङि॥ द्वित्वे सति पूर्वात्परस्य हिनोतेर्हस्य घः स्यादङि तु न। अङि किम्। अजीहयत्। संयोगपूर्वकत्वादोर्वा हेरिति न हेर्लुक्। आप्नुहि॥

( तत्त्वदी० )–न त्वङीति॥ अङीति किम्॥ अजीहयत्। ण्यन्तस्य धात्वन्तरत्वेन हिग्रहणादग्रहणेऽपि जिघाययिषतीत्यत्र ण्यधिकस्यापि कुत्वज्ञापनार्थमिदमिति बोध्यम्॥

( राधो हिंसायामेत्वपूर्वलोपौ किति लिटि सेटि थपि च ) रराध, रेधतुः। रेधिथ। अरात्सीत्॥ ञिधृषा प्रागल्भ्ये। धृष्णोति। दधर्ष। अधर्षीत्॥ दम्भु दम्भे। दभ्नोति॥

( सुबोधिनी )–राधो हिंसायामेत्वपूर्वलोपौ किति लिटि सेटि थपि च॥ हिंसार्थकस्य राध एत्वपूर्वलोपौ स्तः नान्यार्थकस्य॥ दम्भु दम्भे। लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः॥

( श्रन्थिग्रन्थिदम्भिभ्यो लिटः कित्त्वं वा ) ( दम्भेर्लिट्येत्वपूर्वलोपौ )। ददम्भ, देभतुः–ददम्भतुः। देभिथ–ददम्भिथ। अदम्भीत्॥ ऋधु वृद्धौ। आनर्द्ध। नुगशाम्। आनृधतुः। अर्द्धिता॥ क्षि हिंसायाम्। क्षिणोति, क्षिण्वन्ति। क्षेता॥ इति षम्॥

( सुबोधिनी )–श्रन्थिग्रन्थिदम्भिभ्यो लिटः कित्त्वं वा॥ एभ्यः परस्य लिटः कित्त्वं स्याद्वा। श्रन्थ ग्रन्थ संदर्भे। दम्भु दम्भे। ष्वञ्ज परिष्वङ्गे। दम्भेः किति लिटचेत्वपूर्वलोपौ। श्रन्थीति कित्संज्ञायां नो लोप इति नलोपस्तस्यासिद्धत्वादेत्वपूर्वलोपयोरप्राप्तौ सत्यामारम्भः॥ इति सुबोधिन्यां षम्॥

अशूङ् व्याप्तौ संघाते च। अश्नुते। नुगशाम्। आनशे। अशिषीष्ट–अक्षीष्ट। अशिता–अष्टा। आशिष्ट। आक्षाताम्॥ ष्टिघ आस्कन्दने। स्तिघ्नुते, स्तिघ्नुवाते। तिष्टिघिध्वे। अस्तेघिष्ट॥ इति स्वादयः॥

( सुबोधिनी )–नुगशामिति नुक्। आनशे॥ ष्टिघ आस्कन्दने॥ आस्कन्दनं संग्रामः। स्तिघ्नुते॥ इत्यादि॥ इति सुबोधिन्यां स्वादयः॥

( तत्वदी० )–कृतायामिह टीकायां लोकेशकरशर्मणा। बाधनं दुष्टबुद्धीनामगमत्स्वादिसाधनम्॥

इति तत्त्वदीपिकायां स्वादयः॥ ९॥

# अथ रुधादयः ।

रुधिर् आवरणे ॥ **रुधादेर्नम्** ॥ कर्तरि चतुर्षु ॥ रुणद्धि । नमसोऽस्य । रुन्द्धः, रुन्धन्ति । रुणत्सि । रुन्धे, रुन्धाते । अरुधत्-अरौत्सीत् । अरुद्ध ॥ भिदिर् विदारणे । अभिदत्-अभैत्सीत् । अभित्त ॥ छिदिर् द्वैधीकरणे । अच्छिदत्-अच्छैत्सीत् । अच्छित्त ॥ रिचिर् विरेचने । रिणक्ति । अरिणक्-अरिणग् । अरिचत्-अरैक्षीत् । अरिक्त ॥ विचिर् पृथग्भावे । विङ्क्ते । अविचत्-अवैक्षीत् । अविक्त ॥ क्षुदिर् संपेषणे । अक्षुदत्-अक्षौत्सीत् । अक्षुत्त ॥ युजिर् योगे । अयुजत्-अयौक्षीत् । अयुक्त ॥ उच्छृदिर् दीप्तिदेवनयोः । छृणत्ति । छृन्ते । नृततृद इति वेट् । छृत्सीष्ट-छर्दिषीष्ट । अच्छृदत्-अच्छर्दीत् । अच्छर्दिष्ट ॥ उतृदिर् हिंसानादरयोः । अतृदत्-अतर्दीत् । अतर्दिष्ट ॥ इत्युभयपदप्रक्रिया ॥

( सुबोधिनी )-रुधिर् आवरणे ॥ रुधादेर्नम् ॥ रुध आदिर्यस्य स रुधादिस्तस्माद्रुधादेर्नम् प्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु ॥ मित्वादन्त्यात्स्वरात्परः । नित्यत्वाद्गुणं बाधते । तथोरिति धत्वम् । णत्वम् । रुणद्धि । नमसोऽस्य इत्यल्लोपः । रुन्द्धः । दिस्योरिति दिप्सिपोर्लोपः । 'वावसाने' इति धस्य दकारतकारौ । सिपि 'दः' इति दस्य वा सः । अरुणत्-अरुणः । नृततृदेति वेट् । चच्छृदिषे चच्छृत्से ॥ इति सुबोधिन्यामात्पे ॥

( तत्त्वदी० )-रुधिर् ॥ रुधादेर्नम् ॥ रुध् आदिर्यस्य स तथा तस्मात् । न च रुदादेरिति भविष्यति अन्तर्वर्तिविभक्त्या पदत्वादिति वाच्यम् । असंदेहार्थमिदम् । अन्यथा रुध् आदिः रुद् आदिरिति वा संदेहः स्यात् । यद्यपि व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायाद्रुधादिरेव गृह्यते तथापि क्वचिदान्तरं पदकार्यं नेति ज्ञापनार्थमिदम् । नमः प्रत्ययत्वेऽपि मित्त्वसामर्थ्यादन्त्यस्वरस्य परत्वम् । अन्यथा मित्त्वं व्यर्थं स्यात् । न च नम इति विशेषणार्थं तादिति वाच्यम् । अनुबन्धान्तरस्यैव सुवचत्वात् । अथ नमि मध्येऽपि तिबादिपरत्वस्याबाधनादपा भाव्यमिति वाच्यम् । न । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति तक्रकौण्डिन्यन्यायेन तक्रदानेन दधिदानस्येव नमापो बाधनात् । नमानित्यत्वाद्गुणो बाध्यते । उच्छृदिर् उः क्त्वायामिड्विकल्पार्थः । छृत्त्वा-छृदित्वा ॥ इत्यात्पे ॥

शिष्लृ विशेषणे । शिनष्टि, शिंष्टः, शिंषन्ति । शिण्ढि । शेष्टा । शेक्ष्यति । अशिषत् ॥ पिष्लृ संचूर्णने । पिनष्टि । पेक्ष्यति । अपिषत् ॥ भञ्जो आमर्दने । भनक्ति । बभञ्जिथ-बभङ्क्थ । भङ्क्ता । अभाङ्क्षीत् ॥ भुज पालनाभ्यवहारयोः । भुनक्ति, भुङ्क्तः । अभुनक्-अभुनग् । अभौक्षीत् ॥ तृह हिसि हिंसायाम् ॥

( सुबोधिनी )–झसादिति हेर्द्धिः । झबे इति षस्य डत्वम् । ष्टुत्वम् । अनुस्वारपरसवर्णौ । शिण्ड्ढि हसात्परस्य झसस्येति डलोपे शिण्ढि । लित्पुषादेरिति ङः । अशिषत् ॥ भञ्जो आमर्दने । ओदित्करणं स्वाद्योदिति इति नत्वार्थम् । भग्नः ॥ भुज पालनाभ्यवहारयोः । भुजोऽपालने इत्यात्मनेपदं वक्ष्यते ॥

**( तृहो नमि कृते इमागमः पिति हसे )** तृणेढि । अतृणेट् । अतर्हीत् । इदितो नुम् ॥ नमः ॥ नम्प्रत्ययात् परस्य नस्य लोपः ॥ हिनस्ति, हिंस्तः, हिंसन्ति । धे सलोपः । हिन्धि । अहिनः । जिहिंस । अहिंसीत् ॥ उन्दी क्लेदने । उनत्ति, उन्तः, उंदन्ति, औनत् । औन्दन् । उन्दांचकार । औन्दीत् ॥ अञ्जू व्यक्तिम्लक्षणकान्तिगतिषु । अनक्ति । नुगशाम् । ऊदितो वा । आनञ्जिथ–आनङ्थ । अञ्जिता–अङ्क्ता ॥

(सुबोधिनी)–तृहो नमि कृते इमागमः पिति हसे ॥ तृहेः पूर्वं नम् । ततः इम् स्यात् पिति हसे परे ॥ नमः प्रकरणात्प्रत्ययस्य ग्रहणम् । उन्दी क्लेदने । क्लेदनमार्द्रीभावः । नम इति नलोपः । उनत्ति । उन्द्यात् । उनत्तु । औनत् । उन्दांचकार । उद्यात् । उन्दिष्यति । औन्दिष्यत् । औन्दीत् ॥ अञ्जू व्यक्तिम्लक्षणकान्तिगतिषु । व्यक्तिर्विवेचनम् । म्रक्षणं स्निग्धता । नुगशामिति नुक् आनञ्ज ॥

( तत्त्वदी० )–तृहो नमि कृते इति ॥ यद्येवं न स्यात्तर्हि येन नाप्राप्तन्यायनेमा नम् बाध्येत । अबाधने वा पूर्वमिमेव स्यादिति शङ्कानिवृत्तये नमि कृते इति । नमः प्रकरणत्वात्प्रत्ययस्य ग्रहणम् ॥

**( अञ्जेः सेर्नित्यमिट् )** आञ्जीत् ॥ तञ्चू संकोचने । तनक्ति । अतञ्चीत् । अताङ्क्षीत् । ओविजी भयचलनयोः । विनक्ति ॥

( सुबोधिनी )–अञ्जेः सेर्नित्यमिट् ॥ अञ्जेः परस्य सिप्रत्ययस्य इडागम ऊदित्वाद्विकल्पे प्राप्ते इट्दम् ॥

**( विजेरिडादिप्रत्ययो ङित् )** विविजिथ । विजिता । अविजीत् ॥ वृजी वर्जने । वृणक्ति । अवर्जीत् ॥ पृची संपर्के । पृणक्ति । अपर्चीत् ॥ इति पम् ॥

( सुबोधिनी )–विजेरिडादिप्रत्ययो ङित् ॥ विजेः परस्य इट्सहितस्य प्रत्ययस्य ङित्त्वं स्यात् ॥ इति सुबोधिन्यां पम् ॥

ञिइन्धी दीप्तौ । इन्द्धे । इन्धीत । ऐन्द्ध । इन्धांचक्रे । ऐन्धिष्ट ॥ खिद दैन्ये । खिन्ते । खित्सीष्ट । अखित्त ॥ विद विचारणे । विन्ते । वित्सीष्ट । अवित्त ॥ इति रुधादयः ॥

( सुबोधिनी )—ञिइन्धी दीप्तौ । तथोर्द्ध इति धत्वम् । झवे जवा इति दत्वम् । इन्धेर्नमो नकारस्यानुस्वारपरसवर्णौ । नो लोप इति नलोपस्तु न भवत्यल्लोपस्यासिद्धत्वात् स्थानिवत्वाद्वा ॥ इत्यात् ॥ इति सुबोधिन्यां रुधादयः ॥

( तत्त्वदी० )—ञिइन्धीति ॥ ञीतां तगित्येतदर्थो ञिः । इद्ध इत्यत्रेण्निषेधार्थः । इन्धी इति नम इति नलोपः । नमसोस्येति सलोपः ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । मतां भाष्यकृतो भव्या रुधादिप्रक्रिया गता ॥

इति तत्त्वदीपिकायां रुधादयः ॥ ६ ॥

---

# अथ तनादयः ।

**तनु विस्तारे ॥ तनादेरुप् ॥ कर्तरि चतुर्षु ॥ नृपः । तनोति, तनुतः, तन्वन्ति । ओर्म्वोर्वा लोपः । तनुवः—तन्वः । तनुते । ततान, तेनतुः । तेने । अतानीत्—अतनीत् ॥**

( सुबोधिनी )—तनु विस्तारे ॥ तनादेरुप् । तन् आदिर्यस्य स तनादिस्तस्मादुप् कर्त्रर्थेषु चतुर्षु अपोऽपवादः ॥ तनोति । तनुते । तनुयात् । तन्वीत । तनोतु । तनुताम् । अतनोत् । अतनुत । ततान । तेने । तन्यात् । तनिषीष्ट । तनिता । तनिष्यति । तनिष्यते । अतनिष्यत् । अतनिष्यत । अतो हसादेर्लघोरिति वा वृद्धिः । अतनीत्—अतानीत् ॥

( तत्त्वदी० )—तनु ॥ उकारः क्त्वायामिड्विकल्पार्थः ॥ तनादेरुप् । तन् आदिर्यस्य स तनादिस्तस्मात् । नलोपाभावस्त्वसंदेहार्थः । यदि व्याख्यानत इति न्यायादसंदेहस्तदा कचिन्नलोपो नेति ज्ञापनार्थः । तेन सन् आदिर्येषां ते सनादय इत्यादि सिद्धम् । उपः पित्वं कुरुत इत्यादौ गुणार्थम् । यदि ङित्यदुरिति सामर्थ्याद्गुणः । अन्यथाऽकारस्यासंभव इति विभाव्यते तदा वर्णोतीत्यत्र गुणार्थमिति बोध्यम् ॥

**( तनादेस्तथासोर्वा सेर्लुक् ) लोपस्त्वनुदात्ततनाम् ॥ अतत—अतनिष्ट । अतथाः—अतनिष्ठाः ॥ षणु दाने । सनोति । सनुते । सेनतुः । सेने । जनसनखनामात्वमिति आत्वम् । सायात्—सन्यात् । असात—असनिष्ट । असाथाः—असनिष्ठाः ॥ क्षणु क्षिणु हिंसायाम् । क्षणोति । ह्म्यन्तक्षणेति न वृद्धिः । अक्षणीत् । अक्षत—अक्षणिष्ट । अक्षथाः—अक्षणिष्ठाः ॥**

( सुबोधिनी )—तनादेस्तथासोर्वा सेर्लुक् ॥ तनादेः परस्य सेर्लुग् वा भवति तनि थासि च परे ॥ अतत—अतनिष्ट ॥ षणु दाने । नान्तोऽयम् । णकारस्तु लाक्षणिकः । तेन यङ्लुकि संसन्ति, संसन्तः । इत्यादावनुस्वारपरसवर्णौ स्तः । जनसनेत्यात्वम् । सायात्—सन्यात् । असात—असनिष्ट । असाथाः—असनिष्ठाः ॥ क्षणु क्षिणु हिंसायाम् ।

इमावपि लाक्षणिकौ णकारौ। तेन यङ्लुकि चंक्षन्ति। इत्यत्रानुस्वारपरसवर्णौ। ह्म्यन्तेति न वृद्धिः। अक्षणीत्। तनादेस्तथासोरिति वा सेर्लुल्। लोपस्त्वनुदात्ततनामिति न लोपः। अक्षत–अक्षणिष्ट॥

(तत्त्वदी०)–क्षणु। द्वावपि दन्त्यान्तौ। णत्वं तु सूत्रबलात्। अन्यथा यङ्लुकि चंक्षन्तीत्यत्रानुस्वारो न स्यात्॥

(तनादेरुपधाया गुणो वोऽपि) क्षिणोति–क्षेणोति। अक्षेणीत्। अक्षित–अक्षेणिष्ट। अक्षिथाः–अक्षेणिष्ठाः॥ ऋणु गतौ। ऋणोति–अर्णोति। ऋणुतः। आनर्ण। आनृणे। आर्णोत्। आर्त–आर्णिष्ट। आर्थाः–आर्णिष्ठाः॥ तृणु अदने। तृणोति। तर्णोति। तृणुते। तर्णुते। अतर्णीत्। अतृत–अतर्णिष्ट। अतृथाः–अतर्णिष्ठाः॥ घृणु दीप्तौ। घृणोति–घर्णोति। जघर्ण। अघर्णीत्। अघृत–अघर्णिष्ट। अघृथाः–अघर्णिष्ठाः॥ डुकृञ् करणे। करोति। ङित्यगुः। कुरुतः॥

(सुबोधिनी)–तनादेरुपधाया गुणो वोऽपि॥ तनुषणुक्षणुधातूनां गुणासंभवात् क्षेण्वादिष्वस्य प्रवृत्तिर्बोध्या। अतद्गुणसंविज्ञानो बहुव्रीहिः। उवमिति वः। कुर्वन्ति॥

(कुरुछुरोर्न दीर्घः) कुर्वन्ति॥

(सुबोधिनी)–कुरुछुरोर्न दीर्घः॥ कृञः कुरुरूपस्य छुरछेदने इत्यस्य च दीर्घो न भवति। कुर शब्दे इत्यस्य तु न निषेधः॥

(कृञो नित्यं वमोरुलोपः) कुर्वः, कुर्मः।

(सुबोधिनी)–कृञो नित्यं वमोरुलोपः॥ कृञः परस्य उप्रत्ययस्य लोपः स्यात् वमयोः परयोः॥

(तत्त्वदी०)–कृञो नित्यमिति॥ कृञो ये इत्यत्र वेत्यनुवृत्तेर्व्यवस्थया बोध्यम्॥

कृञो ये॥ कृञ उप्रत्ययस्य लोपो यि॥ कुर्यात्। चकर्थ। क्रादेर्नेट्। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत। अकृथाः॥

(सुबोधिनी)–कृञो ये॥ लोप इत्यनुवृत्तम्। आशिषि यदादौ इति रिङ्। क्रियात्। उरिति न गुणः। कृषीष्ट। तनादेरिति सेर्लुगभावे लोपो ह्रस्वादिति सिलोपः। अकृत॥

(संपर्युपेभ्यः करोतेर्भूषणे सुट्) संस्करोति। अड्द्वित्वव्यवधानेऽपि कात् पूर्वः सुट्। समस्करोत्। संचस्कार।

(सुबोधिनी)–संपर्युपेभ्यः करोतेर्भूषणे सुट्॥ संपर्युपपूर्वस्य करोतेः सुट् स्यात्। भूषणे संघे चार्थे संस्करोति। अलंकरोतीत्यर्थः। संस्कुर्वन्ति संघीभवन्तीत्यर्थः॥ अड्द्वित्वव्यवधानेऽपि कात् पूर्वः सुट्। संपर्युपेभ्यः परस्य कृञोऽड्व्यवधाने द्वित्वव्यवधाने च कात्पूर्वः सुट् भवति॥

( तत्त्वदी० )—संपर्युपेभ्य इति ॥ वृत्तिकारमतेनायं पाठः । भाष्यवार्त्तिककारादिमते तु संपरिभ्यामित्येव ॥

( ससुटः कृञो लिट इट् ) संचस्करिथ । संचस्करिव । संस्क्रियात् । संस्कृषीष्ट । एवं परिष्कुरुते । उपस्कुरुते । परिष्करिष्यते । पर्यस्कार्षीत्-पर्यष्कार्षीत् ॥ इत्यात्पे ॥

( सुबोधिनी )—ससुटः कृञो लिट इट् ॥ सुट्सहितात् कृञो लिट इट् भवति ॥ इत्यात्पे ॥

वनु याचने । वनुते । ववने । परस्मैपदमप्यमित्येके । वनोति । शसदद इति । ववान । ववनिथ । अवानीत्-अवनीत् ॥ मनु अवबोधने । मनुते । मेने । मनिषीष्ट । अमत-अमनिष्ट ॥

इति तनादयः ॥

( तत्त्वदी० )—कृतायामिह टीकायां लोकेशकरशर्मणा । मता भाष्यकृतो भव्या तनादिप्रक्रिया गता ॥

इति तत्त्वदीपिकायां तनादयः ॥ ७ ॥

---

# अथ तुदादयः ।

तुद व्यथने । तुदादेरः ॥ कर्तरि चतुर्षु ॥ तुदति । तुदते । तुत्सीष्ट । अतौत्सीत् । अतुत्त ॥ णुद प्रेरणे । नुदति । नुत्सीष्ट । अनौत्सीत् । अनुत्त ॥ दिश अतिसर्जने । दिशति । दिक्षीष्ट । अदिक्षत् ॥ भ्रस्ज पाके । ग्रहां ङिति च । झबे जबाः भृज्जते ॥

( सुबोधिनी )—तुद व्यथने ॥ तुदादेरः । तुद आदिर्यस्य स तुदादिः तस्मादप्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु ॥ अपोऽपवादः ॥ तुदति । तुदते । तुदेत् । तुदेत । तुदतु । तुदताम् । अतुदत् । अतुदत, अतुदेताम्, अतुदन्त । तुद्यात् । तुत्सीष्ट । सिस्योरिति न गुणः । तोत्ता । तोत्स्यति । तोत्स्यते । अतोत्स्यत् । अतोत्स्यत । अतौत्सीत् । झसादिति सिलोपः । अतुत्त ॥ दिश अतिसर्जने । अतिसर्जनं दानम् । हशषान्तात् सगिति सक् । छशषेति षत्वम् । षढोरिति कत्वं च । अदिक्षत् । अदिक्षत ॥ भ्रस्ज पाके । भर्जनरूपः पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकस्तत्र प्रयोगाभावात् । ग्रहामिति संप्रसारणम् । सस्य श्चुत्वेन शः । शस्य झबे जबा इति जः । भृज्जति । भृज्जते । भृज्जेत् । भृज्जेत । भृज्जतु । भृज्जताम् । अभृज्जत् । अभृज्जत ॥

( तत्त्वदी० )—तुदादेर इति ॥ तुद आदिर्यस्य स तथा तस्मात् । अप्रत्ययस्यापित्त्वादपित्वादिर्ङिदिति ङित्त्वं तेन गुणो न । भ्रस्ज इत्ययं पाठः । भ्रस्जो इति पाठे तु भृष्टः भृष्टवानित्यत्र श्वीदितो निष्ठायामिति इट् न स्यात् ॥

( भ्रस्जो रसो रमनपि वा ) बभर्ज–बभ्रज्ज, बभर्जतुः–बभ्रज्जतुः। बर्भर्जिथ–बभ्रज्जिथ–बभर्ष्ठ–बभ्रष्ठ । स्वरान्तादत्वतश्चेति वेट् । क्ङिति संप्रसारणं बाधकम् । भृज्ज्यात् । अभ्राक्षीत्–अभार्क्षीत् । अभ्रष्ट–अभर्ष्ट ॥ क्षिप प्रेरणे । क्षिप्सीष्ट । अक्षैप्सीत् । अक्षिप्त ॥ कृष विलेखने । कृक्षीष्ट । क्रष्टा–कर्ष्टा । अक्राक्षीत्–अकार्क्षीत् । अकृक्षत, अकृक्षाताम्, अकृक्षन्त ॥ मिल संगमे । मिलति । मिमिले । अमेलीत् । अमेलिष्ट ॥ मुच्लृ मोचने । मुचादेर्मुम् । मुच्लुप्विद्लिप्षिच्कृत्पिश्खिदामप्रत्यये मुम् ॥ मुञ्चति । मुक्षीष्ट । लित्पुषादेर्ङः । अमुचत् । अमुक्त ॥ लुप्लृ छेदने । लुम्पति । लुलोप । लुप्सीष्ट । अलुपत् । अलुप्त ॥ विद्लृ लाभे । विन्दति । अविदत् । अवेदिष्ट । अनिडयमित्येके । वेत्ता ॥ लिप उपदेहे । लिम्पति । लिपिसिचीति ङः । अलिपत् । अलिपत–अलिप्त ॥ षिच क्षरणे । सिञ्चति । सिषिचिषे । असिचत् । असिचत–असिक्त ॥ इत्यात्पे ॥

( सुबोधिनी )–भ्रस्जो रसो रमनपि वा ॥ भृज्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यात् अनपि ॥ मित्वादन्त्यात् स्वरात्परो भवति ॥ स्थानषष्ठीनिर्देशात् रकारोपधयोर्निवृत्तिः । बभर्ज–बभ्रज्ज, बभर्जतुः–बभ्रज्जतुः। थपि बभर्जिथ । स्वरान्तादत्वतश्चेति वेट् । बभ्रज्जिथ । स्कोरिति सलोपः । छशषेति षः । बभर्ष्ठ–बभ्रष्ठ । आति । बभर्जे । बभ्रज्जे । क्ङिति रमागमं बाधित्वा संप्रसारणम् । भृज्ज्यात् । भर्क्षीष्ट–भ्रक्षीष्ट । भर्ष्टा–भ्रष्टा । भर्क्ष्यति–भ्रक्ष्यति । भर्क्ष्यते–भ्रक्ष्यते । अभर्क्ष्यत्–अभ्रक्ष्यत् । अभर्क्ष्यत–अभ्रक्ष्यत । अभार्क्षीत्–अभ्राक्षीत् । अभर्ष्ट–अभ्रष्ट ॥ कृष विलेखने । कृषादीनां वेति वा रः । क्रष्टा–कर्ष्टा । सिस्योरिति न गुणः । कृक्षीष्ट । कृषस्पृशमृशेति वा सिः । अनिटो नामिवत इति वृद्धिः । अक्राक्षीत्–अकार्क्षीत् । पक्षे हशषान्तादिति सक् । अकृक्षत् । सिस्योरिति न गुणः । अकृष्ट । साकि अकृक्षत । आति सको लोपः स्वरे इत्यलोपः । अकृक्षाताम् ॥ मिल संगमे । अस्मिन्नेव गणे परस्मैपदिषु मिल संश्लेषणे इति धातुपाठे पठ्यते इह तस्य पुनः पाठः कर्तर्यात्मनेपदार्थः । मिलति । मिलते । मुचादेर्मुम् । मुच्लृ मोचने । लुप्लृ छेदने । विद्लृ लाभे । लिप उपदेहे । षिच क्षरणे । कृती छेदने । पिश अवयवे । खिद परिघाते । विद्लृ व्याघ्रभूतिमते सेट्कः । वेदिता । भाष्यमते त्वनिट्कः । वेत्ता ॥ लिप उपदेहे । उपदेहो वृद्धिः । लिपिसिचीति ङः । अलिपत् । आति तु वा ङः । अलिपत । झसादिति सिलोपः । अलिप्त ॥ ॥ इत्यात्पे ॥

( तत्त्वदी० )–रसोरिति ॥ रश्च स् च रसौ तयोः । रेफसकारयोरादेशो भवतीत्यर्थः ॥

ऋषी गतौ। ऋषति। आनर्ष॥ ओव्रश्चू छेदने। वृश्चति। वव्रश्च, वव्रश्चतुः, वव्रश्चुः। वव्रश्चिथ-वव्रष्ठ। व्रश्चिता-व्रष्टा। व्रश्चिष्यति-व्रक्ष्यति। अव्रश्चीत्-अव्राक्षीत्, अव्राष्टाम्॥ व्यच व्याजीकरणे। विचति। विव्याच, विविचतुः। विच्यात्। व्यचिता। व्यचिष्यति। अव्याचीत्-अव्यचीत्॥ उछि उञ्छे। उञ्छति। उञ्छांचकार। औञ्छीत्॥ उच्छी विवासे। उच्छति। उच्छांचकार। औच्छीत्॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु। ऋच्छति॥

( सुबोधिनी )-नुगशामिति नुक्। आनर्ष। ओव्रश्चू छेदने। ग्रहामिति संप्रसारणम्। वृश्चति॥ लिटि णवादौ पूर्वस्येत्यनेन पूर्वरेफस्य ऋकारः। ततो न संप्रसारणे संप्रसारणमिति परिभाषया निषेधात्सकृत्सूत्रं प्रवर्तते इति न्यायाद्वा पुनर्वस्य संप्रसारणं न। वव्रश्च। ऊदितो वेति वेट्। वव्रश्चिथ। स्कोरिति सलोपः। छशषेति षत्वं ष्टुत्वम्। वव्रष्ठ। ऊदितो वेतीटि अव्रश्चीत्॥ इडभावे स्कोरिति सलोपः। छशषेति षत्वं षढोरिति कः। ततः सस्य षत्वम्। अव्राक्षीत्॥ नन्वत्र शकारस्य कथं लोपः। उच्यते। "नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः॥ १॥" इति। व्यच व्याजीकरणे। व्याजीकरणं छद्मकरणम्। ग्रहामिति संप्रसारणं णवादौ पूर्वस्येति पूर्वस्य संप्रसारणं च। विविचतुः। अतो हसादेरिति वा वृद्धिः। अव्याचीत्-अव्यचीत्॥ उछि उञ्छे। उच्छी विवासे। स्वदेशं परित्यज्य देशान्तरे गमनं विवासः। संप्रति धातुपाठे इमौ भ्वादिगणे पठितौ। इह पुनः पाठस्तु उञ्छन्तीत्यत्र वादीपोः शतुरिति नुम्विकल्पार्थः। अप्प्रत्यये तु अप्यपोरान्नित्यमिति नित्यं नुम्। उञ्छन्ती॥

( ऋच्छेर्नाम् ) ( ऋच्छेर्लिटि गुणः ) नुगशाम्। आनर्च्छ, आनर्च्छतुः। ऋच्छिता॥ उब्ज आर्जवे। उब्जांचकार॥ उज्झ त्यागे। उज्झांचकार॥ लुभ विमोहने। लुभति। लोभिता-लोब्धा। अलोभीत्॥ तृप तृम्प तृफ तृम्फ तृप्तौ। तृपति। अतर्पीत्। ( तृफादीनामप्रत्यये नुम्) तृम्फति॥ तुप तुम्प तुफ तुम्फ हिंसायाम्। तुपति। तुतोप। अतोपीत्। तुम्पति। अतुम्पीत्। तुफति। तुतोफ। अतोफीत्। तुम्फति। तुतुम्फ। अतुम्फीत्॥ दृप दृम्फ उत्क्लेशे। दृपति। दृम्फति॥ ऋफ ऋम्फ हिंसायाम्। ऋफति। ऋम्फति। ऋम्फांचकार॥ गुफ गुम्फ ग्रन्थे। गुफति। गुम्फति। अगुम्फीत्॥ उभ उम्भ पूरणे। उभति। उवोभ। औभीत्। उम्भति। उम्भांचकार। औम्भीत्॥ शुभ शुम्भ शोभार्थे। शुभति। अशोभीत्। शुम्भति।

अशुम्भीत् ॥ दभी ग्रन्थे । दभति । अदर्भीत् ॥ चृती हिंसाग्रन्थनयोः । चृतति । नृतनृदच्छृतेतीट्वा । चर्तिष्यति-चर्त्स्यति । अचर्तीत् ॥ विध विधाने । विधति । वेधिता ॥ लिख अक्षरविन्यासे । लिखति । लेखिता ॥ कुट कौटिल्ये । कुटति । चुकोट ॥

(सुबोधिनी)-ऋच्छेर्नाम् ॥ ऋच्छतेराम् प्रत्ययो न लिटि ॥ गुरुनामित्वादाम्प्राप्ते निषेधः ॥ ऋच्छेर्लिटि गुणः ॥ ऋच्छतेर्गुणः स्याल्लिटि ॥ लुभ विमोहने । विमोहनमाकुलीकरणम् । इषुसहेति वेट् । लोभिता-लोब्धा ॥ तृप तृम्फ तृप्तौ । कृषस्पृशमृशेति सिविकल्पस्तु पौषादिकस्यैव ङस्यापवादत्वात् । तेनात्र नित्यं सिः । अतर्पीत् ॥ तृम्फादीनामप्रत्यये नुम् । आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । अप्रत्ययस्य ङित्त्वान्नो लोप इति नलोपे कृते नुम् । तृम्फति । दृप दृम्फ उत्क्लेशे उत्क्लेशः पीडा । चृती हिंसाग्रन्थनयोः । ईदित्करणमादीदित इतीण्निषेधार्थम् । यद्यप्यस्य वेदकत्वादिण्निषेधः सिद्धयति तथापि क्वचिद्वेट् इत्यस्यानित्यतां ज्ञापयितुमीदित्करणम् । तेन 'धावितमिभराजधिया' इत्यादि सिद्धमिति ॥ नृततृदेति वेट् । चर्त्स्यति ॥ विध विधाने । विधानं करणम् ॥ कुट कौटिल्ये । कुटिलस्य भावः कौटिल्यं तस्मिन् ॥

( तत्त्वदी० )-गुरुनामित्वादाम्प्राप्त इत्याह-ऋच्छेरिति ॥ ह्रस्वच्छकारस्य द्वित्वे संयोगपरत्वाल्लघूपधत्वाभावाद्गुणाप्राप्तौ लिटि गुण इति ॥

( कुटादेर्ञ्णिद्वर्जः प्रत्ययो ङित् ) चुकुटिथ । कुटिता । अकुटीत् ॥ पुट संश्लेषणे । पुटति । पुपोट । अपुटीत् ॥ कुच संकोचने । कुचति । चुकोच । अकुचीत् ॥ गुज शब्दे । गुजति । गुजिता । अगुजीत् ॥ गुड रक्षायाम् । गुडति । गुडिता । अगुडीत् ॥ कुड शब्दे । कुडति । कुडिता ॥ डिप क्षेपे । डिपिता ॥ छुर छेदे । कुरुछुरोर्न दीर्घः । छुर्यात् । छुरिता ॥ स्फुट विकसने । स्फुटति ॥ मुट आक्षेपप्रमर्दनयोः । मुटति । मुमोट । मुटिता ॥ त्रुट छेदे । त्रुटयति-त्रुटति । तुत्रोट । त्रुटिता ॥ तुट कलहकर्माणि । तुटति । तुटिता । तुटिष्यति ॥ चुट छुट छेदे । चुटिता । छुटति । छुटिता ॥ जुट बन्धने । जुटति । जुटिता ॥ कड मदे । कडति । अकडीत् ॥ लुठ संश्लेषणे । लुठति । लुठिता ॥ कृड घनत्वे । कृडिता ॥ कुड बाल्ये । कुडति ॥ पुड उत्सर्गे । पुडिता ॥ घुट प्रतीघाते । घुटिता ॥ स्फुर स्फुरणे । स्फुरिता ॥ स्फुल संचलने । स्फुलिता ॥

( सुबोधिनी )-कुटादेर्ञ्णिद्वर्जः प्रत्ययो ङित् ॥ कुटादेर्गणात्परः प्रत्ययो ङित् स्यात् ञितं णितं च वर्जयित्वा ॥ ङित्त्वान्न गुणः । चुकुटिथ ॥ छुर छेदने ।

य्वोर्वि हसे इत्यनेन दीर्घे प्राप्ते कुरुच्छुरोरीति निषेधः। छुर्यात्॥ त्रुट छेदे। भ्राशभ्लाशिति वा यः। त्रुट्यात्–त्रुटति॥ कडेर्धातुपाठे भ्वादौ पठितस्य पुनरत्र पाठः शतृप्रत्यये वादीपोरिति नुम्विकल्पार्थः। पूर्वपाठस्तु कडन्तीति नित्यनुमर्थः॥ कुड घनत्वे। घनत्वं सान्द्रता॥

( निर्निर्विभ्यः स्फुरतिस्फुलत्योः सस्य षो वा ) निष्ष्फुरति–निस्स्फुरति–निःस्फुरति। निष्फुरति–निस्फुरति। निष्ष्फुलति। निस्स्फुलति–निःस्फुलति। निष्फुलति–निस्फुलति॥णू स्तवने। अनुवीत्॥ धू विधूनने। अधुवीत्॥ गु पुरीषोत्सर्गे। जुगुविथ–जुगुथ। गूयात्। गुता॥ ध्रु गतिस्थैर्ययोः। ध्रुता। अध्रुषीत्॥ इति कुटादयः॥ कृती छेदने। मुचादेर्मुम्। कृन्तति। नृततृदचृतछृदकृद्भ्योऽसेः सादेरिड्वा। कर्तिष्यति–कर्त्स्यति। अकर्तीत्॥ गॄ निगरणे॥

( सुबोधिनी )–निर्निर्विभ्यः स्फुरतिस्फुलत्योः सस्य षो वा॥ एभ्यः परस्यानयोः सस्य वा षत्वं भवति॥ णू दीर्घान्तः। 'परिणूतगुणोदयः' इत्यत्र किति इतीण्निषेधः। कुटादेरिति ङित्वान्न वृद्धिः। नुधातोरित्युव्। अनुवीत्॥ लोपो ह्रस्वादिति सिलोपः। अगुताम्। वृत्ताः कुटादयः॥ कृती॥ मुचादेरिति मुम्। कृन्तति। नृततृदेति वेट्। कर्तिष्यति–कर्त्स्यति॥

( गिरतेः स्वरे रस्य लो वा ) ऋत इर्। गिरति–गिलति। गरिता-गरीता-गलिता-गलीता। अगारीत्–अगालीत्॥ स्पृश स्पर्शने। स्प्रष्टा-स्पर्ष्टा। अस्प्राक्षीत्-अस्पार्क्षीत्-अस्पृक्षत्॥ प्रच्छ ज्ञीप्सायाम्। ग्रहां ङिति च। पृच्छति। पप्रच्छिथ-पप्रष्ठ। अप्राक्षीत्॥ सृज विसर्गे। सृजति। सृजिदृशोस्थपो वेट्। ससर्जिथ–सस्रष्ठ। स्रष्टा। अस्राक्षीत्॥ टुमस्जो शुद्धौ। मज्जति। मस्जिनशोर्झसे नुम्। ममज्जिथ–ममङ्क्थ। मङ्क्ता। अमाङ्क्षीत्॥ विच्छ गतौ। आयः। विच्छायति। विच्छायांचकार–विविच्छ॥ इषु इच्छायाम्। गमां छः। इच्छति। इच्छेत्। इच्छतु। ऐच्छत्। इयेष। इयेषिथ। एषिता–एष्टा। ऐषीत्॥ विश प्रवेशने। वेष्टा। अविक्षत्॥ मृश आमर्शने। अम्राक्षीत्–अमार्क्षीत्–अमृक्षत्। रि पि गतौ। रियति। पियति। रेता। पेता॥ धि धारणे। धियति॥ क्षि निवासगत्योः। क्षियति। षू प्रेरणे। सुवति। सविता॥ कॄ विक्षेपे॥ किरति। चकार, चकरतुः, चकरुः॥

( सुबोधिनी )-गिर०॥ गिरतेः रेफस्य लत्वं वा स्यात् स्वरे परे॥ वृङ्वृञ्ऋदन्तानां वेति वा इटो दीर्घः। गरिता-गरीता॥ स्पृशकृषादीनां वेति वा रकारः। छशषेति षत्वं ष्टुत्वम्। स्प्रष्टा-स्पर्ष्टा। कृषस्पृशेति वा सिः। अनिटो नामिवत इति वृद्धिः। अस्प्राक्षीत्-अस्पार्क्षीत्। पक्षे हशषान्तादिति सक्। अस्पृक्षत्॥ प्रच्छ ज्ञीप्सायाम्। ज्ञातुमिच्छा ज्ञीप्सा। वुण्प्रत्यये प्रच्छकः। षिद्भिदामङिति भिदादित्वादङ्प्रत्यये संप्रसारणे च पृच्छा। ततो ञिर्ङितकरणे इति ञ्यन्तात् वुण्प्रत्यये तु पृच्छकः। ग्रहामिति संप्रसारणम्। पृच्छति। ऋसंयोगादित्यकित्वान्न संप्रसारणम्॥ पप्रच्छतुः स्वरान्तादव्वत इति वेट्। पप्रच्छिथ-पप्रष्ठ। सृंजिदृशोस्थपो वेति थपि वेट्। ससर्जिथ। रारो झसे दृशामिति रः। सस्रष्ठ॥ टुमस्जो शुद्धौ। द्वितोऽथुः। मज्जथुः। श्चुत्वेन सस्य शः। झबे जबा इति शस्य जः। मज्जति। मस्जिनशोरिति नुम्। स्कोरिति स-लोपः॥ मङ्क्ता॥ विच्छ॥ तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि अः न त्वप्। तेन विच्छायन्तीति विच्छायतीत्यत्र वादीपोरिति नुम्विकल्पः। आय इत्यायप्रत्ययः। विच्छायति। आयादयोऽनापि वेति वा आयः। कासादिप्रत्ययादित्याम्। यत इत्य-लोपः। विच्छायांचकार॥ इषु॥ भाष्यवार्तिकमतेऽनुदित्। गमां छ इति छः। इच्छति। इषुसहेति वेट्। एषिता-एष्टा॥ विश प्रवेशने॥ हशषान्तादिति सक्। अविक्षत्॥ मृश आमर्शने। आमर्शनं स्पर्शः। कृषस्पृशमृशेति वा सिः। कृषादीनां वेति वा रः। अम्राक्षीत्-अमार्क्षीत्। हशषान्तादिति सक्। अमृक्षत्॥ रि पि। नुधातो-रितीय्। रियति। पियति॥ कॄ॥ ॠत इतिर्। किरति। ऋसंयोगादित्याकित्वाद्गुणः। चकरतुः। वृङ्वृञ्ऋदन्तानामिति वेटो दीर्घः। करिता-करीता॥

( तत्त्वदी० )-गिरतेरिति॥ व्यवस्थितविकल्पोऽयम्। तेन गल इति कण्ठे नित्यं विषे तु गर इत्यत्र न॥ प्रच्छ॥ अथ कथं 'वक्तारं पृच्छकं श्रोतॄन्' इति। प्रच्छकमित्येव पाठ इति बहवः। पृच्छकमिति पाठे तु भिदादेराकृतिगणत्वादङि पृच्छा तत्करोतीति ञ्यन्ताद्वुणि बोध्यम्॥ विच्छ॥ तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि अ एव न त्वप्। तेन विच्छायती विछायन्तीत्यत्र वादीपोरिति नुम्विकल्पः। केचित्तु तुदादिपाठादिदमेव विकल्पयन्ति तन्मते तुदादिपाठस्य केवले विच्छती विच्छ-न्तीत्यत्र चरितार्थत्वादायप्रत्ययान्ताद्भवेव न त्वः। तेन विच्छयन्तीत्यत्र नित्यमेव नुम्॥ इषु॥ अनुदित्पाठस्तु भाष्यवर्तिकसंमतः॥ रियतीति॥ रि अ ति इति स्थिते उपधाया लघोरिति गुणः प्राप्तो बहिरङ्गत्वान्निवारितः। तथा हि। इय् अकारापेक्षत्वेन अन्तरङ्गः अल्पाश्रितत्वात्। गुणस्तु अ-कारतिबपेक्षत्वेन बहिरङ्गः बह्वपेक्षत्वात्॥

## ( उपात्किरतेः सुट् छेदेऽर्थे )

( सुबोधिनी )-उपात्किरतेः सुट् छेदेऽर्थे॥ उपोपसर्गात् परस्य किरतेः सुडा-गमः स्यात् छेदे वाच्ये नान्यत्र॥

( हिंसायां प्रतेश्च ) उपस्किरति । प्रत्यस्किरत् ॥ रुजो भङ्गे । अरौक्षीत् । अरौक्ताम् ॥ भुजो कौटिल्ये । भोक्ता । अभौक्षीत्, अभौक्ताम् ॥ छुप स्पर्शे । छोप्ता । अच्छौप्सीत् ॥ रुश रिश हिंसायाम् । रोष्टा, रोष्टारौ । अरुक्षत् ॥ रेष्टा। अरिक्षत् ॥ लिश गतौ । लेष्टा । अलिक्षत् ॥ खिद परिघाते । मुचादेर्मुम् । खिन्दति । खेत्ता । अखैत्सीत् ॥ पिश अवयवे । पिंशति । पेशिता ॥ इति पम् ॥ ॥ जुषी प्रीतिसेवनयोः । जुषते ॥ ओविजी भयचलनयोः । विजते ॥

( सुबोधिनी )–हिंसायां प्रतेश्च ॥ उपात् प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । अड्द्वित्वव्यवधानेऽपि सुट् कात्पूर्व इति वक्तव्यम् ॥ उपास्किरत् । उपचस्कार । 'उरोविदारं प्रतिचस्करे नखैः' इति माघः । कर्मणि लिट् ॥ लिश गतौ । हशषान्तादिति सक् । अलिक्षत् ॥ मुचादेरीति मुम् । खिन्दति । अयं दैन्येऽपि । दिवादौ रुधादौ च वर्तते ॥ पिश अवयवे ॥ मुचादेरिति मुम् । पिंशति । अयं दीपनायामपि । 'त्वष्टा रूपाणि पिंशतु' । दीपयत्वित्यर्थः ॥ इति सुबोधिन्यां पम् ॥ ओविजी ॥ प्रायेणायमुत्पूर्वः । उद्विजते ॥

( विजेरिडादिप्रत्ययो ङित् ) विजिता ॥ ओलजी ओलस्जी व्रीडे । लेजे । ललज्जे ॥ पृङ् व्यायामे ॥

( सुबोधिनी )–विजेरिडादिप्रत्ययो ङित् ॥ विजेः पर इडादिः प्रत्ययो ङित् । इह ओविजी तुदादिः रुधादिश्च गृह्यते, न तु विजिर् पृथग्भावे इति जुहोत्यादिः व्याख्यानात् ॥ पृङ् व्यायामे । प्रायेणायं व्याङ्पूर्वः ॥

अयकि ॥ ऋतो रिङ् भवत्यकारे प्रत्यये यकि च ॥ तुधातोः । व्याप्रियते । व्यापरिष्यते । व्यापृत, व्यापृषाताम् ॥ मृङ् प्राणत्यागे ॥

( सुबोधिनी )–अयकि ॥ निर्दिष्टत्वादृकारस्यैव रिङि सिद्धे ङकारग्रहणं व्यवधानार्थम् । तेन ये इति न दीर्घः ॥

( म्रियतेर्लुङ्लिङोश्चतुर्ष्वेवात् ) म्रियते । ममार । ममर्थ । मृषीष्ट। अमृत ॥ दृङ् आदरे । आद्रियते । आदद्रे । आदृषीष्ट । आदर्ता । आदृत ॥ धृङ् अवस्थाने । ध्रियते । अध्रियत । लोपो ह्रस्वाज्झसे । अधृत ॥ ॥ इति तुदादयः ॥

( सुबोधिनी )–म्रियतेर्लुङ्लिङोश्चतुर्ष्वेवात् ॥ मृङश्चतुर्षु लुङ्लिङोश्च परत आत्मनेपदं स्यादन्यत्र पम् । अयकीति रिङ् । तुधातोरितीय् । म्रियते । उरिति न

गुणः । मृषीष्ट । हन्नृतः स्यप इतीट् । मरिष्यति । लोपो ह्रस्वादिति सिलोपः । अमृत । शानप्रत्यये म्रियमाणः ॥ दृङ् प्रायेणाङ्पूर्वः । 'तथाद्रियन्ते न बुधाः सुधामपि' इति श्रीहर्षः ॥ इत्यात् ॥ इति सुबोधिन्यां तुदादयः ॥

( तत्त्वदी० )—कृतायामिह टीकायां लोकेशकरशर्मणा । मता भाष्यकृतो भव्या तुदादिप्रक्रिया गता ॥

इति तत्त्वदीपिकायां तुदादयः ॥ ८ ॥

---

# अथ क्र्यादयः ।

डुक्रीञ् द्रव्यविनिमये ॥ ना क्र्यादेः ॥ कर्तरि चतुर्षु ॥ क्रीणाति ॥

( सुबोधिनी )—डुक्रीञ् द्रव्यविनिमये ॥ विनिमयो व्यतिहारः ॥ ना क्र्यादेः ॥ क्रीरादिर्यस्य स क्र्यादिस्तस्मात् ना प्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु ॥

( तत्त्वदी० )—डुक्रीञ् ॥ विनिमयः परिवर्तः ॥ ना क्र्यादेः ॥ क्रीरादिर्यस्य स तथा तस्मात् ॥

ई हसे ॥ ना इत्यस्याकारस्य ई ङिति हसे ॥ क्रीणीतः ॥

( सुबोधिनी )—ई हसे ॥ ङित्यदुरित्यतो ङितीत्यनुवृत्तं नात इति च ॥

( तत्त्वदी० )—ई हसे ॥ नात इत्यनुवर्तते ॥

नातः ॥ ना इत्यस्याकारस्य लोपो ङिति स्वरे ॥ क्रीणन्ति । क्रीणीते । चिक्रयिथ–चिक्रेथ । अक्रैषीत् । अक्रेष्ट ॥ प्रीञ् तर्पणे कान्तौ च । पिप्रिये ॥ श्रीञ् पाके । अश्रैषीत ॥ मीञ् हिंसायाम् । मीनातिमिनोतीत्यात्वम् । ममौ । मिम्यतुः । ममिथ–ममाथ । मासीष्ट । माता । अमासीत् ॥ स्कुञ् आप्रवणे ॥

( सुबोधिनी )—नातः ॥ ना आत इति छेदः । ङित्यदुरित्यतो ङितीत्यनुवृत्तम् । ओर्मोरित्यतो लोप इति च । ङिति हसे ईविधानात्परिशेषात्स्वरे इति लब्धम् । ना इत्यविभक्तिकम् । आतोऽन्तोदनत इत्यति नात इत्यालोपे क्रीणते । नुधातोरितीय् । चिक्रिये । वृद्धिः । अक्रैषीत् । अक्रेष्ट ॥ प्रीञ् तर्पणे कान्तौ च ॥ कान्तिः कामना ॥ मीञ् ॥ मीनातिमिनोतीत्यात्वम् । ममौ । नुधातोरिति यः । मिम्ये । मीयात् । मासीष्ट । माता । मास्यति । मास्यते । अमास्यत् । अमास्यत । यमिरामिनमातामितीट्सकौ । अमासीत् । अमास्त ॥

( तत्त्वदी० )—नातः ॥ ना आत इति छेदः । नेत्यविभक्तिकम् । षष्ठीनिर्दिष्टत्वेनान्त्यस्यैव स्यादात इत्युत्तरार्थं स्पष्टार्थमिहैव कृतम् । हसे ईविधानात्परिशेषात्स्वर इति लभ्यत इत्याह ॥ स्वरे परे इति ॥ स्कुञ् ॥ आप्रवणमुद्धरणम् ॥

( स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यो श्नुर्ना च ) स्कुनोति, स्कुन्वन्ति। स्कुन्वीत। स्कुनुताम्। स्कुनाति। अस्कुनीत।चुस्कुविषे। अस्कौषीत् । अस्कोष्ट ॥ स्तम्भुइर् स्तुम्भु स्कम्भु स्कुम्भु रोधने। एते पवन्तः ( वेः स्तम्भादीनां सस्य षः स्यात् ) विष्टभ्नोति, विष्टभ्नाति। व्यष्टभ्नात्। वितष्टम्भ, वितष्टम्भतुः। विष्कभ्नोति ॥

( सुबोधिनी )—स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यो श्नुर्ना च ॥ स्तम्भादयश्चत्वारः सौत्राः। सर्वे रोधनार्था इत्येके। माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थः चतुर्थो धारणार्थ इत्याह। एते पवन्तः। नो लोप इति नलोपः। स्तभ्नोति, स्तभ्नाति ॥

( तत्त्वदी० )—स्तम्भु ॥ पवन्त इति ॥ पं परस्मैपदमस्त्येषामिति पवन्तः ॥

( हसादान हौ )हसान्ताद्धातोर्नास्थाने आनः स्याद्धौ परे ॥ स्तुभान। स्कभान। अस्तभत्–अस्तम्भीत् ॥ युञ् बन्धने। युनाति। योता ॥ पूञ् पवने ॥

( सुबोधिनी )—हसादान हौ ॥ हसादिति धातोर्विशेषणम्। तेन तदन्तलाभः। अत इत्यारम्भसामर्थ्यात्संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक्। स्तभान। इरितो वेति वा ङः। अस्तभत्–अस्तम्भीत् ॥

( तत्त्वदी० )—हसादान हौ ॥ हसादिति धातोर्विशेषणात्तदन्तलाभ इत्याशयेनाह—हसान्तादिति ॥ येन नाप्राप्तन्यायेन नाप्रत्ययं बाधित्वा एवायं न तुनुमपि। तेन पक्षे स्तम्नुहीत्येव ॥

प्वादेर्ह्रस्वः ॥ कर्तरि चतुर्षु ॥ पुनाति। अपावीत ॥ लूञ् छेदने। लुनाति। अलावीत् ॥ स्तॄञ् आच्छादने। स्तृणाति। तस्तार, तस्तरतुः। स्तीर्यात्। स्तरिषीष्ट–स्तीर्षीष्ट। अस्तारीत्। अस्तरिष्ट–अस्तीर्ष्ट ॥ कॄञ् हिंसायाम्। कृणाति। चकरे। करिषीष्ट–कीर्षीष्ट। अकरिष्ट–अकरीष्ट–अकीर्ष्ट। (पेसेरिटो न दीर्घः सीष्टादेश्च ) वॄञ् वरणे। वृणाति। वूर्यात्। वरिषीष्ट-वूर्षीष्ट। अवरीष्ट–अवूर्ष्ट ॥ धूञ् कम्पने। धुनाति। दुधविथ–दुधोथ। धविता–धोता। अधावीत्। अधविष्ट–अधोष्ट ॥ ग्रह उपादाने। गृह्णाति। गृहाण। जग्राह, जगृहतुः। ग्रहीषीष्ट। ग्रहीता। अग्रहीत्। अग्रहीष्ट ॥ इत्यात्मे ॥ शॄ हिंसायाम्। शृणाति ॥

( सुबोधिनी )—प्वादेर्ह्रस्वः ॥ प्वादेर्ह्रस्वो भवति चतुर्षु परेषु ॥ ऋसंयोगादित्यकित्त्वाद्गुणः। तस्तरतुः। ऋत इरितीर्। य्वोर्विः हसे इति दीर्घः। स्तीर्यात्। सीष्टादे-

श्रेतीटो न दीर्घः । स्तारिषीष्ट । वृङ्वृञृदन्तात्सिस्योरिड् वा इति वेट्पक्षे उरिति गुणो न । ऋत इरितीर् । य्योर्विहसे इति दीर्घः । स्तीर्षीष्ट । वृङ्वृञिति वेटो दीर्घः । स्तरिता-स्तरीता । पेसेरिटो न दीर्घः । अस्तारिष्टाम् ॥ वॄञ् ॥ पोरुरित्युर् य्वोर्वि हसे इति दीर्घः वूर्यात् । लुङि अवारीत् । पे सेरिति न दीर्घः । अवारिष्टाम् । आति तु वृङ्वृञ्-ऋदन्तात् सिस्योरिति वेट् । अवरिष्ट-अवरीष्ट । उरिति गुणो न । पोरुरित्युर् । य्वो-रिति दीर्घः । अवूर्ष्ट॥धूञ् ॥ स्वरतिसूतीति वेट् । दुधविथ-दुधोथ । स्तुसुधूञ्भ्यामितीट् । अधावीत् ॥ ग्रहामिति संप्रसारणम् । गृह्णाति । गृह्णीते । ईटो ग्रहामितीटो दीर्घः । ग्रहीषीष्ट । ह्म्यन्तेति न वृद्धिः अग्रहीत् । ईटो ग्रहामस्मिन्सूत्रे एकस्वराद्ग्रहेर्विहितस्येटो दीर्घ इति वक्तव्यम् । एकस्वरादिति किम् । जाग्रहिता, जाग्रहिष्यतीत्यादौ यङ्लुकि मा भूत् । ग्रहेर्विहितस्य किम् । ग्राहितः । अत्र ञेर्विहितत्वान्न दीर्घः । प्रकृतस्येटो ग्रहणात् ग्राहिष्यते इत्यादाविण्वदिटो न दीर्घः ॥ इत्यात्पे ॥

**( शॄदॄप्रां ह्रस्वो वा लिटि किति )** शशरतुः-शश्रतुः । शीर्यात् । शरिता-शरीता ॥ पॄ पालनपूरणयोः । पृणाति । पपरतुः । पूर्यात् ॥ वॄ वरणे । वृणाति । ववरतुः । वूर्यात् ॥ भॄ भर्त्सनभरणयोः । भृणाति ॥ मॄ हिंसायाम् । मृणाति ॥ दॄ विदारणे । दृणाति । ददरतुः-दद्रतुः ॥ जॄ वयोहानौ । जृणाति ॥ नॄ नये । नृणाति ॥ कॄ हिंसायाम् । कृणाति ॥ ॠ गतौ । ऋणाति । अरांचकार । ईर्यात् । अरिता-अरीता । आरीत् ॥ गॄ शब्दे । गृणाति ॥ ज्या वयोहानौ । ग्रहां ङिति च । जिनाति । जिज्यौ, जिज्यतुः । जीयात् । अज्यासीत् ॥ री गतिरेषणयोः । रिणाति । रिर्यतुः ॥ ली श्लेषणे । लिनाति । ललौ-लिलाय, लिल्यतुः । ललिथ-ललाथ-लिलयिथ-लिलेथ । लाता-लेता । अलैषीत्-अलासीत् ॥ व्ली वरणे । व्लिनाति ॥ प्लीगतौ ॥ प्लिनाति ॥ इति प्वादयः ॥ व्री वरणे । व्रीणाति ॥ भ्री भयभरणयोः । भ्रीणाति ॥ क्षीष् हिंसायाम् । एषां त्रयाणां वा ह्रस्वः ॥ ज्ञा अवबोधने । ज्ञाजनोर्जा । जानाति । जज्ञौ । ज्ञायात्-ज्ञेयात् । अज्ञासीत् ॥ बन्ध बन्धने । बध्नाति । बबन्धिथ-बबन्द्ध । बन्द्धा । भन्त्स्यति । अभान्त्सीत् । सकारलोप आदेश इति न तु मात्रविधौ । तेन अबान्धाम् ॥ मन्थ विलोडने । मथ्नाति । मथान ॥ श्रन्थ ग्रन्थ संदर्भे । श्रथ्नाति । शश्रन्थ । जग्रन्थ ॥ श्रन्थिग्रन्थी-त्यादीनां वा लिटः कित्त्वम् । शश्राथ । जग्राथ ॥ कुथ कुन्थ संश्लेषणसंक्लेशनयोः । चुकोथ । चुकुन्थ ॥ मृद मृड क्षोदे । मृदान । मृडान ॥ गुध रोषे । गुध्नाति ॥ कुष निष्कर्षे । कुषाण ॥

( सुबोधिनी )—शॄदॄप्रां ह्रस्वो वा लिटि ॥ एषां वा ह्रस्वो लिटयेव । शश्रतुः । अन्यत्र ऋसंयोगादित्यकित्त्वाद्गुणः । शशरतुः । कित इति निषेधस्य क्रादिनियमेन बाधः । शशरिव-शश्रिव । ऋत इरितीरि कृते य्वोर्वि हसे इति दीर्घः । शीर्यात् । वृङ्वृञ्भ्यामिति वेटो दीर्घः । शरिता-शरीता ॥ ऋ ॥ ऋणाति । ऋणीयात् । ऋणातु । आर्णीत् । अरांचकार । ईर्यात् । अरिता-अरीता । अरिष्यति-अरीष्यति । आरिष्यत् । आरीत् ॥ ज्या ॥ ग्रहामिति संप्रसारणम् । दीर्घस्य दीर्घे इति दीर्घे कृते प्वादेर्ह्रस्व इति ह्रस्वः । जिनाति ॥ री गतिरेषणयोः । रेषणं वृकशब्दः । लीलीङोरित्यात्वं वा । ललौ-लिलाय । लेता । इति ल्वादयः । प्वादयोऽपि ॥ क्षीष् ॥ षित्त्वादङ् । क्षिया । ज्ञाजनोर्जेति जादेशः । जानाति ॥ बन्ध । नो लोप इति नलोपः । बध्नाति । हसादान हावित्यानः । अत इति हेर्लुक् । बधान । आदिजबानामिति भत्वम् । भन्त्स्यति । सावनिटो नित्यमिति वृद्धिः । अभान्त्सीत् । तथोर्ध इति तस्य धत्वम् । झसादिति सिलोपः । अबान्धाम् । अभान्त्सुः ॥ श्रन्थ विमोचनप्रतिहर्षयोरित्यस्य श्रन्थ ग्रन्थ-संदर्भे इत्यर्थभेदात् श्रन्थेः पुनः पाठः । श्रन्थग्रन्थीत्यादिना कित्त्वपक्षे एत्वपूर्वलोपाव-प्यत्र वक्तव्याविति हरदत्तादयः । श्रेथतुः, श्रेथुः । इदं कित्त्वं पितामपीति सुधाकरमते श्रेथिथ । अस्मिन्नपि पक्षे णपि शश्रांथ । उत्तमे तु शश्राथ, शश्रथेति माधवः । तत्र मूलं मृग्यम् ॥ मृद मृड क्षोदे । ष्टुत्वम् । मृड्नाति ॥ कुष निष्कर्षे ॥ अन्तर्गतस्य बहि-र्निष्कासनं निष्कर्षः ॥

( निरः कुषो वसादेरनपीड्वा ) निष्कोषिता-निष्कोष्टा । निर-कोषीत-निरकुक्षत् ॥ क्षुभ संचलने (क्षुभ्नादिषु न णत्वम्) क्षुभाण ॥ णभ तुभ हिंसायाम् । नभान । तुभान ॥ क्लिशू विबाधने । क्लि-श्नाति । अक्लेशीत् । अक्लिक्षत् ॥ अश भोजने । अश्नाति । आ-शीत् ॥ उध्रस् उञ्छे । ध्रस्नाति । उकारो धात्ववयव इत्येके । उध्र-सांचकार । औध्रासीत्-औध्रसीत् ॥ विष विप्रयोगे । विषाण । वेष्टा । अविक्षत् ॥ पुष पुष्टौ । पोषिता ॥ मुष स्तेये ॥ खच् खव् हिठ् भूतप्रादुर्भावे । खच्नाति ॥

( सुबोधिनी )—निरः कुषो वसादेरनपीड्वा ॥ निर्पूर्वात् कुषेः परस्य वसा-दिप्रत्ययस्य इड्वा स्यात् अनपि ॥ इडभावे हशषान्तादिति सक् । निरकुक्षत् ॥ क्षुभ्ना-दिषु न णत्वम् । क्षुभ्नादिराकृतिगणः ॥ णभ तुभ भ्वादौ दिवादौ च ॥ क्लिशू विबाधने । न शादिति श्चुत्वनिषेधः । क्लिश्नाति । ऊदितो वेति वेट् । अक्लेशीत् । इडभावे हशषान्ता-दिति सक् । अक्लिक्षत् ॥ पुष पुष्टौ ॥ अनिदकेषु पुष्यतीति यप्रत्ययेन निर्देशादयं सेडिति भावः । पोषिता ॥ खच् खव् हिठ् भूतप्रादुर्भावे । भूतप्रादुर्भावः अतिक्रान्तोत्पत्तिः । श्चुत्वम् । खच्नाति ॥

( तत्त्वदी० )—खच् इति ॥ भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः॥ खच्ञातीति ॥ स्तोः श्चुभिश्चुरिति ञः ॥

**( खवो वस्य औ ने ) खौनाति । हिठ्णाति ॥ इति पम् ॥ वृङ् संभक्तौ । वृणीते । वव्रे । वरिषीष्ट—वृषीष्ट । अवरिष्ट—अवृत ॥ ॥ इति क्र्यादयः ॥**

( सुबोधिनी )—खवो वस्य औ ने ॥ खवेर्धातोर्वकारस्य औत्वम् भवति नाप्रत्यये परे॥ परत्वादौत्वे हसान्तत्वाभावात् हसादान हाविति न। खौनीहि। ष्टुत्वम्। हिठ्णाति ॥ ॥ इति पम् ॥ वृङ् संभक्तौ ॥ संभक्तिर्भजनम्। क्रादेरीति नेट्। ववृषे ॥ वृङ्वृञ्ॠदन्तात्सिस्योरिड् वा। वरिषीष्ट—वृषीष्ट। वृङ्वृञ्ॠदन्तानामिति वेटो दीर्घः। वरिता—वरीता। इडभावे लोपो ह्रस्वादीति सिलोपः। अवृत। इत्यात् ॥ इति सुबोधिन्यां क्र्यादयः ॥

( तत्त्वदी० )—कृतायामिह टीकायां लोकेशकरशर्मणा। बाधनं दुष्टबुद्धीनामगमत्क्र्यादिसाधनम्॥

इति तत्त्वदीपिकायां क्र्यादयः ॥ ९ ॥

---

# अथ चुरादयः।

**चुर स्तेये ॥ चुरादेः ॥ स्वार्थे ञिः ॥ चोरयति। चोरयते। चोरयांचकार। चोर्यात्। अचूचुरत् ॥ चिति स्मृत्याम्। चिन्तयति। अचिचिन्तत्। चुरादेर्ञिर्वेति केचित् ॥ चिन्तति ॥ यत्रि सङ्कोचने। यन्त्रयति। अययन्त्रत ॥ ओलडि उत्क्षेपणे। ओलण्डयति। ओलण्डति। ओलण्डांचकार। औललण्डत्। ओकार इदित्येके। लण्डयति। अललण्डत्।लण्डति अलण्डीत् ॥ पीड अवगाहे। पीडयति। पीडयते। पीडयांचक्रे ॥**

( सुबोधिनी )—चुर स्तेये॥ चुरादेः ॥ स्वार्थे ञिः ॥ चुर आदिर्यस्य स चुरादिस्तस्मात् चुरादेर्गणात् स्वार्थे ञिः स्यात् ॥ उपधाया लघोरिति गुणः। धातुत्वात् तिप् गुणायादेशौ। 'ञित्स्वरितेत उभे' इत्युभयपदम्। चोरयति। चोरयते। चोरयेत्। चोरयेत। चोरयतु। चोरयताम्। अचोरयत्। अचोरयत। चोरयामास। चोरयांचक्रे। ञेरिति। ञिलोपः। चोर्यात्। चोरयिषीष्ट। चोरयिता। चोरयिष्यति।चोरयिष्यते। अचोरयिष्यत्। अचोरयिष्यत। लुङि अचूचुरत्। अचूचुरत ॥ चिति स्मृत्याम्। चिन्तेति पठितव्ये इदित्करणं ञिप्रत्ययस्य पाक्षिकत्वे ज्ञापकम्। सर्वेऽपि चुरादयो विकल्पेन ञिप्रत्ययं लभन्ते इत्यर्थः। तेन चिन्त्यात्, चिन्त्यते इत्यादौ 'न लोपः' इत्यनेन लोपो न ॥ यत्रि संकोचने। यन्त्रेति पठितुं शक्यम्। यत्तु इदित्करणा-

द्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम् । यन्त्र इत्यत्र नकारे पठितेऽपि नो लोप इति नलोपो न लभ्यते नकारस्यानुपधात्वात् । चिन्त्यादित्यत्र तु चिन्त स्मृत्यामिति नकारोपधपाठे नस्य लोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः ॥ ओलडि उत्क्षेपणे ओदित्करणं ल्वाद्योदितश्चेति धातोरव्यवहितस्य तकारस्य नत्वार्थमिति तद्बलात् नेडित्येके । ओदिद्बलादिड्व्यवधानेऽपि नत्वमित्यन्ये । लण्डिनः ॥

( तत्त्वदी० )—**चुरादेः** ॥ चुर आदिर्यस्य स तस्मात् । तद्गुणसंविज्ञानो बहुव्रीहिः । अनुद्भूतावयवभेदसमुदायस्यान्यपदार्थत्वेनाश्रयणादेकवचनम् । ननु धातोः प्रेरणे इत्यनेनैव चुरादेरपि स्यात्किमनेनेत्यत आह—**स्वार्थे** इति ॥ **ञिर्वेति** ॥ अयं भावः । चिंतेति पठितव्ये इदित्करणं ञेः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यादित्यादौ नलोपो न ॥ **यत्रि** ॥ यन्त्रेति पठितुं युक्तम् । इदित्त्वाभावेऽपि उपधाभूतनकाराभावे नलोपाभावात् ॥

## ( भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वोऽङ्परे ञौ )

**अपीपिडत्—अपिपीडत् ॥ प्रथ प्रख्याने । प्राथयति ॥**

( सुबोधिनी )—**भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वोऽङ्परे ञौ** ॥ एषामुपधाया ह्रस्वो वा स्यात् अङ् परो यस्मात् सोऽङ्परस्तस्मिन् ञिप्रत्यये परे ॥ भ्राजृ भासृ दीप्तौ । भाष व्यक्तायां वाचि । दीपी दीप्तौ । जीव प्राणधारणे । मील निमीलने । पीड अवगाहे । ह्रस्वपक्षे लघोर्दीर्घ इति पूर्वस्य दीर्घः । अपीपिडत् । ह्रस्वाभावे अपिपीडत् ॥ प्रथ प्रख्याने । प्रख्यानं कथनम् । स्वार्थे ञौ ज्ञपादिम्य इति वक्ष्यमाणेन मित्त्वाभावान्न ह्रस्वः । प्राथयति ॥

## ( स्मृद्दृत्वरप्रथम्रदस्तॄस्पशां पूर्वस्याऽदङ्परे ञौ इत्वापवादः )

**अपप्रथत् ॥ पृथ प्रक्षेपे । पर्थयति ॥**

( सुबोधिनी )—**स्मृद्दृत्वरप्रथम्रदस्तॄस्पशां पूर्वस्यादङ्परे ञौ इत्वापवादः** ॥ एषां द्वित्वे पूर्वस्य अत्वं स्यात् अङ्परे ञौ । अङि लघावित्यस्यापवादः ॥ स्मृ चिन्तायाम् । दॄ भये । ञित्वरा संभ्रमे । प्रथ प्रख्याने । म्रद मर्दने । स्तॄञ् आच्छादने । स्पश बाधनग्रन्थनयोः ॥

## ( उपधाया ऋवर्णस्य ऋद्वाङ्परे ञौ इररारामपवादः )

**अपीपृथत्—अपपर्थत् ॥ भक्ष अदने । अबभक्षत् ॥ श्रण दाने । विश्राणयति । अशिश्रणत्—अशश्राणत् ॥ तड आघाते । अतीतडत् ॥**

( सुबोधिनी )—**उपधाया ऋवर्णस्य ऋद् वाङ्परे ञौ इररारामपवादः** ॥ धातोरुपधाऋवर्णोपधस्य धातोरुपधाया ऋद्वा स्यात् अङ्परे ञौ इररारामपवादः ॥ धातोरुपधाया ऋत इरीति । अचीकृतदित्यादौ इर्प्राप्तः,अमीमृजदित्यत्र मृजेर्वृद्धिरित्यार् प्राप्तः, इत-

रेषामृदुपधानामुपधाया लघोरिति अपीपृथदित्यादावर प्राप्त इति विवेकः ॥ श्रण दाने॥ प्रायेणायं विपूर्वः । विश्राणनं वितरणम् ॥

(तत्त्वदी०)—इरराराामिति ॥ दीर्घोपधे उपधाया ऋत इति इर् प्राप्तः । मृजेर्वृद्धिरित्यार् प्राप्तः लघूपधत्वे त्वर् प्राप्तः ॥

**ज्ञप ज्ञानज्ञापनयोर्मित् ।**

(सुबोधिनी)—ज्ञप ज्ञानज्ञापनयोर्मित् ॥ ज्ञप धातुर्ज्ञाने ज्ञापने च ञिप्रत्ययं लभते मित्संज्ञकश्च । 'प्रतिपज्ज्ञप्तिचेतनाः' ॥

**मितां ह्रस्वः ॥ मितां धातूनामुपधाया ह्रस्वो ञौ ॥ ज्ञपयति । अजिज्ञपत् ॥**

(सुबोधिनी)—मितां ह्रस्वः ॥ म् इत् येषां ते मितः तेषाम् ॥ घटादयो मित इत्यादिमित्संज्ञकानां ग्रहणम् ॥

(तत्त्वदी०)—मितां ह्रस्वः ॥ म् इत् येषां ते तथा तेषाम् ॥

**यम वेष्टने मित् । यमयति । अयीयमत् ॥**

(सुबोधिनी)—यम वेष्टने मित् ॥ चुरादौ यमधातुर्वेष्टने मित् न तु भोजने । यमयति चन्द्रम् । परिवेष्टते परिवेषं करोतीत्यर्थः । यमधातुश्चुरादौ घटादौ च । घटादौ तु यच्छतिर्भोजनतोऽन्यत्र मिन्नेति भोजने एव मित्संज्ञकः । यमयति ब्राह्मणान् भोजयतीत्यर्थः । अन्यत्र आयामयति द्राघयति व्यापारयति वेत्यर्थः । जनी जॄषित्यमन्तत्वादेव सर्वार्थेषु मित्त्वे सिद्धे विशेषार्थं वचनम् ॥

(तत्त्वदी०)—यमयति ॥ परिवेष्टत इत्यर्थः ॥

**चह चप परिकल्कने मित् । चहयति । अचीचहत् । चपयति । अचीचपत् ।**

(सुबोधिनी)—चह चप परिकल्कने मित् । परिकल्कनं दम्भः शाठ्यं च । अदन्तेषु कथादिषु वक्ष्यमाणस्य तु अदन्तत्वेनाग्वृलोपित्वान्नाङ्कार्यम् । अचचहत् ॥

(तत्त्वदी०)—परिकल्कने ॥ परिकल्कनं दम्भः शाठ्यं च । कथनमित्यन्ये ॥

**रह त्यागे मित् । रहयति । अरीरहत् ॥**

(सुबोधिनी)—रह त्यागे मित् ॥ कथादेस्तु अररहत् ॥

**बल प्राणने मित् । बलयति । अबीबलत् ॥**

**चिञ् चयने मित् ।**

(सुबोधिनी)—चिञ् चयने मित् ॥ रचनायां मिदयम् ॥

**( चिस्फुरोर्णौवात्वं वा )**

( सुबोधिनी )—चिस्फुरोर्णावात्वं वा ॥ अनयोरात्वं वा स्यात् ञिप्रत्यये परे ॥

**रातो ञौ पुक्** ॥ ऋधातोरादन्तस्य च पुक् ञौ ॥ चपयति । अचीचपत् । चययति । अचीचयत् ॥ स्वार्थे ञौ ज्ञपादिभ्योऽन्ये मितो न ॥ कृत संशब्दने ॥

( सुबोधिनी )—रातो ञौ पुक् ॥ आ च आश्चानयोः समाहारो रात् तस्य आत्वे पुकि ह्रस्वे चपयति । आत्वाभावे चययति । स्वार्थे ञौ ज्ञपादिभ्योऽन्ये मितो न । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न । मुख्यमते पञ्च ज्ञपादयः । मतान्तरे सप्त । कृत संशब्दने ॥

( तत्त्वदी० )—रातो ञौ—॥ आ च आच्च रात् तस्य रातः । ऋ इत्यनेनोभयोरपि ग्रहणम् । तेन ऋच्छन्तम् इयूतं वा प्रेरयतीति विग्रहे अर्पयतीति भवति ॥ ज्ञपादिभ्य इति ॥ सप्तम्य इति मतान्तरं बोध्यम् । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न ॥

**( धातोरुपधाया ऋत इर् )** कीर्तयति । अचीकृतत् । अचीकीर्तत ॥

( सुबोधिनी )—धातोरुपधाया ऋत इर् ॥ ननु ऋत इर् इति सूत्रे धातोर्ऋत इर् इति व्याख्याने सिद्धमिष्टं किमनेन सूत्रेणेति चेन्मैवम् । तथाहि सति ऋकारीयति इत्यत्रापि इर्प्रसंगः स्यात् । उपधाया ऋवर्णस्य ऋद्धेति पक्षे अङि लघौ ह्रस्व इति इत्वे कृते लघोर्दीर्घ इति दीर्घः । अचीकृतत् । पक्षे अचिकीर्तत् ॥

**( आकुस्मादात्मनेपदिनः )** चित संचेतने । चेतयते । अचीचितत ॥ दशि दंशने । दंशयते । अददंशत । आकुस्मीयमात्मनेपदं ञिसन्नियोगेनैव ॥ दंशति । नलोपो न सञ्जिसाहचर्यात् भ्वादेरेव तत्र ग्रहणात् ॥ तत्रि कुटुम्ब धारणे । तन्त्रयते । कुटुम्बयते । अततन्त्रत । अचुकुटुम्बत ॥ मन्त्रि गुप्तभाषणे । मन्त्रयते । शम् लक्ष आलोचने । शामयते । लक्षयते । अशशिमत । अललक्षत ॥ दिवु परिकूजने । देवयते ॥ गृ विज्ञाने । गारयते । अजीगरत ॥ विद चेतनाख्याननिवासेषु । वेदयते । अवीविदत ॥

( सुबोधिनी )—आकुस्मादात्मनेपदिनः ॥ कुस्मनाम्नो वेति वक्ष्यते तमभिव्याप्येत्यर्थः । परगामिफलार्थमिदमात्मनेपदम् ॥ चित संचेतने ॥ संचेतनं मूर्छाद्यवस्थानिवृत्त्युत्तरकालिकं ज्ञानम् । शम् लक्ष आलोचने । ननु 'निशामय तदुत्पत्तिम्' इति कथं संगच्छते । आकुस्मीयत्वादात्मनेपदे निशामयस्वेति रूपस्य सर्वसंमतत्वादिति । यदि शमु उपशमे इत्यस्मात् ञिप्रत्ययस्तर्ह्यमन्तत्वान्मित्त्वे सति ह्रस्वेन भाव्यम् । अत्राहुः । स्वार्थञ्यन्तादस्माद्धातोः प्रेरणे इति ञिप्रत्यये निशामयेति रूपं जानीहि । न चार्थासंगतिरिति वाच्यम् । निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते इति सिद्धान्तात् ।

स्वार्थे ञौ ज्ञपादिभ्य इति मित्त्वनिषेधः । शामयते ॥ विद चेतनाख्याननिवासेषु । "सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे । विन्दते विन्दन्ति प्राप्तौ याव्लुङ्मेष्विदं क्रमात् ॥ १ ॥"

( तत्त्वदी० )–शामयत इति ॥ आकुस्मीयत्वादात् । निशामय तदुत्पत्तिमिति तु निवृत्त प्रेरणात् 'धातोः प्रेरणे' इति प्रेरणे ञौ बोध्यम् । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः ॥

**कुस्मनाम्नो वा ॥** कुस्मेति धातुः कुत्सितस्मयने ॥ अथवा कुस्मेति नाम ततो ञिः । कुस्मयते । अचुकुस्मत ॥ कण निमीलने । काणयति । अचीकणत्–अचकाणत् ॥

( सुबोधिनी )–कुस्मनाम्नो वा ॥ कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे समासे च कृते निष्पन्नं कुस्मेति नाम ॥ कण निमीलने । एकनेत्रनिमीलने एवायं शब्दस्वभावात् । काण्यादीनां कणरणभणेति सूत्रेण आङि लघौ ह्रस्व इति ह्रस्वो विकल्प्यते । अचीकणत्–अचकाणत् ॥

( तत्त्वदी० )–निमीलने ॥ स्वभावादेकनेत्रस्यैव ॥

**( नवगण्यामुक्तेभ्यो हिंसार्थेभ्यः स्वार्थे ञिः )** हिंसि हिंसायाम् । हिंसयति ॥ ज्ञा नियोगे आज्ञापयति । अजिज्ञपत् ॥ भू मिश्रीकरणचिन्तनयोः । भावयति । अबीभवत् ॥ लोकृ लोचृ परिभाषणे ॥

( सुबोधिनी )–नवगण्यामुक्तेभ्यो हिंसार्थेभ्यः स्वार्थे ञिः ॥ नवगण्यामुक्ता हिंसार्थाः स्वार्थे ञिप्रत्ययं लभन्ते । घातयति हन्तीत्येतौ समानार्थौ ॥ भू मिश्रीकरणचिन्तनयोः । भावयति मिश्रीकरोति चिन्तयति वेत्यर्थः ॥

**न ऋितः ॥** ऋदितः शासेश्चाङ्युपधाया ह्रस्वो न ॥ अलुलोकत् । अलुलोचत् ॥ धूञ् कम्पने ॥

( सुबोधिनी )–न ऋितः ॥ ऋ इद्यस्य स ऋित् तस्य । शासु अनुशिष्टौ ॥

**( धूञ्प्रीञोर्नुक् ञौ )** धूनयति । अदुधूनत् ॥ प्रीञ् तर्पणे । प्रीणयति । अपिप्रीणत् ॥

( सुबोधिनी )–धूञ्प्रीञोर्नुक् ञौ ॥ अनयोर्नुगागमः स्यात् ञिप्रत्यये ॥ धूञ् कम्पने । प्रीञ् तर्पणे । धूञ धातुः स्वादौ क्र्यादौ तुदादौ चुरादौ च । स्वादौ ह्रस्वश्च । तथा च कवि रहस्ये काव्ये । "धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ॥ वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च॥ १॥

अथादन्ताः ॥ कथ वाक्यप्रबन्धने । यत इत्यल्लोपस्य स्थानिवत्त्वेन न वृद्धिः । कथयति ॥

( सुबोधिनी )—अथादन्ताः ॥ वक्ष्यमाणेषु धातुषु अन्त्यावयवोऽकारो विवक्षितो न तूच्चारणार्थ इत्यर्थः ॥ कथ वाक्यप्रबन्धे ॥ यत इत्यल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति ॥

( तत्त्वदी० )—कथ ॥ अदन्तप्रयोजनमाह—अल्लोपेति ॥

( अग्वृलोपिनो नाङ्कार्यम् ) अचकथत् ॥ वर ईप्सायाम् । वरयति । अववरत् ॥ गण संख्याने । गणयति । गणेः पूर्वस्य ईद्वाङ्परे ञौ । अजीगणत् ॥ स्तन गदी देवशब्दे । स्तनयति । गदयति । अतस्तनत् । अजगदत् ॥ पत गतौ । वा ञ्यन्तः । पतयति । पतति । पतांचकार । पतयांचकार । अपपतत् । अपतीत् । वादन्त इत्येके । पातयति । अपीपतत् ॥ रच प्रतियत्ने । रचयति ॥ सूत्र वेष्टने । सूत्रयति । असुसूत्रत ॥ मूत्र प्रस्रवणे । मूत्रयति ॥ कल गतौ संख्याने च । कलयति ॥ स्पृह ईप्सायां च । स्पृहयति । अपस्पृहत् ॥ भाम क्रोधे । भामयति । अबभामत् ॥ सूच पैशुन्ये । सूचयति ॥ ऊन परिहाणे । ऊनयति । ञिनिमित्तः स्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् । औननत् ॥ अर्थङ् याचने । अर्थयते । आर्तथत ॥ संग्राम युद्धे । अससंग्रामत ॥ अन्ध दृष्ट्युपघाते । अन्धयते । अन्धयति । आन्दधत् ॥ अङ्क अङ्ग पदे लक्षणे च । आञ्चकत् । आञ्जगत् ॥ इति चुरादयः ॥

( सुबोधिनी )—अग्वृलोपिनो नाङ्कार्यम् ॥ अश्च इश्च उश्च आ च तेषां समाहारोऽग्वृ अग्वृणो लोपो अस्यास्तीति अग्वृलोपी तस्य अइउऋलोपिनो धातोरङ्निमित्तं कार्यं न स्यात् । तत्किम् । अङि लघौ ह्रस्व इत्युपधाह्रस्वत्वं पूर्वस्येत्वं च लघोर्दीर्घ इति दीर्घः अङ्कार्यम् ॥ पत गतौ इति ॥ वा ञ्यन्तः ॥ वाऽदन्त इत्येके । आद्ये पतयति । पतति । अनेकस्वरत्वात्कासादिप्रत्ययादित्याम् । पतांचकार । यत इत्यल्लोपः । अपतीत् । द्वितीये तु पातयति । अपीपतत् ॥ स्तन गदी देवशब्दे ॥ स्तनादेर्ञ्यन्तादित्नुरितीत्नुः । 'स्तनयित्नुर्बलाहकः' । सप्रत्यये तु तिस्तनयिषति ॥ रच प्रतियत्ने ॥ प्रतियत्नो गुणाधानम् ॥ स्पृह ईप्सायाम् ॥ आप्तुमिच्छा ईप्सा ॥ भाम क्रोधे ॥ अबभामदित्यत्राल्लोपस्य स्थानिवत्त्वात् ञौ अङि लघौ ह्रस्व इति ह्रस्वो न ॥ सूच पैशुन्ये ॥ पिशुनो दुर्जनस्तत्कर्म पैशुन्यम् । लुङि असुसूचत् ॥ ऊन परिहाणे ॥ ञिनिमित्तः स्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् । ञिप्रत्ययो निमित्तं यस्य ईदृशः स्वरस्थाने आदेशः स स्थानिना तुल्यः स्थानिवद्भवति द्वित्वे कर्तव्ये । स्वरादेः पर इत्यनेन न शब्दस्य द्वित्वम् । उत्तरखण्डे यत इति अल्लोपः । औननत् ॥ अर्थङ् याचने ॥ कथादिषु उपधावृद्धिदीर्घपूर्वेत्वविरहेण भामप्रभृतीनामुपधाह्रस्वस्य निषेधेन गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनादन्तत्वं सार्थकम् । इह त्वदन्तत्वे प्रागुक्तफलाभावा

किमर्थमदन्तत्वमुच्यते । वोपदेवस्तु धातोर्नामिन इति वृद्धौ कृतायां रातो ञौ पुकि अर्थापयते इति रूपमाह । शाकटायनस्तु कथादीनां सर्वेषां पुकमाह । तन्मते कथापयति । गणापयतीत्यादि ॥ ॥ इति सुबोधिन्यां चुरादयः ॥

( तत्त्वदी० )-प्रयोजनान्तरमाह-**अय्वृलोपिन** इति ॥ अश्च इश्च उश्च आ च ते तथा तान् लोपयतीति स तथा तस्य अङ्कार्यं न । द्वित्वे सतीकारदीर्घत्वादि न ॥ **गण संख्याने** । संख्यानिमित्तो ज्ञानविशेषः संख्यानमेकत्वादि । तेन च तन्निष्ठः क्रियाविशेषो लक्ष्यते ॥ अङ्क अङ्ग पदे लक्षणे च । लक्षणं चिह्नकरणम् ॥ ॥ इति तत्त्वदीपिकायां चुरादयः ॥१०॥

कृतायामिह टीकायां लोकेशकरशर्मणा ।
इयं दशगणी पूर्णा माननीया मनीषिभिः ॥

# अथ ञ्यन्तप्रक्रिया ।

**धातोः प्रेरणे** ॥ धातोः प्रयोजकव्यापारेऽर्थे ञिप्रत्ययः ॥ भवन्तं प्रेरयति । भावयति । भावयते । भावयांचकार ॥

( सुबोधिनी )-धातोः प्रेरणे ॥ प्रयोजकः प्रेरकः स च चेतनाचेतनसाधारण्येन विवक्षितः । स च क्वचित्सिद्धः क्वचित् फलरूपः । देवदत्तः पाचयति, गमयतीत्यादौ सिद्धः । भिक्षा वासयति, संग्रामो वासयतीत्यादौ तु फलरूपः । तस्य व्यापारः प्रेरणम् । भृत्यादेर्निकृष्टस्य प्रवर्त्तना प्रेरणमाज्ञेत्यर्थः । धातोर्ञिः प्रत्ययः स्यात्प्रेरणेऽर्थे । ननु यदि धातोः प्रेरणे ञिर्भवति लोट् च तदा ञेर्लोटश्च पर्यायता स्यात् । ततश्चेदानीं पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति ञिप्रत्ययेनापि प्रयुज्येतेति चेन्मैवम् । प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठप्रवृत्तिः सा ञिप्रत्ययस्यार्थः । प्रयोज्यप्रवृत्त्यनुपहिता प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः । उक्तं च । "द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोङ् विधीयते । सक्रियस्य यदि प्रषस्तदा स विषयो णिचः ॥" भवन्तं प्रेरयति भावयति । ञित्स्वरितेत उभे इत्युभयपदम् । भावयते । भावयेत् । भावयेत । भावयतु । भावयताम् । अभावयत् । अभावयत । कासादिप्रत्ययादित्याम् । भावयांबभूव । भावयांचक्रे । ञेरिति ञिलोपः । भाव्यात् । भावयिषीष्ट । भावयिता । भावयिष्यति । भावयिष्यते । अभावयिष्यत् । अभावयिष्यत ॥

( तत्त्वदी० )-दशगणीं निरूप्य स्वार्थञिप्रसंगात्प्रेरणार्थे ञिं दर्शयति-**धातोः प्रेरणे** ॥ प्रेरणं चानेकविधम् प्रेषणाध्येषणतत्समर्थाचरणभेदात् । तत्र भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणमाज्ञेति यावत् । गुर्वादेः प्रवर्तनाध्येषणं प्रार्थनेति यावत् । तत्समर्थाचरणं तदनुकूलव्यापारकरणम् । तच्चानुमित्युपदेशानुग्रहान्नदानादिरूपम् । तत्र यस्यानुमतिं विनार्थो निवर्तते तस्य राजादेरनुमत्या प्रयोजकत्वम् । वैद्यादेस्तूपदेशेन पलायमानं निरोधेनानुग्रहेण चौरस्यान्नदानेन सर्वश्चायं प्रकरणादिलभ्यः । स-

र्वत्रानुगतप्रेरणमात्रं ण्यर्थः। अथ पृच्छतु मां भवानित्यत्रास्त्विति चेदुच्यते। प्रयोज्यप्रवृत्त्युपहितप्रयुक्तिर्ण्यर्थः। केवला तु लोडर्थ इति। उक्तं च। "द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते। सक्रियस्य यदा प्रैषस्तदा स विषयो णिचः" इति॥ अथ कथं भिक्षा वासयति, कारीषोऽग्निरध्यापयतीत्यत्र ञिः भिक्षादेश्चाचेतनतया प्रेरणस्य च चेतनधर्मत्वात् इति चेत् शृणु। अत्राप्यानुकूल्याचरणमेव प्रयोजकव्यापारत्वेनाध्यारोप्यते। यतो भिक्षा अपि प्रचुरा व्यञ्जनवत्यश्च लभ्यमाना वासं प्रयुञ्जते। तथा कारीषोऽग्निरेकान्ते निर्वाते प्रज्वलितः शीतकृतमुपद्रवमध्ययनविरोधिनमपनीयाध्ययनेऽनुकूलो भवतीति। ञित्वादुभयपदमाह—**भावयती**त्यादि॥

**( अङ्सयोः पूर्वस्योकारस्येत्वम् पवर्गयलजकारेष्ववर्णपरेषु परतः ) अबीभवत्॥ मूङ् बन्धने। मावयति। अमीमवत्॥ यावयति। अयीयवत्॥ अरीरवत्॥ लावयति। अलीलवत्॥ अजीजवत्॥**

( सुबोधिनी )—अङ्सयोः पूर्वस्योकारस्येत्वं पवर्गयलजकारेष्ववर्णपरेषु परतः॥ द्वित्वपूर्वरूपस्य उत इत्वं भवति अवर्णः परो येभ्यस्तेऽवर्णपरास्तेषु पवर्गयलजेषु परेषु॥ अवर्णपरेषु किम्। बुभूषति॥ पवर्गयलजेषु किम्। ऊर्णुनुविषति॥ भू सत्तायाम्। एरङ् द्विश्चेति अङि कृते द्वित्वे च भूभू इति जातं तत उत्तरस्य वृद्ध्यावादेशौ ततोऽङि लघौ ह्रस्वे कृते अङ्सयोरिति पूर्वस्येत्वं ततो दीर्घः। अबभवत्। अबीभवत॥ मूङ् बन्धने। अमीमवत्॥ यु मिश्रणे। अयीयवत्॥ रु शब्दे। अरीरवत्॥ लूञ् छेदने। अलीलवत्॥ जु गतौ। सौत्रोऽयं धातुः। अजीजवत्॥

**( स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनामङ्सयोः पूर्वस्येत्वं वावर्णपरे धात्वक्षरे परे ) असिस्रवत्—असुस्रवत्। अशिश्रवत्—अशुश्रवत्। अदिद्रवत्—अदुद्रवत्। अपिप्रवत्—अपुप्रवत्। अपिप्लवत्—अपुप्लवत्। अचिच्यवत्—अचुच्यवत्। न रितः। अशशासत्। अडुढौकत॥**

( सुबोधिनी )—स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनामङ्सयोः पूर्वस्येत्वं वावर्णपरे धात्वक्षरे परे॥ सृ गतौ। श्रु श्रवणे। द्रु गतौ। प्रुङ् प्लुङ् च्युङ् गतौ। अक्षरशब्दोऽत्रावर्णपरः॥ अवर्णपरे किम्। शुश्रूषति॥ अपिप्रवत्—अपुप्रवत्। अपिप्लवत्—अपुप्लवत्। अचिच्यवत्—अचुच्यवत्॥

**( ञ्यन्तात् ञिः ) चोरयति। अचूचुरत॥**

( सुबोधिनी )—ञ्यन्तात् ञिः॥ स्वार्थञ्यन्ताद्धातोर्ञिः स्यात् प्रेरणे॥ अपवादत्वाद्वृद्धिं बाधित्वा ञेरिति ञिलोपः। चोरयति। लुङि अङि लघोर्ह्रस्व इति ह्रस्वः।

लघोर्दीर्घ इति दीर्घः । नन्वग्लोपित्वाद् द्वयोरप्यसंभवः ततश्च अचुचोरदित्येव रूपं स्यात् । उच्यते । अङ्गाक्षिप्तस्य ञेर्निमित्तत्वेनाश्रयणान्नासंभवः ॥

( तत्त्वदी० )–अचूचुरदिति ॥ अत्र ञेरिकारस्य लोपेऽपि अग्लोपिनो नाङ्कार्यमिति निषेधो न शङ्क्यः अङ्गाक्षिप्तस्य ञेर्निमित्तत्वेनाश्रयणात् । तथाहि । ञिजातिरेका निमित्तत्वेनाश्रिता । तथा च तस्या एकत्वाद्गोबलीवर्दन्यायेन ञ्याक्षेतरन्यस्यलोपः प्रतिषेधविषयत्वेनाश्रीयत इत्यर्थः । यत्तु कैश्चिदुक्तं परत्वादादौ वृद्धौ सत्यामैकारस्य लोपेऽग्लोपित्वाभावादेवाङ्कार्यमिति तन्न । सर्वविधिभ्यो लोपविधिर्बलीयांस्तस्य सर्वसंमतत्वात् ॥

हनो घत् ॥ हन्तेर्घदादेश इणवर्जिते ञ्णिति ॥ घातयति । अजीघतत् ।

( सुबोधिनी )–हनो घत् ॥ ञिति णिति च प्रत्यये हन्तेर्घदादेशः स्यात् इणप्रत्यये णप्प्रत्यये च परे न ॥ घातः । घञ् ॥ घातकः । वुण् ॥ ञ्णिति किम् । हन्ता ॥

( तत्त्वदी० )–हनो घत् इति ॥ हनो घदादेश इत्यादिव्याख्यानं तु प्राचामनुरोधेन । व्याख्यानं त्वीदृशम् । हश्च न् चानयोः समाहारो हन् तस्य । घश्च त् चानयोः समाहारो घत् । हनो घ्न इत्यतो हन इत्यनुवृत्तेः हन्तेर्हस्य घो ञ्णिति तस्य न् च तो भवति ञ्णिति । न चेति निषेधादिण्वर्जनम् । एतेन हनो घ्न इत्यतो हनोऽनुवृत्तेर्घत्वसिद्धेश्चोभयं व्यर्थमित्युक्तिरपि परास्ता ॥

शदेरगतौ तो ञौ ) शातयति । अशीशतत् ।गतौ तु शादयति । अशीशदत् । रातो ञौ पुक् ॥

( सुबोधिनी )–शदेरगतौ तो ञौ ॥ शदेर्ञौ तोऽन्तादेशः स्यात् न तु गतौ । शातयति । गतौ तु गाः शादयति गोविन्दः गमयतीत्यर्थः ॥ ऋ गतौ । अस्य रातो ञौ पुगित्यन्तरङ्गत्वादादौ पुक् पश्चाद् गुणः ॥

पुकि गुणः ॥ अर्पयति । आर्पिपत् ॥ दापयति । अदीदपत् ॥ धापयति । अदीधपत् ॥ स्थापयति ॥

( सुबोधिनी )–पुकि गुणः ॥ पुगागमे परे गुणो भवति । अर्पयति । लुङि स्वरादेः पर इति पि इत्यस्य द्वित्वे ञेरिति ञिलोपे च आर्पिपत् ॥ डुदाञ् दाने । अङि लवावीति ह्रस्वे इत्वे च कृते लघोर्दीर्घ इति दीर्घत्वम् । अदीदपत् ॥ डुधाञ् धारणादौ । अदीधपत् ॥ ष्ठा गति निवृत्तौ । रातो आवीति पुकि स्थापयति ॥

( तिष्ठतेरङ्युपधाया इत् ) अतिष्ठिपत् ॥

( सुबोधिनी )–तिष्ठतेरङ्युपधाया इत् ॥ तिष्ठतेरुपधाया इत्वं स्यात् अङ्प्रत्यये । स्थापीत्यत्रात इत्वं ततो द्वित्वादि । अतिष्ठिपत् । तिष्ठतेरिति तिपा निर्देशो यङ्लुङ् निवृत्त्यर्थः । तेन यङ्लुकि लुङि अतास्थपत् ॥

**पादेर्युक् ॥ पाशोछोसोह्वेञ्व्येञ्वेञां युक् णौ ॥ पाययति ॥**

( सुबोधिनी )—पादेर्युक् ॥ एषां युक् णौ परे ॥ पा पाने । लुग्विकरणालुग्विकरणेति परिभाषया पा रक्षणे इति नेह गृह्यते । तस्य तु पालयतीति रूपम् ॥ शो तनूकरणे । छो छेदने । षो अन्तकर्मणि । ह्वेञ् स्पर्द्धायाम् । व्येञ् संवरणे । वेञ् तन्तुसंताने ॥ पाययति ॥

**( पिबतेरङि पूर्वस्येकार उपधालोपश्च ) अपीप्यत् ॥ शाययति । अशीशयत् ॥ छाययति । अचिच्छयत् ॥ साययति । असीषयत् ॥ ह्वाययति ॥**

( सुबोधिनी )—पिबतेरङि पूर्वस्येकार उपधालोपश्च ॥ पिबतेः पूर्वरूपस्य इत्वमुत्तररूपस्योपधाया लोपश्च स्यात् अङि परे ॥ पायीत्यत्र पायशब्दस्य द्वित्वे हसादिः शेषे चेत्वमुत्तरत्राकारलोपः । इहाऽग्वृलोपित्वादलघुत्वाच्च इत्वदीर्घयोरप्राप्तावीत्वम् । अपीप्यत् ॥ शाययति । अशीशयत् ॥ छाययति । ह्रस्वाभावान्न दीर्घः । अचिच्छयत् ॥ शाययति । अशीशयत् ॥ साययति । असीषयत् ॥ ह्वाययति ॥

**( ह्वयतेर्ण्यन्तस्याङ्सयोः संप्रसारणं युगभावश्च ) अजूहवत्–अजुहावत् ॥ व्याययति । अविव्ययत् ॥ वाययति । अवीवयत् ॥**

( सुबोधिनी )—ह्वयतेर्ण्यन्तस्याङ्सयोः संप्रसारणं युगभावश्च ॥ ह्वेञः संप्रसारणं युगभावश्च स्यात् अङ्सयोः परतः ॥ ह्वायीत्यत्र पूर्वं संप्रसारणे युगभावे च कृत हू इत्यस्य द्वित्वादि उत्तरत्र उवृद्धौ आवादेशे च कृते कणरणेति ह्रस्वे लघोरिति दीर्घे च अजूहवत् । ह्रस्वाभावे अजुहावत् ॥

**( पातेर्णौ लुक् ) पालयति । अपीपलत् ॥**

( सुबोधिनी )— पातेर्णौ लुक् ॥ लुगागमः स्यात् । रातो णौ पुगिति पुकोऽपवादः ॥ लुगागमस्य पुङ्निवृत्तिरेव फलम् । पालयतीति रूपस्य 'पाल रक्षणे' इति धातुनापि सिद्धेः ॥

( तत्त्वदी० )—पातेर्णौ लुक् ॥ कित्त्वादन्ते । पुकोऽपवादः ॥

**( प्रयोजकात्स्मये णौ स्मयतेरात्वम् )**

( सुबोधिनी )—प्रयोजकात्स्मये णौ स्मयतेरात्वम् ॥ स्मयजनकः प्रयोजकश्चेत्तस्मिन् आत्वं स्यात् णौ परे ॥

( तत्त्वदी० )—स्मयतेरात्वम् ॥ ष्मिङ् ईषद्धसने । एवं "विस्मापयन्विस्मितमात्मवृत्तौ" इत्यपपाठः । मनुष्यवाचेति करणादेव विस्मयात् । अन्यथा शानोऽपि स्यात् । ण्यन्तात् णौ शता वा । विस्मापयते मनुष्यवाक् तया सिंहो विस्मापयन्निति ॥

**( भीस्मिभ्यां ञ्यन्ताभ्यामात् प्रयोजकाच्चेद्भयस्मयौ )** जटिलो विस्मापयते । व्यसिष्मयत ॥ **( भियः स्वरस्यात्वं वा तदभावे षुक् ञौ हेतोश्चेद्भयम् )** । मुण्डो भापयते । भीषयते । अबीभपत । अबीभिषत ॥

( सुबोधिनी )—भीस्मिभ्यां ञ्यन्ताभ्यामात् प्रयोजकाच्चेद्भयस्मयौ ॥ भयस्मययोर्जनकः प्रयोजकश्चेत् ञ्यन्ताभ्यां भीस्मिभ्यामात्मनेपदं स्यात् ॥ भियः स्वरस्यात्वं वा तदभवे षुक् ञौ हेतोश्चेद्भयम् ॥ भयजनकः प्रयोजकश्चेद्भियो वाकारः आत्वाभावे षुगागमश्च स्यात् ञौ ॥ 'ञिभी भये' इत्यस्यानेनात्वे रातो ञाविति पुकि च मुण्डो भापयते । भीषयते ॥ जटिलो विस्मापयते । प्रयोजकाद्भयस्मयावित्युक्तेनेह । कुञ्चिकयैनं भाययति । विस्माययति ॥

**( रुहेर्ञौ पो वा )** रोपयति । अरूरुपत । रोहयति । अरूरुहत ॥ कल्पयति । अचीक्लृपत्-अचकल्पत् ॥ वर्तयति । अवीवृतत्—अववर्तत् ॥ मार्जयति । अमीमृजत्—अममार्जत् ॥

( सुबोधिनी )—रुहेर्ञौ पो वा ॥ रुहेर्हस्य वा पकारः स्यात् ञौ परे ॥ रुह बीजजन्मनि प्रादुर्भावे च । 'रुप विमोहने' इति दैवादिकस्य धातूनामनेकार्थत्वाज्जन्मनि वृत्तौ सूत्रं स्पष्टार्थम् ॥ कृपू सामर्थ्ये । उपधाऋवर्णस्येति ऋद्भावे अङि लघौ ह्रस्व इति पूर्वस्येकारः । लघोर्दीर्घ इति दीर्घत्वे कृपो रोल इति लत्वे च अचीक्लृपत्—अचकल्पत् ॥ वृतु वर्तने । अवीवृतत्—अववर्त्तत् ॥ मृजूष् शुद्धौ । अमीमृजत् । पक्षे मृजेर्वृद्धिरिति वृद्धौ अममार्जत् ॥

( तत्त्वदी० )—रुहेः ॥ रुह बीजजन्मनि प्रादुर्भावे च । रुप विमोहन इति दैवादिकस्यापि रापयतीति सिद्धम् । धातूनामनेकार्थत्वाज्जन्मनि वृत्तिः । सूत्रं तु स्पष्टार्थम् ॥

**( इङ्क्रीजीनामात्वं ञौ )** अध्यापयति । अध्यापिपत् ॥ **( अङ्सपरे ञौ इङो गा वा )** अध्यजीगपत् ॥ क्रापयति । अचिक्रपत् ॥ जापयति । अजीजपत् ॥

( सुबोधिनी )—इङ्क्रीजीनामात्वं ञौ ॥ इङ् अध्ययने । डुक्रीञ् द्रव्यविनिमये । जि जये ॥ अङ्सपरे ञौ इङो गा वा ॥ अध्यजीगपत् । पक्षे स्वरादेः पर इति पिशब्दस्य द्वित्वे अध्यापिपत् ॥ अचिक्रपत् । अजीजपत् ॥

( तत्त्वदी० )—इङ्क्रीजीनाम् ॥ इङ् अध्ययने । डुक्रीञ् द्रव्यविनिमये । जि जये ॥

**( ह्रीब्लीरीक्नुयीक्ष्मायीणां णौ पुक् )** ह्रेपयति । अजिह्रिपत् ॥ ब्लेपयति । अबिब्लिपत् ॥ रेपयति । अरीरिपत् ॥

( सुबोधिनी )—ह्रीब्लीरीक्नुयीक्ष्मायीणां णौ पुक् ॥ एषां पुक् णौ । ह्री लज्जायाम् । ब्ली वरणे । रीङ् क्षये । क्नुयी शब्दे उन्दे च । क्ष्मायी विधूनने॥

( तत्त्वदी० )—ह्रेपयतीति ॥ उपधाया लघोरित्यत्रोपधाया इत्यस्य योगविभागाद्धातोरुपधाया नामिनो गुणो भवति । तेन गुरोरपि भवति ॥

**( यवयोर्वसे हकारे च लोपः )** क्नोपयति । अचुक्नुपत् ॥ क्ष्मापयति । अचिक्ष्मपत् ॥

( सुबोधिनी )—यवयोर्वसे हकारे च लोपः ॥ यकारवकारयोर्लोपः स्यात् वस्प्रत्याहारे हकारे च परे ॥

**( दुषेर्णौ दीर्घः वा चित्तविरागे )** चित्तं दूषयति–दोषयति वा कामः । अदूदुषत् ॥

( सुबोधिनी )—दुषेर्णौ दीर्घः ॥ दुष्यतेरुपधाया ऊत्स्यात् णौ । दूषयति । दुष वैकृत्ये दिवादिः । णौ किम् । दोषः । वा चित्तविरागे । चिती संज्ञाने इत्यस्मात् क्तः । चित्तम् । विरागोऽप्रीतता । दूषयति–दोषयति वा चित्तं कामः । चित्तं दुष्यति । स्नानसंध्यादौ विरक्तं भवति । तत् प्रयुङ्क्ते इत्यर्थः ॥

( तत्त्वदी० )—दु०वाचित्त० ॥ वाक्यभेदेन व्याख्येयम् । दुषेर्दीर्घो णौ । दूषयति । ततश्चित्तविरागे वा । चित्तविरागोऽप्रीतता ॥

**( स्फायो वः )** णौ ॥ स्फावयति । अपिस्फवत् ॥ अड्ड उद्यमे । अड्डयति । आड्डिडत् ॥ अर्च पूजायाम् । अर्चयति । आर्चिचत् ॥ उन्दी क्लेदने । उन्दयति । औन्दिदत् ॥ उब्ज आर्जवे । उब्जयति । औब्जिजत् ॥ द्रा कुत्सायाम् । द्रापयति । अदिद्रपत् ॥

( सुबोधिनी )—स्फायो वः ॥ स्फायो वत्वं स्यात् णौ परे ॥ अड्ड उद्यमे । स्वरादेः पर इति डिशब्दस्य द्वित्वे आड्डिडत् ॥ अर्च पूजायाम् । आर्चिचत् ॥ एध वृद्धौ । उपधाह्रस्वो द्वित्वात्प्रागेव भवति । ततो धिशब्दस्य द्वित्वे मा भवानिदिधत् ॥ उन्दी क्लेदने । दिशब्दस्य द्वित्वे औन्दिदत् ॥ उब्ज आर्जवे । उपदेशे दकारोपधोऽयम् । द्वित्वविषये स्वरात्पर इति निषेधात् जिशब्दस्य द्वित्वे कृते ततो निपातनाद्दस्य बः ॥ द्रा कुत्सायाम् । पूर्वमुपधाह्रस्वः । ततो द्वित्वे इत्वे च अदिद्रपत् ॥

**( रभिलभोः स्वरे नुम् न त्वब्लिटोः )** रम्भयति । अररम्भत् ॥ डुलभष् प्राप्तौ । लम्भयति । लम्भयते । अललम्भत् ॥ हाययति ।

हाययते। अजीहयत्॥ स्मारयति। स्मारयते। असस्मरत्॥ दार-
यति। दारयते। अददरत्॥

( सुबोधिनी )—रभिलभोः स्वरे नुम् न त्वब्लिटोः॥ स्वरे किम्। आरब्धम्। अब्लिटोः किम्। रभते। रेभे। रभ राभस्ये। डुलभष् प्राप्तौ। अररम्भत्। अललम्भत्॥ हि गतौ वृद्धौ च। पूर्वाद्धिनोतेरिति सूत्रे न त्वङीत्युक्ते षत्वं न अजीहयत्॥ स्मृ चिन्तायाम्। अङि लघाविति ह्रस्वः। स्मृदृत्वरेति पूर्वस्यात्। असस्मरत्॥ दृ विदारणे। अत्रापि पूर्वस्यात्। अददरत्। तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः॥

( वेष्टिचेष्ट्योः पूर्वस्यात्त्वं वाङि ) अविवेष्टत्–अववेष्टत्॥ अचि-
चेष्टत्–अचचेष्टत्॥ भ्राजृ दीप्तौ। भ्राजयति। भ्राजयते। अबिभ्र-
जत्–अबभ्राजत्॥

( सुबोधिनी )—वेष्टिचेष्ट्योः पूर्वस्यात्त्वं वाङि॥ अनयोः पूर्वरूपस्यात्त्वं वा स्यादङ्प्रत्यये परे। वेष्ट वेष्टने। चेष्ट चेष्टायाम्। भ्राजृ दीप्तौ। भ्राजभासेत्यादिना वा उपधाह्रस्वः। अविभ्रजत्–अवभ्राजत्॥

( कणरणभणश्रणलुपहेठिह्वेञ्बाणिलोटिलोठिलोपीनां वा ह्र-
स्वोऽङि ) अचीकणत्–अचकाणत्। व्यशिश्रणत्–व्यशश्राणत्।
अलूलुपत्–अलुलोपत्। अजीहिठत्–अजिहेठत्। अजूहवत्–
अजुहावत्। अबीबणत्–अबबाणत्। अलूलुटत्–अलुलोटत्। अलू-
लुठत्–अलुलोठत्॥

( सुबोधिनी )—कणरणभणश्रणलुपहेठिह्वेञ्बाणिलोटिलोठिलोपीनां वा ह्रस्वोऽङि॥ कण निमीलने। रण शब्दे। भण शब्दे। श्रण दाने। लुप्लृ छेदने। हेठ विबाधायाम्। ह्वेञ् स्पर्धायां शब्दे च। बाणिर्ण्यन्तः शब्दे। लुट प्रतिघाते। लुठ छेदने। लोपीति ण्यन्तनिर्देशः। लापीति पाठान्तरम्। लप व्यक्तायां वाचि। अचीकणत्–अचकाणत्। अरीरणत्–अराणत्। अबीभणत्–अबभाणत्। अशिश्रणत्–अशश्राणत्। अलूलुपत्–अलुलोपत्। अजीहिठत्–अजिहेठत्॥

( स्वापेः संप्रसारणमङि ) असूषुपत्॥

( सुबोधिनी )—स्वापेः संप्रसारणमङि॥ ञिष्वप् शये। ण्यन्तस्यास्य संप्रसारणं स्यादङि। इह संप्रसारणोत्तरं द्वित्वम्। असूषुपत्॥

( श्वयतेर्ण्यन्तस्य संप्रसारणं वाङ्सयोः ) अशिश्वयत्–अशूशवत्॥

( सुबोधिनी )—श्वयतेर्ण्यन्तस्य संप्रसारणं वाङ्सयोः॥ संप्रसारणं तदाश्रयं च कार्यं बलवदिति वचनाद्वृद्धेः पूर्वं संप्रसारणम्। अलघुत्वान्न दीर्घः। अशिश्वयत्–अशूशवत्॥

(जिघ्रतेरुपधाया इद्वाङि) अजिघ्रिपत्–अजिघ्रपत् ॥

(सुबोधिनी)–जिघ्रतेरुपधाया इद्वाङि ॥ घ्रापीत्यस्यात इत्वं वा स्याद्ङि परे। ततो द्वित्वादि ॥

(सिध्यतेरैहलौकिकेऽर्थे स्वरस्यात्वं ञौ) अन्नं साधयति। असीषधत्। अन्यत्र तपः सेधयति। असीषिधत् ॥

(सुबोधिनी)–सिध्यतेरैहलौकिकेऽर्थे स्वरस्यात्वं ञौ ॥ इहलोके भवः ऐहलौकिकः तस्मिन् ऐहलौकिकेऽर्थे सिध्यतेः स्वरस्यात्वं ञौ। अन्नं साधयति निष्पादयतीत्यर्थः। सिध्यतेरिति यनिर्देशाद्दैवादिकस्याग्रहणम्। ऐहलौकिके किम्। तापसः सिध्यति तत्त्वं निश्चिनोति। तत्त्वनिश्चयश्चात्मविषयकः स च परलोके उपयुज्यते। तं प्रेरयति तापसं तपः। लुङि असीषधत्। आत्वाभावे असीषिधत् ॥

(तत्त्वदी०)–सिध्यतेरैहलौकिके इति ॥ इह लोके भव ऐहलौकिकस्तस्मिन्नित्यर्थः ॥ अन्नं साधयतीति ॥ निष्पादयतीत्यर्थः। अन्यत्र। पारलौकिके इत्यर्थः। सेधयति। तापसः सिद्ध्यति। हेयमुपादेयं च तत्त्वतो ज्ञातुकामः प्रवर्तते। तमपरः प्रयुंक्ते ज्ञानविशेषवन्तं करोतीत्यर्थः ॥

(प्रजने वीयतेरात्वं वा ञौ) वापयति–वाययति वा गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः ॥

(सुबोधिनी)–प्रजने वीयतेरात्वं वा ञौ ॥ वी गतिप्रजनादौ आदादिकस्य यका निर्देशः। अत्र केचिदुत्प्रेक्षयन्ति। वेत्तेरिति वक्तव्ये यका निर्देशाद्व्येञोऽपि ग्रहणम्। तस्यापि यकि संप्रसारणे वीधातुना समानरूपत्वात्। अतो द्वयोरपि प्रजनेऽर्थे आत्वं वा स्यात्। तत्रात्वे तदभावे च यद्यपि व्येञः व्याययतीति रूपं तुल्यम्। पादेर्युगिति पुकोऽपवादतया युग्विधानात्। तथापि ण्यन्तात् क्विपि–व्याः, व्यौ, व्याः। आत्वाभावपक्षे–व्यैः, व्यायौ, व्यायः। इत्यस्ति विशेषः। सूत्रे विभाषाविधानसामर्थ्यात्पक्षेऽपि संध्यक्षराणामित्यात्वं न प्रवर्तते। रातो ञौ पुगिति पुक्। वापयति। आत्वाभावे वाययति गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः ॥

(तत्त्वदी०)–प्रजने वीयतेरिति ॥ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्य यका निर्देशः। अन्यथादादिकत्वेन यकारासंभवः। प्रजनो गर्भग्रहणं तत्रेत्यर्थः ॥ वापयतीति ॥ गर्भं ग्राहयतीत्यर्थः। वातेरनेकार्थत्वाद्यदि प्रजनोऽप्यर्थ उच्यते तदास्य वापयति वेतेस्तु वाययतीति सिद्धौ कृतमेतेन ॥

(इणो ञौ वा गमिरबोधने) गमयति। अजीगमत्। आययति। आयियत् ॥ घटादयो मितः। घट चेष्टायाम्। मितां ह्रस्वः। घटयति ॥ व्यथयति। अविव्यथत् ॥ प्रथयति। अपप्रथत् ॥ प्रस विस्तारे। प्रसयति ॥ म्रद मर्दने। म्रदयति। अमम्र-

दत् ॥ स्खद विद्रावणे । स्खदयति । अचिस्खदत् ॥ त्वरयति । अतत्वरत् ॥ ज्वर रोगे । ज्वरयति ॥ नट नृत्तौ । नटयति । अनीनटत् ॥ चक तृप्तौ । चकयति ॥ लगे संगे । लगयति ॥ ज्वल दीप्तौ । प्रज्वलयति ॥ स्मृ आध्याने । स्मरयति । असस्मरत् ॥ दृ भये । दरयति । अददरत् ॥ नॄ नये । नरयति । अनीनरत् ॥ श्रा पाके । श्रपयति । अशिश्रपत् ॥

( सुबोधिनी )–इणो ञौ वा गमिरबोधने ॥ इणो गमिः स्याद्वा ञौ अबोधनेऽर्थे ॥ अजीगमत् । बोधने तु । प्रत्याययति । प्रतिपूर्वस्येणो ज्ञानार्थता । स्वरादेः पर इति ञिसहितस्य द्वित्वम् । प्रत्यायियत् ॥ घटादयो मितः । घट चेष्टायाम् । तत्फलं तु मितां ह्रस्व इति ह्रस्वत्वम् । मितां ञ्यन्तानामिणि णमि च वा दीर्घ इति च । त्वरत्यन्ता घटादयः षितश्च । षित्प्रयोजनं तु षिद्भिदामङित्यङ् । आवतः स्त्रियामित्याप् । तेन घटा व्यथेत्यादिरूपसिद्धिः । विघटयति । कथं तर्हि 'कमलवनोद्घाटनं कुर्वते ये' इत्यादि । शृणु । घटसंघात इति चौरादिकस्येदम् ॥ व्यथ दुःखसंचलनयोः । अविव्यथत् ॥ प्रथ प्रख्याने । अपप्रथत् । स्मृदॄत्वरेति पूर्वस्यात् ॥ प्रस विस्तारे । अपिप्रसत् । अलघुत्वान्न दीर्घः ॥ म्रद मर्दने । अमम्रदत् । स्मृदॄत्वरेति पूर्वस्यात् ॥ स्खद विद्रावणे । अचिस्खदत् ॥ ञित्वरा संभ्रमे । अतत्वरत् । स्मृदॄत्वरेति पूर्वस्यात् ॥ घटादयः षितः । षित्वादङ् । त्वरा ॥ ज्वर रोगे । अजिज्वरत् । इणप्रत्यये–अज्वारि–अज्वारि । णम्प्रत्यये–ज्वरंज्वरं–ज्वारंज्वारम् ॥ नट नृत्तौ । गात्रविक्षेपमात्रं नृत्तिः । अनीनटत् ॥ चक तृप्तौ । अस्य तृप्तिमात्रे मित्त्वम् परस्मैपदं च । अचीचकत् ॥ लगे संगे । अलीलगत् ॥ ज्वल दीप्तौ । अजिज्वलत् । ज्वलादेर्ण इति णप्रत्यये–ज्वालः ॥ स्मृ आध्याने । उत्कण्ठापूर्वकं स्मरणमाध्यानम् ॥ दॄ भये । दृणन्तं प्रेरयति दरयति । भयादन्यत्र दारयति । केचित्तु घटादौ स्मृदॄत्वरेति सूत्रे च दॄ इति दीर्घस्थाने ह्रस्वं पठन्ति तन्नेति माधवः । यद्ययं ह्रस्वान्तो भवेत्तर्हि शृदॄप्रां ह्रस्वो वेति सूत्रे ह्रस्वविकल्पविधायके दॄग्रहणमनर्थकं स्यात् ॥ नॄ नये । नयादन्यत्र नारयति ॥ श्रा पाके । श्रपयति । विक्लेदयतीत्यर्थः । पाकादन्यत्र श्रापयति । स्वेदयतीत्यर्थः ॥

( तत्त्वदी० )–मितः ॥ के के पुनर्मित इत्याह ॥ घटादय इति ॥

( मारणतोषणनिशामनेषु ज्ञा ) ज्ञपयति ॥ ( कम्पने चलिः ) चलयति शाखां वायुः । अन्यत्र शीलं चालयति ॥ ( मदी हर्षदैन्ययोः ) मदयति । हर्षदैन्ययोः किम् । मादयति ॥ ( ध्वन शब्दे ) ध्वनयति । अदिध्वनत् ॥

( सुबोधिनी )–मारणतोषणनिशामनेषु ज्ञा ॥ एष्वेवार्थेषु जानातिर्मित् । शम आलोचन इत्यस्मान्निष्पन्नत्वान्निशामनं चाक्षुषज्ञानमिति माधवः । ज्ञापनमात्रमित्यन्ये ।

निशानेष्विति पाठान्तरम् । निशानं तीक्ष्णीकरणम् । पशुं संज्ञपयति मारयतीत्यर्थः । विष्णुं विज्ञपयति । संतोषयतीत्यर्थः । संज्ञपयति रूपम् । माधवमते दर्शयतीत्यर्थः । मतान्तरे तु बोधयतीत्यर्थः । प्रज्ञपयति शरम् । तीक्ष्णं करोतीत्यर्थः । कथं तर्हि 'विज्ञापना भर्तृषु सिद्धिमेति' इति 'तज्ज्ञापयत्याचार्यः' इति च । अत्र ज्ञाधातोर्णौ मित्त्वाद्ध्रस्वेन भवितव्यमिति । शृणु । माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात् । ज्ञापनमात्रे मित्त्वमिति मते तु ज्ञा नियोगे इति चौरादिकस्य धातूनामनेकार्थत्वाद्बोध्यम् ॥ कम्पने-चलि ॥ चलयति शाखाम् । कम्पनादन्यत्र तु शीलं चालयति । अन्यथा करोतीत्यर्थः । हरतीत्यर्थ इति स्वामी । सूत्रं चालयति । क्षिपतीत्यर्थः ॥ मदी हर्षदैन्ययोः ॥ मदयति । हर्षयति ग्लेपयति वा । दैन्यं करोतीत्यर्थः । अन्यत्र मादयति । चित्तविकारमुत्पादयतीत्यर्थः ॥ ध्वन शब्दे ॥ ध्वनयति घण्टाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥

( तत्त्वदी० )-मारणेति ॥ मारणं हिंसनम् । निशामनं चाक्षुषज्ञानम् । 'तज्ज्ञापयत्याचार्यः' 'विज्ञापना भर्तृषु सिद्धिमेति' इत्यादौ ज्ञापनसामान्ये मित्त्वाभावान्न ह्रस्वः ॥ कम्पने चलिः ॥ चलयतीति शाखामिति शेषः । अन्यत्र शीलं चालयति अन्यथाकरोतीत्यर्थः ॥ मदयतीति ॥ अन्यत्र मादयति चित्तविरागमुत्पादयतीत्यर्थः ॥ ध्वनयतीति ॥ घण्टामिति शेषः । अन्यत्र ध्वानयति अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥

**( जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ) जनयति । जरयति । क्नसु कौटिल्ये दीप्तौ च । क्नसयति ॥**

( सुबोधिनी )-जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ॥ जनी प्रादुर्भावे । जॄष् वयोहानौ । क्नसु ह्वरणदीप्त्योः । त्रयोऽपि दिवादयः । रञ्ज रागे । दैवादिको भौवादिकश्च । अमन्ताः क्रमिगम्यादयः । जॄषिति षिन्निर्देशाज्जीर्यतेर्ग्रहणम् । जृणातेस्तु जारयति ॥

( तत्त्वदी० )-अमंताश्च ॥ अम् अन्ते येषां ते शमादय इत्यर्थः ॥

**( रञ्जेर्णौ मृगरमणे नलोपः ) रजयति मृगान् । अरीरजत् । अन्यत्र वस्त्रं रञ्जयति । अररञ्जत् ॥ शमयति ॥ दमयति ॥**

( सुबोधिनी )-रञ्जेर्णौ मृगरमणे नलोपः ॥ रञ्जेर्नस्य लोपः स्यात् णौ परे आखेटेऽर्थे । रजयति मृगान् । मृगेति किम् । रञ्जयति पक्षिणः । रमणादन्यत्र तु रञ्जयति मृगान् तृणदानेन ॥ शमु दमु उपशमे । दैवादिकौ । अशीशमत् । अदीदमत् ॥

( तत्त्वदी० )-रञ्जेर्णावित्यादि ॥ मृगरमणमाखेटः । मृगेति किम् । रञ्जयति पक्षिणः । रमणे किम् । रञ्जयति मृगान् तृणदानेन ।

**( ज्वलह्वलह्मलनमामनुपसर्गाद्वा )** ज्वलयति-ज्वालयति । ह्वल ह्मल चलने। ह्वलयाति-ह्वालयति । ह्मलयति-ह्मालयति । नमयति-नामयति । उपसर्गे तु । प्रह्वलयति ॥

( सुबोधिनी )-ज्वलह्वलह्मलनमामनुपसर्गाद्वा ॥ ज्वल दीप्तौ ह्वल ह्मल संचलने इति त्रयाणां पूर्वं घटादौ पठितत्वान्न मेस्त्वमन्तत्वान्नित्ये प्राप्ते विभाषेयम् । उपसर्गेषु नित्यं मित्त्वम् । प्रज्वलयति । कथं तर्हि प्रज्वालयति, उन्नामयतीति । घञन्तात् 'नाम्नो णिर्डित्करणे' इति णौ बोध्यम् । कथं संक्रामयति, विश्रामयतीति च । मान्तस्य सेटो न वृद्धिरिति वृद्धिनिषेधात् । घञि क्रमः श्रम इत्येव भवति न तु क्रामः श्राम इति । पूर्वोक्तसमाधानस्यात्रासंभवात् पृथक् प्रश्नः । शृणु । घञन्ताभ्यां क्रमश्रमाभ्यां स्वार्थऽणि क्रामश्रामशब्दौ स्वीकृत्य ताभ्यां णिर्डिद्विति णिप्रत्यये संक्रामयति विश्रामयतीति सिद्धम् ॥

( तत्त्वदी० )-अनुपसर्गाद्वेति ॥ तेनोपसृष्टानां मित्त्वमेव । प्रज्वालयत्युन्नामयतीति तु घञन्तात्तत्करोतीति णौ । संक्रामयतीति तु वा चित्तविराग इत्यतो वेत्यनुवृत्तेर्व्यवस्थया बोध्यम् ॥

**( ग्लास्नावनुवमां च )** ग्लापयति-ग्लपयति। स्नापयति-स्नपयति। वानयति-वनयति । वामयति-वमयति ॥

( सुबोधिनी )-ग्लास्नावनुवमां च ॥ अनुपसर्गादेषां मित्त्वं वा । आद्ययोरप्राप्ते वनेर्घटादित्वात्प्राप्ते वमेरमन्तत्वाच्च प्राप्ते विभाषा । ग्लापयति-ग्लपयति । स्नापयति-स्नपयति । वानयति-वनयति । वामयति-वमयति ॥

**( न कम्यमिचमाम् )** कामयति ॥ अम गत्याम् । आमयति । आमिमत् ॥ चामयति ॥

( सुबोधिनी )-न कम्यमिचमाम् ॥ अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात् ॥

**( शाम्यतिर्दर्शने मिन्न )** निशामयति रूपम् ॥

( सुबोधिनी )-शाम्यतिर्दर्शने मिन्न ॥ निशामयति रूपम् । अन्यत्र 'प्रणयिनो निशमय्य वधूः कथाः' कथं तर्हि 'निशामय तदुत्पत्तिं विस्तराद्गदतो मम' इति । शृणु । शम आलोचने इति चौरादिकस्यैव । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः । यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रत्युज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीति ॥

( तत्त्वदी० )-दर्शने मिन्नेति ॥ निशामय तदुत्पत्तिमित्यादि तु शम (लक्ष) आलोचनइत्यस्य, धातूनामनेकार्थत्वाच्छ्रवणार्थतापि ॥

**( यच्छतिर्भोजनतोऽन्यत्र मिन्न )** आयामयति । भोजने तु यमयति विप्रान् ॥

( सुबोधिनी )—यच्छतिर्भोजनतोऽन्यत्र मिन्न ॥ यम उपरमे इत्ययं धातुर्भोजने मित् । अन्यत्र तु न आयामयति । द्राघयति व्यापारयति वेत्यर्थः । भोजने तु यमयति ब्राह्मणान् भोजयतीत्यर्थः ॥

( तत्त्वदी० )—आयामयतीति ॥ द्राघयति व्यापारयति वेत्यर्थः । भोजने तु यमयति विप्रं भोजयतीत्यर्थः ॥

( स्खदिरवपरिभ्यां मिन्न ) अवस्खादयति । परिस्खादयति ॥ ईर्ष्य अक्षान्तौ । ईर्ष्ययति ॥

( सुबोधिनी )—स्खदिरवपरिभ्यां मिन्न ॥ घटादित्वात्प्राप्तं मित्त्वं न अवाचिस्खदत् ॥

( ईर्ष्यतेस्तृतीयो द्विस्तृतीयो हस एकस्वरो वा )ऐर्ष्ययत् । अङि तु । स्वरादेः परः । ऐर्षिष्यत् । द्वितीयपक्षे सान्ते । ईर्ष्यिषिषति । तृतीय एकस्वरपक्षे सान्ते प्रवर्तते । ञ्यन्ते तु तृतीय एकस्वराभावादित्यर्थः ॥ ॥ इति ञ्यन्तप्रक्रिया ॥

( सुबोधिनी )—ईर्ष्यतेस्तृतीयो द्विरिति ॥ तृतीयव्यञ्जनस्येति पक्षे सस्वरस्य यकारस्य द्वित्वम् । ऐर्ष्यियत् । तृतीयैकस्वरस्येति पक्षे तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः । स्वरादेः पर इति द्वित्वे षकार एव पूर्वं श्रूयते हसादिः शेषात् । ऐर्षिष्यत् । तृतीयहसपक्षे षस्य द्वित्वं वारयितुमिदम् । तृतीयैकस्वरस्येति पक्षे तु स्वरादेः पर इत्यस्यापवादत्वेन सान्ते प्रवर्तते ॥ इति सुबोधिन्या ञ्यन्तप्रक्रिया ॥

( तत्त्वदी० )—ईर्ष्यतेरिति ॥ तृतीयः क इत्याकांक्षायां मतभेदेन व्याचष्टे—तृतीयो हस इति ॥ हसापेक्षया तृतीयो हसः । स्वरसहित इत्यर्थः ॥ अस्मिन्पक्षे षस्य न द्वित्वम् ॥ मतान्तरमाह—एकस्वरो वेति ॥ तृतीय इत्येव । ईर्ष्यतेर्यस्तृतीय एकस्वरः स द्विर्वाच्य इत्यर्थः । अत्र पक्षे सान्ते ईर्ष्यिषिषतीति सस्य द्वित्वम् । आद्यपक्षे ईर्ष्यियिषतीति सान्तेऽपि रूपद्वयम् । ईर्ष्यतेः सेऽपि सयोर्वा द्वित्वमिति । द्वितीयव्याख्यायां ञ्यन्तादाङि द्वितीयस्य द्वित्वे हसादिशेषेण पूर्वत्र षस्यैव श्रवणात्तृतीयाभावेनैतद्वार्तिकाप्राप्तौ ऐर्ष्यियदिति प्रथमपक्षे । ऐर्षिष्यदिति तु द्वितीयपक्षे एतद्बीजं तूक्तमेव । अत्र पण्डिताः । क्वचित्तु ऐर्ष्यिष्यदिति षकारादेरपि द्वित्वमुदाह्रियते । तद्भ्रान्तप्रक्षिप्तत्वादुपेक्ष्यम् । तस्मादैर्ष्यियदित्येकमेवात्र रूपं साधनीयं न त्वैर्षिष्यदिति ञ्यन्ते तृतीयस्यैकाचोऽसंभवादित्याहुः । तत्स्वमतिभ्रमोद्भावनायेति मन्यामहे । तथाहि । ञ्यन्ते द्वितीयव्याख्यायां तृतीयस्यैकाचोऽसंभवात् द्वितीयद्वित्वं केन निवार्यमिति स्वयमेवोहनीयामिति दिक् । निवृत्तप्रेरणात् धातोर्णौ केवलेन तुल्योऽर्थः । तेन 'प्रार्थयन्ति शयनोत्थितम्' इत्यादि सिद्धम् ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगमज् ञ्यन्तसाधनम् ॥ १ ॥

इति तत्त्वदीपिकायां ञ्यन्तप्रक्रिया ॥ १ ॥

# अथ सान्तप्रक्रिया ।

**इच्छायामात्मनः सः ॥** धातोरात्मन इच्छायामर्थे सप्रत्ययो भवति॥( द्विश्च ) आत्मनः भवितुमिच्छति बुभूषति । बुभूषांचकार । अबुभूषीत् ॥

( सुबोधिनी )—इच्छायामात्मनः सः ॥ इच्छायाः क्रियारूपत्वेन कर्तारं विनाऽनुपपन्नत्वात् कर्तुराक्षेपात् इच्छा कर्ता इष्यमाणं वस्तु यदि स्वसंबन्धित्वेनैव इच्छति तदा धातोः सप्रत्यय इत्यर्थः । तेन शिष्याणां पठनमिच्छति गुरुरित्यादौ सो न ॥ द्विश्च ॥ सप्रत्ययान्तस्य धातोर्द्वित्वं स्यात् ॥ भवितुमिच्छतीति कर्मनियतत्वादिषु कर्मेति लब्धम् । धातोः प्रत्ययविधानात् तदर्थत्वं लब्धम् । तेन इषिकर्मार्थवाचकाद्धातोरिच्छायां सप्रत्ययः स्यात् । तुम् तु स्वार्थिकः साध्यावस्थां क्रियामाह । स च लौकिके वाक्ये प्रयुज्यते । केवलस्य धातोः प्रयोगानर्हत्वात् । अलौकिके तु धातुमात्रं प्रयुज्यतेऽतः तुमः कथं लोप इति नो शङ्क्यम् । अत्रात्मशब्दस्तु स्वशब्दस्य पर्यायः । संबन्धसामान्ये षष्ठी । आत्मनः स्वस्येत्यर्थः । स्वशब्देन हि इषिकर्तैव गृह्यते ॥

( तत्त्वदी० )—इच्छायामात्मनः सः ॥ धातोरित्यधिकारात् । इष्टिरिच्छा इषेरिच्छेत्यत एव निपातनादः । आत्मशब्दोऽत्र स्ववाची न तु चेतनद्रव्यवाची आत्मन इत्यस्य व्यर्थतापातात् । इच्छायामात्मकर्तृकत्वमव्यभिचारात् । तच्चेदिष्यमाणमिच्छाकर्तृसंबन्धि भवति । आद्भुवि कर्मणीत्यतः कर्मणीत्यनुवर्त्य पञ्चम्या विपरिणम्य कर्मणो धातोरिति सामानाधिकरण्येन व्याख्येयम् ॥ इच्छायां किम् । कर्तुं याति ॥ आत्मनः किम् । शिष्याणां पठनमिच्छति गुरुः ॥ स्वसंबन्धित्वं चेच्छायाः साक्षादेव तेन शिष्याणां स्वसंबन्धित्वेऽपि न ॥ धातोः किम् । प्रतिष्ठासते इत्यत्र प्रसाहितस्थाधातोर्मा भूत् । तथा सत्यङ्द्वित्वयोर्वैषम्यं स्यात् ॥ कर्मणः किम् । गमनेनेच्छतीति करणान्मा भूत् । यत्तु वासुदेवेन व्याख्यातम्—इच्छा चेत्स्वस्वसंबन्धिनीति । तन्न । शिष्याणां पठनमिच्छति गुरुरित्यत्रातिव्याप्तेरनिवारणात् । तथाहि । अत्र पठनस्य धात्वर्थत्वेन तत्संबन्धिन्या इच्छायाः सत्त्वात् ॥ **भवितुमिच्छतीति** ॥ साध्यावस्थायाः क्रियाया वाचकस्य तुमः स्वार्थकत्वेन लौकिक एव वाक्यप्रयोगः । केवलस्य धातोः प्रयोगानर्हत्वात् । न त्वलौकिकेऽपि । तेन तुमः कथं लोप इति नाशङ्कनीयम् । द्विश्चेत्यतो द्विरित्यनुवृत्तं भिन्नं वाक्यम् । तेन सप्रत्ययप्रकृतिभूतस्य धातोर्न द्वित्वं किं तु सान्तस्य । तथा च प्रतीषिषतीत्यादि सिद्धम् ॥

**वुः से ॥** उवर्णान्तादृवर्णान्ताद्ग्रहिगुहिभ्यां च परस्य सस्य नेट् ॥

( सुबोधिनी )—वुः से ॥ उश्च आ चेति वृ तस्मात् वुः । सौत्रं पुंस्त्वम् । ऋवर्णोवर्णान्ताभ्यां ग्रहिगुहिभ्यां च परस्य सस्य नेट् ॥ ग्रहेर्नित्यं प्राप्ते गुहेर्विकल्पेन प्राप्ते निषेधोऽयम् ॥ भू सत्तायाम् । सप्रत्यये द्वित्वे च ह्रस्वे षत्वे च बुभूषति ॥

( तत्त्वदी० )—वुः से ॥ उश्च आ च वृ तस्मात् । सौत्रं पुंस्त्वम् ॥

**नानिटि से ॥** इड्वर्जिते सप्रत्यये गुणो न। ऋत इर्। तितीर्षति ॥ जुघुक्षति ॥ **से दीर्घः ॥** स्वरान्तस्य धातोर्दीर्घः स्यात् सप्रत्यये परे ॥ चिकीर्षति ॥ चिचीषति–चिकीषति ॥ जिगीषति ॥ पुपूषति ॥ यः से। पिपक्षति ॥ पिपासति ॥ मुमूर्षति ॥

( सुबोधिनी )–**नानिटि से ॥** न इट् यस्य सोऽनिट् तस्मिन्, से इत्यस्य विशेषणम् ॥ बुभूषेत्। बुभूषतु। अबुभूषत्। कासादिप्रत्ययादित्याम्। बुभूषांचकार। बुभूष्यात्। सिसतासीस्यपामितीट्। बुभूषिता। बुभूषिष्यति। अबुभूषिष्यत्। अबुभूषीत् ॥ तॄ प्लवनतरणयोः ॥ ऋत इर् इतीर्। य्वोर्विं हसे इति दीर्घः। तरितुमिच्छति तितीर्षति ॥ गुहू संवरणे। सप्रत्यये द्वित्वे च हो ढ इति ढत्वम्। आदिजबानामिति घत्वम्। 'षढोः कः से' इति कत्वम्। किलात्षः स इति षत्वम्। जुघुक्षति ॥ से दीर्घः ॥ स्वरान्तस्य धातोर्दीर्घः स्यात् सप्रत्यये ॥ आदौ दीर्घस्तत इर्। चिकीर्षति ॥ चिनोतेः सणादौ किर्वेति किः। चिकीषति–चिचीषति ॥ सपरोक्षयोर्जेर्गिरिति गिः। से दीर्घ इति दीर्घः। जिगीषति ॥ पूञ् पवने। पुपूषति। वुः से इतीड् न ॥ डुपचष् पाके। पक्तुमिच्छति पिपक्षति। यः से इति पूर्वस्येकारः ॥ पा पाने। पातुमिच्छति पिपासति ॥ मृ हिंसायाम्। पोरुरित्युर्। य्वोर्विंहसे इति दीर्घः। मुमूर्षति ॥ पॄ पालनादौ। पुपूर्षति ॥ भृ भर्त्सनभरणयोः। बुभूर्षति ॥

( तत्त्वदी० )–**नानिटि से ॥** न इट् यस्मिन् स तथा तस्मिन्। से इत्यस्य विशेषणम्। अपित्तादिर्ङिदित्यनेन ङित्त्वे सिद्धे नियमार्थमिदम्। अनिट एव ङित्त्वं यथा स्यात् ॥ **चिकीर्षतीति** ॥ आदौ दीर्घस्तत इर् ॥

**( रुदविदमुषग्रहिस्वपिप्रच्छिभ्यः सः कित् )** रुरुदिषति। विविदिषति। मुमुषिषति। ग्रह उपादाने। हो ढः। आदिजबानामिति। षढोः कः से। ग्रहीतुमिच्छति जिघृक्षति। सुषुप्सति ॥

( सुबोधिनी )–**रुदविदमुषग्रहिस्वपिप्रच्छिभ्यः सः कित् ॥** रुदसाहचर्याद्वेत्तेरेव ग्रहणं रुदविदमुषाणां त्रयाणामिवर्णोपधादिति विकल्पे प्राप्ते ग्रहिस्वपिप्रच्छीनां तु सस्य कित्त्वाप्राप्तौ वचनम्। अत्र गुणाभावः संप्रसारणं च कित्त्वस्य फलम्। ग्रहामिति संप्रसारणम्। ग्रहीतुमिच्छति जिघृक्षति ॥ ञिष्वप् शये। यजां यवराणामिति संप्रसारणम्। सुषुप्सति ॥

**( कॄगॄदृधृप्रच्छिभ्यः सस्येट् )** चिकरिषति। जिगरिषति। जिगलिषति। दिदरिषते। दिधरिषते। पिपृच्छिषति ॥ अत्तुमिच्छति जिघत्सति ॥

( सुबोधिनी )—कॄगॄदृधृप्रच्छिभ्यः सस्येट् ॥ कॄ हिंसायाम् । गॄ निगरणे । दृङ् आदरे । धृङ् अवस्थाने । एतौ तुदादी । प्रच्छ ज्ञीप्सायाम् । एभ्यः सप्रत्ययस्येट् । चिकरिषति । वुः से इति निषेधे प्राप्ते विधानम् । इह वृङ्वृञ्ॠदन्तानामितीटो दीर्घो नेष्टो भाष्यकारेणानुक्तत्वात् । जिगरिषति । जिगलिषति । गिरतेः स्वरे रस्य लो वेति वा लः । आदनुदात्तेत्यात्मनेपदम् । दिदरिषते । दिधरिषते । कथम्, उद्दिधीर्षुः इति भौवादिकयोर्धृङ्धृञोरिति गृहाण । से दीर्घ इति दीर्घे ऋत इरितीर् । खोर्वि हसे इति दीर्घे उद्दिधीर्षुः ॥ ग्रहामिति संप्रसारणम् । रुदविदेति सस्य किल्वात्पिपृच्छिषति ॥ अद भक्षणे । सिसयोरदेर्घस्लृ लिटि तु वेति घस् । नैकस्वरादनुदात्तादिति नेट् । सस्तोऽनपीति सस्य तकारः । अत्तुमिच्छति जिघत्सति ॥

## ( हनिङोः से दीर्घः ) जिघांसति ॥

( सुबोधिनी )—हनिङोः से दीर्घः ॥ पूर्वाद्धन्तेर्हस्य घ इति घत्वम् । जिघांसति । सूत्रे स्वरादेशस्य गमेर्दीर्घ इति वक्तव्यम् । तेन गच्छतेर्न दीर्घः । जिगंस्यते । समो गम्यृच्छीत्यात् । संजिगंसते । तेन इणइकइङां स्थाने यो गमिस्तस्य दीर्घः स्यात् । इणिकोस्तु कर्मोक्तौ जिगांस्यते । अधिजिगांस्यते इत्यादि । अत इङ्स्थाने इति व्याख्येयम् ॥

## ( इङः से गम् )

( सुबोधिनी )—इङः से गम् ॥ इङो गमिः स्यात्सप्रत्यये ॥ इङ् अध्ययने ॥

## ( सान्तात्पूर्ववत् ) अधिजिगांसते ॥

( सुबोधिनी )—सान्तात्पूर्ववत् ॥ सप्रत्ययात्पूर्वो यो धातुस्तेन तुल्यं सान्तादपि स्यात् ॥ तेन ङित्वादात्मनेपदम् । हनिङोरिति दीर्घः । अधिजिगांसते ॥

## ( गमेः सस्येड् नाति ) जिगमिषति ।

( सुबोधिनी )—गमेः सस्येड् नाति ॥ आति किम् । इण् गतौ । जिगांस्यते । कर्मण्यात् । यः से इति पूर्वस्यात इत् । षत्वम् । जिगमिषति ॥

## इः से ॥ अपिद्दाधारभलभशकपतपदमिमीमाङ्मेङां स्वरस्येस् अनिटि से परे पूर्वस्य च लोपः ॥ दित्सति । धित्सति । रभ राभस्ये । स्कोराद्योश्च । खसे चपा झसानाम् । रिप्सते । लिप्सते । शिक्षति । पित्सते ॥

( सुबोधिनी )—इः से ॥ अपिद्दाधारभलभशकपतपदमिमीमाङ्मेङाम् एषां स्वरस्येस् स्यात् पूर्वस्य च लोपः अनिटि से ॥ दैप् शोधने । दाप् लवने । आभ्यां विना दाण् दाने भ्वादौ पम् । देङ् पालने भ्वादावात् । डुदाञ् दाने ह्वादावात्पे । दो अवखण्डने दिवा-

दौ पम् । एषां दारूपत्वम् ॥ धेट् पाने भ्वादौ पम् । डुधाञ् धारणे ह्वादावात्पे । अनयोर्धारूपत्वम् ॥ रभ राभस्ये । डुलभष् प्राप्तौ । शक्लृ शक्तौ स्वादौ पम् । शक मर्षणे दिवादावात्पे । पत्लृ पतने । पद् गतौ।डुमिञ् प्रक्षेपणे । मिङ् प्राणवियोगे दिवादावात् । मीञ् हिंसायाम् क्र्यादावात्पे । मा माने अदादौ पम् । माङ् माने ह्वादौ दिवादौ चात् । मेङ् प्रणिदाने भ्वादावात् ॥ दोदाणोः सस्तोऽनपीति सस्य तः । दित्सति ॥ देङ् दित्सते । दाञ् दित्सति-दित्सते । धेट् धित्सति । धाञ् धित्सति-धित्सते । रभ स्कोरिति सलोपः । खसे चपा इति भस्य पत्वम् । रिप्सते ॥ शक्लृ स्कोरिति सलोपः । षत्वं शिक्षति। शक । शिक्षति । पित्सते । पत्लृ पतने ॥

(तत्त्वदी०)—शिक्षतीति ॥ शक्तुमिच्छतीति वाक्ये स्वरस्येसादेशपूर्वलोपसलोपत्वानि ॥

**( पततनदरिद्राभ्यः सस्येड्वा )** पिपतिषति-पित्सति । डुमिञ् प्रक्षेपणे । मित्सति । मित्सते । मीञ् हिंसायाम् । मित्सति । मित्सते । मा माने । मित्सति । मेङ् प्रणिदाने । माङ्मेङोः मित्सते ॥

( सुबोधिनी )—पततनदरिद्राभ्यः सस्येड् वा ॥ एभ्यः परस्य सप्रत्ययस्य वा इड् भवति ॥ इट्पक्षे यः से इतिपूर्वस्येत् । पिपतिषति । स्कोरिति सलोपः । पित्सति ॥ डुमिञ्मीञोः सस्तोऽनपीति सस्य तः । मित्सति । मित्सते ॥ माङ्मेङोर्मित्सते ॥ मा मित्सति ॥

**आप्नोतेरीः** ॥ आप्नोतेरात ईस्से पूर्वलोपश्च ॥ ईप्सति ॥

( सुबोधिनी ) आप्नोतेरात ईः ॥ आपेरात ईत्वं पूर्वलोपश्च स्यात् सप्रत्यये ॥ आप्लृ व्याप्तौ । आप्तुमिच्छति ईप्सति ॥

**अशेरनायो वा** ॥ अशेरिच्छायां वानायप्रत्ययः ॥ अशनायति-अशिशिषति ॥ तितनिषति । **( तनः सादौ से वा दीर्घः )** तितांसति-तितंसति ॥ दिदरिद्रिषति-दिदरिद्रासति ॥

( सुबोधिनी )—अश् भोजने ॥ अशेरनायो वा ॥ सस्यापवादः ॥ पक्षे सस्येट् ॥ इस् इति सप्रत्ययस्यावयवः । पूर्वस्य स्वरादेः पर इति शिस्शब्दस्य द्वित्वम् । हसादिः शेषः । अशिशिषति ॥ तनु विस्तारे । पततनेति सस्य वेट् । तितनिषति । पक्षे तनः सादौ से वा दीर्घः । अनिटि से तितांसति ॥ दरिद्रा दुर्गतौ । पततनेति वेट् । दरिद्रातेरनप्यालोपः सौ वेत्यालोपे षत्वे च दिदरिद्रिषति ॥

**( दम्भिज्ञपिभ्यां सस्य वेट् )** दम्भु दम्भे । दिदंभिषति । जिज्ञपयिषति । **( ज्ञपेः स्वरस्य सादौ से ईत्पूर्वलोपश्च )** ज्ञीप्सति ॥

( सुबोधिनी )—दम्भिज्ञपिभ्यां सस्य वेट् ॥ यः से इति पूर्वस्येत् । दिदम्भिषति । इडभावे ॥

**( दम्भेरिच्च )** धिप्सति–धीप्सति ॥

( सुबोधिनी )–दम्भेरिच्च ॥ स्वरस्य ईस् स्यात् इच्च पूर्वस्य लोपश्च ॥ अनिटि से उपधानस्य लोप इति नलोपः । आदिजबानामिति धत्वम् । धिप्सति–धीप्सति । णुगन्तो मित्संज्ञको ञ्यन्तो जानातेर्ज्ञपिः पकारान्तश्चौरादिको वा । दाम्भिज्ञपिभ्यामिति वेट् । जिज्ञपयिषति । इडभावे 'नानिटि से' इति न गुणः । से दीर्घ इति दीर्घस्तु परत्वात् ञेरिति ञिलोपेन बाध्यते । ज्ञपेः स्वरस्य सादौ से ईत् पूर्वस्य लोपश्च । अनिटि से ज्ञीप्सति ॥

**( इवन्तऋधभ्रस्जाश्रिस्वृयूर्णुभृसनिभ्यः सस्येड्वा )** दिदेविषति ॥

( सुबोधिनी )–इवन्तऋधभ्रस्जश्रिस्वृयूर्णुभृसनिभ्यः सस्येड्वा ॥ इवन्तेभ्यः ऋधादिभ्यश्च सस्येड् वा स्यात् ॥ दिवु क्रीडादौ । सिसतासीस्यपामितीट् । दिदेविषति । इडभावे 'नानिटि से' इति न गुणः ॥

**( वस्यानिटि से उः )** दुद्यूषति । अर्दिधिषति ॥

( सुबोधिनी )–वस्यानिटि से उः ॥ धातोर्वस्य उत्वं स्यात् अनिटि से ॥ यत्वं द्वित्वं च । दुद्यूषति ॥ ऋध वृद्धौ । अर्धितुमिच्छति स्वरादेः पर इति धिस्शब्दस्य द्वित्वे आर्दिधिषति । इडभावे ॥

**( ऋधेरनिटि से स्वरस्य इर्द्वित्वलोपश्च )** ईर्त्सति। बिभ्रज्जिषति–बिभर्जिषति–बिभ्रक्षति–बिभर्क्षति । शिश्रयिषति–शिश्रीषति । सिस्वरिषति–सुस्वूर्षति । यियविषति–युयूषति । ऊर्णुनुविषति–ऊर्णुनविषति–ऊर्णुनूषति । बिभरिषति–बुभूर्षति ॥

( सुबोधिनी )–ऋधेरनिटि से स्वरस्य इर्द्वित्वलोपश्च ॥ ऋकारस्य इर् 'य्वोर्विहसे' इति दीर्घः । खसे चपा झसानामिति तः ईर्त्सति ॥ भ्रस्ज पाके । इट् पक्षे भ्रस्जोरसोरिति अर । रहाद्यपो द्विरिति द्वित्वम् । बिभर्जिषति । अरभावे श्चुत्वम् । झभे जबा इति शस्य जः । बिभ्रज्जिषति । इडभावे स्कोरिति सलोपः । छशषेति षत्वम् । 'षढोः कः से' इति कत्वम् । बिभ्रक्षति–बिभर्क्षति ॥ श्रिञ् सेवायाम् । शिश्रयिषति । इडभावे से दीर्घ इति दीर्घः । शिश्रीषति ॥ स्वृ शब्दोपतापयोः । सिस्वरिषति । इडभावे से दीर्घ इति दीर्घे 'पोरुर्' इत्युर् । द्वित्वम् । सुस्वूर्षति ॥ यु मिश्रणे ।अङ्सयोरिति पूर्वोकारस्येत् । यियविषति । इडभावे से दीर्घ इति दीर्घे युयूषति ॥ ऊर्णुञ् आच्छादने । ऊर्णोतेरिडादिप्रत्ययो वा ङिदिति ङित्त्वाद्गुणाभावे नुधातोरित्युव । ऊर्णुनुविषति । ङित्त्वाभावे ऊर्णुनविषति । अतः पूर्वं द्वित्वं पश्चाद्गुणावादेशौ । इडभावे से दीर्घ इति दीर्घः ऊर्णुनूषति ॥ भृ भर्त्सनभरणयोः । बिभरिषति । इडभावे पोरुरित्युर् 'य्वोर्विहसे' इति दीर्घे द्वित्वे च बुभूर्षति ॥

**( स्तौतिण्यन्तयोरेव षे पूर्वात् सस्य षः )** तुष्टूषति ॥ साधयितुमिच्छति सिषाधयिषति–सिषेधयिषति ॥ सुष्वापयिषति ॥ स्तौतिण्यन्तयोरिति किम्। सिसनिषति । षे इति किम्। सिषासति। तिष्ठासति ॥

( सुबोधिनी )–**स्तौतिण्यन्तयोरेव षे पूर्वात्सस्य षः** ॥ पूर्वादिलात्परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्षभूते से नान्यस्य ॥ ष्टुञ् स्तुतौ षत्वे से दीर्घ इति दीर्घे च तुष्टूषति। 'वुः से' इति नेट् ॥ साध संसिद्धौ । ण्यन्तः। द्वित्वे 'यः से' इति पूर्वस्येत्वे षत्वे च। सिषाधयिषति ॥ स्तौतिण्यन्तयोः किम्। षिच क्षरणे। सिसिक्षति। उपसर्गात्तु प्रादेश्च तथा तौ सुनमामिति अड्द्वित्वव्यवधानेऽपीति च षत्वम् । परिषिषिक्षति। वन् षन् संभक्तौ । इडभावे जनसनखनामित्यात्वं वा । सिसनिषति–सिषासति। किलादिति षत्वम् ॥

(तत्त्वदी०)–**स्तौतिण्यन्तयोरेव षे** इति ॥ षे इति कृतषत्वनिर्देशात्से स्तौतिण्यन्तस्यापि पूर्वात्षत्वम् ॥ **सिषासती**ति ॥ जनसनेत्यात्वविकल्पः। षे इति निर्देशादत्र न षत्वनिषेधः ॥

**( अनिटि से उपधानस्य लोपः )** तृंहू हिंसायाम्। तितृक्षति। तितृंहिषति ॥

( सुबोधिनी )–**अनिटि से उपधानस्य लोपः** ॥ धातोरुपधाभूतस्य नस्य लोपः स्यात् अनिटि सप्रत्यये ॥ तृहू स्तृहू तृंहू हिंसार्थास्तुदादौ। ऊदितो वेति वेट्। इडभावे नलोपः। ढत्वे कत्वे षत्वे च तितृक्षति–तितृंहिषति ॥

( तत्त्वदी० )–**अनिटि से उपाधानस्ये**ति ॥ णादिः किदित्यतः किदित्यनुवर्त्य वाक्यभेदेन व्याख्येयम्। तेन लक्ष्यानुसारेण सस्य कित्त्वाकित्त्वे बोध्ये। अतो गुणाभावसंप्रसारणमलोपाः सिद्धाः। विवृत्सति। वृतादिभ्यः स्यसयोर्वा पमिति परस्मैपदम्। पेऽनिट्त्वं चेति इडभावः।

**( इणः से गमबोधने )** एतुमिच्छति जिगमिषति। बोधने तु प्रतीषिषति ॥ इण्वदिकः। अधिजिगमिषति। बोधने तु अधीषिषति ॥

( सुबोधिनी )–**इणः से गमबोधने** ॥ इणेर्गम् स्यात् सप्रत्यये परे बोधनेऽर्थे तु न ॥ एतुमिच्छति गमेः सस्येडितीट्। जिगमिषति । बोधने तु 'यः से' इति सरूपस्य पूर्वस्येत्वम्। प्रतीषिषति ॥ इण्वदिकः इक् स्मरणे। गमेः सस्येतीट्। अधिजिगमिषति ॥

**( इवर्णोवर्णोपधाद्धसादेरसान्ताद्धान्ताच्च क्त्वासौ सेटौ वा कितौ )** दिद्युतिषते–दिद्योतिषते। रुरुचिषते–रुरोचिषते। लिलिखिषति–लिलेखिषति। सिस्निहिषति–सिस्नेहिषति–सिस्निक्षति। **( राधो हिंसायामिस् से द्वित्वलोपश्च )** रित्सति। अन्यत्र आरिरात्सति गुरुम ॥

( सुबोधिनी )–इवर्णोवर्णोपधाद्धसादेरसान्ताद्धान्ताच्च क्त्वासौ सेटौ वा कितौ ॥ द्युत दीप्तौ । द्युतेः पूर्वस्येति संप्रसारणम् । कित्त्वाद् गुणो न । दिद्युतिषते दिद्योतिषते ॥ एवं रुच दीप्तौ । लिख अक्षरविन्यासे । ष्णिह प्रीतौ । राधो हिंसायामिस से द्वित्वलोपश्च । राधस्वरस्येत्यर्थः । राध संसिद्धौ । स्कोरिति सलोपे खसे चपा इति धस्य तः । रित्साति ॥ हिंसायां किम् । देवमारिरात्सति । 'यः से' इति पूर्वस्येत् । खसे चपा इति धस्य तः ॥

**( मुचोऽकर्मकस्य गुणो वा से द्वित्वलोपश्च )** मोक्षते–मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्येति किम् । मुमुक्षति वत्सं कृष्णः ॥ विवर्तिषते–विवृत्सति ॥ निनर्तिषति–निनृत्सति ॥ वृङ्वृञ्‌ॠदन्तात्सस्येड्वा । तितरिषति–तितरीषति–तितीर्षति । विवरिषते–विवरीषते–वुवर्षते । विवरिषति–विवरीषति–वुवूर्षति ॥ ध्वृ कौटिल्ये । दुध्वूर्षति ॥

( सुबोधिनी )–मुचोऽकर्मकस्य गुणो वा से द्वित्वलोपश्च ॥ मुच्लृ मोक्षणे । चोः कुरिति कः । मोक्षते–मुमुक्षते ॥ अकर्मकस्य किम् । मुमुक्षति । 'नानिटि से' इति गुणाभावः ॥ वृतु वर्त्तने । वृतादिभ्यः स्यसयोरिति वा पम् । पेऽनिट्त्वं च । 'नाऽनिटि से' इति न गुणः । विवृत्सति–विवर्तिषते ॥ नृती गात्रविक्षेपे । नृततृदेति वेट् । 'नानिटि से' इति न गुणः । निनृत्सति–नर्त्तिषति । वङ्वृञ्‌ॠदन्तात्सस्येड् वा ॥ तॄ प्लवनतरणयोः । वृङ्वृञिति वेटो दीर्घः । तितरिषति–तितरीषति । इडभावे ॠत इरितीर् । 'य्वोर्विं हसे' इति दीर्घः । तितीर्षति ॥ वृञ् वरणे । वृङ्वृञ् इति वेटो दीर्घः। विवरिषति–विवरीषति । इडभावे पोरुरित्युर् । वुवूर्षति ॥ एवं वृङ् संभक्तौ । विवरिषते–विवरीषते–वुवूर्षते ॥ ध्वृ कौटिल्ये दुध्वूर्षति ॥

( तत्त्वदी० )–दुध्वूर्षतीति ॥ प्रथमं दीर्घस्ततः 'पोरुर्' ततो य्वोर्विं हस इति दीर्घः ॥

**( स्मिङ्पूङ्रञ्ज्वशिभ्यः सस्येट् )** सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते । उचिच्छिषति । अधिजिगापयिषति । अध्यापिपयिषति । शिश्वाययिषति–शुशावयिषति । जुहावयिषति । पुस्फारयिषति–पुस्फोरयिषति । पिपावयिषति । बिभावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति । सिस्रावयिषति–सुस्रावयिषति ॥

( सुबोधिनी )–स्मिङ्पूङ्रञ्ज्वशिभ्यः सस्येट् ॥ स्मिङ् ईषद्धसने । अस्यानिट्त्वादिडागमस्याप्राप्तिः । स्तौतिण्यन्तयोरेवेति नियमान्न षः । सिस्मयिषते ॥ पूङ् पवने । 'वुः से' इति निषेधे प्राप्ते अङ्सयोरिति पूर्वोवर्णस्येत् । पिपविषते ॥ ऋ गतौ ।

अस्याप्यनिट्त्वादिडागमस्याप्राप्तिः । सस्य इटि गुणे च कृते अरि स इति स्थिते । स्वरादेः पर इति रिस्शब्दस्य द्वित्वे अरिरिषेत । अञ्जू व्यक्तिम्रक्षणादौ ॥ अशूङ् व्याप्तौ । अनयोरूदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् । अश् भोजने इति क्र्यादिस्तु नित्यं सेडेव । अञ्जिजिषति । अशिशिषते । उछ उञ्छे । अत्र छ इति छस्य द्वित्वे खसे चपा झसानामिति चकारे कृते च्छसहितस्येटो द्वित्वे हसादिशेषे च उचिच्छिषति ॥ इङ् अध्ययने । अध्यापयितुमिच्छति अङ्सपरे णौ इङो गा वेति वा गा । रातो णौ पुगिति पुक् । अधिजिगापयिषति । पक्षे इङ्क्रीजीनामित्यात्वं स्वरादेः पर इति पिश्ब्दस्य द्वित्वे अध्यापिपयिषति ॥ टु ओश्वि गतिवृद्ध्योः । श्वयतेर्ण्यन्तस्येति वा संप्रसारणम् । शिश्वाययिषति–शुशावयिषति ॥ ह्वेञ् स्पर्द्धायाम् । ह्वयतेरङ्सपरे इति संप्रसारणे युगभावे च कृते जुहावयिषति ॥ स्फुर विकसने । णौ चिस्फुरोरित्यात्वे कृते णिनिमित्तः स्वरादेश इति वचनेन तस्य स्थानिवद्भावादुकारविशिष्टस्य द्वित्वम् । पुस्फारयिषति । आत्वाभावे पुस्फोरयिषति ॥ टुक्षु शब्दे । चुक्षावयिषति ॥ पुङ् पवने । अङ्सयोरिति पूर्वोवर्णस्येत्वम् । पिपावयिषति ॥ भूसत्तायाम् । भावयितुमिच्छति पूर्वस्येत्वम् । बिभावयिषति ॥ यु मिश्रणे । अत्रापीत्वम् । यियावयिषति ॥ रु शब्दे । पूर्वस्येत्वम् । रिरावयिषति ॥ लूञ् छेदने । लिलावयिषति ॥ स्रु गतौ । स्रवतिशृणोतिद्रवतीतीत्वं वा । सिस्रावयिषति–सुस्रावयिषति ॥

(तत्त्वदी०)–स्मिङ्पूङ् ॥ स्मिङ् ईषद्धसने । पूङ् पवने । ऋ गतौ । ऋ गतिप्रापणयोश्च । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अशूङ् व्याप्तौ ॥ रञ्ज रागे । वश कान्तावित्येतयोर्ग्रमो न कार्यः । स्मिङोऽनिट्त्वादप्राप्ते ऋपूङोस्तु 'वुः से' इति निषेधे अञ्ज्वशोस्तूदित्त्वाद्विकल्पे प्राप्ते वचनम् । ऋइत्यादीनां ग्रहणाद्दृकारान्ता न ग्राह्याः । **सिस्मयिषत** इति ॥ ण्यन्तयोरेवेति नियमान्न षः । ङानुबन्धग्रहणात्तु पूञः पुपूर्षतीत्येव ॥ **अरिरिषती**ति ॥ ऋ इ स इति स्थिते गुणे आरि स इति स्थिते । स्वरादेः पर इति रिशब्दस्य द्वित्वम् ॥ **पिपावयिषती**त्यादि । ण्यन्तात्से अङ्सयोः पूर्वस्येति इकारः । नदी वृक्षमुन्मुमूलयिषति । वृष्टी राजिमभिषिषिक्षतीत्यादौ तु चेतनत्वारोपात्सः । पाषाणादीनां संबोधनवत् ॥

**( सान्तात्सो न स्वार्थसान्तात्तु स्यादेव ) जुगुप्सिषते ॥ ॥ इति सान्तप्रक्रिया ॥**

( सुबोधिनी )–सान्तात्सो न स्वार्थसान्तात्तु स्यादेव ॥ "शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ॥ सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ १ ॥" शैषिकाच्छैषिकः सरूपः प्रत्ययो नेष्टः । शालीये भव इति वाक्यमेव । न तु ईयान्तात् पुनरीयः ॥ सरूपः किम् । आहिच्छत्रे भवः आहिच्छत्रीयः । अणन्तादीयः ॥

तथा मत्वर्थीयात् मतुवर्थिकः सरूपः प्रत्ययो न भवति । धनवानस्यास्ति । वत्वन्तात् न वतुः । विरूपस्तु स्यादेव । दण्डिमती शाला । सरूप इत्यनुसंबध्यते । सरूपः सादृश्यं तत्तु अर्थद्वारा । तेनेच्छासान्तादिच्छासो न भवति । स्वार्थसान्तात्तु स्यादेव । गुप्स्य इति स्वार्थे सप्रत्ययः । तदन्तादिच्छासः । जुगुप्सिषते । 'यः से' इतीत्वे मानादीनामिति दीर्घे च । मीमांसिषते । गुप् गोपने ॥ मान विचारणे ॥ ॥इति सुबोधिन्यां सान्तप्रक्रिया ॥

(तत्त्वदी० )–सान्तात्सो नेति ॥ अतिशये हसादेर्यङ् द्विश्चेत्यतश्चकारानुवृत्तेरेतद्बोध्यम् ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगमत्सान्तसाधनम् ॥

इति तत्त्वदीपिकायां सान्तप्रक्रिया ॥ २ ॥

---

# अथ यङन्तप्रक्रिया ।

**अतिशये हसादेर्यङ् द्विश्च ॥ हसादेरेकस्वराद्धातोर्भृशार्थे पौनःपुन्ये च यङ् प्रत्ययो भवति द्वित्वं च ॥**

( सुबोधिनी )–अतिशये हसादेर्यङ् द्विश्च ॥ हस आदिर्यस्य स हसादिस्तस्मादेकस्वराद्धातोर्यङ् स्यात् । यङन्तस्य धातोर्द्वित्वं च अतिशयेऽर्थे । अतिपूर्वात् शीङो भावे स्वराद इत्यः । अतिशयो द्विविधः । पौनःपुन्यम् भृशार्थश्च ॥ अतिशये किम् । पठति ॥ एकस्वरात्किम् । पुनःपुनर्जागर्ति ॥ हसादेः किम् । भृशमीक्षते । भृशं शोभते । भृशं रोचते । इत्यादौ यङ् नेति भाष्यम् ॥ पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते ॥

( तत्त्वदी० )–अतिशये हसादेर्यङ् द्विश्च ॥ अतिशयनमतिशयः । अतिपूर्वात् शीङो भावे स्वराद इत्यप्रत्ययः । स च द्विविधः । पौनःपुन्यं भृशार्थश्च । स चार्थो यङो द्योत्य एव । हस आदिर्यस्य स तथा तस्मात् । द्विरित्यपरं वाक्यं धातोर्द्विर्वचनम् । धातुश्च यङन्त एव न तु यङः प्रकृतिभूतः अटाट्यत इत्याद्यसिद्धेः ॥

**यङि ॥ यङि यङ्लुकि च पूर्वस्य नामिनो गुणः ॥ सधातुः । ङित्त्वादात् । भृशं पुनःपुनर्वा भवति बोभूयते । बोभूयांचक्रे । बोभूयिषीष्ट । अबोभूयिष्ट ॥ बोभुज्यते ॥**

( सुबोधिनी )–यङि ॥ यङ्प्रत्यये लुकि च पूर्वस्येत्यनुवृत्तम् ॥ भू सत्तायाम् । सधातुरिति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति बोभूयते । बोभूयेते । बोभूयताम् । अबोभूयत । कासादिप्रत्ययादित्याम् । यत इत्यलोपः । बोभूयांचक्रे । बोभूयिषीष्ट । बोभूयिता । बोभूयिष्यते अबोभूयिष्यत । अबोभूयिष्ट ॥ भुज पालनादौ । अतिशयेन भुनक्ति बोभुज्यते ॥

( तत्त्वदी० )-यङीति ॥ यङो ङित्त्वादात् ॥ अत्र केचित् । कथं यङन्तादात् ङितो धातोराद्विधानात् अत्र च यो ङित् स न धातुः यो धातुः स च न ङित् । किं च ङस्य गुणनिषेधादिप्रयोजकत्वेन चरितार्थत्वादात्मनेपदप्रयोजकत्वासंभवः । अवयवे कृतं लिङ्गं चरितार्थं समुदायविशेषकं भवतीत्युक्तेः । अत्रोच्यते । सधातुरित्यनेन यङन्तस्य धातुत्वेन धातोर्ङित्त्वसत्त्वात् । गुणनिषेधार्थं च ङकारप्रश्लेषस्य कर्तव्यत्वात् ॥ बोभूयत इति ॥ भवनानुकूल एकाभिन्नाश्रयको वर्तमानोऽतिशयविशिष्टो व्यापारः ॥

**अनपि च हसात् ॥ हसादुत्तरस्य यस्य लोपो भवत्यनपि विषये॥ बोभुजांचक्रे । बोभुजिता ॥ मोमुह्यते । मोमुहांचक्रे ॥ लेलिह्यते ॥ जोहूयते ॥ वेविद्यते ॥**

( सुबोधिनी )-अनपि च हसात् ॥ हसात्परस्य यशब्दस्य लोपोऽनपि ॥ हसात्किम् । लोलूयिता ॥ योयूयिता ॥ आदेः परस्य ॥ परस्य यद्विहितं तत्तस्यादेर्बोध्यमिति यलोपः । यत इत्यलोपः । बोभुजांचक्रे । बोभुजिषीष्ट । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः ॥ एवं मुह वैचित्ये । लिह आस्वादने । हु दानादनयोः । ये इति दीर्घः । जोहूयते । विद ज्ञानादौ । वेविद्यते । डुपचष् पाके ॥

**आतः ॥ यङि यङ्लुकि च पूर्वस्यात आकारः ॥ पापच्यते । पापठ्यते ॥**

( सुबोधिनी )-आतः ॥ आ अत इति च्छेदः । पूर्वस्येत्यनुवृत्तम् । पापच्यते ॥ पठ व्यक्तायां वाचि पापठ्यते ॥

( तत्त्वदी० )-आत इति ॥ आ आ अत इति च्छेदः । द्वितीयाकारस्य वैय्यर्थ्यानुपपत्त्या किञ्चिदिष्टं ज्ञाप्यते किं तदिष्टम् अकित्पूर्वस्याकारस्याकार इति तेन नरीनृत्यत इति सिद्धम् ॥

**( सिचो यङि न षः ) सेसिच्यते ॥**

( सुबोधिनी )-सिचो यङि न षः ॥ सिचेः सस्य षत्वं न स्यात् यङ्प्रत्यये परे ॥ षिच क्षरणे । सेसिच्यते ॥

**( सूचिसूत्रिमूत्र्यटत्यर्त्यशूर्णोतिभ्यो यङ् ) सोसूच्यते ।सोसूत्र्यते। मोमूत्र्यते ॥**

( सुबोधिनी )-सूचिसूत्रिमूत्र्यटचर्त्यशूर्णोतिभ्यो यङ् ॥ सूच पैशुन्ये । सूत्र वेष्टने । मूत्र प्रस्रवणे । एते त्रयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते ॥ अट गतौ । गौः कुटिलमटति । इह टयशब्दस्य द्वित्वम् । आत इत्यात्वम् । अटाट्यते । ऋ गतौ । कुटिलमृच्छति गुणोऽर्तिसंयोगाद्योरिति गुणः ॥

१ यत इत्यनेन यलोपत्वादिदं चिन्त्यम् ।

(तत्त्वदी०)-सूचिसूत्रि ॥ सूच पैशुन्ये । सूत्र वेष्टने । मूत्र प्रस्रवणे । अट गतौ । ऋ गतौ । अश भोजने । अशूङ् व्याप्तौ । ऊर्णुञ् आच्छादने । तत्राद्यानां त्रयाणां चुरादिण्यन्तत्वेनानेकस्वरत्वादद्यादीनां च हसादित्वादप्राप्ते वचनम् ॥

**( यकारपररेफस्य न द्वित्वनिषेधः ) अरार्यते । अरारांचक्रे । अशाश्यते । ऊर्णोनूयते ॥**

( सुबोधिनी )-यकारपररेफस्य न द्वित्वनिषेधः ॥ यकारः परो यस्मात् स यकारपरः यकारपरश्चासौ रेफश्च यकारपररेफस्तस्य । ततो यंशब्दस्य द्वित्वे हसादिशेषे आत इति दीर्घे च अरार्यते इति भाष्योदाहरणात् । लिटि अनापि च हसादिति यलोपः। यत इत्यलोपः । अरारांचक्रे । लुटि । अरारिता ॥ अशूङ् व्याप्तौ । अशाश्यते ॥ ऊर्णुञ् आच्छादने । 'ये' इति दीर्घः । ऊर्णोनूयते ॥

( तत्त्वदी० )-अरार्यत इति ॥ ऋ य इति स्थिते गुणे कृते यशब्दस्य द्वित्वे हसादिशेषे आत इति दीर्घः ॥ ऊर्णोऽनूयत इति ॥ णत्वस्यासिद्धत्वान्नुशब्दस्य द्वित्वम् ॥

**( गत्यर्थात्कौटिल्ये एव यङ् ) कुटिलमटति अटाट्यते॥ कुटिलं व्रजति वाव्रज्यते ॥**

( सुबोधिनी )-गत्यर्थात्कौटिल्ये एव यङ् ॥ कुटिलस्य भावः कौटिल्यम् ॥ व्रज गतौ । कुटिलं व्रजति आत इति पूर्वस्यात्वम् । वाव्रज्यते ॥

( तत्त्वदी० )-अटाट्यत इति ॥ एकाभिन्नाश्रयको वक्रगत्यनुकूलो वर्तमानकालिको व्यापार इति । कौटिल्यस्य फलविशेषणत्वे व्यापारविशेषणत्वे तु वक्रो गत्यनुकूलो व्यापार इति शेषः ॥

**( लुपसदचरजपजभदहदंशगॄभ्यो धात्वर्थगर्हायामेव यङ् ) गर्हितं लुम्पति लोलुप्यते । सासद्यते ॥**

( सुबोधिनी )-लुपसदचरजपजभदहदंशगॄभ्यो धात्वर्थगर्हायामेव यङ् ॥ लुप्लृ छेदने । गर्हितं लुम्पति लोलुप्यते । षद्लृ विशरणादौ । आत इति पूर्वस्यात्वम् । गर्हितं सीदति सासद्यते ॥

( तत्त्वदी० )-धात्वर्थगर्हायामेवेति ॥ गर्हापि फलस्य व्यापारस्य वा विशेषणम् । लोलुप्यते वनं चैत्रः । चैत्राभिन्नाश्रयो वनाभिन्नाश्रितकुत्सितच्छेदनानुकूलो वर्तमानकालिको व्यापारः । वनाभिन्नाश्रयः छेदनानुकूलः कुत्सितो व्यापार इति वा ॥

**ञमजपां नुक् ॥ ञमान्तस्य जपजभदहदंशभञ्जपसचरफलां च पूर्वस्यादन्तस्य नुग् यङ्लुकोः ॥**

(सुबोधिनी)-ञमजपां नुक् ॥ जप व्यक्तायां वाचि । जभी गात्रविनामे । दह भस्मीकरणे । दंश दशने । भञ्जो आमर्दने । पस धातुर्दन्त्यान्तः सौत्रो गत्यर्थः । ताल-

व्यान्त इति माधवः । चर गत्यादौ । ञिफला विशरणे । फल निष्पत्तौ वा । एषां अमप्रत्याहारान्तस्य च नुक् यङ्यङ्लुकोः ॥

**( चरफलोः पूर्वात्परस्यात उद्यङ्लुकोः )** चञ्चूर्यते—चंचूर्यते । चञ्चुरां चक्रे ॥ पम्फुल्यते ॥ नुगित्यनेनानुस्वारो लक्ष्यते । स च पदान्तवत् ॥ जञ्जप्यते—जंजप्यते ॥

( सुबोधिनी )—चरफलोः पूर्वात्परस्यात उद्यङ्लुकोः ॥ पूर्वाद् द्वित्वरूपादुत्तररूपस्यात उत्वमित्यर्थः । नुगित्यनेनानुस्वारो लक्ष्यते स च पदान्तवत् । अमजपामिति नुमागमोऽनुस्वारं बोधयति । सोऽनुस्वारः पदान्तकार्यं लभत इत्यर्थः । तेन वा पदान्तस्येत्यनेन वा परसवर्णः । चञ्चूर्यते—चंचूर्यते ॥

( तत्त्वदी० )—स च पदान्तवदिति ॥ तेन वेति यथा स्यात् ॥

**( गिरते रेफस्य लत्वं यङि )** जेगिल्यते ॥ यय्यँम्यते—यंयम्यते ॥ दीङ् क्षये । देदीयते ॥ ओप्यायी वृद्धौ । पेपीयते ॥ चञ्चम्यते—चंचम्यते ॥ चाखायते—चङ्खन्यते—चंखन्यते ॥ चङ्कण्यते—चंकण्यते ॥ तन्तन्यते—तंतन्यते ॥ जञ्जभ्यते—जंजभ्यते ॥ दन्दह्यते—दंदह्यते ॥ दन्दश्यते—दंदश्यते ॥ बम्भज्यते—बंभज्यते ॥ पस बाधनग्रन्थनयोः पम्पस्यते—पंपस्यते ॥

( सुबोधिनी )—गिरते रेफस्य लत्वं यङि ॥ गॄ निगरणे इत्यस्य रेफस्य लत्वं स्याद् यङि ॥ गर्हितं गिलति जेगिल्यते ॥ यम उपरमे । कण निमीलने । तनु विस्तारे यमान्तत्वादेषां पूर्वस्य नुक् । यय्यँम्यते—यंयम्यते ॥ चङ्कण्यते—चंकण्यते ॥ तन्तन्यते—तंतन्यते ॥

( तत्त्वदी० )—जेगिल्यत इति ॥ गिलनस्य च गर्हितत्वं विवृतास्यचेष्टादिकृतम् ॥

**रीगृदुपधस्य** ॥ ऋत्वतो धातोर्यङि परे पूर्वस्य रीक् ॥ नरीनृत्यते ॥ वरीवृत्यते ॥ जरीगृह्यते ॥ वरीवृश्च्यते ॥ परीपृच्छ्यते ॥ चलीक्लृप्यते ॥

( सुबोधिनी )—रीगृदुपधस्य ॥ ऋदुपधस्य धातोः पूर्वस्य रीग्यङि ॥ ऋदुपधस्येति किम् । चेकीर्त्यते ॥ णेरभावपक्षे एकस्वरत्वाद्यङ् ॥ नृती गात्रविक्षेपे । क्षुभ्नादित्वान्न णत्वम् । नरीनृत्यते ॥ वृतु वर्तने । अतिशयेन वर्तते वरीवृत्यते ॥ ग्रह उपादाने । ग्रहामिति संप्रसारणम् । जरीगृह्यते ॥ वरीवृश्च्यते । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । परीपृच्छ्यते । रीगिति योगविभागादुभयत्र रीक् ॥ कृपू सामर्थ्ये । उभयत्र लत्वम् । चलीक्लृप्यते ॥

**( वशेर्यङि न संप्रसारणम् ) वावश्यते ॥ ( श्वयतेर्वा ) शोशूयते-शेश्वीयते ॥ सास्मर्यते ॥**

( सुबोधिनी )—वशेर्यङि न संप्रसारणम् ॥ ग्रहामिति प्राप्ते निषेधः । वश कान्तौ । आत इति पूर्वस्यात्वम् ॥ अतिशयेन वष्टि वावश्यते । टु ओश्वि इर् गतिवृद्धयोः ॥ श्वयतेर्वेति विकल्पेन संप्रसारणम् यङि । 'ये' इति दीर्घः । शोशूयते—शेश्वीयते ॥ स्मृ चिन्तायाम् । गुणोऽर्तिसंयोगाद्योरिति गुणः । आत इति पूर्वस्यात्वम् ॥ सास्मर्यते ॥

**( कवतेः पूर्वस्य न चुत्वं यङि ) कोकूयते ॥**

( सुबोधिनी )—कवतेः पूर्वस्य न चुत्वं यङि ॥ कवतेरित्यपा निर्देशात् 'कुङ् शब्दे' इति भ्वादिरेव गृह्यते न तु कुशब्दे इत्यादादिकः । 'कुङ् शब्दे' इति तौदादिकश्च । 'ये' इति दीर्घः । कोकूयते ॥

**( वञ्चुस्रंसुभ्रंसुध्वंसुकसपतपदस्कन्दां यङि यङ्लुकि च पूर्वस्य नीक् ) वनीवच्यते ॥ सनीस्रस्यते ॥ दनीध्वस्यते ॥ बनीभ्रस्यते ॥ चनीकस्यते ॥ पनीपत्यते ॥ पनीपद्यते ॥ चनीस्कद्यते ॥**

( सुबोधिनी )—वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दां यङि यङ्लुकि च पूर्वस्य नीक् ॥ वञ्चु वञ्चने ॥ स्रंसु ध्वंसु भ्रंसु अधःपतने । कस गतौ । पत्लृ पतने । पद गतौ । स्कन्दिर् गतिशोषणयोः । आत इत्यस्यापवादः । नो लोप इति नलोपः । वनीवच्यते ॥

( तत्त्वदी० )—वञ्चु ॥ वनीवच्यत इति । नो लोपः । दीर्घोच्चारणसामर्थ्याद्ध्रस्वगुणौ न ॥

**ऋतो रिङ् ॥ येऽनपि ॥ चेक्रीयते ॥ जेह्रीयते ॥ वेव्रीयते ॥**

( सुबोधिनी )—ऋतो रिङ् ॥ यप्रत्ययेनापि । 'ये' इति दीर्घः । परत्वाद् रि आदेशे कृते द्वित्वम् । डुकृञ् करणे । चेक्रीयते ॥ हृञ् हरणे । जेह्रीयते ॥ वृङ्वृञोः वेव्रीयते ॥

**दादेरिः ॥ अपिद्दाधामागेहाक्पिबतिसोस्थामिकारः क्ङिति हसे अनपि ॥ देदीयते ॥ देधीयते ॥ मेमीयते ॥ जेगीयते ॥ जेहीयते ॥ पेपीयते ॥ सेषीयते ॥ तेष्ठीयते ॥**

( सुबोधिनी )—दादेरिः ॥ डुदाञ् दाने ॥ दो अवखण्डने ॥ देङ् पालने । अनयोः संध्यक्षराणामित्यात्वे दारूपम् दाप्दैपौ विना ॥ डुधाञ् धारणादौ ॥ मा माने ॥ माङ् माने ॥ मेङ् प्रणिदाने ॥ गै शब्दे ॥ ओहाक् त्यागे ॥ पा पाने ॥ षो अन्तकर्मणि ॥ ष्ठा गतिनिवृत्तौ ॥ एषामिकारः स्यात् क्ङिति हसेऽनपि । अनेनेत्वे द्वित्वम् । यङीति गुणः । देदीयते । इत्यादि ॥

( घ्राध्मोरीर्यङि ) जेघ्रीयते ॥ देध्मीयते ॥

( सुबोधिनी )–घ्राध्मोरीर्यङि ॥ दीर्घोच्चारणं यङ्लुगर्थम् । घ्रा गन्धोपादाने ॥ ध्मा शब्दाग्निसंयोगयोः ॥ जेघ्रीयते ॥ देध्मीयते ॥

( हन्तेर्हिंसायां घ्नीभावः ) जेघ्नीयते–हिंसायां किम् । जङ्घन्यते ॥

( सुबोधिनी )–हन्तेर्हिंसायां घ्नीभावः ॥ यङि घ्नीभावे सति द्वित्वम् । जेघ्नीयते । हिंसायां किम् । जङ्घन्यते । पूर्वाद्धन्तेरिति घः ॥

( तत्त्वदी० )–जेघ्नीयत इति ॥ घ्नीभावेन न द्वित्वबाधः विषयभेदात् । ह्रस्वेन सिद्धेऽपि प्रक्रियालाघवाय घ्नीः । एवमन्यत्रापि ॥

( स्वपिस्यमिव्येञां यङि संप्रसारणम् ) सोषुप्यते ॥ सेसिम्यते ॥ वेवीयते ॥

( सुबोधिनी )–स्वपिस्यमिव्येञां यङि संप्रसारणम् ॥ ञिष्वप् शये ॥ स्यम शब्दे ॥ व्येञ् संवरणे ॥ षत्वम् सोषुप्यते इत्यादि ॥

( चायः कीर्यङि ) चेकीयते ॥ जाजायते–जञ्जन्यते ॥ शीङोऽय-ङ् ये क्ङिति ॥ शाशय्यते ॥ डोढौक्यते ॥ तोत्रौक्यते ॥ इति यङन्तप्रक्रिया ॥

( सुबोधिनी )–चायः कीर्यङि ॥ यङि परे चायः कीः स्यात् ॥ दीर्घोच्चारणं यङ्लुगर्थम् । चायृ पूजानिशामनयोः चेकीयते ॥ जनी प्रादुर्भावे । जनसनखनामित्यात्वम् । जाजायते । पक्षे जपजभदहदशभञ्जपशामिति पूर्वस्य नुक् । जञ्जन्यते–जंजन्यते । शीङोऽयङ् ये क्ङिति । ङित्वादन्तादेशः परत्वादन्तरङ्गत्वाच्चायङादेशे कृते द्वित्वम् । आत इति पूर्वस्यात्वम् । यत इत्यल्लोपः । शाशय्यते ॥ ढौकृ त्रौकृ गतौ । ह्रस्व इति पूर्वस्य ह्रस्वे ततो यङीति गुणः । डोढौक्यते ॥ तोत्रौक्यते ॥  ॥ इति सुबोधिन्यां यङन्तप्रक्रिया ॥

( तत्त्वदी० )–कृतायामिह टीकायां लोकेशकरशर्मणा । मता माध्यकृतो भव्या यङन्तप्रक्रियागता ॥

इति तत्त्वदीपिकायां यङन्तप्रक्रिया ॥ ३ ॥

## अथ यङ्लुगन्तप्रक्रिया ।

यङ्लुगन्तमदादौ बोध्यम् । अदादित्वादपो लुक् । यङ्लुकि सति ॥ ऊकप्रत्ययसंयोगं विना यङो वा लुक् ॥ यङ्लुगन्तात्पम वान्यत्र ॥

( सुबोधिनी )–वान्यत्र ॥ लुगिति सूत्रमनुवृत्तम् । ऊकप्रत्यये यङो लुग् विधीयते दंदशूक इत्यादौ । अन्यत्र ऊकप्रत्ययाभावे यङ्प्रत्ययस्य वा लुग् भवति । लुगभावे यङ्प्रत्ययान्तं भवतीत्यर्थः । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययल-

क्षणेन यङन्तत्वाद्द्वित्वादि । धातुत्वाल्लडादयः । परतोऽन्यदिति परस्मैपदम् । आदनुदात्तङित इत्यनेनात्मनेपदं तु न भवति । येऽपि स्पर्द्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न अनुबन्धानिर्दिष्टत्वात् उक्तं च " श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥" इति निषेधात् एतानि पञ्च कार्याणि यङ्लुकि न प्रवर्तन्ते । तान्याह । श्तिप्प्रत्ययनिर्दिष्टं कार्यम् इक्श्तिपाविति श्तिप् । शपा अप्प्रत्ययेन निर्दिष्टम् अप् कर्तरीत्यप् । अनुबन्धनिर्दिष्टं यङो ङित्त्वादि । गणनिर्दिष्टं दिवादेर्य इत्यादि । एकस्वरनिर्दिष्टं नैकस्वरादनुदात्तादित्यादि । यथा गदनदेति सूत्रे श्तिपा शपा च निर्दिष्टत्वाद्यङ्लुकि णत्वं न । प्रनिजङ्घन्ति । प्रनिजागदीति ॥ लित्पुषादेरित्यत्रानुबन्धेन गणेन च निर्दिष्टत्वाद् ङो न । अजङ्गमीत् । अवर्वर्तीत् ॥ नैकस्वरादित्यत्रैकस्वरनिर्दिष्टत्वादिण्निषेधो न । बेभेदिता । चेच्छेदितेति ॥ अत एव यादयो न गणेन निर्दिष्टत्वात् किं तु अबेव ॥ यङ्लुगन्तमदादौ बोध्यम् । अदादित्वादपो लुक् । भू सत्तायाम् । यङि लुकि साति ॥

( तत्त्वदी० –वान्यत्र ॥ लुक् इति सूत्रमात्रमनुवर्तते । तेनोकप्रत्यये यङो लुग्विधीयते ॥ दंदशूक इत्यादौ ॥ अन्यत्रेति व्याचष्टे ऊकप्रत्ययसंयोगं विनेति । एवं व्यवस्थायामन्यत्र यङो लुगित्यर्थः ॥ यङ्गन्तात्पमिति ॥ अत्र दीक्षिताः । प्रत्ययलक्षणेन ङित्त्वमाश्रित्यात्मनेपदंत्वस्य न ङित्त्वस्य प्रत्ययाप्रत्यये साधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः । यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत् । इत्याहुः । तन्नेति पण्डिताः । तथाहि । तेतिक्ते इति किं निपात्यते । तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते । नैतदस्ति प्रयोजनं सिद्धमत्रात्मनेपदमनुदात्तङित आत्मनेपदमिति नियमार्थं तर्हि भविष्यति । अत्रैव यङ्लुगन्तस्यात्मनेपदमन्यत्र न भवतीत्यत्रैदेतदेव ज्ञापकमिति भाष्यकारादिमतो द्भावनेन तदाकारविरुद्धमित्युक्तवन्तः । अदादित्वादिति ॥ प्राञ्चस्तु ह्वादित्वं मत्वाद्वित्वमाहुस्तदपाणिनीयमित्युपेक्षितम् ॥ द्वेः स्वरेपि ॥ अपिशब्दाद्धात्वन्तलोपे गुणवृद्धी न । तेनबेभिदिता मरीमृजितेत्यादि सिद्धम् ॥ प्रक्रियाक्रममाह । यङ्लुकिसतीति ॥

( पितः स्मो वेट् ) बोभवीतु–बोभोतु । अबोभवीत्–अबोभोत्, अबोभूताम्, अबोभवुः । बोभवांचकार । गुणं बाधित्वा नित्यत्वाद्वुक् ॥ अबोभूवीत्–अबोभोत्, अबोभूवुः । अबोभूवीः–अबोभोः । अबोभूवम् ॥ पापचीति–पापक्ति, पापक्तः, पापचति । अपापचीत्–अपापक्–अपापग्, अपापचुः । पापचां चकार । पापचिता । अपापाचीत्–अपापचीत् ॥ द्वेः स्वरेऽपि नोपधाया गुणः । बोभुजीति–बोभोक्ति, बोभुक्तः, बोभुजति । अबोभुजीत्–अबोभोक् । बोभोजिता । अबोभोजीत् ॥ वावदीति–वावत्ति । वावदीतु–वावत्तु । वावद्धि । वावद्यात् ॥ जाघटीति–जाघट्टि । जाघटीषि–ष्टुभि ष्टुः जाघ-

टृषि। अजाघटीत् ॥ स्पर्ध संघर्षे। पास्पर्द्धीति–पास्पर्द्धि, पास्पर्द्धः, पास्पर्धति । हौ पास्पार्द्धि । अपास्पर्द्धीत्–अपास्पर्त्–अपास्पर्द् । सिपि अपास्पर्द्धीः–अपास्पाः–अपास्पर्त्–अपास्पर्द् ॥ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । जागाधीति–जागाद्धि, जागाद्धः । आदिजबानामिति घः जाघात्सि। अजागाधीत्–अजाघात् । सिपि अजाघाः–अजाघात् ॥ नाथृ । नानाथीति–नानात्ति, नानात्तः, नानाथति ॥ दध । दादधीति–दादद्धि । दाधत्सि । अदादधीत्, अदादद्धाम्, अदादधुः । अदाधः–अदादधीः । दादधिता । अदादाधीत्–अदादधीत् ॥ मुद । मोमुदीति–मोमोत्ति ॥ कुर्द खुर्द गुर्द गुद क्रीडायामेव । चोकूर्दीति–चोकूर्त्ति, चोकूर्त्तः । अचोकूर्त् । सिपि अचोकूः ॥ ( ऋदन्तानामृदुपधानां च यङ्लुकि पूर्वस्य रुक्रिकरीकः )

चर्करीति-चरिकरीति–चरीकरीति–, चर्कर्ति–चरिकर्ति–चरीकर्ति, चर्कृतः–चरिकृतः–चरीकृतः, चर्क्रति–चरिक्रति–चरीक्रति । अचर्करीत्–अचरिकरीत्–अचरीकरीत् । अचर्कः–अचरिकः–अचरीकः । चर्करिता ॥ वर्वृतीति–वरिवृतीति–वरीवृतीति–, वर्वर्त्ति–वरिवर्त्ति–वरीवर्त्ति । वर्वर्तामास । वर्वर्तिता । वर्वर्तिष्यति । अवर्वर्तिष्यत् ॥ वनीवश्चीषि–वनीवङ्क्षि । वनीवच्यात् । वनीवश्चीतु–वनीवङ्क्तु, वनीवङ्क्ताम् । अवनीवश्चीत् । संयोगान्तस्य लोपः। अवनीवन् ॥ जङ्गमीति–जङ्गन्ति, लोपस्त्वनुदात्ततनाम् । जङ्गतः, गमां स्वरे । जङ्गमति । जङ्गमीमि, जङ्गन्वः, जङ्गन्मः । जङ्गमीतु–जङ्गन्तु । हौ जङ्गहि । अजङ्गमीत–अजङ्गन्, अजङ्गताम्, गमां स्वरे । अजङ्ग्मुः । जङ्गमिता । अजङ्गमीत्। हिंसायां तु । जेघ्नयीति–जेघ्नेति–, जङ्घनीति–जङ्घन्ति–, लोपस्त्वनुदात्ततनाम् । जङ्घतः, जङ्घ्नति । अजङ्घनीत्–अजङ्घन् । आशिषि वध्यात् । अवधिष्ट ॥ चञ्चुरीति–चञ्चूर्ति, चञ्चूर्तः, चञ्चुरति । चञ्चूर्यात् । चञ्चुरीतु–चञ्चूर्तु–चञ्चूर्तात्, चञ्चूर्ताम् । चञ्चूर्हि । अचञ्चुरीत्, अचञ्चुः ॥ चोस्कुन्दीति–चोस्कुन्ति, चोस्कुन्तः, चोस्कुन्दति । चोस्कुन्द्यात् । चोस्कुन्दीतु–चोस्कुन्तु, चोस्कुन्ताम् । अचोस्कुन्दीत्–अचोस्कुन्, अचोस्कुन्ताम्, अचोस्कुन्दुः । सिपि अचोस्कुन्दीः–अचोस्कुन् ॥ चङ्खनीति–चङ्खन्ति, चङ्खातः, चङ्खनति । चङ्खनीषि–चङ्खंसि, चङ्खाथः। चङ्खनीमि–चङ्खन्मि, चङ्खन्वः, चङ्खन्मः ।

चङ्खायात्-चङ्खन्यात् । चङ्खनीतु-चङ्खन्तु-चङ्खातात्, चङ्खाताम्, चङ्खन्तु । चङ्खाहि । अचङ्खनीत्-अचङ्खानीत्, अचङ्खानिष्टाम् ॥ योयवीति-योयोति, योयुतः । योयुयात् । योयवीतु-योयोतु । अयोयवीत् ॥ नोनवीति-नोनोति, नोनुतः । नोनुयात् । नोनवीतु-नोनोतु । अनोनवीत्-अनोनोत् । सिपि अनोनवीः-अनोनोः ॥ जाहेति-जाहाति । द्वे स्तौ । जाहीतः । जाहीयात् । जाहेतु-जाहातु-जाहीतात्, जाहीताम् । अजाहेत्-अजाहात्, अजाहीताम्, अजाहुः । जाहीयात् । जाहिता । आतोऽनपि । अजाहासीत्, अजाहासिष्टाम् ॥ दादेति-दादाति, दात्तः, दादति । दादेषि-दादासि, दात्थः, दात्थ । दाद्वः, दाद्मः । दां हौ देहि । दादेयात् । आतोऽनपि । दादिता । दादेः पे । अदादेत्-अदादात्, अदादाताम् ॥ एवं धेट् । दाधेति-दाधाति, दात्तः, दाधति । दाध्यात् । धेहि । दाधेयात् । अदाधासीत्-अदाधेत्-अदाधात्-अदाधत्, अदाधताम्, अदाधन् ॥ डुधाञ् । दाधेति-दाधाति, धात्तः । धात्थः । दादेः । दाध्वः, दाध्मः । लङि अदाधात्-अदाधेत् ॥ पितोस्तु । दैप् शोधने । दाप् लवने । दादेति-दादाति, दादीतः, दादति । दादीयात् । दादेतु-दादातु-दादीतात् । दादीहि । अदादेत्-अदादात्, अदादीताम् । दादायात् । अदादासीत् ॥ सास्वपीति-सास्वप्ति, सास्वप्तः, सास्वपति । हौ सास्वब्धि । असास्वपीत्-असास्वप् । सासुप्यात् । असास्वापीत्-असास्वपीत् ॥ कॄ विक्षेपे । चाकरीति-चाकर्ति, चाकीर्तः, चाकिरति । चाकरिता-चाकरीता ॥ तातरीति-तातर्ति, तातीर्तः, तातिरति । तातरीतु-तातर्तु । ॠत इर् । तातीर्तात् । तातीर्हि । अतातरीत्-अतातः । अतातारीत्, अतातारिष्टाम् । अर्तेर्यङ्लुकि द्वित्वे पूर्वस्य र इत्यत्वम् । रुक् । रिग्रीकोस्तु पूर्वस्यासवर्ण इय् । अररीति-अरियरीति-अरियरीति-, अरर्ति-आरियर्ति-अरियर्ति, अर्ऋतः-अरियृतः-अरियृतः, रुको रिलोप इति लोपः । आरति-अरियृरति-अरियृति । अर्ऋयात्-अरियृयात्-अरियृयात् । अररीतु-अरियरीतु-अरियरीतु-, अरर्तु-अरियर्तु-अरियर्तु-, आरतु-अरियृतु-अरियृतु । आररीत्-आरियरीत्-आरियरीत्-, आरः-आरियः-आरियः । आररुः-आरियरुः-आरियरुः । सिपि आररीः-आरियरीः-आरियरीः-, आरः-

**आरियः-आरियः। अरराञ्चकार-अरियराञ्चकार।लिङि यादादाविति रिङ्। आरियात्-आरियरियात्२। अररिता-अरियरिता-अरियरिता। लुङि आरारीत्-आरियारीत् ॥ गृहू। जर्गृहीति-जरिगृहीति-,जरीगृहीति-,जर्गर्ढि, जर्गृढः, जर्गृहति। जर्गृहीतु-जर्गर्ढु-जर्गृढात्। हौ जर्गृढि। अजर्गृहीत्-,अजर्घर्ट्-अजर्घर्ड्॥ग्रह। जाग्रहीति-जाग्राढि। तसादौ ङिन्निमित्तं संप्रसारणम्। तस्य बहिरङ्गत्वेनासिद्धत्वान्न रुगादयः। जागृढः, जागृहति। जाग्रहीषि-जाग्रक्षि।जागृढि। जाग्रहिता॥ गृधु। जर्गृधीति-जर्गर्धि, जर्गृद्धः, जर्गृधति। जर्गृधीषि-जर्घर्त्सि। अजर्गृधीत्-अजर्घर्त्। सिपि अजर्गृधीः-अजर्घाः। अजर्गर्धीत्, अजर्गर्धिष्टाम्॥ पाप्रच्छीति-पाप्रष्टि। तसादौ न संप्रसारणम्। श्तिपा निर्देशात्॥**

( सुबोधिनी )-पितः त्स्मो वेट्॥ यङन्तात्परेषां हसादीनां पितां तकारसकारमकाराणामीड्वा स्यात्॥ यङो लुक्यपि प्रत्ययलक्षणेनात्र यङन्तत्वम्। बोभवीति-बोभोति, बोभूतः। द्वेरित्यन्तोऽव् हुन्वोरेवापीति नियमात् नुधातोरित्युव्। बोभुवति। बोभूयात्। लोटि बोभवीतु-बोभोतु-बोभूतात्। लङि अबोभवीत्-अबोभोत्, अबोभूताम्। अन उस् इत्यन उस्। उसि गुण इति गुणे अबोभवुः। कासादि प्रत्ययादित्याम्। बोभवांचकार। बोभूयात्। सिसतासीस्यपामितीट्॥ बोभविता। बोभविष्यति। अबोभविष्यत्। लुङि दादेः पे इति सेर्लुक्। यङ्लुकि सतीतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्भुवः सि लोपे स्वरे इति वुक्। अबोभूवीत्। भुवः सिलोपेऽयङ्लुकि गुणो नेत्यनिषेधाद्गुणः। अबोभोत्, अबोभूताम्, अन उस् इत्यन उस्। नित्यत्वाद्वुक्। अबोभूवुः॥ डुपचष् पाके। आत इति पूर्वस्यात्वम्। पापचीति-पापक्ति। पापच्यात्। पापक्तु-पापचीतु-पापक्तात्। अपापचीत्-चोः कुरिति कः। दिस्योर्हसादिति दिप्सिपोर्लोपः। अपापक्। पापचांचकार। पापच्यात्। पापचिता पापचिष्यति। अपापचिष्यत्। अतो हसादेरिति वा वृद्धिः। अपापाचीत्-अपापचीत्॥ भुज पालनाभ्यवहारयोः। द्वेः स्वरेपि नोपधाया इत्यनेन चतुर्षु गुणो न। यङीति पूर्वस्य गुणः। बोभुजीति-चोः कुरिति गः। खसे चपा इति गस्य कः। बोभोक्ति। बोभुज्यात्। बोभुजीतु-बोभोक्तु। अबोभुजीत्-दिस्योरिति दिप्सिपोर्लोपः। अबोभोक्। बोभोजांचकार। बोभुज्यात्। बोभोजिता। बोभोजिष्यति। अबोभोजिष्यत्। अबोभोजीत्। वद व्यक्तायां वाचि। आत इति पूर्वस्यात्वम्। वावदीति-खसे चपा इति तः। वावत्ति। वावद्यात्। वावदीतु-वावत्तु-वावत्तात्। अवावदीत्-अवावत्। वावदां चकार। वावद्यात्। वावदिता। वावदिष्यति। अवावदिष्यत्। अवावादीत्॥ घट चेष्टायाम्। आत इति पूर्वस्यात्वम्। जाघटीति-ष्टुभिः ष्टुरिति टः। जाघट्टि। जाघट्यात्। जाघटीतु-जाघट्टु-

जाघट्टात्। अजाघटीत्—दिस्योरिति दिप्सिपोर्लोपः। अजाघट्। जाघटांचकार। जाघट्यात्। जाघटिता। जाघटिष्यति। अजाघटिष्यत्। अजाघाटीत्—अजाघटीत्। अतो हसादेर्लघोरिति वा वृद्धिः॥ स्पर्द्ध संघर्षे। संघर्षः पराभिभवेच्छा। आत इति पूर्वस्यात्वम्। यङ्लुकीतीट्। पास्पर्द्धीति—ईडभावे तथोर्द्ध इति धत्वम्। हसात्परस्य झसस्येति धलोपे। पास्पर्धि—धलोपाभावे झबे जबा इति दत्वम्। पास्पर्द्धि। सिपि दलोपे खसे चपा इति तः। पास्पर्त्सि—पक्षे पास्पर्त्सि। पास्पर्ध्यात्। पास्पर्द्धीतु—पास्पर्द्धु तुह्योरिति तातङ्। पास्पर्द्धात्। हौ झसाद्धिर्हेरिति धत्वे हसादिति धलोपे पास्पर्धि—धलोपाभावे दत्वम्। पास्पर्द्धि। लङि अपास्पर्धीत्—ईडभावे दिस्योर्हसादिति दिप्सिपोर्लोपः। संयोगान्तस्येति धलोपः। वावसाने इति वा तः। अपास्पर्द्—अपास्पर्त्। सिपि तु अपास्पर्द्धीः—पक्षे दः इति दस्य रः। रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ। अपास्पाः। पास्पर्द्धांचकार। पास्पर्ध्यात्। पास्पर्धिता। पास्पर्धिष्यति। अपास्पर्द्धिष्यत्। लुङि सिसतासीस्यपामितीट्। सेरितीट्। इट ईटीति सिलोपः। अपास्पर्धीत्॥ गाधृ प्रतिष्ठादौ। तथोर्ध इति धः। झबे जबा इति दः। जागाद्धि—ईट्पक्षे जागाधीति। सिपि आदिजबानामिति घः। खसे चपा इति घस्य तः। जाघात्सि। जागाध्यात्। जागाधीतु—जागाद्धु। हौ झसादिति हेर्धिः। जागाद्धि। अजागाधीत्—आदिजबानामिति घः। अजाघात्। सिपि अजागाधीः। ईडभावे दिस्योरिति सिलोपः। वावसाने वा दः। द इति दस्य रः। आदिजबानामिति घः। अजाघाः—अजाघात्। लुङि अजागाधीत्, अजागाधिष्टाम्॥ नाथृ नाधृ याच्ञादौ। आत इति पूर्वस्यात्वम्। नानाथीति—खसे चपा इति थस्य तः। नानात्ति—नानाथ्यात्। नानाथीतु—नानात्तु—नानात्तात्। अनानाथीद्। अनानात्। लुङि अनानाथीत्, अनानाथिष्टाम्॥ दध धारणे। ईट्पक्षे दादधीति—पक्षे तथोर्ध इति धः। झबे जबा इति दः। दादद्धि। सिपि आदिजबानामिति धः। दाधत्सि। दादध्यात्। दादधीतु। दादद्धु—दादद्धात्। हौ झसाद्धिर्हेरिति धिः। दादद्धि। लङि अदादधीत्—ईडभावे आदिजबानामिति धः। अदाधत्। सिपि द इति दस्य रः। अदाधः—अदाधत्—अदादधीः। लुङि अतो हसादेर्लघोरिति वा वृद्धिः। अदादाधीत्—अदादधीत्॥ स्कुदि आप्रवणे। इदितो नुमिति नुम्। चोस्कुन्दीति—ईडभावे चोस्कुन्ति। चोस्कुन्द्यात्। चोस्कुन्दीतु—चोस्कुन्तु—चोस्कुन्तात्। अचोस्कुन्दीत्। दिस्योर्हसादिति दिप्सिपोर्लोपः। संयोगान्तस्येति दलोपः। अचोस्कुन्। लुङि अचोस्कुन्दीत्॥ मुद हर्षे। मोमुदीति। द्वेः स्वरेऽपि न गुणः। मोमोत्ति। मोमुद्यात्। मोमुदीतु—मोमोत्तु—मोमुत्तात्। अमोमुदीत्—अमोमोत्। सिपि द इति दस्य रः। अमोमोः—अमोमोत्। लुङि अमोमोदीत्॥ कुर्द खुर्द गुर्द गुद क्रीडायाम्। य्वोर्वि हसे इति दीर्घः। खसे चपा इति दस्य तः। चोकूर्त्ति—इट्पक्षे चोकूर्दीति। चोकूर्द्यात्। चोकूर्दीतु—चोकूर्तु—चोकूर्त्तात्।

हौ झसाद्धिर्हेरिति धिः। चोकूर्द्धि। अचोकूर्दीत्-अचोकूर्त्। रात्सस्येति तलोपो न। सिपि द इति दस्य रः। रात्सस्येति सलोपः। य्वोर्वि हसे इति दीर्घः। अचोकूः-अचोकूर्दीः। लुङि अचोकूर्दीत्॥ डुकृञ् करणे। ऋदन्तानामृदुपधानां च यङ्लुकि पूर्वस्य रुक्रिरिकरीकः॥ अतिशयेन करोति चर्करीति-ईडभावे चर्कर्ति। द्वेरित्यन्तोत्। रत्वम्। चर्क्रति। विधिलिङि चर्क्रयात्। लोटि चर्करीतु-चर्कर्तु-चर्कृतात्। लङि अचर्करीत्। ईडभावे दिस्योर्हसादिति दिप्सिपोर्लोपः। अचर्कः। आशिषि लिङि यादादाविति रिङ्। चर्क्रियात्। लुङि णिति इति णित्वात् धातोर्नामिन इति वृद्धिः। अचर्कारीत्॥ वृतु वर्त्तने। लटि ईट्पक्षे द्वेः स्वरेऽपीति न गुणः। वर्वृतीतिईडभावे वर्वर्ति। विधिलिङि वर्वृत्यात्। लोटि इटि वर्वृतीतु-ईडभावे वर्वर्तु-वर्वृतात्। हौ झसाद्धिर्हेरिति धिः। वर्वृद्धि। लङि अवर्वृतीत्। ईडभावे रात्सस्येति तलोपो न अवर्वर्त्। दिस्योर्हसादिति दिप्सिपोर्लोपः। सिपि पक्षे वावसाने इति दः। द इति दस्य रः। रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ। अवर्वाः-अवर्वर्त्। ईटि अवर्वृतीः। लिटि वर्वर्त्तामास। वर्वृत्यात्। वर्वर्तिता। लटि गणनिर्दिष्टत्वात् वृतादिभ्यः स्यसयोरिति न। वर्वर्तिष्यति। अवर्वर्तिष्यत्। लुङि गणनिर्दिष्टत्वात् लित्पुषादेरिति ङो न। अवर्वर्तीत्॥ वञ्चु गतौ। गत्यर्थात्कौटिल्ये इति यङ्। वञ्चु स्रंसु इति पूर्वस्य नीगागमः। लुकि न तन्निमित्तमिति यङो लुका लुप्तत्वात्तदाश्रितो नलोपो न। वनीवञ्चीति-ईडभावे वनीवङ्क्ति, तसो ङित्त्वादिह स्यादेव नो लोप इति नलोपः। वनीवक्तः, द्वेरित्यन्तोऽत्। वनीवञ्चति। वनीवच्यात्। वनीवञ्चीतु-वनीवङ्क्तु-वनीवक्तात्। हौ झसादिति हेर्धिः वनीवग्धि। अवनीवञ्चीत्-ईडभावे संयोगान्तस्येति चलोपः। अवनीवन्। लुङि अवनीवञ्चीत्॥गम्लृ गतौ।नमजपामिति पूर्वस्य नुक् जङ्गमीति-ईडभावे जङ्गन्ति,लोपस्त्वनुदात्ततनामिति मलोपः। जङ्गतः,गमां स्वरे इत्युपधालोपः। जङ्ग्मति। मो नो धातोरिति नः। जङ्गन्मि। जङ्गम्यात्। जङ्गमीतु-जङ्गंतु-जङ्गतात्। हौ लोपस्त्वनुदात्ततनामिति मलोपस्यासिद्धत्वादत इति न हेर्लुक्। जङ्गहि। अजङ्गमीत्। ईडभावे दिस्योरिति दिप्सिपोर्लोपः। मो नो धातोरिति नः। अजङ्गन्। अनुबन्धनिर्दिष्टत्वात् लित्पुषादेरिति न ङः। ह्म्यन्तेति न वृद्धिः। अजङ्गमीत्॥ हन हिंसागत्योः। पूर्वाद्धन्तेरिति हस्य घः। यद्यपि हन्तेरिति श्तिपा निर्देशस्तथापि यङ्लुकि भवत्येवेति न्यासकारः। श्तिपा शपाते निषेधस्यानित्यत्वात्। नमजपामिति पूर्वस्य नुक्। जङ्घनीति-ईडभावे जङ्घन्ति, तसि लोपस्त्वनुदात्ततनामिति नलोपः। जङ्घतः, गमां स्वरे इत्युपधालोपः। द्वेरित्यन्तोऽत्। जङ्घ्नति। जङ्घन्यात्। जङ्घनीतु-जघन्तु-जङ्घतात्। जह्येधि शाधीति सूत्रे अयङ्लुकीति वक्तव्यम्। तेन जङ्घहि। अजङ्घनीत्। ईडभावे अजङ्घन्। जङ्घनांचकार। हनो लुङ्लिङोर्वध इति वधादेशः। द्वित्वविशिष्टस्य हनो वधादेशाद्वधादेशस्य पुनर्द्वित्वं न। वध्यात्। अवधीत्।आङ्पूर्वात्तु आङो यमहन इत्यात्मनेपदम्। आजङ्घते। इत्यादि

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमित्युक्तत्वात् ॥ चर गतौ भक्षणे च । लुपसदेति गर्हायां यङ् । यङो लुक् । जमजपामिति नुक् । चरफलोरित्युत्वम् । उतस्तपरत्वान्न गुणः । य्वोर्वि हसे इति दीर्घस्तु स्यादेव । चञ्चूर्ति–ईट्पक्षे चञ्चुरीति । चञ्चूर्यात् । चञ्चुरीतु–चञ्चूर्तु–चञ्चूर्तात् । अचञ्चूः । पदान्तविषयत्वात् य्वोर्वि हसे इति दीर्घः । अचञ्चुरीत् ॥ खनु अवदारणे । जमजपामिति नुक् । चङ्खनीति–चङ्खन्ति, जनसने-त्यात्वम् । चङ्खातः । जनसनेत्यत्र हकारे चेति वाच्यम् । तेन हावप्यात्वम् । चङ्खाहि । अचङ्खनीत्–अचङ्खन् । आशीर्लिङि जनसनेति वात्वम् । चङ्खायात्–चङ्खन्यात् । लुङि अतो हसादेरिति वा वृद्धिः । अचङ्खानीत्–अचङ्खनीत् ॥ यु मिश्रणेऽमिश्रणे च । 'ओरौ' इति सूत्रेऽद्विरुक्तस्येत्युक्तत्वादुत औत्वं न । यङीति पूर्वस्य गुणः । योयोति।ईट्पक्षे योयवीति।नुधातोरित्युव् । योयुवति । योयुयात् ।योयवीतु–योयोतु–अयोयोत्–अयोयवीत्। आशिषि ये इति दीर्घः । योयूयात् । लुङि णित्पे इति णित्त्वाद् धातोर्नामिन इति वृद्धिः । अयोयावीत्॥णु स्तुतौ । नोनवीति–नोनोति ।नोनुयात्। नोनवीतु–नोनोतु–नोनुतात्।अनो-नवीत्–अनोनोत् । उसि गुण इति गुणे । अनोनवुः । लुङि अनोनावीत् ॥ ओहाक् त्यागे । ओहाङ् गतौ । अनयोस्तुल्यानि रूपाणि । ङित्त्वप्रयुक्तस्यात्मनेपदस्य यङ्लु-क्यप्रवृत्तेः । भृञां लुकीतीत्वस्य लुङ्निमित्ते द्वित्व एव विहितत्वाच्च । आत इति पूर्व-स्यात्वम् । ईट्पक्षे जाहेति–जाहाति, द्वेस्तावितीत्वम् । जाहीतः, इह ङिति हसे भीहाको-रिद्वेतीत्वं न । अनुबन्धनिर्दिष्टत्वात् । द्वेरित्यन्तोऽत् । द्वेस्तावित्यालोपः । जाहति । जाहेषि–जाहासि, जाहीथः, जाहीथ । जाहेमि–जाहामि, जाहीवः–जाहीमः । द्वेस्तावितीत्वम् । जाहीयात् । इह हाको यादादावालोप इत्यालोपो न अनुबन्धनिर्दिष्टत्वात् । जाहेतु–जाहातु–जाहीतात । हौ द्वेस्तावितीत्वम् । जाहीहि । इह ईर्वाहाविति ह्रस्वदीर्घ-विकल्पे रूपत्रयं न । जहातेरिति श्तिपा निर्दिष्टत्वात् । अजाहेत्–ईडभावे अजाहात् । आशिषि जाहायात् । इह दादेरे इत्येत्वं दादेरीति इत्वं च न । हागित्युभयत्रानुबन्ध-निर्दिष्टत्वात् ॥ जाहेता । लुङि यमिरमिनमातामितीट्सकौ । अजाहासीत, अजाहासि-ष्टाम्, अजाहासिषुः ॥ डुदाञ् दाने । आत इति पूर्वस्यात्वम् । दादाति–ईट्पक्षे दादेति, दादेरित्यालोपः । दात्तः, द्वेरित्यन्तोऽत् । दादति । दादासि–दादेषि । दाद्यात् । दादेतु–दादातु–दात्तात । हौ दां हावित्येत्वपूर्वलोपौ । देहि–दात्तात् । अदादात्–अदादेत् । दादाञ्चकार । दादेरे इत्येत्वम् । दादेयात् । दादेता । दादेष्यति । अदादे-ष्यत् । 'दादेः पे' इति सिलोपः । अदादात् ॥ धेट् पाने । दाधाति–दाधेति, दादेरित्या-लोपः । खसे चपा झसानामिति तः । दात्तः, तथोर्ध इति धत्वं न दादेरित्यालोपस्य स्थानिवत्त्वेन झसान्तत्वाभावात् । तत्र सूत्रे व्यवस्थितार्थकवानुवृत्तेर्वा । दाधति । दाध्यात् । दाधातु–दाधेतु–दात्तात् । दाधतु । हौ दां हावित्येत्वपूर्वलोपौ । धेहि । अदाधात्–अदाधेत् । दाधांचकार । दादेरे इत्येत्वम् । दाधेयात् । दाधेता । दाधे-

ष्यति। अदाधेष्यत्। शाछासाघ्राधेटामिति वा सिलोपः। अदाधात्–पक्षे यमिरमिनमातामितीट्सकौ। अदाधासीत्–धेटो भूतमात्रे दिवादिपरो ङो वेति ङः। अदाधत्॥ डुधाञ् धारणादौ। दाधाति–दाधेति, पूर्वस्य ङिति झसे ध इति धः। खसे चपा इति त्तः। धात्तः, दाधति। दाध्यात्। दाधातु–दाधेतु–धात्तात्। हौ दां हावित्येत्वपूर्वलोपौ। धेहि। अदाधात्–अदाधेत्। दाधांचकार। दादेरे इत्येत्वम्। दाधेयात्। दाधेता। दाधेष्यति। अदाधेष्यत्। 'दादेः पे' इति सिलोपः। अदाधात्॥ दाप् लवने। दैप् शोधने। आदादिकभौवादिकयोरनयोर्दादित्वम्। दादाति–दादेति, द्वेस्तावितीत्वम्। दादीतः। द्वेरित्यन्तोऽत्। द्वेस्तावित्यालोपः। दादति। दादीयात्। दादातु–दादेतु–दादीतात्। हौ दादीहि। अदादात्–अदादेत्। दादांचकार। दादायात्। दादेता। दादेष्यति। अदादेष्यत्। यमिरमिनमातामितीट्सकौ। अदादासीत्॥ ञिष्वप् शये। सर्वविधिभ्यो लुग्विधिर्बलीयान् इति यङो लुक्। लुका लुप्ते प्रत्ययलक्षणत्वाभावात् स्वपिस्वमिव्येञां यङीति विधीयमानं यरसंप्रसारणं तन्न भवति। रुदादेश्चतुर्णां हसादेरिति गणनिर्दिष्टत्वादिण्न। आत इति पूर्वस्यात्वम्। ईट्पक्षे सास्वपीति–ईडभावे सास्वप्ति, सास्वप्तः, सास्वपति। सास्वप्यात्। सास्वपीतु–सास्वप्तु–सास्वप्तात्। हौ झसाद्धिरिति धिः। झबे जबा इति बः। सास्वब्धि। रुदादिगणनिर्दिष्टत्वाद्दिस्योरीडटौ न। असास्वपीत्–असास्वप्। सास्वपांचकार। आशिषि यजामिति संप्रसारणम्। सासुप्यात्। सास्वपिता। सास्वपिष्यति। असास्वपिष्यत्। अतो हसादेरिति वा वृद्धिः। असास्वापीत्–असास्वपीत्॥ कॄ विक्षेपे। आत इति पूर्वस्यात्वम्। ऋदन्तानामिति तपरत्वाद् रुक्रिक्रीको न भवन्ति। ईट्पक्षे चाकरीति–ईडभावे चाकर्ति, ऋत इरितीर्। य्वोर्वि हसे इति दीर्घः। चाकीर्त्तः, द्वेरित्यन्तोऽत्। चाकिरति। चाकीर्यात्। चाकरीतु–चाकर्तु–चाकीर्तात्। चाकीर्हि। अचाकरीत्–ईडभावे दिस्योर्हसादिति दिप्सिपोर्लोपः। अचाकः। उसि गुणः। अचाकरुः। चाकरांचकार। चाकीर्यात्। चाकरिता। चाकरिष्यति। अचाकरिष्यत्। लुङि 'णित्पे' इति णित्वात् धातोर्नामिन इति वृद्धिः। अचाकारीत्॥ तॄ प्लवनतरणयोः। तातरीति–तातर्ति। तातीर्यात्। तातरीतु–तातर्तु–तातीर्तात्। अतातरीत्–अतातः। तातरांचकार। तातीर्यात्। तातरिता। तातरिष्यति। अतातरिष्यत्। अतातारीत्, अतातारिष्टाम्॥ ऋ गतौ। भौवादिकजौहोत्यादिकयोर्ग्रहणम्। अस्मात् सूचिसूत्रिमूत्रीति यङ् द्वित्वं च। केचित्तु यङीति पूर्वस्य गुणमाहुः। अन्ये तु र इति पूर्वस्यात्वमित्याहुः। फले तु न विशेषः। ऋदन्तानामिति पूर्वस्य रुग्रिग्रीगागमाः। अरर्ति–रिग्रीकोस्तु तुल्यं रूपम्। असवर्णे स्वरे पूर्वस्येतीय्। अरियर्त्ति२–, ईट्पक्षे अररीति–अरियरीति२, तसि अर्ऋतः–अरियृतः२, द्वेरित्यन्तोत्। ऋ रमिति रः। रि लोपो दीर्घश्चेति रलोपपूर्वदीर्घौ। आरति–परत्वात्पूर्वाभय ततो रत्वम्। अरियूति। मध्यमपुरुषे तु अरर्षि–अरियर्षि–ईट्पक्षे अररीषि–अरियरीषि, रिग्रीकोस्तुल्यं रूपम्। अर्ऋथः-

अरियृथः, उत्तमपुरुषे तु अरर्मि-अरियर्मि, ईट्पक्षे अररीमि-अरियरीमि, अर्ऋवः-अरियृवः। लिङि अर्ऋयात्-अरियृयात्। लोटि अर्तु-अरियर्तु-ईटपक्षे अररीतु-अरियरीतु २-, अर्ऋतात्-अरियृतात, अर्ऋताम्-अरियृताम, आरतु-अरियृतु । अर्ऋहि-अरियृहि। उत्तमे तु अरराणि-अरियराणि, अरराव-अरियराव। लङि दिस्योर्हसादिति दिप्सिपोर्लोपः । आरः-आरियः-पक्षे आररीः-आरियरीः २। उत्तमे तु आररम्-आरियरम्, आर्ऋव-आरियृव। लिटि अरराञ्चकार-अरियराञ्चकार २। आशिषि लिङि श्तिपानिर्दिष्टत्वाद्गुणोऽर्तिसंयोगाद्योरिति गुणो न। 'यादादौ' इति रिङ्। रि लोपो दीर्घश्चेति रलोपपूर्वदीर्घौ। आरियात्-आरिरियात् २। लुटि अररिता-अरियरिता। लृटि अररिष्यति-अरियरिष्यति । लृङि आररिष्यत्-आरियरिष्यत्। लुङि णित्त्वात् धातोर्नामिन इति वृद्धिः। आरारीत्-आरियारीत् ॥ गृहू ग्रहणे। द्वेः स्वरेपीति गुणनिषेधे ऋदन्तानामृदुपधानां चेति रुग्रिग्रीकः । ईट्पक्षे जर्गृहीति-ईडभावे हो ढ इति ढत्वं तथोर्ध इति धत्वं ष्टुत्वं ढि ढो लोप इति ढलोपः। जगर्ढि । जर्गृढ इत्यत्र ढि ढ इति ढलोपे पूर्वस्य दीर्घो न अनृत इत्युक्तत्वात्। जर्घर्क्षि । उत्तमे जर्गृहीमि-जर्गर्ह्मि । जर्गृह्यात्। जर्गृहीत्-जर्गर्ढु-जर्गृढात्, जर्गृढाम्, जर्गृहतु। झसाद्धिर्हेरिति धिः। जर्गृढि । उत्तमे तु द्वेः स्वरेपीति गुणो न। जर्गृहाणि । लङि अजर्गृहीत्। ईडभावे आदिजबानामिति घः। अजर्घर्ट्,अजर्गृढाम्,अजर्गृहुः। अजर्गृहीः-अजर्घर्ट्, अजर्गृढम्, अजर्गृढ । द्वेः स्वरेऽपीति न गुणः। अजर्गृहम्, अजर्गृह्व, अजर्गृह्म । जर्गर्हाञ्चकार । जर्गृह्यात्। लुटि अनुबन्धनिर्दिष्टत्वाद् ऊदितो वेतीड्विकल्पो न । जर्गर्हिता। जर्गर्हिष्यति। अजर्गर्हिष्यत्।अजर्गर्हीत्, अजर्गर्हिष्टाम् ॥ ग्रह उपादाने। यङो लुका लुप्तत्वात्तन्निमित्तं ग्रहां ङिति चेति संप्रसारणमिह न भवति आत इति पूर्वस्यात्वम्। जाग्रहीति। ईडभावे हो ढ इति ढत्वम्। तथोर्ध इति धत्वं ष्टुत्वं च। ढि ढो लोपो दीर्घश्चेति ढलोपपूर्वदीर्घौ। जाग्राढि। तसादौ प्रत्यये ङित्वाद् ग्रहां ङिति चेति संप्रसारणम्। तस्य संप्रसारणस्यासिद्धं बहिरङ्गमन्तरङ्गे इत्यसिद्धत्वाद् रुग्रिग्रीगागमा न भवन्ति। जागृढः। सिपि जाग्रहीषि। ईडभावे हो ढ इति ढत्वम्। षढोः कः से इति कत्वम्। आदिजबानामिति घः। जाघ्रक्षि। जागृह्यात् । जाग्रहीतु-जाग्राढु-जागृढात्। अजाग्रहीत्-अजाघ्रट् ।जाग्रहाञ्चकार। जागृह्यात्। लुटि ईटो ग्रहामिति सूत्रे एकस्वरस्य ग्रहेरित्युक्तत्वात् । यङ्लुकि दीर्घो न । माधवस्तु दीर्घमाह तद्भाष्यविरुद्धम्। जाग्रहिता। जाग्रहिष्यति। अजाग्रहिष्यत्। अजाग्रहीत्॥ ह्म्यन्तेति न वृद्धिः। गृधु अभिकांक्षायाम्। द्वेः स्वरेऽपीति गुणनिषेधः। ऋदन्तानामृदुपधानां चेति रुग्रिग्रीगागमाः। जर्गृधीति । ईडभावे तथोर्ध इति धः। झबे जबा इति दः। जर्गर्द्धि। सिपि जर्गृधीषि। ईडभावे आदिजबानामिति घः । खसे चपा इति तः। जर्घर्त्सि। जर्गृध्यात्। जर्गृधीतु-जर्गर्द्धु-जर्गृद्धात् । अजर्गृधीत् । ईडभावे उपधाया लघोरिति गुणः। दिस्योरिति दिप्सिपोर्लोपः। आदिजबानामिति घः । अजर्घत्, अजर्गृद्धाम्,

अजर्गृधुः। सिपि द इति दस्य रः। रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ। अजर्घाः-अजर्घर्त्। जर्गर्द्धाचकार। जर्गृध्यात्। जर्गर्धिता। जर्गर्धिष्यति। अजर्गर्धिष्यत्। अजर्गर्धीत्॥ प्रच्छ ज्ञीप्सायाम्। आत इति पूर्वस्यात्वम्। पाप्रच्छीति। ईडभावे छशषेति षत्वं ष्टुत्वम्। पाप्रष्टि। तसादौ प्रत्यये ग्रहां ङिति चेति संप्रसारणं न श्तिपा निर्दिष्टत्वात्॥

(तत्त्वदी०)-**पितः त्त्सोऽवेट्**॥ त्त्स इत्यत्रापि द्वितकारको निर्देशः। एको दकारजः॥ **अपारूपा** इति॥ द इति रत्वे रिलोप इति दीर्घः। ऋदन्तानामित्यादिरुगादीनां त्रयाणामपि कित्त्वात्रयोऽप्यागमाः पर्यायेण भवन्ति। रुक उकार उच्चारणार्थः॥ **चर्करीति**॥ ईकारे रूपत्रयं तदभावे च रूपत्रयमिति षट् तिपि॥ **जंगत** इति॥ लोपस्त्वनुदात्ततनामिति मलोपः॥ **जंगन्मीति**॥ म्वोश्चेति मस्य नः। **जंघनीति**॥ पूर्ववत् हन्तेरिति घत्वम्। **आशिषि वध्यादिति**॥ द्विरुक्तस्य वधादेशाद्वित्वं न। एकस्यां व्यक्तावेकलक्षणं सकृदेव प्रवर्तत इत्युक्तेः॥ **चञ्चूर्तीति**॥ चर गतिभक्षणयोः। चरफलोरत उदिति उत्वे य्वोर्वि हस इति दीर्घः॥ **चंखात** इति॥ जनसनेत्यात्वम्। **योयोतीति**॥ आद्विरुक्तस्येत्यनुवृत्तेरोरावित्यौत्वं नः॥ **दात्त** इति॥ दादेरित्याकारलोपः॥ **देहीति**॥ दां हावित्येत्वलोपौ॥ **चाकर्त्तीति**॥: ऋदन्तानामित्यत्र तपरकरणान्न रुगादयः॥ **अरर्त्तीति**॥ गुणो द्वितीयस्य अरियर्ति। पक्षद्वयेऽपि इयादेशे तु समम्॥ **जाग्रहीति**॥ ईकाराभावे ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि। कैश्चिदत्र संप्रसारणे जर्गृहीतीत्यादिरूपमुक्तं तदनाकरमित्युपेक्षितम्॥ **बहिरङ्गत्वे** इति॥ प्रत्ययाश्रितं बहिरङ्गमित्युक्तेः॥ **अजर्घा** इति॥ द इति रत्वे रिलोप इति दीर्घः। तसादौ न संप्रसारणमेतद्बीजं तु श्तिपा निर्देशः। उक्तं च "श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च। यत्रैकाज्ग्रहणं चैव पञ्चतैानि न यङ्लुकि" इति॥

**( क्ङिति झसे क्कौ ञमे च छस्य शो वस्य ऊः ) पाप्रष्टः, प्राप्रच्छाति। पाप्रश्मि, पाप्रच्छ्वः, प्राप्रश्मः॥ इय गतौ। जाहयीति। यवयोर्वसे हकारे च लोपः॥ जाहति, जाहतः, जाहयाति। जाहयीषि-जाहसि। जाहामि, जाहावः, जाहामः। अजाहयीत्-अजाहत्। जाहय्यात्॥ हर्य गतिकान्त्योः। जाहर्यीति-जाहर्ति, जाहर्तः, जाहर्यति। जाहर्हि। अजाहर्यीत्-अजाहः, अजाहर्ताम्, अजाहर्युः॥**

(सुबोधिनी)-**क्ङिति झसे क्कौ ञमे च छस्य शो वस्य ऊः**॥ धातोच्छस्य शकारः स्यात् वकारस्य ऊश्च किति ङिति झसे परे क्विपि ञमे च परे। भाष्ये उक्तं च्छ्वो रित्यनेन ऊभाविनां यकारवकारान्तानां धातूनां यङो लुङ् न भवतीति मव्य बन्धने यान्तः तेवृ देवृ देवने इत्यादि वान्तश्च ऊभावी। ज्वरत्वरेति ऊभाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति। छस्य शः छशषेति षः। पाप्रष्टः, पाप्रच्छाति। पाप्रच्छीषि-ईडभावे छशषेति षः। षढोः कः से इति कः। पाप्रक्षि, उत्तमे तु मापश्मि। पाप्रच्छ्यात्॥

पाप्रच्छीतु-पाप्रष्टु-पाप्रष्टात् । हौ झसाद्धिर्हेरिति धिः । क्ङिति झसे इति छस्य शः । छशषेति षः । झषे इति षस्य डः ष्टुत्वं च । पाप्रड्ढि । अपाप्रच्छीत्-ईडभावे दिस्योरिति दिप्सिपोर्लोपः । छशषेति षः । षोड इति डः । अपाप्रट्, अपाप्रष्टाम्, अपाप्रच्छुः। अपाप्रच्छीः, अपाप्रट्, अपाप्रष्टम्, अपाप्रष्ट । अपाप्रच्छम्, अपाप्रच्छ्व, अपाप्रश्म । पाप्रच्छांचकार । पाप्रच्छ्यात् । पाप्रच्छिता । पाप्रच्छिष्यति । अपाप्रच्छिष्यत् । अपाप्रच्छीत् ॥ हय गतौ । जाहयीति-ईडभावे यवयोर्वसे इति यलोपः । जाहति । उत्तमे तु जाहयीमि-यवयोरिति यलोपे व्मोरित्यात्वम् । जाहामि । जाहय्यात् । जाहयीतु-जाहतु-जाहतात्, जाहताम्, जाहयतु । जाहहि-जाहतात् । उत्तमे तु जाहयानि। लङि अजाहयीत्-अजाहत् । जाहयांचकार । जाहय्यात् । जाहयिता । जाहयिष्यति । अजाहयिष्यत् । ह्म्यन्तेति न वृद्धिः । अजाहयीत् ॥ हर्य गतिकान्त्योः । आत इत्यात्वम् । जाहर्यीति-ईडभावे यवयोर्वसे इति यलोपः । जाहर्ति । जाहर्य्यात् । जाहर्यीतु-जाहर्तु-जाहर्तात् । अजाहर्यीत् । अजाहर्यीत्-अजाहः । जाहर्यांचकार । जाहर्य्यात् । जाहर्यिता । जाहर्यिष्यति । अजाहर्यिष्यत् । अजाहर्यीत् ॥

( तत्त्वदी० )-जाहतीति ॥ यवयोरिति यलोपः ॥

( ज्वरत्वरस्रिव्यविमवामुपधावकारयोरूः क्वौ झसादौ ञमादौ हकारे च प्रत्यये )जाज्वरीति-जाजूर्ति, जाजूर्तः, जाज्वरति । जाज्वर्वः, जाजूर्मः । अजाज्वरीत्-अजाजूः ॥ तात्वरीति-तातूर्ति। अतात्वरीत्-अतातूः ॥ सेस्रिवीति-सेस्रोति । सेस्रीव्यात् । असेस्रिवीत्-असेस्रोत् ॥ मव बन्धने । मामवीति-मामोति, मामूतः, मामवति। मामावः, मामूमः । मामूहि । मामवानि । अमामवीत्-अमामोत् । सिपि अमामवीः-अमामोः । अमामवम, अमामाव, अमामूम ॥ तुर्वी थुर्वी दुर्वी धुर्वी हिंसायाम् । तोतूर्वीति ॥

( सुबोधिनी )-ज्वरत्वरस्रिव्यविमवामुपधावकारयोरूः क्वौ झसादौ ञमादौ हकारे च प्रत्यये ॥ ज्वर रोगे । ञित्वरा संभ्रमे । स्रिवु गतिशोषणयोः । अव पालने । मव बन्धने । ज्वरादेरुदाहरणं क्विपि जूः, जुरौ, जुरः । झसादौ तु जूर्तिः । जूर्णः । जूर्णवान् ॥ तूः, तुरौ, तुरः। तूर्तिः । तूर्णवान् ॥ स्रूः, स्रुवौ, स्रुवः । स्रूतिः ॥ ऊः, उवौ, उवः । ऊतिः ॥ मूः, मुवौ, मुवः । मूतिः । मूतः ॥ ज्वर । आत इति पूर्वस्यात्वम् । जाज्वरीति । ईडभावे उपधावकारयोरूः । जाजूर्ति, जाजूर्तः, जाज्वरति । जाज्वर्यात् । जाज्वरीतु-जाजूर्तु-जाजूर्तात् । अजाज्वरीत्-अजाजूः । जाज्वरांचकार । जाज्वर्यात । जाज्वरिता । जाज्वरिष्यति । अजाज्वरिष्यत् । अतो हसादेरिति वा वृद्धिः । अजाज्वारीत्-अजाज्वरीत् ॥ ञित्वरा संभ्रमे । तात्वरीति-तातूर्ति । तात्वर्यात् । तात्वरीतु-तातूर्तु-तातूर्तात् । अतात्वरीत्-अतातूः । तात्वरांचकार । तात्वर्यात् । तात्व-

रिष्यति । अतात्वरिष्यत् । अतात्वारीत्-अतात्वरीत् ॥ स्रिवु । सेस्रिवीति-सेस्रोति । सेस्रीव्यात् । सेस्रिवीतु-सेस्रोति-सेस्रुतात् । असेस्रिवीत्-असेस्रोत् । सिपि । असेस्रोः । सेस्रेवांचकार । सेस्रीव्यात् । सेस्रेविता । सेस्रेविष्यति । असेस्रेविष्यत् । असेस्रेवीत् ॥ मव । मामवीति । ईडभावे ऊत्वे कृते गुणः । मामोति । उत्तमे तु मामवीमि-मामोमि । यवयोर्वसे इति वलोपः । व्मोरित्यात्वम् । मामावः, मामूमः । मामव्यात् । मामवीतु-मामोतु-मामूतात् । हौ मामूहि । अमामवीत्-अमोमोत् । उत्तमे तु अमामवम्, अमामाव, अमामूम । लुङि अमामावीत् ॥ तुर्वी हिंसायाम् । र्वोर्वि हसे इति दीर्घः । यङीति पूर्वस्य गुणः । तोतूर्वीति । ईडभावे ॥

( तत्त्वदी० )-उपधावकारयोरिति ॥ उपधा च वकारश्च उपधावकारौ तयोः द्वयोः स्थाने ऊरित्यर्थः ॥ मामाव इति ॥ अत्र झसादित्वाभावेन ऊत्वाभावः । यवयोरिति वलोपे दीर्घः ॥

**( रेफाच्छ्वोर्लोपः क्वौ झसादौ ञमादौ हे च प्रत्यये ) तोतोर्ति, तोतूर्तः, तोतूर्वति । तोतूर्वीषि-तोतोर्षि । तोतूर्वः, तोतूर्मः । सिपि अतोतूर्वीः-अतोतोः ॥ तोथोर्ति, तोथूर्तः ॥ दोदोर्ति ॥ दोधोर्ति ॥ मुर्च्छा मोहसमुच्छ्राययोः ॥ मेमूर्च्छीति-मोमोर्ति, मोमूर्त्तः, मोमूर्च्छति । मोमूर्मः । अमोमूर्च्छीत् ॥ ॥ इति यङ्लुगन्तप्रक्रिया ॥**

( सुबोधिनी )-रेफाच्छ्वोर्लोपः क्वौ झसादौ ञमादौ हे च प्रत्यये ॥ रकारात्परयोर्धातोः छकारवकारयोर्लोपः स्यात् क्विपि परे झसे ञमे हे च । क्वावुदाहरणम् । तुर्वी । तूः, तुरौ, तुरः ॥ धुर्वी । धूः, धुरौ, धुरः ॥ मुर्च्छा । मूः, मुरौ, मुरः । झसादौ तु रेफाच्छ्वोरिति वलोपः । उपधाया लघोरिति गुणः । तोतोर्ति । यद्यप्यत्र यवयोर्वसे इत्यनेन वलोपः सिध्यति तथापि तोतूर्त इत्यादौ वलोपार्थं रेफाच्छ्वोर्लोप इत्युपन्यस्तम् । अन्यथा तत्र यवयोर्वसे इति लोपं बाधित्वा वस्य क्ङिति झसे इति ऊः स्यात् । तोतूर्व्यात् । तोतूर्वीतु-तोतोर्तु-तोतूर्तात् । अतोतूर्वीत्-अतोतोः । लुङि अतोतूर्वीत् ॥ थुर्वी धुर्वी हिंसायाम् । तोथूर्वीति-तोथोर्ति । तोथूर्व्यात् । तोथूर्वीतु-तोथोर्तु-तोथूर्तात् । अतोथूर्वीत्-अतोथोः । लुङि अतोथूर्वीत् ॥ धुर्वी । दोधूर्वीति-दोधोर्ति । दोधूर्व्यात् । दोधूर्वीतु-दोधोर्तु-दोधूर्तात् । अदोधूर्वीत्-अदोधोः । लुङि । अदोधूर्वीत् ॥ मुर्च्छा मोहसमुच्छ्राययोः । मोमूर्च्छीति । ईडभावे रेफाच्छ्वोरिति छलोपः । उपधाया लघोरिति गुणः । मोमोर्ति । मोमूर्च्छ्यात् । मोमूर्च्छीतु-मोमोर्तु-मोमूर्त्तात् । अमोमूर्च्छीत्-अमोमोः । लुङि । अमोमूर्च्छीत् ॥ अज गत्यादौ । अजेरचतुर्षु वीति यङि विवक्षिते वी-आदेशः । वेवीयते । अस्य यङ्लुङ् नास्ति । लुका अपहारे विषयत्वासंभवेन वीभावस्याप्रवृत्तेः ॥ ॥ इति सुबोधिन्यां यङ्लुगन्तप्रक्रिया ॥

( तत्त्वदी० )-कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगाद्यङ्लुक्प्रसाधनम् ॥

इति तत्त्वदीपिकायां यङ्लुगन्तप्रक्रिया ॥ ४ ॥

# अथ नामधातुप्रक्रिया ।

**नाम्नो य ई चाऽस्य ॥** नाम्न इच्छायामर्थे यप्रत्ययो भवत्यवर्णस्य च ईकारः ॥ आत्मनः पुत्रमिच्छति पुत्रीयति ॥ क्वचित्स्वरवद्यकारः ॥ गामिच्छति गव्यति । गव्यांचकार ॥ नाव्यति । नाव्यांचकार ॥ त्वामिच्छति त्वद्यति ॥ ( **हसाद्यस्य लोपो वाऽनपि नामधातौ** ) त्वदांचकार-त्वद्यांचकार ॥ मामिच्छति, मद्यति । युष्मद्यति । अस्मद्यति ॥

( सुबोधिनी )-**नाम्नो य ई चास्य ॥** आद्धुवीत्यतः कर्मणीति इच्छायामात्मन इत्यत इच्छायामिति आत्मन इति चानुवृत्तम् । कर्मणि वर्तमानान्नाम्नो यप्रत्ययः स्यात् ॥ आत्मशब्दस्तु परव्यावृत्त्यर्थस्वशब्दपर्यायो गृह्यते । इच्छायाश्च क्रियात्वेन स्वाश्रयः कर्ताक्षिप्तः । स चेदिष्यमाणं वस्तु स्वसंबन्धित्वेनाऽपेक्षते तदा यप्रत्ययः । आत्मनः स्वसंबन्धित्वं साक्षाद् ग्राह्यम् तेन यजमानस्य पुत्रमिच्छति पुरोधा इत्यत्र न यः । महान्तं पुत्रमिच्छतीत्यत्रापि न यः । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वचनात् । य इति सप्तम्या विपरिणम्यते । अवर्णान्तस्य नाम्न ईत्वं च यप्रत्यये परे । समासप्रत्ययोरिति विभक्तेर्लुक् । सधातुरिति धातुत्वात्तिबादिः । पुत्रीयति । पुत्रीयेत् । पुत्रीयतु । अपुत्रीयत् । कासादिप्रत्ययादित्याम् । यत इत्यलोपः । पुत्रीयांचकार । यत इत्यलोपः । पुत्रीयात् । पुत्रीयिता । पुत्रीयिष्यति । अपुत्रीयिष्यत् । अपुत्रीयीत् ॥ गामिच्छति गव्यतीत्यत्र 'य्वोर्लोपश्च वा पदान्ते' इति तु न भवत्यपदान्तत्वात् । अनपि संनिपातपरिभाषया यप्रत्यययकारस्यानापि च हसादिति लोपो न । यकारे परे वान्तादेशविधानात् । वकारो यस्य लोपस्य निमित्तं न भवतीति भावः । गव्यांचकार । गव्यिता ॥ त्वामिच्छति त्वन्मदेकत्वे इति त्वन्मदादेशौ । त्वद्यति । यत इत्यलोपः । अनपि च हसादिति यलोपः ॥ **हसाद्यस्य लोपो वानपीति ॥** हसान्तान्नाम्नो यस्य लोपो वा अनपि परे । त्वदांचकार ॥ मामिच्छति मद्यति । युवां युष्मान् वेच्छति युवावाविति सूत्रे विभक्तावित्युक्तं ततो विभक्तिपरत्वाभावान्न युवावौ । एकार्थत्वाभावात् त्वन्मदावपि न । युष्मद्यति । एवमस्मद्यति ॥

( तत्त्वदी० )-**नाम्नो य** इति ॥ अत्राद्धुवीत्यतः कर्मणीत्यनुवर्त्य कर्मणि वर्तमानान्नाम्न इति बोध्यम् । तेन पुत्रेणेच्छतीत्यादौ न आत्मन इत्यनुवर्तते । स च न चेतनद्रव्यवाची किं तु परव्यावृत्त्यर्थस्वशब्दपर्यायः । तेन घटादेरचेतनत्वेऽपि घटीयतीत्यादि भवत्येव । इच्छया कर्ताक्षिप्यते । स चेदिष्यमाणं वस्तु स्वसंबन्धित्वेनापेक्षते । तेन परस्य पुत्रमिच्छतीत्यत्र न तच्च साक्षादेव । तेन यजमानस्य पुत्रमिच्छति पुरोधा इत्यत्र न । स्वसंबन्धित्वं चेष्यमाणेनैव रूपेण विवक्षिते । तेन स्वस्य पुत्रं परस्य दासमिच्छतीत्यत्र न अत्र यदिष्यमाणं दासत्वं तच्च न स्वसंबन्धि । नाम्न इति तूत्तरार्थम् । धातुवार-

णाय तदिति चेत् धातोः सविधानेन परिशेषान्नाम्नो लाभात् । अथ सिवन्तादपि स्यात् इष्टत्वात् । नं च वाच्यतीत्यादौ जवादिप्रसंगः स्यादिति वाच्यम् अप्ययोरादित्यत्र जवाकरणेन ये पदकार्याभावस्य ज्ञापितत्वात् राजीयतीत्यादौ तज्ज्ञापकसिद्धस्यासार्वत्रिकत्वान्न लोपः ॥ ननु महान्तं पुत्र मिच्छतीत्यत्राने-कस्मान्नाम्नो यबाधनार्थं तदिति चेन्न पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति पुत्रस्यैकदेशत्वेना-न्वयाभावात् । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वचनाच्च । एवं च कर्मत्वद्योतक-विभक्त्यभावेन कथं तद्बाध इति दूषणपरिहाराय यत्रानेककारकसंभवस्तत्र कारकस्य विशेषबोधार्थे वि-भक्त्यपेक्षणामिति सिद्धान्तानुसारेण क्लेशोऽपि न कार्यः ॥ **आत्मनः पुत्रमिच्छती**ति ॥ पुत्रो मे स्यादितीच्छतीत्यर्थः ॥ **गव्यती**ति ॥ अवर्णाभावान्नेत्वम् ॥ **त्वद्यती**ति ॥ त्वामिच्छति ॥ **युष्म-द्यति**॥ युवां युष्मान्वेच्छतीति वाक्ये त्वदादेशो न एकार्थत्वाभावात् । युवावौ द्विवचन इति स्याद्यभावान्न॥

## ( काम्यश्च ) पुत्रकाम्यांचकार ॥

( सुबोधिनी )–काम्यश्च ॥ नाम्न इच्छायामर्थे काम्यप्रत्ययः स्यात् ॥ आत्मनः पुत्रमिच्छति पुत्रकाम्यति । यत इत्यलोपः । पुत्रकाम्यांचकार । पुत्रकाम्यिता । इहान-पिं च हसादिति यलोपो न । अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषया ॥

## ( धनस्य नेकारो गार्द्ध्ये ) धनायति–अन्यत्र धनीयति ॥

( सुबोधिनी )–धनस्य नेकारो गार्द्ध्ये ॥ गार्द्धोऽभिलाषुकस्तस्य भावे गार्द्ध्ये यण् । सत्यापि धने पुनर्धनमिच्छतीति धनायति । 'ये' इति दीर्घः । यश्च दरिद्रः सन् धनमिच्छति तत्र धनीयति ॥

( तत्त्वदी० )–**गार्द्ध्ये** इति ॥ गर्द्धो लोभातिशयः ॥ **धनायती**ति ॥ सत्येव धने भूयो धनमिच्छतीत्यर्थः ॥ **धनीयती**ति ॥ दरिद्रः सन् धनमिच्छतीत्यर्थः ॥

## ( उदकस्योदन् पिपासायाम् ) उदन्यति–अन्यत्रोदकीयति ॥

गीर्यति । गिरांचकार–गीर्यांचकार ॥ पूर्यति ॥ दिवमिच्छति । दि व्यति ॥ अमुमिच्छति अदस्यति । ऋतो रिङ् । कर्त्रीयति ॥

( सुबोधिनी )–उदकस्योदन् पिपासायाम् ॥ यश्च सद्य एव पातुमुदकमिच्छति तत्र तु उदन्यति–यश्च कालान्तरोपयोगार्थं पातुमुदकमिच्छति तत्र उदकीयति ॥ गिर-मिच्छति गीर्यति । य्वोर्वि हस इति दीर्घः ॥ पुरमिच्छति पूर्यति । 'य्वोर्वि हसे' इति सूत्रे धातोरिकारोकारयोरित्युक्तत्वान्नेह । दिवमिच्छति दिव्यति । दिवुधातोः क्विपि क्ङि ति झसे क्वाविति वस्योत्वे द्युरिति भवति । यप्रत्यये द्यूयतीति । कर्तारमिच्छति ऋतो रिङिति रिङ् । य इति दीर्घः । कर्त्रीयति ॥

( तत्त्वदी० )–**पिपासाया**मिति ॥ पातुमिच्छा पिपासा तस्याम् उदन्यतीति । पातुमिच्छ-तीत्यर्थः अन्यत्र तदभावे ॥ **दिव्यती**ति ॥ धातुत्वाभावान्न दीर्घः ॥

**( हसात्तद्धितयस्य लोपो ये च्वौ च ) गार्गीयति ॥ वाच्यति ॥ कवीयति ॥ समिध्यति ॥ समिधाञ्चकार–समिध्यांचकार । समिधिता–समिध्यिता ॥**

( सुबोधिनी )–हसात्तद्धितयस्य लोपो ये च्वौ च ॥ हसादुत्तरस्य प्रत्ययकारस्य लोपो भवति यप्रत्यये च्विप्रत्यये च परे ॥ ण्यायनणिति ष्यः । च्वौ गार्गीभवति । गार्ग्यमिच्छति गार्गीयति ॥ वाचमिच्छति अप्ययोरादित्यत्र चपा अबे जबा इत्यकरणेन क्वचित्प्रत्यये पदकार्यं नेति ज्ञापितम् । तेन पदत्वाभावात् चोः कुरिति कुत्वं न । वाच्यति ॥ आत्मनः कविमिच्छति 'ये' इति दीर्घः । कवीयति ॥ समिधमिच्छति समिध्यति । हसाद्यस्येति आदेः परस्येति यलोपः । यत इत्यलोपः । तस्य लोपः । तस्य स्थानिवत्त्वादुपधाया लघोरिति गुणो न । समिधिता–समिध्यिता ॥

**( मान्ताव्ययाभ्यां यो न ) किमिच्छति । इदमिच्छति । स्वरिच्छति । उच्चैरिच्छति ॥**

( सुबोधिनी )–मान्ताव्ययाभ्यां यो न ॥ मान्तप्रकृतिकान्नाम्नोऽव्ययाच्च यो न । किमिच्छति । स्वरिच्छति ॥

( तत्त्वदी० )–मान्ताव्ययाभ्यामिति ॥ मान्तमिह नामैव न तु सिबन्तम् । अन्यथा पुत्रमिच्छतीत्यत्रापि मान्तत्वान्न स्यात् ॥

**( अश्ववृषयोर्ये सुक् मैथुनेच्छायाम् ) अश्वस्यति वडवा । वृषस्यति गौः ॥**

( सुबोधिनी )–अश्ववृषयोर्ये सुक् मैथुनेच्छायाम् ॥ अश्वस्यति । मैथुनार्थमश्वमिच्छतीत्यर्थः । वृषमिच्छति मैथुनार्थं वृषस्यति ॥

( तत्त्वदी० )–अश्ववृषयोरित्यादि ॥ अश्ववृषेच्छा यदा मैथुनार्था न त्वारोहणाद्यर्था तदैव सुगित्यर्थः । अन्ये तु 'इति रामो वृषस्यन्तीम्'' इत्यादिप्रयोगदर्शनात्परित्यक्तप्रकृतार्थो मैथुनेच्छैवार्थ इत्याहुः ॥

**(क्षीरलवणयोर्लालसायां सुक्) क्षीरस्यति बालः । लवणस्यत्युष्ट्रः ।**

( सुबोधिनी )–क्षीरलवणयोर्लालसायाम् सुक् ॥ लालसायामुत्कटेच्छायां सुक् ये ॥ क्षीरमिच्छति क्षीरस्यति । लवणस्यति ॥

( तत्त्वदी० )–लालसायामिति ॥ तृष्णातिरेको लालसा । क्षीरलवणविषय इच्छातिरेको यदा–स्यवहारार्थो न तु होमाद्यर्थस्तदेत्यर्थः ॥

**( नाम्नो ये लालसायां सुगसुकौ ) दधिस्यति, दध्यस्यति । मधुस्यति, मध्वस्यति । यशस्काम्यति । सर्पिष्काम्यति ॥**

( सुबोधिनी )—नाम्नो ये लालसायां सुगसुकौ ॥ नाम्नः सुगसुकावागमौ भवतः य प्रत्यये परे ॥ तृष्णातिरेको लालसा तस्यामर्थे ॥ दधिस्यतीत्यत्र षः स इति विपरीतनिर्देशान्न षत्वम् ॥

( तत्त्वदी० )—दधिस्यतीति ॥ षः स इति विपरीतनिर्देशान्न षत्वम् । दधिमधुशब्दावेवागमिनावित्येके । नाम्नो विधानादन्येऽपीत्यन्ये ॥

( मान्ताव्ययाभ्यां काम्यः ) किंकाम्यति । स्वःकाम्यति । उच्चैःकाम्यति ॥

( सुबोधिनी )—मान्ताव्ययाभ्यां काम्यः ॥ मान्तप्रकृतिकान्नाम्नोऽव्ययाच्च काम्यः स्यादिच्छायाम् ॥ किमिच्छति किंकाम्यति । स्वः स्वर्गमिच्छति स्वःकाम्यति ॥

( तत्त्वदी० )—स्वःकाम्यतीति ॥ अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्राधान्यात्कर्मत्वेन योगः ॥

करणे च नाम्नः ॥ करणेऽर्थे यः ॥ तपस्यति । तपश्चरतीत्यर्थः ॥

( नमसः पूजायाम् ) नमस्यति देवान् । पूजयतीत्यर्थः ( वरिवसः परिचर्यायाम् ) वरिवस्यति गुरुम् । शुश्रूषत इत्यर्थः ॥

( सुबोधिनी )—करणे च नाम्नः ॥ य इत्यनुवृत्तम् । करोत्यर्थे इत्यर्थः । नमस्करोति नमस्यति देवान् । पूजयतीत्यर्थः । वरिवस्यति गुरुम् । शुश्रूषत इत्यर्थः ॥

( तत्त्वदी० )—करणे चेति ॥ करणं कृतिः । न तु पारिभाषिकम् । नमस्यति देवान् । नमः करोति । जहत्स्वार्थायां वृत्तौ नमःशब्दस्यानर्थकत्वात् । अजहत्स्वार्थायां तु प्रत्ययार्थे उपसर्जनत्वान्न तद्योगे चतुर्थी ॥ वरिवस्यतीति ॥ वरिवः शुश्रूषां करोतीति विग्रहः ॥

( शब्दादिभ्यो यङ् ) शब्दायते । वैरायते । कलहायते । आभ्रायते । मेघायते ॥

( सुबोधिनी )—शब्दादिभ्यो यङ् ॥ एभ्यः कर्मभ्यः करोत्यर्थे यङ् ॥ शब्दं करोति शब्दायते । पक्षे ञिडिरकरणे इति ञिप्रत्ययोऽपि भवति । शब्दयतीति न्यासकारः ॥

कष्टाय क्रमणे ॥ कष्टायते ॥

( सुबोधिनी )—कष्टाय क्रमणे ॥ चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे यङ् ॥ कष्टाय क्रमत इति कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥

( ऊष्मबाष्पधूमेभ्य उद्वमने ) ऊष्मायते । बाष्पायते । धूमायते ॥

( सुबोधिनी )—ऊष्मबाष्पधूमेभ्य उद्वमने ॥ एभ्यः कर्मभ्यो यङ् ॥ ऊष्माणमुद्वमति । नाम्नो नो लोपशिति नस्य लोपः । 'ये' इति दीर्घः । ऊष्मायते ॥

( तत्त्वदी० )—ऊष्मायत इति ॥ ऊष्माणमुद्वमतीत्यर्थः ॥

**ञिर्डित्करणे ॥ नाम्नो ञिप्रत्ययः करणेऽर्थे स च डित् ॥ घटं करोति घटयति । घटयते । अजघटत् ॥ पटयति । पटयते । अपपटत् ॥ अग्वृलोपिनो नाङ्कार्यम् ॥ महान्तं करोति महयति । अममहत् ॥ युवानं करोति यवयति । अयूयवत् । कनयति । अचीकनत् ॥**

( सुबोधिनी )—ञिर्डित्करणे ॥ तत्करोति तदाचष्टे वेत्यर्थे नाम्नो ञिः स च डित् ॥ डिति टेरिति डित्वाट्टिलोपो भवति । घटमाचष्टे घटयति । लुङि अग्वृलोपित्वादजघटत् ॥ पटुमाचष्टे पटयति । लुङि परत्वाद्वृद्धौ सत्यां टिलोपः । अपीपटत् । भाष्ये तु वृद्धेर्लोपो बलीयानित्युक्तम् । तेन पूर्वं लोपस्ततोऽग्वृलोपित्वान्नाङ्कार्यम् । अपपटत् । महान्तमाचष्टे महयति ॥

( तत्त्वदी० )—ञिर्डित्करणे ॥ ड् इत् यस्य स डित् । अतिदेशोऽयं न तु संज्ञा । तथात्वे तु डिति टेरित्यादावस्यैव ग्रहणं स्यान्न तु ड् इत् यस्य तस्य । कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमित्युक्तत्वात् । अथ कथं वर्ति विनातिदेशबोधनम् इति चेच्छृणु । अडितं डिदित्याह डिद्वदिति गम्यत इति भाष्योक्तेः ॥

**( आविष्ठवत्कार्यम् ) स्फिरं करोति स्फापयति । अपिस्फपत् ॥ उरुम् वरयति । अवीवरत् ॥ बहुलम् बंहयति । अबबंहत् ॥ वृद्धम् वर्षयति । अववर्षत् ॥ तृप्रम् त्रपयति । अतित्रपत् ॥ दीर्घम् द्राघयति । अदद्राघत् ॥ वृन्दारकम् वृन्दयति । अववृन्दत् ॥ अन्तिकम् नेदयति । अनिनेदत् ॥ स्थूलम् स्थवयति । अतुस्थवत् ॥ दूरम् दवयति । अदूदवत् ॥ ह्रस्वं ह्रसयति । अजिह्रसत् ॥ क्षिप्रम् क्षेपयति । अचिक्षिपत् ॥ क्षुद्रं करोति क्षोदयति । अचुक्षोदत् ॥ प्रियं करोति प्रापयति । अपिप्रपत् ॥ गुरुं करोति गरयति । अजीगरत् ॥ स्थिरं करोति स्थापयति । अतिस्थपत् ॥ ऊढिं करोति ऊढयति । ञेरङ् द्विश्च । स्वरादेः परः ॥**

(सुबोधिनी)—आविष्ठवत्कार्यम् ॥ इष्ठप्रत्यये परतो यत्कार्यं दृष्टं संभावितं च तन्नाम्नो ञावप्यतिदिश्यते ॥ इष्ठे यथा विन्मतुमतूनां लोपो रभावो गुर्वादेर्गराद्यादेशटिलोपौ तद्वत् ञावपि स्युः ॥ स्रग्विणमाचष्टे स्रजयति । अग्निमन्तमाचष्टे अग्नयति । दण्डवन्तमाचष्टे दण्डयति । लङि असस्रजत् । अत्र पूर्वस्येत्वं तु न भाष्यासंमतत्वात् । अजिग्नयत् । अद-

दण्डत् । अल्लोपस्य स्थानिवत्त्वान्नलोपो न ॥ स्थूलं करोति । गुर्वादेरिष्ठेमेयस्सु गरादिष्टचलोपश्चेति । स्थूलस्य स्थवष्टिलोपाभावश्च । स्थवयति । लुङि अतुस्थवत् । आदेशावयवत्वान्न षः ॥ दूरं करोति । दूरस्य दव् । दवयति । लुङि अदूदवत् । कथं तर्हि 'दूरयत्यवनते विवस्वति' इति । दूरमततीति दूरात् । क्विबन्तः । तं कुर्वतीत्यर्थः ॥ युवानं करोति । युवन्शब्दस्य युव । यवयति । युवाल्पयोः कन्वेति कन् । कनयति । लुङि अयूयवत् । अचीकनत् ॥ ञिडिदिति सूत्रे बहुलग्रहणं कर्तव्यम् । तस्मादिह सर्वत्र वृद्ध्यभावः ॥ ह्रस्वं करोति । ह्रस्वस्य ह्रस् । संज्ञापूर्वकविधेरनित्यत्वाद्बहुलग्रहणाद्वा न वृद्धिः । माधवेन तु विकल्पेन वृद्धिरुदाहृता । ह्रसयति । अजिह्रसत् ॥ क्षिप्रं करोति । क्षिप्रस्य क्षेप् । क्षेपयाति । अचिक्षिपत् ॥ क्षुद्रं करोति । क्षुद्रस्य क्षोदः । क्षोदयति । अचुक्षुदत् ॥ प्रियं करोति । प्रियस्य प्रः । धातोर्नामिन इति वृद्धौ रातो आविति पुक् । प्रापयाति । अपिप्रपत् ॥ गुरुं करोति । गुरोर्गर् । गरयति । अजीगरत् ॥ स्थिरं करोति । स्थिरस्य स्थः । स्थापयति अतिस्थपत् ॥ वहनमूढिस्तामूढिं करोति ऊढयति । ऊढिमाख्यत् औडिढत् ॥

( तत्त्वदी० )—आविष्ठवदिति ॥ इष्टे यत्कार्यं दृष्टं संभावितं च तन्नाम्नो आवतिदिश्यते ॥ इष्टे यथा विन्मतुवतॄनां लोपो रभावो गुर्वादेर्गराद्यादेशटिलोपौ तथा आवपीति बोध्यम् ॥ दवयतीति ॥ दूरं करोति इति विग्रहवाक्यम् । संज्ञापूर्वकत्वेनानित्यत्वाद्वृद्ध्यभावः । टिलोपस्यासिद्धत्वाद्वा । 'दूरयत्यवनते विवस्वति' इत्यत्र तु वेत्यनुवर्त्य व्यवस्थयाऽभावः । यद्वा दूरमतति दूरात् । तं कुर्वतीत्यर्थः ॥ प्रापयतीति ॥ प्रियस्य प्रादेशे वृद्धिपुकौ । आदेशाभावे प्रिययतीत्यपि ॥

**( अङि पूर्वढस्य जो वा )** औजिढत्—औडिढत् ॥ ऊढं करोति । ऊढयति । औजढत्—औडढत् ॥

( सुबोधिनी )—अङि पूर्वस्य जो वा ॥ पूर्वरूपस्थस्य ढकारस्य जो वा भवति अङ्प्रत्यये परे ॥ औजिढत् ॥ ऊढं करोति ऊढयति । लुङि ढिलोपे च सति ञिसहितस्य द्वित्वे पश्चात्पूर्वाकारो दुर्लभः । अतो ञिनिमित्तः स्वरादेश इत्यनेन ढस्य द्वित्वम् । ऊढमाख्यात् औडढत् । जत्वे औजढत् ॥

**कर्तुर्यङ् ॥** उपमानात्कर्तुराचारार्थे यङ् ॥ श्येन इवाचरति श्येनायते काकः ॥ पण्डितायते मूर्खः ॥ एतायते । यङ्मानिनोरिति पुंवत् ॥

( सुबोधिनी )—कर्तुर्यङ् ॥ आचारे उपमानादित्यत उपमानादित्यनुवृत्तम्, आचारे इति च । उपमानात्कर्तुर्नाम्न आचारे यङ् ॥ आदनुदात्तङित इत्यात् । श्येन इवाचराति । यङ्मानिनोरिति पुंवत् । 'ये' इति दीर्घः । श्येनायते ॥

**( यङि वा सलोपः )** पयायते—पयस्यते वा तक्रम् ॥

( सुबोधिनी )-यङि वा सलोपः ॥ सान्तस्य कर्तुः सस्य वा लोपः ॥

**( अप्सरसोजस्सुमनसां नित्यम् )** अप्सरायते ॥ ओजायते दुर्बलः ॥ सुमनायते ॥

( सुबोधिनी )-अप्सरसोजस्सुमनसां नित्यम् ॥ ओजःशब्दस्तद्वति वृत्तौ ओजस्वीवाचरतीति ओजायते ॥

( तत्त्वदी० )-अप्सरायते इति ॥ अप्सरा इवाचरतीत्यर्थः ॥ ओजायत इति ॥ ओजःप्रभृयो वृत्तिविषये तद्वति वर्तन्ते ॥

**( नाम्न आचारे क्विब् वा )** कृष्ण इवाचरति कृष्णति । अकृष्णत ॥ अ इवाचरति अति, अतः, अन्ति । एत्, एताम्, एयुः । अतु-अतात, अताम, अन्तु । अ-अतात्, आत, आताम्, आन् । आः । लिटि औ, अतुः, उः । इथ । यात् । इता । आसीत, आसिष्टाम् ॥ मालेवाचरति । मालाति । मालायात् ॥ मालाहि । अमालात् । मालांचकार । मालिता । अमालासीत् ॥ कविरिवाचरति कवयति । अकवयत ॥

( सुबोधिनी )-नाम्न आचारे क्विब् वा ॥ कर्तुरुपमानान्नाम्नः क्विप् वा स्यादाचारेऽर्थे ॥ नाम त्वसिबन्तं ग्राह्यम् । तेन विभक्त्याश्रितं कार्यं न । पक्षे यङ् । कृष्ण इवाचरतीति स धातुरिति धातुत्वात्तिवादिः । 'अदे' इत्यलोपः । कृष्णाति ॥ अः कृष्णस्वद्वदाचराति । 'अदे' इत्यलोपः । अति । लिटि तु कासादिप्रत्ययादिति सूत्रस्य वृत्तौ प्रत्ययग्रहणमपनीयानेकस्वरेत्युक्तेर्नाम् । द्वित्वे 'अदे' इत्यलोपे प्राप्ते परत्वादाभ्वोर्णादाविति पूर्वस्यात्वं तत आतो णब् डाविति डौ । डित्त्वाट्टिलोपः । औ आतोऽनपीत्यालोपे । अतुः । लुङि यभिरमिनमातामितीट्सकौ । आसीत ॥ मालेवाचरति मालाति । लिट्यनेकस्वरत्वादाम् । मालांचकार । लुङि अमालासीत् ॥ कविरिवाचरति कवयति । कवयांचकार । आशिषि 'ये' इति दीर्घः । कवीयात् ॥

( तत्त्वदी० )-नाम्न आचार इति ॥ अत्रासिबन्तं नाम गृह्यते न तु सिबन्तम् । तेन पदकार्यं न ॥ औ इति ॥ सवर्णदीर्घेणानेकस्वरत्वाभावादाम्न । अतुसादिषु दीर्घः । आतोऽनपीत्यालोपः ॥ इता ॥ यत इत्यलोपः । गुणस्तु प्रत्ययावयवत्वान्न । न हि निमित्तं कार्यित्वेनाश्रीयते ॥ आसीदिति ॥ यभिरमीति सगिटौ ॥ मालातीति ॥ लिङ्गविशिष्टपरिभाषया ॥

**( नामधातोर्वृद्धिर्वा सौ )** अकवायीत्-अकवयीत ॥ विरिवाचरति । वयति । विवाय, विव्यतुः । अवायीत्-अवयीत ॥ श्रीरिवाचरति । श्रयति । शिश्राय, शिश्रियतुः । अश्रायीत्-अश्रयीत् ॥ पितेवाचरति पितराति । पितरांचकार । यादादाविति रिङ् ।

पित्रियात् ॥ भूरिवाचरति भवति। बुभाव। अभावीत् ॥ द्रुरिवाचरति द्रवति। अद्रावीत् ॥

(सुबोधिनी)—नामधातोर्वृद्धिर्वा सौ ॥ सिप्रत्यये परे लुङि कैयटमते न वृद्धिः। माधवस्तु नामधातोरपि वृद्धिमिच्छति। विः पक्षी तद्वदाचरति वयति। लिटि नुधातोरिति यः। विव्यतुः। आशिषि यादादाविति रिङ्। पित्रियात्। 'दादेः पे' इति सिलुक्। भुवः सिलोपे इति भुवो वुगिति च वुक्। आभ्वोरित्यनेनात्वं चास्य न अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात्। बुभाव। अभावीत्। श्रिद्रुभ्य इति ङो न धातुपाठस्थत्वाभावात्। अद्रावीत् ॥

(तत्त्वदी०)—बुभावेति ॥ आभ्वोर्णादौ भुवो वुगिति च न तत्र धातुपाठस्थस्यैव ग्रहणात् ॥

ञमस्य क्ङिति झसे ॥ ञमान्तस्य धातोर्दीर्घः स्यात्क्ङिति झसे कौ हे च। इदमिवाचरति इदामति ॥ राजेवाचरति राजानति। राजायते ॥ मन्था इवाचरति मथीनति ॥ ऋभुक्षा इवाचरति ऋभुक्षीणति ॥ द्यौरिवाचरति द्यवति। दुद्याव। द्यूयात्। द्यविता ॥ क इवाचरति कति। चकौ। चकेत्यन्ये ॥ स्व इवाचरति स्वति। सस्वौ। सस्व इत्यन्ये ॥

(सुबोधिनी)—ञमस्य क्ङिति झसे ॥ ञमान्तस्य धातोर्दीर्घः स्यात् कौ झसादौ हकारे च क्ङिति ॥ झसादौ किति शान्तो दान्त इत्युदाहरणम्। ङिति तु यङ्लुकि तसप्रत्यये। शंशान्तः। दंदान्तः ॥ पन्था इवाचरति पथीनति। अत्रान्तरङ्गत्वाद्दीर्घस्ततो न गुणः ॥ द्यौरिवाचरति। क्ङिति झसे काविति वस्य ऊत्वे गुणावादेशौ। द्यवति ॥ को ब्रह्मा तद्वदाचरति कति। लिटि धातोर्नामिन इति वृद्धौ आतो णब् डावित्यौ। चकाविति हरदत्तः। माधवस्तु णपि वृद्धिं बाधित्वा यत इत्यलोपात् चक इति रूपमाह ॥

(तत्त्वदी०)-द्यवतीति ॥ क्ङिति झसे काविति वस्योत्वे गुणावादेशौ ॥ चकाविति ॥ आत इत्यत्र आ अत इति च्छित्वा अदन्तादपि डौ ॥

आचार उपमानात् ॥ कर्मधारये उपमानादाचारेऽर्थे यप्रत्ययोऽस्य चेकारः ॥ पुत्रमिवाचरति पुत्रीयति शिष्यमुपाध्यायः ॥ प्रासाद इवाचरति प्रासादीयति कुट्यां भिक्षुः ॥

(सुबोधिनी)—आचार उपमानात् ॥ नाम्नो य ई चास्येत्यनुवृत्तम्। आचरणमाचारः। चरेर्भावे घञ्। ज्ञानं व्यवहारो वा। उपमीयतेऽनेनेत्युपमानम्। माङः करणे युट्। कर्मण उपमानादाधाराडुपमानाच्च नाम्नो यः स्यादाचारेऽर्थे तस्मिन् ये परे पूर्वस्यावर्णस्य ईत्वं च ॥ राजानमिवाचरतीत्यत्र नाम्नो न इवि नलोपे कृते ईत्वम्। राजीयति ॥

( तत्त्वदी० )–**आचारउपमाना**दिति ॥ आचरणमाचारः । चरेर्भावे घञ् व्यवहारो ज्ञानं वा । उपमीयतेऽनेनेत्युपमानम् ॥ **पुत्रीयति शिष्यमुपाध्याय** इति ॥ पुत्रविषयकं यज्ज्ञानं व्यवहारो वा तत्सदृशं शिष्याभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनुकूलो वर्तमानकालिक एकगुर्वभिन्नाश्रयको व्यापारः । प्रासादाभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तत्सदृशं कुड्याभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनुकूल एकाभिन्नाश्रयो वर्तमानकालिको व्यापारः ॥

**( भृशादिभ्योऽभूततद्भावे यङन्त्यहसलोपश्च ) अभृशो भृशो भवति भृशायते ॥ अशश्वच्छश्वद्भवति शश्वायते ॥**

( सुबोधिनी )–**भृशादिभ्योऽभूततद्भावे यङन्त्यहसलोपश्च** ॥ भृशादिभ्यो यङ् स्यात् तस्मिन् परे भृशादीनामन्त्यस्य हसस्य लोपश्चाभूततद्भावेऽर्थे ॥ 'ये' इति दीर्घः । भृशायते ॥

**( क्विबपि )–भृशाति ॥**

( सुबोधिनी )–**क्विबपि** ॥ भृशादिभ्यः क्विप् स्यादभूततद्भावेऽर्थे ॥

**( च्विरपि ) भृशीभवति । भृश्यभूत् ॥ सुमनायते । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते ॥ स्वमनायत । उदमनायत ॥**

( सुबोधिनी )–**च्विरपि** ॥ भृशादिभ्यश्च्विः स्यादभूततद्भावेऽर्थे कृभ्वस्तियोगे एव ॥ **उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते** ॥ धातुसंज्ञाविधायके प्रत्यये कर्तुमिष्टे सति उपसर्गतुल्यं पूर्वपदं भिन्नं कर्तव्यमित्यर्थः ॥ चुरादौ संग्राम युद्धे इति संविशिष्टपाठोऽस्य ज्ञापकः । तेन मनस्शब्दात्प्रागट् भवति । स्वमनायत ॥

( तत्त्वदी० )–**उपसर्गसमानाकार**मित्यादि ॥ अत्र ज्ञापकं तु चुरादिषु संग्राम युद्ध इत्यत्र संग्राम इति विशिष्टपदम् । अन्यथा ग्राम युद्ध इत्येवापठिष्यत् ॥

**( सुखादिभ्यो यङ् कर्तुरनुभवे ) सुखं वेदयते सुखायते ॥ दुःखायते ॥**

( सुबोधिनी )–**सुखादिभ्यो यङ् कर्तुरनुभवे** ॥ सुखादिभ्यः कर्मभ्योऽनुभवकर्तुरेव चेत्सुखादीनि स्युः ॥ अनुभवशब्दो ज्ञानवाची । तदपेक्षमेव कर्तृत्वम् । कर्ता चेत्सुखादिभिरन्वेति ॥ सुखं वेदयते । 'ये' इतिः दीर्घः । सुखायते । कर्तुरिति किम् । सुखं वेदयते परस्य । इह यन्निष्ठं सुखं तद्भिन्ननिष्ठोऽनुभवः ॥

( तत्त्वदी० )–**सुखं वेदयत** इति ॥ स्वगतं सुखमनुभवतीत्यर्थः ॥

**( पुच्छादुदसने व्यसने पर्यसने च ञिङ् ) उत्पुच्छयते । उदपुपुच्छत ॥ विपुच्छयते ॥ परिपुच्छयते ॥**

( सुबोधिनी )–पुच्छादुदसने व्यसने पर्यसने च णिङ् ॥ पुच्छान्नाम्नो णिङ् स्यात् ॥ उत उर्ध्वमसनं क्षेपणं उदसनम् । विविधं विरुद्धं वासनं व्यसनम् । परि समंतादसनं पर्यसनम् । तस्मिन्नर्थे । ङित्त्वादात् । पुच्छमुदस्यति–उत्पुच्छयते । उदपुपुच्छत ॥

( तत्त्वदी० )–पुच्छादुदसन इत्यादि ॥ उदसनमुत्क्षेपणम् । विविधं विरुद्धं वा क्षेपणं व्यसनम् । परितः क्षेपणं पर्यसनम् ॥

भाण्डात्समाचयने ) संभाण्डयते ॥

( सुबोधिनी )–भाण्डात्समाचयने ॥ भाण्डात् णिङ् स्याद्राशीकरणेऽर्थे ॥ संभाण्डयते । लुङि समबभाण्डत ॥

( तत्त्वदी० )–समाचयनं राशीकरणम् ॥

( चीवरादर्जने परिधाने च ) चीवराण्यर्जयति, परिधत्ते वा संचीवरयते भिक्षुः । ( नाम्नो णिराचष्टे ) ॥

( सुबोधिनी )–चीवरादर्जने परिधाने च ॥ णिङ् । चीवराण्यर्जयति परिधत्ते वा संचीवरयते । लुङि समचिचीवरत ॥

( तत्त्वदी० )–संचीवरयते इति ॥ अर्जयति परिधत्ते वेत्यर्थः ॥

( अर्थवेदसत्यानामापुग् णौ ) अर्थापयति । आर्तीथपत ॥ वेदापयति ॥ सत्यापयति । अससत्यपत ॥ एतयते । ऐतयत ॥ पृथुम् । प्रथयति ॥ वृद्धौ सत्यां पूर्वं वा टिलोपः । अपप्रथत्–अपिप्रथत् ॥ मृदुम् म्रदयति । अमम्रदत्–अमिम्रदत् ॥ भृशम् भ्रशयति । अबभ्रशत् ॥ कृशम् क्रशयति । अचक्रशत् ॥ दृढम् द्रढयति । अदद्रढत् ॥ परिव्रढयति । पर्यवव्रढत ॥ त्वादयति । अतित्वदत् ॥ मादयति । अमीमदत् ॥ युष्मयति । अयुयुष्मत् ॥ अस्मयति । आसिस्मत ॥ विद्वांसम्–विद्वयति । अविविद्वत् ॥ विदावयतीत्यपरे । अविविदावत । विदयति इत्यन्ये । अविविदत ॥ एवं श्वानमाचष्टे श्वयति । अशिश्वत । शावयतीत्यपरे । अशुशावत । शुनयतीत्यन्ये । अशुशुनत ॥ उदञ्चम् उदीचयति । उदैचिचत् ॥ प्रत्यञ्चम प्रतीचयति । प्रत्यचिचत् ॥ सम्यञ्चम् समीचयति । सम्यचिचत ॥ तिर्यञ्चम् तिराययति । अतितिरायत ॥ सध्यञ्चम् सध्राययति । अससध्रायत ॥ अन्तिकम नेदयति । अनिनेदत् ॥ बाढम् साधयति ॥ वृद्धम् ज्यापयति । अजिज्यपत ॥ वृद्धम् वर्षयति ॥ स्फिरम् स्फापयति । अपिस्फपत ॥ उरुम् वरयति ॥ बहुलम् बंहयति ॥ तृप्रम त्रपयति ॥

दीर्घम् द्राघयति । अदद्राघत् ॥ वृन्दारकम् वृन्दयति । अववृन्दत् ॥ इति नामधातुप्रक्रिया ॥

( सुबोधिनी )–अर्थवेदसत्यानामापुग् ञौ ॥ एषामापुगागमः स्यात् ञिप्रत्यये परे ॥ अर्थमाचष्टे करोति वा अर्थापयति ॥ एनीमाचष्टे ञिप्रत्यये टिलोपः । ततो निमित्ताभावे नैमित्तिकस्याप्यभाव इतीपोऽभावे नस्याप्यभावः । एतयति ॥ पृथुमाचष्टे ऋ र इमनीति रभावे टिलोपे च प्रथयति । लुङि वृद्धौ सत्यां टिलोपः । अग्वृलोपित्वाभावादङि लघाविति पूर्वस्येत्वम् । अपिप्रथत्–वृद्धेः पूर्वं टिलोपे त्वग्वृलोपित्वादित्वं न । अपप्रथत् ॥ मृदुमाचष्टे आविष्ठवद्भावात् ऋ र इमनीति रभावे टिलोपे च म्रदयति ॥ एवं भृशकृशदृढादयः ॥ त्वां मां वाचष्टे टिलोपे 'त्वन्मदेकत्वे' इति त्वन्मदादेशे च कृते अत उपधाया इति वृद्धौ त्वादयति । मादयति ॥ युवामावां युष्मानस्मान् वाचष्टे विभक्तिपरत्वाभावान्न युवावौ । टिलोपे सति युष्मयति । अस्मयति ॥ श्वानमाचष्टे आविष्ठवद्भावात् शुनो वस्य उर्वा च दीर्घे इत्युत्वे टिलोपाभावे च शुनयतीति रूपं केचिदाहुः । टिलोपे उत्वे च वृद्धौ सत्यां शावयति । लुङि अग्वृलोपित्वान्न ह्रस्वः । अशुशावत् ॥ विद्वांसमाचष्टे टिलोपे विद्वयति । टिलोपे कृते वसोर्वे उरित्युत्वे वृद्धावावादेशे च विदावयतीत्यन्ये । नित्यत्वात्पूर्वमुत्वं पश्चाट्टिलोपः । विदयतीत्यपरे ॥ उदञ्चमाचष्टे । आविष्ठवद्भावात तिरश्चादय इत्युदीच् । उदीचयतीत्यत्रोपसर्गं पृथक्कृत्य अच्शब्दादेव ञिः । बहुलग्रहणाट्टिलोपो न । लुङि उपसर्गसमानाकारमितीकारात्पूर्वमटि चिशब्दस्य द्वित्वे पश्चात् ञेरिति ञिलोपः । उदैचिचत् ॥ प्रत्यञ्चमाचष्टे अचेर्दीर्घश्चेत्यलोपपूर्वदीर्घौ प्रतीचयति । लुङि चिशब्दात्प्रागाटि कृते पूर्वस्य यत्वम् । प्रत्यचिचत् । ग्वृणामसवर्णे स्वर इति प्रकृतिभावपक्षे तु प्रतिअचिचत् ॥ सम्यञ्चमाचष्टे अचेर्दीर्घश्चेत्यलोपपूर्वदीर्घौ । समीचयति । लुङि सम्यचिचत् । प्रकृतिभावपक्षे समिअचिचत् ॥ तिर्यञ्चमाचष्टे अञ्चेष्टिलोपेनापहारेऽपि तस्य बहिरङ्गत्वेनासिद्धत्वात्तिरीत्यस्य सद्भावः । वृद्धौ सत्यां तिरायति । उपसर्गसमानाकारत्वाभावादिह तिरसः पृथक्करणं नास्ति । अतितिरायत् । अङि लघाविति ह्रस्वस्तु नाग्वृलोपित्वात् ॥ सध्र्यञ्चमाचष्टे टिलोपेनाञ्चेरपहारे वृद्धौ सत्यां सध्र्याययति ॥ अन्तिकमाचष्टे गुर्वादेरित्यन्तिकस्य नेदष्टचलोपश्च । यस्येत्यलोपः । नेदयति । लुङि अनिनेदत् ॥ बाढमाचष्टे बाढस्य साधः । साधयति । अससाधत् ॥ वृद्धमाचष्टे वृद्धस्य ज्यादेशः । रातो आविति पुक् । ज्यापयति । अजिज्यपत् ॥ वृद्धस्य वर्षोऽपि । वर्षयति । अववर्षत् ॥ स्फिरमाचष्टे स्फिरस्य स्फः । वृद्धौ सत्यां रातो आविति पुक् । स्फापयति । अपिस्फपत् ॥ उरुमाचष्टे उरुशब्दस्य वर् । संज्ञापूर्वकविधेरनित्यत्वाद्वा बाहुलकाद्वा माधवेन विकल्पेन वृद्धिरुदाहृता । वरयति-वारयति । अवीवरत् ॥ बहुलमाचष्टे बहुलस्य बंहः । बंहयति । नो लोप इति नलोपो न । टिलोपस्य स्थानिवत्त्वात् । अग्वृलोपित्वान्नेत्वदीर्घौ । अबबंहत् ॥ तृप्रमाचष्टे तृप्रस्य त्रप् । त्रपयति अतित्रपत् ॥ दीर्घमा-

चष्टे दीर्घस्य द्राघः । द्राघयति । अदद्राघत ॥ वृन्दारकमाचष्टे वृन्दारकस्य वृन्दः। वृन्दयति । अववृन्दत् ॥ ॥ इति सुबोधिन्यां नामधातुप्रक्रिया ॥

(तत्त्वदी० )—**अर्थवेदे**त्यादि ॥ अत्र करण इत्यनुवृत्तं क्रियाविशेषोपलक्षणम् । तेनार्थमाचष्ट इत्यादिविग्रहः । आत्वेनैव सिद्ध आपुक्करणमन्यतोऽपि विधानार्थम् । तेन लिखापयतीत्यादि सिद्धम् ॥ **अपिप्रथ**दिति ॥ वृद्ध्यावौकारे कृते ततो लोपः । अग्लोपित्वाभावादङ्कार्यम् ॥ **त्वादयति मादयती**ति ॥ नो वेत्यत्र वा इत्यस्य व्यवस्थितत्वात्क्वचिन्न टिलोपः ॥ **बिद्वयती**ति ॥ आदौ टिलोपः । पुनरङ्गवृत्तपरिभाषया संप्रसारणं न ॥ **विदावयती**ति ॥ टिलोपे कृते संप्रसारणे वृद्ध्यावादेशौ ॥ सकृत्प्रवृत्तत्वात्पुनष्टिलोपाप्रसंगः ॥ **विदयती**ति ॥ संप्रसारणे कृते टिलोप इति पक्षे ॥ **उदीचयती**ति ॥ टिलोपो न व्यवस्थितत्वात् ॥ **तिरायती**ति ॥ आदौ टिलोपस्ततस्तिर्यादेशस्ततो वृद्ध्यायादेशौ । पुनष्टिलोपस्तु सकृत्प्रवृत्तत्वान्न ॥ **अतितिराय**दिति ॥ अग्लोपित्वादुपधाह्रस्वोऽपि न ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । समासेनेदमभवन्नामधातुसमापनम् ॥

इति तत्त्वदीपिकायां नामधातुप्रक्रिया ॥ ९ ॥

---

# अथ कण्ड्वादिप्रक्रिया ।

( कण्ड्वादिभ्यो धातुभ्यो यक् स्वार्थे ) कण्डूञ् गात्रविघर्षणे । कण्डूयति । कण्डूयते ॥ मन्तु अपराधे रोषे च । मन्तूयति । ञिदित्येके । मन्तूयते ॥ वल्गु पूजामाधुर्ययोः । वल्गूयति ॥ अस असु असूञ् उपतापे । अस्यति । अनपि च इसात् । असांचकार ॥ असूयति । असूयते ॥ लेला दीप्तौ । लेलायति ॥ मेधा आशुग्रहणे । मेधायति ॥ सुख दुःख तत्क्रियायाम् । सुख्यति । दुःख्यति॥ सपर् पूजायाम् । सपर्यति । सपर्यांचकार ॥ भिषज् चिकित्सायाम् । भिषज्यति ॥ इषुध् शरधारणे । इषुध्यति । ऐषुधीत् ॥ गद्गद वाक्स्खलने । गद्गद्यति ॥ एला केला खेला विलासे । एलायति । केलायति । खेलायति ॥ हृणीङ् रोषणे लज्जायां च । हृणीयते ॥ महीङ् पूजायाम् । महीयते ॥ अगद नीरोगत्वे । अगद्यति । आगदीत् ॥ इति कण्ड्वादिप्रक्रिया ॥

( सुबोधिनी )—कण्ड्वादिभ्यो धातुभ्यो यक् स्वार्थे ॥ एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे ॥ कण्ड्वादयो द्विधा । धातवः प्रातिपदिकानि च । नाम्नां तु विग्रह एव ॥ सपर् पूजायाम् । यगन्तात् षिद्भिदादिभ्योऽङ् इत्यनेनाङ् प्रत्यये आप् ॥ सपर्या ॥ महीङ् पूजायाम् । महीयते । पूजां लभत इत्यर्थः । आकृतिगणोऽयम् ॥ इति सुबोधिन्यां कण्ड्वादिप्रक्रिया ॥

( तत्त्वदी० )—कण्ड्वादिभ्यो यगिति ॥ कण्ड्वादयो हि द्विविधाः । धातवो नामानि । तत्र धातुभ्यो नित्यं । यक् नाम्नां तु कण्डूं करोतीति विग्रह एव ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगात्कण्ड्वादिसाधनम् ॥

इति तत्त्वदीपिकायां कंड्वादिप्रक्रिया ॥ ६ ॥

# अथ प्रत्ययमाला।

कण्डूयतेः सप्रत्यये द्विश्चेति प्रथमस्य द्वित्वे प्राप्ते कण्ड्वादेस्तृतीयस्य द्वित्वम् । कण्डूयियिषति । यप्रत्ययान्तात्सप्रत्यये तु यथेष्टं नामधातुषु द्वित्वमित्याद्यानां त्रयाणामन्यतमस्य द्वित्वं भवति। स्वरादेस्त्वाद्येतरस्य द्वित्वम्। पुत्रीयितुमिच्छति—पुत्रीयिषति—पुतित्रीयिषति । पुत्रीयियिषति ॥ अशिश्वीयिषति । अश्वीयियिषति ॥ आत्मन इन्द्रमिच्छति इन्द्रीयति।इन्द्रीयतेः सप्रत्यये द्रीशब्दयिशब्दयोरन्तरस्य द्वित्वम्। इन्दिद्रीयिषति । इन्द्रीयियिषति ॥ ञ्यन्तात्सप्रत्यये तु प्रियशब्दात् आविष्ठवद्भावेन प्रियशब्दस्य प्रादेशस्ततो द्वित्वादि। प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति। पिप्रापयिषति । प्रापिपयिषति। प्रापयियिषति ॥ यङ्सञ्यन्तात्सप्रत्यये तु। बोभूयिषयिषति ॥ यङ्ञिसान्तात् ञिप्रत्यये तु । बोभूययिषयाति ॥

इति प्रत्ययमाला।

# अथ पदव्यवस्था।

## ( निविशादेः ) निपूर्वाद्विशादेर्धातोरात् ॥ निविशते ॥

( सुबोधिनी )—निविशादेः ॥ निपूर्वो विशः। नेः परो विश इति वा निविशः स आदिर्यस्यस निविशादिस्तस्मादात्स्यात् । आदिशब्दः प्रकारे । विश इत्यत्र अकार उच्चारणार्थः। 'निविशते यदि शूकशिखा पदे' इति श्रीहर्षः। नि किम् । प्रविशति । अर्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणम् । तेनेह न । मधुनि विशन्ति भ्रमराः ॥

( तत्त्वदी० )—निविशादेः ॥ निपूर्वो विशः नेः परो विश इति वा । विशोऽकार उच्चारणार्थः असंदेहार्थो वा। तेन पदकार्यवारणम् । अन्यथा निविडादेरित्युक्ते विश् वा विड् भेदने वेति संदेहः स्यात्। निविश आदिर्यस्येति स तथा तस्मात् । अत्रादिशब्दः प्रकारे । तेन निविशसदृशादिति बोध्यम्। सादृश्यं चोपसर्गपूर्वत्वम् । निविशादिगणाभावाद्व्यवस्थावाचिन आदिशब्दस्य ग्रहणं न तेन नयतीति निकुलं विशतीत्यत्र न भवति। एवं वेतीति विकुलं जयतीत्यत्र न। पराजयति दूरानीतोत्तमाः परा. ॥

**( परिव्यवेभ्यः क्रियः )** परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥

( सुबोधिनी )—परिव्यवेभ्यः क्रियः ॥ परगामिफलार्थमिदमात्मनेपदम् ॥

**( विपराभ्यां जेः )** विजयते । व्यजेष्ट ॥ पराजयते ॥

( सुबोधिनी )—विपराभ्यां जेः ॥ आभ्यां परो जयतिरात्वान् ॥

**( आङो दाञो न तु विकसने )** विद्यामादत्ते । आदित । विकसने तु व्याददाति मुखं कृष्णः । परांगकर्मकान्नवत्येव । व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥

( सुबोधिनी )—आङो दाञो न तु विकसने ॥ परगामिफलार्थमिदम् । आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् ॥ विद्यामादत्ते ॥

**( क्रीड आङनुसम्परिभ्यः )** आक्रीडते । अनुक्रीडते । परिक्रीडते ॥

( सुबोधिनी )—क्रीड आङनुसंपरिभ्यः ॥ तृतीयार्थस्यानोर्योगे नात्मनेपदम् ॥ माणवकमनुक्रीडति । तेन सहेत्यर्थः ॥

**( समोऽकूजने )** संक्रीडते । कूजने तु । संक्रीडति रथचक्रम् ॥

( सुबोधिनी )—समोऽकूजने ॥ समः परः क्रीडतिरात्वान् कूजनेऽर्थे ॥

**( आगमेः क्षमायाम् )** आगमयस्व तावत् ॥

( सुबोधिनी )—आगमेः क्षमायाम् ॥ आङ्पूर्वात् ण्यन्ताद्गमेरात्स्यात् क्षमायामर्थे । आगमयस्व तावत् । मा त्वरिष्ठा इत्यर्थः ॥

( तत्त्वदी० )—आगमेः क्षमायाम् ॥ गमेरिति ण्यन्तस्य ग्रहणम् । क्षमा प्रतीक्षा ॥ आगमयस्वेति ॥ मा त्वरिष्ठा इत्यर्थः ॥

**( शिक्षेर्जिज्ञासायाम् )** धनुषि शिक्षते ॥

( सुबोधिनी )—शिक्षेर्जिज्ञासायाम् ॥ शिक्ष विद्योपादाने इत्यस्य नेह ग्रहणम् । अनुदात्तत्वादेवात्मनेपदसिद्धेः । किं तु शकेः सान्तस्येह ग्रहणम् । धनुषि शिक्षते । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ॥

( तत्त्वदी० )—धनुषि शिक्षत इति ॥ धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ॥

**( हरतेर्गतताच्छील्ये )** पैतृकमश्वा अनुहरन्ते । मातृकं गावः ॥

( सुबोधिनी )—हरतेर्गतताच्छील्ये ॥ गतं प्रकारः सादृश्यमिति यावत् । पैतृकमश्वा अनुहरन्ते । मातृकं गावः । पितुर्मातुश्च सादृश्यं सततं परिशीलयन्तीत्यर्थः ॥ ताच्छील्ये किम् । मातुरनुहरति । इह सादृश्यमात्रं विवक्षितं न तु प्रकारताच्छील्यम् ॥

( तत्त्वदी० )—**गतताच्छील्य** इति ॥ गतं प्रकारः ॥ **पैतृकमश्वा अनुहरन्त** इति ॥ पितुः प्रकारं सततं परिशीलयन्तीत्यर्थः। गतं गमनं तस्य ताच्छील्य इति व्याख्याने तु "अयं कः संबन्धो यदनुहरते तस्य कुमुदम्" इत्यादावव्याप्तिः स्यात् ॥

**( किरतेर्हर्षजीविकाकुलायकरणेषु )**

( सुबोधिनी )—किरतेर्हर्षजीविकाकुलायकरणेषु ॥ किरतेरात्स्यादेषु वाच्येषु। हर्षादयो विषयाः। तत्र हर्षो विक्षेपस्य कारणमितरे फले ॥

( तत्त्वदी० )—**किरते**रिति ॥ कॄ विक्षेपे। हर्षादयो विषयत्वेनोपादीयन्ते। तत्र हर्षो विक्षेपस्य कारणम्। इतरे फले ॥

**( अपात्किरतेः सुट् चतुष्पाच्छकुनिकर्तृके आलेखने) अपस्किरते वृषो हृष्टः। कुक्कुटो भक्षार्थी श्वाऽऽश्रयार्थी च । हर्षादिष्विति किम्। अपकिरति कुसुमं वायुः ॥**

( सुबोधिनी )—अपात्किरतेः सुट् चतुष्पाच्छकुनिकर्तृके आलेखने ॥ अपात्किरतेः सुट् स्याद्धर्षादिष्वेव। चतुष्पाच्छकुनिकर्तृके आलेखने सति ॥ अपस्किरते वृषो हृष्टः। हर्षेण भूमिं विलिखतीत्यर्थः॥ हर्षादिष्विति किम्। अपकिरति कुसुमम्। इहात्सुटौ न । हर्षादिमात्रविवक्षायां यद्यप्यात्मनेपदं प्राप्तं तथापि सुडभावे नेष्यत इत्याहुः। गजोऽपकिरति। अत्र हर्षे सत्यालेखनाभावात्सुटोऽप्राप्तिः ॥

( तत्त्वदी० )—**अपस्किरते वृषो हृष्ट** इति ॥ हर्षेण भूमिं विलिखतीत्यर्थः।

**( आङो नुप्रच्छोः ) आनुते। आपृच्छते ॥**

( सुबोधिनी )—आङो नुप्रच्छोः ॥ आङः परावेतावात्वन्तौ भवतः । णु स्तुतौ अदादिः प्रच्छ ज्ञीप्सायाम् तुदादिः ॥

( तत्त्वदी० )—**आङ** इति । णु स्तुतौ अदादिः । प्रच्छ ज्ञीप्सायां तुदादिः ॥ **आनुत** इति ॥ उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः ॥

**( शप उपालम्भे ) विप्राय शपते ॥**

( सुबोधिनी )—शप उपालम्भे ॥ आक्रोशार्थे स्वरितेतः शपः परगामिफले शपथरूपेऽर्थे आत्मनेपदं भवति। कृष्णाय शपते। श्लाघह्नुङ्इति संप्रदानसंज्ञा ॥

( तत्त्वदी० )—**उपालम्भ** इति ॥ शपथ इत्यर्थः। स च वाचा शरीरस्पर्शनरूपः॥ **विप्राय शपत** इति ॥ त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवं शपथेन विप्रस्य स्वाभिप्रायं प्रकाशयतीत्यर्थः॥ 'सख्यः शपामि यदि किंचिदिह स्मरामि' इत्यत्र तु स्वाशयप्रकाशनमात्रं विवक्षितं न तु शपथरूपमपीत्यदोषः ॥

**( समवप्रविभ्यः स्थः ) संतिष्ठते । समस्थित ॥ अवतिष्ठते ॥ प्रतिष्ठते ॥ वितिष्ठते ॥**

( सुबोधिनी )—समवप्रविभ्यः स्थः ॥ लुङि । अपिद्दाधास्थामिदितीत्वम् । समस्थिषाताम् ॥

( आङः प्रतिज्ञायाम् ) शब्दं नित्यमातिष्ठते ॥

( सुबोधिनी )—आङः प्रतिज्ञायाम् ॥ शब्दं नित्यमातिष्ठते । नित्यत्वेन प्रतिजानीत इत्यर्थः ॥

( स्वाभिप्रायाविष्करणे निर्णेत्राख्यायां च ) गोपी कृष्णाय तिष्ठते । अस्थित । 'संशय्य कर्णादिषु तिष्ठते यः' ॥

( सुबोधिनी )—स्वाभिप्रायाविष्करणे निर्णेत्राख्यायां च ॥ स्वाशयस्य प्रकाशने विवादस्य निराकरणकर्ता निर्णेता तस्मिन्नर्थे च तिष्ठतेरात्स्यात् । गोपी कृष्णाय तिष्ठते । स्थित्या नेत्रादिविकाराद्वा स्वाभिप्रायं ज्ञापयति । 'संशय्य कर्णादिषु तिष्ठते यः, । संशयं विधाय निर्णेतृत्वेन कर्णादीनाश्रयत इत्यर्थः ॥

( तत्त्वदी० )—**निर्णेत्राख्याया**मिति ॥ निर्णेता विवादस्य निराकरणकर्ता लोके प्रसिद्धः ॥ **कृष्णाय तिष्ठत** इति ॥ स्वस्थित्या नेत्रादिविकारद्वारा स्वाभिप्रायविशेषं ज्ञापयतीत्यर्थः ॥ **संशय्य कर्णादिष्विति** ॥ संशयं निर्णेतुं कर्णादिषु तिष्ठतीत्यर्थः । अन्ये तु संशयस्य कर्णादय एव निर्णेतार इत्येवार्थ इति वदन्ति ॥

( उदोऽनूर्ध्वकर्मणीहायाम् ) मुक्तावुत्तिष्ठते । उदः स्थास्तम्भोः सलोपः । उत्थासीष्ट, उत्थासीयास्ताम् । उदस्थास्यत । उदस्थित । अनूर्ध्वकर्मणि किम् । पीठादुत्तिष्ठति । ईहायां किम् । ग्रामाच्छतमुत्तिष्ठति ॥

( सुबोधिनी )—उदोऽनूर्ध्वकर्मणीहायाम् ॥ इच्छापूर्विका चेष्टा ईहा तस्यामेव । नेह । ग्रामाच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः ॥

( तत्त्वदी० )—**उद** इति ॥ कर्म क्रिया । ईहा परिस्पन्दः । **मुक्तावुत्तिष्ठत** इति मुक्त्यर्थे घटत इत्यर्थः ॥ ईहायां किम् । ग्रामाच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः । उत्पत्तिः क्रिया न तु परिस्पन्दात्मिकेत्यादभावः ॥

( उपान्मन्त्रकरणदेवपूजासङ्गतिकरणमित्रकरणपथिषु ) आग्नेय्याऽऽग्नीध्रमुपतिष्ठते ॥ मन्त्रकरणे किम् । भर्तारमुपतिष्ठति यौवनेन । आदित्यमुपतिष्ठते । गङ्गा यमुनामुपतिष्ठते । रथिकानुपतिष्ठते । स्रुघ्नमुपतिष्ठते पन्थाः ॥

( सुबोधिनी )—उपान्मन्त्रकरणदेवपूजासङ्गतिकरणमित्रकरणपथिषु ॥ एष्वर्थेषूपात्तिष्ठतेरात्स्यात् ॥ मन्त्रः करणं यत्र तन्मन्त्रकरणं स्तुतिः । आग्नेय्याग्नीध्रमुपतिष्ठते अग्निदेवताकया ऋचाऽऽग्नीध्रमग्निविशेषं स्तोतुं तत्समीपे तिष्ठतीत्यर्थः ।

अग्निमिन्धे इति अग्नीत् क्विवन्तः । अग्नीधः स्थानमाग्नीध्रम् । तत्स्थोऽप्याग्नीध्रः । निपातनात्तद्धितो रण्प्रत्ययः ॥ मन्त्रकरणे किम् । भर्तारमुपतिष्ठति यौवनेन । आदित्यमुपतिष्ठते । आदित्यं स्तोतुं तदभिमुखतया तिष्ठतीत्यर्थः । गङ्गा यमुनामुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते । मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नो देशस्तमुपतिष्ठते प्राप्नोतीत्यर्थः ॥

( तत्त्वदी० )–उपान्म ॥ मन्त्रम् करणं कारकम् । देवानां पूजा ॥ संगतिः संश्लेषः । मित्रस्य करणम् । पन्था मार्गः । स च कर्तृत्वेन संबध्यते ॥ आदित्यमुपतिष्ठत इति ॥ पूजयतीत्यर्थः ॥ यमुनामिति ॥ उपश्लिष्यतीत्यर्थः ॥ रथिकानिति ॥ मित्रीकरोतीत्यर्थः ॥ पन्था इति ॥ प्राप्नोतीत्यर्थः ॥

( वा लिप्सायाम् ) भिक्षुः प्रभुमुपतिष्ठते–उपतिष्ठति वा ॥

( सुबोधिनी )–वा लिप्सायाम् ॥ प्रभुमुपतिष्ठते–उपतिष्ठति वा । लिप्सयोपगच्छतीत्यर्थः ॥

( तत्त्वदी० )–वा लिप्सायामिति ॥ लब्धुमिच्छा लिप्सा तस्यां गम्यमानायामित्यर्थः ॥

( अकर्मकाच्च ) ज्ञानमुपतिष्ठते । उत्पद्यत इत्यर्थः ॥

( सुबोधिनी )–अकर्मकाच्च ॥ उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् ॥ भोजनकाले उपतिष्ठते । सन्निहितो भवतीत्यर्थः ।

( तत्त्वदी० )–अकर्मकाच्चेति ॥ कर्म कारकं न तु क्रिया॥ ज्ञानमुपतिष्ठत इति ॥ सन्निधत्त इत्यर्थः ॥

( उद्विभ्यां तपोऽकर्मकात्स्वाङ्गकर्मकाच्च ) उत्तपते वितपते पाणिं शिरो वा ॥ स्वाङ्गकर्मकात्किम् । सुवर्णमुत्तपति ॥

( सुबोधिनी )–उद्विभ्यां तपोऽकर्मकात्स्वाङ्गकर्मकाच्च ॥ स्वमङ्गं स्वाङ्गं न त्वद्रवमिति परिभाषितम् । उत्तपते । वितपते । दीप्यते इत्यर्थः । नेह सुवर्णमुत्तपति । संतापयति विलापयति वेत्यर्थः ॥ चैत्रो मैत्रस्य पाणिमुत्तपति । संतापयतीत्यर्थः ॥

( तत्त्वदी० )–उत्तपत इति ॥ दीप्यत इत्यर्थः ॥

( आङो यमहनिभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्यां च )आयच्छते आहते पाणिं शिरो वा । आघ्नाते । आहसे । अन्यत्र । शत्रुमायच्छति आहन्ति वा ॥

( सुबोधिनी )–आङो यमहनिभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्यां च ॥ यमहनिभ्यामात् ॥ नेह परस्य शिर आहन्ति । कथं तर्हि 'आजघ्ने[1] विषमविलो-

१ मूलतत्त्वदीपिकयोः 'भोजनकाल उपतिष्ठते' इति पाठ इति केचित् ।

चनस्य वक्षः' इति भारविः ॥ 'आहध्वं मा रघूत्तमम्' इति भट्टिश्च । प्रमाद एवायमिति । समीपमेत्येत्यध्याहारो वा बोध्यः । विषमविलोचनस्य समीपमेत्य वक्ष आजघ्ने । स्वकीयमेव वक्षो मल्ल इव संतोषातिशयादास्फोटनं चक्रे इत्यर्थः ॥

( तत्त्वदी० )—आङ इति ॥ अकर्मकत्वाङ्गकर्मकयोरनुवृत्तिरत्रापि ॥ आयच्छत इति ॥ दीर्घो भवतीत्यर्थः ॥ आहत इति ॥ नलोपः । आघ्नाते । 'आजघ्ने विषमलोचनस्य वक्षः' इत्यादौ तु प्राप्येत्यध्याहारो बोध्यः ॥

**( हनः सिः कित् ) वधो वाति ॥ आहत—आवधिष्ट, आवधिषाताम्—आहसाताम् ॥**

( सुबोधिनी )—हनः सिः कित् ॥ हन्तेः परः सिः प्रत्ययो वा कित् स्यात् ॥ हनो लुङ्लिङोरिति वधादेशः । आवधिष्ट, आवधिषाताम् । पक्षे कित्त्वात् लोपस्त्वनुदात्ततनामिति नलोपः । लोपो ह्रस्वादिति सिलोपः । आहत, आहसाताम्, आहसत ॥

**( यमः सूचने सिः कित् ) उदायत, उदायसाताम्, उदायसत ॥**

( सुबोधिनी )—यमः सूचने सिः कित् ॥ सूचनं परदोषाविष्करणम् । कित्त्वाल्लोपस्त्वनुदात्ततनामिति मलोपः । लोपो ह्रस्वादिति सिलोपः । उदायत । सूचने किम् । उदायंस्त पादम् । आकृष्टवानित्यर्थः ॥

( तत्त्वदी० )—सूचन इति ॥ परेणाच्छाद्यमानस्याविष्करण इत्यर्थः ॥ उदायत इति ॥ परावद्यं प्रकाशयति स्मेत्यर्थः ॥

**( समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिदृशिभ्योऽकर्मकेभ्यः ) सङ्गच्छते ॥**

( सुबोधिनी )—समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिदृशिभ्योऽकर्मकेभ्यः ॥ समुपसर्गादकर्मकेभ्यो गमृच्छर्तिश्रुदृशिभ्यः प्रच्छिस्वरतिविदिभ्यः सकर्मकेभ्यश्चात्स्यात् ॥ सङ्गच्छते । संगतं भवतीत्यर्थः ॥

( तत्त्वदी० )—समो गम्यृच्छीति ॥ ऋच्छ गत्यादौ आदेशस्तु न अर्तेः पृथग्ग्रहणात् । विदीति वेत्तेरेव ग्रहणं गम्यादिपरस्मैपदिसाहचर्यात् ॥ संगच्छत इति ॥ युज्यत इत्यर्थः । अकर्मकादित्येव । 'रक्षांसीति पुरापि संश्रृणुमहे' इति मुरारिप्रयोगस्तु इति कथयद्भ्य इत्यध्याहारेण समाधेयः । अर्थान्तरे वृत्तेरकर्मकत्वं सकर्मकाणामपि ॥

**( गमेः सिस्यौ कितौ वा ) सङ्गसीष्ट—संगंसीष्ट । समगत—समगंस्त ॥ समृच्छिष्यते । समानृच्छे । समार्च्छिष्ट ॥ संस्वरते । संसस्वरे । संस्वरिषीष्ट—संस्वृषीष्ट । समस्वरिष्ट—समस्वृत ॥ संपृच्छते । समप्रष्ट, समप्रक्षाताम् ॥ संशृणुते । संश्रोता । समश्रोष्ट ॥ संवित्ते, संविदाते ॥**

( सुबोधिनी )—गमेः सिस्यौ कितौ वा ॥ गमेरनिटौ सिस्यौ वा कितौ स्तः ॥ आशिषि लिङि कित्वाल्लोपस्त्वनुदात्ततनामिति मलोपः। संगसीष्ट—पक्षे संगंसीष्ट। लुङि कित्त्वान्मलोपे लोपो ह्रस्वादिति सिलोपः। समगत, समगसाताम्, समगसत। कित्त्वाभावे समगंस्त, समगंसाताम्, समगंसत। तौदादिकस्य ऋच्छेरत्र ग्रहणं न तु ऋच्छादेशस्येति ध्वननार्थं लटः प्रयोगः। समृच्छिष्यते ॥ ग्रहामिति संप्रसारणम्। संपृच्छते ॥ स्वृ शब्दोपतापयोः। संस्वरते ॥ अर्तीति भौवादिकजौहोत्यादिकयोर्ग्रहणम्। तत्र भ्वादेः समृच्छते। लिटि समाराते, समारिरे। लिङि उरिति न गुणः। समृषीष्ट। समर्ता। ह्नृत इतीट्। समरिष्यते। समारिष्यत। लुङि मेट इत्यटोऽभावः। उरिति न गुणः। लोपो ह्रस्वादिति सिलोपे। मासमृत, मासमृषाताम्, मासमृषत। माङभावे समार्त्त, समार्षाताम्, समार्षत। इयर्तेस्तु ऋप्रोरिः पूर्वस्येति पूर्वस्येत्वे असवर्णे स्वरे पूर्वस्येतीय्। समीयृते। लुङि सर्तिशास्त्यर्त्तिभ्य इति ङः। ऋवर्णदृशोरिति गुणः। मेट इत्यडभावः। मासमरत, मासमरेताम्, मासमरन्त। माङभावे समारत, समारेताम्, समारन्त ॥ श्रुवः श्रृआदेश इति श्रृआदेशोनुप्रत्ययश्च। संश्रृणुते। परस्मैपदसाहचर्याद्विद ज्ञाने इत्यस्यैव ग्रहणं न तु स्वरितेतो विद्लृ लाभे इत्यस्य। सत्ताविचारणार्थस्य विदेस्त्वनुदात्तत्वादात्मनेपदं सिद्धमेव ॥

( वेत्तेरन्तो वा रुडाति ) संविद्रते—संविदते ॥ संपश्यते। समदृष्ट ॥ समियृते, समियृते। समारे। ऋप्रो रिः पूर्वस्य। समियृीत, समियृीयाताम्। स्वरादेः। अ इ ए। ए ऐ ऐ। समैयृत, समैयृाताम्। अकर्मकात्किम्। ग्रामं संगच्छति ॥

( सुबोधिनी )—वेत्तेरन्तो वा रुट् ॥ विदेः परस्यान्प्रत्ययस्य रुट् वा स्यात् आति ॥ दृशादेरिति पश्यः। संपश्यते। कथं तर्हि सकर्मकस्य 'रक्षांसीति पुरापि संश्रृणुमहे' इति मुरारिप्रयोगः। ग्रामादिकोऽयम्, इति कथयद्भ्य इत्यध्याहारो वा। अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेच्छृणु। "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" इत्युक्तत्वादकर्मकत्वं बोध्यम् ॥

( उपसर्गादस्यत्यूहोर्वा ) निरस्यते। निरस्यसि। निरास्यत ॥ समूहति। समूहते। समुह्यात् ॥

( सुबोधिनी )—उपसर्गादस्यत्यूहोर्वा ॥ अकर्मकादिति निवृत्तम्। असु क्षेपणे। ऊह वितर्के। बन्धं निरस्यति। दिवादित्वाद्यः ॥ उपसर्गादूहतेर्ह्रस्वो यादौ क्ङिति। ब्रह्म समुह्यात्। अग्निं समुह्यति ॥

( निसमुपविभ्यो ह्वः ) निह्वयते ॥

( सुबोधिनी )—निसमुपविभ्यो ह्वः ॥ एभ्यः परस्मात् ह्वेञ आत् स्यात् ॥

**( स्पर्द्धायामाङः )** कृष्णश्चाणूरमाह्वयते ॥

( सुबोधिनी )—स्पर्द्धायामाङः ॥ आङः परात् ह्वेञः आत्स्यात् ॥ पराभिभवेच्छा स्पर्द्धातस्यामर्थे ॥

( तत्त्वदी० )-स्पर्धायामिति ॥ पराभिभवेच्छा स्पर्धा ॥ कृष्ण इति ॥ स्पर्धया तस्याह्वानं करोतीत्यर्थः ॥

**( अप्रतिबन्धोत्साहस्फीततासु क्रमः )** ऋचि क्रमते बुद्धिः । अध्ययनाय क्रमते । क्रमन्तेऽस्मिञ्छास्त्राणि ॥

( सुबोधिनी )—अप्रतिबन्धोत्साहस्फीततासु क्रमः ॥ ऋचि क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः ॥ अध्ययनाय क्रमते । उत्सहत इत्यर्थः ॥ क्रमन्तेऽस्मिञ्छास्त्राणि । स्फीतानि प्रवृद्धानि भवन्तीत्यर्थः ॥

( तत्त्वदी० )—ऋचि क्रमत इति ॥ न प्रतिहन्यत इत्यर्थः॥ अध्ययनाय क्रमत इति ॥ उत्सहत इत्यर्थः ॥ क्रमन्त इति ॥ स्फीतानि भवन्तीत्यर्थः ॥

**( उपपराभ्याम् )** उपक्रमते । पराक्रमते ॥

( सुबोधिनी )—उपपराभ्याम् ॥ अप्रतिबन्धादिषु वाच्येष्वाभ्यां क्रम आत्स्यात् ॥ नेह संक्रामति ॥

**( आङो ज्योतिरुद्गमने )** आक्रमते-आक्रम्यते सूर्यः ॥

( सुबोधिनी )—आङो ज्योतिरुद्गमने ॥ आक्रमते सूर्यः । उदयत इत्यर्थः । नेह । आक्रामति धूमो हर्म्यतलात् ॥

( तत्त्वदी० )—ज्योतिरुद्गमन इति ॥ ज्योतिर्नक्षत्रादिः ॥ आक्रमते सूर्य इति ॥ उदयत इत्यर्थः । 'नभः समाक्रामति चन्द्रमाः क्रमात्' इत्यत्र तु प्राप्नोतीत्येवार्थो न तूद्गमनम् ॥

**( वेः पादविहरणे )** साधु विक्रमते वाजी ॥

( सुबोधिनी )—वेः पादविहरणे ॥ क्रमेः पादविक्षेप एवार्थस्तथापि धातूनामनेकार्थत्वादेवमुक्तम् ॥ पादविहरणे किम् । विक्रामति संधिः द्विधा भवति स्फुटतीत्यर्थः ॥

( तत्त्वदी० )—वेः ॥ विहरणं विक्षेपणम् । यद्यपि धातुरयमस्मिन्नेवार्थे प्रसिद्धस्तथापि धातूनामनेकार्थत्वाद्विशेषणम् । नेह । विक्रामति संधिः । द्विधा भवतीत्यर्थः ॥

**( प्रोपाभ्यां प्रारम्भार्थाभ्याम् )** प्रक्रमते । उपक्रमते । **( स्नुक्रमोरा̆ति नेट् )** प्रक्रंसीष्ट ॥

( सुबोधिनी )—प्रोपाभ्यां प्रारम्भार्थाभ्याम् ॥ प्रक्रमते । आरम्भं करोतीत्यर्थः । प्रारम्भार्थाभ्यां किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामत्यागच्छतीत्यर्थः । उपपराभ्यामिति नात्रात्मनेपदं शङ्क्यम् । अप्रतिबन्धादिष्वेवेत्युक्तत्वात् ॥

( अनुपसर्गाद्वा ) क्रमते-क्रम्यते । क्राम्यति-क्रामति ॥

( सुबोधिनी )-अनुपसर्गाद्वा ॥ अप्राप्तविभाषेयम् । अप्रतिबन्धादिषु तु नित्यमेव ॥

( अपह्नवे ज्ञः ) शतमपजानीते ॥

( सुबोधिनी )-अपह्नवे ज्ञः ॥ अपनयनेऽर्थे ज्ञ आत् ॥

( तत्त्वदी० )-शतमपजानीत इति ॥ अपलपतीत्यर्थः ॥

( अकर्म्मकाच्च ) सर्पिषो जानीते ॥

( सुबोधिनी )-अकर्मकाच्च ॥ सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः ॥

( तत्त्वदी० )-सर्पिष इति ॥ सर्पिषा उपायेन प्रवर्तत इत्यर्थः ॥

( अनुपसर्गाज्ज्ञः ) गां जानीते ॥

( सुबोधिनी )-अनुपसर्गाज्ज्ञः ॥ अकर्मकाच्चेत्येव सिद्धे सकर्मकार्थमारम्भः ॥ अनुपसर्गात् किम् । स्वर्गं लोकं न प्रतिजानाति । कथं तर्हि ' इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य' इति भट्टिः ? कर्मणि लिट् । नृपेणेति विपरिणामः ॥

( सम्प्रतिभ्यामनाध्याने ) शतं संजानीते । शतं प्रतिजानीते । अनाध्याने किम् । मातरं संजानाति ॥

( सुबोधिनी )-सम्प्रतिभ्यामनाध्याने ॥ उत्कण्ठापूर्वकं स्मरणमाध्यानम् ॥ शतं संजानीते । अवेक्षत इत्यर्थः ॥ शतं प्रतिजानीते । अङ्गीकरोतीत्यर्थः ॥

( तत्त्वदी० )-शतं संजानीते॥ अवेक्षत इत्यर्थः ॥शतं प्रतिजानीते॥अङ्गीकरोतीत्यर्थः॥

( अनुपसर्गाद्वा ) गां जानाति, जानीते वा ॥

( सुबोधिनी )-अनुपसर्गाद्वा ॥ अनुपसर्गात्परस्य ज्ञो वात्स्यात् ॥

( वेः शब्दकर्मणः कृञः ) शब्दं विकुरुते ॥

( सुबोधिनी )-वेः शब्दकर्मणः कृञः ॥ शब्दं विकुरुते । उच्चारयतीत्यर्थः ॥ शब्दकर्मणः किम् । चित्तं विकरोति कामः ॥

( अकर्मकाच्च ) विकुर्वते सैन्धवाः ॥

( सुबोधिनी )-अकर्मकाच्च ॥ वेरकर्मकात्कृञ आत्स्यात् ॥ विकुर्वते सैन्धवाः । वाजिनो विकारं लभन्त इत्यर्थः ॥

( भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ) शास्त्रे वदते । भृत्यानुपवदते । शास्त्रे वदते । क्षेत्रे वदते । गेहे विवदन्ते । उपवदन्ते ब्राह्मणाः परदारान् ॥

( सुबोधिनी )-भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ वदतेरात्स्यादेष्वर्थेषु ॥ शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः ॥ उपसंभाषोपसान्त्वनम् ।

भृत्यानुपवदते। सान्त्वयतीत्यर्थः ॥ शास्त्रे वदते । ज्ञानं वदतीत्यर्थः ॥ क्षेत्रे वदते । क्षेत्रप्रयत्नं वदतीत्यर्थः ॥ गेहे विवदन्ते । विवादं कुर्वन्तीत्यर्थः ॥ उपवदते । प्रार्थयते । उपमन्त्रणमुपच्छन्दनम् ॥ एषु किम् । किंचिद्वदति ॥

( तत्त्वदी० )–भासनेत्यादि ॥ भासनं दीप्तिः । उपसंभाषा सान्त्वनम् ॥ शास्त्रे वदत इति ॥ भासमानो ब्रवीतीत्यर्थः ॥ भृत्यानिति ॥ सान्त्वयतीत्यर्थः ॥ शास्त्रे वदत इति ॥ वदितुं सम्यगवबुध्यत इत्यर्थः ॥ क्षेत्रे वदत इति ॥ क्षेत्रविषयकमुत्साहमाविष्करोतीत्यर्थः॥ गेहे विवदन्त इति ॥ विविधं भाषन्त इत्यर्थः ॥ परदारानुपवदत इति ॥ भद्रे भजस्व मामिदं ते दास्यामीत्येवं रहसि प्रचोद्य स्वाभिलषिते प्रवर्तयतीत्यर्थः ॥

## ( मनुष्यादीनां संभूयोच्चारणे ) संप्रवदन्ते ब्राह्मणाः ॥

( सुबोधिनी )–मनुष्यादीनां संभूयोच्चारणे ॥ वदतेरात्स्यान्मनुष्यादीनां सहोच्चारणेऽर्थे ॥

( तत्त्वदी० )–संभूयोच्चारणे ॥ सहोच्चारण इत्यर्थः ॥

## ( व्यक्तवाग्विषयादनुपूर्वादकर्मकात् ) अनुवदते कठः कलापस्य ॥

( सुबोधिनी )–व्यक्तवाग्विषयादनुपूर्वादकर्मकात् ॥ एतादृशाद्वदतेरात्स्यात्॥ व्यक्तः वाग्विषयो यस्य स व्यक्तवाग्विषयस्तस्मात् । अनुवदते कठः कलापस्य । वेदशाखावाचकावपि कठकलापशब्दावत्र तदध्येतरि वर्तेते । अनु सादृश्यम् । कलापस्येति संबन्धे षष्ठी ॥ अकर्मकात् किम् । उक्तमनुवदति ॥ व्यक्तवागिति किम् । अनुवदति वीणा ॥

( तत्त्वदी० )–व्यक्तेति ॥ व्यक्ता परिस्फुटवर्णा अर्थावगतिहेतुश्च वाग् येषां ते व्यक्तवाचः । ते च यद्यपि शुका अपि तथापि मनुष्या एवात्र बोध्याः प्रसिद्धतरत्वात् । अत एव ह्येतदुपात्तम् । अन्यथा वदेः स्वभावादिव तदर्थकत्वात्कृतमनेन ॥ अनुवदत इत्यादि ॥ शाखावचनावपि कठकलापशब्दौ तदध्येतारि वर्तेते । कलापेन सदृशं कठोऽधीयानो वदतीत्यर्थः ॥ अकर्मकात्किम् । उक्तमनुवदति ॥ व्यक्तवाचा किम् । अनुवदति वीणा ॥

## ( वा विरुद्धोक्तौ ) विप्रवदन्ति विप्रवदन्ते वा वैद्याः ॥

( सुबोधिनी )–वा विरुद्धोक्तौ ॥ विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणेऽर्थे वदेर्वात् ॥ अप्राप्तविभाषेयम् ॥

( तत्त्वदी० )–विप्रवदन्तीत्यादि ॥ युगपत्परस्परं विरुद्धं वदन्तीत्यर्थः ॥

## ( अवाद्गिरतेः ) अवगिरते ॥

( सुबोधिनी )–अवाद्गिरतेः ॥ गिरतेरिति तौदादिकस्यैव ग्रहणम् । गृणातेरवपूर्वस्य प्रयोगो नास्तीति भाष्योक्तेः ॥

( तत्त्वदी० )—अवादिति ॥ गिरतोरिति निर्देशात्तौदादिकस्यैव ग्रहणम् । गृणातेस्त्वव-पूर्वस्य प्रयोगो नास्तीति भाष्योक्तेः क्रैयादिकस्याग्रहः । अतो गिर इत्युक्तावप्यदोषः ॥

**( समः प्रतिज्ञाने ) शब्दं नित्यं संगिरते ॥**

( सुबोधिनी )—समः प्रतिज्ञाने ॥ समो गिरतेरात्स्यात्प्रतिज्ञानेऽर्थे ॥ संगिरते । प्रतिजानीत इत्यर्थः ॥ प्रतिज्ञाने किम् । संगिरति ग्रासम् ॥

( तत्त्वदी० )—संगिरत इति ॥ प्रतिजानीत इत्यर्थः ॥

**( उदश्चरः सकर्मकात् ) धर्ममुच्चरते ॥**

( सुबोधिनी )—उदश्चरः सकर्मकात् ॥ धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः ॥ सकर्मकात्किम् । बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ॥

( तत्त्वदी० )—धर्ममुच्चरत इति ॥ उल्लङ्घ्य गच्छतीत्यर्थः ॥

**( समस्तृतीयायुक्तात् ) रथेन संचरते ॥**

( सुबोधिनी )—समस्तृतीयायुक्तात् ॥ तृतीयान्तयुक्तात्समश्चरेरात्स्यात् ॥ रथेन संचरते । व्यवधानेऽपि । रथेन समुच्चरते ॥

**( दाणश्च सा चेच्चतुर्थ्यर्थे ) दास्या संयच्छते कामुकः ॥**

( सुबोधिनी )—दाणश्च सा चेच्चतुर्थ्यर्थे ॥ तृतीयान्तयुक्तात्समो यच्छतरा-त्स्यात् सा तृतीया चेच्चतुर्थ्यर्थे भवति ॥ दास्या संयच्छते । दास्यै धनं ददातीत्यर्थः । दास्येति संप्रदाने तृतीया ॥

( तत्त्वदी० )—दास्येत्यादि ॥ कामितया दास्यै ददातीत्यर्थः ॥

**( उपाद्यमः स्वीकारे ) भार्यामुपयच्छते ॥**

( सुबोधिनी )—उपाद्यमः स्वीकारे॥उपाद्यमेरात्स्यात् स्वीकारो विवाहस्तस्मिन्नर्थे॥

( तत्त्वदी० )—स्वीकार इति ॥ स्वीकारो विवाहः । अङ्गीकारमात्रमिति तु भाष्यम् ॥

**( यमः सिः किद्वा विवाहे ) रामः सीतामुपायत—उपायंस्त वा ॥**

( सुबोधिनी )—यमः सिः किद्वा विवाहे ॥ यमेः परः सिप्रत्ययो वा कित्स्या-द्विवाहेऽर्थे ॥ लोपस्त्वनुदात्ततनामिति मलोपः । उदायत । पक्षे उदायंस्त ॥

**( ज्ञाश्रुस्मृदृशां सान्तानामात् ) जिज्ञासते । शुश्रूषते । सुस्मू-र्षते । दिदृक्षते ॥**

( सुबोधिनी )—ज्ञाश्रुस्मृदृशां सान्तानामात् ॥ सप्रत्ययान्तेभ्य एभ्य आत्स्यात् ॥ अपह्नवे ज्ञ इत्यादिना ज्ञा धातोः समो गमृच्छीत्यनेन श्रुदृशिभ्यां चात्म-नेपदे कृते ततः सप्रत्यये सान्तात्पूर्ववदादित्यनेन तदात्मनेपदं सिद्धमेव पुनर्ग्रहणं विषया-न्तरेऽप्यात्मनेपदार्थम् ॥

**( अनोर्ज्ञानातेर्न )** अनुजिज्ञासति पुत्रम् ॥

( सुबोधिनी )—अनोर्ज्ञानातेर्न ॥ अनोः सान्ताज्जानातेर्नात्स्यात् ॥

**( प्रत्याङ्भ्यां श्रुवः )** प्रतिशुश्रूषति । आशुश्रूषति ॥

( सुबोधिनी )—प्रत्याङ्भ्यां श्रुवः ॥ आभ्यां सान्ताच्छृणोतेर्नात् ॥

**( स्वराद्यन्तोपसर्गाद्युजेरयज्ञे )** प्रयुङ्क्ते। उद्युङ्क्ते ॥ अयज्ञे किम्। पात्राणि प्रयुनक्ति ॥

( सुबोधिनी )—स्वराद्यन्तोपसर्गाद्युजेरयज्ञे ॥ स्वरादेः स्वरान्ताच्चोपसर्गाद्युजेरात् न तु यज्ञपात्रेऽर्थे ॥

( तत्त्वदी० )—स्वराद्यन्तोपसर्गादिति ॥ स्वर आदिरन्तोऽवयवो यस्य स तथा । तेन समादयो व्यावृत्ताः ॥

**( समः क्ष्णुवः )** संक्ष्णुते शस्त्रम् ॥

( सुबोधिनी )—समः क्ष्णुवः ॥ समः क्ष्णोतेरात्स्यात् ॥

( तत्त्वदी० )—संक्ष्णुते शस्त्रमिति ॥ समो गम्यृच्छीत्यादौ न पठितः । अस्यात्र सकर्मकस्य ग्रहणात् ॥

**( भुजोऽपालने )** ओदनं भुङ्क्ते। पालने तु महीं भुनक्ति ॥

( सुबोधिनी )—भुजो पालने ॥ अभ्यवहारे इति वक्तव्ये अपालन इति पर्युदासग्रहणं प्रयोजनद्वयार्थम् । संयोगवद्विप्रयोगस्यापि विशेषावधारणहेतुत्वाद्रौधादिकस्यैव भुजेर्ग्रहणमित्येकम् । अभ्यवहारादर्थान्तरे उपभोगादावप्यात्मनेपदं भवतीति द्वितीयेनिषेधस्य निषेधः पर्युदासः ॥ भुजेरात्र स्यात्पालने अपालनत्वादुपभोगार्थे तु भवति 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इतीह भुजेरुपभोगोऽर्थः । उपभोग इत्युपलक्षणम् । तेन 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' इत्यत्रात्मसात्करणमर्थः । पृथिवीं बुभुजे । स्वाधीनां चकारेत्यर्थः । 'भुजो कौटिल्ये' इति तुदादेस्तु पमेव । पाणिं विभुजति ॥ अपालने किम्। महीं भुनक्ति ॥

( तत्त्वदी० )—भुजोऽपालन इति ॥ रुधादेरेव ग्रहणम् । तौदादिकस्य अनवन इति प्रतिषेधात् । तेन विभुजति पाणिमित्यादावदोषः । 'बुभुजे पृथिवीपालः' इत्यादौ तु भुजेरुपभोगोऽर्थः । अन्यथा भुजो भक्षण इत्येवाकारिष्यत् ॥

**( गृधिवञ्चिभ्यां ण्यन्ताभ्यां प्रतारणे )** माणवकं वञ्चयते । गर्द्धयते ॥

( सुबोधिनी )—गृधिवञ्चिभ्यां ण्यन्ताभ्यां प्रतारणे ॥ परगामिफलार्थमिदमात्मनेपदम् ॥ प्रतारणे किम्। श्वानं गर्द्धयति। अस्याभिकाङ्क्षामुत्पादयति । अहिं वञ्चयति । वर्जयतीत्यर्थः ॥

( अपाद्वदः ) न्यायमपवदते ॥ ( समुदाङ्भ्यो यमोऽग्रन्थे ) व्रीहीन् संयच्छते । धान्यानि स्वीकरोतीत्यर्थः ॥ भारमुद्यच्छते । भारं वहतीत्यर्थः ॥ वस्त्रमायच्छते । वस्त्रमादधातीत्यर्थः ॥ अग्रन्थे किम् । वेदमुद्यच्छति । अधिगन्तुमुद्यमं करोतीत्यर्थः ॥

( सुबोधिनी )—अपाद्वदः ॥ अपाद्वदतेरात्स्यात् । अनुपसर्गाज्ज्ञः । पूर्वं व्याख्यातम् ॥

( कर्मव्यतिहारे धातोरात् ) व्यतिभवते । व्यतिराते ॥

( सुबोधिनी )—कर्मव्यतिहारे धातोरात् ॥ क्रियाविनिमयेऽर्थे धातोः कर्तर्यात्मनेपदं स्यात् ॥ व्यतिभवते । अन्यस्य योग्यं भवनमन्यतरः करोतीत्यर्थः ॥ रा दाने । व्यतिराते ॥

( तत्त्वदी० )—कर्मव्यतिहारे धातोरिति ॥ कर्म क्रिया तस्य व्यतिहारो विनिमयो व्यत्यासस्तस्मिन्नर्थे वर्तमानाद्धातोरादित्यर्थः ॥ व्यतिभवत इति ॥ अन्यस्य योग्यं भवनमन्यतरः करोतीत्यर्थः । परस्परकरणमपि कर्मव्यतिहारः । संप्रहरन्ते राजान इति यथा । अत्र च यदानेकस्य कर्तृत्वे सहविवक्षा तदा द्विवचनं च भवति । सहविवक्षाभावे त्वेकवचनमपि । तेन कर्मव्यातिहारस्यानेककर्तृकत्वादेकवचनं न संभवतीति न शङ्कनीयम् ॥

( न गतिहिंसार्थपठजल्पहसात् ) व्यतिगच्छन्ति । व्यतिपठन्ति । व्यतिघ्नन्ति । व्यतिजल्पन्ति । व्यतिहसन्ति ॥

( इतरेतरान्योऽन्यपरस्परोपपदाच्च ) इतरेतरस्याऽन्योऽन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥ इत्यात्मनेपदम् ॥

( सुबोधिनी )—न गतिहिंसार्थपठजल्पहसात् ॥ इतरेतरान्योन्यपरस्परोपपदाच्च ॥ गतिहिंसार्थेभ्यः पठजल्पहसेभ्यः इतरेतरान्योन्यपरस्परोपपदेभ्यश्च धातुभ्यः आन्न स्यात् ॥ इति सुबोधिन्यामात्मनेपदम् ॥

( अनुपराभ्यां कृञः पम् ) अनुकरोति । पराकरोति ॥

( सुबोधिनी )—अनुपराभ्यां कृञः पम् ॥ आत्मगामिफले परस्मैपदार्थमिदम् ॥

( अभिप्रत्यतिभ्यः क्षिपः पम् ) अभिक्षिपन्ति । प्रतिक्षिपन्ति । अतिक्षिपन्ति ॥

( सुबोधिनी )—अभिप्रत्यतिभ्यः क्षिपः ॥ क्षिप प्रेरणे । स्वरितेत् । तस्यात्मगामिफलेऽपि परस्मैपदार्थमिदम् ॥

( प्राद्वहः ) प्रवहन्ति ॥

( सुबोधिनी )—प्राद्वहः ॥ प्राद्वहतेः पं स्यात् ॥

( परेर्मृषश्च ) परिमृष्यति। परिवहति ॥ इति परस्मैपदम् ॥ इति पदव्यवस्थाप्रक्रिया ॥

( सुबोधिनी )—परेर्मृषश्च ॥ परेर्मृषेः पं स्यात् ॥ स्वरितेत्त्वात्परेर्मृषेः पदद्वये प्राप्ते आरम्भः। मृष आमर्षणे दिवादिः। परिमृष्यति। मृष तितिक्षायां चुरादिः ॥ ञेरभावे परिमर्षति। चकाराद्वहेरपि पं भवति। परिवहति ॥ व्याङ्पर्युपेभ्यो रमः ॥ भ्वादौ व्याख्यातमिदम् ॥ अकर्मकाद्वा। अकर्मकाद्रमतेर्वा पं स्यात् ॥उपादित्येव। उपरमति। उपरमते वा। निवर्तत इत्यर्थः ॥ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो ञ्यन्तेभ्यः पम् ॥ इङ्क्रीजीनामित्यात्वे। अध्यापयति। पाठयतीत्यर्थः ॥ द्रावयति। विलापयतीत्यर्थः। स्रावयति। स्पन्दयतीत्यर्थः ॥ इति सुबोधिन्यां पदव्यवस्थाप्रक्रिया ॥

( तत्त्वदी० ) कृतायामिह टीकायां लोकेशकरशर्मणा। पदव्यवस्थेयमगात्समाप्तिं शुभलक्षणा ॥

इति तत्त्वदीपिकायां पदव्यवस्थाप्रक्रिया ॥ ७ ॥

# अथ भावकर्मप्रक्रिया।

यक् चतुर्षु ॥ धातोर्भावे कर्मणि च यक् प्रत्ययस्तिबादिषु चतुर्षु परतः ॥

( सुबोधिनी )—अथ भावकर्मणोर्लडादयः॥ यक् चतुर्षु ॥ भुवि कर्मणीति चाद्भुवीत्यतोऽनुवृत्तम्। अव्यवहितमपि कर्तरीति नानुवर्तते। उत्तरसूत्रे कर्तृग्रहणात्। आख्यातप्रकरणादादितश्चतुर्विधेष्वाख्यातेषु चतुर्शब्दोऽस्ति। तेन भावार्थकेषु कर्मार्थकेषु च चतुर्षु परतो धातोर्यक् स्यात् ॥

आद्भुवि कर्मणि ॥ अकर्मकाद्भावे सकर्मकाच्च कर्मण्याद्भवति ॥ भावस्यैकत्वादेकवचनमेव। युष्मदस्मदोः सामानाधिकरण्याभावात्प्रथमः। नामाद्यविषयत्वेऽपि प्रथमातिक्रमे कारणाभावात्प्रथमः। भूयते। भूयेत। भूयताम्। अभूयत। बभूवे ॥

( सुबोधिनी )—आद्भुवि कर्मणि ॥ भवनं भूः। संपदादित्वाद्भावे क्विप्। तस्यां भुवि शुद्धे धात्वर्थे साध्यरूपे स्वार्थे इति फलितम्। घञर्थो भावस्तु सिद्धरूपः। उक्तं च "क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता। सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम्" ॥ भावो भावना उत्पादना क्रिया। सा च, धातुत्वेन सकलधातुवाच्या वर्तते। उक्तं च—'व्यापारो भावना सैवोत्पादना सैव च क्रिया' इति। उत्पत्त्यनुकूलो व्यापार इत्यर्थः। तत्र सिद्धरूपो भावो घञादिवाच्यः। तस्य तु सत्त्वरूपत्वमिष्टमेवेति। उक्तं च भाष्यकृता—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति। द्रव्यधर्मान् लिङ्गसंख्याकारकादीन्गृह्णातीत्यर्थः। लिङ्गसंख्याकारकान्वितं द्रव्यमित्युक्तेः।

तेन पाकं पाकेनेत्यादौ द्वितीयादयः प्रवर्तन्ते । साध्यरूपो भावस्त्वाख्यातवाच्यस्तस्यासत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि । भाष्ये तु आस्यन्ते शय्यन्ते इत्यत्र भावेऽपि बहुवचनं कृतम् । न च कर्मण्येवाख्यातप्रत्यययोऽस्त्विति शङ्क्यम् । धातुद्वयस्याप्यकर्मकत्वात् । आस्यन्त इत्यासिकाः । शय्यन्ते इति शायिका इत्यत्र धात्वर्थनिर्देशे वुण्प्रत्ययः । उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्त इत्यत्र ह्युष्ट्राणां यादृशान्यासनानि हतानां यादृशानि शयनानि तादृशानि देवदत्तादिकर्तृकाण्यासनादीनीत्यर्थः । फलाश्रयः कर्म । फलं च धातुनैवोक्तमित्याश्रयमात्रमाख्यातार्थः स्यात् । अनन्यलभ्यत्वात् । अकर्मकेभ्यो धातुभ्यो भावे आत् । सकर्मकेभ्यस्तु कर्मण्यात् स्यात । साध्यरूपस्वभावस्योत्सर्गत एव संख्यानपेक्षत्वेन स्वस्यैकत्वादेकवचनमेव भवति । तच्च प्रथमस्यैव न मध्यमोत्तमयोः । युष्मदस्मदोराख्यातवाच्यकारकवाचित्वाभावात् । यद्यपि नाम्नोऽप्याख्यातवाच्यकारकवाचित्वाभावस्तथापि प्रथमो भवति । तस्यानिष्पादने वचनाभावात् । तत्रैकवचनस्वीकारः प्रथमपुरुषमन्तरा कथं संभवेदित्यर्थः । भावे यथा । भूयत इत्यादि ॥

( तत्त्वदी० )–**आद्भुवि कर्मणि** ॥ भवनं भूः तस्यां भुवि । शुद्धे धात्वर्थे साध्यरूपभावे घञर्थस्तु सिद्धरूपो भाव इति भेदः । तत्र सिद्धरूपो भावो द्रव्यवत्प्रकाशते लिङ्गसंख्यादीन्गृह्णातीत्यर्थः । अतो द्विवचनादि । साध्यरूपस्य त्वसत्त्वरूपत्वान्न संख्याद्यन्वयः । उक्तं च–"क्रियायाः सिद्धतावस्था साध्यावस्थां च कीर्तिता । सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति वन्विधिम्" इति ॥ कर्म तु पारिभाषिकमेव । पुनर्भावग्रहणात् । फलाश्रयः कर्म । फलस्य च धातुवाच्यत्वादाश्रयमात्रमाख्यातार्थः । अथ सकर्मकादपि भावे स्यादिति चेन्न । द्विश्चेत्यतश्चेत्यनुवर्तते स चावधारणार्थः । सकर्मकात्कर्मण्येव न भावे । कर्तर्यपि न स्यादिति चेच्छृणु । मध्येऽपवादन्यायेन भावस्यैव बाधनात् ॥ **एकवचन**मिति ॥ एकवचनमुत्सर्गतः कारिष्यत इति वचनादिति भावः । तत्किं मध्यमोत्तमयोरपि न चेत्याशङ्कायामाह–**युष्मदस्मदो**रिति ॥

**( स्वरान्तानां हनग्रहदृशां च भावकर्मणोः सितासीस्यपामिड्वा स इण्वच्च ) भाविषीष्ट–भविषीष्ट । भाविता–भविता । भाविष्यते–भविष्यते । अभाविष्यत–अभविष्यत ॥**

( सुबोधिनी )–**स्वरान्तानां हनग्रहदृशां च भावकर्मणोः सितासीस्यपामिड्वा स इण्वच्च** ॥ स्वरान्तेभ्यो हनिग्रहिदृशिभ्यश्च परेषां भावे कर्मणि चार्थे स्थितानां सितासीस्यपां प्रत्ययानामिडागमो वा भवति स इट् इणीवेतीण्वत् । सप्तम्यन्ताद्वत् । कार्यातिदेशोऽयम् । इणि परे यद्वृद्ध्यादिकार्यं भवति तदिण्वति परेऽपीत्यर्थः । यथा भाविता, भाविष्यते इत्यादौ वृद्धिः । दायिता, दायिष्यते इत्यादौ युक् । घानिता, घानिष्यते इत्यादौ घत्वम् । प्रयोजकण्यन्ताच्छमः कर्मण्याख्याते कृते शामिता–

शमिता । शामिष्यते-शमिष्यते । इत्यादौ मितां ह्रस्वान्तानामित्यनेन मितामुपधाया वा दीर्घ इत्यादि ॥

**इण्तन्यकर्तरि ॥** धातोस्तनि परे भावे कर्मणि च इण्प्रत्ययः । सेर पवादः॥ लुक् । अभावि । अकर्मकोऽप्युपसर्गवशात्सकर्मको भवति। सुखमनुभूयते स्वामिना । "लज्जासत्तास्थितिजागरणं वृद्धिक्षय-भयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मक-माहुः॥""फलव्यापारयोरेकनिष्ठतायामकर्मकः। धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः" "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसि-द्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" ॥

( सुबोधिनी )-इण् तन्यकर्तरि ॥ कर्तुरन्योऽकर्ता तस्मिन्नकर्तरि भावे कर्मणि चार्थे तन्प्रत्यये परे धातोरिण् स्यात् ॥ अकर्तरीति किम् । अकृत घटं कुलालः । लुगिति तनो लुक् । अभावि । अकर्मकोऽपि धातुः कुत्रचिदर्थान्तरे सकर्मको भवति । धातूनामनेकार्थत्वेनार्थान्तरस्योपसर्गेण द्योतनाद्धेतोः । यथा कर्मण्यात् । स्वामिना सुख-मनुभूयते । आत्मसात् क्रियते इत्यर्थः ॥ "लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजी-वितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥" अकर्मकधातुलक्षण माह-आचार्यास्तं धातुगणमकर्मकमाहुर्ब्रुवन्ति । तं कम् । लज्जासत्तास्थितिजागरणा-न्यर्थाः सन्ति यस्य स लज्जासत्तास्थितिजागरणस्तम् । पुनः । वृद्धिक्षयभयजीवितमरणा-न्यर्थाः सन्ति यस्य स वृद्धिक्षयभयजीवितमरणस्तम् । पुनः । शयनक्रीडारुचिदीप्ति-योऽर्था यस्य स शयनक्रीडारुचिदीप्त्यर्थस्तम् ॥ फलव्यापारयोरेकनिष्ठतायाम-कर्मकः । धातुस्तयोर्द्धर्मिभेदे सकर्मक उदाहृतः ॥ सकर्मकाकर्मकधातुलक्षणमाह- आचार्यैरकर्मको धातुरुदाहृतः । क सत्याम् । उत्पत्त्यनुकूलो व्यापारो धात्वर्थः । तत्रो-त्पादनव्यापारः । उत्पत्तिः फलम् । यथा पचेः फूत्करणैधोदकोपस्करणादिलक्षणो व्यापारः । विक्लित्त्यादि फलम् । तयोः फलव्यापारयोरेकनिष्ठतायामेकस्मिन्धर्मिण्याश्रये स्थितौ सत्यामित्यर्थः । धातुः सकर्मक उदाहृतः । क सति । तयोः फलव्यापारयोर्धर्मि-भेदे आश्रयभेदे सति । एकस्मिन्धर्मिणि फलमन्यस्मिन्धर्मिणि व्यापार इत्यर्थः ॥ "धातोरर्थान्तरे वृत्तेर्द्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥" कुत्रचित्सकर्मकस्यापि धातोः क्रिया धात्वर्थोऽकर्मिका कर्मरहिता भवतीत्यर्थः । कुतः । अन्योऽर्थ इत्यर्थान्तरं तस्मिन्नर्थान्तरे वृत्तेर्वर्तनाद्धेतोः । यथा नदी वहति । स्यन्दते इत्यर्थः ॥ पुनर्द्धात्वर्थेन कर्मण उपसंग्रहाद्धेतोः । जीवति । प्राणान् बिभर्तीत्यर्थः ॥ पुनः कर्मणः प्रसिद्धेर्हेतोः । मेघो वर्षति । जलमिति कर्म प्रसिद्धमेव । पुनः कर्मणोऽवि-वक्षातो वक्तुरिच्छाया अभावाद्धेतोः । यथा । 'हितान्न यः संशृणुते स किं प्रभुः ।' कुत्सित प्रभुरित्यर्थः ॥ वचनमिति कर्माविवक्षितमत्र ॥

( तत्त्वदी० )–सकर्मकोऽपीति ॥ यो यदा कर्मक्रियावाच्यप्यनेकार्थत्वात्सकर्मकक्रियासुत्था- पयति, तदा तदर्थपरत्वे सकर्मको भवति तत्परत्वं च तस्योपसर्गेण द्योत्यत इत्यनुपसर्गवशादित्युक्तं न तु सोपसर्ग एव सकर्मकः । उपसर्गस्तु द्योतक एव ॥ अनुभूयत इति ॥ उपलम्भेऽयं सकर्मकः । सुखे कर्मण्यात् ॥ फलव्यापारयोरित्यादि ॥ फलं विक्लित्त्यादि । व्यापारः फूत्कारादिलक्षणः । एकनिष्ठतायामेकस्मिन्धार्मिणि स्थितौ । तयोः फलव्यापारयोर्धर्मिभेदे एकास्मिन्धार्मिणि फलमन्यास्मिन्व्या- पार इति भेदे धातुः सकर्मको वोध्यः ॥ धातोरर्थान्तरे वृत्तेरित्यादि ॥ अन्योऽर्थोऽर्थान्तरं तास्मि- न्वृत्तेर्वर्तनात् । उदाहरणानि यथा । नदी वहति । स्यन्दन्त इत्यर्थः ॥ नृत्यति चैत्रः । गात्रविक्षेपं करोतीत्यर्थः ॥ मेघो वर्षति । जलमित्यर्थः ॥ गच्छति । ग्राममिति शेषः ॥

**( शीङोऽयङ् ये क्ङिति )** शय्यते । शिश्ये । शायिषीष्ट–शयिषीष्ट । अशायि । अयाकि ॥ ऋलोरिङ् भवत्यकारप्रत्यये यकि च । घटः क्रियते । त्वं दुःखी क्रियसे रागैर्विरागैः सुख्यहं क्रिये । चक्रे । भाव्यते । भावयांचक्रे । भावयामासे । भावयांबभूवे ॥

( सुबोधिनी )–शीङोऽयङ् ये क्ङिति ॥ शेतेरयङादेशः स्यात्किति ङिति च य प्रत्यत्यये परे ॥ ङित्त्वादन्तादेशः । यत इत्यलोपः । शय्यते । नुधातोरिति यः । शिश्ये । इण्वद्भावाद्वा वृद्धिः । शायिषीष्ट–शयिषीष्ट । करोतेः कर्मण्यात् । उरिति न गुणः । कृषीष्ट । चौरादिकात् ण्यन्ताद्भावयतेः कर्मण्यात् । ञेरिति ञिलोपः । भाव्यते ॥

**( इण्वदिटि ञेर्लोपः )** भाविता–भावयिता । भाविष्यते–भावयिष्यते । अभावि, अभाविषाताम्–अभावयिषाताम् । सन्नन्तात्तु बुभूष्यते । बुभूषांचक्रे । अबुभूषि ॥ यङन्तात्तु । बोभूय्यते । बोभूयांचक्रे ॥ यङ्लुगन्तात्तु । बोभूयते । बोभवांचक्रे । बोभाविषीष्ट–बोभविषीष्ट ॥ स्तूयते विष्णुः । अस्तावि, अस्ताविषाताम्–अस्तोषातात् ॥ अर्यते । आरे । आरिषीष्ट–ऋषीष्ट । आरिष्ठाः–आर्थाः ॥ स्मर्यते । स्मारिता–स्मर्ता ॥ इज्यते । ईजे । यक्षीष्ट । यष्टा ॥

( सुबोधिनी )–इण्वदिटि ञेर्लोपः ॥ ञिलोपो वा स्यादिण्वदिटि परे ॥ ञिलोपे भाविता । पक्षे सिसतेतीटि भावयिता । सप्रत्ययान्ता बुभूषतेर्भावे आत् । यत इत्यल्लोपः बुभूष्यते । यङ्प्रत्ययान्तात्तु यत इत्यलोपे बोभूयते । यङ्लुगन्ताद्भावे आत् । बोभूयते । स्तौतेः कर्मण्यात् । ये इति दीर्घः । स्तूयते ॥ ऋ गतौ कर्मण्यात् । गुणोऽर्तीति गुणः । अर्यते । इण्वदिटि तु धातोर्नामिन इति वृद्धिः । आरिता ॥ स्मृ चिन्तायाम् । गुणो- ऽर्तीति गुणः । स्मर्यते ॥ यजतेः कर्मण्यात् । यजामिति संप्रसारणम् । इज्यते । लिटि । ईजे । आशिषि लिङि । यक्षीष्ट ॥

**( तनोतेर्वाऽऽत्वं यकि ) तायते-तन्यते । तनिषीष्ट । अतानि ॥ जायते-जन्यते ॥**

( सुबोधिनी )-तनोतेर्वाऽऽत्वं यकि ॥ तनेराकारान्तादेशो वा स्याद्यक्प्रत्यये परे ॥

**( तपो नेण् कर्मकर्तर्यनुतापे च ) अन्वतप्त देवदत्तः पापेन ॥ दादेरिः । दीयते । ददे ॥**

( सुबोधिनी )-तपो नेण् कर्मकर्तर्यनुतापे च ॥ तपेरिण् प्रत्ययो न स्यादनुतापेऽर्थे कर्मकर्तर्यर्थे च ॥ अन्वतप्त देवदत्तः । पापेन कर्त्राऽभ्याहत इत्यर्थः । भावेऽपीदं बोध्यम् । पापवता पुंसाऽविचार्य कृत्वा पश्चादशोचीत्यर्थः॥ कर्मकर्तरि तु-अतप्त तपस्तापस इत्यत्र तपस्तपःकर्मकस्येत्यनेन कर्तुः कर्मवद्भावः ॥ डुदाञ् दाने । दादेरिरितीत्वम् । ये इति दीर्घः । दीयते । आतोऽनपीत्यालोपे ददे ॥

( तत्त्वदी० )-तपो नेण् कर्मकर्तर्यनुतापे च ॥ तप संतापे इत्यस्मादिण्न॥ पापेनेति ॥ पूर्वं कृतं यत्पापं कर्तृ तेनाभ्याहतो देवदत्त इत्यर्थः । पापेनेति कर्तरि तृतीया । यदा तु कर्म न विवक्ष्यते, शोकार्थो वा तपिस्तदा भावे लः॥ पापेनेति कर्तरि तृतीया । करणे पुरुषधर्मयोरनभिधानात् । अभ्याहननार्थस्य तु कर्मकर्तृत्वविवक्षायां हेतौ तृतीयेति बोध्यम् ॥

**आतो युक् ॥ इणि ञिणति कृति च ॥ दायिषीष्ट-दासीष्ट । अदायि, अदायिषाताम्-आदिषाताम् ॥ धीयते ॥ स्थीयते ॥ अग्लायि ॥ हन्यते । हनो घ्ने । घानिषीष्ट-वधिषीष्ट । घानिता-हन्ता । अघानि, अघानिषाताम-अहसाताम् । अवधि, अवधिषाताम् ॥**

( सुबोधिनी )-आतो युक् ॥ आदन्तस्य धातोर्युक् स्यादिणि प्रत्यये परे ञिति णिति कृत्प्रत्यये च परे ॥ घञि दायः ।ण्वुणि दायकः । इण्वादटि दायिषीष्ट । इण्वदिटोऽभावे दासीष्ट । लुङि अदायि-इण्वदिटि अदायिषाताम्-तदभावे अपिद्घाधास्थामितीत्वम् । अदिषाताम् ॥ एवं धा स्था धातू ॥ ग्लै हर्षक्षये । इण्वदिटि युक् अग्लायिषाताम् ॥ हन्तेः कर्मण्यात् । हन्यते । पूर्वाद्धन्तेरिति घः । जघ्ने । हनो लुँङ्लिङोरिति वधः । यत इत्यल्लोपः वधिषीष्ट-पक्षे हनोघ्न इति घः । अत उपधाया इति वृद्धिः । घानिषीष्ट । इण्वद्भावो वधादेशस्य बाधको ज्ञेयः । अत्र हनो घदित्यनेन घदादेशो न । इण्वर्जिते इत्युक्तत्वात् । ऌटि इण्वदिटि घानिष्यते । पक्षे हन्नृत इतीट् । हानिष्यते । लुङि इण्वादिडभावे हनः सिः किदिति कित्त्वात् लोपस्त्वनुदात्ततनामिति न लोपः ॥ अहसाताम् ॥ गृह्णातेः कर्मण्यात् । ग्रहामिति संप्रसारणम् । गृह्यत ॥

( तत्त्वदी० )—**वधिषीष्टेति** ॥ इण्वदभावे वधादेशो बोध्यः । वध हिंसायामिति प्रकृत्यन्तरम् ॥ **अवधीति** ॥ जनिवध्योरिति वृद्धिनिषेधः । हनादेशस्य त्वदन्तत्वान्न वृद्धिः । तथा च प्रयोगः । भक्षकश्चेन्न विद्यते वधकोऽपि न विद्यत इति ॥

**( इण्वदिटो न दीर्घः ) ग्राहिता–ग्रहीता ॥ दर्शिषीष्ट–दृक्षीष्ट । दर्शिता–द्रष्टा । अदर्शि, अदर्शिषाताम्–अदृक्षाताम् ॥ शम्यते मुनिना ॥**

( सुबोधिनी )—**इण्वदिटो न दीर्घः** ॥ इटो ग्रहामिति सूत्रेण सिसतेत्यादिलक्षणेन विधीयमानस्यैवेटो दीर्घो भवति नेण्वदिट इत्यर्थः ॥ दृशेः कर्मण्यात् । लुङि इण्वदिटि परे उपधाया लघोरिति गुणः । अदर्शिषाताम्—पक्षे छशषेति षत्वम् । षढोरिति कः हशषान्तादिति सक् तु न नतु दृशोरित्युक्तत्वात् । सिस्योरिति न गुणः अदृक्षाताम् । शमेर्भावे आदकर्मकत्वात् ॥

**( मान्तस्य सेटो न वृद्धिरिणि ञ्णिति कृति च न त्वाचमिकमिवमीनाम् ) अशमि । अदमि । आचामि । अकामि । अवामि ॥ ञ्यन्तात्तु शम्यते मोहो मुनिना । शमयांचक्रे ॥**

( सुबोधिनी )—**मान्तस्य सेटो न वृद्धिरिणि ञ्णिति कृति च न त्वाचमिकामिवमीनाम्** ॥ सेटो मान्तस्य धातोर्वृद्धिर्न स्यादिणि ञिति णिति कृत्प्रत्यये च परे । आचमिकमिवमीनां तु वृद्धिर्भवतीत्यर्थः ॥ घञि शमः, दमः । वुणि शमकः, दमकः । कथं तर्हि 'हरेर्यदक्रामि पदैककेन खम्' इति श्रीहर्षप्रयोग इति चेदुच्यते । 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' । इति प्राकृते ञिस्तत इण् बोध्यः ॥ सेटः किम् । अगामि ॥ कमु कान्तौ । कमेः स्वार्थे ञिङिति ञिङ् वा । ञेरिति ञिलोपः । काम्यते । लुङि ञिङभावे । अकामि । ञिञिङोरप्येवम् । ञ्यन्तात् शमेः कर्मण्यात् । ञेरिति ञिलोपः । शम्यते । कासादिप्रत्ययादित्याम् । शमयांचक्रे ॥

**( मितां ञ्यन्तानामिणि णमि च वा दीर्घः ) शामिता–शमिता–शमयिता । अशामि–अशमि । अशामिषाताम–अशमिषाताम–अशमयिषाताम ॥ वध हिंसायाम् । वध्यते । जनिवध्योर्न वृद्धिः । अवधि ॥**

( सुबोधिनी )—**मितां ञ्यन्तानामिणि णमि च वा दीर्घः** ॥ मित्संज्ञकानां ञ्यन्तानां धातूनां वा वृद्धिर्भवति इण्प्रत्यये णम्प्रत्यये च परे । इण्वदिटि ञेरिति ञिलोपः । वृद्धिश्च वा । शामिता–पक्षे शमिता–पक्षे सिसतेतीटि गुणः । शमयिता । यङन्तप्रकृतिकञिप्रत्ययान्तात् शंशमेः कर्मण्यात् । ञौ परतोऽनपि च हसादिति यलोपः । यत इत्यल्लोपः । ततो यकि ञेरिति ञिलोपः । शंशम्यते । लुटि शंशा-

मिता-शंशमिता-शंशमयिता । लुङि अशंशामि-अशंशमि । णमुल्प्रत्यये तु शंशामं-शंशमम् ॥ वध हिंसायाम् । हसान्तः ॥

( भञ्जेरिणि नलोपो वा ) अभाजि-अभञ्जि ॥

( सुबोधिनी )-भञ्जेरिणि नलोपो वा । भञ्जो आमर्दने इत्यस्य नस्य लोपो वा स्यादिणि प्रत्यये परे ॥

( लभेरिण्णमोर्नुम्वा ) अलम्भि-अलाभि । "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥ प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥" गौर्दुह्यते पयः । धुक्षीष्ट ॥ अजा ग्रामं नीयते । ह्रियते । कृष्यते । उह्यते ॥ बोध्यते माणवकं धर्मः, माणवको धर्ममिति वा ॥ भोज्यते माणवकमोदनः, माणवक ओदन मिति वा ॥ पाठ्यते माणवकं वेदः, माणवको वेदमिति वा ॥ देवदत्तो ग्रामं गम्यते ॥

( सुबोधिनी )-लभेरिण्णमोर्नुम् वा ॥ डुलभष् प्राप्तावित्यस्य नुमागमो वा स्यादिणि प्रत्यये णमि प्रत्यये च परे ॥ प्रादेर्नित्यं नुम् । प्रपूर्वस्य लभेर्नित्यं नुम् स्यात् णमि प्रत्यये । प्रलम्भम् ॥ अथ ये द्विकर्मकधातवस्तेभ्य आत् कृत्यक्तखलर्थप्रत्ययाः किं मुख्ये कर्मणि, उत गौणे, किं चोभयोरिति संदेहे व्यवस्थामाह-"गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥ प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥" दुह्याचिति कारके उक्तम् । दुह्यादेर्द्वादशसंख्यस्य धातोर्गौणे कर्मणि लादयः प्रत्यया मताः । नीप्रभृतीनां चतुर्णां प्रधाने कर्मणि लादयो मताः । बुद्धिभक्षार्थयोर्ण्यन्तयोः शब्दकर्मकण्यन्तानां च प्रयोज्यप्रधानयोरन्यतरकर्मणि निजेच्छया लादयो मताः । अन्येषां ण्यन्तानां तु प्रयोज्यकर्मणि लादयो मताः । कारके गतिबुद्धीत्यनेन कर्त्तुर्यत्कर्मकारकं कृतं तत्प्रयोज्यं कर्म ज्ञातव्यम् । लादय इत्यत्रादिशब्देन कृत्यक्तखलर्थाः प्रत्यया ग्राह्याः । दुह्यादेर्गौणे कर्मण्यात् । स्वार्थमुत्सृज्य परार्थावलम्बनं गौणम् । उदाहरणमाह-गौर्दुह्यते पय इत्यत्र गौरिति गौणं कर्म । तत्राख्यातेनोक्तत्वादन्योक्ते इत्यनेन प्रथमा । पय इति तु मुख्यं कर्म । तत्र कर्मणि द्वितीया । कर्तुरनुक्तत्वात्तृतीया देवदत्तेनेति । न्यादीनां प्रधानकर्मण्यात् । उदाहरणमाह-अजा ग्रामं नीयते इत्यत्राजेति मुख्यं कर्म । तत्रोक्तत्वात्प्रथमा । ग्राममिति गौणं कर्म । कर्त्ता तु तृतीयान्तोऽध्याहार्यः ॥ बुद्धिभक्षार्थयोः शब्दकर्मकाणां च ण्यन्तानां प्रयोज्ये मुख्ये च कर्मण्यात् । उदाहरणमाह-बोध्यते माणवकं धर्म इत्यत्र धर्म इति मुख्यं कर्म । माणवकमिति प्रयोज्यं कर्म । तत्र निजेच्छयाख्यातादिः कर्तव्यः । भोज्यते माणवकमोदन इत्यत्रोदन इति मुख्यं कर्म । माणवकमिति प्रयोज्यं कर्म । तत्र निजेच्छयाख्यातादिः । पाठ्यते माणवक वेद इत्यत्र वेद इति

मुख्यं कर्म । माणवकमिति प्रयोज्यं कर्म । तत्र निजेच्छयाख्यातादिः । तृतीयान्तः कर्ताध्याहार्यः ॥ ञ्यन्तस्य प्रयोज्यकर्मण्यात् । उदाहरणमाह—देवदत्तो ग्रामं गम्यत इत्यत्र ग्राममिति मुख्यं कर्म । देवदत्त इति प्रयोज्यं कर्म । तत्राख्यातादिः । कर्मण उक्तत्वात् प्रथमा । कर्ता तु तृतीयान्तोऽध्याहार्यः ॥

( तत्त्वदी० )—द्विकर्मकाणां तु—**गौणे कर्मणी**त्यादि ॥ **गौर्दुह्यत** इति ॥ गौरिति गौणं कर्म॥ **अजे**त्यादि॥ अजात्र प्रधानम् ॥ **निजेच्छये**ति ॥ गौणप्रधानयोरात्मेच्छयेत्यर्थः ॥ **अन्येषामि**ति ॥पूर्वोक्तव्यतिरिक्तानामित्यर्थः ॥

## ( अकर्मकाणां कालादिकर्मकाणां भावे कर्मणि च लकारः )

**मासं मासो वास्यते देवदत्तेन । क्रोशः क्रोशं वास्यते । कुरवः, कुरून् वास्यते । गोदोहं गोदोहो वास्यते ॥ ञ्यन्तात्तु प्रयोज्ये प्रत्ययः । मासमास्यते माणवकः ॥ ॥ इति भावकर्मप्रक्रिया ॥**

( सुबोधिनी )—**अकर्मकाणां कालादिकर्मकाणां भावे कर्मणि च लकारः** ॥ कालादिकर्मकाद्धातोर्भावकर्मणोरर्थयोराख्यातो भवति ॥ कारके, अकर्मकधातुभिर्योगे इति सूत्रेण कर्मसंज्ञा येषां धातूनां कृता ते कालादिकर्मकाः । कालादिकर्मकस्य कर्मण्यात् । उदाहरणमाह—मास आस्यते इत्यत्र कालवाचिकर्मण आख्यातेनोक्तत्वात्प्रथमा । कर्ता तु तृतीयान्तोऽध्याहार्यः ॥ भावे तु मासमास्यते देवदत्तेनेत्यत्र कर्मणोऽनुक्तत्वान्मासमिति द्वितीया । कर्त्तुरनुक्तत्वाद्देवदत्तेनेति कर्त्तरि तृतीया । ञ्यन्तात्कालादिकर्मकाद्धातोस्तु प्रयोज्यकर्मण्येवाख्यातादिः ॥ मासमास्यते माणवक इति अत्र कालवाचिकर्मणोऽनुक्तत्वान्मासमिति द्वितीया । माणवक इति प्रयोज्यं कर्म । तत्राख्यातेनोक्तत्वात्प्रथमा । कर्तरि त्वनुक्तत्वात्तृतीया देवदत्तेनेति ॥

इति सुबोधिन्यां भावकर्मप्रक्रिया ॥ ८ ॥

# अथ कर्मकर्तृप्रक्रिया ।

**यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते ॥ साध्वसिश्छिनत्ति ॥ काष्ठानि पचन्ति ॥ स्थाली पचति ॥ पच्यते ओदनेन । अपाचि ॥ भिद्यते काष्ठेन । अभेदि ॥ लेनोक्ते कर्मकर्तरि यगादिणिण्वदिटः । पच्यते ओदनः । अपाचि । भिद्यते काष्ठम् । अभेदि ॥**

( सुबोधिनी )—सकलकारकाणामवान्तरव्यापारो वर्तते सकलकारकाणामवान्तरव्यापारहीनस्याकारकत्वात् तत्र स्वव्यापारे स्वातन्त्र्यं च व्यापारभेदाकाङ्क्षायां करणादिसंभवः तत्र यदा कारकान्तराणां सौकर्यातिशयं द्योतयितुं प्रतिपादयितुं कर्तृव्यापारो वक्तुं नेष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां प्राप्नुवन्ति स्वव्यापारे स्वतन्त्रत्वात् । सुष्ठु करोतीति

सुकरस्तस्य भावः सौकर्यम् । कारकान्तराणां पूर्वं करणत्वादिसत्त्वेऽपि सांप्रतं कर्तृसंज्ञाकरणात्कर्तर्याख्यातो भवति ॥ साध्वसिश्छिनत्तीत्यत्र करणस्य कर्तृसंज्ञा । आख्यातेन कर्तुरुक्तत्वादसिरित्यत्र प्रथमा ॥ काष्ठानि पचन्तीत्यत्रापि करणस्य कर्तृसंज्ञा । कर्तुराख्यातेनोक्तत्वात्काष्ठानीति प्रथमा ॥ स्थाली पचतीत्यत्राधारस्य कर्तृसंज्ञा । कर्तुराख्यातेनोक्तत्वात्स्थालीति प्रथमा ॥ कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकाः ॥ कर्मणः सौकर्यातिशयं द्योतयितुं यदा कर्तृत्वविवक्षा ततः प्राक् सकर्मका अपि धातवोऽकर्मकाः प्रायेण भवन्ति । प्रायेणेत्युक्तत्वादेककर्मकाश्छिदिभिदिप्रभृतय एवाकर्मका भवन्ति न तु द्विकर्मकाः ॥ अकर्मकस्य फलमाह— तेभ्यो भावे कर्तरि च लकारः । कर्मकर्तुरकर्मकाद्धातोर्भावे कर्तरि चार्थे आख्यातप्रत्ययो भवति । भावे आख्यातस्योदाहरणमाह । पच्यते ओदनेन भिद्यते काष्ठेनेत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातस्तु भावे । कर्तुरनुक्तत्वादोदनेनेत्यादौ तृतीया ॥ कर्मकर्तर्याख्यातस्योदाहरणमाह—लेनोक्ते इत्यादि । कर्मवत्कर्मणा तुल्यक्रियः । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति । कार्यातिदेशोऽयम् । कर्मणो यत्कार्यं भवति तत्कर्मकर्तुरपीत्यर्थः । तेन यक् चतुर्ष्वाति यक् । आद्भुवीत्यात् । इण् तनीतीण् । स्वरान्तानामितीण्वदिद् इत्यादि कार्याणि कर्मकर्तरि भवन्ति ॥ काष्ठं भिनत्तीत्यत्र काष्ठस्था या विदारणाश्रयत्वरूपा क्रिया सैव काष्ठं भिद्यते स्वयमेवेत्यत्र तस्मिन्कर्तृभूतेऽपि भवति । अयं कार्यातिदेशः कर्मस्थभावकानां कर्मस्थक्रियाणां च धातूनां भवति न तु कर्तृस्थभावकानां कर्तृस्थक्रियाणां च धातूनां भवति । यत्र कर्मणि दृष्टे क्रियानुमातुं शक्यते ते कर्मस्थक्रियास्ततोऽन्ये कर्तृस्थक्रियाः । पक्वेषु तण्डुलेषु भिन्नेषु च काष्ठेषु दृष्टेष्वदृष्टः कर्तृव्यापारोऽनुमीयते । तदुक्तं च—"कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया । आशासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया" ॥ यद्यप्याधारभावयोरित्यत्र भावशब्देन क्रियापि गृह्यते तथाप्यत्र भेदो विवक्षितः पृथगुपादानात् । परिस्पन्दरूपो धात्वर्थः छिदादिः क्रिया अपरिस्पन्दरूपो विक्लित्त्यादिर्भावः । पचत्योदनं भिनत्ति काष्ठं च देवदत्तः । पच्यते ओदनः भिद्यते काष्ठं स्वयमेवेत्यत्राख्यातेन कर्मकर्तुरुक्तत्वात्प्रथमा ॥ कर्तृस्थक्रियाया उदाहरणमाह— आशास्ते घटं देवदत्तः । आशास्ते घटः स्वयमेव । गच्छति ग्रामं देवदत्तः । गच्छति ग्रामः स्वयमेवेत्यत्र घटग्रामयोर्दृष्टयोर्न हि देवदत्तस्य व्यापारोऽनुमातुं शक्यत इति कर्तृस्थत्वं क्रियायाः ॥

( तत्त्वदी० )—**यदा सौकर्यातिशयमि**त्यादि ॥ अयमर्थः । सकलकारकाणामवान्तरव्यापारोऽस्ति । व्यापारहीनस्य कारकत्वाभावात् । स्वव्यापारे स्वतन्त्रत्वं सर्वत्रैव कारकेऽस्ति । व्यापारभेदाकांक्षायां कारकत्वादिसंभवः । तत्र यदा कर्मणः सौकर्यातिशयप्रतिपादनाय कर्तृव्यापारो न विवक्षितस्तदा भिदादिकर्म व्यापारकारकमात्रे प्रवर्तते । व्यापारमात्रं प्रति च कर्तृत्वमेव काष्ठादीनाम् ।

यदा करणत्वादिलेशोऽपि न तदा सकर्मकाणामप्यकर्मकत्वमेव। तत्र भावे कर्तरि च लकाराः। कर्तरि तु लेनोक्त इत्यादि। कर्मग्रहणात्साध्वसिरित्यादौ न। यद्यपि काष्ठादेरचेतनतया कुठारोद्यमननिपातनादिकरणसम्बन्धेन भेदनादिकर्तृत्वमनुपपन्नं तथापि स्वधर्मैः प्रशिथिलावयवसंयोगनिस्सरणादिभिः कर्मकर्तृत्वमिति ध्येयम्।

**( सकर्मकाणां न ) अजा ग्रामं नयति ॥**

( सुबोधिनी )—सकर्मकाणां न ॥ सकर्मकधातूनां कर्मकर्ता कर्मवन्न भवति। अजा ग्रामं नयतीत्यत्र प्रधानकर्मणः कर्तृसंज्ञा। प्रधाने नीहृकृष्वहामित्युक्तत्वात्। आख्यातेनोक्तत्वात्तत्र प्रथमा। इह प्रतिषेधाभावे यक् स्यात्। क्रियाफलस्याकर्तृगामित्वेऽप्यात्मनेपदं स्यादित्यर्थः ॥

**( दुहिपच्योः सकर्मकयोर्वा )**

( सुबोधिनी )—दुहिपच्योः सकर्मकयोर्वा ॥ अनयोः कर्मकर्ता कर्मवद्वा भवति ॥

**( दुहस्नुनमां कर्मकर्तरि यगिणौ न ) गौः पयो दुग्धे दोग्धि वा॥**

( सुबोधिनी )—दुहस्नुनमां कर्मकर्तरि यगिणौ न ॥ एभ्यो यगिणौ प्रत्ययौ न भवतः कर्मकर्तर्यर्थे। दुहेरनेन यक् निषिध्यते इण् तु विकल्पेन वक्ष्यते। गौः पयो दुग्धे इत्यत्र गौणकर्मणः कर्तृत्वविवक्षा। गौणे कर्मणि दुह्यादेरित्युक्तत्वात् ॥

**( स्वरान्तानां कर्मकर्तरीण् वा तनि ) अकारि—अकारिष्ट—अकृत कटः स्वयमेव ॥**

( सुबोधिनी )—स्वरान्तानां कर्मकर्तरीण् वा तनि ॥ स्वरान्तेभ्यो धातुभ्य इण् प्रत्ययो वा भवति कर्मकर्तर्यर्थे तनि परे ॥ स्वरान्तानां किम्। अभेदि काष्ठम् ॥ कर्मकर्तरि किम्। अकारि घटः कुलालेन। कर्मकर्तरि लुङ् यथा। अकारि। घटः स्वयमेव। पक्षे लोपो ह्रस्वादिति सिलोपः। अकृत ॥

**( दुहश्च ) अदोहि—अधुक्षत—अदुग्ध ॥ उदुम्बरः फलं पच्यते पचति वा ॥ प्रस्नुते गौः। स्नुक्रमोरात्ति नेट् ॥ प्रास्नाविष्ट—प्रास्नोष्ट ॥ नमते दण्डः। अनंस्त ॥**

( सुबोधिनी )—दुहश्च ॥ दुहेरिण् प्रत्ययो वा भवति कर्मकर्तर्यर्थे तनि परे ॥ कर्मकर्तरि किम्। अदोहि गौर्देवदत्तेन। कर्मकर्तरि लुङ् यथा। इण्प्रत्यये अदोहि— पक्षे हशषान्तादिति सक्। दुहदिहलिहगुहूभ्य इति सको वा लुक्। अधुक्षत—पक्षे अदुग्ध ॥ फलं पच्यते उदुम्बर इत्यत्र गौणकर्मण उदुम्बरस्य कर्तृसंज्ञा। गौणे कर्मणि दुह्यादेरित्युक्तत्वात्। तत्र कर्मवद्भावस्तेन यगादिणिण्वदिटो भवन्ति ॥ ष्णु प्रस्रवणे।

प्रस्नवणमुत्कण्ठा । वत्सो गां प्रस्नौति । उत्कण्ठयतीत्यर्थः ॥ गोः कर्मणः कर्तृत्वविवक्षायां प्रस्नुते गौः । लुङि स्वरान्तानां हनग्रहेतीण्वदिट् । प्रास्नाविष्ट-पक्षे स्नुक्रमोरिति नेट् । प्रास्नोष्ट ॥ नमते दण्ड इत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङि अनंस्त । अत्र कर्मकर्तर्यात्मनेपदमेव जातम् । अत्र च अन्तर्भावितण्यर्थो बोध्यः ॥

**( सृजेः श्रद्धोपपन्ने कर्तरि वा ) सृज्यते स्रजं भक्तः । असर्जि ॥**

( सुबोधिनी )-सृजेः श्रद्धोपपन्ने कर्तरि वा ॥ सकर्मकस्य सृजेः कर्ता कर्मवद्वा भवति श्रद्धायुक्ते कर्तर्यर्थे । सृज्यते स्रजं भक्त इत्यत्र कर्तर्याख्यातादिः । कर्तुः कर्मवद्भावादाद्यागिणो भवन्ति । श्रद्धया निष्पादयतीत्यर्थः ॥

**( युजेर्वा ) युज्यते ब्रह्मचारी योगम । युनक्ति वा ॥**

( सुबोधिनी )-युजेर्वा ॥ सकर्मकस्य युजेः कर्ता कर्मवद्वा भवति । युज्यते योगं ब्रह्मचारीत्यत्र कर्तर्याख्यातः । कर्तुः कर्मवद्भावादाद्यागिणः । तपस्तपःकर्मकस्य । तपःकर्मकस्य तपेः कर्ता कर्मवद्भवति । तप्यते तपस्तापस इत्यत्र कर्तर्याख्यातः । कर्तुः कर्मवद्भावादात्मनेपदादिः । अर्जयतीत्यर्थः । लुङि तपो नेणित्यनेनेण्न । अतप्त ॥

**( भूषावाचिनां किरादीनां सान्तानां च यगिणिण्वदिटो न )**

**अलंकुरुते कन्या । अलमकृत ॥ अवकिरते हस्ती । अवाकरीष्ट-अवाकरिष्ट-अवाकीर्ष्ट ॥ अवगिरते पुष्पम् । अवागीर्ष्ट ॥ आद्रियते दानम् । आहृत ॥ ध्रियते । अधृत ॥ पृच्छते । अप्रष्ट ॥ चिकीर्षते कटः । चिकीर्षांचक्रे । चिकीर्षांबभूवे । अचिकीर्षिष्ट ॥**

(सुबोधिनी )-भूषावाचिनां किरादीनां सान्तानां च यगिणिण्वदिटो न ॥ भूषार्थेभ्यः किरादिभ्यः सप्रत्ययान्तेभ्यश्च धातुभ्यः कर्मकर्तरि यगिणिण्वदिटो न भवन्ति । आत्मनेपदमेव भवतीत्यर्थः ॥ तुदाद्यन्तर्गणः किरादिः । कॄ विक्षेपे । गॄ निगरणे । दृङ् आदरे । धृङ् अवस्थाने । प्रच्छ ज्ञीप्सायामिति पञ्चकः ॥ अलंकुरुते कन्येत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वादत्र प्रथमा । एवमग्रेऽपि ज्ञेयम् । तुदादेरित्यः । ऋत इतीर् । अवकिरते । लुङि वृङ्वृञ्ऋदन्तात्सिस्योरिति वेट् । अवाकरिष्ट । वृङ्वृञ्ऋदन्तानामिति वा दीर्घः । अवाकरीष्ट । ईडभावे उरिति गुणो न । ऋत इतीर् । पुनः सिस्योरिति गुणो न अवाकीर्ष्ट ॥ एवं गॄ ॥ तुदादेरित्यप्रत्यये अयकीति रिङ् ततो नुधातोरितीय् । आद्रियते । लुङि उरिति गुणो न । लोपो ह्रस्वादिति सिलोपः । आहृत ॥ एवं धृङ् ॥ तुदादेरित्यप्रत्यये ग्रहामिति संप्रसारणम् । पृच्छते । लुङि छशषेति षत्वम् । झसादिति सिलोपः । अप्रष्ट ॥ चिकीर्षते कट इत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङि सिसतेतीट् । यत इत्यल्लोपः । अचिकीर्षिष्ट ॥

**( ञिश्रिब्रूञ्श्रन्थिग्रन्थ्यादकर्मकाणां यगिणौ न ) कारयते कटः स्वयमेव । कारिषीष्ट । अचीकरत ॥ उच्छ्रयते दण्डः । उदशिश्रियत । ब्रूते कथा । अवोचत ॥ श्रन्थते । अश्रंथिष्ट ॥ ग्रन्थते ग्रन्थः । अग्रन्थिष्ट ॥ विकुर्वते सैन्धवाः ॥ व्यकारिष्ट । व्यकृत ॥**

( सुबोधिनी )–ञिश्रिब्रूञ्श्रन्थिग्रन्थ्यादकर्मकाणां यगिणौ न ॥ ञिप्रत्ययान्तेभ्यः श्रिब्रूञ्श्रन्थिग्रन्थिभ्य आत्मनेपदविधावकर्मकेभ्यश्च धातुभ्यो यगिणौ न भवतः कर्मकर्तर्यर्थे । आदिण्वदिटौ भवत इत्यर्थः ॥ कारयते घट इत्यत्र ञ्यन्तात्कर्मकर्तर्याख्यातः । तत्रोक्तत्वात्प्रथमा । लुङि ञेरङित्यङ् । द्वित्वे अङि लघावित्युपधाह्रस्वः पूर्वस्येकारश्च । लघोरीति पूर्वदीर्घः । ञेरिति ञिलोपः । अचीकरत ॥ उच्छ्रयते दण्ड इत्यत्र कर्मकर्तर्याख्यातः । अप् कर्तरीत्यप् । लुङि श्रिद्रुद्रुभ्य इति ङः । द्वित्वे नुधातोरितीय् । उदशिश्रियत । ब्रूते कथेत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङि ब्रुवोऽनपीति वच् । अस्यतिवक्तीति ङः । ङे वचेरित्युमागमः । अवोचत ॥ श्रन्थिग्रन्थ्योश्चौरादिकयोर्ञेरभावपक्षे श्रन्थते, ग्रन्थते ग्रन्थ इत्यत्र कर्मणः कर्तृत्वविवक्षा । तत्राख्यातेनोक्तत्वात्प्रथमा । लुङि अश्रन्थिष्ट । अग्रन्थिष्ट । क्रैयादिकयोस्तु श्रथ्नीते, ग्रथ्नीते च मेखला स्वयमेव ॥ आत्मनेपदविधौ योऽकर्मकस्तमुदाहराति । विकुर्वते सैन्धवा इत्यत्राकर्मकाच्चेत्यनेनाद्विधानम् । आख्यातेनोक्तत्वात्कर्मकर्तरि प्रथमा भवतीत्यर्थः ॥ लुङि इण्वदिटि व्यकारिष्ट, व्यकारिषाताम्, व्यकारिषत । इण्वदिडभावे लोपो ह्रस्वादिति सिलोपः । व्यकृत, व्यकृषाताम्, व्यकृषत ॥

(तत्त्वदी०)–ञीत्यादि ॥ श्रन्थिग्रन्थ्योर्ञेरभावे ग्रहणम् । आदित्यात्मनेपदिनो ग्रहणं न त्वादन्तस्य । आत्मनेपदविधौ योऽकर्मकस्तमुदाहरति ॥ **विकुर्वते सैन्धवा** इति ॥

**( कुषिरञ्जोः कर्मकर्तरि वा तिबादौ ) कुष्यति कुष्यते वा पादः । अकोषि ॥ रज्यति रज्यते वा वस्त्रम् । अरञ्जि ॥ ॥ इति कर्मकर्तृप्रक्रिया ॥**

( सुबोधिनी )–कुषिरञ्जोः कर्मकर्तरि वा तिबादौ ॥ कुषिरञ्जिभ्यामुभयपदं भवति कर्मकर्त्तर्यर्थे तिबादिचतुष्टये परतः । अनपि त्वात्मनेपदमेव भवति ॥ कुष निष्कर्षे । क्रैयादिकः । रञ्ज रागे । दैवादिकः ॥ कुष्यति कुष्यते वा पाद इत्यत्र कर्मणः कर्तृत्वविवक्षायामाख्यातः । कर्तुः कर्मवद्भावादात्मनेपदादिः । लुङि इण्तनीतीण् । अकोषि । रज्यति रज्यते वा वस्त्रमित्यत्रापि कर्मकर्तर्याख्यातः । तत्राख्यातेनोक्तत्वात्प्रथमा । लुङि अरञ्जि, अरङ्क्षाताम्, अरङ्क्षत । इह कर्मकर्तृप्रकरणे भिद्यते काष्ठं स्वयमेवेत्याद

सर्वत्र स्वयंशब्दः करणार्थको ज्ञेयः । आत्मना करणेनेत्यर्थः । कर्त्रर्थे तु कर्मण्याख्यातः स्यादित्यर्थः ॥ इति सुबोधिन्यां कर्मकर्तृप्रक्रिया ॥

(तत्त्वदी०)—कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगाद्वादिसाधनम् ॥

इति तत्त्वदीपिकायां कर्मकर्तृप्रक्रिया ॥ ९ ॥

---

# अथ लकारार्थप्रक्रिया ।

**( स्मृतिवाचिन्युपपदे भूतानद्यतने धातोर्लट् लङोऽपवादः )**

**स्मरसि कृष्ण गोकुले वत्स्यामः ॥**

(सुबोधिनी)—स्मृतिवाचिन्युपपदे भूतानद्यतने धातोर्लट् ॥ धातोर्लङ् भवाति स्मृतिवाचकशब्दे उपपदे सति न लुङ् ॥ वत्स्यामः । वय मवसाम इत्यर्थः ॥ एवं बुध्यसे चेतयसे इत्यादियोगेऽपि ॥

(तत्त्वदी०)—स्मृतिवाचिनीत्यादि ॥ स्मृतिवाचिनीत्युक्तेर्बुध्यसे चेतयसे इत्यादियोगेऽपि न भवति एषामपि प्रकरणादिना स्मृतिवाचित्वात् ॥ स्मरसीत्यादि ॥ अत्र पश्य मृगो धावतीतिवद्वाक्यार्थस्य कर्मता बोध्या ॥

**( यद्योगे उक्तं न ) अभिजानासि कृष्ण यद्वनेऽभुञ्ज्महि ॥**

(सुबोधिनी)—यद्योगे उक्तं न ॥ स्मृतिवाचकशब्दे उपपदे सत्यपि यच्छब्दयोगे भूतानद्यतने लट् न भवति किं तु लङेव ॥

(तत्त्वदी०)—अभीत्यादि ॥ अत्र लङेव न तु लट् ॥

**( उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् ) सुप्तोऽहं किल विललाप ॥**

(सुबोधिनी)—उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् ॥ मदस्वप्नादिभिः कश्चित्स्वान्तगतमेव न वेत्ति, पश्चादन्येभ्यः श्रुत्वा प्रयुङ्क्ते । किलशब्दोऽज्ञानसूचकः । सुप्तः सन्नहं विललापेति ॥

(तत्त्वदी०)—उत्तमपुरुषेत्यादि ॥ अत्र यद्यपि बुद्धीन्द्रियशरीरादिसंघातरूपस्य कर्त्तुरात्मनः प्रत्यक्षतैव तथापि मदस्वप्नादिभिश्च विक्षिप्ते चित्ते कश्चित्स्वगतमेव न वेत्ति पश्चादन्येभ्यः श्रुत्वा प्रयुंक्ते । सुप्तोऽहमित्यादि । किलेत्यज्ञानं सूचयति ॥

**( अत्यन्तापह्नवे लिट् ) कलिङ्गेष्ववात्सीः । नाहं कलिङ्गाञ्जगाम ॥**

(सुबोधिनी)—अत्यन्तापह्नवे लिट् ॥ अत्यन्तापलापेऽर्थे लिङ् भवति ॥ कलिङ्गो नाम निषिद्धो देशः । उक्तं च—"अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति" इति ॥ केनचित्कश्चित्पृष्टः त्वं कलिङ्गेषु अवात्सीः तत्र गत्वा

त्वया चिरं स्थितमित्यर्थः । स आह नाहं कलिङ्गान् जगामेति । केवलमवस्थानमेव न निषिध्यते किं तु तद्धेतुभूतं गमनमपीत्यन्तापह्नवो भवति ॥

( तत्त्वदी० )—अत्यन्तापह्नव इति ॥ अपह्नवोऽपलापः ॥ नाहमित्यादि ॥ कलिङ्गस्य तु जुगुप्सितत्वेन तत्र त्वया चिरं स्थितमित्युक्तः कश्चिद्गमनमेव निषेधतीत्यत्रास्त्यत्यन्तापह्नवः । यदा तु गमनमेवायुक्तं तदेवापलपति तदा लङेवात्यन्तापह्नवाभावात् ॥

**( हशश्वतोर्लिङ्विषये लङ्लिटौ ) इति हाकरोत्, चकार वा । शश्वदकरोत्, चकार वा ॥**

( सुबोधिनी )—हशश्वतोर्लिङ्विषये लङ्लिटौ ॥ हशश्वन्निपातयोर्योगे लिङर्थे लङ्लिटौ भवतः ॥

**( आसन्नकाले पृच्छ्यमानेऽर्थे लङ्लिटौ ) अगच्छत् किम् । जगाम किम् । अनासन्ने तु कंसं जघान किम् ॥**

( सुबोधिनी )—आसन्नकाले पृच्छ्यमानेऽर्थे लङ्लिटौ ॥ आसन्नकालिके भूतानद्यतनपरोक्षवृत्तिधात्वर्थे प्रष्टव्ये लङ्लिटौ भवतः । पञ्चवर्षाभ्यन्तर आसन्नकालः । पञ्चवर्षातीतो विप्रकृष्टकालः ॥ पृच्छ्यमाने किम् । जगादैवम् । लिडेवं :॥ अनासन्ने तु लिडेव । कंसं जघान किम् ॥

( तत्त्वदी० )—आसन्नेत्यादि ॥ पञ्चवर्षाभ्यन्तरमासन्नकालं, पञ्चवर्षातीतं विप्रकृष्टकालं वर्णयन्ति ॥

**( स्मे लट् लिटोऽपवादः ) यजति स्म युधिष्ठिरः ॥ ( भूतानद्यतने लट् स्मयोगे ) एवं स्म पिता ब्रवीति ॥**

( सुबोधिनी )—स्मे लट्—स्मयोगे लड् भवति, न तु लिट् । स्मेत्यव्ययं भूतकालद्योतकम् । भूतानद्यतने लट् स्मयोगे ॥ लङोऽपवादः ॥ ब्रवीति स्म । अब्रवीदित्यर्थः ॥

**( ननौ पृष्टप्रतिवचने भूते लट् ) अकार्षीः किम् । ननु करोमि भोः ॥**

( सुबोधिनी )—ननौ पृष्टप्रतिवचने भूते लट् ॥ पृच्छ्यते इति पृष्टः । कर्मणि क्तः । पृष्टस्य प्रतिवचनं पृष्टप्रतिवचनमिति षष्ठीसमासः । भावे क्तप्रत्यये तु पृष्टं प्रश्नः । पृष्टपूर्वं च तत्प्रतिवचनं च पृष्टप्रतिवचनमिति मध्यमपदलोपी समासः । ननु करोमि अकार्षमित्यर्थः ॥

( तत्त्वदी० )—ननाविति ॥ पृष्टेति कर्मणि क्तः पृष्टस्य प्रतिवचनं पृष्टप्रतिवचनमिति षष्ठीसमासः । भावे तु पृष्टं प्रश्नस्तत्पूर्वं प्रतिवचनमित्युत्तरपदलोपी समासः ॥

**( नन्वोर्वा ) अकार्षीः किम् न करोमि । नाकार्षम् । अहं तु करोमि । अहं न्वकार्षम् ॥**

( सुबोधिनी )—नन्वोर्वा ॥ ननुनिपातयोर्योगे पृष्टप्रतिवचने भूते वा लट् भवति । पक्षे लुङ्लिटौ ॥

( पुराशब्दयोगे भूतानद्यतने वा लुङ्लटौ न तु स्मयोगे ) वसन्तीह पुरा छात्राः, अवात्सुः, अवसन्, ऊषुर्वा ॥ स्मेति किम्। यजतिस्म पुरा युधिष्ठिरः ॥

( सुबोधिनी )—पुराशब्दयोगे भूतानद्यतने वा लुङ्लटौ न तु स्मयोगे ॥ पक्षे लङ्लिटौ ॥ स्मेति किम्। यजति स्म पुरा युधिष्ठिरः ॥

( यावत्पुरानिपातयोर्भविष्यति लट् ) यावद्भुङ्क्ते। पुरा भुङ्क्ते। भोक्ष्यसे, भोक्ता वा॥(कदाकर्ह्योर्वा भविष्यति लट्) कदा कर्हि वा भुङ्क्ते, भोक्ष्यसे, भोक्ता वा ॥

( सुबोधिनी )—यावत्पुरानिपातयोर्भविष्यति लट् ॥ यावद्भुङ्क्ते । निश्चितं भोक्ष्यत इत्यर्थः ॥ निपातावेतौ निश्चयं द्योतयतः ॥ निपातयोः किम् । यावद्दास्यते तावद्भोक्ष्यते। करणभूतया पुरा यास्यति ॥

( वर्तमानसामीप्ये भूते भविष्यति च वर्तमानवद्वा ) कदाऽऽगतोसि। अयमागच्छामि, अयमागमम्। कदा गमिष्यसि। एष गच्छामि, गमिष्यामि वा ॥

( सुबोधिनी )—वर्तमानसामीप्ये भूते भविष्यति च वर्तमानवद्वा ॥ कदाऽऽगतोऽसीति भूतकालेन प्रश्नवाक्यम्। अयमागच्छामीत्युत्तरं भूतकालाभिव्यक्तये। अयमिति प्रयोगस्त्विदानीमेवागतमिति वर्तमानसमीपभूतकालद्योतनाय। तेन ह्यागमनं विना भूतरूपं यद्धूलीधूसरताप्रस्वेदादियुक्तं तत्प्रतिनिर्दिश्यते। एवं कदा गमिष्यसीति भविष्यत्कालेन प्रश्नवाक्यम्। एष गच्छामीत्युत्तरं भविष्यत्कालाभिव्यक्तये। एष इति प्रयोगस्त्विदानीमेव गमिष्यामीति वर्तमानसमीपभविष्यत्कालद्योतनाय। तेन हि गमनेन विना भूतं यत्परिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते। तत्र कदेति प्रश्ने उत्तरवाक्ययोः कालानुपादानादयमेषशब्दाभ्यामिदानीमिति कालावगमः ॥

( तत्त्वदी० )—अयमागच्छामीत्यादि॥ अयमेषपदाभ्यामागमनादिना भूतं यद्रूपं प्रस्वेदादियुक्तं तत्प्रतिनिर्दिश्यते। इदानीमागममित्यर्थः ॥

( क्षिप्रवचने लट् ) वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति तदा शीघ्रं वप्स्यामः ॥

( सुबोधिनी )—क्षिप्रवचने लट् ॥ वचनग्रहणं स्वरूपग्रहणनिरासार्थम्। क्षिप्रपर्याय उपपदे लट् ॥

( तत्त्वदी० )—क्षिप्रेति ॥ क्षिप्रपर्यायस्यापि ग्रहणं न तु स्वरूपस्यैव ॥

( गर्हायां लडपिजात्वोः कालत्रये ) अपि जायां त्यजसि । जातु गणिकामाधत्से ॥

( सुबोधिनी )—गर्हायां लडपिजात्वोः कालत्रये ॥ आभ्यां योगे लट् स्याद्गर्हायाम् कालत्रये परत्वाल्लुङादीनयं बाधते ॥ अपि जायां त्यजसि । त्यक्ष्यसि, अत्याक्षीः, इत्यादिविषये त्यजसीत्यादि लडेव प्रयुज्यत इति भावः ॥ एवं यो जायामत्यजत्, तत्याज, त्यक्ष्यति, अत्याक्षीदित्यादिविषये यो जायामपि त्यजति, जातु गणिकामाधत्ते गर्हितमेतत् ॥

( तत्त्वदी० )—जातु गणिकामिति । गर्हितमेतत् ॥

( वा कथमि लिङ्लटौ गर्हायां कालत्रये ) कथं धर्मं त्यजेस्त्यजसि वा ॥

( सुबोधिनी )—वा कथमि लिङ्लटौ गर्हायां कालत्रये ॥ पक्षे लङ्लिट्लुट्लृट्लृङ्लुङः । भूतानद्यतने लङ् कथं धर्ममत्यजः । परोक्षानद्यतने भूते लिट् कथं धर्मं तत्यक्थ । भविष्यत्यनद्यतने लुट् कथं धर्मं त्यक्तासि । भविष्यत्सामान्ये लृट् कथं धर्मं त्यक्ष्यसि । क्रियातिक्रमेण लृङ् कथं धर्ममत्यक्षत् । भूतसामान्ये लुङ् कथं धर्ममत्याक्षीः ॥

( जातुयद्यदायदियोगे लिङ् लटोऽपवादः ) जातु यद् यदा यदि वा त्वादृशो हरिं निन्देत् नावकल्पयामि, न मर्षयामि ॥

( सुबोधिनी )—जातुयद्यदायदियोगे लिङ् लटोपवादः ॥ अनवक्लृप्त्यमर्षयोर्लिङ् स्यादेषां योगे । अनवक्लृप्तिरसंभावना । अमर्षोऽक्षमा । लटोऽपवादः ॥ लृङ् तु क्रियानिष्पत्तौ भूते वा, भविष्यति तु नित्यमित्यर्थः ॥ जातु भवान् हरिमनिन्दिष्यदित्याद्युदाहर्तव्यम् । अगर्हायामिदम् । गर्हायां तु जातुयोगे लडुक्तः ॥

( तत्त्वदी० )—नावकल्पयामीत्यादि ॥ अनवक्लृप्तिरसंभावना ॥ अमर्षोऽक्षमा ॥

उताप्योर्बाढार्थयोर्लिङ् ॥ समर्थयोरनयोर्लिङ् कालत्रये ॥ उत अपि वा हन्यादघं हरिः ॥ बाढार्थयोरिति किम् । उत दण्डः पतिष्यति । अपि धास्यति द्वारम् ॥

( सुबोधिनी )—उताप्योर्बाढार्थयोर्लिङ् ॥ समर्थयोरनयोर्योगे लिङ् कालत्रये ॥ बाढार्थयोः किम् । उत दण्डः पतिष्यति । अपि धास्यति द्वारमत्र प्रश्न आच्छादनं च गम्यते ॥

( तत्त्वदी० )—समर्थयोरिति ॥ समानाऽर्थो ययोस्तौ तयोः । हलादित्वाट्टिलोपः । समशब्द एव वा तुल्यार्थे । बाढमित्यर्थेऽनयोस्तुल्यार्थता । उत दण्ड इत्यादि ॥ प्रश्न आच्छादनं चार्थः ॥

**( स्वाभिप्रायाविष्करणे गम्ये लिङ् कालत्रये न तु कच्चिति )** कामो मे भुञ्जीत भवानिति ॥ कच्चिदिति किम् । कच्चिज्जीवति मे माता ॥

( सुबोधिनी )—स्वाभिप्रायाविष्करणे गम्ये लिङ् कालत्रये न तु कच्चिति सर्वलकारापवादः ॥ न तु कच्चितीति किम् । कामो मे कच्चिज्जीवति । वर्तमानसामीप्ये इति लट् ॥

**( हेतुहेतुमतोर्भविष्यति लिङ् वा )** कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति ॥

( सुबोधिनी )—हेतुहेतुमतोर्भविष्यति लिङ् वा ॥ हेतुः कारणम् । हेतुमत्फलम् । पक्षे लट् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णनतिः सुखप्राप्तेर्हेतुः । भविष्यत्येवेष्यते । नेह हन्तीति पलायते ॥

( तत्त्वदी० )—हेतुहेतुमतोरिति ॥ हेतुः कारणम् । हेतुमत्फलम् ॥ कृष्णमित्यादि ॥ नमनमात्रं हेतुः सुखप्राप्तिः फलम् ॥

**( इच्छार्थेषु लिङ्लोटौ कामप्रवेदने )** इच्छामि भुञ्जीत, भुङ्क्तां वा भवान् ॥

(सुबोधिनी)—इच्छार्थेषु लिङ्लोटौ कामप्रवेदने ॥ काम इच्छा तस्य प्रवेदनं प्रकाशनं तस्मिन्नर्थे ॥

( तत्त्वदी० )—कामप्रवेदन इति ॥ काम इच्छा । प्रवेदनं प्रकाशनम् ॥

**( इच्छार्थेभ्यो लिङ्लटौ वर्तमानेऽर्थे )** कामयेत । कामयते ॥

( सुबोधिनी )—इच्छार्थेभ्यो लिङ्लटौ ॥ वर्तमाने इति शेषः । इच्छाऽर्थो यषां ते इच्छार्थास्तेभ्यः । तेन वश कान्तावित्यादयोऽपीच्छार्था ग्राह्याः ॥

( तत्त्वदी० )—इच्छार्थेभ्य इति ॥ इच्छा अर्थो येषां ते इच्छार्थाः । तेन वश कान्तौ इत्यादयोऽपीच्छार्था ग्राह्याः ॥

**( पौनःपुन्ये भृशार्थे च धातोर्लोट् सर्वलकारविषये तस्य हिस्वौ सर्वतुबादिविषये तध्वमोर्विषये वा क्रियासमभिहारे द्वित्वं तस्यैव धातोरनुप्रयोगश्च )**

( सुबोधिनी )—पौनःपुन्ये भृशार्थे च धातोर्लोट् सर्वलकारविषये तस्य हिस्वौ सर्वतुबादिविषये तध्वमोर्विषये वा ॥ पौनःपुन्यं भृशार्थश्च धातोरेवार्थः । लोट् द्योतक इति भावः ॥ किं च तुबादीनामादेशत्वेऽपि तेषां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्त्वात् 'ङिच्च पिन्न पिच्च ङिन्न' इति भाष्योक्तत्वात् ङित्त्वाभावे लुनीही

त्यत्र ईहसे इतीत्वं न स्यात् । तृण्ढि इत्यत्र तु तृहो नमि कृते, इमागमः पितीतीमागमो तृणेढि इति च स्यात् । अतो लोटो हिस्वावित्युक्तम् । सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि । आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु । क्रियासमभिहारे इति द्वित्वम् । यस्माद्धातोर्लोड्विहितस्तस्यैव धातोरनुप्रयोगश्च कर्तव्यः । अनुप्रयोगाद्यथायथं लडादयस्तिवादयश्च कर्तव्याः । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिर्भवति । अत्र लोडन्तविषये सङ्ख्याकारकादीनां हिस्वान्तादप्रतीतिस्तद्बोधनायानुप्रयोगो न्यायत एव । याहि याहीति याति, यातः, यान्ति । यासि । पुनः पुनरतिशयेन वा यानं हि प्रत्ययान्तस्यार्थः । एककर्तृकं वर्तमानं यानं यातीत्यस्यार्थः ॥ इतिशब्दस्त्वभेदान्वर्थे तात्पर्यं ग्राहयति । मध्यमपुरुषबहुवचने तशब्दे तु यातयातेति यूयं याथ । पक्षे याहियाहीति यूयं याथ । एवं भूतभविष्यतोरप्युदाहरणम् । याहि याहीति यास्यति । याहियाहीत्ययासीत् । मध्यमपुरुषबहुवचने ध्वशब्दे तु अधीध्वमधीध्वमिति यूयमधीध्वे । पक्षे अधीष्वाधीष्वेत्यधीष्व । भावकर्मणोस्तु भूयस्व भूयस्वेति भूयते । पच्यस्वपच्यस्वेति पच्यते । गद्यस्वगद्यस्वेति गद्यते । भज्यस्वभज्यस्वेति भज्यते । इत्यादि ज्ञेयम् ॥

( तत्त्वदी० )—**पौनःपुन्ये भृशार्थे** चेति ॥ पुनःपुनर्भावः पौनःपुन्यम् । भृशार्थोऽतिशयार्थः । एतद्विशिष्टक्रियावचनाद्धातोरित्यर्थः ॥ **क्रियासमभिहारे द्वित्व**मिति ॥ पौनःपुन्ये भृशार्थे चेत्यर्थः ॥ परस्मैपदिभ्यो हिः कर्तरि, आत्मनेपदिभ्यः स्वः भावकर्मकर्तृषु सकलपुरुषवचनविषये । याहि याहीति यातीति पुनः पुनरतिशयेन वा यानं लोडन्तस्यार्थः । एककर्तृकं वर्तमानं यानं तिबन्तस्य । कालपुरुषविशेषाभिव्यक्तिः सर्वत्र तु प्रयोगादेव बोध्या । इतिशब्दोऽभेदान्वयद्योतकः । भविष्यद्भूतयोरप्युदाहरति ॥ **यास्यतीत्यादि** ॥ स्वमुदाहरन्ति ॥ **अधीष्वेत्यादि** ॥

**( अनेकक्रियासमुच्चये वा लोट् तस्य हिस्वौ तध्वमोर्विषये वा )**

**समानार्थस्य धातोरनुप्रयोगात्तिबादयः ॥ याहि याहीति याति । एवं यातः, यान्ति । यासि, याथः, याथ । यातयातेति यूयं याथ । यामि । यावः । यामः । याहियाहीति यास्यति । अयासीत् ॥ अधीष्वाधीष्वेत्यधीते । एवमन्यत्रापि । ध्वंविषये प्राग्वत् । पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे ॥ सक्तून् पिब, धानाः खादेत्यभ्यवहरति । पिबत, खादतेत्यभ्यवहरथ । अन्नं भुङ्क्ष्व, दाधिकमास्वादयस्वेत्यभ्यवहरते । भुङ्ग्ध्वमास्वादयध्वमित्यभ्यवहरध्वे ॥ इति लकारार्थप्रक्रिया ॥ ॥ इत्याख्यातप्रक्रिया ॥**

( सुबोधिनी )—**अनेकक्रियासमुच्चये तु वा लोट् तस्य हिस्वौ तध्वमोर्विषये वा** ॥ सामान्यार्थस्य धातोरनुप्रयोगात्तिबादयः ॥ चिनोतेर्भावे स्वसद इत्यप्रत्यये कृते समुच्चीयते इति समुच्चयः । अस्मिन् सूत्रे पौनःपुन्ये भृशार्थे चेत्यनुवर्तनाद्द्वित्वमकृत्वैवोदाहरति सक्तून्पिबेत्यादि । तध्वमोस्तु पिबत खादतेति यूयमभ्यवहरथ । पक्षे

पिब खादेति यूयमभ्यवहरथ । भुङ्ग्ध्वमास्वादयध्वमिति यूयमभ्यवहरध्वम् । पक्षे भुङ्क्ष्व, आस्वादयस्वेति यूयमभ्यवहरध्वम् । लोडभावपक्षे सक्तून् पिबति । धानाः खादति । अन्नं भुङ्क्ते । दाधिकमास्वादयते । 'धाना भृष्टयवे स्त्रियाम्' इत्यमरः ॥ दध्ना संस्कृतं दाधिकं व्यञ्जनादि । एतेन "पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः । विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः" इति व्याख्यातम् । अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात् । इह पुनःपुनश्चस्कन्देत्यादिरर्थ इति तु व्याख्यानं भ्रममूलकमेव । द्वितीयसूत्रे क्रियासमभिहारे इत्यस्यानुवृत्तेः, लोडन्तस्य द्वित्वापत्तेश्च । पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषांचिद् भ्रम एव । पुरुषवचनसंज्ञे इह नेत्युक्तत्वात् ॥ इति सुबोधिन्यां लकारार्थप्रक्रिया ॥

बुद्धिमान्द्यवशात्किंचिद्यदशुद्धमलेखि तत् ।
द्वेषभावं समुत्सृज्य शोधनीयं मनीषिभिः ॥

इति श्रीसिद्धान्तचन्द्रिकाव्याख्यायां सदानन्दाख्यायामाख्यातप्रक्रिया समाप्ता ॥

( तत्त्वदी० )–**सक्तून् पिबेत्यादि** ॥ सक्तून् पिब सक्तुपानादिकं करोतीत्यर्थः । एवं पुरीमवस्कन्द लुनीहि नन्दनमित्यादि व्याख्येयम् । अवचस्कन्द लुलावेत्यादि । यत्तु वासुदेवादिभिरतिशयेन पुनःपुनर्वाऽवचस्कन्देत्यादि व्याख्यातं तदसत् । अनेकक्रियासमुच्चये क्रियासमभिहारेऽस्यानुक्तेः लोडन्तद्वित्वापत्तेश्च ॥ इति तत्त्वदीपिकायां लकारार्थप्रक्रिया ॥ १० ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । अगादगाधबुद्धीनां कृतमाख्यातसाधनम् ॥

इति श्रीलोकेशकरविरचितायां सिद्धान्तचन्द्रिकाव्याख्यायां तत्त्वदीपिकायामाख्यातप्रक्रिया संपूर्णा ॥

**इत्याख्यातप्रक्रिया समाप्ता ॥**



# अथ पूर्व कृदन्तप्रक्रिया ।

मूलम्–

**कृत्कर्तरि** ॥ वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्तरि भवन्ति ॥

सुबोधिनी–

प्रतोष्टूय्य जगन्नाथं सदानन्देन सन्मुदा ॥
सिद्धान्तचन्द्रिकावृत्तिः क्रियते कृत्प्रकाशिका ॥ १ ॥

मूलम्–

**कृत्कर्तरि** ॥ उत्सर्गतः कर्तरीति बोध्यम् ॥

( तत्त्वदीपिका )–**कृत्कर्तरीति** ॥ उत्सर्गतः कर्तरीति बोध्यम् ॥

**तृवुणौ** ॥ धातोः ॥ पक्ता ॥

( सुबोधिनी )–**तृवुणौ** ॥ धातोरेतौ स्तः ॥ कर्तरि तृप्रत्ययमाह–पचतीति विग्रहे चोः कुरिति कः । कृत्तद्धितेति नामसंज्ञायां स्यादिर्विभक्तिः । सेरा इति सेरात्वं टिलोपश्च । पक्ता । पाकानुकूलकृतिमान्देवदत्त इत्यर्थः ॥

( तत्त्वदी० )–**धातोरिति** ॥ अधिकारादिदं लब्धमित्याशयः ॥ **पक्तेति** ॥ पचतीति वाक्यम् । चोः कुरिति कुत्वम् ॥

**कृतः** ॥ वसादेः कृत इट् ॥ कुटिता ॥ एधते इति एधिता ॥ गोपायिता–गोपिता–गोप्ता । सहिता–सोढा । एषिता–एष्टा ॥

( सुबोधिनी )–**कृतः** ॥ धातोः परस्य वसादेः कृत्प्रत्ययस्येट् ॥ वसोऽत्र प्रत्याहारः। भवतीति भविता ॥ कुट कौटिल्ये । तुदादिः । कुटादेर्ङ्णिद्वर्जे इति तृप्रत्ययस्य ङित्त्वान्न गुणः । कुटतीति कुटिता ॥ एधते इति एधिता ॥ गुपू रक्षणे । आयादयोऽनपीति वाऽऽदयः । इति आयपक्षे कृत इति नित्यमिट् । अन्यत्र ऊदितो वेति वेट् । गोपायतीति–गोपायिता–गोपिता–गोप्ता । षह मर्षणे । इषुसहाति वेट् । सहते इति सहिता । इडभावे हो ढ इति हस्य ढः । तथोर्ध इति तस्य धः । ष्टुत्वम् । ढि ढ इति ढलोपपूर्वदीर्घौ । सहिवहोरित्योत्वम् । सोढा ॥ इषु इच्छायाम् । इषुसहेति वेट् । इच्छतीति एषिता । इडभावे ष्टुत्वम् । एष्टा ॥

( तत्त्वदी० )–**कृत इति** ॥ **वसादेरिति** ॥ वसप्रत्याहार आदिर्यस्य स तथा तस्य ॥ **कुटितेति** ॥ ङित्त्वान्न गुणः ॥ **सोढेति** ॥ इषुसहेत्यादिना वेट् । ढत्वष्टुत्वढलोपाः । सहिवहोरित्योत्वम् ॥

**युवोरनाकौ** ॥ वाचकः । पाचकः । भावकः ॥ आतो युक् । दायकः । घातकः । जनकः । घटकः । दरिद्रायकः । कोटकः । शमकः । नियामकः ॥

( सुबोधिनी )—वुण्प्रत्ययमाह—णकारो वृद्ध्यर्थः । **युवोरनाकौ** ॥ युश्च वुश्चानयोः समाहारो युवुः तस्य युवोः॥ वक्तीति वाचकः॥ पचति, पाचयतीति वा पाचकः॥ भवति, भावयतीति वा भावकः ॥ यदि ञ्यन्ताद्वुणविधिस्तदा ञेरिति ञिलोपः । ददातीति आतो युगिति युक् । दायकः ॥ हन्तीति । हनो घदिति घत् । घातकः ॥ जनी प्रादुर्भावे । दैवादिकः । जन जनने । जुहोत्यादिः । जनयतीति जनिवध्योरिति न वृद्धिः । ञेरिति ञिलोपः । जनकः ॥ घटयतीति । मितां ह्रस्व इति ह्रस्वः । ञेरिति ञिलोपः । घटकः ॥ दरिद्रातीति । आतो युगिति युक् । दरिद्रायकः । तृप्रत्यये तु कृत इतीट् । दरिद्रातेरनपीत्यालोपः । दरिद्रिता ॥ कुट कौटिल्ये । कुटादेर्ञ्णिद्वर्ज्जे इति वुणोऽङित्वादुपधाया लघोरिति गुणः । कुटतीति कोटकः ॥ शमु उपशमे । मान्तस्य सेटो नेति न वृद्धिः । शाम्यतीति शमकः ॥ यम उपरमे । नियच्छतीति । मान्तस्य सेट इति वृद्धिनिषेधस्तु न वर्तते अस्यानिट्त्वात् । नियामकः ॥

( तत्त्वदी० )—**युवोः** ॥ युश्च वुश्चेति समाहारः । नुम्त्वनित्यत्वान्न । **दायक इति** । आतो युगिति युक् ॥ **जनक** इति ॥ जनिवध्योरिति न वृद्धिः ॥ **कोटक** इति ॥ ञ्णिद्वर्ज्जे इति ङित्त्वाभावाद्गुणः ।

## ( क्रमेः कर्तर्याद्विषयात्कृत इण्न ) प्रक्रन्ता ॥

( सुबोधिनी )—**क्रमेः कर्तर्याद्विषयात्कृत इण्न** ॥ आत्मनेपदविषयात्क्रमेः परस्य कर्तरि कृत्प्रत्ययस्येण्न भवति ॥ प्रोपाभ्यां प्रारम्भार्थाभ्यामिति क्रमेरात्मनेपदविषयता । प्रक्रमते इति प्रक्रन्ता । तृप्रत्ययः ॥ कर्तरि किम् । प्रक्रम्यते इति प्रक्रमितव्यम् । आत्मनेपद इति किम् । संक्रामतीति संक्रमिता ॥

( तत्त्वदी० )—**प्रक्रन्ते**ति ॥ प्रोपाभ्यामित्याद्विषयता ॥

## नाम्युपधात्कः ॥ क्षिपः । बुधः । वृतः ॥

( सुबोधिनी )—**नाम्युपधात्कः** ॥ कप्रत्ययमाह । प्रत्ययाद्या लशकवर्गा इत्संज्ञका भवन्ति तद्धितवर्ज्जम् ॥ कित्त्वाद् गुणो न । बोधतीति बुधः ॥ क्षिप प्रेरणे । क्षिपतीति क्षिपः ॥ तृप्रत्यये तु क्षेप्ता । वुणि तु क्षेपकः । वर्तते इति वृतः ॥

( तत्त्वदी० )—**नाम्युपधा**दिति ॥ नामी अवर्णवर्ज्जः उपधा यस्य स तस्मात् ॥ **क्षिप** इति॥ क्षिपतीति विग्रहः ॥

## ( प्रीकॄज्ञाभ्यश्च ) नुधातोः । प्रियः । किरः । ज्ञः ॥

( सुबोधिनी )—**प्रीकॄज्ञाभ्यश्च** ॥ एभ्योऽपि कः॥ प्रीञ् तर्पणे । प्रीणातीति नुधातोरितीय् । प्रियः ॥ कॄ विक्षेपे । किरतीति ऋत इरितीर् । किरः ॥ जानातीति आतोऽनपीत्यालोपः । ज्ञः ॥

( तत्त्वदी० )–प्रिय इति ॥ प्रीञ्तर्पणे । इगुपधज्ञाप्रीकिरः कः ॥ किर इति ॥ कॄ विक्षेपे । ऋत इर् ॥ ज्ञ इति ॥ आतोऽनपीत्यालोपः ॥

**( उपसर्गे आदन्तात् )** प्रदः । सुज्ञः । सुग्लः ॥

( सुबोधिनी ) उपसर्गे आदन्तात् ॥ उपसर्गे पूर्वपदे आदन्ताद्धातोः कः ॥ प्रददातीति आतोऽनपीत्यालोपः । प्रदः ॥ सुष्ठु जानातीति सुज्ञः ॥ ग्लै हर्षक्षये । सुष्ठु ग्लायतीति सुग्लः ॥

**(पचिनन्दिग्रहादेरयुणिनि)** पचादेरः । नन्द्यादेर्युः । ग्रहादेर्णिनिः ॥ पचः । वदः । चलः । पतः । चरः ॥

( सुबोधिनी )–पचिनन्दिग्रहादेरयुणिनि ॥ द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबद्धयत इत्यादिशब्दः प्रत्येकं योज्यः ॥ पचादेर्धातोरप्रत्ययः । नन्द्यादेर्धातोर्युप्रत्ययः । ग्रहादेर्धातोर्णिनिप्रत्ययः ॥ अप्रत्ययमाह–पचतीति पचः । वदतीति वदः । चल संचलने । चलतीति चलः । पत्लृ पतने । पततीति पतः ॥ चरतीति चरः ॥

( तत्त्वदी० )–पचिनन्दिग्रहादेरित्यादि ॥ द्वन्द्वान्ते श्रूयमाणस्यादिशब्दस्य प्रत्येकं योगः। अश्च युश्च णिनिश्चेति समाहारद्वन्द्वः । एते च गणा न धातुपाठे पठ्यन्ते किं तु नन्दनरमण इत्येवमादिषु नामगणेष्वेवोदाहृत्य प्रकृतयो निर्दिश्यन्त इति ॥ पच इति ॥ पचतीति वाक्यम् । पचादिराकृतिगणः ॥

**( चरिचलिपतिवदीनां वा द्वित्वं पूर्वस्यागप्रत्यये )** चराचरः । चलाचलः । पतापतः । वदावदः ॥

( सुबोधिनी )–चरिचलिपतिवदीनां वा द्वित्वं पूर्वस्याक् अप्रत्यये ॥ अत्र ह्रस्व इति ह्रस्वः पूर्वस्य हसादिः शेष इत्यादिशेषश्च न भवति आगमस्य दीर्घत्वसामर्थ्यात् ॥ चराचर इत्यादि ॥

( तत्त्वदी० )–चरिचलीत्यादि ॥ चराचर इत्यादि ॥ आगागमविधानसामर्थ्याद्धसादिः शेष इति न । तथाहि सति तस्मिन्नागमादेशयोर्विशेषो न स्यात् । दीर्घत्वाविधेर्ह्रस्वोऽपि न ॥

**( हन्तेर्हस्य घत्वं च )** घनाघनः ॥

( सुबोधिनी )–हन्तेर्हस्य घत्वं च ॥ हन्तेर्द्वित्वं पूर्वस्य हस्य घत्वं वाऽप्रत्यये चकारात्पूर्वस्याक्, उत्तरहस्य तु पूर्वाद्धन्तेरिति घः । घनाघनः ॥

( तत्त्वदी० )–हन्तेः ॥ हन्तेः पूर्वस्यैव उत्तरस्य तु पूर्वादित्यनेनैवेति सिद्धम् । चकारात्पूर्वोक्तमपि ॥

**( पाटेर्णिलुक् चोक् च दीर्घश्च पूर्वस्य )** पाटूपटः । हनः । पाटः । नन्दनः । वामनः । क्रमणः । दूषणः । साधनः । वर्धनः । शोभनः । रोचनः । रावणः । सहनः । तपनः । दमनः । जल्पनः । लवणः ।

नत्वं निपात्यम्। कोचनः कुच शब्दे चुरादिः॥ म्लेच्छ अव्यक्ते शब्दे म्लेच्छनः। ग्राही। उत्साही। उद्भासी। स्थायी। मायी। मन्त्री। अयाची। अवाची। अपराधी॥

( सुबोधिनी )—पाटेर्णिलुक् चोक् च दीर्घश्च पूर्वस्य॥ यद्यपि णेरित्यनेनैव णिलोपः सिद्धस्तथापि प्रत्ययलक्षणेनोपधाया वृद्धिर्मा भूदित्येवमर्थं लुक्करणम्। पूर्वं णिलुक्—ततो द्वित्वम्। तत ऊगागमपूर्वदीर्घौ स्तः॥ पाटयतीति पाटूपटः। इहापि ह्रस्वहसादिशेषयोरभावः॥ पक्षे हन्तीति हनः॥ णेरिति णिलोपः। पाटः॥ युप्रत्ययमाह—युवोरीत्यनादेशः। टुणदि समृद्धौ। नन्दयतीति णेरिति णिलोपः। नन्दनः॥ टुवम् उद्गिरणे। ग्लाज्ञावनुवमां चेति वैकल्पिकमित्त्वाभावे वामयतीति वामनः। दुष वैकृत्ये। दुषेर्णाविति दीर्घः। णेरिति णिलोपः। दूषयतीति दूषणः॥ साध संसिद्धौ। साध्यति साधयतीति वा साधनः॥ वृधु वृद्धौ। वर्धते इति वर्धनः॥ शोभते इति शोभनः॥ रोचते इति रोचनः॥ रु शब्दे। रावयतीति। णेरिति णिलोपः। रावणः॥ सह मर्षणे। सहते इति सहनः॥ तप ऐश्वर्ये। दैवादिकः। तप्यते इति तपनः॥ दाम्यतीति दमनः॥ जल्पतीति जल्पनः॥ कुच शब्दे। कोचनः॥ म्लेच्छ अव्यक्ते शब्दे। म्लेच्छतीति म्लेच्छनः॥ लुनातीति लवणः। नन्द्यादिगणे निपातनाण्णत्वम्॥ णिनिप्रत्ययमाह—प्रत्ययाद्यौ चवर्गटवर्गावितौ स्त इति णित्त्वादत उपधाया इति वृद्धिः। गृह्णातीति। इनामिति सौ दीर्घः। नाम्नो न इति नलोपः। ग्राही॥ षह मर्षणे। उत्सहते इति उत्साही॥ उद्भासते इति उद्भासी॥ तिष्ठतीति। आतो युगिति युक्। स्थायी॥ छो छेदने। छ्यतीति छायी॥ पिबतीति पायी॥ मत्रि गुप्तभाषणे चुरादिः। मन्त्रयतीति णेरिति णिलोपः। मन्त्री॥ टु याचृ याच्ञायाम्। न याचते इति ना इति नञोऽदादेशः। अयाची॥ न वदतीति अवादी॥ राध संसिद्धौ। अपराध्यतीति अपराधी॥

( तत्त्वदी० )—पाटेरिति॥ यद्यपि णेरित्यनेनैव णिलोपः सिद्धस्तथापि प्रत्ययलक्षणेनोपधावृद्धिर्माभूदित्येवमर्थं लुक्करणम्॥ पाटूपट इति॥ पूर्ववद्धसादिशेषह्रस्वयोरभावः॥ नन्दन इति॥ नन्दयतीति विग्रहः। टु णादि समृद्धौ॥ युवोरित्यनः। दूषयतीति वाक्यम्। दुष वैकृत्ये। दुषेर्णाविति दीर्घः॥

**दृशादेः शः॥ दृशपाघ्राध्माधेङ्भ्यः शः॥**

( सुबोधिनी )—दृशादेः शः॥ दृशपाघ्राध्माधेङ्भ्यः शप्रत्ययो भवति॥ शप्रत्ययमाह—शस्येत्संज्ञा॥

( तत्त्वदी० )—दृशादेः॥ आदिपदग्राह्यानाह—दृशपाघ्रेत्यादि॥

**शिति चतुर्वत्॥** चतुर्षु तिबादिषु यत्कार्यमुक्तं तच्छिति परे भवति॥ पश्यः। धयः। धमः। जिघ्रः। पिबः। घ्रः संज्ञाया न। व्याघ्रः॥

( सुबोधिनी )—शिति चतुर्वत् ॥ चतुर्ष्विवेति चतुर्वत् ॥ पश्यतीति दृशादेरिति पश्यादेशः। अप् कर्तरीत्यप्। अदे इत्यलोपः। पश्यः॥ पा पाने। पा रक्षणे इत्ययं तु न गृह्यते। लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति न्यायात्। पिबतीति पिबः॥ घ्रा गन्धोपादाने। जिघ्रतीति जिघ्रः॥ ध्मा शब्दाग्निसंयोगयोः। धमतीति धमः॥ धेट् पाने। धयतीति धयः॥ घ्रः संज्ञायां न। संज्ञायां वाच्यायामस्माच्छो न। विशेषेण जिघ्रतीति उपसर्गे आदन्तादिति कः। आतोऽनपीत्यालोपे व्याघ्रः॥

( तत्त्वदी० )—पश्य इति ॥ पश्यतीति विग्रहः। चतुर्वत्करणादपूपश्यादेशौ ॥ एवमन्यत्रापि ॥ अत्र केचिदुपसर्गमनुवर्तयन्ति बहवः। श्रीहर्षोऽपि 'फलानि धूमस्य धयान्' इत्युदाहृतवान्॥ व्याघ्र इति ॥ विशेषेण जिघ्रतीति व्याघ्रः। उपसर्गे आदन्तादिति कः॥

**( अनुपसर्गेभ्यो लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यः शः ) लिम्पः। विन्दः। धारयः। पारयः। वेदयः। उदेजयः। चेतयः। सातिः सुखे। सातयः। साहयः॥**

( सुबोधिनी )—अनुपसर्गेभ्यो लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यः शः ॥ लिप उपदेहे। विद्लृ लाभे। तौदादिकाविमौ। भाविना मुमा निर्दिष्टौ। तेन लाभार्थस्यैव विंदेर्ग्रहणं न तु सत्ताद्यर्थकस्य। लिम्पतीति। विन्दतीति तुदादेरित्यः। अदेरित्यलोपः। लिम्पः। विन्दः। मुचादेरिति मुम्॥ धृञ् धारणे। धृङ् अवस्थाने। ञ्यन्तयोर्द्वयोरपि ग्रहणम्। धारयतीति धारयः॥ पार कर्मसमाप्तौ चुरादिः। पॄ पालनादौ इति ञ्यन्तो वा। पारयतीति पारयः॥ विद चेतनादिषु चुरादिः। ज्ञानाद्यर्थानामन्यतमो ञ्यन्तो वा। वेदयतीति वेदयः॥ उत्पूर्वः एजृ कम्पने। ञ्यन्तः। उदेजयतीति उदेजयः॥ चित संचेतने चुरादिः। चेतयतीति चेतयः॥ सातिः सुखे। सौत्रः। सातयतीति सातयः॥ क्विप्प्रत्यये तु सात् परमात्मा सात् विद्यते येषां ते सात्वन्तो भक्ताः॥ षह मर्षणे चुरादिः। प्रयोजकञ्यन्तो वा। साहयतीति साहयः॥ अनुपसर्गेभ्य इति किम्। प्रलिपः। नाम्युपधादिति कः॥

( तत्त्वदी० )—अनुपसर्गेभ्यः॥ लिप उपदेहे। विद्लृ लाभे। समुमनिर्देशाल्लाभार्थादन्येषामग्रहणम्॥ धृञ् धारणे। धृङ् अवस्थाने। द्वयोरपि ञ्यन्तयोर्ग्रहणम्॥ पार कर्मसमाप्तौ। पॄ पालनपूरणयोरिति वा ञ्यन्तः॥ विद चेतनाख्याननिवासेषु। चुरादिञ्यन्तः। ज्ञानाद्यर्थानामन्यतमो वा प्रेरणञ्यन्तः। उत्पूर्व एजृ कम्पने॥ षह मर्षणे चुरादिः। प्रेरणार्थञ्यन्तो वा॥ लिम्पविन्दोस्तुदादित्वादः। मुचादित्वान्मुम्। धारयादिष्वबादयोगणाः यादृशाः॥

**( नौ लिम्पेः ) निलिम्पाः देवाः॥**

( सुबोधिनी )—नौ लिम्पेः॥ नौ पूर्वपदे शः॥ निलिम्पतीति निलिम्पा देवाः॥

**( गवादिषु विन्देः संज्ञायाम् ) गोविन्दः। अरविन्दम्॥**

( सुबोधिनी )—गवादिषु विन्देः संज्ञायाम् ॥ कार्येऽण् इत्यस्यापवादोऽयम्। गां विन्दतीति गोविन्दः ॥ चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठान्यरा उच्यन्ते। अराकाराणि दलानि तत्साहश्यादरास्तान् विन्दते लभत इत्यरविन्दम् ॥

( तत्त्वदी० )—अरविन्दमिति ॥ चक्रनाभिनेम्यन्तरालस्थितकाष्ठान्यरास्तदाकाराणि दलानि विन्दति प्राप्नोतीति विग्रहः ॥

## ( दाञ्धाञोर्वा ) ददः। दधः।

( सुबोधिनी )—दाञ्धाञोर्वा। अनुपसर्गाभ्यामाभ्यां वा शः ॥ ददातीति दधातीति। ह्वादेरिति द्वित्वम्। शस्य ङित्त्वाद्दादेरित्यलोपः। ददः। दधः। पक्षे ज्वलादेरिति णः। आतो युगिति युक्। दायः। धायः ॥ उपसर्गे किम्। प्रदः। प्रधः। उपसर्गे इति कः। दद दाने दध धारणे। एतयोरपि ददः दध इवि ॥

( तत्त्वदी० )—पश्य इति ॥ पश्यतीति विग्रहः। चतुर्वेत्करणादप्पश्यादेशौ ॥ एवमन्यत्रापि ॥ अत्र केचिदुपसर्गमनुवर्तयन्ति बहवः। श्रीहर्षोऽपि 'फलानि धूमस्य धायान्' इत्युदाहृतवान् ॥ व्याघ्र इति ॥ विशेषेण जिघ्रतीति व्याघ्रः। उपसर्गे आदन्तादिति कः ॥

## ज्वलादेर्णः ॥ ज्वालः। तापः ॥ ( श्यादेश्च ) अवश्यायः। दायः। धायः ॥

( सुबोधिनी )—ज्वलादेर्णः ॥ अनुपसर्गाज्ज्वलादेर्वा णः ॥ णप्रत्ययमाह—णकारो वृद्ध्यर्थः। ज्वलतीति ज्वालः। चलतीति चालः। तप संतापे। तपतीति तापः। पक्षे पचादेरित्यः ज्वलः। चलः। तपः। उपसर्गे तु। उज्ज्वलः ॥

( तत्त्वदी० )—ज्वलादेरिति ॥ पान्थ इत्यादौ ज्वलादिपाठसामर्थ्याद्वृद्धौ सत्यां नुम्। अण प्यत्रेति केचित्। 'प्रियाङ्गपान्थः कुचयोर्निपत्य' इति श्रीहर्षोऽपि ॥

## कार्येऽण् ॥ कर्मण्युपपदे धातोरण् ॥ कुम्भकारः ॥

( सुबोधिनी )—कार्येऽण् ॥ अणप्रत्ययमाह—णकारो वृद्ध्यर्थः। कुम्भं करोतीत्यत्राणि कृते कर्तृकार्ययोरिति षष्ठ्यन्तस्य कुम्भशब्दस्य नाम्नश्च कृतेति कारशब्देन समासः ॥ कुम्भस्य कारः कुम्भकारः। कथं तर्हि गङ्गाधरभूधरादय इति। पदसंस्कारपक्षे धरतीति धरः गङ्गायाः धरः गङ्गाधरः इति शेषे कृति वेति कर्मणि या षष्ठी तदन्तेन समासः ॥

( तत्त्वदी० )—कुम्भकार इति ॥ कुम्भं करोतीति नित्यसमासार्थमस्वपदविग्रहः। इत्थाणि कृते कर्तृकार्ययोरिति षष्ठ्यन्तेन कुम्भशब्देन कारशब्दस्य समासः। गङ्गाधर इत्यादौ अचि गङ्गाधर इति विग्रहो बोध्यः ॥

## ( ह्वावामाभ्यश्च ) स्वर्गह्वायः। तन्तुवायः। धान्यमायः ॥

( सुबोधिनी )—ह्वावामाभ्यश्च ॥ कर्मण्युपपदे एभ्योऽप्यण् ॥ आतो ड इत्यस्यापवादः ॥ स्वर्गं ह्वयतीति सन्ध्यक्षराणामित्यात्वे आतो युक्। स्वर्गह्वायः ॥ वेञ

तन्तुसन्ताने । तन्तुं वयतीति तन्तुवायः ॥ माङ् माने । मेङ् प्रणिदाने । अनयोरिह ग्रहणं न तु मा माने इत्यस्याकर्मकत्वात् धान्यं मिमीते इति धान्यमायः ॥

**( शीलिकामिभक्ष्याचरिक्षमीक्षिभ्यो णः ) मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा । बहुक्षमा । सुखप्रतीक्षा ॥**

( सुबोधिनी )–शीलिकामिभक्ष्याचरिक्षमीक्षिभ्यो णः ॥ णप्रत्ययमाह–णो वृद्ध्यर्थः ॥ शीलसमाधौ । मांसं शीलतीति आवतः स्त्रियामित्याप् । मांसशीला ॥ मांसं कामयते इति कर्मण्यिङिति णिङ् । णेरिति णिलोपः । मांसकामा ॥ भक्ष अदने चुरादिः । मांसं भक्षयतीति मांसभक्षा ॥ कल्याणमाचरतीति कल्याणाचारा ॥ क्षमूष् सहने । बहून् क्षमत इति बहुक्षमा ॥ ईक्ष दर्शनादौ । सुखं प्रतीक्षे इति सुखप्रतीक्षा ॥

**आतो डः ॥ कर्मण्युपदे आदन्ताड्डः । गोदः । धनदः । पार्ष्णित्रः ॥**

( सुबोधिनी )–आतो डः ॥ अनुपसर्गादित्येव ॥ डप्रत्ययमाह–अणोऽपवादः । डित्त्वाट्टिलोपः । गां ददातीति गोदः ॥ धनं ददातीति धनदः ॥ पार्ष्णि पश्चात्पदं त्रायते इति पार्ष्णित्रः ॥ अनुपसर्गे किम् । गोसंदायः । अण् युक् च ॥

( तत्त्वदी० )–आतो डः ॥ यद्यपि कप्रत्ययेनैवातोऽनपीत्यालोपे रूपसिद्धिस्तथाप्युत्तरार्थं डित्त्वम् । तथा च द्विज इत्यादिसिद्धिः फलम् ॥

**नाम्नि च ॥ नाम्न्युपपदे धातोर्डः ॥ द्विजः । द्विपः । गृहस्थः । गिरिशः । पादपः ॥**

( सुबोधिनी )–नाम्नि च ॥ नाममात्र इत्यर्थः । आदन्तादित्येव ॥ द्वाभ्यां मुखशुण्डाभ्यां पिबतीति द्विपः ॥ गृहे तिष्ठतीति गृहस्थः ॥ गिरावुपपदे डः छन्दस्येव नान्यत्र भाष्याद्यनुक्तत्वात् । गिरौ शेत इति गिरिशः ॥ पादैः पिबतीति पादपः ॥ कथं तर्हि 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' इति । गिरिरस्यास्तीति गिरिशः । लोमादित्वाच्छः ॥

( तत्त्वदी० )–नाम्नि चेति ॥ नाममात्र इत्यर्थः ॥ द्विप इति ॥ द्वाभ्यां शुण्डादण्डमुखाभ्यां पिबतीति द्विपः । द्विर्जायते इति द्विजः 'मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्, इत्युक्तेः ॥

**( शुचः शू द्रे ) शुचं द्रवतीति शूद्रः ॥**

( सुबोधिनी )–शुचः शू द्रे ॥ शुचः शब्दस्य शूरादेशो द्रे परे चाव द्रु धातोर्डप्रत्ययः ॥ द्रु गतौ । शुचं द्रवतीति शूद्रः ॥

( तत्त्वदी० )–शुचः शूद्र इति ॥ शुचः शू इत्ययमादेशः द्रे पर इत्यर्थः । शुचं द्विजसेवारूपं शोकं द्रवति प्राप्नोतीति शूद्रः ॥

**( उरसो लोपो सुम्वा डान्तेगमौ ) उरगः–उरंगः ॥**

( सुबोधिनी )—उरसो लोपो मुम्वा डान्तेगमौ ॥ उरस्शब्दस्य सस्य लोपः गमेर्डश्च वा मुमागमः ॥ उरसा गच्छतीति उरगः—उरंगः ॥

( तत्त्वदी० )—उरसो लोप इति ॥ सस्येत्यर्थः ॥ उरसा गच्छतीति विग्रहः ॥

## ( विहायसो विहो मुम्वा डान्तेगमौ ) विहगः—विहङ्गः ॥

( सुबोधिनी )—विहायसो विहो मुम्वा डान्तेगमौ ॥ विहायस्शब्दस्य विह आदेशः गमेर्डश्च वा मुम् ॥ विहायसा आकाशेन गच्छतीति विहगः—विहंगः ॥

## ( भुजतुरयोर्मुम्वा ) डान्तेगमौ । भुजगः—भुजङ्गः । तुरगः—तुरङ्गः ॥

( सुबोधिनी )—भुजतुरयोर्मुम्वा ॥ अनयोरुपपदयोर्गमेर्डः अनयोर्मुम् च वा ॥ भुजेन कौटिल्येन गच्छतीति भुजगः—भुजंगः ॥ तुरेण वेगेन गच्छतीति तुरगः—तुरंगः ॥

( तत्त्वदी० )—भुजग इति ॥ भुजेन कौटिल्येन गच्छतीति विग्रहः ॥

## ( संप्रसारणिभ्यो डः ) कापवादः ॥ प्रज्यः । आह्वः । प्रह्वः ॥

( सुबोधिनी )—संप्रसारणिभ्यो डः ॥ उपसर्गे आदन्तादित्यस्यापवादः । संप्रसारणं येषां धातूनामस्ति ते संप्रसारणिनस्तेभ्यो डः ॥ ज्या वयोहानौ । प्रजिनातीति प्रज्यः ॥ ह्वेञ् स्पर्द्धायाम् । आह्वयतीति आह्वः ॥ प्रह्वः ॥

( तत्त्वदी० )—प्रसारणिभ्य इति ॥ कापवाद इति ॥ के तु संप्रसारणं स्यादिति भावः ॥ प्रज्य इति ॥ प्रजिनातीति विग्रहः ॥

## ( तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः कः ) तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता ॥

( सुबोधिनी )—तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः कः ॥ तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः आलस्यसुखाहरणयोरर्थयोः । नुदोरिति पञ्चम्यर्थे षष्ठी ॥ पुनः कप्रत्ययमाह—कित्वान्न गुणः । मृजूष् शुद्धौ । तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । अत्र मृजेर्वृद्धिरिति वैकल्पिकी वृद्धिर्नेत्येके । स्यादेवेत्यन्ये ॥ णुद प्रेरणे । शोकमपनुदतीति शोकापनुदः सुखस्याहर्ता सुखाभिलाषी । अलसादन्यत्र तुन्दपरिमार्जः । यश्च संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः । अणेव ॥

( तत्त्वदी० )—तुन्दशोकयोरिति ॥ तुन्दशोकयोरुपपदयोः । परिपूर्वो मृजूष् शुद्धौ अपपूर्वो णुद प्रेरणे इत्यनयोः पञ्चम्यर्थे षष्ठी । आलस्यसुखाहरणयोरर्थयोः ॥ तुन्दपरिमृजोऽलस इति ॥ य आलस्यात्तुन्दं परिमार्ष्टि स एवमुच्यते । मृजेर्वा वृद्धिरिति तु व्यवस्थितविभाषया न । अलसादन्यत्र तुन्दपरिमार्ज एव ॥ शोकापनुदः इति ॥ यस्तु संसारानित्यताद्युपदेशेन शोकमेवापनुदति स शोकापनोद एव ॥

**( मूलविभुजादेः कः ) मूलानि विभुजतीति मूलविभुजो रथः ।**
**कुध्रः । महीध्रः । गिरः—गिलः ॥**

( सुबोधिनी )—मूलविभुजादेः कः ॥ मूलानि विभुंजतीति भुजोऽकौटिल्ये मूलविभुजः ॥ धृञ् धारणे । महीं धरतीति महीध्रः पर्वतः । कुं धरतीति कुध्रः ॥ गॄ निगरणे गिलतीति ऋत इरितीर् । गिरतेः स्वरे इति वा लः । गिलः ।

( तत्त्वदी० )—मूलविभुजादेरिति ॥ मूलविभुज इत्यादे रूपस्य सिद्धये को वक्तव्य इति व्याख्येयम् ॥

**( गष्टक् ) सामगः । सामगी स्त्री ॥**

( सुबोधिनी )—गष्टक् ॥ कर्मण्युपपदेऽनुपसर्गाद्गायतेष्टक् ॥ टक्प्रत्ययमाह—टः ष्ट्रित इति ईबर्थः ॥ गै शब्दे न तु गाङ् गतौ गा स्तुतावित्यनयोर्ग्रहणमनभिधानात् । साम गायतीति आतोऽनपीत्यालोपः । सामगः स्त्री सामगी ॥ उपसर्गे किम् । सामसंगायः । अण् युक् च ॥

( तत्त्वदी० )—गष्टगिति ॥ गै शब्दे इत्यस्यैव ग्रहणं न तु गाङ् गतौ गा स्तुतावित्यनयोः अनभिधानात् ॥ सामगीति ष्ट्रित इतीप् ॥

**( पिबतेः सुराशीध्वोः ) सुरापी । शीधुपी ॥**

( सुबोधिनी )—पिबतेः सुराशीध्वोः ॥ सुराशीध्वोरुपपदयोः पिबतेष्टक् ॥ सुरां पिबतीति सुरापी ॥ शीधु मद्यं पिबतीति शीधुपी । अन्यत्र ड एव । क्षीरपा ब्राह्मणी ॥

( तत्त्वदी० )—सुरापीति ॥ सुरां पिबतीति विग्रहः ।अन्यत्र सुरां पातीति सुरापा । क्षीरपा ॥

**अटौ ॥ नाम्नि कार्ये च अकारटकारौ प्रत्ययौ ॥ अस्थिहरः श्वा । कवचहरः कुमारः । धनुर्धरो युवा । कुरुचरः । पुरःसरः । अग्रेसरः । पार्श्वशयः । पृष्ठशयः । शक्तिग्रहः । पूजार्हा । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः । यशस्करी विद्या । श्राद्धकरः । वचनकरः । कर्मकरः । दिवाकरः । निशाकरः ॥**

( सुबोधिनी )—अटौ ॥ नाम्नि कार्ये च अकारटकारौ प्रत्ययौ भवतः ॥ अप्रत्ययमाह—अस्थि हरतीति अस्थिहरः ॥ कवचं हरतीति कवचहरः ॥ धनुर्धरतीति धनुर्धरः ॥ पार्श्वाभ्यां शेते इति पार्श्वशयः ॥ पृष्ठेन शेते इति पृष्ठशयः ॥ शक्तिं गृह्णातीति शक्तिग्रहः ॥ अर्ह पूजायाम् । पूजामर्हतीति पूजार्हा ब्राह्मणी ॥ स्तम्बे रमते इति सप्तम्या अलुक् । स्तम्बेरमः ॥ कर्णे जपतीति सप्तम्या अलुक् । कर्णेजपः सूचकः पिशुनः ॥ टप्रत्ययमाह—ट ईबर्थः । कुरुषु देशेषु चरतीति कुरुचरः । स्त्री कुरुचरी ॥ पुरः सरतीति पुरःसरः । अग्रे सरतीति एदन्तत्वं निपात्यते अग्रेसरः ॥ हेतुताच्छील्यानुलोम्येषु कृञष्टः । हेतौ यशः करोतीति यशस्करी । सहादित्वात्सः । ताच्छील्ये श्राद्धं

करोतीति श्राद्धकरः । आनुलोम्ये वचनं करोतीति वचनकरः । एषु किम् । कुम्भकारः अणेव ॥ कर्मशब्दपूर्वात् कृञो वेतने टः । कर्म करोतीति कर्मकरो भृतकः । अन्यः कर्मकारः अणेव । दिवाऽव्ययं दिवसवाची । दिवा करोतीति दिवाकरः ॥

( तत्त्वदी० )—**अटौ** ॥ अश्च टश्च अटौ । कर्मत्वविशेषात्रिवक्षायामपि यथा स्यादित्येवमर्थं कार्यस्यानुवर्तनम् । अन्यथा कार्ये अणेव स्यात् ॥ **अस्थिहर** इति ॥ अस्थि हरतीति विग्रहः ॥ **कुरुषु चरती**ति ॥ टित्त्वादीप् ॥

**इखखि ॥ नाम्नि कार्ये च ॥ शकृत्कारिः । स्तम्बकारिः । फलानि गृह्णातीति फलेग्राहिः फलस्यैदन्तत्वं निपातनात् । दृतिहरिः । नाथहरिः । देवापिः । वातापिः ॥**

( सुबोधिनी )—**इखखि** ॥ स्तम्बशकृत्पूर्वात्कृञ इर्व्रीहिवत्सयोरर्थयोः ॥ इप्रत्ययमाह—स्तम्बं करोतीति स्तम्बकारिर्व्रीहिः । शकृत्पुरीषं करोतीति शकृत्कारिर्वत्सः ॥ अनयोः किम् । स्तम्बकारः । शकृत्कारः । अणेव ॥ फलानि गृह्णातीति एदन्तत्वं निपात्यते । फलेग्राहिः ॥ दृतिनाथपूर्वाद्धरतेरिः पशौ कर्तरि । दृतिश्चर्ममयी खल्ला इति ख्याता । तां हरतीति दृतिहरिः पशुः ॥ नाथं नासारज्जुं हरतीति नाथहरिः ॥ पशौ किम् । दृतिहारः । नाथहारः । अणेव ॥ आप्लृ व्याप्तौ । देवान् आप्नोतीति देवापिः ॥ वातान् आप्नोतीति वातापिः ॥

( तत्त्वदी० )—**इखखि** ॥ इश्च खश्च खिश्च एतेषां समाहारः इखखि ॥

**खिति पदस्य ॥ खिति परेऽनव्ययपूर्वपदस्य मुम् ॥ सर्वंकषः । कूलंकषः । करीषंकषः ॥**

( सुबोधिनी )—**खिति पदस्य** ॥ खिदन्ते परेऽनव्ययस्य पूर्वपदस्य मुम् ॥ खप्रत्ययमाह-खित्वान्मुम् । सर्वकूलाभ्रकरीषपूर्वात्कषः खः ॥ कष हिंसायाम् । सर्वं कषतीति सर्वंकषः खलः । कूलं कषतीति कूलंकषा नदी । अभ्रं कषतीति अभ्रंकषो वायुः । 'करीषं गोमयं शुष्कम्' इत्यमरः ॥ करीषं कषतीति करीषंकषा वात्या ॥

( तत्त्वदी० )—**खिति** ॥ ख् इद्यस्य खित् तस्मिन् ॥

**( वाचंयमादयो निपात्याः ) वाचंयमः । पुरंदरः । द्विषंतपः । परंतपः । कुक्षिंभरिः । उदरंभरिः । आत्मंभरिः ॥**

( सुबोधिनी )—**वाचंयमादयो निपात्याः** ॥ वाक्पूर्वाद्यमेः खो व्रतेऽर्थे ॥ यमु उपरमे । वाचं यच्छतीति वाक्पुरोरदन्तत्वं निपात्यते । वाचंयमो मौनव्रती ॥ व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः । अणेव ॥ दॄ विदारणे । पुरं दृणातीति पुरंदरः ॥ दॄ भये दृङ् आदरे एतयोर्ग्रहणं न संप्रदायात् । द्विषत्परपूर्वात्तापेः खः । द्विषन्तं परं वा तापयतीति ञेरिति ञिलोपः । उपधाह्रस्वत्वं निपात्यते । मुमि कृते संयोगान्तस्येति तलोपः । द्विषंतपः । परंतपः ॥ खिप्रत्ययमाह—आत्मोदरकुक्षिषु भृञः खिः । आत्मानं

बिभर्तीति मुमि कृते संयोगान्तस्येति नलोपः । आत्मंभरिः । कुक्षिमुदरं वा बिभर्तीति कुक्षिंभरिः, उदरंभरिः ॥ पुनः खप्रत्ययमाह ॥

**( आशिते भुवो भावकरणयोः खः ) आशितेन भूयते आशितंभवः । आशितो भवत्यनेनेति वा ॥**

( सुबोधिनी )—आशिते भुवो भावकरणयोः खः ॥ आशितशब्दे उपपदे भवतेः खः भावे करणे च ॥ यावतौदनेनातिथ्यादिर्भोजितो भवति स ओदन आशितंभव उच्यते ॥

( तत्त्वदी० )—आशितंभव इति ॥ यावता ओदनेनातिथ्यादिर्भोजितो भवत्याशितंभवः स एवमुच्यते ॥

**एजो खश् ॥ जनानेजयतीति जनमेजयः । आत्मानं पण्डितं मन्यते इति पण्डितंमन्यः । मुञ्जं धयतीति मुञ्जंधयः । कूलंधयः ॥**

( सुबोधिनी )—एजो खश ॥ एजादिभ्यः खश् ॥ खश्प्रत्ययमाह—खित्त्वान्मुम् । शित्त्वाच्चतुर्वत्कार्यम् । एजृ कम्पने । जनमेजयतीति अप् कर्तरीत्यप् । अद इत्यलोपः । जनमेजयः ॥ पण्डितमात्मानं मन्यते इति दिवादेरिति यः । पण्डितंमन्यः । णिनिप्रत्यये पण्डितमानी । मुञ्जं धयतीति अयादेशेन धेटो धय् । मुञ्जंधयः ॥

( तत्त्वदी० )—एजामिति ॥ बहुवचनमाद्यर्थम् ॥

**( खशन्ते पूर्वपदस्यानव्ययस्य ह्रस्वः ) मुष्टीं धयतीति मुष्टिंधयः । नाडिंधमः । नासिकंधयः । अनव्ययस्य किम् । दिवामन्या रात्रिः । दोषामन्यमहः । कूलमुद्रुजः । कूलमुद्वहः । अरुंतुदः ॥**

( सुबोधिनी )—खशन्ते पूर्वपदस्यानव्ययस्य ह्रस्वः ॥ मुष्टीं धयतीति मुष्टिंधयः । मुष्टीं धमतीति मुष्टिंधमः । नाडीं धमतीति नाडिंधमः । नासिकां धयतीति नासिकंधयः । नाडीमुष्टीनासिकानां ह्रस्वः । दृशादेरिति ध्माधातोर्धम् । धेटोऽयादेशः ॥ अनव्ययस्य किम् । दिवामन्या रात्रिः । दोषामन्यमहः । रुजो भङ्गे । कूलमुद्रुजतीति । कूलमुद्रुजः । तुदादेरित्यः । कूलमुद्वहतीति कूलमुद्वहः । अरुस्तुदतीति अरुंतुदः । मुमि कृते संयोगान्तस्येति सलोपः । 'व्रणोऽस्त्रियामीर्ममरुः' इति 'अरुंतुदस्तु मर्मस्पृक्' इति चामरः ॥

( तत्त्वदी० )—अरुंतुद इति ॥ व्रणोऽस्त्रियांमीर्ममरुः । अरुः तुदतीति विग्रहः । उकारान्तमग्रे मुमि कृते संयोगान्तस्येति सलोपः ॥

**( दारावाहनोऽणन्तस्य च टः संज्ञायाम् ) हनो घत् ।उवम् ।दारु आहन्तीति दार्वाघाटः ॥**

( सुबोधिनी )–दारावाहनोऽणन्तस्य च टः संज्ञायाम् ॥ दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् अन्तस्य तस्य टश्च स्यात् ॥ पुनरणप्रत्ययमाह–ञ्णित्वाद्वृद्धिः । दारु आहन्तीति हनोघदिति घत् । उवमिति वः । दार्वाघाटः । सूत्रे शब्दापेक्षया दाराविति पुंस्त्वम् । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥ टकारविधानार्थमिदं सूत्रम् । अण् तु कार्ये णित्यनेनैव सिद्धः । अन्तग्रहणं स्पष्टार्थम् ॥

( चारौ वा ) चार्वाघाटः–चार्वाघातः ॥

( सुबोधिनी )–चारौ वा ॥ चारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण्, वा टः ॥ चारु आहन्तीति चार्वाघाटः–चार्वाघातः ॥

( कर्मणि संपूर्वाच्च ) वर्णान् संहन्तीति वर्णसंघाटः–वर्णसंघातः । पदं संहन्तीति पदसंघाटः–पदसंघातः ॥

( सुबोधिनी )–कर्माणि संपूर्वाच्च ॥ कर्मण्युपपदे संपूर्वाद्धन्तेरण्, वा टः ॥ वर्णान् संहन्तीति वर्णसंघाटः–वर्णसंघातः । एवं पदानि संहन्तीति पदसंघाटः–पदसंघातः ॥

( जायापत्योष्टक् लक्षणवति कर्तरि ) गमां स्वरे । हनो घ्ने । जायां हन्तीति जायाघ्नो ना । पतिघ्नी स्त्री ॥

( सुबोधिनी )–जायापत्योष्टक् लक्षणवति कर्तरि ॥ हन्तेष्टक् । टक्प्रत्ययमाह–टित्त्वात् स्त्रित इतीप् । मरणसूचकं पाणिरेखादिकं लक्षणं यस्यास्ति स लक्षणवान् तस्मिन्कर्तरि सति । जायां हन्तीति । 'गमां स्वरे' इत्युपधालोपः । हनो घ्ने इति घः । जायाघ्नो ना । पतिघ्नी स्त्री ॥

( तत्त्वदी० )–जायापत्योरिति ॥ कथं प्रलम्बघ्नः कृतघ्नः शत्रुघ्नः इत्यादि । मूलविभुजादित्वात् को बोध्यः ॥

( अमनुष्यकर्तृके च ) पतिघ्नी पाणिरेखा । जायाघ्नस्तिलकालकः ॥

( सुबोधिनी )–अमनुष्यकर्तृके च ॥ कर्मण्युपपदे हन्तेष्टक मनुष्यभिन्ने कर्तरि सति ॥ जायाघ्नस्तिलकालकः । पित्तघ्नं घृतम् ॥ अमनुष्येति किम् । आखुघातः शूद्रः श्वणेव । कथं तर्हि 'बलभद्रः प्रलम्बघ्न' इति शत्रुघ्नः कृतघ्नः इति च । मूलविभुजादित्वात्कः ॥

( पाणिघताडघौ शिल्पिनि निपात्यौ ) पाणिघः । ताडघः । शिल्पिनि किम् । पाणिघातः । ताडघातः ॥

( सुबोधिनी )–पाणिघताडघौ शिल्पिनि निपात्यौ ॥ पाणिताडयोरुपपदयोर्हन्तेष्टक् टिलोपघत्वे च निपात्येते । पाणिं हन्तीति पाणिघः । ताडं हन्तीति ताडघः क्रियासु कौशल्यं शिल्पं तदस्यास्तीति शिल्पी ॥ शिल्पिनि किम् । पाणिघातः । ताडघातः । कार्येऽणित्यण् ॥

( तत्त्वदी० )–शिल्पिनीति ॥ क्रियासु कौशल्यं शिल्पं तदस्यास्तीति शिल्पी तस्मिन् ॥

**( राजघश्च ) राजानं हन्तीति राजघः ॥**

( सुबोधिनी )–राजघश्च ॥ राज्ञि हन्तेष्टक् टिलोपघत्वे च ॥ राजानं हन्तीति राजघः ॥

**भजां विण् ॥ वेः ॥ लोपः । अर्द्धभाक् । सुखभाक् । तुराषाट् । भारवाट् ॥**

( सुबोधिनी )–भजां विण् ॥ नाम्न्युपपदे भजादेर्विण् ॥ विण्प्रत्ययमाह–णित्वा-द्वृद्धिः । वेरिति विलोपः । अर्द्धं भजतीति अर्द्धभाक् । चोः कुरिति कः ॥ सुखं भजती-ति सुखभाक् ॥ षह मर्षणे । तुरां सहते इति सहेः षः, साढीति षत्वम् । तुरापाद् । केचित्तुरशब्दमदन्तमाहुः । तन्मतेऽन्येषामपीति पूर्वपदस्य दीर्घः ॥

( तत्त्वदी० )–भजामिति ॥ बहुवचनमाद्यर्थम् ॥ तुराषाडिति ॥ तुरं वेगं सहते इति विग्रहः । अन्येषामपीति अन्त्यस्वरस्य दीर्घः सहादित्वाद्वा । तुरं न सहत इति कश्चित् । तद्बहूनामसंमतम् ॥

**( अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः ) च्वौ दीर्घ ई चास्य ॥ च्वौ परेऽवर्णस्य ई ॥ इदुतोर्दीर्घः । मिथुनीकरणम् । शुक्लीभावः । शुचीभवति । सहायीस्यात् । हेतूकृतम् ॥**

( सुबोधिनी )–अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः ॥ नाम्नश्च्विप्रत्ययः न प्रागभूतमभूतम् अभूतस्य तेन भवनम् भूततद्भावस्तस्मिन्नर्थे कृ भू अस् एषां धातूनाम-न्वये सति । च्विप्रत्ययमाह–च्वौ दीर्घ ई चास्य ॥ च्वौ परे अवर्णस्य ईकारः इदुतो-श्च दीर्घः ॥ च्वाविति विशेषणार्थे । वेरितिं विलोपः । क्त्वाद्यन्तं चेति च्व्यन्तस्याव्यय-त्वाद्विभक्तेर्लुक् । अमिथुनं मिथुनं क्रियत इति मिथुनीकरणम् । अशुक्लस्य शुक्लेन भवन-मिति शुक्लीभावः । असहायः सहायः स्यादिति सहायीस्यात् । अहेतुना हेतुना कृत-मिति हेतूकृतम् ॥ कृभ्वस्तियोगे इति किम् । अशुक्लः शुक्लो जायते ॥

**( च्वौ सलोपः ) सुमनीभावः । अरूकरोति । चक्षूकरोति । सुचे-तीभावः । रहीभवति । विरजीकरोति ॥**

( सुबोधिनी )–च्वौ सलोपः ॥ अरुर्मनश्चक्षुश्चेतोरहोरजसां सस्य लोपः च्विप्रत्यये ॥ असुमनसः सुमनसा भवनमिति सुमनीभावः । अनरुररुः करोतीति अरूकरोति । अच-क्षुश्चक्षुः करोतीति चक्षूकरोति । असुचेताः सुचेता भवतीति सुचेतीभवति । अरहो रहो भवतीति रहीभवति । अविरजो विरजः करोतीति विरजीकरोति ॥

**( क्वचिड्डा ) सुखं करोतीति सुखाकरोति । दुःखाकरोति । शंबा-करोति । द्विगुणाकरोति । बीजाकरोति ॥**

( सुबोधिनी )–क्वचिड्डा ॥ नाम्नो डाप्रत्ययः कृञो योगे ॥ दुःखात्प्रातिलोम्ये डा ॥ डाप्रत्ययमाह–डित्वाट्टिलोपः क्त्वाद्यन्तं चेति डाप्रत्ययान्तस्याव्ययत्वाद्विभक्ते-

लुक् ॥ दुःखाकरोति। स्वामिनं पीडयतीत्यर्थः ॥ सुखप्रियाभ्यामानुलोम्ये डा। सुखाकरोति प्रियाकरोति वा गुरुम्। अनुकूलाचरणेनानन्दयतीत्यर्थः ॥ शम्बद्विगुणबीजेभ्यो डा कृषिवाच्ये। शम्बाकरोति। शम्बशब्दः प्रतिलोमेऽर्थेऽस्ति। अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः ॥ क्षेत्रं द्विगुणाकरोति। क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः। बीजाकरोति। काशिकायां बीजशब्दो बीजवापनसहितविलेखने वर्तते। बीजवापनसहितं विलेखनं करोतीत्यर्थ इत्युक्तम् ॥

(तत्त्वदी०)–**दुःखाकरोती**ति ॥ पीडयतीत्यर्थः ॥ **सुखाकरोति** ॥ अनुकूलाचरणेनानन्दयतीत्यर्थः ॥ **शंबाकरोति** ॥ अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः ॥ **द्विगुणाकरोति** ॥ क्षेत्रकर्मकं द्विगुणं करोतत्यिर्थः ॥ **बीजाकरोति** ॥ बीजेन सह विलेखनं करोतीत्यर्थः ॥

**(अव्ययस्य च्वावीत्वं न) दोषाभूतमहः। दिवाभूता रात्रिः ॥ हत्सात्तद्धितयस्य लोपो ये च्वौ च ॥ अगार्ग्यो गार्ग्यो भवति गार्गीभवति ॥**

(सुबोधिनी)–अव्ययस्य च्वावीत्वं न ॥ पुनश्च्विप्रत्ययमाह–अदोषा दोषाभूतमिति दोषाभूतमहो दिनम्। अदिवा दिवा भूतेति दिवाभूता रात्रिः। ण्यायनणेयण्णीया इति ण्यः। गार्ग्यः। अगार्ग्यो गार्ग्यो भवति ॥ हसात्तद्धितयस्येति। यलोपे च्वावितीत्वे च गार्गीभवति ॥

**(रीङ् ऋतः) मात्रीकरोति ॥**

(सुबोधिनी)–रीङ् ऋतः ॥ ऋकारस्य रीङ् स्यात् च्वौ ॥ अमातरं मातरं करोतीति मात्रीकरोति ॥

**(च्विविषये साद्वा)**

(सुबोधिनी)–च्विविषये साद्वा ॥ नाम्नोऽभूततद्भावे एव सात्प्रत्ययो वा स्यात्साकल्येऽर्थे ॥ सात्प्रत्ययमाह–सात्प्रत्ययस्याव्ययत्वाद्विभक्तेर्लुक् ॥

**(सात्पदाद्योः) सस्य षत्वं न ॥ अग्निसाद्भवति। अग्नीभवति ॥**

(सुबोधिनी)–सात्पदाद्योः ॥ सात्प्रत्ययस्य पदादौ वर्तमानस्य च सस्य षत्वं न॥ दधि सिञ्चति। किलादिति षत्वे प्राप्ते निषेधः। अनग्निरग्निर्भवतीति अग्निसाद्भवति। कृत्स्नं सर्वावयवोपेतं शस्त्रमग्नीभवतीत्यर्थः। सादभावपक्षे च्विरेव। साकल्ये किम्। एकदेशेन शुक्लीभवति पटः ॥

**(संपदायोगे च) जलसात्संपद्यते ॥**

(सुबोधिनी)–संपदायोगे च ॥ नाम्नः संपद्धातुयोगे सात्प्रत्ययो वा भवति ॥ अजलं जलं संपद्यते इति जलसात्संपद्यते लवणम्। पक्षे संपदा योगे वाक्यमेव ॥

( अधीने च ) राजसात्संपद्यते ॥

( सुबोधिनी )—अधीने च ॥ नाम्नस्तदधीनेऽर्थे सात् स्यात् कृभ्वस्तिसंपद्योगे ॥ राजाधीनं संपद्यते इति। नाम्नो नो लोपशिति न लोपः। राजसात्संपद्यते। राजाधीनं करोतीति राजसात्करोति ॥

( देये त्रा च ) विप्राधीनं देयं करोति विप्रत्राकरोति। विप्रत्रासंपद्यते। विप्रसात्करोति ॥

( सुबोधिनी )—देये त्रा च ॥ नाम्नस्तदधीने देयेऽर्थे त्राप्रत्ययः स्यात् चात्सादपि कृभ्वस्तिसंपद्योगे ॥ त्राप्रत्ययमाह—अव्ययत्वाद्विभक्तेर्लुक्। विप्राधीनं देयं करोतीति विप्रत्राकरोति। विप्राधीनं देयं संपद्यते इति विप्रत्रासंपद्यते ॥ देये किम्। राजसाद्भवति राष्ट्रम् ॥

( देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्यन्तेभ्यो वा त्रा ) देवत्रावन्दे। देवं वन्दे ॥

( सुबोधिनी )—देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्यन्तेभ्यो वा त्रा॥ द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्चैभ्यस्त्रा वा स्यात्॥ देवान् इति देवत्रा वन्दे। देवेषु इति देवत्रा रमे। मनुष्यान् इति मनुष्यत्रा गच्छति। मनुष्येषु इति मनुष्यत्रा वसति। पुरुषान् इति पुरुषत्रा गच्छति।पुरुषेषु इति पुरुषत्रा वसति। पुरून् इति पुरुशब्दोऽत्र बहुशब्दपर्यायः। "पुरुः परागे प्रचुरे स्वर्लोकनृपभेदयोः"इति हैमः। पुरुत्रा गच्छति। पुरुष इति पुरुत्रा वसति। मर्त्यान् इति मर्त्यत्रा गच्छति। मर्त्येषु इति मर्त्यत्रा वसति ॥

ख्युट् करणे ॥आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेषूपपदेषु कृञः करणेऽर्थे ख्युट्प्रत्ययः ॥ अनाढ्यमाढ्यं करोत्यनेनाढ्यंकरणम्। सुभगंकरणम्। स्थूलंकरणं दधि। पलितंकरणम्। नग्नंकरणं द्यूतम्। अन्धंकरणम्। प्रियंकरणम् ॥

( सुबोधिनी )—ख्युट् करणे॥ ख्युट्प्रत्ययमाह—खः खिति पदस्येति मुमर्थः। ट ईवर्थः। युवोरित्यनः। आढ्यंकरणम्। एवं सुभगंकरणम्। स्थूलंकरणम्। पलितंकरणम्। नग्नंकरणम्। अन्धंकरणम्। प्रियंकरणम् ॥

•( तत्त्वदी० )—च्व्यर्थेष्विति ॥ अभूततद्भावविषयेष्वित्यर्थः ॥ आढ्यंकरणमिति ॥ खित्त्वान्मुम् ॥

( भुवः खिष्णुखुकञौ कर्तरि ) अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः। आढ्यंभावुकः ॥

( सुबोधिनी )—भुवः खिष्णुखुकञौ कर्तरि ॥ आढ्यादिषु च्व्यर्थेषूपपदेषु भवतेरेतौ स्तः॥ खिष्णुप्रत्ययमाह—खित्वान्मुम्। आढ्यंभविष्णुः। एवं सुभगंभविष्णुः।

स्थूलंभविष्णुः । पलितंभविष्णुः । नग्नंभविष्णुः । अन्धंभविष्णुः । प्रियंभविष्णुः ॥ खुकञ्‌ः प्रत्ययमाह—खित्त्वान्मुम् । ञित्त्वाद्वृद्धिः । अनाढ्य आढ्यो भवतीति आढ्यंभावुकः । एवं सुभगंभावुकः । स्थूलंभावुकः । पलितंभावुकः । अन्धंभावुकः । प्रियंभावुकः ॥

**आतो मनिप्क्वनिब्वनिपः ॥** नाम्न्युपपदे आदन्ताद्धातोरेते प्रत्ययाः स्युः ॥ सुदामा । अश्वे तिष्ठतीति अश्वत्थामा । निपातात्सस्य तः ॥

( सुबोधिनी )—आतो मनिप्क्वनिब्वनिपः ॥ प्रत्ययानाह—पित्त्वात्तुक् । कित्त्वान्न गुणः । इकार उच्चारणार्थः । सुष्ठु ददातीति नोपधाया इति दीर्घः । नाम्नो नो लोपशिति नलोपः । सुदामा ॥

**स्थामि ॥ तादौ किति दोसोमास्थामिर्भवति ॥**

( सुबोधिनी )—स्थामि ॥ दोऽवखण्डने । षोऽन्तकर्मणि ॥ मा माने । माङ् माने । मेङ् प्रणिदाने इति त्रयाणां ग्रहणम् ॥ ष्ठा गतिनिवृत्तौ ॥ एषामित्त्वं स्यात्तादौ किति । ईत्वदत्वयोरपवादः ॥

( तत्त्वदी० )—स्थामि । स्थाम् इ इति च्छेदः । इत्यभिप्रेत्याह—दोसो इत्यादि ॥

**( शाछोर्वा )**

( सुबोधिनी )—शाछोर्वा ॥ शो तनूकरणे।छो छेदने।अनयोरित्वं वा तादौ किति ॥

(तत्त्वदी०)—शाछोर्वा ॥ स्थामीत्यत्र इश्च ईश्चाऽनयोः समाहार इरित्याश्रयणेन शाछोर्वेतीदं लब्धम् ॥

**( अपिदाधागैहाक्पिबतीनामीः किति हसे क्विपि वा न तु क्यपि )** सुपीवा । घृतपीवा । भूरिदीवा । अनादन्तादपि । सुशर्मा । सुकर्मा । अपिशब्दान्निरुपपदेभ्योऽपि । ह्रस्वस्य पिति कृति तुक् । प्रातरित्वा । वनिपि ॥

( सुबोधिनी )—अपिदाधागैहाक्पिबतीनामीः॥ दो अवखण्डने । देङ् पालने । दाण् दाने । डुदाञ् दाने । एषां चतुर्णां ग्रहणम् । ट्‌ पाने, डुधाञ् धारणपोषणयोरित्युभयोर्ग्रहणम् । गै शब्दे । ओहाक् त्यागे । पा पाने। एषामीत्वं स्यात्किति हसे । क्विपि तु ईत्वं वा । क्यपि ईत्वं न ॥ सष्ठु पिबतीति कित्त्वान्न गुणः । सुपीवा । घृतं पिबतीति घृतपीवा । अनादन्तादपि एते प्रत्ययाः स्युः । शॄ हिंसायाम् । सुष्ठु शृणातीति ह्वत्त्योरितीण् न । सुशर्मा । ह्रस्वस्य पिति कृति तुक् । ह्रस्वस्य तुगागमः स्यात्पिति कृति । इण् गतौ । प्रातरेतीति प्रातरित्वा । वनिपि ॥

**( अमस्यात्वम् )** विशेषेण जायते विजावा । ओणृ । [illegible]ोणतीत्यवावा । पारदृश्वा । राजयुध्वा । सुत्वा । धीवा । पी[illegible]

( सुबोधिनी )—जनसन्खनाम् ॥ जनसनखनान्तस्य धातोरात्वं स्याद्वनिपि ॥ षष्ठीनिर्दिष्टस्येत्यन्तस्यादेशः । जनी प्रादुर्भावे । विजायते इति विजावा ॥ ओणृ अपनयने । ओणतीति अनुनासिकस्यात्वे अवादेशे च आवावा । कर्मण्युपपदे दृशेः क्वनिप् । भूते इति केचित् । पारं दृष्टवान् इति पारदृश्वा । वर्तमानेऽपि स्यात् । 'विश्वदृश्वनयनावयम्' इत्यत्र विश्वं पश्यन्तीति विश्वदृश्वानि नयनानि येषां ते विश्वदृश्वनयना इति वर्तमानेन विग्रहेऽपि न क्षतिः । युध संप्रहारे । राजानं युध्यते इति राजयुध्वा । षुञ् अभिषवे । सुनोतीति ह्रस्वस्येति तुक् । सुत्वा । दधातीति अपिदाधेतीत्वम् धीवा । पिवतीति पीवा ॥

( तत्त्वदी० )—अवावेति ॥ ओणो णस्यात्वे ओतोऽवादेशे रूपम् ॥ पारदृश्वेति ॥ पारं दृष्टवान् ॥ राजयुध्वेति ॥ अन्तर्भावितण्यर्थोऽत्र युधिः । राजानं योधितवान् ॥

**क्विप् ॥ धातोः क्विप्स्यात् ॥ कर्मकृत् । मो नो धातोः । प्रशान् । प्रदान् । अग्निचित् । सोमसुत् । सोमपाः । सर्वदृक् । दिश् अतिसर्जने । दिक् ॥**

( सुबोधिनी )—क्विप् ॥ सर्वधातुभ्यः क्विप् स्यात् । क्विप्प्रत्ययमाह—कित्त्वान्न गुणः । पित्त्वात्तुक् । वेरिति विलोपः । कर्म करोतीति कर्मकृत् । प्रशाम्यतीति अमान्तस्येति दीर्घः मो नो धातोरिति नत्वम् प्रशान् । सोमं सुनोतीति सोमसुत् । अग्निं चिनोतीति अग्निचित् । सोमं पिवतीति अपिदाधेति क्विपि वेत्वम् सोमपाः । सर्वं पश्यतीति सर्वदृक् । दिशामिति कः । दिश् अतिसर्जने । दिशतीति दिक् ॥

**( क्विपि वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ) वाक् । कङिति झसे क्वौ ञमे च छस्य शो वस्य ऊः ॥ तत्त्वप्राट्, तत्त्वप्राशौ ॥ आयतस्तूः । कटप्रूः । जु गतौ । जूः । श्रीः ॥**

( सुबोधिनी )—क्विपि वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ॥ एषां दीर्घः संप्रसारणाभावश्च स्यात्क्विपि ॥ वच परिभाषणे । प्रच्छ ज्ञीप्सायाम् । आयतपूर्वः ष्टुञ् स्तुतौ । कटपूर्वः प्रुङ् गतौ । जु गतौ । श्रिञ् सेवायाम् । वक्तीति चोः कुरिति कः । वाक् । तत्त्वं पृच्छतीति कङिति झसे क्वौ ञमे चेति छस्य शः । छशषेति षः । षो ड इति डः । तत्त्वप्राड् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते इति कटप्रूः । जवतीति जूः । हरिं श्रयतीति हरिश्रीः । वचिप्रच्छ्योः संप्रसारणाभावः ॥

( तत्त्वदी० )—वागिति ॥ वक्तीति विग्रहः ॥ तत्त्वप्राडिति ॥ तत्त्वं पृच्छति ॥ एवमन्यदपि कर्तरि ।

**( दृ[illegible] ॥ क्विपि संप्रसारणम् ) सुधीः ॥**

( सुबोधिनी )-ध्यायतेः क्विपि संप्रसारणम् ॥ ध्यै चिन्तायाम् । सुष्ठु ध्यायतीति सुधीः ॥

**( गमादीनां ञमस्य लोपः क्विपि क्यपि वा )** अङ्गगत् । परीतत् । संयत् । सुनत् ॥

( सुबोधिनी )-गमादीनां ञमस्य लोपः क्विपि क्यपि वा ॥ गम् तन् यम् णम् इत्यादीनामनुनासिकस्य लोपः स्यात्क्विपि, क्यपि तु वा ॥ अङ्गं गच्छतीति ह्रस्वस्य पितीति तुक् । अङ्गगत् ॥ परि तनोतीति परीतत् । नहिवृतिवृषिव्यधीति पूर्वस्य दीर्घः ॥ संयच्छतीति संयत् । सुनमतीति सुनत् ॥

**( ऊङ् च )** अग्रेगूः । अग्रेभ्रूः ॥

( सुबोधिनी )-ऊङ् च ॥ गम्यादीनामूङादेशो ञमस्य लोपश्च स्यात्क्विपि ॥ ङित्वादन्त्यस्यादेशः । अग्रे गच्छतीति अग्रेगूः । अग्रे भ्रमतीति अग्रेभ्रूः । सप्तम्या अलुक् ॥

( तत्त्वदी० )-अग्रेगूः ॥ अग्रे गच्छति ॥

**( द्युतिगमिजुहोतीनां क्विपि द्वित्वम् )** दिद्युत् । जगत् ॥

( सुबोधिनी )-द्युतिगमिजुहोतीनां क्विपि द्वित्वम् ॥ द्योतते इति द्युतेः पूर्वस्येति संप्रसारणम् । दिद्युत् । गच्छतीति गम्यादीनामिति मलोपः । ह्रस्वस्येति तुक् जगत् ॥

**( जुहोतेर्दीर्घः )** जुहूः ॥

( सुबोधिनी )-जुहोतेर्दीर्घः ॥ अस्य दीर्घः स्यात्क्विपि ॥ जुहोत्यनयेति जुहूः । करणस्य कर्तृत्वविवक्षायां क्विप् ॥

**( पदान्तस्यानितेर्नस्य णत्वमुपसर्गस्थान्निमित्तात् )** अन प्राणने । हे प्राण् ॥ मित्राणि शास्तीति मित्रशीः ॥

( सुबोधिनी )-पदान्तस्यानितेर्नस्य णत्वमुपसर्गस्थान्निमित्तात् ॥ उपसर्गस्थान्निमित्तात्परस्य पदान्तस्यानितेर्नस्य णत्वं स्यात् ॥ अन प्राणने । प्रकर्षेण अनितीति सम्बोधने हे प्राण् ॥ अत्र ञमान्तस्येति दीर्घः । नाम्नो नो लोपशिति सूत्रे अधाविस्युक्तत्वान्नलोपो न ॥ शासु अनुशिष्टौ । क्विपो लोपे प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायेन हसादिकित्प्रत्ययपरत्वात् शासेरिरितीकारः । घसादेरिति षः । दोषामिति रः । र्वो र्वि हसे इति दीर्घे मित्रशीः ॥

( तत्त्वदी० )-हे प्राणिति ॥ नाम्नो नो लोपशधावित्यत्राधाविति निषेधाद्धावेव नलोपाभावोऽन्यत्र भ्यामादौ भवत्येवेति सूचनाय संबोधनान्तमेवोदाहृतम् ॥

**( आशासः क्वावुपधाया ईत्वम् ) आशीः। गीः। पूः॥**

( सुबोधिनी )–आशासः क्वावुपधाया ईत्वम्॥ आङः शासु इच्छायामित्यात्मनेपदी। शासेरिरिति सूत्रेणेत्वे सिद्धे आशास उपधाया ईत्वं क्वावेव नान्यत्रेति नियमार्थमिदं सूत्रम्। तेनाशास्ते इत्यत्रेत्वं न भवति। आशास्ते इति आशीः॥ गॄ निगरणे। गिरतीति ऋत इरितीर्। य्वो विँ हसे इति दीर्घः। गीः॥ पॄ पालनादौ। पिपर्तीति पोरुरित्युर्। य्वो विँ हसे इति दीर्घः पूः॥

**( इस्मन्त्रन्क्विषु च्छादेर्ह्रस्वः ) छद आपवारणे चुरादिः। तनुं छादयतीति तनुच्छत्॥ अक्षद्यूः। रेफाच्छ्वोर्लोपः क्वौ झसादौ हे च प्रत्यये। मूः, मुरौ। धूः, धुरौ॥**

( सुबोधिनी )–इस्मन्त्रक्विषु च्छादेर्ह्रस्वः॥ छद अपवारणे ण्यन्तस्यास्य ह्रस्वः स्यादेषु परेषु॥ इसि प्रत्यये छर्दिः। मन् प्रत्यये छद्म। त्रप्रत्यये छत्रम्। क्विपि तु तनुं छादयतीति णेरिति णिलोपः। तनुच्छत्। दिवु क्रीडादौ। अक्षैर्दीव्यतीति क्ङिति झसे क्वौ ञमे चेति वस्य ऊः। अक्षद्यूः॥ मूर्छा मोहसमुच्छ्राययोः। मूर्छतीति। रेफाच्छ्वोरिति छलोपः। य्वो विँ हसे इति दीर्घः। मूः। धुर्वी हिंसायाम्। धुर्वतीति रेफाच्छ्वोरिति वलोपः। धूः॥

( तत्त्वदी० )–**तनुच्छदि**ति॥ तनुं छादयतीति विग्रहः अक्षैर्दीव्यतीति अक्षद्यूः। **मूरि**ति॥ मूर्छतीति विग्रहः॥

**( दुहः को घोऽन्तादेशश्च ) कामदुघा॥**

( सुबोधिनी )–दुहः को घोऽन्तादेशश्च॥ दुहः कप्रत्ययो हस्य घश्च स्यात्॥ कप्रत्ययमाह–कित्त्वाद्गुणो न। कामं दोग्धीति कामदुघा धेनुः॥

**( दृशेष्टक्सकौ चोपमाने कार्ये ) उपमाने कर्मण्युपपदे दृशेष्टक्सकौ चात्क्विप्॥**

( सुबोधिनी )–दृशेष्टक्सकौ चोपमाने कार्ये॥ टक्सकौ प्रत्ययावाह–टित्त्वादीप्। कित्त्वाद्गुणो न॥

**आसर्वादेः॥ एषु परेषु सर्वादेष्टेरात्वम्॥ अन्यादृशः। अन्यादृक्षः। अन्यादृक्। तादृशः। तादृक्षः। तादृक्॥**

( सुबोधिनी )–आसर्वादेः॥ सर्वादेष्टेरात्स्याद् दृक्दृशदृक्षेषु परेषु॥ अन्यमिव पश्यतीति अन्यादृशः। ईपि अन्यादृशी। छशषेति षत्वम्। षढोरिति कत्वम्। अन्यादृक्षः। क्विपि अन्यादृक्। तमिव पश्यतीति तादृशः। ईपि तादृशी। तादृक्षः। तादृक्॥

( तत्त्वदी० )–**एषु परेष्विति**॥ एवं चोपमाने कर्मोपपदनिमित्तकटक्सक्क्विप् एषु परेषु सर्वादेष्टेरात्वं नान्यत्र। तेन सर्वं पश्यतीति सर्वदृगित्यत्र न उपमानाभावात्॥ **अन्यादृश** इति॥

अन्य इव दृश्यते इति विग्रहः । एवमन्यत्रापि । अत्राहुः कर्त्तरि कृतो विधानात्कर्मार्थताऽयुक्ता तमिव पश्यतीति चेन्न कर्मण्यण्बाधात् अपेक्षितार्थानुपस्थितेश्च । अत्र भाष्ये स इव भवति तादृश इति कर्मकर्त्तरि व्युत्पत्तिः प्रदर्शिता । बाहुलकात्कर्मण्यपीति तु बहवः ॥

**( किमिदमः कीश् )** कीदृशः । कीदृक्षः । कीदृक् ॥ ईदृशः । ईदृक्षः । ईदृक् ॥ भवादृशः । भवादृक्षः । भवादृक् ॥ यादृक् ॥ **अदसोऽमूः** ॥ अदसोऽमूः । स्याद्दृग्दृशूदृक्षेषु ॥ अमूदृशः।अमूदृक्षः । अमूदृक् ॥ मादृशः । मादृक्षः। मादृक् ॥ त्वादृशः । त्वादृक्षः । त्वादृक् ॥ युष्मादृशः । युष्मादृक्षः । युष्मादृक् ॥ अस्मादृशः । अस्मादृक्षः । अस्मादृक् ॥ समानस्य सः । सदृशः । सदृक्षः । सदृक् ॥

( सुबोधिनी )—किमिदमः कीश् ॥ किमूशब्दस्य इदमूशब्दस्य च की ईश् आदेशौ स्तः । कमिव पश्यतीति कीदृशः । ईपि कीदृशी । कीदृक्षः । कीदृक् ॥ इदमिव पश्यतीति ईदृशः । ईपि ईदृशी । ईदृक्षः । ईदृक् ॥ भवन्तमिव पश्यतीतिं भवादृशः । ईपि भवादृशी । भवादृक्षः । भवादृक् ॥ यमिव पश्यतीति यादृशः । ईपि यादृशी । यादृक्षः । यादृक् ॥ अमुमिव पश्यतीति अदसष्टेरात्वे कृते दस्य म इति मः मादू इत्यूत्वम् अमूदृशः । ईपि अमूदृशी । अमूदृक्षः । अमूदृक् ॥ मामिव त्वामिव च पश्यतीति त्वन्मदेकत्वे इति त्वन्मदादेशे टेरात्वे च मादृशः । ईपि मादृशी । मादृक्षः । मादृक् ॥ त्वादृशः । ईपि त्वादृशी । त्वादृक्षः । त्वादृक् ॥ अस्मानिव युष्मानिव च पश्यतीति अस्मादृशः । ईपि अस्मादृशी । अस्मादृक्षः । अस्मादृक् ॥ युष्मादृशः । ईपि युष्मादृशी । युष्मादृक्षः । युष्मादृक् ॥

**णिनिरतीते** ॥ धातोरतीते काले शीले च णिनिः ॥ अग्निष्टोमेनायाक्षीत् यजनशीलो वा अग्निष्टोमयाजी । पितृव्यघाती । उष्णभोजी ॥

( सुबोधिनी )—णिनिरतीते ॥ नाम्न्युपसर्गे चोपदे धातोरतीते काले ताच्छील्ये णिनिः स्यात्कर्तरि ॥ णिनिप्रत्यमाह—णित्वाद्वृद्धिः । इकार उच्चारणार्थः । यज देवपूजादौ । अग्निष्टोमेनेष्टवान् इति । इनामिति दीर्घः । अग्निष्टोमयाजी । स्तोत्रेण समाप्यमानो यो यागः सोऽग्निष्टोमः । पितृव्यं हतवानिति हनो घत् पितृव्यघाती । शीले तु उष्णं भोक्तुं शीलमस्येति उष्णभोजी ॥ शीले किम् । उष्णं भुङ्क्ते कदाचित् ॥

( तत्त्वदी० )—णिनिरतीते ॥ शीले तृन्नित्यतः शीले इत्यनुवर्तते । **अग्निष्टोमेनायाक्षीदिति** ॥ नन्वग्निष्टोमस्य कर्मनामधेयत्वेनाभेदात्कथं करणत्वमस्येति चेत्सत्यम् अभ्यासोऽपि फलोत्पादनायां करणं संभवतीत्याकरे समाहितत्वादग्निष्टोमः फलभावनायां करणं भवत्येव ॥ **उष्णभोजीति** ॥ उष्णं भोक्तुं शीलमस्येति विग्रहः ॥

**( व्रते च ) स्थण्डिलशायी ॥**

( सुबोधिनी )–व्रते च ॥ व्रतेऽर्थे णिनिः स्यात् ॥ स्थण्डिले शेते व्रतार्थमिति स्थण्डिलशायी । बहुलमाभीक्ष्ण्ये णिनिः । आभीक्ष्ण्यं पौनःपुन्यम् । क्षीरपायिण उशीनराः । एतत्सर्वमनुक्तसमुच्चयार्थकचशब्दानुवृत्तेर्लभ्यते ॥

**क्विब्वनिब्डाः ॥ धातोरतीते शीले चैते ॥ ब्रह्महा । भ्रूणहा । वृत्रहा । सुकृत् । धर्मकृत् । पापकृत् । अग्निचित् । सोमसुत् । यज्वा । सरसिजम् । सरोजम् । संस्कारजः । प्रजा । अजः । द्विजः । परितः खाता परिखा ॥**

( सुबोधिनी )–क्विब्वनिब्डाः ॥ पुनः क्विब्वनिब्डप्रत्ययानाह–कित्वाद्गुणो न पित्वात्तुक् । डित्वाट्टिलोपः । इकार उच्चारणार्थः । वेरिति विलोपः । ब्रह्मभ्रूणवृत्रेषु कर्मसूपपदेषु हन्तेः क्विप् नान्यत्र । ब्रह्माणं हतवानिति इनाम्निति दीर्घः ब्रह्महा । भ्रूणं गर्भं हतवानिति भ्रूणहा । वृत्रं दैत्यं हतवानिति वृत्रहा इन्द्रः । कर्मकृतवानिति कर्मकृत् । पापं कृतवानिति पापकृत् । अग्निं चितवानिति अग्निचित् । षुञ् अभिषवे । सोमं सुतवानिति सोमसुत् । वनिपि तु यज देवपूजादौ । इष्टवानिति नोपधाया इति दीर्घः यज्वा । डप्रत्यये तु जनी प्रादुर्भावे । सरसि जातमिति सरसिजम्–सरोजम् । सप्तम्या अलुग् वा । संस्काराज्जात इति संस्कारजः । प्रकर्षेण जातेति प्रजा । आबत इत्याप् । 'प्रजा स्यात्संततौ जने' इत्यमरः ॥ न जात इति अजः । समासे ना इत्यदादेशः । द्वाभ्यां जन्मसंस्काराभ्यां जात इति द्विजः । खन् खनने । परितः खातेति आबत इत्याप् परिखा ॥

( तत्त्वदी० )–**क्विब्वनिब्डाः** ॥ क्विपः सिद्धावपि पुनरुपादानं नियमार्थम् । तेन हन्तेर्भूते ब्रह्मभ्रूणवृत्रेष्वेवेति । वनिपोऽपि पूर्वं वर्तमानार्थत्वात्पुनर्ग्रहणं भूतेऽपि यथा स्यादित्येवमर्थम् । **यज्वेति** । इष्टवानिति वाक्यम् । **प्रजा** इति ॥ प्राणिजातस्य संज्ञैषा । **द्विज** इति ॥ 'मातुर्यदग्रे जायन्ते' इति स्मृतेः ॥

**क्तक्तवतू ॥ धातोरतीते काले क्तक्तवतू एतौ स्तः ॥ भावकर्मणोः क्तः । स्नातम् । कृतः कटः । विष्णुर्विश्वं कृतवान् ॥**

( सुबोधिनी )–क्तक्तवतू ॥ कित्वाद्गुणो न । उकारो व्रितो नुमिति नुमर्थः । क्तप्रत्ययो भावकर्मकर्तृषु भवति । क्तवतुः कर्तर्येव । ष्णा शौचे । त्वयाऽस्नायि इति स्नातम् । अकारीति कृतः कटस्त्वया । अकार्षीदिति कृतवान् । अत्वसोः साविति दीर्घः ॥

( तत्त्वदी० )–**क्तक्तवतू ॥ भावकर्मणो**रिति ॥ मण्डूकप्लुत्येहेदमनुवृत्तम् । क्तवतुस्तु कर्तरि परिशेषात् ॥ **स्नात**मिति ॥ अस्नायीति विग्रहः ॥ **कृत** इति ॥ अकारीति विग्रहः ॥ **कृतवा**निति ॥ कार्षीदिति विग्रहः ॥ एवमन्यो विग्रहो यथावदवगन्तव्यः ॥

**( गत्यर्थाकर्मकाच्च कर्तरि क्तः भावकर्मणोरपि )** गङ्गां गतः । स्थितः । अमान्तस्योपधाया दीर्घः क्ङिति झसे क्वौ च । शान्तः दान्तः ॥

( सुबोधिनी )-गत्यर्थादकर्मकाच्च कर्तरि क्तः ॥ गत्यर्थादकर्मकाच्च धातोः क्तः स्याद्भावकर्मकर्तृषु ॥ अगमदिति गतो गङ्गां सः । लोपस्त्वनुदात्ततनामिति मलोपः॥ अस्थादिति स्थितः सः । स्थामीतीत्वम् ॥ शमु दमु उपशमे । अशमददमदिति अमान्तस्योपधाया इति दीर्घः । शान्तः । दान्तः ॥

( तत्त्वदी० )-**गत** इति ॥ अगमदिति विग्रहः ॥

**( श्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च )** रामः सीतामाश्लिष्टः । शेषमधिशयितः । स्वर्गमधिष्ठितः । हरिमुपासितः । हरिदिनमुपोषितः । राममनुजातः । वृषभमारूढः । जगदनुजीर्णः ॥

( सुबोधिनी )-श्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च ॥ एभ्यः कर्तरि क्तः भावकर्मणोश्च । श्लिष आलिङ्गने । शीङ् स्वप्ने । ष्ठा गतिनिवृत्तौ । आस उपवेशने। वस निवासे । जनी प्रादुर्भावे । रुह बीजजन्मनि प्रादुर्भावे च । जॄ वयोहानौ । अधिपूर्वाणां शीङ्स्थासामित्याधारस्य कर्मसंज्ञा । उपान्वध्याङ्पूर्वस्येति वस आधारस्य कर्मसंज्ञा । आश्लिक्षदिति आश्लिष्टो रामः सीताम्॥अध्यशयिष्टेति अधिशयितो हरिः शेषम् ॥ अध्यष्ठादिति अधिष्ठितः स स्वर्गम् । स्थामीतीत्वम् ॥ उपासिष्टेति उपासितः स हरिम्॥ उपावात्सीदिति वसति क्षुधोरितीट् । यजामिति संप्रसारणम् । घसादेरिति षः । उपोषितः स हरिदिनम् ॥ अन्वजनिष्टेति जनसनखनामित्यात्वम् । अनुजातः स रामम् ॥ आरुक्षदितीति होढ इति ढत्वम् । तथोर्ध इति तस्य धत्वं ष्टुत्वं च । ढि ढो लोप इति ढलोपपूर्वदीर्घौ । आरूढः स वृषम् ॥ अन्वजारीदिति ऋत इरितीर् । य्वो र्वि हसे इति दीर्घः । र इति तस्य नत्वम् । अनुजीर्णः स विश्वम् ॥ कर्मणि तु गता प्राप्ता गङ्गा तेन ॥ आश्लिष्टा सीता रामेण ॥ अधिशयितः शेषो हरिणा ॥ अधिष्ठितः स्वर्गस्तेन ॥ उपासितो हरिस्तेन ॥ उपोषितं हरिदिनं तेन ॥ अनुजातो रामस्तेन ॥ आरूढो वृषस्तेन ॥ अनुजीर्णो विश्वस्तेन ॥

( तत्त्वदी० )-**आश्लिष्ट** इति ॥ सकर्मकत्वादप्राप्तौ वचनम् ॥ **अधिशयित** इति ॥ अध्यशयिष्टेति विग्रहः ॥

**क्तो वा सेट् ॥** उदुपधात्सेट् क्तो वा कित् ॥ द्युतितम्-द्योतितम् । प्रमुदितः-प्रमोदितः साधुः ॥

( सुबोधिनी )-क्तो वा सेट् ॥ उदुपधादविकरणादिदं भावकर्मणोः सेट् क्तो वा कित्संज्ञः स्यात् ॥ कित्वाभावे गुणः । द्युत दीप्तौ । अद्योति इति द्युतितं-द्योतितम् तेन

मुद हर्षे । प्रामोदि इति प्रमुदितः साधुस्तेन ॥ उदुपधात् किम् । विदितम् । भावकर्मणोः किम् । रुचितं वनम् । गत्यर्थादकर्मकादिति कर्तरि क्तः । सेट् किम् । कुष्टम् । कुष निष्कर्षे । अव्विकरणात्किम् । गुध्यतेर्गुधितम् ॥

( शीङ्स्विदिमिदिक्ष्विदिधृषमृषपूङः सेटौ क्तक्तवतू कितौ न ) शयितः । प्रस्वेदितः । शयितवान् । प्रस्वेदितवान् । क्ष्वेदितः । क्ष्वेदितवान् । धर्षितः । धर्षितवान् ॥

( सुबोधिनी )—शीङ्स्विदिमिदिक्ष्विदिधृषमृषपूङः सेटौ क्तक्तवतू कितौ न ॥ अकित्त्वाद्गुणः । अशयिष्टेति शयितः शयितवान् सः । कृत इतीट् । अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । शेश्यितः । शेश्यितवान् । लुधातोरिति यः । किं च । स्विदादीनामादीदित इतीण्निषेधे प्राप्ते भावे कर्तरि चादित इति सेट्कत्वम् । पूङः कित इतीण्निषेधे प्राप्ते पूङो वा कित इति सेट्कत्वम् । ञिष्विदा स्नेहनमोचनयोरिति भ्वादिरत्र गृह्यते न तु 'ञिष्विदा गात्रप्रक्षरणे' दिवादिः भ्वादिसाहचर्यात् । प्रास्वेदिष्टेति प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । प्रस्वेदितवान् । ञिधृषा प्रागल्भ्ये । प्रधर्षितः प्रधर्षितवान् । प्रधर्षितस्तेन ॥

( मृषः क्षान्तौ ) मर्षितः । मर्षितवान् ॥

( सुबोधिनी )—मृषः क्षान्तौ ॥ मृषः सेटौ क्तक्तवतू कितौ न स्तः क्षमायामर्थे ॥ मर्षितः । मर्षितवान् ॥ क्षमायां किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ॥

( पूङो वा कितस्तस्येट् ) पवितः—पूतः । पवितवान्—पूतवान् ॥

( सुबोधिनी )—पूङो वा कितस्तस्येट् ॥ पूङः परस्य कितस्तस्येड्वा स्यात् ॥ पूङ् पवने । पूतः ॥

कितः ॥ उवर्णान्तादृवर्णान्तात् श्विश्रिभ्यां च परस्य कितस्तस्येण्न ॥ भूतः । वृतः । श्रितः । श्वयतेः संप्रसारणस्य दीर्घः किति ते । शूनः । वेञो ह्रस्वः किति ते । उतम् ॥

( सुबोधिनी )—कितः ॥ वुः से इत्यतो वुरित्यनुवृत्तम् ॥ श्विश्रिऋवर्णोवर्णान्तेभ्यः परस्य कितः प्रत्ययस्येण्न ॥ अभूदिति भूतः । वृङ् संभक्तौ । वुञ् वरणे च । वृतः । श्रिञ् सेवायाम् । श्रितः । टु ओ श्वि इर् गतिवृद्ध्योः । यजामिति सम्प्रसारणम् । श्वयतेः संप्रसारणस्य दीर्घः । शूनः । वेञ् तन्तुसन्ताने । यजामिति संप्रसारणे वेञो ह्रस्वः । उतम् ॥

( तत्त्वदी० )—कित इति ॥ वुः सेरित्यतो वुरित्यस्यानुवृत्तेरुवर्णान्तादित्यादि । नैकस्वरादित्यतो नेति योगविभागात् ॥ श्विश्रिभ्यामिति च लभ्यते ॥

**आदीदितः ॥ आदित ईदितश्च क्तक्तवत्वोर्नेट् ॥**

( सुबोधिनी )—आदीदितः ॥ आच्च ईच्च आदीतौ आदीतौ इतौ यस्य स आदीदित् तस्मादादीदितो धातोः क्तक्तवत्वोरिण्न स्यात् ॥ कृत इत्यस्यापवादः ॥

( तत्त्वदी० )—आदीदित इति ॥ आच्च ईच्च आदीतौ इतौ यस्य तथा तस्मात् । कृत इति प्राप्तस्यापवादः ॥

**ञीतां तक् वर्तमानेऽपि ॥ ञीतां धातूनां मतिबुद्धिपूजार्थानां च वर्तमानेऽपि तक् ॥ राज्ञां मतः । बुद्धः । इष्टः ॥**

( सुबोधिनी )—ञीतां तक् वर्तमानेऽपि ॥ ञिरिद्येषां ते ञीतस्तेषां मतिबुद्धिपूजार्थेभ्यश्च तक् स्यात् वर्तमानेऽर्थे । मतिरिहेच्छा बुद्धेः पृथग्ग्रहणात् । राज्ञां मतः । इष्टः । तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः ॥

( तत्त्वदी० )—ञीतामिति ॥ ञिरिद्येषां ते ञीतस्तेषाम् ॥

**दस्तस्य नो दश्च ॥ दकारात्परस्य कितस्तस्य नत्वं दकारस्य च ॥ भेदितम्—भिन्नम् ॥**

( सुबोधिनी )—दस्तस्य नो दश्च ॥ दात्परस्य कितस्तस्य नत्वं चादस्यापि नत्वं स्यात् ॥

**( भावे कर्तरि चादितः क्तक्तवत्वोरिड्वा ) भेदितः—भिन्नः । प्रस्वेदितः—प्रस्विन्नः । क्ष्वेदितः—क्ष्विण्णः ॥**

( सुबोधिनी )—भावे कर्त्तरि चादितः क्तक्तवत्वोरिड्वा ॥ आकारेतो धातोर्भावकर्तृस्थितयोः क्तक्तवत्वोरिड्वा स्यात् ॥ ञिमिदा स्नेहने । मिद्यते इति मिन्नं तेन । शीङ्स्विदिमिदीति क्तस्याकित्त्वाद् गुणः । मेदते इति मेदितः सः ॥ ञिष्विदा स्नेहनमोचनयोः । प्रस्विद्यते इति प्रस्विन्नं तेन । प्रस्वेदते इति प्रस्वेदितः सः ॥ ञिक्ष्विदा स्नेहनमोचनयोः । क्ष्विण्णं तेन । क्ष्वेदितः सः ॥

( तत्त्वदी० )—आदित इति ॥ आत् इद्यस्य स तथा ॥

**अदो जघुः ॥ किति तकारे ॥ जग्धम् ॥**

( सुबोधिनी )—अदो जघुः ॥ अदो जघुरादेशः स्यात्किति तादौ प्रत्यये ॥ उकार उच्चारणार्थः । तथोर्ध इति तस्य धः । झबे जबा इति कस्य गः । जग्धम् ॥

**रः ॥ रेफात्कितस्तस्य नत्वम् ॥ विकीर्णम् । जीर्णम् ।**

( सुबोधिनी )—रः ॥ रात्कितस्तस्य नत्वं स्यात् ॥ कॄ विक्षेपे । जॄ वयोहानौ । ऋत इरितीर् । य्वो र्वि हसे इति दीर्घः । विकीर्णम् । जीर्णम् ॥

( तत्त्वदी० )—रः इति ॥ कृतस्यापत्यं कार्तिरित्यत्र वृद्धेरसिद्धत्वान्न स्वरात्तो वेत्यतो वेत्यस्यानुवृत्तेर्व्यवस्थया क्वचिन्न क्वचिद्वेति बोध्यम् । तेन पूर्त्ते इत्यादौ न । रदस्तस्येति सुवचम् ॥

**ल्वाद्योदितश्च ॥ ल्वादेरोदितश्च धातोः कितस्तस्य नो भवति ॥**
लूनः । लूनवान् । ज्या वयोहानौ । जीनः ॥

( सुबोधिनी )–ल्वाद्योदितश्च ॥ ल्वादेरेकविंशतेर्धातोरोदितश्च कितस्तस्य नत्वं स्यात् ॥ क्र्यादेरन्तर्गणो ल्वादिः । लूञ् १ । स्तॄञ् २ । कॄञ् ३ । वॄञ् ४ । धूञ् ५ । शॄ ६ । दॄ ७ । पॄ ८ । भॄ ९ । मॄ १० । ढ ११ । जॄ १२ । नॄ १३ । कॄ १४ । ऋ १५ । गॄ १६ । ज्या १७ । री १८ । ली १९ । व्ली २० । प्ली २१ । इति ल्वादिः॥ लूञ् छेदने । लूयते स्म इति लूनः । लुनाति स्मात लूनवान् ॥ ज्या वयोहानौ । ग्रहा-मिति संप्रसारणे जीनः ॥

( तत्त्वदी० )–**ल्वाद्योदित** इति ॥ लू आदिर्यस्य स ल्वादिः । ओदिद्यस्य स ओदित् । ल्वादिश्च ओदिच्च ल्वाद्योदित् तस्मात् ॥**लून** इति॥ लूयते स्म इति॥**लूनवा**निति ॥ लुनाति स्मेति॥

**( प्यायः पी ति किति ) पीनः । भुजो कौटिल्ये । भुग्नः । हीनः । स्वादय ओदितः । षूङ् प्राणिप्रसवे । सूनः । सूनवान् । ङ् परि-तापे । दूनः । मीनः । डीङ् । उड्डीनः । दीनः । लीनः । व्रीणः । रीणः । धीनः ॥**

( सुबोधिनी )–प्यायः पी ति किति ॥ प्यायः पी आदेशः स्यात् तादौ किति ॥ ओप्यायी वृद्धौ । पीनः ॥ भुजो कौटिल्ये । नत्वस्यासिद्धत्वेन झस् परत्वात चोः कुरिति गः । भुग्नः ॥ ओहाक् त्यागे । अपिद्दाधेतीत्वम् । हीनः ॥ षूङ् प्राणिप्रसवे । स्वादय ओदित इत्योदित्वान्नत्वम् । सूनः । सूनवान् । दिवादेरन्तर्गणोऽयं स्वादिः । षूङ् १ । दूङ् २ । दीङ् ३ । डीङ् ४ । धीङ् ५ । मीङ् ६ । रीङ् ७ । लीङ् ८ । व्रीङ् ९ । स्वादयो नव । दूङ् परितापे । दूनः । दूनवान् । डीङ् विहायसा गतौ । ओदिन्मध्यो डीङः पाठसामर्थ्यादिण्न । उड्डीनः । डीङ् क्षये । दीनः । लीङ् श्लेषणे । लीनः । रीङ् स्रवणे । रीणः । धीङ् आधारे । धीनः ।

( तत्त्वदी० )–**उड्डीन** इति ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट् । एवमन्यत्रापि कर्त्राद्यर्थभेदेन वाक्यभेदः ॥

**( दुग्वोर्दीर्घश्च ) दूनः । गूनः ॥**

( सुबोधिनी )–दुग्वोर्दीर्घश्च ॥ दुगुभ्यां परस्य कितस्तस्य नत्वमनयोर्दीर्घश्च स्यात् ॥ गु पुरीषोत्सर्गे । दु गतौ ॥ टुदु उपतापे अयं तु न गृह्यते सानुबन्धकत्वात् । 'मृदुतया दुतया' इति माघः ॥ दूनः । गूनः ॥

( तत्त्वदी० )–**दुग्वो**रिति ॥ दु गतावित्येव गृह्यते न तु टुदु उपताप इत्यपि सानुबन्धक-त्वात् मृदुतया दुतयेति माघोऽपि ॥

**( क्षियो दीर्घः कर्त्तरि क्तक्तवत्वोर्नत्वं च )** क्षीणः । क्षीणवान् । कर्त्तरि किम् । क्षितम् ॥

( सुबोधिनी )–क्षियो दीर्घः कर्त्तरि क्तक्तवत्वोर्नत्वं च ॥ क्षियः परयोः कर्त्तरि स्थितयोः क्तक्तवत्वोस्तस्य नत्वं क्षियो दीर्घश्च स्यात् ॥ क्षि क्षये । क्षि निवासगत्योः । क्षयाति स्मेति क्षीणः । क्षीणवान् ॥ कर्त्तरि किम् । क्षीयते स्मेति क्षितं कामेन ॥

**( यलसंयोगादेरादन्तात्कितस्तस्य नत्वम् )** द्राणः । ग्लानः । म्लानः ॥

( सुबोधिनी )–यलसंयोगादेरादन्तात्कितस्तस्य नत्वम् ॥ यलप्रत्याहारसंयोगादेराकारान्ताद्धातोः परस्य कितस्तस्य नत्वं स्यात् ॥ द्रा कुत्सायाम् । द्राणः ॥ ग्लै म्लै हर्षक्षये । ग्लानः । म्लानः ॥

**( नुदविदोन्दत्राघ्राह्रीनिर्वाभ्यो वा )** त्राणः–त्रातः । घ्राणः–घ्रातः । ह्रीणः–ह्रीतः । नुत्तः–नुन्नः । विद विचारणे । वित्तः–विन्नः । उन्दी क्लेदने । उत्तः–उन्नः । 'निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिले' ॥

( सुबोधिनी )–नुदविदोन्दत्राघ्राह्रीनिर्वाभ्यो वा ॥ एभ्यः कितस्तस्य नत्वं वा स्यात् ॥ आद्यानां त्रयाणां दस्तस्येति नित्यं नत्वे प्राप्ते त्रा घ्रा अनयोर्यलसंयोगादेरिति नत्वे प्राप्ते ह्री वा अनयोरप्राप्ते सति विभाषेयम् । नुद प्रेरणे । नुत्तः–नुन्नः । विद विचारणे । रौधादिक एव गृह्यते उन्दिना परेण साहचर्यात् । वित्तः–विन्नः । तथा च भाष्यम्–"वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । विन्तेर्वित्तश्च विन्नश्च भोगे वित्तश्च विन्दतेः" इति ॥ उन्दी क्लेदने । आदीदित इतीण्न । नो लोप इति नलोपः । उन्नः–उत्तः ॥ त्रैङ् पालने । त्राणः–त्रातः ॥ घ्रा गन्धोपादाने । घ्राणः–घ्रातः ॥ ह्री लज्जायाम् । ह्रीतः–ह्रीणः ॥ वा गतिगन्धनयोः । अवाते कर्त्तरि सति नत्वं स्यात् । निर्वाणोऽग्निर्मुनिर्वा । मुक्तिं गत इत्यर्थः । वाते कर्तरि तु निर्वातो वातः । नितरां वातो गत इत्यर्थः । गत्यर्थादिति कर्तरि क्तः ॥

**दो दत्ति ॥** दा इत्यस्य दथ् किति तकारे न तु पितः ॥ दत्तः । दत्तवान् ॥

( सुबोधिनी )–दो दत्ति ॥ ददातेर्दथादेशः स्यात्किति तकारे ॥ दाप् लवने अस्य तु न व्याख्यानात् प्रयोगाभावाच्च । थान्तोऽयमादेशः । किं च यदि तान्त आदेशस्तदा विदत्तमित्यादौ आद्यन्तवदेकस्मिन्निति न्यायेन नाम्यन्तोपसर्गस्येति दीर्घः स्यात् । यदि दान्तस्तदा दस्तस्येति नत्वं स्यात् । यदि धान्तस्तदा तथोर्धं इति तस्य धः स्यात् । थान्ते तु खसे चपा इति थस्य तः । दत्तः । दत्तवान् । पितस्तु दातः ॥

**स्वरात्तो वा ॥** स्वरान्तादुपसर्गादुत्तरस्य दा इत्यस्य तो वा किति तकारे न तु पितः ॥ प्रत्तः–प्रदत्तः । अवत्तः–अवदत्तः ॥

( सुबोधिनी )–स्वरात्तो वा ॥ पक्षे दथादेशः ॥

( तत्त्वदी० )–स्वरपदं स्वरान्तोपसर्गोपलक्षणकमित्याह–**स्वरान्तादुपसर्गादि**ति ॥ तेन देवदत्त इत्यादौ न ॥

**( नाम्यन्तोपसर्गस्य दीर्घो दादेशे तकारे )** सुष्ठु अदायि सूत्तम् । नीत्तम् ॥

( सुबोधिनी )–नाम्यन्तोपसर्गस्य दीर्घो दादेशे तकारे ॥ नाम्यन्तस्योपसर्गस्य दीर्घः स्याद्दा स्थाने आदेशो यस्तकारस्तस्मिन् परे ॥

**( धात्रो हिः किति ते )** निहितः ॥

( सुबोधिनी )–धात्रो हिः किति ते ॥ दधातेर्हिरादेशः स्यात् किति तकारे ॥

**( ध्याख्यापॄमूर्छिमदिभ्यो न नत्वम् )** ध्यातः । ख्यातः । पूर्तः । मूर्तः । मत्तः । यज इष्टम् । उप्तम् । ऊढः । व्येञ् वीतः । ह्वेञ् हूतः । उदितः । उक्तः ॥

( सुबोधिनी )–ध्याख्यापॄमूर्छिमदिभ्यो न नत्वम् ॥ आद्ययोर्यलसंयोगादेरिति नत्वे प्राप्ते पॄ इत्यस्य तु ल्वादिषु पाठात् ल्वाद्योदित इति नत्वे प्राप्ते मूर्छेतेस्तु छस्य लोपे कृते र इति नत्वे प्राप्ते माद्यतेस्तु दस्तस्येति नत्वे प्राप्ते निषेधः । ध्यै चिन्तायाम् । ध्यातः ॥ ख्या प्रकथने । ख्यातः ॥ पॄ पालनादौ पोरुरित्युर् । य्वो र्वि हसे इति दीर्घः । कित इतीण्न । पूर्तः ॥ मूर्च्छा मोहसमुच्छ्राययोः । रेफाच्छ्वोरिति छलोपः । आदीदित इतीण्न । मूर्तः ॥ मदी हर्षे । आदीदित इतीण्न । मत्तः ॥ यज देवपूजादौ । छशषेति षत्वम् । ष्टुत्वम् । यजादित्वात् यजामिति संप्रसारणम् इष्टम् ॥ डुवप् बीज संताने । उप्तम् ॥ वह प्रापणे । होढ इति हस्य ढः । तथोर्ध इति तस्य धः । ष्टुत्वम् । ढि ढ इति ढलोपपूर्वदीर्घौ । ऊढम् ॥ व्येञ् संवरणे । वीतः ॥ ह्वेञ् स्पर्द्धायाम् । हूतः ॥ वद व्यक्तायां वाचि । कृत इतीट् । उदितः ॥ वच परिभाषणे । उक्तः ॥

**( वसतिक्षुधोरिट् क्त्वाक्तक्तवतूनाम् )** उषितः । क्षुधितः । सुप्तः ॥

( सुबोधिनी )–वसतिक्षुधोरिट् क्त्वाक्तक्तवतूनाम् ॥ वस निवासे । यजामिति संप्रससारणम् । घसादेरिति षः । उषितः ॥ क्षुध बुभुक्षायाम् । क्षुधितः ॥ ञिष्वप् शये । यजामिति संप्रसारणम् । सुप्तः ॥

**( क्वचिद्वेटः क्तक्तवत्वोर्नेट् )** व्रश्चू । वृक्णः ॥

( सुबोधिनी )—क्वचिद्वेटः क्तक्तवत्वोर्नेट् ॥ यस्य धातोः कुत्रचित्स्थले विकल्पेनेड्विहितस्तस्माद्धातोः परयोः क्तक्तवत्वोरिण्न स्यात् ॥ ओव्रश्चू छेदने। ऊदितो वेति वेट्त्वादिण्न। ग्रहामिति संप्रसारणम्। ल्वाद्योदित इति नत्वम्। नत्वस्यासिद्धत्वात् झसे परतः छशषेति षत्वे प्राप्ते "क्तक्तवत्वोरादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः" इति। चोः कुरिति कुत्वम्। स्कोरिति सलोपः। वृक्णः। वृक्णवान् ॥

( अञ्चेः पूजयामिट् ) अञ्चितः। जातः ॥

( सुबोधिनी )—अञ्चेः पूजायामिट् ॥ पूजार्थादञ्चतेः परयोः क्तक्तवत्वोरिट् स्यात् ॥ उदितः क्त्वो वेडिति अञ्चेः क्त्वायां वेट्कत्वात् क्वचिद्वेट इति निषेधे प्राप्ते सति विधिः। पूजार्थाञ्चतेर्नेति नलोपो न। अञ्चितः। गतौ तु नो लोप इति नलोपः। चोः कुरिति कः। अक्तः। जनी प्रादुर्भावे ॥ जनसनेत्यात्वम्। जातः ॥

( पचो वः ) क्तक्तवत्वोस्तस्य। पक्वः। पक्ववान् ॥

( सुबोधिनी )—पचो वः ॥ पचतेः परस्य क्तक्तवत्वोस्तस्य वः स्यात्। डुपचष् पाके। वस्यासिद्धत्वाच्चोः कुरिति कः। पक्वः ॥

( क्षायो मः ) क्षामः। क्षामवान् ॥

( सुबोधिनी )—क्षायो मः ॥ क्षायतेः परस्य क्तक्तवत्वोस्तस्य मः स्यात् ॥ क्षै क्षये। संध्यक्षराणामित्यात्वम्। क्षामः ॥

( तत्त्वदी० )—क्षाम इति ॥ क्षै क्षये इत्यस्यात्वे ॥

( प्रस्त्यः संप्रसारणं किति तस्य मो वा ) प्रस्तीमः—प्रस्तीतः ॥

( सुबोधिनी )—प्रस्त्यः संप्रसारणं किति तस्य मो वा ॥ प्रपूर्वस्य स्त्यायतेः संप्रसारणं स्यात् किति क्तक्तवत्वोस्तस्य मश्च वा ॥ स्त्यै शब्दसंघातयोः। प्रस्तीमः—प्रस्तीतः ॥

( तत्त्वदी० )—प्रस्त्य इति ॥ प्रस्त्यः संप्रसारणं नित्यं तस्य तु मो वेत्यर्थः ॥ प्रस्त्यायति स्म प्रस्तीमः। आदौ संप्रसारणे कृते यलसंयोगादित्वाभावान्न नत्वम् ॥

( शुषेः कः ) शुष्कः। शुष्कवान् ॥

( सुबोधिनी )—शुषेः कः ॥ शुषेः परस्य क्तक्तवत्वोस्तस्य कः स्यात् ॥ शुष शोषणे। शुष्कः ॥

( स्फायः स्फी ति किति ) स्फीतः। धेट् धीतम्। गीतम्। पीतम्। दो दितम्। सो सितम्। मितम् ॥

( सुबोधिनी )—स्फायः स्फी ति किति ॥ स्फायतेः स्फीरादेशः स्यात् तादौ किति ॥ स्फायी वृद्धौ। स्फीतः ॥ धेट् पाने। गै शब्दे। पा पाने। एषां त्रयाणाम-

पिद्धाधेतीत्वम् । धीतम् ॥ गीतम् ॥ पीतम् ॥ दो अवखण्डने । षोऽन्तकर्मणि । मा माने । माङ् माने । मेङ् प्रणिदाने । एषां स्थामीतीत्वम् । दितम् । सितम् । मितम् ॥

(सेटोः क्तक्तवत्वोर्ञिलोपः) चोरितः । चोरितवान् । पाचितः । पाचितवान् ॥

( सुबोधिनी )—सेटोः क्तक्तवत्वोर्ञिलोपः ॥ ञिप्रत्ययस्य लोपः स्यात् सेटोः क्तक्तवत्वोः परयोः । चुरस्तेये । कृत इतीट् । ञिलोपे चोरितः ॥ डुपचष् पाके । ञ्यन्तः । कृत इतीट् । पाचितः ॥

( ऊर्णोतेर्नेट् ) ऊर्णुतः ॥

( सुबोधिनी )—ऊर्णोतेर्नेट् ॥ ऊर्णोतेरिण्न स्यात् तादौ किति ॥ ऊर्णुञ् आच्छादने । ऊर्णुतः । ऊर्णुतवान् ॥

( द्रवस्य काठिन्येऽस्पर्शे चार्थे श्यैङः संप्रसारणं कितस्तस्य नत्वं च न तु स्पर्शे ) शीनं घृतम् । स्पर्शे तु शीतं जलम् ॥

( सुबोधिनी )—द्रवस्य काठिन्येऽस्पर्शे चार्थे श्यैङः संप्रसारणं कितस्तस्य नत्वं च न तु स्पर्शे ॥ श्यैङः संप्रसारणं स्यात् द्रवरूपस्य द्रव्यस्य कठिनस्य भावः काठिन्यं तस्मिन् काठिन्येऽर्थे च पुनः द्रवस्यास्पर्शेऽर्थे श्यैङः परस्य कितस्तस्य नश्च स्यात् स्पर्शेऽर्थे नत्वं न । श्यैङ् गतौ । शीनं घृतम् । स्पर्शे किम् । शीतं जलम् । काठिन्ये स्पर्शे च किम् । संश्यानो वृश्चिकः । शीतात्संकुचित इत्यर्थः । यलसंयोगादेरिति नत्वम् ॥

( अञ्चेः कितस्तस्य नत्वं न त्वपादाने ) समक्नः । अन्यत्रोदक्तमुदकं कूपात् ॥

( सुबोधिनी )—अञ्चेः कितस्तस्य नत्वं न त्वपादाने ॥ अञ्चु गतिपूजनयोः। नत्वस्यासिद्धत्वात् चोः कुरिति कः । उदितः । क्त्वो वेडिति क्त्वायां वेट्कत्वात्क्चिद्वेट् इतीण्न । समक्नः । अनपादाने किम् । उदक्तमुदकं कूपात् ॥

( दिवोऽविजिगीषायाम् ) आद्यूनः । विजिगीषायां तु द्यूतम् ॥

( सुबोधिनी )—दिवोऽविजिगीषायाम् ॥ दिवः क्तक्तवत्वोस्तस्य नः स्यात् विजेतुमिच्छा विजिगीषा तस्यां वाच्यायां नत्वं न ॥ दिवु क्रीडाविजिगीषादौ । कङिति झसे इति वस्य ऊः । द्यूनः । क्षीण इत्यर्थः । "आद्यूनः स्यादौदरिकः" इति हैमः ॥ विजिगीषायां तु द्यूतम् । द्यूते विजिगीषयाऽक्षाः पात्यन्ते इति ॥

( अनुपसर्गात्फुल्लक्षीबकृशोल्लाघा निपात्यन्ते ) फुल्लः । फुल्लवान् । क्षीबृमदे । क्षीबो मत्तः । कृशस्तनुः । लाघृ शोषणालमर्थयोः उल्लाघो

नीरोगः । उपसर्गात्तु ॥ ( **चरफलोरत उत्ति किति** ) प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः । चर चूर्णः ॥

( सुबोधिनी )–अनुपसर्गात्फुल्लक्षीबकृशोल्लाघा निपात्यन्ते ॥ ञिफला विशरणे । क्तक्तवत्वोस्तस्य लत्वं निपात्यते ॥ चरफलोरत उत्ति किति ॥ एतयोरस्य उत्स्यात् तादौ किति ॥ आदीदित इतीण् न । फुल्लः । क्षीबृ मदे । कृश तनूकरणे लाघृ शक्तौ । एषां त्रयाणां क्तस्य तलोपो निपात्यते । तलोपस्यासिद्धत्वात् प्राप्तस्येटोऽभावश्च निपात्यते । ननु फुल्ल विकसने । लाघृ शक्तौ आभ्यां पंचादेर इत्यप्रत्यये इतराभ्यां नाम्युपधात्क इति कप्रत्यये फुल्लोल्लाघक्षीबकृशाः शब्दाः सिद्धयन्ति किमनेन । उच्यते । फुल्तादिनिवृत्त्यर्थं सूत्रम् ॥

( तत्त्वदी० )–अनुपसर्गादिति ॥ फुल्ल इति ॥ तस्य लत्वं निपात्यते । 'लोध्रद्रुमं सानुमतः प्रफुल्लम्' । 'प्रफुल्लराजीवमिवाङ्कमध्ये' । इत्यादौ तु फुल्ल विकसने इत्यस्मात्पचाद्यच् बोध्यम् । यद्वा प्रस्य फुल्लेन समासः ॥

( **उत्फुल्लसंफुल्लौ च** )

( सुबोधिनी )–उत्फुल्लसंफुल्लौ च ॥ उत्संपूर्वकावप्येतौ निपात्येते ॥ कथं तर्हि 'लोध्रद्रुमं सानुमतः प्रफुल्लम्' इति रघुवंशे । फुल्ल विकसने प्रपूर्वादस्मात् पचादेरित्यप्रत्यये प्रफुल्ल इति । यद्यपि प्रफुल्लवदुत्फुल्लसंफुल्लावपि पचादेरित्यनेन सिद्धयतस्तथापि उत्फुल्त संफुल्त इति प्रयोगनिवृत्त्यर्थं सूत्रम् ॥

( तत्त्वदी० )–उत्फुल्लेति ॥ यद्यपि प्रफुल्लवदेतयोरपि सिद्धिस्तथापि उत्फुल्त इत्यादिरूपनिवृत्त्यर्थमिदम् ॥

( **वित्तो भोगप्रतीतयोः** ) वित्तं धनम् । वित्तः पुरुषः । अन्यत्र विन्नः ।

( **भित्तं शकलम्** ) भिन्नमन्यत्र ॥

( सुबोधिनी )–वित्तो भोगप्रतीतयोः ॥ भुज्यते इति भोगस्तस्मिन् भोगेऽर्थे प्रतीतः प्रसिद्धस्तस्मिन्प्रतीतेऽर्थे च विन्दतेः परस्य क्तस्य नत्वाभावो निपात्यते । दस्तस्येति नत्वे प्राप्ते निषेधः । विद्लृ लाभे । वित्तः । विद्यतेर्विन्नः । विन्दतेर्वित्तः विन्नश्च । वेत्तेर्विदितः । विद सत्तायाम् । विद विचारणे । दैवादिकरौधादिकावेतावनिटौ । विद ज्ञाने विद्लृ लाभे आदादिकतौदादिकावेतौ सेटौ । विद्लृ लाभे अस्य तु गमहनविदेति क्सुप्रत्यये वेट्कत्वात् कचिद्वेट इतीण्न ॥ भित्तं शकलम् ॥ भिदेः परस्य क्तस्य नत्वाभावो निपात्यते शकलेऽर्थे । दस्तस्येति प्राप्ते निषेधः । 'भित्तं शकलखण्डे वा' इत्यमरः ॥ अन्यद्भिन्नम् । विदीर्णमित्यर्थः ॥

( **ऋणमाधमर्ण्ये** ) ऋतमन्यत्र ॥

( सुबोधिनी )–ऋणमाधमर्ण्ये ॥ ऋ गतौ अस्मात् क्तस्य नत्वं निपात्यते ॥ अधमं दुःखप्रदमृणमस्य सोऽधमर्णस्तस्य भाव आधमर्ण्यं तस्मिन्नाधमर्ण्येऽर्थे । 'अधमर्णस्तु ग्राहकः' इत्यमरः ॥

( तत्त्वदी० )–ऋणमाधमर्ण्ये इति ॥ आधमर्ण्ये इति ॥ अधमे ऋणे अधममृणं यस्येति वाऽधमर्णस्तस्य भावस्तस्मिन् । तेन चाधमर्ण्यव्यवहारो लक्ष्यते । तथा चोत्तमर्णेऽपि प्रयोगः सिध्यति ॥

**( क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु )** **क्षुब्धो मन्थः । स्वन शब्दे । स्वान्तं मनः । ध्वान्तं तमः । लगे संगे । लग्नं सक्तम् । म्लिष्टमविस्पष्टम् । रेभृ शब्दे । विरिब्धः स्वरः । फाण्टमनायाससाध्यः कषायविशेषः । बाहृ प्रयत्ने । बाढं भृशम् । अन्यत्र तु क्षुभितम् । स्वनितम् । ध्वनितम् । लगितम् । म्लेच्छितम् । विरेभितम् । फणितम् । बाहितम् ॥**

( सुबोधिनी )–क्षुब्ध १ स्वान्त २ ध्वान्त ३ लग्न ४ म्लिष्ट ५ विरिब्ध ६ फाण्ट ७ बाढानि ८ मन्थ १ मन २ स्तमः ३ सक्ता ४ विस्पष्ट ५ स्वरा ६ नायास ७ भृशेषु ८ ॥ क्षुब्धादीन्यष्टावनिट्कानि निपात्यन्ते मन्थादिष्वर्थेषु ॥ क्षुभ संचलने । तथोर्ध इति तस्य धः । झवे जवा इति भस्य बः । क्षुब्धः ॥ स्वन ध्वन शब्दे । ञमान्तस्येति दीर्घः । स्वान्तम् । ध्वान्तम् ॥ लगे नत्वमपि निपात्यते । लग्नम् ॥ म्लेच्छ अव्यक्ते शब्दे रेभृ शब्दे । अनयोरुपधाया इत्वमपि निपात्यते । छशषेति षत्वं ष्टुत्वम् । म्लिष्टम् । तथोर्ध इति धः । झवे इति भस्य बः । विरिब्धः ॥ फण गतौ । ञमान्तस्येति दीर्घः ष्टुत्वम् । णस्यानुस्वारो निपात्यते । फाण्टम् ॥ बाहृ प्रयत्ने । हो ढ इति ढः । तथोर्ध इति तस्य धः । ष्टुत्वम् । ढि ढ इति ढलोपे बाढम् । कथं तर्हि क्षुब्धो राजेति । आगमजमनित्यमित्यागमजस्यानित्यत्वादिडभावः ॥

( तत्त्वदी० )–क्षुब्धमित्यादि ॥ क्षुब्धमित्यादीन्यष्टौ निपात्यन्ते मन्थादिष्वर्थविशेषेषु वाच्येष्वित्यर्थः ॥ मन्थ इति ॥ द्रवद्रव्यसंपृक्ताः सक्तवो मन्थः मन्थनदण्डश्च ॥

**( धृष्टविशस्तावविनये )** **धृष्टः । विशस्तः । अन्यत्र धर्षितः । विशसितः ॥**

( सुबोधिनी )–धृष्टविशस्तावविनये ॥ अविनयेऽर्थे एतावनिटौ स्तः ञिधृषा प्रागल्भ्ये । अस्य आदीदित इतीण्निषेधे सिद्धे शसु हिंसायामस्य उदितः क्त्वो वेडिति क्त्वायां वेट्कत्वात्कचिद्वेट इतीण्निषेधे सिद्धे अनयोरविनये एवानिट्त्वं नान्यत्रेति नियमार्थं सूत्रम् । विनये तु धर्षितः । शीङ्स्विदिमिदीति क्तस्याकित्त्वाद्गुणः ॥

( तत्त्वदी० )—अन्यत्रेति ॥ अविनयादन्यत्रेत्यर्थः । धृषेरादित्त्वं चिन्त्यमिति कश्चित् । अन्यस्तु अविनयादन्यत्र भावकर्मणोर्धृष्टं धर्षितमित्यादौ विकल्पेट्कत्वार्थमाह ॥

**( दृढः स्थूलबलयोः ) दृहितो दृंहितोऽन्यः । वृह वृहि वृद्धौ ॥**

( सुबोधिनी )—दृढः स्थूलबलयोः ॥ स्थूलो मांसलस्तस्मिन्नर्थे । बलमस्यास्तीति बलः अर्शआद्यच् । तस्मिन् बलवत्यर्थे च दृह दृहि आभ्यां परस्य क्तप्रत्ययस्य ढत्वं धातोरिडभावहलोपौ च इदितो नलोपश्च निपात्यते । दृढः ॥ ननु हो ढ इति ढत्व तथोर्ध इति धत्वे ष्टुत्वे च ढि ढ इति ढलोपे कृते दृढेति रूपसिद्धौ सत्यां किमर्थं ढत्वहलोपयोर्निपातनम् । उच्यते । तथा हि सति ढलोपस्यासिद्धत्वेनालघुत्वात् द्रढिमेत्यत्र ऋ र इमनीति रभावो न स्यात् ॥ परिद्रढय्य गत इत्यत्र परिद्रढीत्यस्मान्नामधातोः क्त्वाप्रत्यये क्यपि लघुपूर्वात्परस्य ल्यपीति णेरयादेशो न स्याच्च । अतोऽसिद्धत्वनिवृत्तये निपातनम् ॥

( तत्त्वदी० )—स्थूलबलयोरिति ॥ बलमस्यास्तीति बलः। अर्शआदित्वात्। मांसलो निर्बलो दृढः ॥

**( प्रभौ परिवृढः ) परिवृहितः परिवृंहितोऽन्यः ॥**

( सुबोधिनी )—प्रभौ परिवृढः ॥ प्रभौ वाच्ये वृह वृहि वृद्धौ आभ्यां परस्य क्तस्य ढत्वं धातोरिडभावहलोपौ च इदितो नलोपश्च निपात्यते । 'प्रभुः परिवृढोऽधिपः' इत्यमरः ॥ अत्रापि ढत्वहलोपयोर्निपातनम् । व्रढिमा परिव्रढय्येत्यादिसिद्ध्यर्थं प्राग्वदेव ॥

**( कृच्छ्रगहनयोः कषः ) कष्टम् । कष्टो मोहः । कष्टं शास्त्रम् । कषितमन्यत् ॥**

( सुबोधिनी )—कृच्छ्रगहनयोः कषः ॥ एतयोरर्थयोः कषः परस्य क्तस्येण्न स्यात् ॥ 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः ॥ अत्र कष्टशब्देन दुःखं तत्कारणं च गृह्यते । कष हिंसायाम् । कष्टो मोहः । दुःखहेतुरित्यर्थः । कष्टं शास्त्रम् । दुरवगाहमित्यर्थः ॥

**( घुष्टोऽविशब्दने ) घुष्टा रज्जुः । अविशब्दने किम् । घुषितं वाक्यम् ॥**

( सुबोधिनी )—घुष्टोऽविशब्दने ॥ विशब्दनं प्रतिज्ञानं न विशब्दनमविशब्दनं तस्मिन्नर्थे घुषेः परस्य क्तस्येण्न स्यात ॥ घुषिर् शब्दार्थे भ्वादिः । घुषिर् अविशब्दने चुरादिः । द्वयोरप्यत्र ग्रहणम् । ननु विशब्दनेऽर्थे इण्निषेधाभावात् णिप्रत्यये उपधागुणे कृते सेटोः क्तक्तवत्वोरिति णिलोपे च घोषितमित्यपि स्यात् । अत्राहुः । विशब्दनेऽर्थे चुरादेर्णिरेवानित्य इति ॥

( तत्त्वदी० )—घुषितमिति ॥ शब्देन प्रकटीकृताभिप्रायमित्यर्थः ॥

**(अभ्यर्णमाविदूर्ये)** अभ्यर्दितमन्यत् ॥

(सुबोधिनी)–अभ्यर्णमाविदूर्ये ॥ अर्देः परस्य क्तस्येण्न स्यादाविदूर्येऽर्थे ॥ विशेषेण दूरं विदूरं न विदूरमविदूरम् अविदूरस्य भावः आविदूर्यम् ॥ अर्द गतौ याचने च। दस्तस्येति तदयोर्नत्वम्। अभ्यर्णम्। नातिदूरमासन्नं वा ॥

(तत्त्वदी०)–आविदूर्य इति ॥ विशेषेण दूरं विदूरं ततोऽन्यदविदूरं नातिदूरमासन्नं वा सामीप्य इति तत् एव नोक्तं संकोचात् ॥

**(क्षीरहविषोः पाके शृतम्)** अन्यत्र श्राणम् श्रपितं वा ॥

(सुबोधिनी)–क्षीरहविषोः पाके शृतम् ॥ श्रायतेः शृ आदेशो निपात्यते। श्रा पाके। अदादौ चुरादौ च घटादावपि पठ्यते। श्रै पाके भ्वादौ। अस्यापि कृतात्वस्येह ग्रहणम्। निपातनसामर्थ्याल्लक्षणप्रतिपदोक्तयोरिति परिभाषा नाश्रीयते। शृतं क्षीरम् स्वयमेव। विक्लिन्नं पक्वं वेत्यर्थः। क्षीरहविर्भ्यामन्यत्तु श्राणम्। यलुसंयोगादेरिति नत्वम्। श्रपितं शाकादि। मितां ह्रस्व इति ह्रस्वः ॥

(तत्त्वदी०)–शृतमिति ॥ श्राश्रपयत्योर्निपातनम् ॥ श्राणमिति ॥ शाकादि ॥

**(दान्तादयो वा निपात्यन्ते)** दान्तः–दमितः। शान्तः–शमितः। पूर्णः–पूरितः। दसु उपक्षये। दस्तः–दासितः। स्पष्टः–स्पाशितः। छन्नः–छादितः। ज्ञप्तः–ज्ञपितः। रुष्टः–रुषितः। आन्तः–अमितः। तूर्णः–त्वरितः। संघुष्टः–संघुषितः। आस्वान्तः–आस्वनितः। हृष तुष्टौ। हृष्टम्–हर्षितम्। अपचायितः–अपचितः। प्यानः–पीनः। ह्लादी सुखे ॥

(सुबोधिनी)–दान्तादयो वा निपात्यन्ते ॥ दान्तादयः सप्त ञिप्रत्यये कृते सति क्तप्रत्ययान्ता वा निपात्यन्ते ॥ शमु दमु उपशमे। जनीजॄषिति मित्त्वादुपधाया ह्रस्वः। एषां सप्तानां निपातनादिडभावः। ञेरिति ञिलोपश्च। अमान्तस्येति दीर्घः। दान्तः। शान्तः ॥ पूरी आप्यायने। दिवादौ चुरादौ च। र इति तस्य नत्वम्। पूर्णः ॥ दसु उपक्षये। स्पश बाधने। छद अपवारणे। एषां त्रयाणां वृद्ध्यभावो निपात्यते। दस्तः। छशषेति षत्वम्। ष्टुत्वम्। स्पष्टः। दस्तस्येति तदयोर्नत्वम्। छन्नः ॥ ज्ञप ज्ञानज्ञापनयोश्चुरादिर्मित्त्वादुपधाया ह्रस्वः। ज्ञप्तः। पक्षे कृत इतीट् सेटोः क्तक्तवत्वोरिति ञिलोपः। शमित इत्यादि ॥ रुषादिभ्यः पञ्चभ्यः क्तस्येडागमो वा निपात्यते। रुष रोषे। इषुसहेति वेट्कत्वात् क्वचिद्वेट इति निषेधे प्राप्ते विकल्पो निपात्यते। रुष्टः–रुषितः। अम गत्यादिषु। अम रोगे इति चौरादिकस्तु न गृह्यते एकस्वरादित्यधिकारात्। अमान्तस्येति दीर्घः। आन्तः–अमितः ॥ ञित्वरा संभ्रमे। आदीदित इति निषेधे प्राप्ते इड्विकल्पो निपात्यते। ज्वरत्वरेत्यूः। र इति क्तस्य नत्वम्। तूर्णः–त्वरितः ॥ घुषिर् अवि-

शब्दने। घुष्टोऽविशब्दने इति विशब्दनेऽर्थे नित्यमिटि प्राप्ते विकल्पो निपात्यते। संघुष्टः—संघुषितः॥ स्वन शब्दे। अमान्तस्येति दीर्घः। आस्वान्तः—आस्वनितः। आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽप्ययं विकल्पः परत्वात्। आस्वान्तं आस्वनितं वा मनः॥ हृषु अलीके। अस्योदित इति क्त्वायां वेट्कत्वात् क्वचिद्वेट इतीण्निषेधे प्राप्ते हृष तुष्टौ सेट्त्वादस्य नित्यमिटि प्राप्ते विकल्पो निपात्यते। उभयोरिह ग्रहणम्। हृष्टं—हृषितं लोम। हृष्टो—हृषितो मैत्रः। विस्मितः प्रतिहतो वेत्यर्थः॥ चायृ पूजानिशामनयोः। अस्य च्यादेशो निपात्यते वा क्ते। अपचितः—अपचायितः॥ ओप्यायी वृद्धौ। अस्य पीति निपात्यते वा क्ते। आदीदित इतीण्निषेधः। यवयोर्वसे इति यत इति वा। यलोपः। स्वाद्योदित इति नत्वम्। प्यानः—पीनः स्वेदः। स्वाङ्गे नित्यम्। पीनं मुखम्। सोपसर्गस्य न। प्रप्यानः। आङ्पूर्वस्य तु स्यादेव। आपीनः कूपः। आपीनमूधः॥

( तत्त्वदी० )—दान्तादय इति॥ ण्यन्ता इत्यर्थः। तूर्ण इति॥ त्रित्वरा संभ्रम इत्यस्य। आदित्त्वमस्य मन्दफलमात्मनेपदस्यादित्त्वेनैव सिद्धेः॥

**( ह्रादेर्ह्रस्वः क्तिति ते ) प्रह्लन्नः॥**

( सुबोधिनी )—ह्लादेर्ह्रस्वः क्तिति ते॥ ह्लादी सुखे। आदीदित इतीण्न। दस्तस्येति नत्वम्। प्रह्लन्नः॥

( तत्त्वदी० )—प्रह्लन्न इति॥ ह्लादी सुखे। ईदित्वान्नेट्॥

**( निनदीभ्यां स्नातेः सस्यः षः कौशले ) निष्णातः। नदीष्णातः॥**

( सुबोधिनी )—निनदीभ्यां स्नातेः सस्यः षः कौशले॥ आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये॥ शास्त्रेषु निष्णातः कुशलः। नद्यां स्नातो नदीष्णातः। नदीस्नाने कुशलः। नाम्नि चेति डः॥

( तत्त्वदी० )—निनदीभ्यामिति॥ नदीष्णात इति॥ नदीस्नाने कुशल इत्यर्थः॥

**( स्थैर्यगतिभक्षणार्थेभ्योऽधिकरणेऽपि क्तः ) तथा च "मुकुन्दस्यासितमिदमिदं यातं रमापतेः। भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः"॥**

( सुबोधिनी )—स्थैर्यगतिभक्षणार्थेभ्योऽधिकरणेऽपि क्तः॥ एभ्य आधारेऽर्थे क्तः स्यात्॥ अपिशब्देन यथाप्राप्ते। "मुकुन्दस्यासितमिदमिदं यातं रमापतेः। भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥" द्रष्टुमिच्छन्ति दिदृक्षन्ते इति दिदृक्षवो गोप्य इत्यूचुः। इतीति किम्। मुकुन्दस्य कृष्णस्येदमासितम्। आस्यतेऽस्मिन्नित्यासितमासनम्। रमापतेर्विष्णोरिदं यातं यायतेऽस्मिन्निति यातं मार्गः। अनन्तस्य हरेरेतद्भुक्तम्। भुज्यतेऽस्मिन्निति भुक्तम् भाजनम्। मुकुन्दस्येत्यादि त्रिषु वर्तमानाधारार्थक्तस्य योगे इति कर्तरि षष्ठी। पक्षे आसेरकर्मकत्वात् कर्तरि भावे च क्तः। आसितः सः आसितं तेन।

गत्यर्थेभ्यः कर्त्तरि कर्मणि च क्तः। ग्रामं यातः सः। ग्रामो यातस्तेन। भुजेः कर्मणि क्तः। तेन भुक्तमन्नम्। कथं तर्हि "भुक्ता ब्राह्मणाः पीता गावः" इति। उच्यते। भुक्तमस्त्येषामिति अस्त्यर्थे अः॥

( तत्त्वदी० )—मुकुन्दस्येत्यादि॥ आस्यतेऽस्मिन्नित्यासितमासनमित्यर्थः। यायतेऽस्मिन्निति यातम्॥ भुज्यतेऽस्मिन्निति भुक्तम्। भाजनमित्यर्थः। त्रिष्वपि वर्तमानाधारार्थक्तस्येति कर्त्तरि षष्ठी॥

**( जीर्यतेरतृ ) जरन्, जरन्तौ॥**

( सुबोधिनी )—जीर्यतेरतृ॥ जॄष् वयोहानौ अस्माद्भूतेऽर्थे अतृ प्रत्ययः स्यात्॥ अतृप्रत्ययमाह—ऋदित्त्वाद् न्रितो नुमिति नुम्। ऋतो गुणे कृते नामत्वास्यादौ संयोगान्तस्येति तलोपः। तलोपस्यासिद्धत्वान्नोपधाया इति दीर्घो न भवति। ना जरन्। स्त्री जरती। क्तक्तवत्वोः। जीर्णः॥ जीर्णवान्॥

**क्वसुकानौ णबेवत्॥ धातोरतीते काले एतौ भवतस्तौ च यथाक्रमं णबेवत्॥ द्वित्वम्। संयोगान्तस्य लोपः॥ चकृवान्। वसोर्व उः। चक्रुषः। चक्रुषा। वसां रसे। चकृवद्भ्याम्। चक्राणः। भेजिवान्। जजागृवान्। द्वित्वे सत्येकस्वरादादन्ताद्घसेश्च वसोरिट् नान्यस्मात्॥**

( सुबोधिनी )—क्वसुकानौ णबेवत्॥ भूतसामान्ये क्वसुकानौ प्रत्ययावाह—क्वसोः ककारो गुणनिषेधार्थः। उकारस्तु पुंसि न्रितो नुमिति नुमर्थः स्त्रियां तु श्न्रित इतीवर्थः। कानप्रत्ययस्य कित्करणं तिस्तिराण इत्यत्र ऋसंयोगादित्यकित्त्वाद् गुणस्य निषेधार्थम्। णबादिपरे यत्कार्यं द्वित्वादि तत्सर्वमनयोः परयोरपि स्यात्। डुकृञ् करणे। द्वित्वादिना चकृवसिति जाते नामसंज्ञायां स्यादिः। न्सम्महत इति पुंसि पञ्चसु दीर्घः। क्लीबे तु शौ दीर्घः। संयोगान्तस्येति सलोपः। चकृवान्, चकृवांसौ, चकृवांसः। चकृवांसम्, चकृवांसौ, शसादौ तु वसोर्व उरित्युत्वे ऋ रमिति रः। चक्रुषः। चक्रुषा, वसां रसे इति सस्य दत्वम्। चकृवद्भ्याम्, चकृवद्भिरित्यादि। स्त्रियां तु श्न्रित इतीप्। वसोर्व उरित्युत्वे षत्वे च चक्रुषी। क्लीबे तु चकृवत्, चक्रुषी, चकृवांसि॥ भज सेवायाम्। भेजिवान्। भेजुषी स्त्री॥ जागृ निद्राक्षये। जजागृवान्। जजागुषी स्त्री। द्वित्वे सत्येकस्वरादादन्ताद् घसेश्च वसोरिट् नान्यस्मात्। द्वित्वे कृते सत्येकस्वराद्धातोरादन्ताद्घसेश्च परस्य वसोरिट् स्यात् नान्येभ्यः परस्य वसोः। कृतेऽपि द्वित्वे एकस्वरा ये धातवोऽवशिष्यन्ते तेभ्य इत्यर्थः। हवक्त्योरीति निषेधं बाधित्वा क्रादेरिति नियमात्सर्वत्र प्राप्तस्येटो नियमः॥

( तत्त्वदी० )—णबेवदिति॥ यथा परस्मैपदिभ्यो णप् तथा क्वसुः। यथात्मनेपदिभ्य ए तथा कानः। द्वित्वे सतीति॥ द्वित्वे कृते सति एकस्वरो यस्तस्मादित्यर्थः॥

( गमहनविदविशदृशां वा ) बभूवान् । भुवो वुक् । बभूवुषः । बभूवुषा । अद भक्षणे । आदिवान् । ऋ गतौ । आरिवान् । डुदाञ् दाने । ददिवान् । ददरिद्रिवान् । वस्योत्वे इडभावः आदुषः । जक्षिवान् । जक्षिवान् । जग्मिवान्–जगन्वान् । जग्मुषः । जघ्निवान्-जघन्वान् । जघ्नुषा । विविदिवान्–विविद्वान् । विविदुषः विविशिवान्–विविश्वान् । ददृशिवान्–ददृश्वान् । ईयिवान् । सेदिवान् । ऊषिवान् । शुश्रुवान् । शुश्रुवुषः ॥

( सुबोधिनी )–गमहनविदविशदृशां वा ॥ एभ्यः परस्य वसुप्रत्ययस्येड्वा स्यात् ॥ विशिना साहचर्यात् विदॢ लाभे इत्यस्य ग्रहणम् । भू सत्तायाम् । बभूवान्, बभूवांसौ । शसादौ तु वसोर्व उरित्युत्वे कृते भुवो वुगिति वुक् । बभूवुषः । बभूवुषा । बभूवद्भ्यामित्यादि । बभूवुषी स्त्री ॥ अद भक्षणे । द्वित्वहसादिशेषपूर्वदीर्घसवर्णदीर्घेषु कृतेषु कृते द्वित्वेऽप्ययमेकस्वर एवेति इड् भवति । आदिवान् । वस्योत्वे कृते इडभावो भवति निमित्ताभावे नैमित्तिकस्याप्यभाव इत्युक्तत्वात् । आदुषी स्त्री ॥ ऋ गतौ । गुणोऽर्तीति गुणे कृते द्वित्वादिषु कृतेष्वप्येकस्वर एवेति, इड् भवति । आरिवान् । आरुषी स्त्री ॥ डुदाञ् दाने । कृते द्वित्वे नायमेकस्वरः । अनेकस्वरत्वादिण्निषेधे प्राप्ते सूत्रे आदन्तग्रहणादिड्भवति । आतोऽनपीत्यालोपः । ददिवान् । ददुषी स्त्री ॥ दरिद्रा दुर्गतौ । आदन्तग्रहणादिट् । आतोऽनपीत्यालोपः । ददरिद्रिवान् । ददरिद्रुषी स्त्री । अद भक्षणे । सिसयोरदेर्घस्लृ इति लिटि वा घस्लृ आदेशः । द्वित्वे कृते नायमेकस्वरः । सूत्रे घसेर्ग्रहणादिट् । उपधालोपात्प्रागेव द्वित्वम् । पश्चाद्गमां स्वरे इत्युपधालोपः । घसादेः ष इति षत्वम् । खसे चपा इति घस्य कः । जक्षिवान् । जक्षुषी स्त्री ॥ गम्लृ गतौ । गमादीनां चतुर्णामिड्वा । द्वित्वादि । गमामित्युपधालोपः । जगामेति जग्मिवान् । इडभावे मो नो धातोरिति मस्य नः । जगन्वान् । जग्मुषी स्त्री । 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इति रघुवंशे ॥ हन हिंसागत्योः । द्वित्वादि गमामित्युपधालोपः । हनो घ्न इति हस्य घः । जघ्निवान् इडभावे पूर्वाद्धन्तेरिति परस्य हस्य घः जघन्वान् । जघ्नुषी स्त्री ॥ विदॢ लाभे । विविदिवान् । इडभावे । विविद्वान् । विविदुषी स्त्री ॥ विश प्रवेशने । विविशिवान्–विविश्वान् । विविशुषी स्त्री ॥ इण् गतौ । द्वित्वम् । इणः परस्य वसोरिट् निपात्यते । द्वित्वे सत्येकस्वराभावाद्विधिरयम् । इणः क्ङिति णादाविति पूर्वदीर्घः । सवर्णे दीर्घ इति सूत्रं बाधित्वा नित्यत्वादिणः क्ङिति स्वरे इति यः वसोरिडागमस्य कित्स्वरस्य परत्र सत्त्वात् । ईयिवान् । ईयुषी स्त्री ॥ षदॢ विशरणादौ । द्वित्वादि । लोपः पचामित्येत्वपूर्वलोपौ । इट् । सेदिवान् । सेदुषी स्त्री । 'निषेदुषीमासनबन्धधीरः' इति रघुवंशे ॥ वस निवासे । द्वित्वादि । णबादौ पूर्वस्येति पूर्वस्य संप्रसारणम् । यजामिति परस्य संप्रसारणम् । सवर्णे

दीर्घ इति दीर्घे कृते एकस्वरत्वादिट् । घसादेरिति षः । ऊषिवान् । ऊषुषी स्त्री । 'अध्यूषुषस्तामभवज्जनस्य' इति माघः ॥ श्रु श्रवणे । शुश्रुवान् । शुश्रुषी स्त्री ॥

( तत्त्वदी० )—बभूवानिति ॥ केवलस्यैकस्वरत्वे कृतद्वित्वस्य तदभावात् । एतौ छन्दस्येवेति पाणिनीयानुसारिणः । भाषायामपीत्यन्ये ॥

**शतृशानौ तिप्तेवत्क्रियायाम् ॥** क्रियायां गम्यमानायां धातोः शतृशानौ भवतस्तौ च तिप्तेवत् ॥ पचन्नास्ते ॥ पठंस्तिष्ठति । गायन्नागच्छति ॥

( सुबोधिनी )—शतृशानौ तिप्तेवत् क्रियायाम् ॥ शतृशानप्रत्ययावाह—उभयोः शित्त्वाच्चतुर्वत्कार्यम् । ऋदित्त्वात्पुंसि ञितो नुमिति नुम् । स्त्रियां तु ष्ट्वञित इतीप् पचतीति अप् पचन् । विक्लित्त्यनुकूलवर्तमानव्यापाराश्रयश्चैत्रः ॥

(तत्त्वदी०)—शतृशानाविति॥परस्मैपदिभ्यः शतृ आत्मनेपदिभ्यः शान उभयपदिभ्यस्तूभयम्॥

**मुगानेतः ॥** अकारस्याने मुगागमः स्यात् ॥ पचमानः पठति । मन्वानः । कुर्वाणः । दादेरिः । पीयमानः सोमो भवता । दीयमाना गौः ॥

( सुबोधिनी )—मुगानेतः ॥ अदन्तस्य मुगागमः स्यादाने परे ॥ पचते इति पचमानः । मनुते इति मन्वानः । कुरुते इति कुर्वाणः । उभयत्र उप् । ङित्यदुरित्यत उत्॥ पीङ् पाने । दीङ् क्षये । दैवादिकाविमौ । अथवा पा पाने । डुदाञ् दाने । आभ्यां कर्मणि शानप्रत्यये कृते यक् चतुर्ष्विति यक् । दादेरिरितीत्वम् । ये इति दीर्घः । दीयमानः । पीयमानः ॥

**आसेरान ईः ॥** आसेः परस्यान ईः स्यात् ॥ आसीनः ॥

( सुबोधिनी )—आसेरान ईः ॥ आनस्य आत ईत्वम् ॥ आस उपवेशने । आस्ते इति आसीनः ॥

( तत्त्वदी० )—आसेरान ईः ॥ आनस्य आ तस्य आनः । क्त्व इतिवदधातोरप्यालोपः क्वचित्

**वादीपोः शतुः ॥** अवर्णात्परस्य शतुर्वा नुमीकारे ईपि च परे ॥ तुदन् सः । तुदती—तुदन्ती कुले स्त्री वा ॥

( सुबोधिनी )—वादीपोः शतुः ॥ अवर्णात्परस्य शतृप्रत्ययस्य नुम् वा स्यादीपि ईकारे च ॥ तुदतीति तुदन्, तुदन्तौ, तुदन्तः । स्त्रियां तु तुदती—तुदन्ती । क्लीबे तु तुदत्, तुदती—तुदन्ती, तुदन्ति ॥

**अप्ययोरान्नित्यम् ॥** अप्प्रत्ययप्रत्ययसंबन्धिनोऽवर्णात्परस्य शतुर्नुम्नित्यमीकारे ईपि च ॥ भवन् सः । भवन्ती । दीव्यत् । दीव्यन्ती ।

**दीव्यन्त्यौ गङ्गायमुने द्विरुक्तानां जक्षादीनां च परस्य शतुर्नुम्न शौ वा ॥ ददत् । दधत् ॥**

( सुबोधिनी )–**अप्ययोरान्नित्यम् ॥** अप्यप्रत्ययाभ्यां परस्य शतुर्नित्यं नुम् स्यात् ईपि ईकारे च ॥ भवतीति पुंसि भवन्, भवन्तौ । स्त्रियां तु भवन्ती । क्लीबे तु भवत्, भवती, भवन्ति ॥ दीव्यतीति 'य्वो विँ हसे' इति दीर्घः । दीव्यन्, दीव्यन्तौ । स्त्रियां तु दीव्यन्ती । क्लीबे तु दीव्यत्, दीव्यती, दीव्यन्ति ॥ ददातीति दधातीति च ह्वादेर्द्विश्चेति द्वित्वादि । दादेरित्यालोपः । ददत् सः । ददती स्त्री । ददत्, ददती, ददति–ददन्ति ॥ दधत् सः । दधती स्त्री । दधत्, दधती, दधति–दधन्ति ॥

**विदेर्वा वसुः ॥ वेत्तेः परस्य शतुर्वा वसुरादेशः ॥ विद्वान्–विदन् ॥**

( सुबोधिनी )–**विदेर्वा वसुः ॥** वसोरुदित्करणं वसोर्व उरित्युत्वार्थम् । नुम् तु स्थानिवत्त्वेनैव सिद्धः । वेत्तीति अपित्तादिर्ङिदिति वसुशत्रोर्ङित्त्वम् । ङित्त्वाद्गुणो न । विद्वान्–विदन् । विदुषी स्त्री ॥

( तत्त्वदी० )–**विदेर्वेति** शतृवदेव ऋदित्त्वेन नुमि सिद्धे वसोरुदित्करणं वसुग्रहणेन क्वसोरपि ग्रहणार्थम् ॥

**( माङ्याक्रोशे ) माजीवन् ॥**

( सुबोधिनी )–**माङ्याक्रोशे ॥** माङ्युपपदे निन्दायामर्थे धातोः शतृप्रत्ययः स्यात् ॥ माङि सिरेवेति लुङि प्राप्ते लड्विधिः । जीव प्राणधारणे । मा जीवन् ॥

**( लक्षणहेत्वोः क्रियायाः ) शयाना भुञ्जते यवनाः । अर्ज प्रतियत्ने चुरादिः । अर्जयन्वसति ॥**

( सुबोधिनी )–**लक्षणहेत्वोः क्रियायाः ॥** क्रियायाः चिह्ने हेतौ चार्थे वर्तमानाद्धातोः शतृशानौ स्तः ॥ अत्र हेतुशब्देन फलं कारणं चोच्यते । शेरते इति शीङो गुण इति गुणः । शयाना भुञ्जते यवनाः । यवनकर्तृकभोजनस्य शयनं लक्षणम् ॥ अर्ज प्रतियत्ने चुरादिः । अर्जयतीति अर्जयन् वसति । अर्जनार्थो वास इत्यर्थः ॥

( तत्त्वदी० )–**शयाना** इति अत्र शयनं भोजनस्य लक्षणम् ॥ **अर्जयन्निति** ॥ अर्ज प्रतियत्ने चुरादिः । अर्जनार्थो वास इत्यर्थः ॥ लक्षणहेत्वोः किम् । पचति पठति च ॥ क्रियायाः किम् ॥ यः कम्पते सोऽश्वत्थवत्प्लवते तल्लघु द्रव्यगुणयोर्लक्षणं मा भूत् । हन्तीति पलायते वर्षतीति धावतीत्यत्र इतिना हेतुत्वस्य द्योतितत्वात् ॥

**( भविष्यतिस्यप्शतृशानपरः ) ह्स्नृतः स्यपः । करिष्यन् । करिष्यमाणः ॥**

( सुबोधिनी )–भविष्यति स्यप् शतृशानपरः ॥ भविष्यत्स्यबन्ताद्धातोः परयोरातपयोः स्थाने शतृशानौ वा स्तः ॥ करिष्यतीति करिष्यन्। सिसतेतीट्। करिष्यते इतिं करिष्यमाणः ॥

**( ताच्छील्यवयोवचनशक्तिष्वानश् )** भोगं भुञ्जानः। कवचं बिभ्राणः। शत्रुं निघ्नानः ॥

(सुबोधिनी )–ताच्छील्यवयोवचनशक्तिष्वानश् ॥ ताच्छील्यं तत्स्वभावता। वयो यौवनादिः। शक्तिः सामर्थ्यम्। एषु द्योत्येषु धातोः कर्तरि आनश् स्यात् ॥ आनश्प्रत्ययमाह–शित्वाच्चतुर्वत्कार्यम्। परस्मैपदिभ्योऽप्यानश् स्यादेतदर्थमिदम्। भुनक्तीति रुधादित्वान्नुम्। नमसोऽस्येत्यलोपः भुञ्जानः। बिभर्तीति बिभ्राणः। हन्तीति गमामित्युपधालोपः। हनो घ्ने इति हस्य घः। निघ्नानः ॥

( तत्त्वदी० )–ताच्छील्य इति ताच्छील्यं तत्स्वभावता। वयो यौवनादि शक्तिः सामर्थ्यम् ॥ पदानियमोऽत्र ॥

**( इङ्धार्योरकृच्छ्रिणि कर्तरि शतृ )** इङ् अध्ययने। अधीयन्। धृञ् धारणे ञ्यन्तः। धारयन्। द्विष अप्रीतौ ॥

( सुबोधिनी )–इङ्धार्योरकृच्छ्रिणिं कर्तरि शतृ ॥ अकृच्छ्रः सुखसाध्यो धात्वर्थः। आभ्यां शतृप्रत्ययः स्यादकृच्छ्रिणि कर्तरि। पुनः शतृप्रत्ययमाह–इङ आत्मनेपदित्वाच्छतृप्रत्ययो न सिद्ध्यति धारयतेरपि आत्मगामिनि क्रियाफले शतृप्रत्ययो न सिध्यति तदर्थोऽयमारम्भः। इङ् अध्ययने। अधीते इति अदादित्वादपो लुक्। नुधातोरितीय्। अधीयन्। धारयते इति अप्। धारयन् ॥

( तत्त्वदी० )–इङ् ॥ अकृच्छ्रः सुखसाध्यो धात्वर्थः सोऽस्यास्तीत्यकृच्छ्री। ञ्यन्तत्वादुभयपदित्वेनोभयप्राप्तौ शत्रेव यथा स्यादित्येतदर्थमिदम् ॥

**( द्विषः शत्रौ )** द्वेष्टीति द्विषन् ॥

( सुबोधिनी )–द्विषः शत्रौ ॥ द्विष अप्रीतौ अस्माच्छत्रौ वाच्ये शतृप्रत्ययः स्यात् ॥ द्वेष्टीति द्विंषन् ॥

**( अर्हपूजायाम् )** अर्हन् ॥

( सुबोधिनी )–अर्ह पूजायाम् ॥ अर्ह पूजायामस्माच्छतृप्रत्ययः स्यात्पूजायामर्थे अर्हतीति अर्हन् ॥

( तत्त्वदी० )–अर्ह इति ॥ पूजायां किम्। अर्हति चौरो वधम् ॥

**शीले तृन् ॥** कटं कर्त्ता। हृञ्। हर्ता ॥

( सुबोधिनी )–शीले ॥ तृन्प्रत्ययमाह–नकारः स्वरार्थः। इतः परं वक्ष्यमाणाः प्रत्ययाः ताच्छील्यादिषु बोध्याः। करोतीत्येवं शीलः कर्ता कटम् ॥

**( इष्णुस्नुक्नु शीले )** अलंकरिष्णुः । निराकरिष्णुः जनी । प्रजनिष्णुः ॥

( सुबोधिनी )—इष्णुस्नुक्नुशीले ॥ धातोरेते प्रत्ययाः शीलेऽर्थे ॥ इष्णुस्नुक्नुप्रत्ययानाह—क्नुककारो गुणनिषेधार्थः । अलं करोतीत्येवंशीलोऽलंकरिष्णुः । निराकरोतीत्येवंशीलो निराकरिष्णुः । जनी प्रादुर्भावे । प्रजायते इत्येवंशीलः प्रजनिष्णुः ॥

( तत्त्वदी० )—इष्णुस्नुक्नु—॥ इष्णुश्च स्नुश्च क्नुश्च एषां समाहारः । ण्यन्तभ्राजभूसहचरवृधवृतप्रजनरुच्यपत्रपालंकृञ्निराकृञुत्पचोत्पतोन्मद इष्णुः ।

**( जिभुवोर्नेड्गुणौ स्नौ )** जि जये जिष्णुः । भूष्णुः । ग्लास्नुः । त्रसी त्रस्नुः । गृध्नुः । ञिधृषा धृष्णुः । क्षिपः क्षिप्नुः ॥

( सुबोधिनी )—जिभुवोर्नेड्गुणौ स्नौ ॥ जयतीत्येवं शीलो जिष्णुः ॥ भवतीत्येवंशीलो भूष्णुः ॥ ग्लायतीत्येवंशीलो ग्लास्नुः ॥ त्रसी उद्वेगे । क्नुः ॥ ह्वत्तयोरितीण्न । त्रस्नुः ॥ गृधु अभिकाङ्क्षायाम् । गृध्नुः ॥ ञिधृषा प्रागल्भ्ये । धृष्णुः ॥ क्षिप प्रेरणे क्षिप्नुः ॥

**षाकोकणः ॥** शीलार्थे षाक उ उकण् प्रत्यया भवन्ति ॥ जल्पाकः भिक्ष याच्ञायाम् भिक्षाकः । कुट्ट च्छेदने कुट्टाकः दुष्टः । लुण्ठ चौर्ये लुण्ठाकः । वृङ् संभक्तौ वराकः ॥ भिक्षुः । आङः शसि इच्छायाम् । इदितो नुम् । आशंसुः । चिकीर्षुः ॥ लष कान्तौ लाषुकः पत्ऌ पतने पातुकः । आतो युक् स्थायुकः । भावुकः । वृषु सेचने वर्षुकः । घातुकः । कामुकः ॥

( सुबोधिनी )—षाकोकणः ॥ षाक उ उकण्—प्रत्ययानाह—षाकस्य षः ष्व्रित इतीबर्थः । उकणो णो वृद्ध्यर्थः । जल्पतीत्येवंशीलः । जल्प व्यक्तायां वाचि । जल्पाकः ॥ भिक्ष भिक्षायाम् । भिक्षाकः ॥ कुट्ट छेदने । लुण्ठ स्तेये । चौरादिकाविमौ । कुट्टाकः । लुण्ठाकः ॥ वृञ् वरणे । वृङ् संभक्तौ । वराकः ॥ सान्ताशंसभिक्षिभ्य उः । सः प्रत्ययस्तदन्तो धातुः सान्त उच्यते । आङः शसि इच्छायामयमेव गृह्यते न तु शंसु स्तुतौ आङा सह निर्देशात् ॥ भिक्ष भिक्षायाम् । भिक्षुः । आशंसुः । कर्तुमिच्छति चिकीर्षतीति सप्रत्यये द्वित्वाद्यः से इतीत्वम् । से दीर्घ इति दीर्घः । ऋत इरितीर् । य्वो र्वि हसे इति दीर्घः । षत्वम् । चिकीर्षति जातम् । उप्रत्यये यत इत्यल्लोपः । चिकीर्षुः ॥ लष कान्तौ । उकण् । लाषुकः ॥ पत्ऌ पतने । पातुकः ॥ पद गतौ । पादुकः ॥ ष्ठा गतिनिवृत्तौ । आतो युगिति युक् । स्थायुकः ॥ भू सत्तायाम् । भावुकः वृषु सेचने । उपधाया लघोरिति गुणः । वर्षुकः ॥ हन हिंसागत्योः । हनो घदिति घत् । घातुकः ॥ कमु कान्तौ । कामुकः ॥ गम्ऌ गतौ । गामुकः ॥ शॄ हिंसायाम् । शारुकः ॥

( तत्त्वदी० )-जल्पाक इति ॥ जल्पनशीलः। एवं सर्वत्र शीलार्थप्रत्यये वाक्यम्। ष ईबर्थः। तेन वराकी ॥ जल्पभिक्षकुट्टलुण्ठवृङः षाकः सान्ताशंसुभिक्ष उः । लषपतपदस्थाभूवृषहनकमगमशॄम्य उकण् ॥

**( शॄवन्द्योरारुः ) शॄ हिंसायाम्। शरारुः। वदि। वन्दारुः ॥**

( सुबोधिनी )-शॄवन्द्योरारुः ॥ शॄ हिंसायाम्। वदि अभिवादनस्तुत्योः। आभ्यामारुः। आरुप्रत्ययमाह-शरारुः। वन्दारुः। "शरारुर्घातुको हिंस्रो वन्दारुरभिवादके" इत्यमरः ॥

**( स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाशीङ्भ्य आलुः ) स्पृहयालुः। गृह ग्रहणे चुरादिः। गृहयालुः। पतयालुः। दय दाने। दयालुः। द्रा कुत्सायाम्। निद्रालुः। तदो नान्तत्वम्। तन्द्रालुः। श्रद्धालुः। शीङ् शयालुः ॥**

( सुबोधिनी )-स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाशीङ्भ्य आलुः ॥ आलुप्रत्ययमाह-स्पृह ईप्सायाम्। गृह ग्रहणे। पत गतौ। एते त्रयश्चुरादावदन्ताः। अल्लोपस्य स्थानिवत्त्वान्नोपधाया गुणवृद्धी। णेरिति णिलोपो न न त्विडामन्तीति निषेधात्। णेर्गुणे कृते स्पृहयालुः। गृहयालुः। पतयालुः। दय दाने। दयालुः। द्रा कुत्सायाम्। निपूर्वः। आतोऽनपीत्यालोपः। निद्रालुः। तत्पूर्वो द्रा। तच्छब्दस्य समासे नत्वं निपात्यते। तन्द्रालुः। श्रत्पूर्वो डुधाञ् धारणादौ। धेट् पाने। अयं तु न गृह्यते श्रत्पूर्वस्य धेटः प्रयोगाभावात्। शीङ् स्वप्ने। शयालुः। कथं तर्हि कृपालुः स्पर्द्धालुरिति। कृपां स्पर्द्धां च लातीति विग्रहे मृगय्वादित्वात्कुः ॥

( तत्त्वदी० )-स्पृहि इति ॥ स्पृहयालुरिति॥स्पृह्यादयस्त्रयोऽपि चुरादावदन्ताः। अल्लोपस्य स्थानिवत्त्वान्नोपधागुणवृद्धी। न त्विडामन्तेत्यादिना निषेधात् णेर्लोपो न ॥

**( शमादिभ्यो घिनुण् ) शम उपशमे शमी। तमी। दमी। भ्रमी। क्षमी। क्लमी। श्रमी। प्रमादी। चजोः कगौ घिति ॥ चकारजकारयोः ककारगकारौ घिति ॥ संपर्की। योगी। विवेकी। त्यागी ( असि उसि अन अके घिनुणि रञ्जेर्नलोपो वाच्यः ) रागी। भागी। विकाषी। विलासी। प्रलापी। प्रसारी। मथें विलोडने। प्रमाथी। प्रवासी ॥**

( सुबोधिनी )-शमादिभ्यो घिनुण् ॥ शमु तमु दमु श्रमु भ्रम क्षमु क्लमु मदीति शमादयोऽष्टौ ॥ घिनुण्प्रत्ययमाह-उकार उच्चारणार्थः। घित्वाच्चजोरिति कगौ। णित्त्वाद्वृद्धिः शाम्यतीत्येवंशीलः। मान्तस्य सेट इति न वृद्धिः। इनामितिदीर्घः। शमी। तमी।

दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रपूर्वस्य मदेर्दीर्घः । प्रमादी । आदिशब्देनान्येऽपि ग्राह्याः । पृची संपर्के । चजोरिति कः संपर्की ॥ सज विसर्गे । युज समाधौ । युजिर् योगे वा । योगी ॥ शिविर् पृथग्भावे । विवेकी ॥ त्यज हानौ । त्यागी ॥ राजृ दीप्तौ । रञ्ज रागे रागी ॥ भज सेवायाम् । भागी ॥ कष् हिंसायाम् । विकाषी ॥ लस श्लेषणक्रीडनयोः । विलासी ॥ लप व्यक्तायां वाचि । प्रलापी ॥ सृ गतौ । प्रसारी ॥ मथे विलोडने । प्रमाथी ॥ वस निवासे । प्रवासी ॥

( तत्त्वदी० )–शमादिभ्य इति ॥ घो वित्कार्यार्थः । उकार उच्चारणार्थ इति वृत्तिः । उदिदिति भाष्यम् । तेन शमिनितरा–शमिनीतरेत्यत्र त्रितः परस्येति ह्रस्वो वा । शमी, शमिनावित्यत्र नुनभावस्तु झसग्रहणमपकृष्य झसान्तानामेव तद्विधानात् ॥ शमीति ॥ शमनशील इति वाक्यम् ॥ अमन्तत्वाद्ध्रस्वः ॥

## ( निन्दादेर्वुञ् ) निन्दकः । हिंसकः । परिक्षेपकः । परिवादकः ॥

( सुबोधिनी )–निन्दादेर्वुञ् ॥ वुणप्रत्ययेनापि सिद्धे वुञ्वचनं ज्ञापकं शीलादिष्वर्थेषु त्रादयो न भवन्तीति ॥ वुञ्प्रत्ययमाह–ञित्त्वाद्वृद्धिः । युवोरनाकावित्यकादेशः णिदि कुत्सायाम् । निन्दकः ॥ हिंसि हिंसायाम् । हिंसकः ॥ क्षिप प्रेरणे । क्षेपकः ॥ वद व्यक्तायां वाचि । ण्यन्तः । णेरिति णिलोपः । परिवादकः ॥

( तत्त्वदी० )–निन्दादेरिति ॥ वुणैव सिद्धे वुञ्वचनं ताच्छीलिकेषु वासरूपविधिर्नास्तीति ज्ञापयति । तेनैतेषु तृन्नादयो न ॥

## ( चलनशब्दार्थादकर्मकाद्युः ) चुप मन्दायां गतौ । चोपनः । चलनः । कम्पनः । शब्दनः । रवणः ॥

( सुबोधिनी )–चलनशब्दार्थादकर्मकाद्युः ॥ चलनार्थादकर्मकाच्छब्दार्थाच्च युः स्यात् ॥ युप्रत्ययमाह–युवोरित्यनादेशः । चल कम्पने । चलनः ॥ चुप मन्दायां गतौ । चोपनः ॥ कपि चलने । कम्पनः ॥ शब्द शब्दने । अदन्तः चुरादिः । णेरिति । णिलोपः शब्दनः ॥ रु शब्दे । रवणः ॥ अकर्मकात् किम् । पठिता विद्याम् ॥

( तत्त्वदी० )–चलनशब्दार्थादिति ॥ चलनं देशान्तरप्राप्तिहेतुः क्रियाविशेषः । शब्दः श्रोत्रग्राह्योऽर्थः । चल कम्पने । शब्द शब्दने । चुरादिः ॥

## ( अनुदात्तेतो हसादेरकर्मकात् ) वर्तनः । रमणः ॥

( सुबोधिनी )–अनुदात्तेतो हसादेरकर्मकात् ॥ युः स्यात् ॥ वृतु वर्तने । वर्तनः ॥ अनुदात्तेतः किम् । भविता ॥ हसादेः किम् । एधिता ॥ अकर्मकात्किम् । वसिता वस्त्रम् ॥

( तत्त्वदी० )–अनुदात्तेति ॥ यद्यपि ॥ सर्वानुदात्तेद्धसान्त एवातो हसग्रहणसामर्थ्यादेव हसादिर्गृह्यते । जुगुप्सादिसान्तेऽनुदात्तेत्त्वमस्ति अवयवे कृतं लिङ्गमचरितार्थं समुदायस्य विशेषकमित्यु-

क्तत्वात्। अतस्तद्व्यावृत्तये तदन्तविधिः स्यादित्यादिग्रहणम् ॥ **वर्तन** इति ॥ वर्तते तच्छील इति विग्रहः । अनुदात्तेतः किम् । भविता ॥ हसादेः किम् ॥ एधिता अकर्मकात्किम् ॥ वसिता वस्त्रम् ॥

**( ज्वादेश्च ) जु गतौ वेगे च । जवनः । सरणः । गर्द्धनः । क्रोधनः । रोषणः । मण्डनः । भूषणः ॥**

( सुबोधिनी )–ज्वादेश्च ॥ युः स्यात् ॥ जुगतौ वेगे च । जवनः ॥ सृ गतौ । सरणः ॥ गृधु अभिकाङ्क्षायाम् । गर्द्धनः ॥ क्रुध क्रोधे ।क्रोधनः ॥ रुष रोषे । रोषणः ॥ मडि भूषायाम् । मण्डनः ॥ भूष अलंकारे । भूषणः ॥

**( ज्यादेरिनिः ) जयी । प्रजवी । दरी । क्षयी ॥**

( सुबोधिनी )–ज्यादेरिनिः ॥ इनिप्रत्ययः स्यात् ॥ इनिप्रत्ययमाह–इकार उच्चारणार्थः ॥ जि जये । जि अभिभवे च । इनामिति दीर्घः । जयी ॥ जु गतौ वेगे च । प्रजवी ॥ दृङ् आदरे । दरी ॥ क्षि क्षये क्षि निवासगत्योश्च । क्षयी ॥

**( दादेरुः ) दारुः । धारुः । सेरुः ॥**

( सुबोधिनी )–दादेरुः ॥ रुप्रत्ययः स्यात् ॥ रुप्रत्ययमाह–डुदाञ् दाने । दो ऽवखण्डने । देङ् पालने । त्रयाणामेषां ग्रहणम् । दारुः । न तु दाणदापोर्ग्रहणम् ॥ डुधाञ् धारणादौ । धारुः ॥ षिञ् बन्धने । सेरुः ॥

**( सृघस्यदः क्मरः ) सृमरः । घस्मरः । अद्मरः ॥**

( सुबोधिनी )–सृघस्यदः क्मरः ॥ क्मरप्रत्ययः स्यात् ॥ क्मरप्रत्ययमाह–कित्त्वाद्गुणो न । सृ गतौ । सृमरः ॥ घस्लृ अदने । घस्मरः ॥ अद भक्षणे । अद्मरः ॥

**( भञ्जभासमिदो घुरः ) भङ्गुरः । भासुरः । मेदुरः ॥**

( सुबोधिनी )–भञ्जभासमिदो घुरः ॥ एभ्यो घुरप्रत्ययः स्यात् ॥ घुरप्रत्ययमाह–घित्त्वात् चजोरिति गः । भञ्जो आमर्दने । भङ्गुरः ॥ भासृ दीप्तौ । भासुरः ॥ ञिमिदा स्नेहने मेदुरः ॥

( तत्त्वदी० )–**भञ्जभासमिद** इति ॥ भञ्जेः कर्मकर्तरि । अभिधानस्वाभाव्यमत्र हेतुः ॥

**( विदिभिदिच्छिदेः कुरः ) विदुरः । भिदुरम् । छिदुरम् ॥**

( सुबोधिनी )–विदिभिदिच्छिदेः कुरः ॥ कुरप्रत्ययः स्यात् ॥ कुरप्रत्ययमाह–कित्त्वाद्गुणो न । विद ज्ञाने अस्यैव ग्रहणं न तु विद्लृ लाभे इत्यस्य संप्रदायात् । विदुरः ॥ भिदिर् विदारणे । भिदुरम् ॥ छिदिर् द्वैधीकरणे । छिदुरम् ॥ कुरः कर्तरि भवति । तथा च माघः 'प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गनाः' इह अदुरीति च्छेदः ॥

( तत्त्वदी० )–**विदिभिदी**ति ॥ ज्ञानार्थे विदिर्व्याख्यानात् ॥ **छिदुरमि**ति ॥ कर्मकर्त्तरीति कश्चित् । भाष्ये तु न तथा एवमाद्योऽपि प्रागुक्त एव मुख्यकर्तारि । 'गुल्मत्सरच्छिदुरयाद्गुरयाचितमङ्गनाः' इति ॥

**( इण्नशजिसर्तिभ्यः क्वरप् ) ह्रस्वस्य पिति तुक् ॥ इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः । गमेर्लोपश्च । गत्वरः ॥**

( सुबोधिनी )–इण्नशजिसर्तिभ्यः क्वरप् ॥ एभ्यः क्वरप् प्रत्ययः स्यात् । क्वरप्प्रत्ययमाह । कित्वान्न गुणः । टित्वात् ङ्वित इतीप् । पित्वात्तुक् । इण् गतौ । इत्वरः । इत्वरी स्त्री ॥ णश् अदर्शने । नश्वरः ॥ जि जये । जित्वरः ॥ सृ गतौ । सृत्वरः ॥ गम्लृ गतौ । मलोपो निपात्यते । गत्वरः ॥

( तत्त्वदी० )–इत्वरः । ह्रस्वस्येति तुक् । ट् ईबर्थः ॥

**( जागर्तेरूकः ) जागरूकः ॥**

( सुबोधिनी )–जागर्तेरूकः ॥ ऊकप्रत्ययः स्यात् ॥ ऊकप्रत्ययमाह–जागृ निद्राक्षये । जागरूकः ॥

**यङ ऊकः ॥ यजजपदशवदिभ्यो यङन्तेभ्य ऊकः शीले ॥ लुक् ॥ ऊके सति यङो लुक् ॥ यायजूकः । जञ्जपूकः । दंदशूकः । वावदूकः ॥**

( सुबोधिनी )–यङ ऊकः ॥ यजादिभ्यो यङन्तेभ्य ऊकः स्यात् ॥ यजेर्यङि कृते द्वित्वादि । आत इति पूर्वस्य दीर्घेऽतिशयेन यजतीति यायज्यते २ इति यायजूकः ॥ जप व्यक्तायां वाचि । अतिशयेन जपतीति जमजपामिति नुक् । जंजप्यते २ इति जंजपूकः ॥ दंश दशने । अतिशयेन दशतीति नुक् । दंदश्यते २ इति दंदशूकः । नो लोप इति नलोपः ॥ वद व्यक्तायां वाचि । अतिशयेन वदतीति वावद्यते २ इति वावदूकः ॥

**( भियः क्रुक्लुकनौ ) भीरुः । भीरुकः । भीलुकः ॥**

( सुबोधिनी )–भियः क्रुक्लुकनौ ॥ ञिभी भये । अस्मादेते प्रत्ययाः स्युः ॥ क्रुक्लुकप्रत्ययानाह–कित्वान्न गुणः । 'भीरुभीरुकभीलुकाः' इत्यमरः ॥

**( नमादेरः ) नम्रः । स्मेरः । नञ्पूर्वाज्जसेः क्रियासातत्ये ॥ अजस्रम् । कम्रः । हिंस्रः । दीप्रः ॥**

( सुबोधिनी )–नमादेरः ॥ रप्रत्ययः स्यात् ॥ रप्रत्ययमाह–णम् प्रह्वत्वे शब्दे च नम्रः । कम्पि चलने । कम्प्रः ॥ ष्मिङ् ईषद्धसने । स्मेरः ॥ जसु मोक्षणे नञ्पूर्वः । ना इत्यः । अजस्रम् ॥ कमु कान्तौ । कम्रः ॥ हिसि हिंसायाम् । हिंस्रः ॥ दीपी दीप्तौ दीप्रः ॥

**( विन्दुरिच्छुरेतौ निपात्यौ )** वेत्ति तच्छीलो विन्दुः । इच्छतीतीच्छुः ॥

( सुबोधिनी )—विन्दुरिच्छुरेतौ निपात्यौ ॥ वेत्तेर्नुम् इषेश्छत्वं च निपात्यते॥ विद्ज्ञाने इत्यस्यैव ग्रहणं नेतरेषाम् । इषु इच्छायामित्यस्यैव ग्रहणं न तु ईष गतौ इष आभीक्ष्ण्ये इत्यनयोरनभिधानान्निपातनाद्वा । वेत्तीत्येवं शीलो विन्दुः । इच्छतीत्येवंशील इच्छुः । विन्दुशब्दः पवर्गीयादिस्तु विदि अवयवे अस्मान्मृगय्वादित्वात्कुप्रत्यये बोध्यः॥

( तत्त्वदी० )—विन्दुरिच्छुरिति।विदेर्ज्ञानार्थस्य नुमागमः॥ एवमिषेरिच्छार्थस्य छत्वमुप्रत्ययश्च॥

**( स्वपितृषिधृषेर्नजिङ् )** स्वप्नक् । तृष्णक् । धृष्णक् ॥

( सुबोधिनी )—स्वपितृषिधृषेर्नजिङ् ॥ एभ्यो नजिङ् प्रत्ययः स्यात् ॥ नजिङ्प्रत्ययमाह । ङित्वान्न गुणः । इकार उच्चारणार्थः । ञिष्वप् शये । चोः कुरिति जस्य गः । स्वप्नक् ॥ तृष पिपासायाम् । तृष्णक् ॥ ञिधृषा प्रागल्भ्ये । धृष्णक् ॥

( तत्त्वदी० )—स्वपि ॥ धृष्णगिति ॥ ङित्वान्न गुणः ॥

**( स्थादेर्वरः )** स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥

( सुबोधिनी )—स्थादेर्वरः ॥ एभ्यो वरप्रत्ययः स्यात् ॥ वरप्रत्ययमाह—ष्ठा गतिनिवृत्तौ । स्थावरः ॥ ईश ऐश्वर्य । ह्वक्त्वयोरितीण्न । ईश्वरः ॥ भासृ दीप्तौ भास्वरः ॥ पिसृ गतौ । पेस्वरः ॥ कस गतौ । कस्वरः ॥

( तत्त्वदी० )—ईश्वर इति ॥ ह्वक्त्वयोरिति नेट् ।

**आदृतः किर्द्धिश्च भूते ॥** आदन्तादृदन्ताज्जनिगमिनमिभ्यो यङन्तेभ्यः सासहिवावहिचाचलिपापतिभ्यः घिप्रत्ययो भूते शीले धातोश्च द्वित्वं किर्लिड्वद्वाच्यः ॥ "रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् । याजकान्वव्रिराजह्रिः पौण्डरीके महाद्विजान् ॥" जज्ञिः । नेमिः । जग्मिः । सासहिः । वावहिः । चाचलिः । पापतिः ॥

( सुबोधिनी )—आदृतः किर्द्धिश्च भूते ॥ किप्रत्ययमाह—कित्वान्न गुणः । किप्रत्यये द्वित्वादि । पा पाने । द्वित्वादि । आतोऽनपीत्यालोपः । पपिः ॥ डुदाञ् दाने । ददिः ॥ डुकृञ् करणे । चक्रिः ॥ वृङ् संभक्तौ । र इत्यः । वव्रिः ॥ हृञ् हरणे । जहिः ॥ जनी प्रादुर्भावे । गमामित्युपधालोपः । जज्ञिः ॥ णम प्रह्वत्वे शब्दे च । लोपः पचामित्येत्वपूर्वलोपौ । नेमिः ॥ गम्लृ गतौ । गमामित्युपधालोपः । जग्मिः ॥ षह मर्षणे । वह प्रापणे । चल कम्पने । पत्लृ पतने । एते यङन्ताः । अतिशयेन सहते इति आत इति पूर्वस्यात्वम् । सासह्यते । सासहांचक्रे इति । यत इत्यलोपः । अनपि च हसादिति यलोपः । सासहिः ॥ अतिशयेन वहतीति वावह्यते । वावहांचक्रे इति वावहिः

अतिशयेन चलतीति । चाचल्यते । चाचलांचक्रे इति चाचलिः ॥ अतिशयेन पततीति पनीपत्यते । पनीपतांचक्रे इति । वञ्चुस्रंसु इति प्राप्तस्य नीकोऽभावो निपात्यते । पापतिः ॥ "रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् । याजकान्वव्रिराजह्निः पौण्डरीके महाद्विजान् ॥" रामो यज्ञे सोमं पपाविति पपिः । अक्तादाविति वर्जनान्न कर्मणि षष्ठी । रामो यज्ञे गाः सुरभीः ददाविति ददिः । रामो यज्ञे अद्भुतमाश्चर्यं चकारेति चक्रिः । रामो यज्ञे याजकान् यज्ञकर्तॄन् वव्रे इति वव्रिः । रामः पौण्डरीकनाम्नि यज्ञे महान्तश्च ते द्विजाश्च महाद्विजास्तान् आजहारेति आजह्निः ॥

(तत्त्वदी०)–आदृत इति ॥ आच ऋच तत्तस्मात् । लिङ्वद्भावान्नेमिरित्यादावेत्वपूर्वलोपौ । जग्मिरिति ॥ गमां स्वर इत्यलोपः ॥

---

## अथोणादयः ।

**( कृवादेरुण् ) कारुः । वातीति वायुः । पायुः । जायुः । मिनोतीति मायुः । स्वद आस्वादने स्वादुः । साधुः । आशुः । दीर्यते इति दारुः । सानुः ॥**

( सुबोधिनी )–अथोणादयः कृवादेरुण ॥ उण् प्रत्ययः स्यात् ॥ उण्प्रत्ययमाहणित्वाद्वृद्ध्यादि डुकृञ् करणे । करोतीति कारुः शिल्पी कारकश्च । तत्राद्ये योगरूढिर्द्वितीये तु योगमात्रमिति विवेकः । अत एव यौगिके तु धात्वर्थं प्रति कारकान्वयो भवत्येव । तथा च भट्टिः "राघवस्य ततः कार्यं कारुर्वानरपुंगवः । सर्ववानरसेनानामाश्वागमनमादिशत्" इति ॥ "विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः" इति मेदिनी ॥ 'कारुः शिल्पिनि कारके' इति धरणिः ॥ वा गतिगन्धनयोः । आतो युगिति युक् । वायुः ॥ पा पाने पा रक्षणे च । पिबत्यनेन तैलादिकमिति पायुः । युक् । 'गुदं त्वपानं पायुर्ना' इत्यमरः ॥ पाति रक्षतीति विग्रहे रक्षकोऽपि पायुः ॥ जि अभिभवे । जयत्यभिभवति रोगान् इति जायुः औषधम् । 'भेषजौषधभैषज्यान्यगदो जायुः' इत्यमरः ॥ पुंल्लिङ्गसाहचर्याज्जायुः पुंसि ॥ डुमिञ् प्रक्षेपणे । मिनोति प्रक्षिपति देहे ऊष्माणमितिर्मीनाति मिनोतिदीङामित्यात्वं युक् च । मायुः । 'मायुः पित्तं कफः श्लेष्मा' इत्यमरः ॥ गां वाचं विकृतां मिनोति प्रक्षिपतीति गोमायुः शृगालः ॥ स्वद आस्वादने । स्वदते रोचते इति स्वादुः ॥ साध संसिद्धौ साध्नोति परकार्यमिति साधुः । स्वादुसाधू विशेष्यनिघ्नौ ॥ अशूङ् व्याप्तौ । अश्नुते इत्याशुः । 'आशुर्व्रीहिः पाटलः स्यात्' । शीघ्रार्थोऽप्ययम् । तत्र विलम्बाभावमात्रपरत्वे क्लीबः । तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गः । अथ शीघ्रं त्वरितमित्युक्तम् । "क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां भेद्यगामि यत्" इत्यमरः ॥ दॄ विदारणे । दीर्यते इति दारु । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥ षण् दाने । सानुः । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः ॥

( तत्त्वदी० )–**क्रादे**रिति ॥ क्र आदिर्यस्य स क्रादिस्तस्मात् । कृवापाजिमिस्वदीत्यादय आदि-शब्दग्राह्याः । णो वृद्ध्यर्थः ॥ **कारु**रिति ॥ कारुः शिल्पिनि कारके । द्वितीयेऽर्थे योगमात्रम् । 'राघवस्य ततः कार्यं कारुर्वानरपुंगवः' इति भट्टिश्चात एव ॥ **वायु**रिति ॥ आतो युक् ॥ **पायु**रिति ॥ पिबत्यनेनौषधमिति पायुर्गुदम् । 'गुदं त्वपानं पायुर्ना' इत्यमरः ॥ **जायु**रिति ॥ जयति रोगानिति जायुरौषधम् । 'भेषजौषधभैषज्यान्यगदो जायुः' इत्यमरः ॥ **मिनोती**ति ॥ प्रक्षिपति देहे ऊष्माणमिति । 'मायुः पित्तं कफः श्लेष्मा' इत्यमरः ॥ स्वादते रोचते इति स्वादु मिष्टम् ॥ साध्नोति परकार्यमिति साधुः ॥ अश्नुते इत्याशुर्व्रीहिभेदः शीघ्रार्थश्च । विलम्बाभावमात्रपरत्वे क्लीबम् । तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम् । 'त्रिष्वेषां भेद्यगामि यत्' इत्यमरोक्तेः ॥

**( जनेर्ञुण् ) जानु । चारु । चाटु । किंशृणातीति किंशारुः । जरामेति जरायुः ॥**

( सुबोधिनी )–जनेर्ञुण् ॥ ञुण्प्रत्ययमाह–ञकारावितौ । अनुबन्धद्वयसामर्थ्यात् जनिवध्योर्नेति वृद्धिनिषेधो न प्रवर्तते । जन जनने । जानु, जानुनी ॥ चर गतौ । चारु रम्यम् ॥ चट भेदने । चाटु । 'चटु चाटु प्रियं वाक्यम्' इति हेमचन्द्रः ॥ 'चाटुर्नारि प्रियोक्तिः स्यात्' इति रत्नमाला ॥ तथा च माघः । 'चक्रर च किल चाटून्प्रौढयोषिद्वदस्य' इति । माघे तु क्लीबेऽपि । 'चाटु चाकृतकसंभ्रममासाम्' इति शॄ हिंसायाम् । किंशारुः । किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनी ॥ इण् गतौ । वृद्धौ कृतायामायादेशे च जरायुः गर्भाशयः ॥

( तत्त्वदी० )–जनेर्ञुणिति ॥ 'चटु चाटु प्रियं वाक्यम्' इति हेमचन्द्रः ॥ 'चटुर्नारि प्रियोक्तिः स्यात्' इति रत्नकोशात्पुंस्त्वमपि । तथोभयत्रोदाहृतं माघेन–'चाटु चाकृतकसंभ्रममासाम् ।' 'चक्रर च किल चाटून्प्रौढयोषिद्वदस्य' इति च ॥ 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति ॥

**( त्रोरस्य लः ) तरन्ति वर्णा अनेनेति तालु ॥**

( सुबोधिनी )–त्रोरस्य लः ॥ तॄ ऋ इति प्रश्लिष्य द्वयोरपि सवर्णे दीर्घे कृते त्रौ तयोस्त्रोः । तॄ प्लवनतरणयोः । ऋ गतौ । अनयोरस्य लः स्यात् ॥ उणि वृद्धौ सत्यां तालु ॥ इयर्ति अर्यते वा आलुः । शाकविशेषो घटी च । 'कर्कर्यालुर्गलन्तिका' इति ॥

**( कृके वचः कश्च ) कृकेन गलेन वक्तीति कृकवाकुः ॥**

( सुबोधिनी )–कृके वचः कश्च ॥ कृकशब्दे उपपदे वचेः कोऽन्तादेशः स्यादुणि ॥ कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ॥

**( भ्रादेरुः ) मरुः । शयुः । तरुः । चरुः । त्सर छद्मगतौ त्सरुः । तनुः । धनुः । मयुः । कटुः । बटुः । अणुः । शृणातीति शरुः । स्वरुः । त्रपुः । असवः । वसुः । हनुः । बन्धुः । मनुः । बिन्दुः ॥**

( सुबोधिनी )—म्रादेरुः ॥ उप्रत्ययः स्यात् ॥ उप्रत्ययमाह—मृङ् प्राणत्यागे । म्रियन्तेऽस्मिन्भूतानीति मरुः निर्जलदेशः ॥ भृञ् भरणे । डुभृञ् धारणादौ च भरति बिभर्ति वा भरुः । 'भरुः स्वर्णे हरे पुंसि' इति मेदिनी ॥ 'भरुर्भर्तृकनकयोः' इति हैमः॥ शीङ् स्वप्ने । शेते इति शयुः । 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः ॥ तॄ प्लवनतरणयोः । तरन्ति नरकमनेन रोपका इति तरुर्वृक्षः ॥ चर गत्यादौ । चरन्ति भक्षयन्ति देवा इममिति चरुः । 'चरुर्भाण्डे च हव्यान्ने' इति विश्वः ॥ घृतपक्वमन्नमित्यर्थः ॥ त्सर छद्मगतौ । त्सरुः खड्गादिमुष्टिः ॥ तनुविस्तारे । तनुः । "तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे" इति मेदिनी ॥ 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः ॥ धन धान्ये । धनुः । "स्यात्तनुस्तनुषा सार्धं धनुषा च धनुर्विदुः" इति विश्वः ॥ उकारान्ते श्रीहर्षः—"शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्रः । क्षिप्तुरेनमृजुमाशु सपक्षं सायकं धनुरिवाजनि वक्रः ॥" 'धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने' इति सान्ते मेदिनी ॥ 'अथास्त्रियां धनुश्चापौ' इत्यमरः ॥ डुमिञ् प्रक्षेपणे । मीनातिमिनोतीत्यात्वं तु नेह बाहुलकात् । मयुः । 'तुरङ्गवदनो मयुः' इत्यमरः ॥ 'मयुस्तुरंगवदने मृगोऽपि मयुरिष्यते' इति विश्वः ॥ टुमस्जो शुद्धौ । मज्जति पानीये इति न्यङ्क्वादित्वाद्गः । झवे जबा इति सस्य दः मद्गुः । 'मद्गुः पानीयकाकिका' इति रभसः ॥ अण अब्दे । अणुः । 'व्रीहिभेदस्त्वणुः पुमान्' इति 'लवलेशकणाणवः' इति चामरः ॥ कटे वर्षादौ । कटति रसनामिति कटुः । "कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुँल्लिङ्गो रसमात्रके । त्रिषु तद्वत्सुगन्धश्च मत्सरेऽपि खरेऽपि च" इति मेदिनी॥ वट वेष्टने । वटतीति वटुः । 'वटुर्द्विजसुतः स्मृतः' इसि संसारावर्तः ॥ शॄ हिंसायाम् । शरुः । 'शरुः कोपे शरे वज्रे' इति हैमः ॥ स्वृ शब्दोपतापयोः । स्वरुः । 'शतकोटिः स्वरुः शम्बः' इत्यमरः ॥ त्रपूष् लज्जायाम् । अग्निं दृष्ट्वा त्रपते लज्जते इति त्रपुः । 'रंगसीसकयोस्त्रपुः' इति मेदिनी ॥ असु क्षेपणे । अस्यन्ति क्षिपन्ति शरीरमिति असवः । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः ॥ वस निवासे । वसुः । "वसुर्देवेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ" ॥ हन हिंसागत्योः । हनुः । 'हनुः पुमान् परो गण्डात्' इति वररुचिकोशः ॥ स्त्रीलिंगेऽप्ययम् । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनी ॥ मतुप्रत्यये हनुमान् । पाक्षिको दीर्घोऽपि निपात्यते । हनूमान्॥ बन्ध बन्धने । स्नेहेन बध्नातीति बन्धुः। 'बन्धुर्बन्धूकपुष्पे स्याद्बन्धुर्भ्रातरि बान्धवे' इति विश्वः॥ मन ज्ञाने । मनुः । आदिराजो मन्त्रश्च ॥ बिदि अवयवे । बिन्दुः ॥

( तत्त्वदी० )—म्रादेरिति ॥ मरुरिति ॥ 'मरुः स्वर्णहरे पुंसि' इति मेदिनी ॥ 'मरुर्भर्तृकनकयोः' इति हेमचन्द्रः ॥ शयुरिति ॥ अजगरे शयुः ॥ तरुरिति ॥ तरन्ति नरकमनेन रोपकाः ॥ चरुरिति ॥ 'चरुर्भाण्डे च हव्यान्ने' इति विश्वः ॥ त्सरुः खड्गमुष्टिः ॥ तनुः स्वल्पः । मूर्तौ स्त्रियाम्॥ धनुः शस्त्रविशेषः । 'धनुषा च धनुर्विदुः' ॥ मयुः किन्नरः ॥ अणुर्लेशः ॥ 'वटुर्द्विजसुतः स्मृतः'

स्वर्ल्वत्रम् ॥ त्रपुरिति ॥ त्रपतेऽग्निं दृष्ट्वा त्रपुः । 'रङ्गसीसकयोस्त्रपुः' । 'पुंसि भूम्न्युसवः प्राणाः' ॥ 'वसु तोये धने मणौ' । 'हनुः पुमान् परो गण्डात्' ॥ बन्धुः । स्नेहेन बध्नाति मनुरादिराजो मन्त्रश्च ॥

**( स्यन्देः संप्रसारणं धश्च ) सिन्धुः ॥**

( सुबोधिनी )—स्यन्देः संप्रसारणं धश्च ॥ स्यन्दू प्रस्रवणे । अस्य यकारस्य संप्रसारणं दस्य धश्च स्यादुप्रत्यये ॥ सिन्धुः । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः ॥

( तत्त्वदी० )—सिन्धुरिति ॥ 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः ॥

**( उन्देरिच्चादेः ) उनत्तीति इन्दुः ॥**

( सुबोधिनी )—उन्देरिच्चादेः ॥ उन्दी क्लेदने । अस्योकारस्य इः स्यादुप्रत्यये: इन्दुः ॥

**( स्कन्देः सलोपश्च ) कन्दुः ॥**

( सुबोधिनी )—स्कन्देः सलोपश्च ॥ स्कन्दिर् गतिशोषणयोः । अस्य सस्य लोपः स्यादुप्रत्यये ॥ स्कन्दति शोषयतीति कन्दुः । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम्" इत्यमरः ॥ स्कन्दति जनता यस्मिन्निति व्युत्पत्त्या भोगस्थानं कन्दुरिति केचित् ॥

( तत्त्वदी० )—कन्दुरिति ॥ स्कन्दत्यस्मिञ्जनता इति कन्दुर्भोगस्थानम् ॥

**( सृजेरसुम् सलोपश्च ) रज्जुः ॥**

( सुबोधिनी )—सृजेरसुम् सलोपश्च ॥ सृज विसर्गे । आगमसकारस्य श्चुत्वेन शः झवे जवा इति जः । सृजतीति रज्जुः । 'रज्जुर्वेण्यां गुणे योषित्' इति मेदिनी ॥

( तत्त्वदी० )—रज्जुरिति ॥ सस्य श्चुत्वेन शस्वस्य जः ॥

**( फलेर्गुक् च ) फल्गुः ॥**

( सुबोधिनी )—फलेर्गुक् च ॥ फल निष्पत्तौ । फल्गुः । "फल्गुः काकोदुम्बरिका भवेत्फल्गु निरर्थकम्" इति हैमः ॥ नदी च ॥

**( पाटेः पटिश्च ) पाटयतीति पटुः समर्थः ॥**

( सुबोधिनी )—पाटेः पटिश्च ॥ पटिरादेशः स्यात् ॥ पट गतौ ण्यन्तः । पाटयतीति पटुः ॥

**( मनेर्धश्च ) मन ज्ञाने । मधुः ॥**

( सुबोधिनी )—मनेर्धश्च ॥ धान्तादेशः स्यादुप्रत्यये ॥ मन ज्ञाने । मन्यत इति मधुः—"मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मधु" इति हेमचन्द्रः ॥ "मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः ।" अर्द्धर्चादिगणे पाठात् । 'पुंनपुंसकयोर्मधु' इति शाश्वतः ॥

( जनेस्तश्च ) जतु ॥

( सुबोधिनी )—जनेस्तश्च ॥ तान्तादेशः स्यादुप्रत्यये ॥ जनी प्रादुर्भावे । जायते इति जतु लाक्षा ॥

( वलेर्गुक् च ) वल संवरणे । वल्गुः ॥

( सुबोधिनी )—वलेर्गुक् च ॥ गुगागमः स्यादुप्रत्यये ॥ वल संवरणे । दन्त्योष्ठ्यादिः । वल्गुः । "वल्गुः स्याच्छागले पुंसि सुन्दरे चाभिधेयवत्" इति मेदिनी ॥

( नमेर्नाकिश्च ) नम्यतेऽनेनेति नाकुः ॥

( सुबोधिनी )—नमेर्नाकिश्च ॥ णम प्रह्वत्वे शब्दे च नाकुः । "वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्" इत्यमरः ॥

( तत्त्वदी० )—नाकुर्वल्मीकम् ॥

( श्यतेः कुः सवच्च ) शिशुः ॥

( सुबोधिनी )—श्यतेः कुः सवच्च ॥ कुप्रत्ययः स्यात् स कुः सप्रत्ययवद्भवति ॥ तेन सप्रत्यये यत्कार्यं द्वित्वादि तत्स्यात । कुप्रत्ययमाह—कित्वान्न गुणः । शो तनूकरणे कुप्रत्यये संध्यक्षराणामित्यात्वम् । द्वित्वम् । यः से इति पूर्वस्येत्वम् । आतोऽनपीत्यालोपः । शिशुर्बालकः ॥

( याभ्रोर्द्विश्च ) ययुः । बभ्रुः ॥

( सुबोधिनी )—याभ्रोर्द्विश्च ॥ आभ्यां कुः स्याद्धातोर्द्वित्वं च ॥ या प्रापणे । भृञ् भरणे । यातीति ययुः । भरतीति बभ्रुः । 'ययुरश्वोऽश्वमेधीयः' "बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्" इति मेदिनी ॥ "बभ्रुर्मन्वन्तरे विष्णौ बभ्रुर्नकुलपिङ्गलौ" इति धरणिः ॥ चादन्यतोऽपि । चक्रुः कर्त्ता । जघ्नुर्हन्ता । पपुः पालकः ॥

( व्यधेः कुः ) विधुः ॥

सुबोधिनी —व्यधेः कुः ॥ कुप्रत्ययः स्यात ॥ व्यध ताडने । ग्रहामिति संप्रसारणम् । विरहिणं विध्यतीति विधुः । "विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे" इति विश्वः ॥

( कृग्रोरुरङ् च ) करोतीति कुरुः । गृ शब्दे । गृणातीति गुरुः ॥

( सुबोधिनी )—कृग्रोरुरङ् च ॥ आभ्यां कुः स्यादुरन्तादेशश्च ॥ डुकृञ् करणे । गॄ शब्दे । करोतीति कुरुः । "कुरुर्नृपान्तरे भक्ते पुमान्पुं भूम्नि नीवृति" इति मेदिनी ॥ गृणाति तत्त्वमिति गुरुः ॥

( रपेरस्येच्च ) अनिष्टं रपतीति रिपुः ॥

( सुबोधिनी )-रपेरस्येच्च ॥ रपेः कुप्रत्ययः स्यादकारस्येच्च ॥ रप गतौ । अनिष्टं रपतीति रिपुः ॥

**( अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च )** अर्जयति गुणानिति ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कमु कान्तौ कन्तुः । अन्धुः । पांशुः । बाधते इति बाहुः ॥

( सुबोधिनी )-अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च ॥ अर्ज अर्जने । अस्य ऋजिरादेशः षड्भ्यः कुप्रत्ययश्च । अर्जयति गुणानिति ऋजुः ॥ दृशिर् प्रेक्षणे । अस्य पशिरादेशः । पशुः । चादिगणेऽपि पठितः । 'पशु इत्यर्थमव्ययम्' इति धरणिः ॥ कमु कान्तौ । अस्य तुगागमः । कन्तुः । 'कन्तुर्मकराकरः' इति त्रिकाण्डशेषः ॥ अम रोगे अम गत्यादौ वा अस्य धुगागमः । अन्धुः कूपः ॥ पशि नाशने सौत्रः । अस्य दीर्घः । पांशुः । पडि पंसि नाशने । चुरादिर्दन्त्यान्तो वा । 'पांशुर्ना न द्वयो रजः' इत्यमरः ॥ "तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः" इति ॥ बाधृ लोडने । अस्य हान्तादेशः । बाहुः । 'बाहुः स्त्रीपुंसयोर्भुजे' इत्यमरः ॥ अकारान्तोऽप्ययम् । 'बाहोश्च भुजयोः पुमान्' इति दामोदरः ॥ आवन्तोऽपि। "बाहा भुजे पुमान्मानभेदाश्च वृषवायुषु" इति मेदिनी ॥

**( प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च )** पृथुः । मृदुः ॥

( सुबोधिनी )-प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ॥ त्रिभ्यः कुप्रत्ययः स्यात् त्रयाणां संप्रसारणं च भ्रस्जेः सलोपश्च ॥ प्रथ प्रख्याने । प्रथते इति पृथुः । 'पृथु स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे' इति मेदिनी ॥ म्रद मर्दने । म्रदितुं शक्यते अकठिनत्वादिति मृदुः कोमलः ॥ भ्रस्ज पाके ॥

**( न्यङ्क्वादेः कुः )** न्यंकुः । भृज्जति तपसा इति भृगुः ॥

( सुबोधिनी )-न्यङ्क्वादेः कुः ॥ न्यङ्क्वादिगणे कुत्वं निपात्यते ॥ नितरामञ्चतीति न्यङ्कुः । न्यङ्क्वादित्वात्कुत्वम् । भृगुः । भृगुः शुक्रे प्रधाने च जमदग्नौ पिनाकिनि' इति विश्वः ॥

**( लघिबंह्योर्नलोपश्च )** लघुः ॥

( सुबोधिनी )-लघिबंह्योर्नलोपश्च ॥ लघि गतौ । लघुः । 'पृक्कायां स्त्री लघु क्लीबं शीघ्रे कृष्णाऽगुरुण्यपि' इति त्रिकाण्डशेषः ॥ "लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कायामौषधौ स्त्रियाम्" इति मेदिनी ॥

**( वालमूललघ्वङ्गुलीनां वा लस्य रः )** वालः-वारः । मूलम्-मूरम् । लघुः-रघुः । अङ्गुलिः-अङ्गुरिः । बहि गतौ । बहुः ॥

( सुबोधिनी )—बालमूललघ्वङ्गुलीनां वा लस्य रः ॥ एषां लो रत्वमापद्यते वा ॥ रघुर्नृपभेदः । 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम्' इति रघुवंशे ॥ बहि वृद्धौ बहुः । 'बहुस्तु त्र्यादिसंख्यासु विपुले त्वभिधेयवत्' इति मेदिनी ॥

**( ऊर्णोतेर्नुलोपश्च )** ऊरुः ॥

( सुबोधिनी )—ऊर्णोतेर्नुलोपश्च ॥ ऊर्णुञ् आच्छादने । ऊर्णूयते आच्छाद्यते इत्यूरुः । कर्मणि कुप्रत्ययः ॥

**( महति ह्रस्वश्च )** उरु महत् ॥

( सुबोधिनी )—महति ह्रस्वश्च ॥ ऊर्णोतीति कर्तरि कुप्रत्ययः ॥ उरु महत् ॥

**( आङ्परयोः खनिशॄभ्यां डिच्च )** आखनतीत्याखुः । शॄ हिंसायाम् । परान् शृणातीति परशुः ॥

( सुबोधिनी )—आङ्परयोः खनिशॄभ्यां डिच्च ॥ अनयोरुपपदयोराभ्यां कुः स्यात् स डिच्च ॥ डित्त्वाट्टिलोपः । खनु अवदारणे । आखुः ॥ शॄ हिंसायाम् । परं शृणातीति परशुः । पृषोदरादित्वादकारस्य लोपः । पर्शुः । 'पर्शुः परशुना सह' इति विश्वः ॥

**( द्रोश्च )** द्रवति ऊर्ध्वमिति द्रुः । शतधा द्रवतीति शतद्रुः ॥

( सुबोधिनी ) द्रोश्च ॥ द्रु गतौ अस्मात् कुः स्यात् स च डित् ॥ द्रवतीति द्रुः वृक्षः शाखा च । तद्वान् द्रुमः ॥ शतद्रुः । 'शतद्रुस्तु शुतुद्रिः स्यात्' इत्यमरः ॥

**( मृगय्वादयो निपात्याः )** मृगं यातीति मृगयुः । शङ्कुः । नीलङ्गुः कृमिविशेषः **( मन्द्यादेरुरः )** मदि मन्दुरा । वाशुरा । मथे हिंसायाम । मथुरा । चते याचने । चतुरः । अङ्कुरः ॥

( सुबोधिनी )—मृगय्वादयो निपात्याः ॥ कुप्रत्ययान्ता निपात्यन्ते॥या प्रापणे। आतोऽनपीत्यालोपः । मृगं यातीति मृगयुः। 'मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि' इति मेदिनी ॥ 'मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपि' इति विश्वः । शकि शङ्कायाम् । शङ्कतेऽस्मादिति शङ्कुः । "शङ्कुः कीले गरे शस्त्रे संख्यापादपभेदयोः । पादभेदे च पापे च स्थाणावपि च दृश्यते" इति विश्वः ॥ 'शङ्कुर्ना कीलशल्ययोः' ॥ लगि गतौ अस्मात् कुप्रत्यये दीर्घे च निपातनात्कृते नीलङ्गुः । केचित्तु नीलशब्दे उपपदे गमेः कुप्रत्यये टिलोपः पूर्वपदस्य मुम् पाक्षिकदीर्घश्च निपात्यत इत्याहुः । 'नीलङ्गुः कृमिजातौ स्याद्भ्रमरालीप्रसूतयोः' इति विश्वः ॥ 'नीलङ्गुः स्यात्कृमौ पुंसि भ्रमराल्यां तु योषिति' इति मेदिनी ॥ 'नीलङ्गुरपि नीलगुः' इति विश्वः ॥ मन्द्यादेरुरः उरप्रत्ययः स्यात् ॥ उरप्रत्ययमाह—मदि स्तुत्यादौ । मन्दुरा ।

'वाजिशाला तु मन्दुरा' इत्यमरः ॥ मन्थ विलोडने मथुरा ॥ चते याचने । चतुरः ॥ वाशृ शब्दे । वाश्यन्ते अस्यामिति वाशुरा रात्रिः गर्दभोऽपि ॥ अकि लक्षणे । अङ्कुरः। 'अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि ।' खर्जूरादित्वादूरप्रत्यये अङ्कूरोऽपि । 'अङ्कूरोऽङ्कुर एव च' इति विश्वप्रकाशः ॥

( तत्त्वदी० )—**मृगयु**रिति ॥ मृगयुर्व्याधः॥ **शङ्कु**रिति ॥'शङ्कुर्ना कीलशल्ययोः'। नीलङ्गुः कृमिविशेषः सृगालश्च ॥ **मन्दु**रेति ॥ 'मन्दुरा वाजिशाला स्यात्'॥ **वाशुरे**ति ॥ वाश्यन्तेऽस्यामिति वाशुरा रात्रिर्गर्दभोऽपि च 'वाशुरा वासितारात्र्योः' इति मेदिनी ॥ **अङ्कुर** इति ॥ 'अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि । अङ्कूरोऽपि च ॥'

**( मद्गुरादयो निपात्याः ) माद्यतीति मद्गुरः । कर्बुरः । बन्धुरः । बन्धूरः । कुक वृक आदाने । कुक्कुरः । कुकुरः । असुरः । आसुरः । मसुरः । मसूरः ॥**

( सुबोधिनी )—**मद्गुरादयो निपात्याः** ॥ उरप्रत्ययान्ता निपात्यन्ते—मदी हर्षे गुगागमो निपात्यते । माद्यतीति मद्गुरो मत्स्यभेदः ॥ कर्बृ वर्णे । रुगागमो धातोर्निपात्यते । कर्बुरः । "कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत्" इति मेदिनी ॥ 'कर्बुरश्चित्ररक्षसोः' ॥ बन्ध बन्धने ॥ बध्नातीति बन्धुरः । खर्जूरादित्वादूरप्रत्ययोऽपि । 'बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु' इति रन्तिदेवः॥ कुक आदाने । कोकतेर्वा कुगागमो निपात्यते । कुक्कुरः । 'कुकुरः कुक्कुरो मतः' इति हरचन्द्रः ॥ कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसके' इति मेदिनी ॥ असु क्षेपणे । असुरः । अण्प्रत्यये आसुरः । मसी परिणामे । मसुरः । ऊरप्रत्यये मसूरोऽपि । "मसूरा मसूरा वा ना वेश्याव्रीहिप्रभेदयोः । मसूरी पादरोगे स्यादुपधाने पुनः पुमान्" इति मेदिनी ॥ 'मसूरमसुरौ च द्वौ' इति विश्वः ॥

( तत्त्वदी० )—**मद्गुर** इति ॥ मत्स्यभेदः । **कर्बुर** इति ॥ कर्बृ वर्णे । 'कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः ।' शबले त्रिष्वपि॥ **बन्धुर** इति ॥ 'बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु ॥' **मसुर** इति ॥ "मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः । मसुरा पादरोगे स्यादुपधाने पुनः पुमान्" ॥

**( शावशेराप्तौ ) शु इति आश्चर्ये । शु शीघ्रमश्नुते प्राप्नोति कन्यां यस्मात्सः श्वशुरः ॥**

( सुबोधिनी )—**शावशेराप्तौ** ॥ आशुशब्दस्य निपातनादाकारलोपस्तस्मिन् शुशब्दे उपपदे आप्तौ गम्यमानायाम् अशूङ् व्याप्तावित्यस्माद्धातोरुरप्रत्ययः स्यात् ॥ श्वशुरः । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः ॥

**( अविमह्योर्टिषच् ) अविषः । महिषः । महिषी राजपत्नी ॥**

( सुबोधिनी )—अविमह्योरिषट् ॥ इषट् प्रत्ययः स्यात् ॥ इषट्प्रत्यमाह—टित्त्वात् ष्ट्रिद्गौरादिभ्यश्चेति ङीष् । अव रक्षणादौ । अविषः । 'अविषौ राजजलधी' इत्युक्तत्वादविषशब्देन राजा समुद्रश्चोच्यते ॥ मह पूजायाम् । महिषः । 'महिषी राजयोषिति' इति हैमः ॥

(तत्त्वदी० )—अविष इति ॥ 'अविषौ राजजलधी महिषस्तु महान्मतः' । 'महिषी राजपत्नी स्यात्' ॥

## ( अमेर्दीर्घश्च ) अम गत्याम् । आमिषम् ॥

( सुबोधिनी )—अमेर्दीर्घश्च ॥ अस्य दीर्घः स्यादिषट् प्रत्ययश्च ॥ अम गत्यादौ । आमिषम् । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि ॥'

( तत्त्वदी० )—'आमिषं त्वस्त्रियां मांसे भोग्यवस्तुनि चेष्यते ॥'

## ( रुहेर्वृद्धिश्च ) रौहिषः ॥

( सुबोधिनी )—रुहेर्वृद्धिश्च ॥ अस्य वृद्धिः स्यादिषट् प्रत्ययश्च ॥ रुह बीजजन्मनि । रौहिषः । 'रंकुशम्बररौहिषाः' इत्यमरः ॥ 'रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतम्' इति संसारावर्तः ॥

( तत्त्वदी० )—रौहिषमिति ॥ 'तृणे च मृगभेदे च' ॥

## ( किलेर्बुक् च ) किल शौक्ल्ये । केलतीति किल्बिषम् ॥

( सुबोधिनी )—किलेर्बुक् च ॥ किल श्वैत्यक्रीडनयोरस्मादिषट् प्रत्ययो धातोर्बुगागमश्च स्यात् ॥ किल्बिषम् । 'किल्बिषं पापरोगयोः अपराधेऽपि' इति मेदिनी ॥

( तत्त्वदी० )—किल्बिषमिति ॥ पापरोगयोः ॥

## ( मद्यादेः किरः ) मदिरा । मुदिरः । मन्दिरम् । तिमिरम् । मिहिरः । छिदिरः । रुचिरम् । रुधिरम् । बन्ध बन्धने । बधिरः । सुषिरम् ॥

( सुबोधिनी )—मद्यादेः किरः ॥ किरप्रत्ययः स्यात् ॥ किरप्रत्ययमाह—कित्त्वान्न गुणः । मदी हर्षे । मदिरा सुरा ॥ मुद हर्षे । मुदिरः । 'मुदिरः कामुकाभ्रयोः' इति मेदिनी ॥ मदि स्तुत्यादौ । मन्दिरम् । 'मंदिरं नगरेऽगारे क्लीबं ना मकरालये' इति मेदिनी ॥ तिम आर्द्रीभावे । तिमिरम् । 'तिमिरं ध्वान्ते नेत्रामयेऽन्तके' इति मेदिनी ॥ मिह सेचने । मिहिरः । 'मिहिरः सूर्यबुद्धयोः' इति मेदिनी ॥ रुच दीप्तौ । रुचिरम् । 'सुन्दरं रुचिरं चारु' इत्यमरः ॥ रुधिर् आवरणे । रुधिरम् । 'रुधिरोऽङ्गारके पुंसि क्लीबं तु कुंकुमासृजोः' इति मेदिनी ॥ बन्ध बन्धने । नो लोप इति नलोपः । बधिरः । श्रोत्रेन्द्रियरहितः ॥ शुष शोषणे । 'शुषिरं वंशादिवाद्ये विवरे च नपुंसकम् ।' 'शुषिरं विवरं बिलं छिद्रम्' इत्यमरः ॥

( तत्त्वदी० )—**मुदिर** इति ॥ 'मुदिरः कामुकाभ्रयोः' ॥ **मन्दिर**मिति ॥ 'नगरागारयोः क्लीबम्'। 'मिहिरः सूर्यवृद्धयोः'। **रुधिर**मिति ॥ 'रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः'। 'शुषिरं वंशादिवाद्ये च नपुंसकम् ॥'

**( अजिरादयो निपात्याः ) अजिरम् । शश प्लुतगतौ । शशतीति शिशिरम् । श्रथ मोचने शिथिलम् । स्थिरम् । स्फायी स्फिरम् । स्थविरः । खदिरः । शीङ् । शिबिरम् । सल गतौ । सलिलम् । अनिलः । महिला । कोकिलः । कमु कपिलः । मथ्यन्ते रिपवोऽस्यामिति मिथिला ॥**

( सुबोधिनी )—**अजिरादयो निपात्याः** ॥ किरप्रत्ययान्ता निपात्यन्ते । अज गतौ । अजेर्वीभावाभावः । अजिरम् । दशपादीवृत्तौ तु नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो निपात्यते इत्युक्तम् । न जीर्यतीत्यजिरम् । 'अजिरं प्राङ्गणे काये विषये दुर्दुरेऽनिले' इति मेदिनी ॥ शश प्लुतगतौ । शशेरुपधाया इत्वं निपात्यते । शिशिरम् । 'शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' इति विश्वः ॥ 'शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु' इति मेदिनी ॥ श्रथ मोचने । धातोरुपधाया इत्वं रलोपः प्रत्ययरेफस्य लत्वं च निपात्यते । शिथिलम् ॥ ष्ठा गतिनिवृत्तौ । आतोऽनपीत्यालोपः स्थिरं निश्चलम् । तिष्ठतेर्वुक् ह्रस्वत्वं च निपात्यते । स्थविरः ॥ स्फायी वृद्धौ । यत इति यलोपः । आतोऽनपीत्यालोपः । स्फिरम् । 'भूर्यदभ्रं पुरु स्फिरम्' इति हैमः ॥ खद स्थैर्ये । खदिरः । 'खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने' इति मेदिनी ॥ शीङ् स्वप्ने । शीङो वुक् ह्रस्वश्च निपात्यते । शेरतेऽस्मिन् राजबलानीति शिबिरं निवेशः । 'निवेशः शिबिरं षण्ढे' इत्यमरः ॥ सल गतौ । सलिलादय इलप्रत्ययान्ता निपात्यन्ते । सलति गच्छति निम्नमिति सलिलम् ॥ अन प्राणने । अनिलः ॥ मह पूजायाम् । महिला । पृषोदरादित्वान्महेलापि । 'महेला फलिनी स्त्रियोः' इति मेदिनी । 'प्रियंगुः फलिनी फली' इत्यमरः ॥ दमयन्तीकाव्ये प्रयोगो यथा—'परमहेलारतोऽप्यपारदारिकः' अत्र परस्य महेला स्त्री अथ च परमा उत्कृष्टा हेला क्रीडा तत्र रत इत्यर्थः ॥ कुक आदाने । कोकिलः ॥ कुट कौटिल्ये । बाहुल्याद्गुणाभावः । कुटिलः ॥ कमु कान्तौ । मस्य निपातनात्पः । कपिलः । "कपिला रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकः । नानले वासुदेवे च मुनिभेदे च कुक्कुरे" इति मेदिनी ॥ मन्थ विलोडने । अकारस्येत्वं निपात्यते । मथ्यन्ते रिपवोऽत्रेति मिथिला नगरी ॥

( तत्त्वदी० )—**अजिर**मिति ॥ "अजिरं प्राङ्गणे काये विषये दर्दुरेऽनिले । शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्" ॥ **स्फिर**मिति ॥ निश्चलम् । 'खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने' इति ॥ **शिबिर**मिति ॥ शेरतेऽस्मिन् राजबलानीति शिबिरं निवेशः ॥ **महिलेति** ॥ 'महिला फलिनी स्त्रियाम्' ॥

**( कुबेरादयोऽपि ) कुबि आच्छादने । कुबेरः । कबृ वर्णे । कपोतः ॥**

( सुबोधिनी )—कुबेरादयोऽपि ॥ कुबि आच्छादने अस्मादेरप्रत्ययो नलोपश्च निपात्यते ॥ कुम्बत्यन्येषामैश्वर्यमिति कुबेरः । 'कुबेरस्त्र्यम्बकसखः' इत्यमरः ॥ कबृ वर्णे अस्मादोतप्रत्ययो वकारस्य पत्वं निपात्यते । कपोतः । 'कपोतः स्याच्चित्रकण्ठे पारावतविहंगयोः' इति मेदिनी ॥ 'कपोतः पक्षिमात्रेऽपि' इति त्रिकाण्डशेषः ॥

**( भातेर्डवतुः ) भातीति भवान् ॥**

( सुबोधिनी )—भातेर्डवतुः ॥ डवतुप्रत्ययमाह—डित्त्वाट्टिलोपः । उदित्त्वान्नुम् ईषू च । भातीति भवान् । भा दीप्तौ । सर्वादिशब्दोऽयम् ॥

**( किशोरादयो निपात्यन्ते ) किंशृणातीति किशोरः । कठ कृच्छ्रजीवने । कठोरः।चक तृप्तौ।चकोरः। कपि कपोलः।पटोलः॥**

( सुबोधिनी )—किशोरादयो निपात्यन्ते ॥ ओरप्रत्ययान्ता ओलप्रत्ययान्ताश्च ॥ किम्पूर्वस्य शृणातेष्टिलोपश्च किमोऽन्त्यलोपश्च निपातनात् । शॄ हिंसायाम् किशोरः । 'किशोरोऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः' इति मेदिनी ॥ कठ कृच्छ्रजीवने । कठोरः । कठिनः पूर्णश्च । 'कठोरताराधिपलाञ्छनच्छविः' इति माघः ॥ चक तृप्तौ । चकोरः पक्षिभेदः ॥ कपि चलने । नलोपो निपातनात् । कपोलः । ओलप्रत्ययोऽप्येभ्यो निपातनात् ॥ पट गतौ । पटोलः । 'पटोलं वस्त्रभेदे नौषध्यां ज्यौत्स्न्यां तु योषिति' इति मेदिनी ॥

( तत्त्वदी० )—'किशोरोऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः' ॥

**( मीनातेरूरः ) मयूरः ॥**

( सुबोधिनी )—मीनातेरूरः ॥ ऊरप्रत्ययमाह—मीञ् हिंसायाम् मयूरः ॥

**( स्यन्देः संप्रसारणम् ) सिन्दूरम् ॥**

( सुबोधिनी )—स्यन्देः संप्रसारणम् ॥ स्यन्दू प्रस्रवणे अस्मादूरप्रत्ययः संप्रसारणं च स्यात् ॥ सिन्दूरम् ॥ 'सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तचूर्णके' इति मेदिनी ॥

**( स्यादेस्तुः ) सेतुः । तन्तुः । ओतुः । मसी परिणामे । मस्तुः । धातुः । षच समवाये सचति समावेशयति चात्मनि जलमिति सक्तुः । क्रोष्टा ॥**

( सुबोधिनी )—स्यादेस्तुः ॥ तुप्रत्ययमाह—षिञ् बन्धने । सेतुः । 'सेतुरालौ स्त्रियां पुमान्' इत्यमरः ॥ 'सेतुर्नालौ कुमारके' इति मेदिनी ॥ तनु विस्तारे । तन्तुः । 'सूत्राणि नरितन्तवः' इत्यमरः ॥ मसी परिणामे ॥ मस्तुः । 'मण्डं दधिभवं मस्तु' इत्यमरः ॥ षच सेचने । सच्यते इति सक्तुः । चोः कुरिति कः । अर्द्ध-

चादिः ॥ डुधाञ् धारणपोषणयोः । "धातुर्ना नेन्द्रिये त्रिषु । शब्दयोनिमहाभूततद्गुणेषु रसादिषु । मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्ति च" इति मेदिनी ॥ "श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः" इत्यमरः ॥ क्रुश आक्रोशे । छशषेति षत्वं ष्टुत्वं तृवद्भावः । क्रोष्टा । स्तुरारित्यार् । क्रोष्टारौ ॥

( तत्त्वदी० )–स्यादेरिति ॥ सिनातीति सेतुः जलमिति शेषः ॥ मस्तुरिति ॥ दधिमण्डम् ॥ धातुरिति ॥ 'मनःशिलादौ धातुः स्यादिन्द्रियेषु तथैव च' ॥

**( अरतेस्तुक् )** ऋतुः । मन्तुः । जनी प्रादुर्भावे । जन्तुः ॥

( सुबोधिनी )–अर्तेस्तुक् ॥ तुक्प्रत्ययमाह–कित्वान्न गुणः । ऋ गतौ । ऋतुः । 'ऋतुर्वर्षादिषट्सु च' । 'आर्तवे मासि च पुमान्' इति मेदिनी ॥ 'ऋतुः स्त्री कुसुमेऽपि च' इत्यमरः ॥ 'ऋतुः स्त्रीपुष्पकालयोः' इति विश्वः ॥ पुनस्तुप्रत्ययमाह–मन ज्ञाने मन्तुः । 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' इति मेदिनी ॥ जनी प्रादुर्भावे । जन्तुः प्राणी ॥

( तत्त्वदी० )–ऋतुरिति ॥ 'स्त्रीपुष्पे च ऋतुः काले' । मन्तुरपराधः ॥

**( चायः किः )** केतुः । वस्तु ॥

( सुबोधिनी )–चायः किः ॥ चायृ पूजानिशामनयोः अस्मात्तुप्रत्ययो धातोः किरादेशश्च स्यात् ॥ केतुः । 'केतुर्ग्रहपताकयोः' इति विश्वः ॥ 'केतुर्ना रुत्पताकादिग्रहोत्पातेषु लक्ष्मणि' इति मेदिनी ॥ वस निवासे तुः । वस्तुः ॥

( तत्त्वदी० )–केतुरिति ॥ पताकाग्रहोत्पातेषु लक्ष्मणि च ॥

**( आगारे णित् )** वास्तुः ॥

( सुबोधिनी )–आगारे णित् ॥ आगारेऽर्थे वसेस्तुण् स्यात् ॥ तुण्प्रत्ययमाह–णित्वाद्वृद्धिः । वास्तुः । 'वेश्मभूर्वास्तुरस्त्रियाम्' इत्यमरः ॥

**( कृञः क्तुः )** क्रतुः ॥

( सुबोधिनी )–कृञः क्तुः ॥ क्तुप्रत्ययमाह–कित्वान्न गुणः । डुकृञ् करणे । क्रतुः । 'क्रतुर्यज्ञे मुनौ पुंसि' इति मेदिनी ॥

( तत्त्वदी० )–क्रतुरिति ॥ 'क्रतुर्यज्ञे मुनौ पुंसि' ॥

**( जीवेरातृको वृद्धिश्च )** जीवयति कुमुदानीति जैवातृकः ॥

( सुबोधिनी )–जीवेरातृको वृद्धिश्च ॥ जीव प्राणधारणे अस्मादातृकप्रत्ययः स्याद्धातोर्वृद्धिश्च ॥ आतृकप्रत्ययमाह–जैवातृकः । 'जैवातृकः पुमान्सोमे कृषकायुष्मतोस्त्रिषु' इति मेदिनी ॥ 'जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले' इति ॥ अस्मादातुप्रत्ययोऽपि 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे' ॥

( तत्त्वदी० )–जीवेरिति ॥ 'जैवातृकः पुमान्सोमे कृषकायुष्मतोस्त्रिषु' ॥

**( कृषादेरूः )** कर्षूः । खर्ज व्यथने । खर्जूः ॥

(सुबोधिनी)—कृषादेरूः ॥ ऊप्रत्ययमाह—कृष विलेखने कर्षूः । 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता' इति विश्वः ॥ 'कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्याल्पखातयोः' इति मेदिनी ॥ खर्ज व्यथने । खर्जूः । 'खर्जूः खर्जूरी कीटकं द्रुघुः' इति हैमः ॥ पामा च ॥

(तत्त्वदी०)—कृषादेरिति ॥ 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता' । खर्जूः कीटान्तरे वृत्तौ' इति मेदिनी ॥

**( वहो धश्च )** वहति प्राप्नोति धनमिति वधूः ॥

(सुबोधिनी)—वहो धश्च ॥ वह प्रापणे अस्य धान्तादेश ऊप्रत्ययश्च स्यात् ॥ वधूः स्त्रीविशेषः । 'वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च' इति विश्वः ॥ 'वधूर्जाया स्नुषा स्त्रीषु पृक्का च महिला वधूः' इति त्रिकाण्डशेषः ॥

(तत्त्वदी०)—वधूः स्नुषा नवोढा स्त्री भार्या च ॥

**( कषेश्छश्च )** कच्छूः ॥

(सुबोधिनी)—कषेश्छश्च ॥ कष हिंसायामस्मादूप्रत्ययः स्यादन्तस्य छश्च ॥ कच्छूः । 'कच्छ्वां तु पामपामा विचर्चिका' इत्यमरः ॥

(तत्त्वदी०)—कच्छूः पामा ॥

**( कास्वादयः )** कस्यत हन्यतेऽनया कासूः । पद्यते प्राप्यतेऽनया पादूः । लबि गतौ अलाबूः । कशेरूः । दर्द्रूः ॥

(सुबोधिनी)—कास्वादयः ॥ ऊण्प्रत्ययान्ता निपात्यन्ते णित्त्वाद्वृद्धिः ॥ उण् प्रत्ययमाह—कस गतौ । कासूः । 'कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियाम्' इति मेदिनी ॥ 'कासूः शक्त्यायुधे रुजि । बुद्धौ विकलवाचि स्यात्' इति हैमः ॥ पद गतौ । पादूः चरणधारिणी ॥ लबि अवस्रंसने । नञ्युपपदे लम्बेर्नलोपो निपात्यते । न लम्बते जले इत्यलाबूः । 'तुम्ब्यलाबूरुभे समे' इत्यमरः ॥ शॄ हिंसायाम् । कशब्दे उपपदे शॄणातेरूप्रत्ययः ऋत एरादेशश्च निपात्यते । कशेरूः । बाहुलकादुप्रत्ययोऽपि । 'कशेरुस्तृणकन्दे स्त्री' इति ॥ दरिद्रा दुर्गतौ । ऊप्रत्यये इकारस्याकारस्य च लोपो निपात्यते । दर्द्रूः कुष्ठभेदः । मृगय्वादित्वात्कुप्रत्यये दर्द्रुरपि । 'दद्रुणो दद्रुरोगी स्यात्' इत्यमरः ॥

(तत्त्वदी०)—'कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियाम्' इति मेदिनी ॥ पादूश्चरणधारिणी । 'तुम्ब्यलाबूरुभे समे' 'कसेरुस्तृणकन्दे स्त्री' ॥

**( अन्द्वादयः )** अन्दूः ॥

( सुबोधिनी )—अन्द्वादयः ॥ कूप्रत्ययान्ता निपात्यन्ते । अदि बन्धने । अन्दूः । 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च' इति मेदिनी ॥ 'अन्दुको हस्तिनिगडे' इत्यमरः ॥ संज्ञायां कप्रत्यये पूर्वस्य ह्रस्वः । केचित्तु अम गतौ अस्य दुगागमे कूप्रत्यये च अन्दूर्वृद्धिरिति व्याचख्युः ॥

( तत्त्वदी० )—अन्द्वादयः ॥ 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च' ॥

**( जनेर्बुक् ) जम्बूः । कर्कं दधातीति कर्कन्धूः । दिधिं धैर्यं स्यतीति दिधिषूः ॥**

( सुबोधिनी )—जनेर्बुक् ॥ जनी प्रादुर्भावे अस्य बुगागमः स्यात्कूप्रत्यये ॥ जम्बूः जमु अदने अस्येत्येके । बाहुलकात्कुप्रत्ययोऽपि । जम्बुः । उक्तं च विक्रमादित्यकाव्ये- 'तस्य जम्बोः फलरसो नदीभूय प्रवर्तते' इति । 'परिणतजंबुफलोपभोगहृष्टाः' इति भारविः ॥ डुधाञ् धारणादौ । आतोऽनपीत्यालोपनिपातनात्पूर्वपदस्य नुम् । कर्कं दधातीति कर्कंधूः । 'कर्कंधूर्बदरी कोलिः' इत्यमरः ॥ षोऽन्तकर्मणि । दिधिं धैर्यं स्यति त्यजतीति संध्यक्षराणामित्यात्वे आतोऽनपीत्यालोपे च दिधिषूः । कैश्चित्तु दधातेरित्वं दित्वं षुक् च निपात्यते दधात्यसाविति दिधिषूरिति व्याख्यातम् । 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः ॥ द्विरूढा द्विवारं विवाहितेत्यर्थः ॥

( तत्त्वदी० )—कर्कंधूर्बदरी । दिधिषूः पुनर्भूः ॥

**( मृग्रोरुतिः ) मरुत् । गरुत् ॥**

( सुबोधिनी )—मृग्रोरुतिः ॥ उतिप्रत्ययमाह—इकार उच्चारणार्थः । मृङ् प्राणत्यागे । मरुत् । अण्प्रत्यये मारुतः । मरुतशब्दोऽप्यव्युत्पन्नोऽस्ति । 'मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत्' इति विक्रमादित्यकोशः ॥ 'कोऽयं वाति स दाक्षिणात्यमरुतः' इति कविराजश्लोकः ॥ गॄ निगरणे ॥

( तत्त्वदी० )—मृग्रोरिति ॥ गरुत्पक्षः गर्मुत्तृणं च ॥

**( गिरतेरुतिस्तस्य मुट् ) गर्मुत् ॥**

( सुबोधिनी )—गिरतेरुतिस्तस्य मुट् ॥ अस्मात्परस्योत्प्रत्ययस्य मुडागमः स्यात् ॥ गर्मुत् । 'गर्मुत्स्त्री स्वर्णलाभयोः' इति मेदिनी ॥

**( चटेरुलः ) चट भेदने चटुलम् ॥**

( सुबोधिनी )—चटेरुलः ॥ उलप्रत्ययमाह । चट भेदने । चटुलं शोभनम् ॥

**( ह्रादेरितिः ) हरित् । सरित् । युष सौत्रो धातुः । युष भजने योषित् ॥**

( सुबोधिनी )—ह्रादेरितिः ॥ इतिप्रत्ययमाह—इकार उच्चारणार्थः । हृञ् हरणे । हरित् । 'हरितककुभि वर्णे च तृणवाजिविशेषयोः' इति विश्वः ॥ 'हरिद्दिशि स्त्रियां पुंसि

हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणेऽपि च' इति मेदिनी ॥ रुह बीजजन्मनि । रोहित् । 'रोहिन्मृग्यां लताभेदे स्त्रीनार्के' इति मेदिनी ॥ युष इति धातुः सौत्रः । योषित् । 'स्त्री योषिदबला योषा' इत्यमरः ॥

(तत्त्वदी० )–ह्लादेरिति ॥ 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः' । 'रोहिन्मृगविशेषे स्त्री'॥

( ताडेर्णिलुक् च ) तडित् ॥

( सुबोधिनी )–ताडेर्णिलुक् च ॥ इतिप्रत्यये अस्य णेर्लुक् स्यात् ॥ तड आघाते । ताडयतीति तडित् । 'तडित्सौदामनी विद्युत्' इत्यमरः ॥

( शमेर्ढः ) शण्ढः ॥

( सुबोधिनी )–शमेर्ढः ॥ ढप्रत्ययमाह–बाहुलकात् ढस्येत्संज्ञा न । शमु उपशमे हवत्त्योरितीण्न । शण्ढः । 'शण्ढः स्यात्पुंसि गोपतौ । आक्रुष्टाण्डे वर्षधरे तृतीयप्रकृतावपि' इति मेदिनी ॥

( तत्त्वदी० )–शमेरिति ॥ शण्ढः क्लीबः ॥

( कमादेरठः ) कमठः । जरठः । ( रमेर्वृद्धिश्च ) रामठम् । शमेः खः । शङ्खः । कणेष्ठः । कण्ठः ॥

( सुबोधिनी )–कमादेरठः ॥ अठप्रत्ययमाह–कमु कान्तौ । कमठः । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी ॥ जॄ वयोहानौ । जरठः । 'जरठः कठिने पाण्डौ कर्कशेऽप्यभिधेयवत्' इति विश्वः ॥ 'जरठः कठिने जीर्णे' इति वैजयन्ती ॥ रमेर्वृद्धिश्च ॥ रमु क्रीडायामस्य वृद्धिः स्यादठप्रत्यये च । रामठं हिङ्गु ॥ शमेः खः ॥ खप्रत्ययमाह–शमु उपशमे । शङ्खः । 'शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री' इत्यमरः ॥ 'शङ्खः कम्बौ न योषिन्ना भालास्थ्नि निधिभिन्नखे' इति मेदिनी ॥ कणेष्ठः ॥ ठप्रत्ययमाह–कण शब्दे । निपातनात् णस्यानुस्वारे कण्ठः । 'कण्ठो गले सन्निधाने ध्वनौ मदनपादपे' इति मेदिनी ॥

( तत्त्वदी० )–कमादेरिति ॥ रामठं हिंगु ॥

( वृषलादयः कलप्रत्ययान्ता निपात्याः ) वृषलः । शप् शबलः । पल गतौ पललम् । सरलम् । तरलम् । कम्बलम् । मुस खण्डने मुसलम् ॥

( सुबोधिनी )–वृषलादयः कलप्रत्ययान्ता निपात्याः ॥ कित्वान्न गुणः ॥ वृष सेचने । वृषलः । 'वृषलस्तुरगे शूद्रे' इति हैमः ॥ शप आक्रोशे । निपातनात्पस्य बः । शबलः ॥ पल गतौ । पललम् । 'पललं तिलचूर्णे च पिके मांसे नपुंसकम् । ना राक्षसे' इति मेदिनी ॥ सृगतौ । बाहुलकाद्गुणः सरलः । 'सरलः पूतिकाष्ठे नाथोदारावक्रयोस्त्रिषु' इति मेदिनी । "सरला विरलायन्ते घनायन्ते कलिद्रुमाः । न शमी न च

पुन्नागो ह्यस्मिन्संसारकानने'' इति ॥ तॄ प्लवनतरणयोः । तरलः ॥ कमु कान्तौ । कमेर्बुगागमो निपात्यते । कम्बलः । ''कम्बलो नागराजे स्यात्सास्नाप्रावारयोरपि । कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्'' इति मेदिनी ॥ 'सास्ना तु गलकम्बलः' इत्यमरः ॥ मुस खण्डने । मुसलम् । ''मुसलं स्यादयोऽग्रे च पुन्नपुंसकयोः स्त्रियाम् । तालमूल्याखुपर्णीगृहगोधिकयोरपि''इति मेदिनी ॥ मुश खण्डने । अस्मात्कलप्रत्यये मुशलोऽपि 'मुसलो मुशलोऽपि च' इति विश्वः ॥

**( लगेर्वृद्धिश्च ) लाङ्गलम् । कुट्मलम् । कुड्मलम् । कश्मलम् । कोमलम् । मृजू । मलम् । चुप् चपलम् । शकलम् । शमलम् । छगलः ॥**

( सुबोधिनी )—लगेर्वृद्धिश्च ॥ लगि गतौ । अस्य वृद्धिर्निपात्यते ॥ लाङ्गलम् ॥ कुट कौटिल्ये । कलप्रत्ययस्य मुडागमो निपात्यते । कुट्मलः । कुड दाहे । अस्मात्कल प्रत्यये मुडागमे च कुड्मलोऽपि ॥ कश गतिशासनयोः कलप्रत्ययस्य मुट् निपातनात् । कश्मलम् ॥ कुशब्दे । अस्मात्कलप्रत्ययस्य मुट् धातोर्गुणश्च निपात्यते । कोमलम् । 'कोमलं मृदुलं मृदु' इत्यमरः ॥ मृजू शुद्धौ । मृजेष्टिलोपो निपात्यते कलप्रत्यये । मलम् ।'मलोऽस्त्री पाप विट्किट्टे कृपणे त्वभिधेयवत्' इति मेदिनी ॥ चुप मन्दायां गतौ । धातोरुपधाया अत्वं निपात्यते कलप्रत्यये । चपलम् । ''चपलः पारदे मीने चोरके प्रस्तरान्तरे । चपलाकमलाविद्युत्पुंश्चलीपिप्पलीषु च । नपुंसके तु शीघ्रे स्याद्वाच्यवत्तरले चले'' इति मेदिनी ॥ शक्लृ शक्तौ । शकलम् । 'शकलं त्वचि खण्डे स्याद्रागवस्तुनि वल्कले' इति मेदिनी ॥ रोहितादीनां त्वचि तद्योगात् । शाकली मत्स्यः ॥ शमु उपशमे । शमलम् ॥ छो छेदने अस्य गुगागमो ह्रस्वश्च निपात्यते । छगलः ॥ 'छगलं नीलवस्त्रे ना छागेऽस्त्री वृद्धदारके' इति मेदिनी ॥

**( ञमान्ताड्डः ) दण्डः । रण्डा । खण्डः । मन्यतेः मण्डः । अण्डः । चण्डः । पण्डः ॥**

( सुबोधिनी )—ञमान्ताड्डः ॥ ञमप्रत्याहारान्ताद्धातोर्डः स्यात् ॥ डप्रत्ययमाह । दमु उपशमे । बहुलकात् डस्य नेत्संज्ञा । दण्डः । 'दण्डोऽस्त्री लगुडेऽपि स्यात' इत्यमरः ॥ रमु क्रीडायाम् । रण्डा । 'रण्डा मूषकपर्ण्यां च विधवायां च योषिति' इति विश्वः ॥ खनु अवदारणे । खण्डः । 'खण्डोऽस्त्री शकले चेक्षुविकारमणिभेदयोः' इति मेदिनी ॥

**( कवर्गादिभ्यः किच्च ) गुङ् गतौ । गुडः ॥**

( सुबोधिनी )—कवर्गादिभ्यः किच्च ॥ डक् स्यात् । कित्त्वाद्गुणो न । डक्प्रत्ययमाह–गुङ् गतौ । गुङ् अव्यक्ते शब्दे च । 'गुडो गोलेक्षुपाकयोः' इत्यमरः ॥ 'गुडः

स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः'। 'गुडा स्नुह्यां च कथिता गुडिकायां च योषिति' इति मेदिनी ॥

**( स्थादेरालः )** स्थालम्। स्थाली ॥

( सुबोधिनी )—**स्थादेरालः** ॥ आलप्रत्ययमाह—ष्ठा गतिनिवृत्तौ। स्थालम्। 'स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलौषधौ' इति मेदिनी ॥

**( पतिचण्डिभ्यामालञ् )** पातालम्। चडि कोपे। चण्डालः ॥

( सुबोधिनी )—**पतिचण्डिभ्यामालञ्** ॥ आलञ्प्रत्ययमाह—ञित्वाद्वृद्धिः। पत्लृ पतने। पतन्त्यस्मिन्नधर्मिण इति पातालम्। 'अधोभुवनपातालबलिसद्मरसातलम्' इत्यमरः ॥ 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी ॥ चडि कोपे। नुमि कृते उपधाया अभावान्न वृद्धिः। चण्डालः। अण्प्रत्यये चाण्डालः ॥

**( तमादिभ्यः कालः )** तमालः। बिड भेदने—बिडालः। मृण। मर्णयति कमलानि मृणालम्। कुल संख्याने नाशने च। कोलति नष्टां करोति मृत्तिकां कुलालः। कपालम्। पल्यते त्यज्यतेऽसौ पलालः ॥

( सुबोधिनी )—**तमादिभ्यः कालः** ॥ कालप्रत्ययमाह—कित्वान्न गुणः। तमु कांक्षायाम्। तमालः। 'तमालस्तिलके खड्गे ना पिच्छे वरुणद्रुमे' इति मेदिनी ॥ विश प्रवेशने। "विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति। नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्" इति मेदिनी ॥ बिड आक्रोशे। बिडालः। 'बिडालो नेत्रपिण्डे स्याद्वृषदंशकके पुमान्' इति मेदिनी। 'ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक्' इत्यमरः॥ मृण हिंसायाम्। मृणालम्। 'मृणालं नलदे क्लीबं पुन्नपुंसकयोर्बिसे' इति मेदिनी ॥ कुल संख्याने। कुलालः। 'कुलालः ककुभे कुम्भकारे स्त्रीत्वं जनान्तरे' इति मेदिनी ॥ 'कुलालो घूकपक्षिणि। ककुभे कुम्भकारे च' इति हैमः ॥ कपि चलने। नलोपो निपात्यते। कपालम्। 'कपालोऽस्त्री शिरोऽस्थिनिस्याद्घटादेः शकले व्रजे' इति मेदिनी ॥ पल गतौ। पलालः ॥

**( पतादिभ्योऽङ्गः )** पतङ्गः। तरङ्गः। लवङ्गम् ॥

( सुबोधिनी )—**पतादिभ्योऽङ्गः** ॥ अङ्गप्रत्ययमाह—पत्लृ पतने। पतङ्गः। 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः। क्लीबं सूते' इति मेदिनी ॥ सूते पारदे इत्यर्थः ॥ तॄ प्लवनतरणयोः। तरङ्गः। 'तरङ्गस्तुरगादीनामुत्फाले वस्त्रभङ्गयोः' इति विश्वः ॥ लूञ् छेदने। 'लवङ्गं देवकुसुमम्' इत्यमरः ॥

**( बिडादेः कित् )** बिडङ्गः। मृद क्षोदे मृदङ्गः ॥

(सुबोधिनी)-बिडादेः कित् ॥ अङ्गप्रत्ययमाह-कित्वान्न गुणः । बिड आक्रोशे । बिडङ्गः । 'बिडङ्गः कृमिसंघघ्ने बिडङ्गो नागरेऽन्यवत्' इति विश्वः ॥ 'बिडङ्गस्त्रिष्वभिज्ञे स्यात्क्रमिघ्ने पुंनपुंसकम्' इति मेदिनी ॥ मृद क्षोदे । मृदङ्गः । 'मृदङ्गः पटहे घोषे' इति मेदिनी ॥

**( गमादेर्गः ) गङ्गा । छो छागः । खड्गः ॥**

( सुबोधिनी )-गमादेर्गः ॥ गप्रत्ययमाह-गम्लृ गतौ । गङ्गा ॥ छो छेदने । छागः । खड भेदने । खड्गः । 'खड्गो गण्डकशृङ्गे स्यान्निस्त्रिंशे गण्डकेऽपि च' इति शब्दतरङ्गिणी । 'खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके' इति मेदिनी ॥

**( भृङ्गादयः ) भृञ् भृङ्गः । शृङ्गम् । शार्ङ्गः । पूगः । मोदतेः मुद्गः ।**

( सुबोधिनी )-भृङ्गादयः ॥ गक्प्रत्ययान्ता निपात्यन्ते-डुभृञ् धारणपोषणयोः । प्रत्ययस्य नुट् निपातनात् । भृंगः । 'भृङ्गाः षिङ्गालिधूम्याटाः' इति विश्वः ॥ 'भृङ्गो धूम्याटषिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि' इति मेदिनी ॥ शॄ हिंसायाम् । शृणातेर्ह्रस्वः प्रत्ययस्य नुडागमश्च निपात्यते । शृङ्गम् । "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके । स्त्रीविषायां स्वर्णमीनभेदयोर्ऋषभौषधौ' इति मेदिनी ॥ "शृङ्गं विषाणमाख्यातं शैलाग्रे जलयन्त्रके । मीनौषधिसुवर्णानां भेदे शृङ्गी प्रयुज्यते" । इत्युत्पलिनीकोशे ॥ शृणातेः शकुनौ वाच्ये गण् प्रत्ययः तस्य नुट् च निपात्यते । णित्वाद्वृद्धिः । शार्ङ्गः पक्षी । शार्ङ्गं धनुरिति तु शृङ्गस्य विकार इत्यर्थेऽण्प्रत्यये बोध्यम् ॥ पूङ् पवने । पूयते मुखमनेनेति पूगः । 'पूगस्तु क्रमुके वृन्दे' इति मेदिनी ॥ मुद हर्षे । मुद्गः शस्यभेदः ॥

**( शरदादयोऽदिप्रत्ययान्ता निपात्याः ) शॄ शरत् । दृणातेः दरत् । दृषत् । त्यजेः त्यत् । तनेः तत् । यजेः यत् । इण् एतत् ॥**

( सुबोधिनी )-शरदादयोऽदिप्रत्ययान्ता निपात्याः ॥ शॄ हिंसायाम् । अदिप्रत्ययः । इकार उच्चारणार्थः । शरत् । 'शरत्स्त्री वत्सरेऽप्यृतौ' इति मेदिनी ॥ दॄ विदारणे । दरत् । 'दरस्त्रियां प्रपाते च भयपर्वतयोरपि' इति मेदिनी ॥ दृणातेः षुक् ह्रस्वगुणाभावश्च निपात्यते । दृषत् । 'दृषन्निष्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम्' इति मेदिनी ॥ त्यज हानौ । निपातनाट्टिलोपः । त्यद् ॥ तनु विस्तारे । निपातनाट्टिलोपः । तद् ॥ यज देवपूजादौ । टिलोपो निपातनात् । यद् ॥ इण् गतौ । अस्य गुणे कृते तुगागमो निपात्यते । एतद् ॥

( तत्त्वदी० )-शरदादय इति ॥ शरद्वृदयकूलयोः ॥

**( भियोऽजिः षुक् ह्रस्वश्च ) भिषक् ॥**

(सुबोधिनी)—भियोऽजिः षुक् ह्रस्वश्च ॥ ञिभी भये अस्मादजिप्रत्ययः स्यात् ॥ अजिप्रत्ययमाह—इकार उच्चारणार्थः । अजिप्रत्यये भियो ह्रस्वः षुगागमश्च स्यात् ॥ ह्रस्वविधानसामर्थ्यान्न गुणः । भिषक् । 'भिषग्वैद्यौ चिकित्सके' इत्यमरः ॥

**( युष्यसिभ्यां मदिक् )** युष सौत्रः । युष्मद् । अस्मद् ॥

(सुबोधिनी)—युष्यसिभ्यां मदिक् ॥ मदिक्प्रत्ययमाह—कित्त्वाद्गुणो न । इकार उच्चारणार्थः । युष सौत्रो धातुः । युष्मद् । असु क्षेपणे । अस्मद् । त्वम् । अहम् ॥

**( स्त्वादेर्मः )** स्तोमः । सोमः । होमः । धर्मः । क्षेमम् । भामः । वामः । यामः । पद्मम् । नयतीति नेमः ॥

(सुबोधिनी)—स्त्वादेर्मः ॥ मप्रत्ययमाह—ष्टुञ् स्तुतौ । स्तोमः संघातः ॥ षुञ् अभिषवे । "सोमस्तुहिनदीधितौ ॥ वानरे च कुबेरे च पितृदेवे समीरणे । वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ" इति मेदिनी ॥ हु दानादनयोः । होमः । देवतोद्देशेन हविःप्रक्षेपो होमः ॥ धृञ् धारणे । धर्मः । "धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे" इति मेदिनी ॥ 'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इति विश्वः ॥ क्षि क्षये । क्षेमम् ॥ भा दीप्तौ भामः । 'भामः क्रोधे रुचौ दीप्तौ' इति विश्व आदित्यश्च ॥ या प्रापणे । यामः । 'यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः' इति मेदिनी ॥ वा गतिगन्धनयोः । वामः । "वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ । वामी शृगाली वडवारासभीकलभीषु च" इति मेदिनी ॥ पद गतौ । पद्मम् । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे' इति मेदिनी ॥ णीञ् प्रापणे । नेमः । 'नेमः कीलेऽवधौ गर्त्ते प्राकारे कैतवेऽपि च' इति मेदिनी ॥ 'नेमस्त्वर्द्धे प्राकारगर्त्तयोरवधौ कैतवेऽपि च' इति हैमः ॥

**( जिह्मादयो निपात्यन्ते )** जिह्मः । ग्रसु ग्लसु अदने ग्रामः । सिमः । शुष्मम् । श्यैङ् श्यामः । धूमः । युग्मम् । रुक्मम् । तिग्मम् । हिमम् । भीमः । भीष्मः । घृ क्षरणे दीप्तौ च । जिघर्त्यनेन घर्मः । ग्रसेः ग्रीष्मः ॥

(सुबोधिनी)—जिह्मादयो निपात्यन्ते ॥ ओहाक् त्यागे अस्मात् मप्रत्ययः स्मप्रत्ययवद्भवति ॥ आतो लोपश्च निपातनात् । तेन द्वित्वादिः । यः से इति पूर्वस्येत्वम् । जिह्मः । 'जिह्मः कुटिलमन्दयोः' इत्यमरः ॥ 'जिह्मस्तु कुटिले मन्दे क्लीबे तगरपादपे' इति मेदिनी ॥ ग्रसु अदने । ग्रसेष्टेरात्वं निपात्यते । ग्रामः । 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वके' इति विश्वः ॥ शब्दादिपूर्वको ग्रामशब्दो वृन्दे । शब्दग्रामो गुणग्राम इति यथा । 'शब्दादिपूर्वो वृन्देऽपि ग्रामः' इत्यमरः ॥ 'संपूर्वः संयुगे स्मृतः' इति विश्वः ।

षिञ् बन्धने । निपातनान्मकप्रत्ययान्तो वक्ष्यमाणो ज्ञेयः । सिमः सर्वादिगणे पठितः ॥ शुष शोषणे । शुष्मम् । 'शुष्ममग्निसमीरयोः' इति विश्वः ॥ 'शुष्मं तेजसि वायौ ना' इति मेदिनी ॥ श्यैङ् गतौ । श्यामः । 'त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिका निशा' इत्यमरः ॥ "श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु ॥ मरिचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ । अप्रसूताङ्गनायां च प्रियंगावपि गुग्गुलौ ॥ यमुनायां त्रियामायां कृष्णत्रिवृति कौषधौ । नीलिकायाम्" इति मेदिनी ॥ धूञ् कम्पने । धूमः ॥ युजिर् योगे । निपातनाज्जस्य गः । युग्मम् ॥ रुच दीप्तौ । निपातनाच्चस्य कः । रुक्मम् ॥ 'रुक्मं तु काञ्चने लोहे' इति विश्वः ॥ तिज निशाने । निपातनाज्जस्य गः । तिग्मम् । 'तिग्मं तीक्ष्णं खरं तद्वत्' इत्यमरः ॥ हन हिंसागत्योः । हन्तेर्हिरादेशो निपातनात् । हिमम् । 'हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः' इति मेदिनी ॥ ञिभी भये । भियः षुगागमो वा निपात्यते । बिभेत्यस्मादिति भीमः । भीष्मः । 'भीष्मो गांगेयघोरयोः' इति विश्वः ॥ 'भीमोऽम्लवेतसे घोरे शंभौ मध्यमपाण्डवे' इति मेदिनी ॥ घृ क्षरणदीप्त्योः । निपातनाद्गुणः । घर्मः । 'घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि' इति मेदिनी ॥ ग्रस अदने । अस्य निपातनात् ग्रीषादेशः । ग्रीष्मः । 'ग्रीष्म उष्णर्तुभेदयोः' इति मेदिनी ॥

**( प्रथेः षिवः संप्रसारणं च ) पृथिवी ॥**

( सुबोधिनी )–प्रथेः षिवः संप्रसारणं च ॥ षिवप्रत्ययमाह–षित्वादीप् ॥ षवप्रत्यय इत्येके । प्रथ प्रख्याने । पृथिवी । 'पृथिवी पृथवी पृथ्वी धरा सर्वसहा रसा' इति शब्दार्णवः ॥

( तत्त्वदी० )–प्रथेः षिव इति ॥ षव इत्येके । पृथिवी पृथवी पृथ्वी ॥

**( अशादेः क्वः ) अश्वः । खट काङ्क्षायाम खट्वा । विश्वम् । सर्वादिरयम ॥**

( सुबोधिनी )–अशादेः क्वः ॥ कित्वान्न गुणः । क्वप्रत्ययमाह–अशूङ् व्याप्तौ । अश्वः । 'अश्वः पुंजातिभेदे च तुरंगे च पुमानयम्' इति मेदिनी ॥ 'अश्वः पुंभेदवाजिनोः' इति विश्वः ॥ खट कांक्षायाम् ॥ खट्यते शयनार्थिभिः कांक्ष्यते इति खट्वा ॥ विश प्रवेशने । विश्वः । "विश्वा प्रतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु" इति मेदिनी ॥

**( स्रादेर्वः ) स्रुतमनेन विश्वमिति सर्वः । गर्वः । शर्वः ॥**

( सुबोधिनी )–स्रादेर्वः ॥ वप्रत्ययमाह–स्रु गतौ । स्रुतमनेन विश्वमिति सर्वः । गॄ निगरणे । गर्वः अहंकारः । शॄ हिंसायाम् । शर्वो रुद्रः ॥

**( ग्रीवादयो वप्रत्ययान्ता निपात्यन्ते )** ग्रीवा । लिहन्त्यनयेति जिह्वा ॥

( सुबोधिनी )–ग्रीवादयो वप्रत्ययान्ता निपात्यन्ते ॥ गॄ निगरणे । ईडागमो गुणाभावश्च निपातनात् । गिरन्त्यनयेति ग्रीवा ॥ लिह आस्वादने । लस्य जो गुणाभावश्च निपातनात् । लिहन्त्यनयेति जिह्वा ॥

( तत्त्वदी० )–ग्रीवादय इति ॥ गिरन्त्यनयेति ग्रीवा ॥

**( य्वादेः कन् )** युवा । वृषा । तक्ष्णोति काष्ठानि तक्षा । राजा । धवि गतौ । धन्वयति शरानिति धन्वा । प्रतिदिवा ॥

( सुबोधिनी )–य्वादेः कन् ॥ कन्प्रत्ययमाह–कित्त्वान्न गुणः । यु मिश्रणे । यौतीति युधातोरित्युव् । नोपधाया इति दीर्घः । नाम्नो नो लोपशिति नलोपः । युवा । 'युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि' इति मेदिनी ॥ वृषु सेचने । वृषा । 'वृषा कर्णे महेन्द्रे ना' इति मेदिनी ॥ तक्षू तनूकरणे । तक्षा । 'तक्षा तु वर्द्धकिस्त्वष्टा रथकारश्च काष्ठतट्' इत्यमरः ॥ राजृ दीप्तौ । राजा । 'राजा प्रभौ नृपे चन्द्रे पक्षे क्षत्रियशक्रयोः' इत्यमरः ॥ धवि गतौ । धन्वा । 'समानौ मरुधन्वानौ' इत्यमरः ॥ 'अथास्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः ॥ 'धन्वा तु मरुदेशे ना क्लीबे चापे शरेऽपि च' इति मेदिनी ॥ दिवु क्रीडादौ । प्रतिदीव्यत्यस्मिन्निति प्रतिदिवा दिवसः ॥

**( सप्यशूभ्यां तुट् च )** षप समवाये । सप्त । अष्ट ॥

( सुबोधिनी )–सप्यशूभ्यां तुट् च ॥ अभ्यां कन् प्रत्ययः स्यात्तस्य तुडागमश्च ॥ षप समवाये । जश्शसोरिति जसो लुक् । नाम्नो नो लोपशिति नलोपः । सप्त ॥ अशूङ् व्याप्तौ । छशषेति षत्वम् । अष्ट ॥

**( नञि जहातेः )** अह्नः ॥

( सुबोधिनी )–नञि जहातेः ॥ ओहाक् त्यागे अस्मात्कन् प्रत्ययः स्यात् ॥ न जहाति प्रकाशमिति आतोऽनपीत्यालोपः । अह्न इति नस्य सः । अह्नः ॥

**( श्वादयः )** श्वा । उक्षा । पुष्णाति कमलानीति पूषा । प्लेहते प्लीहा । मुह्यन्त्यस्मिन्नाहते मूर्द्धा । मज्जत्यस्थिषु मज्जा । अर्यपूर्वो माङ् अर्यमा । मातर्यन्तरिक्षे श्वयतीति मातरिश्वा । मह पूजायाम् । मह्यते इति मघवा ॥ ॥ इत्युणादौ प्रथमः पादः ॥

( सुबोधिनी )–श्वादयः ॥ कन्प्रत्ययान्ता निपात्यन्ते–टुओश्विइर् गतिवृद्ध्योः । श्वयतीति इकारलोपो निपातनात् । श्वा ॥ उक्ष सेचने । उक्षा वृषभः ॥

पूष वृद्धौ । इनामिति दीर्घः । पूषा, पूषणौ, पूषणः ॥ प्लिह गतौ । इकारस्य दीर्घत्वं निपात्यते । प्लीहा कुक्षिव्याधिः ॥ मुह वैचित्ये । मुहेरुपधाया दीर्घः । धोऽन्तादेशो रमागमश्च निपातनात् । मूर्धा । 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः ॥ मुर्वी वन्धने। अस्योकारस्य दीर्घत्वं वस्य धश्च निपात्यते इत्युज्ज्वलदत्तः । मूर्द्धा ॥ टुमस्जो शुद्धौ। मस्जेश्चुत्वेन सस्य शः झवे जवा इति सस्य जः मज्जा । नकारान्तोऽयम् । आवन्तोऽप्यभ्युपगम्यते । 'ऊष्मया सार्द्धमूष्मापि मज्जोक्तौ मज्जया सह' इति द्विरूपकोशः ॥ माङ् माने । इनामिति दीर्घः । अर्यमा । 'अर्यमा तु पुमान्सूर्ये पितृदेवान्तरेऽपि च' इति मेदिनी ॥ टुओश्विइ् गतिवृद्ध्योः । धातोरिकारलोपः संप्रसारणाभावः सप्तम्या अलुक् च निपात्यते । मातरीत्यव्ययमन्तरिक्षवाचि तस्मिन् श्वयतीति मातरिश्वा । 'मातरिश्वा सदागतिः' इत्यमरः ॥ अथ च श्वादेरिति सूत्रेण वस्योत्वं न भवति अभिव्यक्ते पदार्थपरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य तदन्तस्य च ग्रहणात् । तेन मातरिश्वनः मातरिश्वनेत्यादि ॥ मह पूजायाम् । धातोर्हस्य घः अवुगागमश्च निपात्यते । मघवा इन्द्रः ॥ ॥ इत्युणादौ प्रथमः पादः ॥

( कृहञोरेणुः ) करेणुः । हरेणुः ॥

( सुबोधिनी )—कृहञोरेणुः ॥ एणुप्रत्ययमाह—डुकृञ् करणे । करेणुः । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः ॥ 'करेणुर्गजयोषायां स्त्रियां पुंसि मतंगजे' इति मेदिनी ॥ हृञ् हरणे । हरेणुः । 'हरेणुर्ना सतीने स्त्री रेणुकाकुलयोषयोः' इति मेदिनी ॥ हरेणुर्गन्धद्रव्यं कलायश्चेति बोध्यम् । 'कलायस्तु सतीनकः' इत्यमरः ॥

( कुषादेः क्थः ) कुष्ठम् । रथः । काश्र दीप्तौ काष्ठम् । अवभृथः ॥

( सुबोधिनी )—कुषादेः क्थः ॥ क्थप्रत्ययमाह—कित्वान्न गुणः । कुष निष्कर्षे कुष्ठम् । 'कुष्ठं रोगे पुष्करेऽस्त्री' इति मेदिनी ॥ 'कुष्ठं रोगे सुगन्धे च' इति विश्वः ॥ रमु क्रीडायाम् । लोपस्त्वनुदात्ततनामिति मलोपः । रथः । 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' इति मेदिनी ॥ 'रथः स्यात्स्यन्दने काये चरणे वेतसेऽपि च' इति विश्वः ॥ काश्र दीप्तौ । छशषेति षत्वं ष्टुत्वम् । "काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्" इति मेदिनी ॥ 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥ डुभृञ् धारणादौ । अवभृथो यज्ञस्नानम् ॥

( उषादेस्थः ) ओष्ठः । कोष्ठः । गाथा । अर्थः । शु गतौ शोथः ॥

( सुबोधिनी )—उषादेस्थः ॥ थप्रत्ययमाह—उष दाहे । ओष्ठः ॥ कुष निष्कर्षे । कोष्ठः । 'कोष्ठः कुक्षिकुसूलयोः' ॥ गै शब्दे । गाथा । 'गाथा श्लोके संस्कृतान्यभाषायां शेषवृत्तयोः' इति मेदिनी ॥ ऋ गतौ । अर्थः । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः ॥ शु गतौ । शोथः 'शोफस्तु श्वयथुः शोथः' इत्यमरः ॥

( सर्तेर्णित् ) सार्थः ॥

( सुबोधिनी )—सर्तेर्णित् ॥ थण्प्रत्ययमाह—णित्त्वाद्वृद्धिः । सृ गतौ सार्थः । "सार्थो वणिक्समूहे स्यादपि संघातमात्रके' इति मेदिनी ॥

( निशीथादयः ) निशीथः । तीर्थः । रिचिर् विरेचने रिक्थम् । षिचिर् क्षरणे सिक्थम् । पृष सेचने पृष्ठम् । गूथम् । यु मिश्रणे यूथम् । प्रोथः ॥

( सुबोधिनी )—निशीथादयः॥ थक्प्रत्ययान्ता निपात्यन्ते—शीङ् स्वप्ने। निशीथः। "निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी ॥ तॄ प्लवनतरणयोः । ऋत इतीर् । 'र्वो विं हसे' इति दीर्घः । तीर्थम् । "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्याय-मन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्" इति विश्वः ॥ रिचिर् विरेचने। चोः कुरिति कः। रिक्थम् । 'रिक्थमृक्थं धनं वसु' इत्यमरः ॥ षिचिर् क्षरणे । सिक्थम्। 'सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्' इति मेदिनी ॥ पृष सेचने। पृष्ठम् । 'पृष्ठं तु चरमं तनाः' इत्यमरः ॥ 'पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे' इति मेदिनी ॥ स्तोत्रविशेषेऽपि पृष्ठम्। पृष्ठैः स्तूयत इत्यादौ तथा निर्णयात् ॥ गु पुरीषो-त्सर्गे निपातनाद्दीर्घः । गूथं विष्ठा ॥ यु मिश्रणे । निपातनाद्दीर्घः । यूथम्। 'यूथं तिर्यक्समूहेऽपि वृन्दमात्रेऽपि भाषितम्' इति विश्वः ॥ 'यूथं तदग्रसरगर्वितकृष्णसारम्' इति रघुवंशे ॥ प्रुङ् गतौ । निपातनाद्गुणः । प्रोथः । 'प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु' इति मेदिनी। 'प्रोथमस्त्री तुरंगास्ये प्रोथः प्रस्थित उच्यते' ॥

( तत्त्वदी० )—निशीथादय इति ॥ रात्रावर्धरात्रे च निशीथः ॥ तीर्थमिति ॥ "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजस्सु च विश्रुतम्" इति विश्वः ॥ रिक्थमिति ॥ 'रिक्थमृक्थं धनं वसु' ॥ गूथं विष्ठा ॥ यूथं समूहः ॥ 'प्रोथमस्त्री तुरंगास्ये प्रोथः प्रस्थित उच्यते' ॥

( स्फायादे रक् ) स्फारम् । तञ्चु संकोचने तक्रम् । वञ्चु वक्रः । शक्रः । क्षिप्रम् । क्षुद्रः । चक्रम् । चदि चन्द्रः । उन्दी उन्द्रः । श्विता श्वित्रम् । वृत्रः । वीरः । नीरम् । छिद्रम् । उस्रा । शुभ्रम् ॥

( सुबोधिनी )—स्फायादे रक् ॥ रक्प्रत्ययमाह—कित्त्वाद्गुणो न । स्फायी वृद्धौ । ह्वल्त्येरितीण्न । 'यवयोर्वसे' इति यलोपः । स्फारः । 'स्फारः स्यात्पुंसि विकटे कर-कादेश्च बुद्बुदे' इति मेदिनी ॥ तञ्चु संकोचने । न्यङ्क्वादित्वात्कुत्वम् । नो लोप इति नलोपः । तक्रम् । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः ॥ वञ्चु प्रलम्भने। वक्रः । 'वक्रः स्यात्कुटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः ॥ शक्लृ शक्तौ। शक्रः । 'शक्रः पुमान्देवराजे कुटजार्जुनभूरुहोः' इति मेदिनी ॥ क्षिप प्रेरणे। क्षि-प्रम् ॥ क्षुदिर् संपेषणे। क्षुद्रः। 'क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत्' इति मेदिनी ॥

चदि आह्लादने इदित इति नलोपाभावः। चन्द्रः। 'हिमांशुश्चन्द्रमाश्चन्द्रः' इत्यमरः ॥ पचाद्यच्प्रत्यये चन्दोऽपि। 'हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः' इति शब्दार्णवः ॥ उन्दी क्लेदने। उन्द्रः जलमार्जारः ॥ श्विता वर्णे। श्वित्रं कुष्ठम् ॥ वृतु वर्तने वृत्रः। 'वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे' इति विश्वः ॥ अज गतिक्षेपणयोः। अजेर्व्वीरिति वीरादेशः। वीरः ॥ णीञ् प्रापणे। नीरम् ॥ छिदिर् द्वैधीकरणे। छिद्रम् ॥ वस निवासे। यजामिति संप्रसारणम्। घसादेः ष इति षत्वे प्राप्ते निषेधमाह। रपरसृपिसृजिस्पृशिस्पृहिसवनादीनां सस्य षत्वं नेति। उस्रः। 'उस्रो वृषे च किरणे उस्रा धेनुपवित्रयोः' इति मेदिनी ॥ 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' इत्यमरः ॥ शुभ दीप्तौ। शुभ्रम्। 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु' इति मेदिनी ॥

( तत्त्वदी० )–स्फायादेरिति ॥ उन्द्रो जलचरः। श्वित्रं कुष्ठम्। उस्रो रश्मिः। उस्रा गौः॥

**( अमितम्योर्दीर्घश्च ) आम्रः। ताम्रम् ॥**

( सुबोधिनी )–अमितम्योर्दीर्घश्च ॥ आभ्यां रक् स्यादुपधाया दीर्घश्च ॥ अम गत्यादौ। आम्रः। 'आम्रश्चूतो रसालोऽसौ' इत्यमरः ॥ तमु कांक्षायाम्। ताम्रम् ॥

**( निद्रादयः ) णिदि निद्रा। अर्द आर्द्रम्। शुच् शूद्रः। दुःखेनेयते दूरम्। कृती कृच्छ्रम्। क्रूरः ॥ रोदयतीति रुद्रः। ज्या वयोहानौ जीरः ॥**

( सुबोधिनी )–निद्रादयः॥रक्प्रत्ययान्ता निपात्यन्ते–णिदि कुत्सायाम्। नलोपो निपातनात्। निद्रा। 'स्यान्निद्रा शयनं स्वापः' इत्यमरः ॥ अर्द गतौ। अर्देर्दीर्घो निपातनात्। आर्द्रा। 'आर्द्रा नक्षत्रभेदे स्यात्स्त्रियां क्लिन्नेऽभिधेयवत्' इति मेदिनी ॥ शुच शोके। चस्य दो धातोर्दीर्घश्च निपात्यते। शूद्रः ॥ इण् गतौ दुःपूर्वः धातोर्लोपो निपातनात्। रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ। दुःखेनेयते प्राप्यते इति दूरम् ॥ कृती छेदने। कृतेः कृच्छ क्रू इत्येतावादेशौ निपातनात्। 'कृच्छ्रमाख्यातमाभीले पापसंतपनादिनोः' इति विश्वः ॥ 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः ॥ क्रूरः। 'क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवत्' इति विश्वः ॥ 'नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः' इत्यमरः ॥ रुदिर् अश्रुविमोचने। ण्यन्तः। रोदयतीति ञेरिति ञिलोपः। रुद्रः ॥ जु गतौ। ईकारो निपातनात्। जीरः। ज्या वयोहानौ। अस्माद्रक्प्रत्यये ग्रहामिति संप्रसारणे च कृते जीर इत्येके। 'जीरः खड्गे वणिग्द्रव्ये' इति विश्वः ॥ 'जीरस्तु जरणे खड्गे' इति मेदिनी ॥

**( स्वादेः क्रः ) सुरः। षूङ् प्राणिप्रसवे सूरः। धीरः। गृध्रः ॥**

( सुबोधिनी )–स्वादेः क्रः ॥ क्रप्रत्ययमाह–कित्त्वान्न गुणः। षुञ् अभिषवे। सुरः। 'सुरा चषकमद्ययोः। पुँल्लिङ्गस्त्रिदिवेशे स्यात्' इति मेदिनी ॥ 'सुरो देवे सुरा मद्ये चष-

केऽपि सुरा क्वचित्' इति विश्वः ॥ षूङ् प्राणिगर्भविमोचने । सावयति प्रेरयति कर्मणि लोकमिति सूरः । 'सूरसूर्यार्यमादित्यः' इत्यमरः ॥ डुधाञ् धारणादौ । अपिद्राधेतीत्वम् । धीरः । 'धीरो धैर्यान्विते स्वैरे बुधे क्लीवं तु कुङ्कुमे । स्त्रियां श्रवणतुल्यायाम्' इति मेदिनी ॥ गृधु अभिकाङ्क्षायाम् । गृध्रः । 'गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके' इति मेदिनी ॥

**( शूरादयः ) शु सौत्रः शूरः । षिञ् सीरः । चिञ् चीरम् ॥**

( सुबोधिनी )–शूरादयः ॥ क्रप्रत्ययान्ता निपात्यन्ते–शु गतौ । निपातनाद्दीर्घः सर्वत्र । शूरः । 'शूरः स्यात्पादपे भटे' इति मेदिनी ॥ 'शूरश्चारुघटे सूर्ये' इति विश्वहेमचन्द्रौ ॥ षिञ् बन्धने । सीरः । 'सीरोऽर्कहलयोः पुंसि' इति मेदिनी ॥ चिञ् चयने । चीरम् । 'चीरो झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः' इति मेदिनी ॥ 'चीरं तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च । चीरो कृच्छ्राटिकाझिल्ल्योः' इति विश्वः ॥

**( वाविन्धेः ) वीध्रम् । वृधु वर्ध्रम् । वप्रः । इन्द्रः । अगि गतौ । अग्रम् । वज्रम् । डुवप् विप्रः । उच समवाये उग्रः । ञिभी भये भेरी । शुच शोके शुक्रः । शुक्लः । गुङ् गतौ गौरः । इण् इरा । माला ॥**

( सुबोधिनी )–वाविन्धेः ॥ ञिइन्धी दीप्तौ विपूर्वादस्मात् क्रन् स्यात् ॥ नो लोप इति नलोपः । वीध्रम् । 'वीध्रं तु विमलार्थकम्' इत्यमरः ॥ वृधु वृद्धौ । वर्द्ध्रं चर्म ॥ डुवप् बीजसंताने । वप्रः प्राकारः । 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' इति धरणिः ॥ इदि परमैश्वर्ये । इन्द्रः । 'इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः' इति विश्वः ॥ अगि गतौ । नलोपो निपात्यते । अग्रम् । "अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्तरे पुन्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्" इति मेदिनी ॥ व्रज गतौ । वज्रः । 'वज्रोऽस्त्री हीरके पवौ' ॥ डुवप् बीजसन्ताने । उपधाया इत्वं निपातनात् । विप्रः ॥ उच समवाये । चस्य गो निपातनात् । उग्रः । 'उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे' इति मेदिनी ॥ ञिभी भये । नदादित्वादीप् । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः ॥ पक्षे रस्य लत्वं निपात्यते । भेलः । 'भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यवत्' इति मेदिनी ॥ शुच शोके । चस्य को निपातनात् । शुक्रः । 'शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबम्' इति ॥ पक्षे लत्वं निपात्यते । शुक्लः । 'शुक्लो योगान्तरे सिते । नपुंसकं तु रजते' इति च मेदिनी ॥ गुङ् अव्यक्ते शब्दे । वृद्धिर्निपातनात् । गौरः । "गौरः पीतेऽरुणे श्वेते विशुद्धेऽप्यभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेशरे । गौरी त्वसंजातरजःकन्याशंकरभार्ययोः ॥ रोचने रजनीपिङ्गाप्रियंगुवसुधासु च ।

आपगाया विशेषेऽपि यादसांपतियोषिति'' इति मेदिनी ॥ 'गौरोऽरुणे सिते पीते' इति विश्वः ॥ इण् गतौ । इणो गुणाभावो निपातनात् । इरा । 'इरा मद्ये च वारिणि' इति विश्वः ॥ मा माने । प्रत्यये रस्य लत्वं निपातनात् । माला । 'मालं क्षेत्रे स्त्रियां पुङ्क्तास्रजोर्जात्यन्तरे पुमान्' इति मेदिनी ॥ 'मालं क्षेत्रे जने मालो माला पुष्पादिदामनि' इति विश्वः ॥ 'मालमुन्नतभूतलम्' इत्युत्पले । 'क्षेत्रमारुह्य मालम्' इति मेघदूतः ॥

( कुः शिल्पिसंज्ञयोः ) रजकः । चष् भक्षणे चषकम् । कुह विस्मापने कुहकम् ॥

( सुबोधिनी )—कुः शिल्पिसंज्ञयोः ॥ शिल्पिन्यभिधेये संज्ञायां गम्यमानायां च कुः स्यात् ॥ कुप्रत्ययमाह—कित्त्वान्न गुणः । युवोरित्यकादेशः । रञ्ज रागे । नो लोप इति नलोपः । रजकः । 'रजकौ धावकशुकौ' इति हैमः ॥ 'रजको धावके शुके' इति विश्वः ॥ चष भक्षणे । संज्ञायां तु चषकः । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः ॥ कुह विस्मापने । कुहकः दाम्भिकः ॥ कृती छेदने । कृतकः ॥

( मुषेः किको दीर्घश्च ) मूषिकः ॥

( सुबोधिनी )—मुषेः किको दीर्घश्च ॥ मुष स्तेये अस्मात्किकः । किकप्रत्ययमाह—कित्त्वान्न गुणः । मूषिकः आखुः ॥

( क्रिय इकः ) क्रयिकः ॥

( सुबोधिनी )—क्रिय इकः ॥ इकप्रत्ययमाह—डुक्रीञ् द्रव्यविनिमये । क्रयिकः क्रेता ॥

( श्यास्त्याहृञाविभ्य इनः ) श्येनः । स्त्येनः । हरिणः । अविनः ॥

( सुबोधिनी )—श्यास्त्याहृञाविभ्य इनः ॥ इनप्रत्ययमाह—श्यैङ् गतौ । सन्ध्यक्षराणामित्यात्वम् । श्येनः । 'श्येनः पत्त्रिणि पाण्डुरे' इति मेदिनी ॥ स्त्यै ष्ट्यै शब्दसंघातयोः । स्त्येनश्चौरः ॥ हृञ् हरणे । हरिणः । ''हरिणः पुंसि सारंगे विशदे त्वभिधेयवत् । हरिणी हरितायां च गणिकावृत्तभेदयोः । सुवर्णप्रतिमायां च'' इति मेदिनी ॥ अव रक्षणादौ । अविनः अध्वर्युः ॥

( वृजादेः किनः ) वृजिनम् ॥

( सुबोधिनी )—वृजादेः किनः ॥ किन्प्रत्ययमाह—कित्त्वान्न गुणः । वृजी वर्जने । वृजिनम् । 'वृजिनं कल्मषे क्लीबं केशे ना कुटिलेऽन्यवत्' इति मेदिनी ॥

( अजेर्वी न ) अजिनम् । कठ कृच्छ्रजीवने कठिनम् । नल गन्धे नलिनम् । कुडि दाहे कुण्डिनम् । दो दिनम् ॥

( सुबोधिनी )—अजेर्वी न ॥ किनप्रत्यये वीभावो न स्यात् ॥ अज गत्यादौ । अजिनम् । 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः ॥ कठ कृच्छ्रजीवने । कठिनम् । "कठिनमपि निष्ठुरे स्यात्स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम् । कठिनी खटिकायामपि कठिना गुडशर्करायां च" इति मेदिनी ॥ नल गन्धने ॥ नलिनं पद्मम् ॥ मल धारणे । मलिनम् । 'मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति' इति मेदिनी ॥ कुडि दाहे । कुण्डिनं नगरम् । कुण्डिन ऋषिः ॥ दो अवखण्डने । सन्ध्यक्षराणामित्यात्वे आतोऽनपीत्यालोपः । दिनम् ।

( द्रुदक्षिभ्यामिनः ) द्रविणम् । दक्ष वृद्धौ । दक्षिणः । दक्षिणा ॥

( सुबोधिनी )— द्रुदक्षिभ्यामिनः ॥ द्रु गतौ । द्रविणम् । 'द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे' इति मेदिनी ॥ दक्ष वृद्धौ । दक्षिणः । "दक्षिणस्तु परच्छन्दानुवर्तिनि । दक्षेऽपसव्ये सरले प्राचीनेऽप्यथ दक्षिणा । दिक् प्रतिष्ठा यज्ञदानम्" इति हेमचन्द्रः ॥ "दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु । वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोः" इति विश्वः ॥

( अर्तेः किदिर् च ) इरिणम् ॥

( सुबोधिनी )—अर्तेः किदिर् च ॥ ऋ गतौ अस्मादिनक् प्रत्ययः स्याद्धातोरिरादेशश्च ॥ इरिणम् । 'इरिणं शून्यमूषरम्' इत्यमरः ॥

( वेपितुह्योर्ह्रस्वश्च ) विपिनम् । तुहिनम् ॥

( सुबोधिनी )—वेपितुह्योर्ह्रस्वश्च ॥ आभ्यामिनप्रत्ययः स्याद्धातोर्ह्रस्वश्च ॥ टुवेपृ कम्पने । विपिनम् । 'अटव्यरण्यं विपिनम्' इत्यमरः ॥ तुहिर् अर्दने । उपधाया गुणे कृते ह्रस्वः तुहिनं हिमम् ॥

( तलिपुलिभ्यां च ) तल प्रतिष्ठायाम् । तलिनम् । पुलिनम् ॥

( सुबोधिनी )—तलिपुलिभ्यां च ॥ इनप्रत्ययः स्यात् ॥ तल प्रतिष्ठायाम् । तलिनम् । 'तलिनं विरले स्तोके स्वच्छेपि तलिनं त्रिषु' ॥ पुल महत्त्वे पुलिनम् ॥

( रुहेश्च ) रोहिणः ॥

( सुबोधिनी )—रुहेश्च ॥ इनप्रत्ययः स्यात् ॥ रुह बीजजन्मनि । रोहिणः चन्दनतरुः ॥

( आप्नोतेः क्विप् ह्रस्वश्च ) आपः । अद्भिः ॥

( सुबोधिनी )—आप्नोतेः क्विप् ह्रस्वश्च ॥ आप्लृ व्याप्तौ अस्मात्क्विप् धातोर्ह्रस्वश्च ॥ क्विप्प्रत्ययमाह—न्सम्महतो धौ दीर्घः । आपः । भिदपामिति दत्वम् । अद्भिः ॥

( ग्लानुदिभ्यां डौः ) ग्लौः। नौः॥

( सुबोधिनी )–ग्लानुदिभ्यां डौः॥ डौप्रत्ययमाह–डित्त्वाट्टिलोपः। ग्लै हर्षक्षये। ग्लौः। 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः॥ णुद प्रेरणे। नौः। 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः॥

( रातेर्डैः ) राः, राया॥

( सुबोधिनी )–रातेर्डैः॥ डैप्रत्ययमाह–डित्त्वाट्टिलोपः। रा दाने। रै रिभ इत्यात्वम्। राः। 'रः स्मृतः पावके तीक्ष्णे राः पुंसि स्वर्णवित्तयोः' इति मेदिनी॥ 'रस्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने' इति हैमः॥

( गमेर्डोः ) गौः॥

( सुबोधिनी )–गमेर्डोः॥ डोप्रत्ययमाह–डित्त्वाट्टिलोपः। गम्लृ गतौ। ओरौरित्यौः। गौः। "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु" इति केशवः॥ "गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रे पुमान् भवेत्। अर्जने नेत्रदिग्बाणभूवाग्वारिषु गौर्मता" इत्यमरः॥

( तत्त्वदी० )–गमेरिति॥ गौरिति॥ "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः॥ स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु"॥

( भ्रमेर्डूः ) भ्रूः॥

( सुबोधिनी )–भ्रमेर्डूः॥ डूप्रत्ययमाह–डित्त्वाट्टिलोपः। भ्रमु अनवस्थाने। भ्रूः॥

( दमेर्डोस् ) दोः, दोषौ॥

( सुबोधिनी )–दमेर्डोस्॥ डोसप्रत्ययमाह–डित्त्वाट्टिलोपः। दमु उपशमे। दोषाम् इति रः। दोः। 'दोषं तस्य' इति श्रीहर्षप्रयोगात्पुंस्त्वम्॥ 'ककुदोषंणी' इति भाष्यप्रयोगान्नपुंसकत्वम्॥ 'दोर्दोषा च भुजो बाहुः' इति धनंजयकोशात्स्त्रीलिङ्गोऽप्ययम्॥

( पणेरिज् आदेर्वः ) वणिक्॥

( सुबोधिनी )–पणेरिज् आदेर्वः॥ इज्प्रत्ययमाह–पण व्यवहारे स्तुतौ च। वणिक्। 'नैगमो वाणिजो वणिक्' इत्यमरः॥

( अशे रशादेशो युप्रत्ययः ) रशना॥

( सुबोधिनी )–अशे रशादेशो युप्रत्ययः॥ युप्रत्ययमाह–युवोरित्यनादेशः। अशूङ् व्याप्तौ अश् भोजने वा। रशना। 'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः। रशनापि च जिह्वायाम्' इति विश्वः॥ रस आस्वादने रस शब्दे इति धातुभ्यां युप्रत्यये

दन्त्यसकारवानपि । 'रसनं स्वदने ध्वनौ । जिह्वायां तु न पुंसि स्याद्रास्नायां रसना स्त्रियाम्' इति मेदिनी ॥ 'रसनं निःस्वने स्वादे रसना काञ्चिजिह्वयोः' इति धरणिः ॥

( तत्त्वदी० )-रशनेति ॥ काञ्ची । जिह्वायां दन्त्यसकारवान् ॥

**( उन्देर्नलोपश्च ) ओदनः ॥**

( सुबोधिनी )-उन्देर्नलोपश्च ॥ युः स्यात् ॥ उन्दी क्लेदने । ओदनः 'ओदनं न स्त्रियां भक्ते बलायामोदिनी स्त्रियाम्' इति मेदिनी ॥

**( गमेर्गान्तादेशश्च ) गगनम् । ( अन्येभ्योऽपि युः ) स्यन्दनम् । रोचनः ।**

**( रञ्जिकॄभ्यां क्युः ) रजनम् । किरणः ॥**

( सुबोधिनी )-गमेर्गान्तादेशश्च ॥ युः स्यान्मस्य गश्च ॥ गम्लृ गतौ । गगनम् । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः ॥ अन्येभ्योऽपि युः ॥ स्यन्दू प्रस्रवणे । स्यन्दनः । 'स्यन्दनं तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम्' इत्यमरः ॥ रुच दीप्तौ । रोचनः "रोचना रक्तकह्लारे गोपित्तवरयोषितोः । रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु' इति मेदिनी ॥

( सुबोधिनी )-रञ्जिकॄभ्यां क्युः ॥ क्युप्रत्ययमाह-कित्त्वान्न गुणः । रञ्ज रागे । नो लोप इपि नलोपः । रजनम् । 'रजनो रागजनने रजनं रक्तचन्दने' इति मेदिनी ॥ कॄ विक्षेपे । ऋत इरितीर् । किरणः ॥

**( धृषेर्धिषश्च ) धिषणा । ( धात्रश्च ) निधनम् ॥**

( सुबोधिनी )-धृषेर्धिषश्च ॥ धृषेर्धिष् आदेशश्च । ञिधृषा प्रागल्भ्ये । धिषणः । 'धिषणस्त्रिदशाचार्ये धिषणाधिपयोषिति' इति मेदिनी ॥ 'गीष्पतिर्धिषणो गुरुः' इत्यमरः ॥ डुधाञ् धारणादौ । आतोऽनपीत्यालोपः । निधनम् । 'निधनं स्यात्कुले नाशे' इति मेदिनी ॥ निधनं कुलनाशयोः' इति हैमः ॥

( तत्त्वदी० )-धिषणेति ॥ बुद्धौ । गुरौ तु पुंवत् ॥

**( पृषदादयः ) पृषु सेचने पृषत् । पृषन्ति । बृह उद्यमे बृहत् । महान् । जगत् ॥ ( विपूर्वाद्धनः ) वेहत् ॥**

( सुबोधिनी )-पृषदादयः ॥ अतृप्रत्ययान्ता निपात्यन्ते वर्तमानेऽर्थे ॥ अतृप्रत्ययमाह-ऋदित्वात् पुंसि ञितो नुमिति नुम् । स्त्रियां तु ष्ट्रञित इतीप् । पृषु सेचने निपातनाद्गुणाभावः । पृषत् । पृषन्ति । बिन्दुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनान्तमुदाहृतम् । "पृषन्मृगे पुमान्बिन्दौ न द्वयोः पृषतोऽपि ना" इति मेदिनी ॥ बृह वृद्धौ । बृहत् विपुलम् । 'बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च' इति विश्वः ॥

मह पूजायाम् । महान् । 'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमाञ्श्रेष्ठे वाच्यवत्' इति विश्वः ॥ ''विश्वावसोस्तु बृहती तुम्बरोश्च कलावती । महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी' इति वैजयन्ती ॥ 'अवेक्षमाणं महतीं मुहुर्मुहुः' इति माघः ॥ हन हिंसागत्योः । विपूर्वाद्धन्तेरप्रत्ययो धातोष्टिलोपश्च निपातनादुपसर्गेकारस्यैत्वं च । विहन्ति गर्भमिति वेहत् । 'वेहद्गर्भोपघातिनी' इत्यमरः ॥

**( नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृभ्रातृजामातृमातृपितृदुहितृ एते निपात्यन्ते तृप्रत्ययान्ताः )** न पतन्त्यनेनेति नप्ता । नेष्टा । त्वेषयतीति त्वष्टा । क्षद भक्षणे क्षत्ता । होता । पोता । प्रशास्ता । भ्राता । जायां मातीति जामाता । मान पूजायाम् माता । पातीति पिता । दुहिता ॥

( सुबोधिनी )—नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृभ्रातृजामातृमातृपितृदुहितृ एते निपात्यन्ते तृप्रत्ययान्ताः ॥ तृप्रत्ययमाह—पत्लृ पतने । नञः प्रकृतिभावो धातोष्टेर्लोपश्च निपातनात् । सेरा इत्यात्वम् । नप्ता पौत्रो दौहित्रश्च ॥ णीञ् प्रापणे । नयतेः कुक् गुणश्च निपातनात् । ष्टुत्वम् । नेष्टा ॥ त्विष् दीप्तौ । धातोरितोऽत्व् निपातनात् । त्वष्टा । 'त्वष्टा पुमान्देवशिल्पितक्ष्णोरादित्यवाच्यपि' इति मेदिनी ॥ क्षद शकलीकरणे भक्षणे च । अनुदात्तेतः । क्षत्ता । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे' इति विश्वः ॥ हु दानादनयोः । होता ॥ पूञ् पवने । पोता ॥ भ्राजृ दीप्तौ । भ्राजतेर्जलोपो निपातनात् । माने । जायां मातीति जायाया जादेशो निपातनात् । जामाता ॥ भ्राता । मान पूजायाम् । नस्य लोपो निपातनात् । माता ॥ पा रक्षणे । पातेराकारस्येत्वं च निपात्यते । पिता॥ दुह प्रपूरणे । दुहेस्तृप्रत्ययस्येड्गुणाभावश्च निपातनात् । दुहिता ॥

**( सावसेर्ऋः )** स्वसा ॥

( सुबोधिनी )—सावसेर्ऋः ॥ सु उपपदे असु क्षेपणे इत्यस्मादृप्रत्ययः स्यात् ॥ ऋप्रत्ययमाह—स्वसा भगिनी ॥

**( यतेर्वृद्धिश्च )** याता ॥

( सुबोधिनी )—यतेर्वृद्धिश्च ॥ यती प्रयत्नेऽस्मादृः स्याद्वृद्धिश्च ॥ याता । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' इत्यमरः ॥

**( नञि नन्देश्च )** न नन्दतीति ननान्दा । ननन्देत्येके ॥

( सुबोधिनी )—नञि नन्देश्च ॥ ऋः स्याद्वृद्धिश्च । टुनदि समृद्धौ । न नन्दतीति ॥ कृतायामपि सेवायां रुष्यतीत्यर्थः । ननन्दा । ननान्दा । वृद्धिर्वानुवर्तत इत्येके ॥

'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दनी च सा' इति शब्दार्णवः ॥ 'उषा पूषा ननान्दा च ननन्दा च प्रकीर्तिता' इति विश्वः ॥

**( दिवेर्ऋः ) देवा, देवरौ ॥**

( सुबोधिनी )—दिवेर्ऋः ॥ दिवु क्रीडादौ । देवा ॥ 'स्वामिनो देवृदेवरौ' इत्यमरः॥

**( नयतेर्डिच्च ) ना, नरौ, नरः ॥**

( सुबोधिनी )—नयतेर्डिच्च ॥ ड्टप्रत्ययमाह—डित्त्वाट्टिलोपः । णीञ् प्रापणे । ना ॥ 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः ॥

**( अर्त्यादेरनिः ) अरणिः । सरणिः । तरणिः । धमनिः।अशनिः । अवनिः । रजनिः ॥**

( सुबोधिनी )—अर्त्यादेरनिः ॥ अनिप्रत्ययमाह—ऋ गतौ । अरणिः । 'अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि' इति मेदिनी ॥ सृ गतौ । सरणिः । 'सरणिः श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः ॥ शॄ हिंसायाम् । ततोऽनिः । शरणिरित्येके ॥ धृञ् धारणे । धरणिः भूमिः ॥ धमिः सौत्रः । धमनिः शिरा ॥ अश भोजने । अश्यते भुज्यते राज्यमिन्द्रेणानयेति अशनिः । 'अशनिः स्त्रीपुंसयोः स्याच्चञ्चलायां पवावपि' इति मेदिनी ॥ अव रक्षणादौ । अवनिः पृथिवी ॥ तॄ प्लवनतरणयोः । 'तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्' इति मेदिनी ॥ कुमारी लताविशेषः । 'तरणी रामतरणी कर्णिका चारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः ॥ रञ्ज रागे । नलोपो निपातनात् । रजनिः । कृदिकारादितीपि रजनी । 'रजनी हास्तिनी रात्रिर्हरिद्राजतुकासु च' इति मेदिनी ॥

**( अर्च्यादेरिस् ) अर्चिः, अर्चिषी । रोचिः । शोचिः । छदिः । हविः । सर्पिः ॥**

( सुबोधिनी )—अर्च्यादेरिस् ॥ इस्प्रत्ययमाह—अर्च पूजायाम् । अर्चिः । 'ज्वालाभासोर्न पुंस्यर्चिः' इति सान्तेष्वमरः ॥ ण्यन्तादर्चेरिप्रत्यये अर्चिरिदन्तोऽपि । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः ॥ शुच शोके । शोचिः । 'रोचिः । शोचिरुभे क्लीबे' इत्यमरः ॥ हु दानादनयोः । हविः घृतम् ॥ सृप्लृ गतौ । सर्पिः आज्यम् ॥

( तत्त्वदी० )—अर्च्यादेरिति ॥ अर्चिर्ज्वाला । इदन्तोऽपि । शोचिर्दीप्तिः ॥

**( द्युतेरादेर्जः ) ज्योतिः ॥**

( सुबोधिनी )—द्युतेरादेर्जः ॥ इस् स्यात् दस्य जश्च ॥ द्युत दीप्तौ । ज्योतिः । 'ज्योतिरग्नौ दिवाकरे । पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी ॥

**( बृंहेर्नलोपश्च ) बर्हिः ॥**

( सुबोधिनी )–बृंहेर्नलोपश्च ॥ बृह वृद्धौ अस्मादिस्प्रत्ययः स्यान्नकारस्य लोपश्च बर्हिः । 'बर्हिः स्यात्कुशशुष्मणोः' इत्यमरः ॥

**( जनादेरुस् ) जनुः । ऋ अरुः । परुः । (चक्षेश्शित्) चक्षुः । वप् वपुः । यज् यजुः ॥**

( सुबोधिनी )–जनादेरुस् ॥ उस्प्रत्ययमाह–जनी प्रादुर्भावे । जनुः । 'जनुर्जननजन्मानि' इत्यमरः ॥ ऋ गतौ । अरुः । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः ॥ पॄ पालनपूरणयोः । परुः । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः ॥ डुवप् बीजसंताने । वपुः । 'वपुः क्लीबं तनौ शस्ताकृतावपि' इति मेदिनी ॥ शस्ताकृतिः । प्रशस्ताकृतिरित्यर्थः ॥ यज देवपूजादौ । यजुर्वेदः ॥

( तत्त्वदी० )–जनादेरिति ॥ जनुर्जननम् । परुर्ग्रन्थिः ॥

**( एतेर्णित् ) आयुः ॥ ॥ इति द्वितीयः पादः ॥**

( सुबोधिनी )–एतेर्णित् ॥ इण् गतावित्यस्मात् णुस् प्रत्ययः स्यात् ॥ णित्त्वाद्वृद्धिः । वृद्धौ कृतायामायादेशः । आयुः, आयुषी ॥ इति सुबो०उणादौ द्वितीयःपादः॥

**( धीवरादयः ष्वरप्रत्ययान्ता निपात्यन्ते ) धीवरः । शर्वरी । निषद्वरः । पीवरः ॥**

( सुबोधिनी )–धीवरादयः ष्वरप्रत्ययान्ता निपात्यन्ते ॥ ष्वरप्रत्ययमाह–षित्त्वात् ङीप् इतीप् । डुधाञ् धारणादौ । इत्वं निपातनात् । धीवरः । 'कैवर्ते दाशधीवरौ' इत्यमरः ॥ शॄ हिंसायाम् शर्वरी । 'शर्वरी यामिनीस्त्रियोः' इति मेदिनी ॥ षद्लृ विशरणादौ । निषद्वरः । 'निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी' इति मेदिनी ॥ पा पाने । ईत्वं निपात्यते । पीवरः । अन्ये तु पीव स्थौल्ये अस्मात्ष्वरप्रत्यये यवयोर्वसे हकारे चेति वलोपे पीवर इत्याहुः । 'पीवरः कच्छपे स्थूले' इति मेदिनी ॥

( तत्त्वदी० )–धीवरादय इति ॥ शर्वरी रात्रिः । निषद्वरस्तु जम्बालः । निषद्वरी रात्रिः ॥

**( इणादेर्नक् ) इनः । जिनः । दीनः । कृष्णः ॥**

( सुबोधिनी )–इणादेर्नक् ॥ नक्प्रत्ययमाह–कित्त्वान्न गुणः । इण् गतौ । इनः । 'इनः पत्यौ नृपार्कयोः' इति मेदिनी ॥ जि जये । जिनः । 'जिनोऽर्हति च बुद्धे च पुंसि स्यात्त्रिषु जित्वरे' इति मेदिनी ॥ दीङ् क्षये । दीनः । 'दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत्' इति विश्वः ॥ कृष विलेखने । कृष्णः । ''कृष्णः सत्यवतीपुत्रे केशवे वायसेऽर्जुने । कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति । वर्णके वाच्यलिङ्गः स्यात्क्लीबे मरिचलोहयोः' इति मेदिनी ॥

( तत्त्वदी० )–इणादेरिति ॥ 'इनः सूर्ये नृपे पत्यौ' ॥

**( बन्धेर्ब्रधबुधौ च ) ब्रध्नः । बुध्नः ॥**

( सुबोधिनी )—बन्धेर्ब्रधबुधौ च ॥ बन्ध बन्धने अस्मान्नक् स्याद्धातोः स्थाने एतावादेशौ च स्याताम् ॥ ब्रध्नः । बुध्नः ॥ 'भास्कराहस्करब्रध्नप्रभाकरविभाकराः' इत्यमरः ॥ 'बुध्नो ना मूलरुद्रयोः' इति मेदिनी ॥

**( धादेर्नः ) धानाः । पर्णम् । वस्नः । श्रोणः ॥**

( सुबोधिनी )—धादेर्नः ॥ नप्रत्ययमाह—डुधाञ् धारणादौ । 'धाना भृष्टयवे स्त्रियाम्' इत्यमरः ॥ 'धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि' इति विश्वः ॥ पॄ पालनादौ । पर्णम् । 'पर्णं पत्रे किंशुके ना' इति मेदिनी ॥ वस निवासे । वस्नः । 'वस्नो मूल्ये वेतने च' इति विश्वः ॥ 'वस्नस्त्ववक्रये पुंसि वेतने स्यान्नपुंसकम्' इति मेदिनी ॥ अविक्रये मूल्ये इत्यर्थः ॥ श्रु श्रवणे । श्रोणः पङ्गुः ॥

( तत्त्वदी० )—धादेरिति ॥ 'धाना भृष्टयवे स्त्रियाम्' । मूल्यवेतनयोर्वस्नः । श्रोणः पंगुः ॥

**( लक्षेर्नस्याण्मटौ ) लक्षणः । लक्ष्मणः ॥**

( सुबोधिनी )—लक्षेर्नस्याण्मटौ ॥ लक्ष दर्शनाङ्कनयोः । अस्माच्चुरादिण्यन्तात् नः स्यात्प्रत्ययस्याड्मटावागमौ च स्याताम् ॥ लक्षणम् । लक्ष्मणः । 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा' इति ॥ "लक्षणं नाम्नि चिह्ने च: सौमित्रिरपि लक्षणः । लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः" इति विश्वः ॥ "लक्ष्मणं नाम्नि चिह्ने स्यात्सारस्यां लक्षणा क्वचित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्" इति मेदिनी ॥

( तत्त्वदी० )—लक्षेरिति ॥ 'लक्षणं नाम्नि चिह्ने च रामभ्रातरि च द्वयम्' । 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा' ॥

**( रास्नादयः ) रासृ शब्दे रास्ना । सास्ना । स्थूणा । वीणा । कृती । कृत्स्नम् । तिज तीक्ष्णम । श्लिषेः श्लक्ष्णम् ॥**

( सुबोधिनी )—रास्नादयः ॥ नक्प्रत्ययान्ता निपात्यन्ते ॥ रस आस्वादने । उपधाया दीर्घो निपातनात् । रास्ना । 'रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम्' इति मेदिनी ॥ षस् स्वप्ने । उपधाया दीर्घो निपातनात् । सास्ना । 'सास्ना तु गलकम्बलः' इति मेदिनी ॥ ष्ठा गतिनिवृत्तौ । ऊत्वं णत्वं च निपात्यते । स्थूणा । 'स्थूणा स्यात्सूर्म्यां स्तम्भे गृहस्य च' इति मेदिनी ॥ सूर्मी लोहप्रतिमा ॥ वी गत्यादिषु । णत्वं निपातनात् । वीणा । 'वीणा विद्युति वल्लक्याम्' इति मेदिनी ॥ कृती छेदने । वक्ष्यमाणेभ्यः कृत्स्नप्रत्ययो निपातनात् । कृत्स्नम् ॥ तिज निशाने । धातोर्दीर्घो निपातनात् । चोः कुरिति गः । खसे चपा झसानामिति कः । षत्वणत्वे । तीक्ष्णम् । "तीक्ष्णं सामुद्रलवणे विष-

लोहाजिमुष्कके । क्लीवं यवाग्रके पुंसि तिग्मातमत्यागिनोस्त्रिषु'' इति मेदिनी ॥ श्लिष आलिङ्गने । श्लिषेरिकारस्यात्वं निपातनात् । षढोरिति कत्वम् । श्लक्ष्णम् ॥

( तत्त्वदी० )—रास्नादयः ॥ रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः ॥

**( मनादेर्युः ) मन्युः । दस्युः । जन्युः ॥**

( सुबोधिनी )—मनादेर्युः ॥ युप्रत्ययमाह—मन ज्ञाने । निपातनान्न युवोरित्यनादेशः । मन्युः । 'मन्युर्दैन्ये क्रतौ क्रुधि' ॥ दसु उपक्षये । दस्युः । 'दस्युश्चौरे रिपौ पुंसि' इति मेदिनी ॥ जनी प्रादुर्भावे । जन्युः । 'अथ जन्युः स्यात्प्राण्यग्निधातृषु' इति मेदिनी ॥

( तत्त्वदी० )—मनादेरिति ॥ 'मन्युर्दैन्ये क्रतौ क्रुधि ।' दस्युश्चोरः । जन्युर्देही ॥

**( मृङस्त्युक् ) मृत्युः ॥**

( सुबोधिनी )—मृङस्त्युक् ॥ त्युक्प्रत्ययमाह—कित्वान्न गुणः । मृङ् प्राणत्यागे । मृत्युः । 'मृत्युर्ना मरणे यमे' इति मेदिनी ॥

**( सर्तेरय्वयू ) सरयुः । सरयूः ॥**

( सुबोधिनी )—सर्तेरय्वयू ॥ अयु—अयूप्रत्ययावाह—सृ गतौ । सरयुः सरयूः नदी॥

**( पादेः पः ) पापम् ॥**

( सुबोधिनी )—पादेः पः ॥ पप्रत्ययमाह—पा रक्षणे । पाति रक्षति धर्मादात्मानमिति पापम् ॥

**( न्यादेः कित् ) नीपः । सूपः । कुङ् शब्दे । कूपः ॥**

( सुबोधिनी )—न्यादेः कित् ॥ पक्प्रत्ययमाह—णीञ् प्रापणे । नीपः । 'नीपः कदम्बबन्धूकनीलाशोकद्रुमेऽपि च' इति मेदिनी ॥ षुञ् अभिषवे । बाहुलकाद्दीर्घः । सूपः । 'सूपो व्यञ्जनसूदयोः' इति मेदिनी ॥ कुङ् शब्दे । बाहुलकाद्दीर्घः । कुवन्ति मण्डूका अस्मिन्निति कूपः ॥

**( शिल्पादयः ) शील शिल्पम् । शसु शष्पम् । बाधृ बाष्पम् । रु रूपम् । शॄ शूर्पम् ॥**

( सुबोधिनी )—शिल्पादयः ॥ पक्प्रत्ययान्ता निपात्यन्ते ॥ शील समाधौ । ह्रस्वो निपातनात् । शिल्पम् कौशलम् ॥ शसु हिंसायाम् । निपातनात्षत्वम् । शष्पम् । 'शष्पं बालतृणेऽपि च । पुंसि स्यात्प्रतिभाहीने' इति मेदिनी ॥ 'शष्पं बालतृणं घासः' इत्यमरः ॥ बाधृ विलोडने । धस्य षत्वं निपातनात् । बाष्पः । 'बाष्पो नेत्रजलोष्मणोः' इति विश्वः ॥ 'बाष्पमूष्माणि चाश्रुणि' इति च ॥ रु शब्दे । दीर्घत्वं निपातनात् । रूपम् । 'रूपं स्वभावे सौन्दर्ये' इति विश्वः ॥ शॄ हिंसायाम् । निपातनादुर ऋवो र्वि हसे दीर्घः । शूर्पम् 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः ॥

( तत्त्वदी० )–शिल्पादय इति ॥ शिल्पं कौशलम् । शष्पं बालतृणं प्रतिभाक्षयश्च ॥ बाष्पमिति ॥ 'अस्त्री नेत्रजलोष्मणोः' । 'रूपं स्वभावे सौंदर्ये' ॥

**( स्तनादेर्ण्यन्तादित्नुः ) स्तनयित्नुः । गदयित्नुः ॥**

( सुबोधिनी )–स्तनादेर्ण्यन्तादित्नुः ॥ इत्नुप्रत्ययमाह–स्तन गदी देवशब्दे । चुरादी ण्यन्तौ । गुणे कृते अयादेशः स्तनयित्नुः 'स्तनयित्नुः पुमान्वारिधरेऽपि स्तनितेऽपि च' इति मेदिनी ॥ 'स्तनयित्नुः पयोवाहे तद्वृत्तौ मृगरोगयोः' इति विश्वः ॥ गदयित्नुः । 'गदयित्नुः पुमान्कामे जल्पाके कार्मुकेऽपि च' इति विश्वः ॥

( तत्त्वदी० )–स्तनादेरिति ॥ स्तनयित्नुरिति ॥ णेरलोपः ॥

**( दाभाभ्यां नुः ) दानुः । भानुः ॥**

( सुबोधिनी )–दाभाभ्यां नुः ॥ नुप्रत्ययमाह–डुदाञ् दाने । दानुः । 'दानुर्दातरि विक्रान्ते' इति मेदिनी ॥ भा दीप्तौ । भानुः । 'भानू रश्मिदिवाकरौ' इत्यमरः ॥

**( धेट इच्च ) धेनुः ॥**

( सुबोधिनी )–धेट इच्च ॥ नुः स्याद्धातोरित्वं च ॥ धेट् पाने संध्यक्षराणामित्यात्वे कृते इत्वम् । ततो गुणः । धेनुः । 'धेनुः स्यान्नवसूतिका' इत्यमरः ॥

**( सुवः किच्च ) सूनुः ॥**

( सुबोधिनी )–सुवः किच्च ॥ नुक् स्यात् ॥ कित्त्वान्न गुणः । षूङ् प्राणिप्रसवे । सूनुः । 'सूनुः पुत्रेऽनुजे रवौ' इति विश्वः ॥

( तत्त्वदी० )–सूनुरिति ॥ 'सूनुः पुत्रेऽनुजे रवौ' ॥

**( अजिवृभ्यां णुः ) वेणुः । वर्णुः ॥**

( सुबोधिनी )–अजिवृभ्यां णुः ॥ णुप्रत्ययमाह–अज गतौ । अजेर्वीति वीः । वेणुः । 'वेणुर्नृपान्तरे वंशे' इति विश्वः ॥ वृङ् संभक्तौ । वर्णुः । नददेशभेदयोः ॥

**( स्थारीभ्यां णुः ) स्थाणुः । रेणुः ॥**

( सुबोधिनी )–स्थारीभ्यां णुः ॥ ष्ठा गतिनिवृत्तौ । स्थाणुः । 'स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे' इति मेदिनी ॥ 'स्थाणुः कीले स्थिरे हरे' इति विश्वः ॥ री गतिरेषणयोः । रेणुः । 'रेणुः स्त्रीपुंसयोर्धूलौ पुँल्लिङ्गः पर्पटे पुनः' इति मेदिनी ॥ रेणुर्द्वयोः स्त्रियां धूलिः' इत्यमरः ॥

( तत्त्वदी० )–स्थाणुरिति ॥ 'स्थाणुः कीले स्थिरे हरे' । 'रेणुर्द्वयोः स्त्रियां धूलिः' ॥

**( विषेः कित् ) विष्णुः ॥**

( सुबोधिनी )–विषेः कित् ॥ णुक्प्रत्ययमाह–कित्त्वान्न गुणः । विष्लृ व्याप्तौ । विष्णुः । 'विष्णुर्नारायणः कृष्णः' इत्यमरः ॥

**( क्रादेः कः )** कर्कः। राका। अर्कः। कल्कः। इण् एकः। भेकः। काकः। पाकः। निहाका॥

(सुबोधिनी)—क्रादेः कः॥ कप्रत्ययमाह—बाहुलकान्न कस्येत्संज्ञा। डुकृञ् करणे। कर्कः। 'कर्कः कर्के तले वह्नौ शुक्लाश्वे दर्पणे घटे' इति विश्वः॥ रा दाने। राका। 'राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम्। संपूर्णेन्दुतिथौ' इति मेदिनी॥ 'राका तु सरिदन्तरे। राका नवरजःकन्या पूर्णेन्दुः पूर्णिमापि च' इति विश्वः॥ अर्च पूजायाम्। चोः कुरिति कः। अर्कः। 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे बृहस्पतौ' इति विश्वः॥ कल गतौ। कल्कः। "कल्कोऽस्त्री घनतैलादिशेषे दंभे बिभीतके। विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः" इति मेदिनी॥ 'कल्कः पापाशये पापे दंभे विट्किट्टयोरपि' इति विश्वः॥ इण् गतौ। एकः। 'एकः संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' इति मेदिनी॥ 'एके मुख्यान्यकेवलाः' इति विश्वः॥ ञिभी भये। भेकः। 'भेको मण्डूकमेषयोः' इति विश्वः॥ कै शब्दे काकः। "काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि। शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः। काका स्यात्काकनासायां काकोलीकाकजङ्घयोः। रक्तिकायां मलय्वां च काकमाच्यां च योषिति। काकं सुरतबन्धे स्यात्काकानामपि संहतौ" इति मेदिनी॥ मलयूः काकोदुम्बरिका॥ पा पाने। पाकः। 'पाकः परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी॥ ओहाक् त्यागे। निहाका। 'निहाका गोधिका समे' इत्यमरः॥

(तत्त्वदी०)—क्रादेरिति॥ कर्को धवलघोटकः॥ राका पूर्णिमा तिथिः॥ 'कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि'॥ 'एके मुख्यान्यकेवलाः'॥ 'भेको मण्डूकमेषयोः'॥ पाकः शिशुः॥ 'निहाका गोधिका समे'॥

**( नौ सदेर्डित् )** निष्कः॥

(सुबोधिनी)—नौ सदेर्डित्॥ कप्रत्ययमाह—डित्वाट्टिलोपः। षद्लृ विशरणादौ। निष्कः। 'निष्कोऽस्त्री हेम्नि तत्पले' इति विश्वः॥

(तत्त्वदी०)—'निष्कोऽस्त्री हेम्नि तत्पले'॥

**( शकेरुनउन्तउन्तिउनिप्रत्ययाः )** शकुनः। शकुन्तः। शकुन्तिः। शकुनिः॥

(सुबोधिनी)—शकेरुनउन्तउन्तिउनिप्रत्ययाः॥ उन उन्त उन्तिउनिप्रत्ययानाह—शक्लृ शक्तौ। शकुनः। शकुन्तः। शकुन्तिः। शकुनिः। "शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः" इत्यमरः॥ "शकुनस्तु पुमान्पक्षिमात्रपक्षिविशेषयोः। शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्" इति मेदिनी॥ 'शकुन्तः कीटभेदे स्याद्भासपक्षिविहंगयोः' इति मेदिनी॥

( हृश्याभ्यामितः ) हरितः । श्येतः ॥

( सुबोधिनी )—हृश्याभ्यामितः ॥ इतप्रत्ययमाह—हृञ् हरणे । हरितः । 'हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत्' इति मेदिनी ॥ श्यैङ् गतौ । श्येतः । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरः ॥

( रुहेरस्य लो वा ) रोहितः—लोहितः ॥

( सुबोधिनी )—रुहेरस्य लो वा ॥ अस्मादितः स्याद्रस्य वा लकारः ॥ रुह बीजजन्मनि प्रादुर्भावे च । रोहितः—लोहितः । "रोहितं कुंकुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे" इति मेदिनी ॥ "लोहितं रक्तगोशीर्षकुंकुमाजिकुचन्दने । पुमान्नदान्तरे भौमे वर्णे च त्रिषु तद्वति" इति मेदिनी ॥

( श्रुदेराय्यः ) श्रवाय्यः । स्पृहयाय्यः ॥

( सुबोधिनी ) श्रुदेराय्यः ॥ आय्यप्रत्ययमाह—श्रु श्रवणे । श्रवाय्यः । श्रवाय्यो यज्ञपशुः । स्पृह ईप्सायाम् । चुरादिरदन्तः । स्पृहयाय्यः ॥

( तत्त्वदी० )—श्रुदेरिति ॥ श्रवाय्यो यज्ञपशुः ॥

( वृञ एण्यः ) वरेण्यः ॥

( सुबोधिनी )— वृञ एण्यः ॥ एण्यप्रत्ययमाह—वृञ् वरणे । वरेण्यः श्रेष्ठः ॥

( अर्तेरन्यः ) अरण्यम् । पृषु सेचने ( पृषेश्च षस्य जः ) पर्जन्यः ॥

( सुबोधिनी )—अर्तेरन्यः ॥ अन्यप्रत्ययमाह—ऋ गतौ । अरण्यम् । 'अटव्यरण्यं विपिनम्' इत्यमरः ॥ पृषु सेचने । षस्य जः अन्यश्च स्यात् । पर्जन्यः । 'पर्जन्यो मेघशब्दोऽपि ध्वनदंबुदशक्रयोः' इति मेदिनी ॥

( तत्त्वदी० )—पर्जन्य इति ॥ 'पर्जन्यः शक्रमेघयोः' ॥

( वदेरान्यः ) वदान्यः ॥

( सुबोधिनी )—वदेरान्यः ॥ आन्यप्रत्ययमाह—वद व्यक्तायां वाचि । वदान्यः । 'वदान्यस्त्यागिवाग्मिनोः' इत्यजयकोशः ॥

( तत्त्वदी० )—वदेरिति ॥ 'वदान्यस्त्यागिवाग्मिनोः' ॥

( अमादेरत्रः ) अमत्रम् । नक्षत्रम् । पतत्रम् । कलत्रम् । वरत्रा ॥

( सुबोधिनी )—अमादेरत्रः ॥ अत्रप्रत्ययमाह—अम गत्यादौ । अमत्रं भाजनम् ॥ नक्ष गतौ । नक्षत्रम् । नञः प्रकृतिभावे नक्षत्रमिति साधितं तत्तु व्युत्पत्त्यन्तरम् ॥ पत्लृ पतने । पतत्रं तनूरुहम् ॥ गड सेचने । गडेरादेश्च कः । कडत्रम् । डलयोरेकत्वस्मरणात् । कलत्रम् । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः ॥ वृञ् वरणे । वरत्रा । 'नध्री वध्री वरत्रा स्यात्' इत्यमरः ॥ चर्ममयी रज्जुरित्यर्थः ॥

( तत्त्वदी० )—अमादेरिति ॥ अमत्रं भाजनम् ॥ पतत्रं तनूरुहम् ॥ वरत्रा चर्ममयी रज्जुः ॥

**( आदेरतः )** भरतः । पर्व पूरणे पर्वतः ॥

( सुबोधिनी )—आदेरतः ॥ अतप्रत्ययमाह—भृञ् भरणे । भरतः । 'भरतः शबरे नटे । क्षेत्रे रामानुजे शास्त्रे दौष्यन्तावृषभात्मजे । तन्तुवाये' इति हेमचन्द्रः ॥ 'भरतो ना नाट्यशास्त्रे शबरे च मुनौ नटे । रामानुजे च दौष्यन्तौ' इति मेदिनी ॥ पर्व पूरणे । पर्वतः । 'पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले' इति मेदिनी ॥

**( पृषिरञ्जिभ्यां कित् )** पृषतः । रजतम् ॥

( सुबोधिनी )—पृषिरञ्जिभ्यां कित् ॥ कतप्रत्ययमाह—कित्त्वान्न गुणः । पृषु सेचने । पृषतः । "पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ" इति मेदिनी ॥ रञ्ज रागे । नो लोप इति नलोपः । रजतम् । 'रजतं त्रिषु शुक्ले स्यात्क्लीबे हारे च दुर्वर्णे' इति मेदिनी ॥

( तत्त्वदी० )—पृषि ॥ 'पृषतो बिन्दुमृगयोः' ॥

**( शपादेरथः )** शपथः । शमथः । दमथः । वस आवसथः । संवसथः ॥

( सुबोधिनी )—शपादेरथः । अथप्रत्ययमाह—शप आक्रोशे । शपथः ॥ शमु दमु उपशमे । शमथः । दमथः । शमथः 'शान्तिमत्रिणोः' इति मेदिनी ॥ 'दमथस्तु पुमान्दण्डे दमे च परिकीर्तितः' इति मेदिनी । 'शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दामः' इत्यमरः ॥ वस निवासे । आवसथो गृहम् । संवसथो ग्रामः ॥

( तत्त्वदी० )—शपादेरिति ॥ 'शपथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः' ॥

**( रभादेरसः )** रभसः ॥

( सुबोधिनी )—रभादेरसः ॥ असप्रत्ययमाह—रभ राभस्ये । रभसः । 'रभसो वेगहर्षयोः' ॥

**( वेञ आत्वाभावस्तुट् च )** वेतसः ॥

( सुबोधिनी )—वेञ आत्वाभावस्तुट् च ॥ वेञ् तन्तुसन्ताने अस्मात्सप्रत्यये परे आत्वाभावः प्रत्ययस्य तुडागमश्च स्यात् ॥ वेतसः ॥

**( दिवेः कित् )** दिवु दिवसः ॥

( सुबोधिनी )—दिवेः कित् ॥ कसप्रत्ययमाह—कित्त्वान्न गुणः । दिवु क्रीडादौ दिवसः । 'वा तु क्लीबे दिवसवासरौ' इत्यमरः ॥

**( कॄादेरभः )** कॄ करभः । शॄ शरभः । शल गतौ शलभः । कल गतौ कलभः । गर्द शब्दे गर्दभः ॥

( सुबोधिनी )—कृादेरभः ॥ अभप्रत्ययमाह—कॄ विक्षेपे । करभः । 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' इति मेदिनी ॥ 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः ॥ शॄ हिंसायाम् । शरभः । 'शरभस्तु पशोर्भिदि' 'करभो वानरभिदि' इति च मेदिनी ॥ शल गतौ । शलभः । 'समौ पतंगशलभौ' इत्यमरः ॥ कल गतौ । कलभः । 'कलभः करिपोतके' ॥ गर्द शब्दे । गर्दभः । "गदर्भः श्वेतकुमुदे गर्दभो गंधभिद्यपि । रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः" इति मेदिनी ॥

**( ऋषिवृषिभ्यां कित् )** ऋषभः वृषभः ॥

( सुबोधिनी )—ऋषिवृषिभ्यां कित् ॥ कभप्रत्ययमाह—कित्वान्न गुणः । ऋषी गतौ । ऋषभः । "ऋषभः स्यादादिजिने वृषभे भेषजे स्वरे । कर्णरन्ध्रे कोलपुच्छे श्रेष्ठे चाप्युत्तरे स्थितः॥ऋषभी शूकशिम्ब्यां स्यात्पुरुषाकारयोषिति। विधवायां शिरालायाम्" इति हेमचन्द्रः ॥ "ऋषभस्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रे गर्दभपुच्छयोः । उत्तरस्थः स्मृतः श्रेष्ठे स्त्रीनराकारयोषिति । शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता" इति मेदिनी ॥ वृषु सेचने । वृषभः । 'वृषभः श्रेष्ठवृषयोः' ॥

**( रासवल्लिभ्यां च )** रासृ शब्दे । रासभः । वल वल्ल संवरणे वल्लभः ॥

( सुबोधिनी )—रासवल्लिभ्यां च ॥ अभः स्यात् ॥ रासृ शब्दे । रासभः ॥ वल्ल संवरणे । वल्लभः । 'वल्लभो दयितेऽध्यक्षे सलक्षणतुरंगमे' इति मेदिनी ॥

**( विशादेरन्तः )** वेशन्तः । वसन्तः । जयन्तः ॥

( सुबोधिनी )—विशादेरन्तः ॥ अन्तप्रत्ययमाह—विश प्रवेशने । वेशन्तः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः ॥ वस निवासे । वसन्तः ऋतुः ॥ जि जये । जयन्तः । 'जयन्तः पाकशासनिः' इत्यमरः ॥

( तत्त्वदी० )—विशादेरिति ॥ वेशन्तः पल्वलम् ॥ जयन्तः शक्रपुत्रः ॥

**( हन्तेर्हिमुट् च )** हेमन्तः ॥

( सुबोधिनी )—हन्तेर्हिमुट् च ॥ हन हिंसागत्योः अस्य हिरादेशोऽन्तप्रत्ययः प्रत्ययस्य मुडागमश्च स्यात् ॥ हेमन्तः ॥ बाहुलकादन्येभ्योऽप्यन्तः । अर्ह पूजायाम् । अर्हन्तः । 'अर्हन्तः क्षपणको जिनः' इति विक्रमादित्यकोशः ॥

**( अर्त्यादेररः )** अररम् । भ्रमरः । चमरः । देवरः । सृ निवासे वासरः ॥

( सुबोधिनी )—अर्त्यादेररः ॥ अरप्रत्ययमाह—ऋ गतौ । अररम् । 'अररं छदकपाटयोः' इति मेदिनी ॥ 'कपाटमररं तुल्ये' इत्यमरः ॥ भ्रमु अनवस्थाने । भ्रमरः

'भ्रमरः कामुके भृङ्गे' इति मेदिनी ॥ चमु अदने । चमरः । 'चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः' इति मेदिनी ॥ दिवु क्रीडादौ । ण्यन्तः । देवयतीति देवरः । पत्युः कनिष्ठभ्राता ॥ वस निवासे । ण्यन्तः । वासयतीति वासरो दिवसः ॥

( तत्त्वदी० )—अर्त्यादेरिति ॥ अररं कपाटम् ॥

## ( कुवः किद्रुट् च ) कुररः ॥

( सुबोधिनी )— कुवः किद्रुट् च ॥ करप्रत्ययमाह—कित्त्वान्न गुणः । कु शब्दे । कुररः । 'उत्क्रोशकुररौ समौ' इत्यमरः ॥

## ( अङ्ग्यादेरारः ) अङ्गारः । मन्दारः ॥

( सुबोधिनी )—अङ्ग्यादेरारः ॥ आरप्रत्ययमाह—अगि गतौ । अङ्गारः । 'अङ्गारमुल्मुके न स्त्री पुँल्लिंगस्तु महीसुते' इति मेदिनी ॥ मदि स्तुत्यादौ । मन्दारः । बाहुलकादारुप्रत्ययोऽपि । मन्दारुः । 'पारिभद्रे तु मन्दारुर्मन्दारः पारिजातके' इति शब्दार्णवः ॥ 'मन्दारुः स्यात्सुरद्रुमे । पारिभद्रेऽर्कपर्णे च' इति विश्वः ॥

## ( गडेः कड च ) गड आसेचने कडारः ॥

( सुबोधिनी )—गडेः कड च ॥ गाडि वदनैकदेशे गड सेचने वा अस्य कडादेश आरप्रत्ययश्च स्यात् ॥ 'कडारः कपिलः पिंगः' इत्यमरः ॥ 'कडारः कपिले दासे' इति मेदिनी ॥

## ( शृङ्गारादयः ) शृङ्गारः । भृङ्गारः । मृजूष् मार्जारः । कमु कुमारः । तुषारः । कासारः ॥

( सुबोधिनी )—शृङ्गारादयः ॥ आरप्रत्ययान्ता निपात्यंते ॥ शॄ हिंसायाम् । नुम् गुक् ह्रस्वश्च निपात्यते । शृंगारः । "शृंगारः सुरते नाट्ये रसे च गजमण्डने । नपुंसकं लवंगेऽपि नागसंभवचूर्णयोः" इति मेदिनी ॥ भृञ् भरणे । नुम् गुक् ह्रस्वश्च निपात्यते । भृंगारः । 'भृंगारः कनकालुका' । 'भृंगारी झिल्लिकायां स्यात्कनकालौ पुनः पुमान्' इति च ॥ मृजूष् शुद्धौ । मृजेर्वृद्धिरिति वृद्धिः । मार्जारः । 'ओतुर्बिडालो मार्जारः' इत्यमरः॥ 'मार्जार ओतौ खट्वाङ्गे' इति मेदिनी ॥ कमु कान्तौ । उपधाया उत्वं गुणाभावश्च निपातनात् । कुमारः । "कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणाद्रौ ना न द्वयोर्जात्यकाञ्चने । कुमारी शैलतनया वनकाल्योर्नदीभिदि । सहाऽपराजिताकन्याजम्बूद्वीपेषु च स्त्रियाम्" इति मेदिनी ॥ तुष तुष्टौ । तुषारः । 'तुषारस्तुहिनं हिमम्' इत्यमरः ॥ कासृ शब्दकुत्सायाम् । कासारः । 'कासारः सरसी सरः' इत्यमरः ॥

( तत्त्वदी० )—भृङ्गार इति ॥ 'भृङ्गारः कनकालुका' ॥

**( सर्तेरपः षुक् च ) सर्षपः ॥**

( सुबोधिनी )—सर्तेरपः षुक् च ॥ सृ गतौ अस्मादपप्रत्ययः स्याद्धातोः षुगागमश्च ॥ अपप्रत्ययमाह—सर्षपः ॥

**( विटपादयः ) विट् शब्दे विटपः । विष्टपम् । कुणपम् । वल संवरणे उलपम् ॥**

( सुबोधिनी )—विटपादयः ॥ कपप्रत्ययान्ता निपात्यन्ते—कित्त्वान्न गुणः । विट् शब्दे । विटपः । 'विटपो न स्त्रियां स्तम्बे शाखाविस्तारपल्लवे । विटाधिपे ना' इति मेदिनी ॥ विश प्रवेशने । विशतेः प्रत्ययस्य तुडागमो निपात्यते । छशषेति षत्वम् । ष्टुत्वम् । विष्टपम् । 'विष्टपं भुवनं जगत्' इत्यमरः ॥ कण शब्दे । वस्योत्वं निपातनात् । कुणपम् । 'कुणपः पूतिगन्धे शवेऽपि च' इति मेदिनी ॥ 'कुणपः शवमस्त्रियाम्' इत्यमरः ॥ वल संवरणे । वस्योत्वं निपातनात् । उलपम् । 'उलपो न स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी ॥

( तत्त्वदी० )—उलप इति ॥ कोमलं तृणम् ॥

**( वृतादेस्तिकः ) वर्तिका ॥**

( सुबोधिनी )—वृतादेस्तिकः ॥ तिकप्रत्ययमाह—वृतु वर्तने । वर्त्तिका ॥

**( कृतः कित् ) कृत्तिका ॥**

( सुबोधिनी )—कृतः कित् ॥ कृती छेदने इत्यादिभ्यस्तिकक् स्यात् ॥ कित्त्वान्न गुणः । कृत्तिका ॥ भिदिर् विदारणे । भिंत्तिका भिंत्तिः । लतु सौत्रो धातुः । लत्तिका गोधा ॥

**( इष्यशिभ्यां तकः ) इष्टका । अष्टका ॥**

( सुबोधिनी )—इष्यशिभ्यां तकः ॥ तकप्रत्ययमाह—इषु इच्छायाम् । ष्टुत्वम् । इष्टका ॥ अशूङ् व्याप्तौ । छशषेति षत्वम् । अष्टका ॥

**( वीपतिभ्यां तनः ) वेतनम् । पत्तनम् ॥**

( सुबोधिनी )—वीपतिभ्यां तनः ॥ तनप्रत्ययमाह—वी गत्यादौ । वेतनम् ॥ पत्लृ पतने । पत्तनम् । 'पत्तनं पुटभेदनम्' इत्यमरः ॥

**( अत्यादेर्भः ) अर्भः । दॄ । दर्भः । गर्भः ॥**

( सुबोधिनी )—अत्यादेर्भः ॥ भप्रत्ययमाह—ऋ गतौ । इयर्तीति अर्भः शिशुः । कप्रत्यये अर्भकः ॥ दॄ विदारणे । दर्भः ॥ गॄ निगरणे । गर्भः । 'गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके' इति मेदिनी ॥

**( इणः कित् ) इभः ॥**

( सुबोधिनी )—इणः कित् ॥ भक् स्यात् ॥ कित्त्वान्न गुणः । इण् गतौ । इभः । 'इभः स्तम्बेरमः पद्मी' इत्यमरः ॥

**( असिसञ्जिभ्यां क्थिः )** अस्थि । सक्थि ॥

( सुबोधिनी )—असिसञ्जिभ्यां क्थिः ॥ क्थिप्रत्ययमाह—कित्त्वान्न गुणः । असु क्षेपणे । अस्थि । 'कीकसं कुल्यमस्थि च' इत्यमरः ॥ षञ्ज सङ्गे । चोः कुरिति जस्य गः । खसे चपा इति कः । नो लोप इति नलोपः । सक्थि । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः ॥

**( शुषादेः क्सिः )** शुक्षिः । कुष निष्कर्षे कुक्षिः । अशू अक्षि ॥

( सुबोधिनी )—शुषादेः क्सिः ॥ क्सिप्रत्ययमाह—कित्त्वान्न गुणः । शुष् शोषणे । षढोरिति कः । षत्वम् । शुक्षिः वातः ॥ कुष दाहे । कुक्षिः ॥ अशूङ् व्याप्तौ । छशषेति षत्वं कत्वं च । अक्षि नयनम् ॥

( तत्त्वदी० )—शुक्षिरिति ॥ शुक्षिर्वातः ॥

**( इषः क्सुः )** इक्षुः ॥

( सुबोधिनी )—इषः क्सुः ॥ क्सुप्रत्ययमाह—कित्त्वान्न गुणः । इषु इच्छायाम् । कत्वे षत्वे इक्षुः । 'रसाल इक्षुः' इत्यमरः ॥

**( अवितॄस्तॄतन्त्रिभ्यः ईः )** अवीः । तरीः । स्तरीर्धूमः । तन्त्रीः ॥

( सुबोधिनी )—अवितॄस्तॄतन्त्रिभ्यः ईः ॥ ईप्रत्ययमाह—अव रक्षणादौ । अवीः । 'अवीर्नारी रजस्वला' ॥ तॄ प्लवनतरणयोः । तरीः । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ॥ स्तॄञ् आच्छादने । स्तरीर्धूमः ॥ तत्रि कुटुम्बधारणे चुरादिः । तंत्रयतीति ञेरिति ञिलोपः । तंत्रीर्वीणा ॥

( तत्त्वदी० )—अवि ॥ अवीरिति ॥ अवति गर्भमवीः । 'अवीं स्त्रीं गर्भिणीं विदुः' ॥ तरीर्नौः ॥ स्तरीः शयनं धूम इति च ॥

**( लक्षेर्मुट् च )** लक्ष्मीः ॥ ॥ इति तृतीयः पादः ॥

( सुबोधिनी )—लक्षेर्मुट् च ॥ लक्ष दर्शनाङ्कनयोः चुरादिः अस्मादीप्रत्ययः स्यात्प्रत्ययस्य मुडागमश्च ॥ ञेरिति ञिलोपः । लक्ष्मीः । 'लक्ष्मीः संपत्तिशोभयोः । ऋद्ध्योषधौ च पद्मायाम्' इति मेदिनी ॥ दीर्घादपि कृदिकारादिति पाक्षिक ईप् कैश्चिदिष्यते । अत एव वातप्रमी श्रीलक्ष्मीत्यादिशब्दाः पक्षे ईबन्ता अपि । 'आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशः ॥ ॥ इति सुबोधिन्यामुणादौ तृतीयः पादः ॥

**( वातप्रम्यादयः )** वातप्रमीः । यान्त्यनेनेति ययीः । पा रक्षणे पपीः ॥

( सुबोधिनी )—वातप्रम्यादयः ॥ कीप्रत्ययान्ता निपात्यन्ते—कस्येत्संज्ञा । माङ् माने । आतोऽनपीत्यालोपः । वातं प्रमिमीते इति वातप्रमीः । 'वातप्रमीर्वातमृगः' इत्यमरः ॥ अयं स्त्रीपुंसयोः ॥ या प्रापणे । ययीरश्वः । पा रक्षणे । पपीः । निपातनादुभयत्र द्वित्वम् । 'पपीः स्यात्सोमसूर्ययोः' इति विश्वः ॥

( तत्त्वदी० )—वात ॥ ययीरश्वः ॥ 'पपीः स्यात्सोमसूर्ययोः' ॥

**( रत्न्यादयः )** ऋ रत्निः । अञ्जू अञ्जलिः । मदी मत्स्यः । अत् अगि अङ्गुलिः । कौतेः कवचः । यु यवासः । कृश् कृशानुः ॥

( सुबोधिनी )—रत्न्यादयः ॥ रत्नादयो निपात्यन्ते-ऋअञ्जूमदीअत्अगिकुयुकृशिभ्योऽष्टभ्यः कलि अलि स्य इथि उलि अच आस आनुक् प्रत्यया यथासंख्यमष्टौ भवन्ति ऋ गतौ कत्निः । कित्त्वान्न गुणः । रत्वम् । रत्निः । 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः' । अरत्निरत्र नञ्समासः । प्रसृताङ्गुलिर्यो हस्तः सोऽरत्निरित्यर्थः ॥ अञ्जू व्यक्त्यादौ अलिः । अञ्जलिः । 'अञ्जलिस्तु पुमान्हस्तसंपुटे कुडवेऽपि च' इति मेदिनी ॥ मदी हर्षे । स्यः । मत्स्यः । 'मत्स्यो मीनेऽथ पुम्भूम्नि देशे' इति मेदिनी ॥ अत सातत्यगमने । इथिः । अतिथिः । 'अतिथिः कुशपत्रे स्यात्पुमानागन्तुके त्रिषु' इति मेदिनी ॥ आगि गतौ । उलिः । अङ्गुलिः । 'अङ्गुलिः करशाखायां कर्णिकायां गजस्य च' इति हैमः ॥ कु शब्दे । अचः । कवचः । 'कवचो गर्दभाण्डे च सन्नाहे पर्पटेऽपि च' इति मेदिनी ॥ यु मिश्रणे । आसः । यवासः 'यासो यवासो दुःस्पर्शः' इत्यमरः ॥ कृश तनूकरणे । आनुक् । कृशानुः । 'कृशानुः पावकोऽनलः' इत्यमरः ॥

( तत्त्वदी० )—रत्न्यादयः इति ॥ ऋ इत्यस्य रत्निरिति । 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृतांगुलिः' ॥

**( श्रः करः )** शर्करा ॥

( सुबोधिनी )—श्रः करः ॥ करप्रत्ययमाह-ककारस्य नेत्वं बाहुलकात् । शॄ हिंसायाम् । शर्करा । 'शर्करा खण्डविकृतौ उपलाशर्करांशयोः ॥ शर्करान्वितदेशे च रुग्भेदे सकलेऽपि च' इति मेदिनी ॥

**( पुषः कित् )** पुष्करः ॥

( सुबोधिनी )—पुषः कित् ॥ करक्प्रत्ययमाह-पुष पुष्टौ । पुष्करम् । "पुष्करं खेऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधौ द्वीपतीर्थभेदयोश्च नपुंसकम् । ना रागनागविहगनृपभेदेषु चाम्बुदे" इति मेदिनी ॥

**( गमेरिनिर्भविष्यति )** गमिष्यतीति गमी ॥

( सुबोधिनी )—**गमेरिनिर्भविष्यति** ॥ इकार उच्चारणार्थः । इन्प्रत्ययमाह—गम्लृ गतौ । इनामिति दीर्घः । गमी । आङ्पूर्वाद्गमेरिनिप्रत्ययस्तु णित् । णित्त्वाद्वृद्धिः। आगमिष्यतीति आगामी ॥ भू सत्तायामस्मादपि इनिः स च णित्स्यात् । भविष्यतीति भावी ॥

**( परमे स्थः कित् ) परमेष्ठी ॥**

( सुबोधिनी )—**परमे स्थः कित्** ॥ परमशब्दे उपपदे तिष्ठतेरिनिः कित्स्यात् ॥ कित्त्वादातोऽनपीत्यालोपः । परमेष्ठी ।'परमेष्ठी पितामहः' इत्यमरः ॥ सप्तम्या अलुक् ॥

**( मन्थ इनिः कित् ) मन्था, मन्थानौ ॥**

( सुबोधिनी )—**मन्थ इनिः कित्** ॥ मन्थ विलोडने अस्मादिनिः कित् । नो लोप इति नलोपः । इतोत्पथ्यसु इत्यत्वम् आसौ इति टेरात्वे थो नुट् । मन्थाः । 'मन्था मन्थन दण्डे च वज्रे चापेऽपि च स्मृतः' ॥

**( पतेस्थश्च ) पन्थाः, पन्थानौ ॥**

( सुबोधिनी )—**पतेस्थश्च** ॥ पत्लृ गतौ अस्मादिनिः स्यात्तकारस्य थश्च ॥ पन्थाः पथे गतावित्यस्मात्पचाद्यप्रत्ययेऽकारान्तोऽप्यस्ति । 'वाटः पथश्च मार्गश्च' इति सुभूतिचन्द्रः ॥ ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे बाहुलकात् डप्रत्यये ऋभुक्षः । 'ऋभुक्षः स्वर्गवज्रयोः' इति विश्वः ॥ ततो मत्वर्थीय इन्, ऋभुक्षिन्निति नान्तं प्रातिपदिकम् अत्वे आत्वे च ऋभुक्षा इन्द्रः ॥

**( बलाकादयः) बलाका । पताका । खज मन्थे । खजाकः । पिनाकः तड आघाते तडाकः ॥**

( सुबोधिनी )—**बलाकादयः** ॥ आकप्रत्ययान्ता निपात्यन्ते-बल प्राणने । बलाका ।"बलाका बकपङ्क्तिः स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः" इति विश्वः ॥ पत्लृ पतने । पताका ।'पताका वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च' इति विश्वः॥ 'पताका वैजयन्त्यां च सौभाग्ये नाटकाङ्कयोः' इति मेदिनी॥ खज मन्थे । खजाकः पक्षी ॥ पा रक्षणे । पातेरित्वं नुम् च निपात्यते । पिनाकः । 'क्लीबपुंसोः पिनाकः स्याच्छूलशंकरधन्वनोः इत्यमरः ॥ 'पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः' इति मेदिनी ॥ पिष्लृ संचूर्णने । षस्य णत्वं धातोर्यगागमश्च निपात्यते । पिण्याकः । 'पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' इति मेदिनी ॥ तड आघाते । तडाकः ॥

( तत्त्वदी० )—**पिनाक** इति ॥ 'क्लीबपुंसोः पिनाकः स्याच्छूलशंकरधन्वनोः' ॥

**( दूषेरीकः ) दूषीका ॥**

(सुबोधिनी)—दूषेरीकः॥ ईकप्रत्ययमाह—दुष वैकृत्ये ण्यन्तः। दुषेर्णाविति दीर्घः। णेरिति णिलोपः। 'दूषीका नेत्रयोर्मलम्' इत्यमरः॥ किं च अकृतेऽपि ईक-प्रत्यये दूषयतेर्धातोरिरिरितीतिप्रत्यये दूषिः। कृदिकारादिति ङीपि दूषी। उभाभ्यामपि स्वार्थे कप्रत्यये ह्रस्वो वेति पाक्षिके ह्रस्वे च कृते दूषिका दूषीका च सिद्ध्यति। 'पिचण्डी दूषिका दूषी पिचाटं च दृशोर्मलम्' इति विक्रमादित्यकोशः॥ 'दूषिका तूलिकायां च मले स्याल्लोचनस्य च' इति मेदिनी॥

(तत्त्वदी०)—दूषेरिति॥ 'दूषीका नेत्रयोर्मलम्'॥

**(अनिहृषिभ्यां किच्च) अनीकम्। हृषीकम्॥**

(सुबोधिनी)—अनिहृषिभ्यां किच्च॥ कीकप्रत्ययः स्यात्॥ कित्वान्न गुणः। अन प्राणने। अनीकम्। 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिनी॥ हृष तुष्टौ। हृषीकम्। 'हृषीकं विषयीन्द्रियम्' इत्यमरः॥

**(अलीकादयः) अल भूषणादौ। अलीकम्। वलीकम्। पुण कर्मणि शुभे पुण्डरीकम्। ईषिका—इषीका॥**

(सुबोधिनी)—अलीकादयः॥ कीकप्रत्ययान्ता निपात्यन्ते॥ अल भूषणादौ। अलीकम्। 'अलीकं त्वप्रियेऽपि स्याद्दिव्येऽसत्ये नपुंसकम्' इति मेदिनी॥ 'अलीकमप्रिये लाभे वितथे' इति हेमचन्द्रः॥ विपूर्वात् व्यलीकम्। 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने। ना नागरे' इति मेदिनी॥ वल संवरणे। वलीकम्। 'वलीकनीध्रे पटलप्रान्ते' इत्यमरः॥ वलतेर्निपातनान्मुमागमे कृते वल्मीकम्। 'वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम्' इत्यमरः॥ पुण कर्मणि शुभे। धातोर्नुमागमो णस्य डश्च प्रत्ययस्यारुडागमश्च निपातनात्। पुण्डरीकम्। "पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च" इति मेदिनी॥ ईष गतौ। निपातनाद्ध्रस्वः। इषीका शलाका॥

(तत्त्वदी०)—अलीकादय इति॥ अलीकं मिथ्या। 'वलीकं पटलप्रान्ते'॥

**(कॄादेरीषः) करीषम्। तॄ तरीषः॥**

(सुबोधिनी)—कॄादेरीषः॥ ईषप्रत्ययमाह—कॄ विक्षेपे। करीषम्। 'करीषं गोमयं शुष्कम्' इत्यमरः॥ तॄ प्लवनतरणयोः। तरीषः। तरीषा॥

(तत्त्वदी०)—कॄादेरिति॥ 'करीषोऽस्त्री पशुशुष्कगोमययोः'॥

**(शॄादेः कीषः) शॄ शिरीषः। पॄ पुरीषम्॥**

(सुबोधिनी)—शॄादेः कीषः॥ शॄ हिंसायाम्। ऋत इतीर्। शिरीषो वृक्षः॥ पॄ पालनपूरणयोः। पोरुरित्युर्। पुरीषम्। 'गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ' इत्यमरः॥

**( अर्जेर्ऋजः ) ऋजीषम् । अबि शब्दे अम्बरीषो निपात्यः अम्बरीषम् ॥**

( सुबोधिनी )–अर्जेर्ऋजः ॥ अज अर्जने अस्मात्कीषः स्याद्धातोर्ऋजादेशश्च ॥ ऋजीषम् । 'ऋजीषं पिष्टपचनम्' इत्यमरः ॥ अबि शब्दे । निपातनादीषप्रत्ययः प्रत्ययस्यारुडागमश्च । अम्बरीषः "अम्बरीषं रणे भ्राष्ट्रे क्लीबं वृसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातकेऽनुपाते च" इति मेदिनी ॥ 'अम्बरीषः पुमान्भ्राष्ट्रम्' इति बोपालितः ॥ 'क्लीबे पुंसि नृपान्तरे' । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः ॥

( तत्त्वदी० )–अम्बरीष इति ॥ 'अम्बरीषः पुमान्भ्राष्ट्रं क्लीबेऽपि' ॥

**( कॄदेरीरः ) करीरः । शॄ शरीरम् ॥**

( सुबोधिनी )–कॄदेरीरः ॥ ईरप्रत्ययमाह–कॄ विक्षेपे । करीरः । "वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान् । करीरा चीरिकायां च दन्तमूले च दन्तिनाम्" इति मेदिनी ॥ शॄ हिंसायाम् । शीर्यते इति शरीरम् । अर्द्धर्चादिः । 'शरीरं वर्ष्म विग्रहः' इत्यमरः ॥

( तत्त्वदी० )–कॄदेरिति ॥ करीरो वंशाङ्कुरः ॥

**( गभीरादयः ) गम्लृ गभीरः–गम्भीरः । वश उशीरम् । घस्लृ क्षीरम् ॥**

( सुबोधिनी )–गभीरादयः ॥ ईरप्रत्ययान्ता निपात्यन्ते ॥ गम्लृ गतौ । मस्य भः पाक्षिको नुम् च निपातनात् । गभीरम्–गम्भीरम् । 'निम्नं गभीरं गम्भीरम्' इत्यमरः ॥ वश कान्तौ । निपातात्कीरप्रत्ययः । ग्रहामिति संप्रसारणम् । उशीरम् । 'मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यम्' इत्यमरः ॥ घस्लृ अदने । कीरप्रत्ययो निपातनात् । गमामित्युपधालोपे कत्वं षत्वम् । क्षीरम् । 'क्षीरं च दुग्ध नारे च' इति विश्वः ॥

**( शीङो धुक्लक्वलवलञ्वालपालाः ) शीधु । शीलम् । शेवलः । शैवलः । शेवालम् । शेपालम् ॥**

( सुबोधिनी )–शीङोधुक्लक्वलवलञ्वालपालाः ॥ शीङ् स्वप्ने अस्मात्षट् प्रत्यया भवन्ति ॥ शेरतेऽनेनेति शीधुः । अर्द्धर्चादिः । 'मैरेयः मासवः शीधुः' इत्यमरः ॥ लक् । शीलम् । 'शीलं स्वभावे सद्वृत्ते' इति मेदिनी ॥ वल । शेवलम् । वलञ् । शैवलम् । 'जलनीली तु शेवालं शैवलः' इत्यमरः ॥ 'शैवलं पद्मकाष्ठे स्याच्छेवाले तु पुमानयम्' इति मेदिनी ॥ वाल । शेवालम् ॥ पाल । शेपालम् । 'शैवालं शैवलो न स्त्री शेपालो जलनीलिका' इति शब्दार्णवः ॥

( तत्त्वदी० )–शीधुरिति ॥ मद्यम् ॥ 'शेवालं शैवलो न स्त्री शेपालो जलनीलिका' ॥

**( उलूकादयः )** उलूकः । शमु शम्बूकः । शल शालूकः । मडि भूषायाम् मण्डूकः ॥

( सुबोधिनी )—उलूकादयः ॥ ऊकप्रत्ययान्ता निपात्यन्ते—वल संवरणे संप्रसारणं निपातनात् । उलूकः । 'उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि' इति मेदिनी ॥ शमु उपशमे धातोर्बुगागमो निपातनात् । शम्बूकः । 'शम्बूको गजकुम्भांते घोषे स्याच्छूद्रतापसे' इति मेदिनी ॥ बाहुलाकादुकप्रत्ययोऽपि । शम्बुकम् । 'जम्बूकं जम्बुकं प्रोक्तं शम्बूकमपि शम्बुकम्' इति द्विरूपकोशः ॥ 'शम्बूका जलशुक्तयः' इत्यमरः ॥ शल गतौ । निपातनाद्वृद्धिः । शालूकम् । 'सौगन्धिकं तु कह्लारम्' इत्याद्युपक्रम्य 'शालूकमेषां कन्दः स्यात्' इत्यमरः ॥ एषां सौगन्धिकादीनां कुमुद-कैरवान्तानां कन्दो मूलं शालूकमित्यर्थः ॥ मडि भूषायाम् ॥ मण्डते वर्षासमयमिति मण्डूकः भेकः ॥

( तत्त्वदी० )—उलूकादय इति ॥ 'उलूकाविन्द्रमेचकौ' । शम्बूको जलशुक्तिः । शालूकं कन्दविशेषः ॥

**( नियो मिः )** नेमिः ॥

( सुबोधिनी )—नियो मिः ॥ मिप्रत्ययमाह—णीञ् प्रापणे । नयति चक्रमिति नेमिः । 'नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्' इति मेदिनी ॥

**( अर्तेरुच्च )** ऊर्मिः ॥

( सुबोधिनी )—अर्तेरुच्च ॥ मिप्रत्ययः स्याद्धातोरुदादेशश्च ॥ ऋ गतौ ऊर्मिः । "ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपि" इति मेदिनी ॥

**( भुवः किच्च )** भूमिः ॥

( सुबोधिनी )—भुवः किच्च ॥ मिक् स्यात् ॥ कित्वान्न गुणः । भू सत्तायाम् । भवन्ति भूतान्यस्यामिति भूमिः । 'भूमिर्वसुन्धरायां स्यात्स्थानमात्रेऽपि च स्त्रियाम्' इति मेदिनी ॥

**( अश्नोते रश् च )** रश्मिः ॥

( सुबोधिनी )—अश्नोते रश् च ॥ अशूङ् व्याप्तावस्मान्मिः स्याद्धातो रशादेशश्च । रश्मिः ॥ 'रश्मिः पुमान्दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि' इति मेदिनी ॥

( तत्त्वदी० )—रश्मिरिति ॥ रज्जुकिरणयो रश्मिः ॥

**( सृवृदेर्णिः कित् )** सृणिः । वृष्णिः ॥

( सुबोधिनी )—सृवृषादेर्निः कित् ॥ सृ गतौ । सृणिः । 'अंकुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥ 'सृणिः स्यादङ्कुशः पुमान्' इति ॥ वृषु सेचने । वृष्णिः । 'वृष्णिस्तु यादवे मेषे वृष्णिः पाषण्डचण्डयोः' इति विश्वः ॥ 'वृष्णिः क्षत्रियमेषयोः' ॥

( तत्त्वदी० )—सृणिरिति ॥ अङ्कुशः । वृष्णिरिति ॥ क्षत्रियमेषयोः ॥

## ( अङ्गेर्नलोपश्च ) अग्निः ॥

( सुबोधिनी )—अङ्गेर्नलोपश्च ॥ अगि गतौ । निः । अग्निः । 'अग्निर्वैश्वानरो वह्निः' इत्यमरः ॥ 'अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी ॥

## ( वहादेर्निः ) वह्निः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः ॥

( सुबोधिनी )—वहादेर्निः ॥ निप्रत्ययमाह—वह प्रापणे । वह्निः । 'वह्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी ॥ श्रिञ् सेवायाम् । श्रेणिः । 'श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहतौ' इति मेदिनी ॥ 'निःश्रेणिस्त्वधिरोहिणी' ॥ श्रु श्रवणे । श्रोणिः । 'कटिः श्रोणिः ककुद्मती' इत्यमरः ॥ यु मिश्रणे । योनिः । 'योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिरे' इति मेदिनी ॥ द्रु गतौ । द्रोणिः सेचनी ॥ ग्लै हर्षक्षये । ग्लानिः दौर्बल्यम् ॥

## ( घृण्यादयः ) घृणिः । स्पृश् पृष्णिः । पृष् पार्ष्णिः ॥

( सुबोधिनी )—घृण्यादयः ॥ निक्प्रत्ययान्ता निपात्यन्ते ॥ घृ सेचने । घृणिः । 'घृणिः पुनः । अंशुज्वालातरङ्गेषु' इति हेमचन्द्रः ॥ स्पृश संस्पर्शने । स्पृशतेः सलोपो निपातनात् । छशषेति षत्वं ष्टुत्वम् । पृष्णिः । 'पृष्णिरल्पतनौ' इत्यमरः ॥ पृषु सेचने। पृषेर्वृद्धिर्निपात्यते । पार्ष्णिः । 'पार्ष्णिः स्यादुन्मदस्त्रियाम्। स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति मेदिनी ॥

( तत्त्वदी० )—घृणिरिति ॥ किरणः ॥ पृष्णिरिति ॥ स्पृशेः सलोपे ॥पृषेस्तु वृद्धौ । पार्ष्णिः॥

## ( पातेर्डतिः ) पतिः ॥

( सुबोधिनी )—पातेर्डतिः ॥ डतिप्रत्ययमाह—डित्त्वाट्टिलोपः । पा रक्षण । पतिः । 'पतिर्धवे ना त्रिष्वीशे' इति मेदिनी ॥

## ( शकेर्ऋतन् ) शकृत् ॥

( सुबोधिनी )—शकेर्ऋतन् ॥ ऋतन्प्रत्ययमाह—शक्ऌ शक्तौ । शकृत् । 'उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ' इत्यमरः ॥

## ( हन्तेरतिरंह च ) हन्ति दुरितमनया अंहतिः ॥

( सुबोधिनी )—हन्तेरतिरंह च ॥ हन हिंसागत्योः । अस्मादतिः स्याद्धातोरंहादेशश्च ॥ अंहतिः । 'प्रादेशनं निर्वपणमपवर्जनमंहतिः' इत्यमरः ॥

**( सूङादेः क्रिः ) सूरिः । भूरिः । अद्रिः ॥**

( सुबोधिनी )—सूङादेः क्रिः ॥ क्रिप्रत्ययमाह—कित्त्वान्न गुणः । षूङ् प्राणिप्रसवे । सूरिः 'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः ॥ अभिधानमालायां सूरीति नान्तमुदाहृतम् ॥ भू सत्तायाम् । भूरिः । "भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः" इति मेदिनी ॥ अद भक्षणे । अद्रिः । 'अद्रयो द्रुमशैलार्काः' इत्यमरः ॥

**( रादेस्त्रिः ) रात्रिः । शत्रिः । अत्रिः ॥**

( सुबोधिनी )—रादेस्त्रिः ॥ त्रिप्रत्ययमाह—रा दाने । रात्रिः ॥ शद्लृ शातने । शत्रिः । 'शत्रिर्नाम्भोधरे विष्णौ' इति मेदिनी ॥ अद भक्षणे । अत्रिर्मुनिभेदः ॥

**( पतेरत्रिः ) पतत्रिः ॥**

( सुबोधिनी )—पतेरत्रिः ॥ अत्रिप्रत्ययमाह—पत्लृ गतौ । पतत्रिः पक्षी । पतत्रशब्दात्पक्षवाचकान्मत्वर्थे इनि तु नान्तः । पतत्री, पतत्रिणौ ॥

( तत्त्वदी० )—पतत्रिरिति । पक्षिणि ॥

**( मृङ ईचिः ) मरीचिः ॥**

( सुबोधिनी )—मृङ ईचिः ॥ ईचिप्रत्ययमाह—मृङ् प्राणत्यागे । मरीचिः । 'मरीचिः कृपणे दीप्तौ ऋषिभेदे च दृश्यते' इति विश्वः ॥ 'मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्' इति मेदिनी ॥

**( वेञो डिच्च ) वीचिः ॥**

( सुबोधिनी )—वेञो डिच्च ॥ वेञ् तन्तुसंताने अस्मादीचिर्डित्स्यात् ॥ वीचिः । 'वीचिः स्वल्पे तरंगे स्यादवकाशे सुखे द्वयोः' इति विश्वः ॥

**( पुरः कुषः ) पुर अग्रगमने । पुरुषः ॥**

( सुबोधिनी )—पुरः कुषः ॥ कुषप्रत्ययमाह—कित्त्वान्न गुणः । पुर अग्रगमने । पुरुषः । बाहुलकाद्दीर्घे पूरुषः । 'पुरुषस्त्वात्मनि नरे पुन्नागे च' इति हैमः ॥ 'पुरुषाः पूरुषा नरः' इत्यमरः ॥

**( पृनहिकलिभ्य उषः ) परुषम् । नहुषः । कलुषम् ॥**

( सुबोधिनी )—पृनहिकलिभ्य उषः ॥ उषप्रत्ययमाह—पॄ पालनपूरणयोः । परुषम् । 'परुषं कर्बुरे रूक्षे निष्ठुरोक्ता च वाच्यवत्' इति मेदिनी ॥ णह बन्धने । नहुषः । 'नहुषो राजविशेषे नागभिद्यपि' इति हैमः ॥ कल शब्दसंख्यानयोः । कलुषम् । 'कलुषं त्वाविलैनसोः' इति विश्वः ॥

**( पीयेरूषः ) पीय पाने सौत्रः पीयूषम् । पेयूषः ॥**

( सुबोधिनी )—पीयेरूषः ॥ ऊषप्रत्यमाह—पीय पाने ॥ सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणे तु पेयूषः । 'पेयूषोऽभिनवं पयः' इत्यमरः ॥ 'पीयूषममृतं सुधा' इत्यमरः ॥ 'पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते' इति मेदिनी ॥ 'पीयूषममृते नव्यसूतधेनोः पयस्यपि' इति हैमः ॥

**( मस्जेर्नुम्च ) मञ्जूषा ॥**

( सुबोधिनी )—मस्जेर्नुम् च ॥ टुमस्जो शुद्धौ अस्मादूषः स्याद्धातोर्नुमागमश्च ॥ मित्वादन्त्यात्स्वरात्परः । सस्य श्चुत्वेन शः । झबे जबा इति शस्य जः । हसात्परस्य झसस्येति वा जलोपः मञ्जूषा । लोपाभावपक्षे जकारद्वयम् । मञ्ज्जूषा । 'पिटकः पेटकः पेटा मञ्जूषा' इत्यमरः ॥

**( गण्डेश्च ) गडि वदनैकदेशे गण्डूषः ॥**

( सुबोधिनी )—गण्डेश्च ॥ गडि वदनैकदेशे अस्मादूषः स्यात् ॥ गण्डूषः । 'गण्डूषो मुखपूर्तौभपुष्करप्रसृतोन्मिते' इति मेदिनी ॥

**( शकादेरटः ) शकटम् । ककि गतौ कङ्कटः । कृञ करटः ॥**

( सुबोधिनी )—शकादेरटः ॥ अटप्रत्ययमाह—शकि गतौ शक्ल शक्तौ शकटः । 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः ॥ ककि गतौ । कङ्कटः सन्नाहः ॥ डुकृञ् करणे कॄ विक्षेपे वा । करटः । 'काकेभगण्डौ करटौ' इत्यमरः ॥ "करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीविनि । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे" इति मेदिनी ॥

( तत्त्वदी० )—कङ्कट इति सन्नाहे ॥

**( कलिकर्द्योरमः ) कलमः । कर्द कुत्सिते शब्दे कर्दमः ॥**

( सुबोधिनी )—कलिकर्द्योरमः ॥ अमप्रत्ययमाह—कल संख्याने । कलमः । 'कलमः शालिचौरयोः' इति हैमः ॥ 'कलमः पुंसि लेखिन्यां शालौ पाटच्चरेऽपि च' इति मेदिनी ॥ कर्द कुत्सिते शब्दे । कर्दमः पङ्कः ॥

**( पुल्यादेः किन्दः ) पुलिन्दः ॥**

( सुबोधिनी )—पुल्यादेः किन्दः ॥ किन्दप्रत्ययमाह—कित्वान्न गुणः । पुल महत्त्वे पुलिन्दो जातिविशेषः ॥

( तत्त्वदी० )—पुलिन्द इति ॥ जातिविशेषे ॥

**( कुपेर्वा वः ) कुपिन्दः–कुविन्दः ॥**

( सुबोधिनी )—कुपेर्वा वः ॥ किन्दः स्यात्पस्य वा वकारश्च ॥ कुप क्रोधे । कुविन्दः–कुपिन्दः । 'तन्तुवायः कुविन्दः स्यात्' इत्यमरः ॥

( तत्त्वदी० )—कुपिन्दकुविन्दौ तन्तुवाये ॥

( नौ षञ्जेर्घथिः ) निषङ्गथिः ॥

( सुबोधिनी )—नौ षञ्जेर्घथिः ॥ षञ्ज सङ्गे निपूर्वादस्माद् घथिप्रत्ययः स्यात् ॥ घथिप्रत्ययमाह—घित्त्वाच्चजोरिति कुत्वम् । प्रादश्चेति षत्वम् । निषङ्गथिः आलिङ्गकः॥

( तत्त्वदी० )—निषङ्गथिरिति ॥ आलिङ्गके ॥

( सर्तेर्णिच्च ) सारथिः ॥

( सुबोधिनी )—सर्तेर्णिच्च ॥ सृ गतौ अस्माद् घथिः स्यात्स च णित् ॥ सारथिः । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः ॥

( खर्जादेरूरः ) खर्जूरः । कर्पूरम् । वल्लूरम् ॥

( सुबोधिनी )—खर्जादेरूरः ॥ ऊरप्रत्ययमाह—खर्ज आर्जवे । खर्जूरः । 'खर्जूरं रूपफलयोः खर्जूरः कीटवृक्षयोः' इति मेदिनी ॥ कृपू सामर्थ्ये । बाहुलकात् कृपो रो-ल इति लत्वाभावः । कर्पूरम् । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका, इत्यमरः ॥ वल्ल संवरणे । वल्लूरम् । 'वल्लूरं शुष्कमांसं स्यात्' ॥

( तत्त्वदी० )—वल्लूरमिति ॥ शुष्कमांसम् ॥

( लङ्गेर्वृद्धिश्च ) लाङ्गूलम् । कुसेश्च कुसूलम् ॥

( सुबोधिनी )—लङ्गेर्वृद्धिश्च ॥ लगि गतावस्मादूलप्रत्ययः स्याद्धातोर्वृद्धिश्च॥ लांगूलम् । 'लाङ्गूलं पुच्छशेफसोः' इति मेदिनी ॥ कुस संश्लेषणे । ऊलः । निपातनाद्गुणाभावः । कुसूलम् । 'कुसूलं च कुसीदं च मध्यदन्त्यमुदाहृतम्' इति विश्वः ॥

( कुवश्चट् दीर्घश्च ) कूची ॥

( सुबोधिनी )—कुवश्चट् दीर्घश्च ॥ कु शब्दे । अस्माच्चट् प्रत्ययः स्याद्धातोः पाक्षिको दीर्घश्च ॥ चट्प्रत्ययमाह—टित्त्वादीप् । कूची चित्रलेखनिका । 'कुचकूचौ स्तनौ मतौ' इति विश्वः ॥

( तत्त्वदी० )—कूचीति ॥ चित्रलेखनिका ॥

( सिवेरू च ) सूची ॥

( सुबोधिनी )—सिवेरू च ॥ षिवु तन्तुसंताने अस्माच्चट् स्याद्धातोष्टेरूश्च ॥ सूचो दर्भाङ्कुरः । 'सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी ॥

( तत्त्वदी० )—सूचीति ॥ सूचो दर्भाङ्कुरः ॥

( शमेर्बः ) शमु शम्बः ॥

( सुबोधिनी )—शमेर्बः ॥ शमु उपशमे अस्माद्बः स्यात ॥ बप्रत्ययमाह—शम्बः । 'शंबः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु' इति विश्वमेदिन्यौ ॥

( तत्त्वदी० )—शम्ब इति ॥ मुसले ॥

**( उल्बादयः )** उच समवाये उल्बः । शुल्बम् । स्था स्तम्बः स्तबकः ॥

( सुबोधिनी )–उल्बादयः ॥ बप्रत्ययान्ता निपात्यन्ते ॥ उच समवाये चस्य लत्वं गुणाभावश्च । उल्बम् । 'गर्भाशये जरायुः स्यादुल्बं च कललोऽस्त्रियाम्' इति मेदिनी ॥ शुच शोके । चस्य लत्वं गुणाभावश्च निपातनात् । शुल्बम् । 'शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ' इति मेदिनी ॥ ष्ठा गतिनिवृत्तौ अस्मादम्बअबक एतौ प्रत्ययौ निपातनाद्धातोस्थस्य तश्च । स्तम्बः । स्तबकः । 'स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' इति विश्वः ॥ 'स्तम्बोऽप्रकाण्डद्रुमगुच्छयोः' इति मेदिनी ॥ 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः ॥

( तत्त्वदी० )–उल्बमिति गर्भाशयः । शुल्बं ताम्रम् । स्तम्बो गुच्छस्तृणादीनाम् ॥ स्तबकः पुष्पगुच्छः ॥

**( शाशपिभ्यां दः )** शादः । शब्दः ॥

( सुबोधिनी )–शाशपिभ्यां दः ॥ दप्रत्ययमाह–शो तनूकरणे । शादः । 'शादो जम्बालशष्पयोः' इत्यमरः ॥ 'शादः स्यात्कर्दमे शष्पे' इति मेदिनी ॥ 'शष्पं बालतृणं घासः' इत्यमरः ॥ शप् आक्रोशे । शब्दो निनादः ॥

( तत्त्वदी० )–शाद इति । जम्बालशष्पयोः ॥

**( अब्दादयः )** अवतीत्यब्दः । कुन्दः ॥

( सुबोधिनी )–अब्दादयः ॥ दप्रत्ययान्ता निपात्यन्ते–अव रक्षणे । वस्यः बः । अब्दः । 'अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान्' इति मेदिनी ॥ कु शब्दे । निपातनान्नुम् । कुन्दः । 'कुन्दो माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' इति मेदिनी ॥

**( वलिमलितनिभ्यः कयः )** वलयम् । मलयः । तनयः ॥

( सुबोधिनी )–वलिमलितनिभ्यः कयः ॥ कयप्रत्ययमाह–कित्त्वाद्गुणनिषेधादि । वल संवरणे । वलयम् । 'वलयः कण्ठरोगे ना कंकणे पुन्नपुंसकम्' इति मेदिनी॥ मल धारणे । मलयः । 'मलयः पर्वतान्तरे । शैलांशे देश आरामे त्रिवृतायां तु योषिति' इति मेदिनी ॥ तनु विस्तारे । तनयः । 'आत्मजस्तनयः सूनुः' इत्यमरः ॥

**( हृञो दुक् च )** हरतीति हृदयम् ॥

( सुबोधिनी )–हृञो दुक् च ॥ हृञ् हरणे अस्मात्कयः स्याद्धातोर्दुगागमश्च । ह्रियते विषयैरिति हृदयं मनः ॥

**( मिनोतेरुः )** मेरुः ॥

( सुबोधिनी )–मिनोतेरुः ॥ रुप्रत्ययमाह-डुमिञ् प्रक्षेपणे । मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः ॥

**( जन्त्वादयः ) जन्तु । अश्रु । रुरुः । शातयतीति शत्रुः ॥**

( सुबोधिनी )–जन्त्वादयः ॥ रुप्रत्ययान्ता निपात्यन्ते–जनी प्रादुर्भावे । नस्य तो निपातनात् । जत्रु । 'संधी तस्यैव जत्रुणी' इत्यमरः ॥ तस्य स्कन्धस्येत्यर्थः ॥ अशूङ् व्याप्तौ । अश्रु नयनजलम् ॥ रु शब्दे । निपातनाद्गुणाभावः । रुरुः । 'कृष्ण-साररुरुन्यंकुरंकुशम्बररोहिषाः' इत्यमरः ॥ 'रुरुर्दैत्येमृगेऽपि च' इति मेदिनी ॥ शद्लृ शातने ण्यन्तः । शातयतीति णेरिति णिलोपः । निपातनाद्ध्रस्वत्वम् । शत्रुः ॥

( तत्त्वदी० )–रुरुरिति मृगभेदे ॥

**( कुसेरुम्भोमेदेताः ) कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितः ॥**

( सुबोधिनी )–कुसेरुम्भोमेदेताः ॥ कुस संश्लेषणे अस्मात् उम्भ उम ईद इत एते प्रत्ययाः स्युः ॥ उम्भादिप्रत्ययानाह-कुसुम्भम् । 'कुसुम्भं हेमनि महारजने ना कमण्डलौ' इति मेदिनी ॥ कुसुमम् । 'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति मेदिनी ॥ कुसीदम् । 'कुसीदं जीवने वृद्ध्यां क्लीबं त्रिषु कुसीदके' इति मेदिनी ॥ कुसितो जनपदः ॥

( तत्त्वदी० )–कुसित इति जनपदे ॥

**( तण्डुलादयः ) तड आघाते तण्डुलाः । अकि लक्षणे अंकुशः । चष् चषालः । पल्वलम् । ञिधृषा धिष्ण्यम् । शल्यम् ॥**

( सुबोधिनी )–तण्डुलादयो निपात्याः ॥ तड आघाते । उलप्रत्ययो नुमागमश्च निपात्यते । तण्डुलः । 'तण्डुलः स्याद्विडंगे च धान्यादिनिकरे पुमान्' इति मेदिनी ॥ अकि लक्षणे । उशप्रत्ययो निपातनात् । अंकुशः । 'अंकुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥ चष भक्षणे । आलप्रत्ययो निपातनात् । चषालः । 'चषालो यूपकटकः' इत्यमरः ॥ पा पाने । वलप्रत्ययो निपात्यते लुगागमश्च धातोर्ह्रस्वत्वं च । पल्वलमल्पसरः ॥ ञिधृषा प्रागल्भ्ये । ण्यप्रत्ययः । ऋत इत्वं च निपात्यते । धिष्ण्यम् । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः ॥ 'धिष्ण्यं स्थानाग्निसद्मसु । ऋक्षे शक्तौ च' इति मेदिनी ॥ शल गतौ । यप्रत्ययः । शल्यम् । 'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे । मदनद्रुश्वाविधो ना' इति मेदिनी ॥

( तत्त्वदी० )–शल्यम् ॥ 'शल्यं वा पुंसि शङ्कुर्ना' ॥

**( मूङ्शक्यम्यबिभ्यः क्लः ) मूलम् । शक्लः । अम्लः । अबि शब्दे अम्ब्लः ॥**

( सुबोधिनी )–मूङ्शक्यम्यबिभ्यः क्लः ॥ क्लप्रत्ययमाह–कित्त्वान्न गुणः । मूङ् बन्धने । मूलम् । 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः ॥ शक्लृ शक्तौ । शक्लः ।

'शङ्कः प्रियंवदे' इत्यमरः ॥ अम रोगे । चुरादिर्ण्यन्तः । बाहुलकादुपधाह्रस्वः । णेरिति णिलोपः । अम्लः । 'अम्लो रसविशेषे स्यादम्ली चाङ्गेरिकौषधौ' इति मेदिनी ॥ अबि शब्दे अम्बलो रसः ॥

( तत्त्वदी० )-शङ्क इति 'शङ्कः प्रियंवदे' ॥

## ( मादेर्यः ) माया । छाया । सस्यम् । षुञ् सव्यम् ॥

( सुबोधिनी )-मादेर्यः ॥ यप्रत्ययमाह-मा माने । माया । 'माया स्याच्छांबरी बुद्ध्योर्मायः पीतांबरेऽसुरे' इति मेदिनी ॥ छो छेदने । छाया । "छाया स्यादातपाभावे प्रतिबिंबार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्" इति विश्वः ॥ षस स्वप्ने । सस्यम् । 'वृक्षादीनां फलं सस्यम्' इत्यमरः ॥ षुञ् अभिषवे । सव्यम् । 'सव्यं वामे प्रतीपे च' इति मेदिनी ॥ 'सव्यं दक्षिणवामयोः' इति विश्वः ॥

( तत्त्वदी० )-सव्यमिति ॥ 'दक्षिगवामयोः' ॥

## ( जनेर्यक् ) जाया-जन्यम् ॥

( सुबोधिनी )-जनेर्यक् ॥ जन जनने अस्माद्यक् प्रत्ययः स्यात् ॥ जनसनेति आत्वम् । जाया । जन्यम् । "जन्यं हट्टपरीवादे संग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् । त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः । स्निग्धे" इति मेदिनी ॥

( तत्त्वदी० )-जन्यमिति युद्धे ॥

## ( अघ्न्यादयः ) हन् अघ्न्या । कनी दीप्तौ कन्या । वन्ध्या ॥

( सुबोधिनी )-अघ्न्यादयः ॥ यक् प्रत्ययान्ता निपात्यन्ते-हन् हिंसागत्योः । धातोरडागम उपधालोपश्च निपातनात् । 'हनो घ्ने' इति घः । अघ्न्या । नञ्पूर्वाद्धन्तेर्यक् उपधालोपश्च यन्ते । अघ्न्यः प्रजापतिः "माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यात्" इत्यमरः ॥ कनी दीप्तौ । कन्या । 'कन्या कुमारिकागौर्योरौषधीराशिभेदयोः' इति विश्वः ॥ वन्ध बन्धने । बवयोरैक्यात् । निपातनान्नलोपाभावः । वन्ध्या 'वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजास्त्रियाम्' इति मेदिनी ॥ संपूर्वाद्ध्यैञो यक् । आतो लोपश्च निपातनात् । संध्या । 'सायं संध्या पितृप्रसूः' इत्यमरः ॥

## ( अर्त्यादेर्वन् ) अर्वा । पॄ पर्वा ॥

( सुबोधिनी )-अर्त्यादेर्वन् ॥ वन्प्रत्ययमाह-अर्वा । 'अर्वा तुरंगगर्ह्ययोः' इति विश्वः ॥ 'अर्वा तुरंगमे पुंसि कुत्सिते वाच्यालङ्गकः' इति मेदिनी ॥ पॄ पालनादौ । पर्वा । "पर्व क्लीबं सहे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि" इति मेदिनी ॥

**( ध्याप्योः संप्रसारणम् )** ध्यै चिंतायाम् । प्यैङ् वृद्धौ । धीवा पीवा ॥

( सुबोधिनी )–ध्याप्योः संप्रसारणम् ॥ ध्यै चिन्तायाम् प्यैङ् वृद्धौ आभ्यां वन् प्रत्ययः स्याद्धातोः संप्रसारणं च ॥ धीवा कर्मकरः । पीवा स्थूलः ॥

( तत्त्वदी० )–धीवेति कर्मकरे । पीवा स्थूलः ॥

**( अदेर्ध्श्च )** अध्वा ॥

( सुबोधिनी )–अदेर्धश्च ॥ अद भक्षणे अस्माद्वन् स्याद्दस्य धश्च ॥ अध्वा मार्गः ॥

**( धातोरिः )** यजिः । वट वेष्टने वटिः । जनिः । बोधिः । हरिः । वर्तिः ॥

( सुबोधिनी )–धातोरिः ॥ इप्रत्ययमाह–यज देवपूजादौ । यजिः ॥ वट वेष्टने वटिः ॥ बुध अवगमने । बोधिः । 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' इति मेदिनी ॥ हृञ् हरिः । "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवंगे च यमे वाते प्रकीर्तितः" ॥ वृतु वर्तने । वर्तिर्दीपोपकरणम् ॥

( तत्त्वदी० )–हरिरिति ॥ "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवंगे च यमे वाते प्रकीर्तितः ॥

**( नाम्युपधात्किः )** कृषिः । ऋषिः । शुचिः । लिपिः । तूल निष्कर्षे तूलिः ॥

( सुबोधिनी )–नाम्युधात्किः ॥ नाम्युपधाद्धातोः किः स्यात् ॥ किप्रत्ययमाह– कित्त्वान्न गुणः । कृष विलेखने । कृषिः ॥ ऋषी गतौ । ऋषिः । "ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' इति मेदिनी ॥ शुच शोके । शुचिः । 'शुचिः शुद्धे सितेऽनले । ग्रीष्माषाढानुपहतेषूपधाशु(शु)द्धमन्त्रिणि । शृङ्गारे' इति हैमः ॥ लिप उपदेहे । लिपिः । बाहुलकाद्वत्वमपि । लिविः ॥ तूल निष्कर्षे । तूलिः कूर्चिका ॥

**( क्रमितमिशतिस्तम्भामत इच्च )** क्रिमिः । तिमिः । शितिः । स्तिम्भिः ॥

( सुबोधिनी )–क्रमितमिशतिस्तम्भामत इच्च ॥ एभ्यः किः स्यादेषामत इकारादेशश्च ॥ क्रमु पादविक्षेपे । क्रिमिः । निपातनाद्रस्य संप्रसारणमपि भवति कृमिः । 'कृमिर्ना क्रिमिवत्कीटे' इति मेदिनी ॥ तमु काङ्क्षायाम् । तिमिः । तिमिर्मत्स्यभेदः ॥ शतिः सौत्रो धातुः । शितिः । 'शितिः कृष्णे सिते भूर्जे' इति विश्वः ॥ 'शितिर्भूर्जे ना सितासितयोस्त्रिषु' इति मेदिनी ॥ स्तम्भः सौत्रः । स्तिम्भिः समुद्रः ॥

**( मनेरत उच्च )** मुनिः ॥

( सुबोधिनी )–मनेरत उच्च ॥ मन ज्ञाने अस्मात्किः स्यादकारस्योकारादेशश्च ॥ मन्यते जानातीति मुनिः । 'मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी ॥

**( वर्णेर्बलिश्च )** वर्ण वर्णने सौत्रः । बलिः ॥

( सुबोधिनी )—वर्णेर्बलिश्च ॥ वर्णिः सौत्रोऽस्मात्किः स्याद्धातोर्बलिरादेशश्च॥बलिः। 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' । बवयोरैक्याद्वलिः ॥

( तत्त्वदी० )—बलिरिति पूजोपहारयोः ॥

**( वपादेरिञ् )** वापिः । राजिः । वारिः ।

( सुबोधिनी )—वपादेरिञ् ॥ इञ्प्रत्ययमाह—ञित्त्वाद्वृद्धिः । डुवप् बीजसंताने । वापिः ॥ राजृ दीप्तौ । राजिः । 'राजिः स्त्री पङ्क्तिरेखयोः' इति मेदिनी ॥ वृञ् वरणे । ञ्यन्तः । ञेरिति ञिलोपः । वारिः । 'वारिः स्मृता सरस्वत्यां वारि ह्रीबेर-नीरयोः' इति विश्वः ॥ कृदिकारादितीप्तु पाक्षिकः सर्वत्र भवति । 'वारी तु गजबन्धनी' इत्यमरः ॥ 'वारिः पथिकसंहतौ' इति च ॥

( तत्त्वदी० )—वपा० ॥ वारिर्गजबन्धनी जले क्लीवम् ॥

**( नहो भः )** नाभिः । जनिः । आजिः । आतिः ॥

( सुबोधिनी )—नहो भः ॥ णह बन्धने अस्मादिञ् स्यात् हस्य भश्च ॥ नाभिः । "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिका-मदे" इति मेदिनी ॥ जनी प्रादुर्भावे । इञ् । जनिवध्योरिति न वृद्धिः । जनिः । कृदि-कारादिति पक्षे ईप् जनी । 'जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि' इति मेदिनी ॥ अज गतौ क्षेपणे च । बाहुलकादजेर्वीभावो न । आजिः संग्रामः ॥ अत सातत्यगमने । आतिः पक्षी ॥

( तत्त्वदी० )—नहो० ॥ नाभिः स्यात्क्षत्रिये पुंसि प्राण्यङ्गे तु स्त्रियाम् ॥

**( अशेरुट् )** राशिः ॥

( सुबोधिनी )—अशेरुट् ॥ अशूङ् व्याप्तावस्मादिञ् प्रत्ययो धातो रुडागमश्च स्यात् ॥ राशिः ॥ 'राशिर्मेषादिपुञ्जयोः' इति मेदिनी ॥

**( वातेर्डित् )** विः ॥

( सुबोधिनी )—वातेर्डित् ॥ वा गतिगन्धनयोरस्माड्डित् स्यात् ॥ डित्त्वाट्टिलोपः । विः पक्षी । स्त्रियां वीत्यपि ॥

**( नीव्यादयः )** निपूर्वो व्येञ् । नीविः । प्रहिः । समानं ख्यायते जनैरिति सखा ॥

( सुबोधिनी )—नीव्यादयः ॥ डित्प्रत्ययान्ता निपात्यन्ते—निपूर्वो व्येञ् संवरणे । डित्त्वाट्टिलोपः । नेर्दीर्घो निपात्यते । यत इति यलोपः । नीविः । कृदिकारा-दितीपि । नीवी । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः ॥ परिपणो

मूलधनम् ॥ हृञ् हरणे । टिलोपे प्रहिः । 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः ॥ ख्या प्रकथने । टिलोपे सति यलोपः सहादेरिति समानस्य सादेशः । सेर्डाऽधेरिति डा । सखा ॥

( तत्त्वदी० )–नी० ॥ प्रहिः कूपः ॥

## ( आङ्पूर्वौ श्रिहनी ) अश्रिः । अहिः ॥

( सुबोधिनी )–आङ्पूर्वौ श्रिहनी ॥ श्रिञ् सेवायाम् । टिलोपे सत्याङो ह्रस्वो निपातनात् । अश्रिः । 'स्त्रियः पाल्यश्रिकोटयः' इत्यमरः ॥ दन्त्यसकारवांस्त्वदन्तः । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनी ॥ आङ्पूर्वो हन हिंसागत्योः । टिलोपे सत्याङो ह्रस्वो निपातनात् । अहिः । 'अहिर्वृत्रासुरे सर्पे' इति मेदिनी ॥

( तत्त्वदी० )–आङ्० ॥ 'स्त्रियः पाल्यश्रिकोटयः' ॥

## ( कॄादेः किः ) कॄ किरिः । गॄ गिरिः । पॄ पुरिः ॥

( सुबोधिनी )–कॄादेः किः ॥ किप्रत्ययमाह–कित्वान्न गुणः । कॄ विक्षेपे । ऋत इरितीर् । किरिः । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः ॥पॄकॄज्ञाभ्यश्चेति कप्रत्ययेऽदन्तोऽप्यस्ति । 'त्वचि त्वचः किरोऽपि स्यात्किरौ प्रोक्तः पथः पथि' इति द्विरूपकोशः ॥ गॄ निगरणे । गिरिः । 'गिरिर्ना नेत्ररुग्भिदि । अद्रौ गिरिजके योषिद्गीर्णौ पूज्ये पुनस्त्रिषु' इति मेदिनी ॥ पॄ पालनादौ । पोरुरित्युर् । पुरिर्नगरं राजा नदी च ॥

## ( मन्धातोः ) कर्म । चर्म । भस भर्त्सनदीप्त्योः ।भस्म । जन्म । छद्म । सुत्रामा ॥

( सुबोधिनी )–मन्धातोः ॥ मन्प्रत्ययमाह–डुकृञ् करणे । क्रियते इति कर्म । 'कर्मव्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्' इति रुद्रः ॥ चर गत्यादौ । चर्म । 'चर्म कृत्तौ च फलके' इति मेदिनी ॥ भस भर्त्सनदीप्त्योः । भस्म ॥ जन जनने । जन्म ॥ छद अपवारणे चुरादिः । इस्मन्त्रिति ह्रस्वः । णेरिति णिलोपः । छद्म ॥ त्रैङ् पालने । सुष्ठु त्रायते इति सुत्रामा इन्द्रः ॥

## ( बृंहेर्नस्य अः ) ब्रह्म ॥

( सुबोधिनी )–बृंहेर्नस्य अः ॥ बृहि वृद्धावस्मान्मन्स्यात् ॥ नुमो नस्य अकारे कृते रत्वम् । ब्रह्म । 'ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी ॥ वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः ॥

( तत्त्वदी० )–बृंहेः ॥ 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' ॥

**( नामादयः ) म्ना नाम । षो साम । षिञ् सीमा । व्येञ् व्योम । रु रोम । पै शोषणे पाप्मा । वेमा । अतेर्मनिण् आत्मा ॥**

( सुबोधिनी )—नामादयः ॥ मन्प्रत्ययान्ता निपात्यन्ते ॥ म्ना अभ्यासे । म्नायतेऽनेनेति मलोपो निपातनात् । नाम । 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः ॥ षोऽन्तकर्मणि । साम । 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी ॥ षिञ् बन्धने । सिनोतेर्दीर्घो निपात्यते । सीमा । 'सीमसीमे स्त्रियामुभे' इत्यमरः ॥ व्येञ् संवरणे । अन्त्यस्योत्वं निपातनात् । गुणः । व्योम ॥ रु शब्दे । रोम गात्रकेशः ॥ पा पाने । पुगागमो निपात्यते । पाप्मा पापम् ॥ वेञ् तन्तुसंताने । वेमा तन्तुवायदण्डः । अर्द्धर्चादिः ॥ अतेर्मनिण् । णित्त्वाद्वृद्धिः । इकार उच्चारणार्थः । अत सातत्यगमने । आत्मा । "आत्मा पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि" इति मेदिनी ॥

( तत्त्वदी० )—नामा० ॥ वेमा तन्तुवायदण्डः ॥

**( हनिमशिभ्यां सिकः ) हंसिका । मश शब्दे मक्षिका ॥**

( सुबोधिनी )—हनिमशिभ्यां सिकः ॥ आभ्यां सिकप्रत्ययः स्यात् ॥ सिकप्रत्ययमाह—हन हिंसागत्योः । हंसिका । 'हंसिका हंसयोषिति' ॥ मश शब्दे रोषकृते च । छशेषेति षत्वम् षढोरिति कत्वं षत्वं च । मक्षिका । 'मक्षिका भम्भराली स्यात्' इति हारावली ॥

**( कोररः ) कवरः ॥**

( सुबोधिनी )—कोररः ॥ कु शब्दे अस्मादरः स्यात् ॥ कवरः पाठकः । वबयोरैक्यादीपि प्रत्यये कबरी केशविन्यासः । अन्यत्र कबरा ॥

**( गिर उडः ) गरुडः ॥**

( सुबोधिनी )—गिर उडः ॥ गॄ निगरणे अस्मादुडप्रत्ययः ॥ गरुडः ॥

**( इन्देः कमिर्नलोपश्च ) इदम् ॥**

( सुबोधिनी )—इन्देः कमिर्नलोपश्च ॥ इदि परमैश्वर्ये अस्मात्कमिः स्यान्नलोपश्च ॥ कित्त्वाद् गुणो न । इकार उच्चारणार्थः । इदमिति सर्वादिगणस्थशब्दोऽयं सन्निहितपरामर्शकः ॥

**( कायतेर्डिम् ) किम् ॥**

( सुबोधिनी ) कायतेर्डिम् ॥ कै शब्दे अस्मात् डिम् प्रत्ययः स्यात् ॥ डित्त्वाट्टिलोपः । किम् ॥

**( धातोस्त्रः ) वस्त्रम् । अस्त्रम् । छत्रम् ॥**

( सुबोधिनी )–धातोस्त्रः ॥ त्रप्रत्ययमाह–वस निवासे । वस्त्रम् ॥ असु क्षेपणे । अस्त्रम् । 'अस्त्रं प्रहरणे चापे करवाले नपुंसकम्' इति मेदिनी ॥ छद अपवारणे चुरादिर्ण्यन्तः । इस्मन्त्रेति ह्रस्वत्वम् । णेरिति णिलोपः । छत्रम् ॥

( सिविमुच्योष्टेरूः ) षिवु सूत्रम् । मुच्लृ मूत्रम् ॥

( सुबोधिनी )–सिविमुच्योष्टेरूः ॥ आभ्यां त्रप्रत्ययः स्यादनयोष्टेरूकारादेशश्च ॥ कित्त्वान्न गुणः । षिवु तन्तुसन्ताने । सूत्रम् । 'सूत्रं तु सूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः ॥ मुच्लृ मोक्षणे । मूत्रम् ॥

( अमादेः क्त्रः ) आन्त्रम् । चित्रम् । मित्रम् । उष उष्ट्रः ॥

( सुबोधिनी )–अमादेः क्त्रः ॥ अम गतिशब्दसंभक्तिषु । त्रमान्तस्येति दीर्घः । आन्त्रम् ॥ चिञ् चयने । चित्रम् । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः ॥ ञिमिदा स्नेहने । मित्रम् । 'मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी ॥ उष दाहे । ष्टुत्वम् । उष्ट्रः 'उष्ट्रे क्रमेलकमयमहांगाः' इत्यमरः ॥

( पूञो ह्रस्वश्च ) पुत्रः ॥

( सुबोधिनी )–पूञो ह्रस्वश्च ॥ पूञ् पवने अस्मात् क्त्रः स्याद्धातोर्ह्रस्वत्वं च ॥ पुनाति स्ववंश्यानिति पुत्रः पुन्नामा नरकस्तस्मात् त्रायते इति आतो ड इति डप्रत्यये पुत्र इति व्युत्पत्त्यन्तरम् ॥

( स्त्यायतेर्ड्रट् ) स्त्री ॥

( सुबोधिनी )–स्त्यायतेर्ड्रट् ॥ स्त्यै ष्ट्यै शब्दसंघातयोः अस्मात् ड्रट् स्यात् ॥ टित्वादीप् । डित्वाट्टिलोपः यवयोर्वसे इति यलोपः । स्त्री । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः ॥

( गमेरा ) गात्रम् ॥

( सुबोधिनी )–गमेरा ॥ गम्लृ गतौ अस्य मस्यात्वं स्यात् त्रप्रत्ययश्च ॥ गात्रम् । 'गात्रमङ्गे कलेवरे । स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरितम्' इति विश्वः ॥

( चरादेरित्रञ् ) चारित्रम् । वादित्रम् ॥

( सुबोधिनी )–चरादेरित्रञ् ॥ इत्रञ्प्रत्ययमाह–ञित्त्वाद्वृद्धिः । चर गतौ । चारित्रम् ॥ वद व्यक्तायां वाचि ण्यन्तः । वादित्रं तूर्यादि ॥

( अशित्रादिभ्य इत्रोत्रौ ) अशित्रम् । वहित्रम् । धरित्री । अमित्रः । त्रैङ् त्रोत्रम् । वरुत्रम् ॥

( सुबोधिनी )–अशित्रादिभ्य इत्रोत्रौ ॥ अशिश्च त्रा च अशित्रौ अशित्रावादी येषां ते अशित्रादयस्तेभ्यः । द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबध्यत इत्यादिशब्दः

प्रत्येकं योज्यः । अशूङ् व्याप्तावित्यादिभ्य इत्रप्रत्ययः स्यात् । त्रैङ् पालने इत्यादिभ्यः उत्रप्रत्ययः स्यात् ॥ अशूङ् । अशित्रम् ॥ वह प्रापणे । वहित्रम् ॥ धृञ् धारणे । धरित्रम् । ईपि धरित्री ॥ अम गतौ । अमित्रः शत्रुः । मित्रं नेति विग्रहे त्वमित्रमिति नपुंसकम् ॥ त्रैङ् । आत्वे उत्रे च त्रोत्रम् प्रहरणम् ॥ वृञ् वरणे । वरुत्रं प्रावरणम् ॥

(तत्त्वदी० )–त्रोत्रमिति ॥ प्रहरणे ॥

## ( चितेः कणः कश्च ) चिक्कणम् ॥

( सुबोधिनी )–चितेः कणः कश्च ॥ चिती संज्ञाने अस्मात्कणप्रत्ययः स्यात् तस्य कश्च ॥ बाहुलकाद्गुणाभावः । चिक्कणम् । 'चिक्कणं मसृणं स्निग्धम्' इत्यमरः ॥

(तत्त्वदी० )–चिक्कणमिति ॥ स्निग्धे ॥

## ( सूचेः स्मः ) सूक्ष्मम् ॥

( सुबोधिनी )–सूचेः स्मः ॥ सूच पैशुन्ये चुरादिरस्मात्स्मप्रत्ययः स्यात् ॥ णेरिति णिलोपः । कुत्वषत्वे । सूक्ष्मम् । 'सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी ॥

## ( पातेर्डुम्सुः ) पुमान् ॥

( सुबोधिनी )–पातेर्डुम्सुः ॥ पा रक्षणेऽस्मात् डुम्सुप्रत्ययः स्यात् ॥ डित्त्वाट्टिलोपः । उदित्त्वात् स्त्रियामीप् । सुपुंसी । पुंसोऽसुङित्यसुङ् । पुमान् ॥

## ( भुजादेः किष्यः ) भुजिष्यो दासः ॥

( सुबोधिनी )–भुजादेः किष्यः ॥ भुज पालनादावस्मात् किष्यप्रत्ययः स्यात् ॥ कित्त्वान्न गुणः । भुजिष्यः । 'भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः' इति मेदिनी । 'भुजिष्यः परिचारकः' इत्यमरः ॥

## ( वसादेस्तिः ) वस्तिः । शास्तिः । अगमस्यतीति अगस्तिः ॥

( सुबोधिनी )–वसादेस्तिः ॥ तिप्रत्ययमाह–वस निवासे वस आच्छादने च । वस्तिः । 'वस्तिर्द्वयोर्निरूहे नाभ्यधोभूमिदशासु च' इति मेदिनी ॥ 'वस्तिर्नाभेरधो द्वयोः' इत्यमरः ॥ शासु अनुशिष्टौ । शास्तिः राजदण्डः ॥ असु क्षेपणे । विन्ध्याख्यमगमस्यतीति हलादेरिति टिलोपः । अगस्तिः 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति मेदिनी ॥

(तत्त्वदी० )–वस्तिरिति ॥ 'वस्तिर्नाभेरधो द्वयोः' ॥ दशासूत्रेऽपि वस्तयः ॥ शास्तिरिति ॥ राजदण्डे ॥ अगमिति ॥ विन्ध्याख्यमित्यर्थः ॥

## ( वौ तसेः ) तसु उपक्षये वितस्तिः । पत्तिः ॥

( सुबोधिनी )—वौ तसेः ॥ तसु उपक्षये अस्माद्विपूर्वात्तिः स्यात् ॥ वितस्तिः। 'अंगुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशांगुलः' इत्यमरः ॥ 'स्त्रीपुंसयोर्वितस्तिः स्यात्' इत्यमरमाला ॥ पद गतौ । पत्तिः ॥

## ( दृणातेर्ह्रस्वः ) दृतिः ॥

( सुबोधिनी )—दृणातेर्ह्रस्वः ॥ दॄ विदारणे अस्मात्तिः स्याद्धातोर्ह्रस्वत्वं च ॥ दृतिः। 'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी ॥

## ( कॄतॄकृपिभ्यः कीटः ) किरीटम् । तिरीटम् । कृपीटम् ॥

( सुबोधिनी )—कॄतॄकृपिभ्यः कीटः ॥ कीटप्रत्ययमाह–कित्त्वान्न गुणः । कॄ विक्षेपे । ऋत इरितीर् । किरीटम् । 'किरीटं मुकुटे न स्त्री' इति चन्द्रगोमी ॥ तॄ प्लवनतरणयोः । ऋत इरितीर् । तिरीटं सुवर्णं शिरोवेष्टनं च ॥ कृपू सामर्थ्ये । कृपीटम् । 'कृपीटमुदरे नीरे' इति विश्वः ॥

( तत्त्वदी० )–किरीटमिति शिरोवेष्टने ॥ तिरीटमिति ॥ सुवर्णे । कृपीटमिति वारिकुक्ष्योश्च ॥

## ( धातोरसुः ) चेतः । सरः । पयः ॥

( सुबोधिनी )—धातोरसुः ॥ असुप्रत्ययमाह–उदित्त्वादीप् । चिती संज्ञाने चित संचेतने चुरादिश्च । चेतः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः ॥ सृ गतौ । सरः । ईपि सरसी । 'सरसी तु महासरः' इति शब्दार्णवः ॥ 'महान्ति सरांसि सरस्यः' इति भाष्यम् ॥ पय गतौ पीङ् पाने च । पयः । 'पयः स्यात्क्षीरनीरयोः' इति मेदिनी ॥

## ( अशेर्युट् स्तुतौ ) अश्नुते इति यशः ॥

( सुबोधिनी )—अशेर्युट् स्तुतौ ॥ अशूङ् व्याप्तावस्मादसुः स्याद्धातोर्युडागमश्च॥ यशः कीर्तिः ॥

## ( उब्जेर्बले बलोपः ) ओजः ॥

( सुबोधिनी )—उब्जेर्बले बलोपः॥ उब्ज आर्जवे अस्मादसुः स्याद्बले वाच्ये बस्य लोपश्च ॥ ओजः । 'ओजो दीप्तावविष्टम्भे प्रकाशबलयोरपि' इति मेदिनी ॥

## ( श्रिञः शिरः किच्च ) शिरः ॥

( सुबोधिनी )—श्रियः शिरः किच्च ॥ श्रिञ् सेवायामस्मादसुः स्यात्स च कित् धातोः शिरादेशश्च ॥ शिरः । 'उत्तमांगं शिरः शीर्षम्' इत्यमरः ॥ कप्रत्यये तु शिर इत्यदन्तोऽपि । 'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम् ॥ 'पिण्डं दद्याद्गयाशिरे' इति वायुपुराणे ॥ "कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान्द्रौणिर्नालेभ्य इव पङ्कजान्" इति महाभारते ॥

( अर्तेरुरः ) उरः ॥

( सुबोधिनी ) अर्तेरुरः ॥ ऋ गतौ अस्मादसुः स्यात्स च किद्धातोरुरादेशश्च ॥ उरः । 'उरो वत्सं च वक्षश्च' इत्यमरः ॥

( व्याधौ शुट् ) अर्शः ॥

( सुबोधिनी )–व्याधौ शुट् ॥ ऋ गतावस्मादसुः स्यात्प्रत्ययस्य शुडागमश्च स्याद्व्याधौ वाच्ये ॥ अर्शो गुदव्याधिः ॥

( तत्त्वदी० )–अर्श इति गुदव्याधौ ॥

( उदके नुट् ) अर्णः ॥

( सुबोधिनी )–उदके नुट् ॥ अर्तेरसुः स्यात्तस्य नुट् च ॥ अर्णः जलम् ॥

( इण आगसि ) एनः ॥

( सुबोधिनी )–इण आगसि ॥ इण् गतावस्मात्पापे वाच्येऽसुः स्यात्प्रत्ययस्य नुडागमश्च ॥ एनः पापम् ॥

( स्रुरीभ्यां तुट् च ) स्रोतः । रेतः ॥

( सुबोधिनी )–स्रुरीभ्यां तुट् च ॥ आभ्यामसुः स्यात्प्रत्ययस्य तुडागमश्च ॥ स्रु गतौ । स्रोतः । 'स्रोतोऽम्बुवेगेन्द्रिययोः' इति विश्वः ॥ रीङ् श्रवणे । रेतः । 'रेतः शुक्रे पारदे च' इति मेदिनी ॥

( पातेरुदके थुट् ) पाथः ॥

( सुबोधिनी )–पातेरुदके थुट् ॥ पा रक्षणे अस्मादसुः प्रत्ययः स्यात्प्रत्ययस्य थुडागमश्च ॥ पाथः । 'कबन्धमुदकं पाथः' इत्यमरः ॥

( अदेर्भक्ते धो नुम् च ) अन्धः ॥

( सुबोधिनी )–अदेर्भक्ते धो नुम् च ॥ अद भक्षणे अस्मादसुः स्याद्धातोर्दस्य धो नुम् च । अन्धः । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः ॥

( आप उदके ह्रस्वो नुम्भौ ) अम्भः ॥

( सुबोधिनी )–आप उदके ह्रस्वो नुम्भौ ॥ आप्नोतेरसुः स्याद्धातोर्ह्रस्वत्वं नुमागमौ भश्चान्तादेश उदके वाच्ये ॥ अम्भः उदकम् ॥

( नहेर्दिवि भः ) नभः ॥

( सुबोधिनी )–नहेर्दिवि भः ॥ णह बन्धने अस्माद्गगने वाच्ये असुः स्याद्भश्चान्तादेशः ॥ नभः । "नभो व्योम्नि नभा मेघे श्रावणे च पद्मतन्तौ । घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृतः" इति विश्वः ॥ 'नभः खं श्रावणो नभाः' इत्यमरः ॥ 'नभं तु नभसा सार्द्धम्' इति द्विरूपकोशः ॥

## ( इण आग अपराधे ) आगः ॥

( सुबोधिनी )–इण आग अपराधे ॥ इण् गतावस्मादसुः स्यादपराधे वाच्ये धातोरागादेशश्च ॥ आगः । 'आगः पापापराधयोः' इति विश्वः ॥ 'आगोऽपराधो मन्तुश्च' इत्यमरः ॥

( तत्त्वदी० )–इण० ॥'आगः पापापराधयोः' ॥

## ( अमेर्हुक् ) अंहः ॥

( सुबोधिनी )–अमेर्हुक् ॥ अम गत्यादावस्मादसुः स्याद्धातोर्हुगागमश्च॥ अमन्ति गच्छन्त्यधस्तादनेनेत्यंहो दुरितम् ॥

## ( रमेश्च ) रंहः ॥ ( देशे ह च ) रमन्तेऽस्मिन् रहः ॥

( सुबोधिनी )–रमेश्च ॥ रमु क्रीडायामस्मादसुः स्याद्धातोर्हुगागमश्च ॥ रंहो वेगः । देशे ह च ॥ देशे वाच्ये रमेरसुः स्याद्धातोर्मस्य हश्च ॥ रहः । 'रहस्तत्त्वे रते गुह्ये' इति मेदिनी ॥

## ( रञ्ज्यादेः कित् ) रजः । भुवः ॥

( सुबोधिनी )–रञ्ज्यादेः असुः स्यात्स च कित् ॥ रञ्ज रागे । कित्त्वान्नो लोप इति नलोपः । रजः । 'रजः क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी ॥ कप्रत्यये अकारान्तोऽपि । 'रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोशः ॥ भू सत्तायाम् । भुधातोरित्युव् । भुवः अन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम् ॥

## ( वसेर्णित् ) वासः ॥

(सुबोधिनी )–वसेर्णित् ॥ वस निवासे अस्मादसुः स्यात्स च णित् ॥ णित्त्वाद्वृद्धिः । वासः वस्त्रम् ॥

## ( चन्देरादेश्चच्छः ) छन्दः ॥

( सुबोधिनी )–चन्देरादेश्चच्छः॥चदि आह्लादने अस्मादसुः स्याद्धातोश्चस्य च्छश्च छन्दः । 'छन्दः पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी ॥ अदन्तोऽप्ययम् । 'छन्दावभिप्रायवशौ' इति द्विरूपकोशः ॥

## ( वचादेः सुट् ) वक्षः । पक्षः ॥

( सुबोधिनी )–वचादेः सुट् ॥ वच परिभाषणे इत्यादिभ्योऽसुः स्यात्प्रत्ययस्य सुडागमश्च॥ चस्य कत्वे सस्य षत्वम् । वक्षो हृदयम् ॥ डुपचष् पाके । पक्षः । 'पक्षसी तु स्मृतौ पक्षौ' इति ॥

( तत्त्वदी० )–पक्ष इति ॥ 'पक्षसी तु स्मृतौ पक्षौ' ॥

**( नञि हन एह चासिः )** अनेहाः, अनेहसौ ॥

( सुबोधिनी )—नञि हन एह चासिः ॥ असिप्रत्ययमाह-नञ्युपपदे हन्तेरासिप्रत्ययः स्याद्धातोरेहादेशश्च ॥ इकार उच्चारणार्थः । हन हिंसागत्योः । उशनसामिति सेर्डा । अनेहाः कालः ॥

**( विधात्रो वेध च )** वेधाः ॥

( सुबोधिनी )—विधात्रो वेध च ॥ डुधाञ् धारणादौ विपूर्वादस्मादसिः स्यात्सोपसर्गस्य धातोर्वेधादेशश्च ॥ विदधातीति वेधाः अत्वसोः साविति दीर्घः । 'वेधाः पुंसि हृषीकेश बुधे च परमेष्ठिनि' इति मेदिनी ॥

**( चन्द्रे माङो डित् )** चन्द्रमाः ॥

( सुबोधिनी )—चन्द्रे माङो डित् ॥ चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् ॥ डित्वाट्टिलोपः । माङ् माने । चन्द्रं रजतममृतं च मिमीतेऽसौ चन्द्रमाः अत्वसोः साविति दीर्घः ॥

**( पुरसि धाञः )** पुरोधाः ॥

( सुबोधिनी )—पुरसि धाञः ॥ पुरस्शब्दे उपपदे धाञोऽसिप्रत्ययः स्यात् ॥ डुधाञ् धारणादौ । पुरोधाः 'पुरोधास्तु पुरोहितः' इत्यमरः ॥

**( उषः कित् )** उषः ॥

( सुबोधिनी )—उषः कित् ॥ उष दाहे अस्मादसिः स्यात्स च कित् ॥ कित्वान्न गुणः । उषः प्रभातम् ॥

**( दमेरुनसिः )** दमुनाः ॥

( सुबोधिनी )—दमेरुनसिः ॥ दमु उपशमे अस्माडुनसिः स्यात् ॥ दमुनाः । 'सप्तार्चिर्दमुनाः शुक्रः' इत्यमरः ॥

( तत्त्वदी० )—दमेरु० ॥ दमुना अग्निः ॥

**( वशेः कनसिः )** उशना ॥

( सुबोधिनी )—वशेः कनसिः ॥ वश कान्तावस्मात्कनसिः स्यात् ॥ कित्वाद्ग्रहामिति संप्रसारणम् । उशना । 'उशना भार्गवः कविः' इत्यमरः ॥

**( अङ्गिरादयः )** अगि अङ्गिराः ॥

( सुबोधिनी )—अङ्गिरादयः ॥ असिप्रत्ययान्ता निपात्यन्ते ॥ अगि गतौ असिप्रत्ययस्य इडागमो निपातनात् । अङ्गिराः ऋषिभेदः ॥

**( अप्पूर्वः सर्तिः )** अप्सराः ॥

- ( सुबोधिनी )–अप्पूर्वः सर्तिः ॥ सृगतावप्पूर्वः । अप्सराः । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सराः' इति शब्दार्णवः ॥ 'अप्सरस्त्वप्सराः प्रोक्ता सुमनाः सुमनःसु च' इति द्विरूपकोशः ॥

( तत्त्वदी० )–अप्सरा इति ॥ प्रायेण भूम्नि अप्सरसः ॥

**( पुरुपूर्वो रौतिः ) पूरूरवाः ॥ इत्युणादौ चतुर्थः पादः ॥**

( सुबोधिनी )–पुरुपूर्वो रौतिः ॥ रु शब्दे, पुरुपूर्वः । पुरुशब्दान्तस्य दीर्घो निपातनात् । पुरूरवाः । 'पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः' इत्यमरः ॥ ॥ इति सुबोधिन्यामुणादौ चतुर्थः पादः ॥ ४ ॥

**( अदि भुवो डुतः ) अद्भुतम् ॥**

( सुबोधिनी )–अदि भुवो डुतः ॥ अदित्यव्ययमाकस्मिकार्थे । तस्मिन्नुपपदे भूधातोर्डुतः प्रत्ययः स्यात् ॥ डित्वाट्टिलोपः । अद्भुतम् आश्चर्यम् ॥

**( गुधेरूमः ) गोधूमः ॥**

( सुबोधिनी )–गुधेरूमः ॥ गुध परिवेष्टने अस्मादूमः स्यात् ॥ गुध्यते परिवेष्ट्यते प्राणिभिरिति गोधूमः । 'गोधूमो नागरङ्गे स्यादोषधीव्रीहिभेदयोः' इति मेदिनी ॥

**( मसेरूरः ) मसूरः ॥**

( सुबोधिनी )–मसेरूरः ॥ मसी परिणामे अस्मादूरः स्यात् ॥ मसूरः ॥

**( तृहेः क्नो हलोपः ) तृणम् ॥**

( सुबोधिनी )–तृहेः क्नो हलोपः ॥ तृह हिंसायामस्मात् क्नः स्याद्धातोर्हस्य लोपश्च ॥ कित्त्वाद्गुणाभावः । तृणम् ॥

**( दंसेष्टो न आ च ) दासः ॥**

( सुबोधिनी )–दंसेष्टो न आ च ॥ दसि दंशनदर्शनयोरस्माट्टप्रत्ययः नस्यात्वं च॥ दासः । 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्वः ॥ टित्त्वादीप् दासी ॥

( तत्त्वदी० )–दास इति ॥ सेवकशूद्रयोर्दासः ॥

**( दंशेश्च ) दाशः ॥**

( सुबोधिनी )–दंशेश्च ॥ अस्मादपि टः स्यान्नस्यात्वं च ॥ दाशः । 'कैवर्ते दाशधीवरौ' इत्यमरः ॥

( तत्त्वदी० )–दंशेश्च ॥ दाशो धीवरः ॥

**( सौ रमेः क्तः सोर्दीर्घः ) सूरतः ॥**

( सुबोधिनी )—सौ रमेः क्तः सोर्दीर्घः ॥ रमु क्रीडायाम् सुपूर्वादस्मात् क्तः स्यात् पूर्वपदस्य दीर्घश्च ॥ कित्त्वाल्लोपस्त्वनुदात्ततनामिति मलोपः । सूरतः उपशान्तो दयालुश्च ॥

( तत्त्वदी० )—सूरत इति ॥ उपशान्तदयावतोः ॥

**( पूञो यो णुक् ह्रस्वश्च ) पुण्यम् ॥**

( सुबोधिनी )—पूञो यो णुक् ह्रस्वश्च ॥ पूञ् पवने अस्माद्यः प्रत्ययः स्याद्धातोर्णुक् ह्रस्वश्च ॥ पुण्यम् । 'पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः ॥

**( स्रंसतेः शिर्यस्य कित्त्वं कुट् च ) शिक्यम् ॥**

( सुबोधिनी )—स्रंसतेः शिर्यस्य कित्त्वं कुट् च ॥ स्रंसु अधःपतने अस्माद् यः स्यात्स च कित्प्रत्ययस्य कुडागमश्च धातोः शिरादेशश्च ॥ शिक्यम् ॥

**( अर्त्तेः क्युरुर् च ) उरणः ॥**

( सुबोधिनी )—अर्त्तेः क्युरुर् च ॥ ऋ गतावस्मात् क्युः प्रत्ययः स्याद्धातोरुरादेशश्च ॥ कित्त्वान्न गुणः । युवोरित्यनादेशः । उरणः । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः ॥

( तत्त्वदी० )—उरण इति मेषे ॥

**( उदि दृणातेर उदो दलोपश्च ) उदरम् ॥**

( सुबोधिनी )—उदि दृणातेर उदो दलोपश्च ॥ दृ विदारणे अस्मादुदपूर्वादः स्यादुदो दस्य लोपश्च ॥ उदरम् ॥

**( खनेर्मुट् डप्रत्ययः ) मुखम् ॥**

( सुबोधिनी )—खनेर्मुट् डप्रत्ययः ॥ खनु अवदारणे अस्मात् डः प्रत्ययः स्याद्धातोर्मुडागमश्च ॥ डित्त्वाट्टिलोपः । मुखम् । "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि । संध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्" इति मेदिनी ॥ 'मुखं ह्युपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः' इति हैमः ॥

**( अमेः सः ) अंसः ॥**

( सुबोधिनी )—अमेः सः ॥ अम गतावस्मात्सप्रत्ययः स्यात् ॥ अंसः । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः ॥ 'अंसः स्कन्धे विभागे च' इति विश्वः ॥

**( मुहेः खो मूर्च ) मूर्खः ॥**

( सुबोधिनी )—मुहेः खो मूर्च ॥ मुह वैचित्त्ये अस्मात्खप्रत्ययः स्याद्धातोर्मूरादेशश्च ॥ मुह्यतीति मूर्खः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः ॥

**( नहेर्हलोपश्च ) नखः ॥**

( सुबोधिनी )–नहेर्हलोपश्च ॥ णह बन्धने अस्मात्खप्रत्ययः स्याद्धकारस्य लोपश्च ॥ नखः । 'नखः कररुहे षण्ढे गन्धद्रव्ये नखं नखी' इति विश्वः ॥ 'नखी स्त्री-क्लीबयोः शुक्तौ नखरे पुंनपुंसकम्' इति मेदिनी ॥

**( शीङो ह्रस्वश्च ) शिखा ॥**

( सुबोधिनी )–शीङो ह्रस्वश्च ॥ शीङ् स्वप्ने अस्मात्खः स्याद्धातोर्ह्रस्वश्च ॥ ह्रस्व-विधानसामर्थ्याद्गुणाभावश्च । शिखा । "शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च" इति मेदिनी ॥

**( माङ ऊखो मय् च ) मयूखः ॥**

( सुबोधिनी )–माङ ऊखो मय् च ॥ माङ् माने अस्मादूखप्रत्ययः स्याद्धातो-र्मयादेशश्च ॥ मयूखः । 'मयूखस्त्विट्करज्वालासु' इत्यमरः ॥

**( गलेः फो गस्योच्च ) गुल्फः ॥**

( सुबोधिनी )–गलेः फो गस्योच्च ॥ गल अदने अस्मात्फप्रत्ययः स्याद्धातोर-कारस्योत्वं च ॥ गुल्फः । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः ॥ तयोः पादयोर्ग्रन्थी इत्यर्थः ॥

( तत्त्वदी० )–गुल्फ इति ॥ शरीरावयवरोगयोः ॥

**( स्पृशेः श्वण्शुनौ पृ च ) पर्शुः । पार्श्वः ॥**

( सुबोधिनी )–स्पृशेः श्वण्शुनौ पृ च ॥ स्पृश स्पर्शने अस्मात् शुन्श्वणौ प्रत्ययौ स्तः धातोः पृ इत्यादेशश्च ॥ पर्शुः । णित्त्वाद्वृद्धिः । पार्श्वः । 'पार्श्वोऽस्त्री कक्षयोरधः' इति ॥ 'पार्श्वमन्तिके । कक्षावोऽवयवे चक्रोपान्ते पर्शुगणेऽपि च' इति हैमः ॥

( तत्त्वदी० )–स्पृशेरिति ॥ 'पार्श्वोऽस्त्री कक्षयोरधः' ॥

**( श्मनि श्रिञो डुन् ) श्मन्शब्दो मुखवाची श्मानं मुखमाश्र-यते श्मश्रु ॥**

( सुबोधिनी )–श्मनि श्रिञो डुन् ॥ श्रिञ् सेवायामस्मात् श्मन्युपदे डुन् स्यात् ॥ डित्त्वाट्टिलोपः । श्मन्शब्दो मखवाची श्मानं मुखमाश्रयते इति श्मश्रु । नो लोप इति नलोपः । 'तद्वृद्धौ श्मश्रु पुम्मुखे' इत्यमरः ॥ पुरुषमुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तते इत्यर्थः ॥

**( जनेरो जङ्घ च ) जङ्घा ॥**

( सुबोधिनी )–जनेरो जङ्घ च ॥ जनी प्रादुर्भावे अस्मादप्रत्ययः स्याद्धातोर्ज-ङ्घादेशश्च ॥ आप् जङ्घा ॥

**( हन्तेः शरीरावयवे द्वे च ) जघनम ॥**

( सुबोधिनी )–हन्तेः शरीरावयवे द्वे च ॥ हन हिंसागत्योरस्मादः स्याद्धातोर्द्वित्वं च ॥ पूर्वाद्धन्तेरिति हस्य घः । जघनम् । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः ॥

( तत्त्वदी० )–**जघन**मिति ॥ 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' ॥

## ( क्लिशेर्लस्य लोपश्च ) केशः ॥

( सुबोधिनी )–क्लिशेर्लस्य लोपश्च ॥ क्लिशू विबाधने अस्मादः स्याद्धातोर्लकारस्य लोपश्च ॥ केशः । 'केशः स्यात्पुंसि वरुणे ह्रीबेरे कुन्तलेऽपि च' इति मेदिनी ॥

## ( फलेरितः फस्य पः ) पलितम् ॥

( सुबोधिनी )–फलेरितः फस्य पः ॥ फल निष्पत्तावस्मादितप्रत्ययः स्यद्धातोरादेर्वर्णस्य पत्वं च ॥ पलितम् । 'पलितं जरसा शौक्ल्यम्' इत्यमरः ॥ 'पलितं शैलजे तापे केशपाशे च कर्दमे' इति मेदिनी ॥

## ( कृञादेर्वुः ) करकः । कटकः । कुर गतौ कोरकः । नरकः ॥

( सुबोधिनी )–कृञादेर्वुः ॥ वुप्रत्ययमाह-युवोरित्यकादेशः । डुकृञ् करणे । करकः कमण्डलुः । करको वृष्टिपाषाणः ॥ कटे वर्षावरणयोः । कटको वलयः ॥ नॄ नये । नरकः । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः ॥ 'नरकः पुंसि निरये देवारातिप्रभेदयोः' इति मेदिनी ॥

( तत्त्वदी० )–**कृञा०** ॥ **कोरक** इति ॥ 'कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः' इति मेदिनी ॥ 'कोरकः पुमान्' इत्यमरस्य प्रायेण पुमानिति व्याख्यानान्न दोषः ॥ **नरक** इति ॥ नारकोऽपि च ॥

## ( चीकयतेराद्यन्तविपर्ययः ) चीक आमर्षणे कीचकः ॥

( सुबोधिनी )–चीकयतेराद्यन्तविपर्ययः ॥ चीक आमर्षणे चुरादिरस्याद्यन्तविपर्ययः वुश्च । णेरिति णिलोपः । कीचकः । 'कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे' इति हैमः ॥

( तत्त्वदी० )–**कीचक** इति ॥ वायुना शब्दकारी सच्छिद्रो वंशः ॥

## ( पचिमच्योरितः ) पेचकः । मच कल्कने मेचकः ।

( सुबोधिनी )–पचिमच्योरितः ॥ एतयोरुपधाया अत इः स्याद्वुप्रत्ययश्च ॥ गुणः। डुपचष् पाके । पेचकः । 'उलूके करिणः पुच्छमूलोपान्ते च पेचकः' इत्यमरः ॥ 'पेचको गजलाङ्गूले मूलोपान्ते च कौशिके' इति मेदिनी ॥ मच कल्कने । मेचकः । "मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान् । तद्युक्ते वाच्यवत्क्लीबं स्रोतोऽञ्जनान्धकारयोः" इति मेदिनी ॥

( जनेररष्ठ च ) जठरम् ॥

( सुबोधिनी )–जनेररष्ठ च ॥ जन जनने जनी प्रादुर्भावे च आभ्यामरप्रत्ययः स्याद्धातोर्नस्य ठश्च ॥ जठरः । 'जठरः कठिनेऽपि स्यात्' इत्यमरः ॥

( हर्यतेः कन्यो हिर् च ) हिरण्यम् ॥

( सुबोधिनी )–हर्यतेः कन्यो हिर् च ॥ हर्य गतिकान्त्योरस्मात् कन्यप्रत्ययः स्याद्धातोर्हिरादेशश्च ॥ कित्वान्न गुणः । हिरण्यं सुवर्णम् ॥

( कृञः पासः ) कर्पासः ॥

( सुबोधिनी )–कृञः पासः ॥ डुकृञ् करणे अस्मात्पासप्रत्ययः स्यात् ॥ कर्पासः । अणि प्रत्यये कार्पासं वस्त्रम् ॥

( ऊर्णोतेर्डः ) ऊर्णा ॥

( सुबोधिनी )–ऊर्णोतेर्डः ॥ ऊर्णुञ् आच्छादने अस्माड्डप्रत्ययः स्यात् ॥ डित्वाट्टिलोपः । ऊर्णा । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ' इत्यमरः ॥ भ्रुवोर्मध्ये य आवर्त्तस्तत्रेत्यर्थः । अन्तरायोगे भ्रुवाविति द्वितीया ॥

( दधातेर्यो नुट् च ) धान्यम् ॥

( सुबोधिनी )–दधातेर्यो नुट् च ॥ डुधाञ् धारणपोषणयोरस्माद्यप्रत्ययः स्यात्प्रत्ययस्य नुडागमश्च ॥ धान्यम् । 'धान्यं व्रीहिषु धान्याके' इति मेदिनी ॥

( तनोतेर्डउः सवच्च ) तितउः ॥

( सुबोधिनी )–तनोतेर्डउः सवच्च ॥ तनु विस्तारे अस्मात् डउः प्रत्ययः स्यात्स डउप्रत्ययः सप्रत्ययतुल्यो भवति ॥ तेन द्वित्वादि । डित्वाट्टिलोपः । यः से इति पूर्वस्ये त्वम् । पृथगुच्चारणसामर्थ्याद्गुणो न । तितउः । 'तितउः पुंसि क्लीबे च' 'चालनी तितउः पुमान्' इत्यमरः ॥

( तत्त्वदी० )–तितउरिति ॥ चालन्याम् । भाष्ये क्लीबनिर्देशात् क्लीबता । 'चालनी तितउः पुमान्' इत्यमरोक्तेः पुंस्त्वमपि ॥

( अर्भकादयः ) ऋधु अर्भकः ॥

( सुबोधिनी )–अर्भकादयः ॥ अर्भकादयो निपात्यन्ते ॥ ऋधु वृद्धावस्मात्कप्रत्ययो धातोर्धकारस्य भश्च निपात्यते ॥ अर्भकः । 'अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च' इति मेदिनी ॥

( प्रथेरुक् संप्रसारणं च ) प्रथ पृथुकः ॥

( सुबोधिनी )–प्रथेरुकू संप्रसारणं च ॥ प्रथ प्रख्याने अस्मादुकूप्रत्ययः स्यात्संप्रसारणं च निपात्यते ॥ पृथुकः । 'पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्' इति मेदिनी ॥

**( पिबतेः कः ) पाकः ॥**

( सुबोधिनी )–पिबतेः कः ॥ पा पाने अस्मात्कप्रत्ययो निपातनात् ॥ पाकः । "पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी॥

**( वदेर्नञि यः ) अवद्यम् । ( अवतेरमो धो वा ) अवः । अवमः–अधमः ॥**

( सुबोधिनी )–वदेर्नञि यः ॥ वद व्यक्तायां वाचि नञ्युपपदादस्माद्यप्रत्ययो निपात्यते ॥ अवद्यं पापम् । 'कूपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः ॥ अवतेरमो धो वा ॥ अव रक्षणादावस्मादमप्रत्ययो निपात्यते धातोर्वकारस्य वा धकारश्च ॥ अवमः–अधमः । 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः' इत्यमरः ॥

**( क्लिशेर ईच्चोपधाया लोपश्च लो नाम् च ) कीनाशः ॥**

( सुबोधिनी )–क्लिशेरः ॥ क्लिशू विबाधने अस्मादप्रत्ययो निपात्यते उपधाया ईत्वं लस्य लोपो नामागमश्च ॥ कीनाशः । कीनाशः कर्षकक्षुद्रपांसुघातिषु वाच्यवत् । यमे ना' इति विश्वः ॥

**( चतेरुरः ) चत्वारः ॥**

( सुबोधिनी )–चतेरुरः ॥ चते याचने अस्मादुरप्रत्ययः स्यात् ॥ चतुराम् शौचेत्याम् । चत्वारः ॥

**( हन्तेर्घुर च ) घोरम् ॥**

( सुबोधिनी )–हन्तेर्घुर च ॥ हन हिंसागत्योरस्मादप्रत्ययः स्याद्धातोर्घुरादेशश्च ॥ गुणः । घोरम् । 'घोरं भीमे हरे' इति विश्वः ॥

**( क्षमेरलोपश्च ) क्ष्मा ॥**

( सुबोधिनी )–क्षमेरलोपश्च ॥ क्षमूष् सहने अस्मादप्रत्ययः स्याद्धातोरुपधाया लोपश्च ॥ क्ष्मा । 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः ॥

**( तरतेर्ड्रिः ) त्रयः । त्रीन् ॥**

( सुबोधिनी )–तरतेर्ड्रिः ॥ तॄ प्लवनतरणयोः अस्मात् ड्रिप्रत्ययः स्यात् ॥ डित्वाट्टिलोपः । ए ओ जसीत्येत्वम् । त्रयः ॥

**( ग्रहेरनिः ) ग्रहणिः ॥**

( सुबोधिनी )—ग्रहेरनिः ॥ ग्रह उपादाने अस्मादनिप्रत्ययः स्यात् ॥ ग्रहणिः । कृदिकारादितीप् । ग्रहणी । 'ग्रहणी रुक् प्रवाहिका' इत्यमरः ॥

**( प्रथेरमः ) प्रथमः ॥**

( सुबोधिनी )—प्रथेरमः ॥ प्रथ प्रख्यानेऽस्मादमप्रत्ययः स्यात् ॥ प्रथमः । 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इत्यमरः ॥ प्रथमचरमेति वैकल्पिकं सर्वादिकार्यमस्य ॥

**( चरेश्च ) चरमः ॥**

( सुबोधिनी )—चरेश्च ॥ चर गतिभक्षणयोरस्मादमप्रत्ययः स्यात् ॥ चरमः ॥

**( मङ्गेरलः ) मङ्गलम् ॥ सदोणादयः ॥ सर्वस्मिन्काले उणादयः उणादयोऽपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्याः ॥ ॥ इत्युणादौ पञ्चमः पादः ॥**

( सुबोधिनी )—मङ्गेरलः ॥ मगि गतावस्मादलप्रत्ययः स्यात् ॥ मङ्गलम् । "मङ्गलासितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थरक्षणेऽपि च" इति मेदिनी ॥ इति सुबोधिन्यामुणादौ पञ्चमः पादः ॥

( तत्त्वदी० )—उणादय इति ॥ तथा चोणादिषु प्रयोगं दृष्ट्वैवं प्रकृतिप्रत्ययानुबन्धककल्पनं कार्यमित्यर्थः ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । उणादिप्रक्रिया चेयं सम्पूर्तिमगमत्परा ॥

इति पूर्वकृदन्तप्रक्रिया समाप्ता ॥

---

# अथोत्तरकृदन्तप्रक्रिया ।

**तुम् तदर्थायां भविष्यति ॥ धातोर्भविष्यति काले तुम् प्रत्ययस्तदर्थायां क्रियायां गम्यमानायाम ॥ गुडं भोक्तुं व्रजति । व्याकरणं पठितुमीष्टे ॥**

( सुबोधिनी )—तुम् तदर्थायां भविष्यति ॥ क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोर्भावे तुम् प्रत्ययः स्यात् ॥ तच्छब्देन क्रिया, सा अर्थः प्रयोजनं यस्याः सा क्रियार्था तस्याम् । क्त्वाद्यन्तं चेत्यव्ययसंज्ञा । भुज पालनादौ । भोक्तुं व्रजति देवदत्तः । भविष्यद्रूपं यद्भोजनं तत्प्रयोजनकं देवदत्तकर्तृकं व्रजनमित्यर्थः ॥ पठ व्यक्तायां वाचि । कृत इतीट् । पठितुमीष्टे देवदत्तः । भविष्यद्रूपं यत्पठनं तत्प्रयोजनकं देवदत्तकर्तृकं कामनमित्यर्थः ॥

( तत्त्वदी० )–तुम तदर्थाया मिति ॥: क्रियायामिति विशेष्यपदमत्रानुवृत्तम् । तस्यै क्रियायै इयं तदर्था तस्याम् । यद्वा सा क्रिया अर्थः प्रयोजनं यस्याः सा तस्याम् । तुमुन् भावे इति पण्डिताः ॥

**( तुमर्थे वुण् ) कृष्णं दर्शको व्रजति ॥**

( सुबोधिनी )–तुमर्थे वुण् ॥ क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोः कर्त्तरि वुण् प्रत्ययः स्यात् ॥ युवोरित्यकादेशः । दृशिर् प्रेक्षणे । कृष्णं दर्शको याति[१] । कृष्णकर्मकं भविष्यद्दर्शनप्रयोजनकं देवदत्तकर्तृकं यानमित्यर्थः ॥

**( कालसमयवेलासु ) अध्येतुं कालः । स्तोतुं समयः । भोक्तुं वेला ॥**

( सुबोधिनी )–कालसमयवेलासु ॥ कालादिषूपपदेषु तुम् स्यात् ॥ पर्य्यायोपादानमर्थोपलक्षणार्थम् । इङ् अध्ययने अध्येतुं कालः ॥ ष्टुञ् स्तुतौ । स्तोतुं समयः ॥ भुज पालनादौ । भोक्तुं वेला । एवमनेहसादियोगेऽपि अनुवादेऽथ तुम् न भवति । सिद्धस्वरूपोच्चारणमनुवादः । 'भूतानि कालः पचतीति वार्त्ता' इति ॥

( तत्त्वदी० )–कालेति॥प्रेरणग्रहणमत्रानुवर्तते तेन 'भूतानि कालः पचतीति वार्ता' इत्यत्र न॥

**( इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुम् ) भोक्तुमिच्छति वष्टि वाञ्छति वा ॥**

( सुबोधिनी )–इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुम् ॥ अक्रियार्थोपपदार्थमेतत् । भोक्तुमिच्छति वाञ्छति । वश कान्तावयमपीच्छार्थकः कान्तिरिच्छेत्युक्तत्वात् । भोक्तुमिच्छत्यत्र भोजनविषयिणीच्छा प्रतीयते न तु भोजनार्थेच्छेति । एककर्तृकेष्विति किम् । पुत्रस्य पठनमिच्छति । पुत्रस्येति कर्तरि षष्ठी । पुत्रकर्तृकं पठनमिच्छतीत्यर्थः॥

( तत्त्वदी० )–इच्छार्थेष्विति ॥ इच्छति भोक्तुमित्यादाविच्छाया भुजिं प्रति तादर्थ्याभावात् । प्रवृत्तिसामान्ये हेतुत्वस्यावधारितत्वेनाप्रतिपाद्यत्वात् । यद्वास्तु तादर्थ्यम् । एककर्तृकत्वादिलाभार्थमेतत् ॥

**( शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु ) शक्नोति भोक्तुम् । धृष्णोति जानातीत्यादि ॥**

( सुबोधिनी )–शकधृषज्ञाग्लाघटरभलभक्रमसहार्हाऽस्त्यर्थेषु ॥ एषूपदेषु धातोस्तुम् स्यात् ॥ अक्रियार्थोपपार्थमेतत् । शक्लृ शक्तौ । ञिधृषा प्रागल्भ्ये । ज्ञा अवबोधने । ग्लै हर्षक्षये । घट चेष्टायाम् । रभ राभस्ये । डुलभष् प्राप्तौ । क्रमु पादविक्षेपे । षह मर्षणे । अर्ह पूजायाम् । अस् भुवि । अर्थग्रहणमस्तिनैव संबध्यतेऽनन्तरत्वात् । भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र भुज्यर्थो विषयतया संबध्यते । ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यशक्तिर्गृह्यते । भोक्तुं घटते इत्यत्र भोक्तुमर्हतीति योग्यता गम्यते । आरभते भोक्तुमित्यत्र प्रक्रमते उत्सहते इति भुजेराद्यावस्था गम्यते।

---

१ यातीत्यपि पाठः सुबोधिनीकारसंमतः ॥

लभते भोक्तुमित्यत्र प्राप्तिर्गम्यते । उत्सहते भोक्तुमित्यत्र भुजेराद्यावस्था गम्यते । अर्हति भोक्तुमित्यत्रापि योग्यता अस्ति भवति विद्यते वा भोक्तुमित्यादौ संभवमात्रम् ॥

**( पूर्णतावाचिषु सामर्थ्यार्थेषु ) पर्याप्तो भोक्तुम् प्रवीणः कुशलः समर्थः । पूर्णतेति किम् । अलं भुक्त्वा ॥ सामर्थ्यार्थेषु किम् । पर्याप्तं भुङ्क्ते ॥**

( सुबोधिनी )–पूर्णतावाचिषु सामर्थ्यार्थेषु ॥ पर्याप्तिवाचिषु सामर्थ्यवचनेषूपपदेषु धातोस्तुम् स्यात् ॥ पर्याप्तो भोक्तुं समर्थः कुशलः पटुः प्रवीण इत्यर्थः । पूर्णतावाचिष्विति किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् ॥

**घञ् भावे ॥ पाकः । त्यागः । भावः । दायः ॥**

( सुबोधिनी )–घञ्भावे ॥ सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् ॥ क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकाक्रान्तत्वं सिद्धत्वम् । पिबतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थः । भाव इति ॥ भावे इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायामुपपदे भवन्तीत्यर्थः ॥ ञित्त्वाद्वृद्धिः । घित्त्वाच्चजोः कुघौ घितीति कः । पच्यते पचनं वा पाकः ॥ त्यज हानौ । त्यज्यते त्यजनं वा त्यागः ॥ भू सत्तायाम् । भूयते भवनं वा भावः ॥ डुदाञ् दाने । दीयते दानं वा आतो युगिति युक् दायः ॥

( तत्त्वदी० )–**घञ्** इति ॥ **भाव** इति ॥ भवनं भावः क्रियासामान्यं न तु भवत्यर्थमात्रम् । सिद्धतारूप एव भावे घञ् । उक्तं च–"क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता । सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम्" इति ॥ **पाक** इति ॥ ञित्त्वादुपधावृद्धिः । घित्त्वात्कुत्वम् ॥

**संज्ञायामकर्तरि च ॥ कर्तृवर्जिते कारके भावे च घञ् संज्ञायामसंज्ञायां च ॥ कार्यं प्रत्याह्रियते यः सः प्रत्याहारः । दीयतेऽस्मै दायः । विक्रियतेऽनेनेति विकारः । उपाध्यायः । उपाध्याया । उपाध्यायी । ( घञर्थे कः ) घञोऽपवादः ॥ विशेषेण हन्यते कार्यमनेनेति विघ्नः । सुघ्नः ॥**

( सुबोधिनी )–संज्ञायामकर्तरि च ॥ कर्तृभिन्ने कारकेऽर्थे धातोर्घञ् स्यात्संज्ञायामसंज्ञायां च वाच्यमानायाम् ॥ हृञ् हरणे । प्रत्याह्रियते इति प्रत्याहारः ॥ डुदाञ् दाने । दीयते अस्मै इति आतो युगिति युक् । दायः ॥ डुकृञ् करणे । विक्रियतेऽनेनेति विकारः ॥ इङ् अध्ययने । उपेत्याधीयतेऽस्मादित्युपाध्यायः । स्वराद इत्यस्यापवादोऽयं घञ् ॥

( तत्त्वदी० )—भाव इति ॥ बाहुलकादनुपसर्गाद्भुवोऽपि घञ् ॥ उपाध्यायेति ॥ ननु घञन्तस्य पुंस्त्वनियमात्कथंस्त्रीत्वमिति चेत्सत्यम् । अपादाने स्त्रियामप्यभिधानात् । उपाध्यायी ॥

**स्वराद: ॥** भावादौ घञोऽपवादः ॥ चयनं चयः । नयनं नयः ॥ षिञ् बन्धने विशेषेण सीयन्ते बध्यन्ते जना अनेनेति विषयः । स्तूयतेऽनेनेति स्तवः । सवनं सवः । लवनं लवः । कृञ् क्रियते कार्यमनेनेति करः । गिरत्यनेनेति गरः—गलः । द्व्याद्युपसर्गहीनस्य छादेर्ह्रस्वोऽप्रत्यये । परिच्छदः छत्रम् । दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छदः ओष्ठः । द्व्यादीति किम् । अन्ववप्रच्छादः । समवपरिच्छादः ॥

( सुबोधिनी )—स्वरादः ॥ स्वरान्ताद्धातोरप्रत्ययः स्याद्भावादौ ॥ घञोऽपवादः चिञ् चयने । चयः ॥ णीञ् प्रापणे । नयः ॥ षिञ् बन्धने विपूर्वः । विषयः ॥ ष्टुञ् स्तुतौ । स्तवः । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः ॥ लूञ् छेदने । लवः । 'लवलेशकणाणवः' इत्यमरः ॥ कॄ विक्षेपे । करः ॥ गॄ निगरणे । गरः—गलः ॥

**मदाम: ॥** मदादीनामप्रत्ययो भावादौ ॥ मदः । पणः । प्रमदः । संमदः शमः । श्रमः ॥

( सुबोधिनी )—मदामः ॥ मदादिभ्योऽप्रत्ययः स्याद्भावादौ ॥ मदी हर्षे । मदः । प्रमदः । संमदः ॥ पण व्यवहारे स्तुतौ च । पणः ॥ शमु उपशमे । शमः ॥ श्रमु तपसि खेदे च । श्रमः ॥

( तत्त्वदी० )—मदामिति ॥ मद इति ॥ मद्यतेनेति करणादावपि । कथं 'प्रमादोऽनवधानता' इति । बाहुलकाद्घञपि । यद्वा मद एव माद इति स्वार्थिकणान्तस्य प्रशब्देन पश्चात्समासः ॥ श्रम इति ॥ अथ कथं विश्राम इति । अपाणिनीयमिति तु दीक्षितः । 'विश्रामं लभतामिदं च शिथिलं ज्याबद्धमस्मद्धनुः' इत्यादौ तु विश्रान्तिपदप्रक्षेपेणाप्युपपत्तिः । विश्रामभूरिति त्वन्याय्यमेवेति वामनादयः । वस्तुतस्त्वत्रापि प्रमादशब्दवत्समाधानम् ॥

**मूर्तौ घन: ॥** काठिन्ये परिच्छेदे च हन्तेरप्रत्ययो घनादेशश्च ॥ दधिघनः । सैन्धवघनः ॥

( सुबोधिनी )—मूर्तौ घनः ॥ मूर्तिः काठिन्यं परिच्छेदश्च तस्मिन्नभिधेये हन्तेरः स्याद्धातोर्घनादेशश्च ॥ कठिनं दधि इति दधिघनः । परिच्छेदे सैन्धवघनः ॥

( तत्त्वदी० )—मूर्तौ घन इति ॥ मूर्तिः काठिन्यम् ॥

**( हनो वधोऽप्रत्ययश्च )** हननमिति वधः ॥

( सुबोधिनी )—हनो वधोऽप्रत्ययश्च ॥ अनुपसर्गाद्धन्तेर्भावे अप्रत्ययः स्याद्धातोर्वधादेशश्च ॥ वधः । चकाराद्घञपि । हनो घदिति घदादेशः । घातः ॥

**ट्वितोऽथुः ॥** ट्वितो धातोरथुर्भवति भावादौ ॥ टुवेपृ कम्पने वेपनं वेपथुः । वमथुः । नन्दथुः । श्वयथुः ॥

( सुबोधिनी )—ट्वितोऽथुः ॥ अयमपि स्वभावाद्भावे एव ॥ टुवेपृ कम्पने । वेपथुः ॥ टुनदि समृद्धौ । नन्दथुः ॥ टुओश्विइर् गतिवृद्ध्योः । श्वयथुः ॥

( तत्त्वदी० )—ट्वितोऽथुरिति ॥ टुरियस्य स ट्वित् तस्मात् ॥

**ड्वितस्त्रिमक् तत्कृते ॥** ड्वितो धातोस्त्रिमक् प्रत्ययो धात्वर्थेन कृतेऽर्थे ॥ करणेन निर्वृतः कृत्रिमः घटः । पक्त्रिमः ॥

( सुबोधिनी )—ड्वितस्त्रिमक् तत्कृते ॥ धात्वर्थनिर्वृतेऽर्थे । अयं स्वभावाद्भावे । कित्वात्संप्रसारणादि । डुकृञ् करणे । करणेन निर्वृतः कृत्रिमः ॥ डुपचष् पाके । पाकेन निर्वृतः पक्त्रिमः ॥ डुवप् बीजसंताने । वापेन निर्वृतं यजामिति संप्रसारणम् । उप्त्रिमम् ॥

( तत्त्वदी० )—ड्वित इति ॥ डु इत्यस्य स ड्वित् तस्मात् ॥ तत्कृते इति ॥ तेन धात्वर्थेन कृतस्तत्कृतस्तस्मिन्नित्यर्थः । यद्यपि भावादावित्यनुवर्तते तथापि स्वभावाद्भाव एवैतद्द्वयम् । न हि कृते-न निर्वृतमित्येवं क्वापि विग्रहः ॥

**नङ्की ॥** धातोर्नङ्की प्रत्ययौ भावादौ ॥ यज इज्यन्ते देवा अनेनेति यज्ञः । याञ्चा । यती । यत्नः । प्रच्छविच्छोः शो नेऽसंप्रसारणं च । प्रश्नः । विश्नः । रक्ष पालने रक्ष्णः । स्वप्नः । अन्तः धीयते यः सः अन्तर्द्धिः । आधिः । विशेषेण जनेषु पीडा आधीयतेऽनेनेति व्याधिः । प्रकर्षेण दधाति रथमार्गमनेनेति प्रधिः । वारि धीयतेऽस्मिन्निति वारिधिः । पाथः धीयतेऽस्मिन्निति पाथोधिः ॥

( सुबोधिनी )—नङ्की ॥ ङकारककाराविती । एतौ भावेऽकर्तरि कारके च भवतः ॥ नङ्प्रत्ययमाह—क्ङिति चेति गुणो न । यज देवपूजादौ । श्चुत्वम् । यज्ञः । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः ॥ टुयाचृ याच्ञायाम् । याच्ञा ॥ यती प्रयत्ने । यत्नः ॥ क्ङिति झसे कौ ञमे चेत्यनेन प्रच्छविच्छोः शो ने । ग्रहामिति संप्रसारणं न भाष्यानुक्तत्वात् । प्रच्छ ज्ञीप्सायाम् । प्रश्नः ॥ विश प्रवेशने । विश्नः ॥ रक्ष पालने । रक्ष्णः ॥ ञिष्वप् शये । स्वप्नः ॥ किप्रत्ययमाह—डुधाञ् धारणादौ । आतोऽनपीत्यालोपः अन्तर्द्धिः ॥ प्रधिः ॥ पयांसि धीयन्तेऽस्मिन्निति पयोधिः । वारिधिः ॥

( तत्त्वदी० )—नङ्कीति ॥ नङ् च किश्च नङ्की ॥ यज्ञ इति ॥ यजनं यज्ञः । 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' इत्यत्र तु इज्यत इति यज्ञो विष्णुरिति कर्मणि ॥ याच्ञेति ॥ यद्यपि

नङन्ताः पुंस्येव तथाप्ययं स्त्रीलिङ्गः स्वभावात ॥ **प्रश्न** इति ॥ संज्ञापूर्वकत्वेनानित्यत्वान्न संप्रसारणम् ॥ **अन्तर्द्धिरिति** ॥ कित्वादातो लोप इत्यालोपः ॥ **आधिरिति** ॥ आधानमाधीयत इति वा ॥ **वारिधिरीति** ॥ वारीणि धीयन्तेऽस्मिन्निति वारिधिः ॥

**युट् भावे च ॥ ज्ञानम् । करणम् । कारणम् ॥**

( सुबोधिनी )—युट् भावे च ॥ धातोर्भावे युट् स्याच्चकारात् युण् च ॥ युवोरित्यनादेशः । टित्वादीप् । णित्त्वाद्वृद्धिः । ज्ञा अवबोधने । ज्ञानम् ॥ डुकृञ् करणे । युण् प्रत्ययः कारणम् ॥

**साधनाधारयोश्च ॥ पच्यतेनेनेति पचनोऽग्निः । पच्यतेऽस्यां पचनी स्थाली ॥**

( सुबोधिनी )—साधनाधारयोश्च ॥ साधनेऽधिकरणे चार्थे धातोर्युट् प्रत्ययः स्यात् ॥ डुपचष् पाके । पच्यतेऽनेनेति पचनः । अत्र करणे युट् । ष्ट्रित इतीप् । पच्यतेऽस्यामित्यधिकरणे युट् । पचनी ॥

**ईषद्दुःसुषु खल्यू ॥ ईषदादिषु प्रयुज्यमानेषु खल्यू एतौ स्तो भावादौ ॥ ईषद्भवः । दुर्भवः । सुकरः । दुःखेन युध्यते इति दुर्योधनः । दुःखेन शिष्यते इति दुःशासनः । कर्तृकर्मणोश्च्व्यर्थयोरीषदादिषु चोपपदेषु भूकृञोः खल् । अदुराढयेन दुराढयेन भूयते दुराढयम्भवं भवता । अस्वाढयः स्वाढयः क्रियते स्वाढयंकरः ॥**

( सुबोधिनी )—ईषद्दुःसुषु खल्यू ॥ एषूपपदेषु धातोः खल्यू प्रत्ययौ स्तः भावे कर्मणि च ॥ खल्प्रत्ययमाह—खित्त्वात् खिति पदस्येति मुम् । भू सत्तायाम् । ईषद्भवः ॥ दुर्भवः ॥ डुकृञ् करणे । सुकरः ॥ युप्रत्ययमाह—युध संप्रहारे । दुःखेन युध्यते इति दुर्योधनः ॥ दुःखेन शिष्यते इति शासु अनुशिष्टौ । दुःशासनः ॥ दुरिति कृच्छ्रार्थे वर्त्तते । इतरौ त्वकृच्छ्रार्थे वर्तेते । कर्तृकर्मणोश्च्व्यर्थयोरीषदादिषु चोपपदेषु भूकृञोः खल् । कर्तृकर्मवाचकौ शब्दौ धातोरव्यवधाने न प्राक् प्रयुज्येते । ईषदादयस्तु ताभ्यां प्राक् प्रयोज्याः । दुःखेनाढयेन भूयते इति दुराढयंभवं भवता । अक्तादाविति निषेधात्कर्तरि तृतीया ॥ सुखेनानाढयः क्रियते स्वाढयंकरः सः ॥

( तत्त्वदी० )—ईषद्दुःसुषु ॥ खल् च युश्च खल्यू । लकार इखखीत्यत्रोक्तात्खप्रत्ययाद्भेदज्ञापनार्थः । खकारो मुमागमार्थः ॥ **ईषद्भव** इति ॥ ईषद्भवनम् ॥

# अथ कृत्यप्रत्ययाः ।

**तव्यानीयौ ॥ भावकार्ययोः ॥ एधितव्यम । एधनीयम् । आसितव्यम् । आसनीयम् । पातव्यम् । पानीयम् ॥**

( सुबोधिनी )–तव्यानीयौ ॥ कृत्यसंज्ञकान्प्रत्ययानाह–तव्यानीयौ धातोरेतौ प्रत्ययौ स्तः भावकर्मणोः ॥ तव्यप्रत्ययमनीयप्रत्ययं चाह–एध वृद्धौ । कृत इतीट् । एधितव्यम् एधनीयं त्वया ॥ आस उपवेशने । आसितव्यम् । आसनीयम् ॥ भावे औत्सर्गिकमेकवचनं क्लीबत्वं च ॥

( तत्त्वदी० )–तव्यानीयाविति ॥ एधनीयमिति ॥ भावे एकवचनमेव औत्सर्गिकत्वात् । क्लीबत्वं च लिङ्गाविशेषात् । "कृत्याः पञ्च समाख्याताः क्यब्ध्यणौ भावकर्मणोः। तव्यानीयौ स्वराद्यश्च केलिमः कर्मकर्तरि ॥"

**( वसेस्तव्यः कर्तरि णिच्च ) वसतीति वास्तव्यः ॥**

( सुबोधिनी )–वसेस्तव्यः कर्तरि णिच्च ॥ वस निवासे इत्यस्यैव ग्रहणं न तु वस आच्छादने इत्यस्य लुग्विकरणत्वात् । वस निवासे अस्मात्कर्तरि तव्यः स्यात्स च णित् ॥ णित्त्वाद्वृद्धिः ॥

( तत्त्वदी० )–वसेरिति ॥ वस निवास इत्यस्यैव ग्रहणं न तु वस अच्छादन इत्यस्य॥ वास्तव्य इति ॥ णित्त्वाद्वृद्धिः । वस्तुनि भवो वास्तव्य इति ष्यप्रत्ययेणैव रूपसिद्धिमिच्छन्तः केचिदेतन्न मन्यन्ते॥

**केलिमः ॥ सौकर्ये धातोः केलिमः प्रत्ययो भवति ॥ पचेलिमा माषाः । भिदेलिमाः सरलाः ॥**

( सुबोधिनी )–केलिमः ॥ धातोः कर्मणि केलिमः प्रत्ययः स्यात् ॥ कित्त्वान्न गुणः ॥ डुपचष् पाके । पचेलिमा माषाः । पक्तव्या इत्यर्थः ॥ भिदिर् विदारणे । भिदेलिमाः सरलाः ॥

**स्वराद्यः ॥ स्वरान्ताद्धातोर्यः ॥ चेयम् । जेयम । तव्यादयोऽपि । चेतव्यः । चयनीयः । दित्स्यम् ॥**

( सुबोधिनी )–स्वराद्यः ॥ स्वरग्रहणं धातोर्विशेषणम् विशेषणेन तदन्तविधिः । चिञ् चयने । चेयम् ॥ जि जये । जेयम् ॥ तव्यादयोऽपि भवन्ति । चेतव्यः ॥ चयनीयः ॥ डुदाञ् दाने अस्मादिच्छायामात्मनः स इति सः इस्से इति इसादेशः द्वित्वलोपश्च । सस्तोऽनपीति सस्य तः । दित्सति । सान्ताद्यप्रत्यये यत इत्यलोपः । दित्स्यते इति दित्स्यम् ॥

( तत्त्वदी० )–स्वराद्य इति ॥ 'यद्भाव्यं तद्भविष्यति' इत्यत्र तु ओरावश्यक इति घ्यण् । अत्र स्वरग्रहणं चिन्त्यं धातोर्द्विविधत्वेनैव हसान्ताद्घ्यणो विधानेन पारिशेषात्स्वरान्तलाभात् । यदि तु यत

इत्यत्रानपीति विषयसप्तमी तदा भूतपूर्वस्वरान्तादपि यदित्येतदर्थं स्वरग्रहणम् । तेन दित्स्यमित्यादौ एव । वस्तुतस्तत्र स्वरग्रहणे प्रयोजनाभावाद्ब्यप्यपि न क्षतिरिति ध्येयम् ॥

**ई चातः ॥ आदन्ताद्धातोर्यं आकारस्य च ईकारः ॥ देयम् । ग्लेयम् । गेयम् ॥**

( सुबोधिनी )–ई चातः ॥ डुदाञ् दाने । देयम् ॥ गै शब्दे । गेयम् ॥ ग्लै हर्षक्षये । ग्लेयम् ॥

( तत्त्वदी० )–ई चात् इति ॥ इ इति ह्रस्व एव सुपठः । यत्तु वासुदेवेनोक्तं दीर्घेकारविधानं चकारात्खनेर्ये नस्येत्ये खेयमिति रूपसिद्धये अन्यथा पक्षे आत्वं स्यादिति तद्भाष्यविरोधादुपेक्ष्यम् ॥

**पशकात् ॥ पवर्गान्ताच्छकादेश्च यप्रत्ययः ॥ शप्यम् । यम्यम् । जप्यम् । शक्यम । सह्यम् ॥**

( सुबोधिनी )–पुशकात् ॥ अत्र घ्यण्न भवति तव्यादयस्तु स्युरेव ॥ शप उपालम्भे शप्यम् ॥ यमु उपरमे । यम्यम् ॥ जप व्यक्तायां वाचि । जप्यम् ॥ शकादेस्तु । शक्लृ शक्तौ । शक्यम् ॥ षह मर्षणे । सह्यम् ॥

( तत्त्वदी० )–पुशकादिति ॥ पुश्च शकश्च पुशकं तस्मात् ॥

**ऋहसान्ताद् घ्यण् ॥ ऋवर्णान्ताद्धसान्ताद्धातोर्घ्यण् भावकार्ययोः ॥ कार्यम् । हार्यम् । वाह्यम् । घात्यम् । वाक्यम् । पाक्यम् । रोग्यम ॥**

( सुबोधिनी )–ऋहसान्ताद् घ्यण् ॥ ऋ इति धातोर्न ग्रहणं किं तु ऋवर्णस्य हससाहचर्यात् । घित्वाच्चजोः कगाविति कगौ । णित्वाद्वृद्धिः । डुकृञ् करणे । कार्यम् ॥ हृञ् हरणे । हार्यम् ॥ वह प्रापणे । वाह्यम् ॥ हन हिंसागत्योः । हनो घदिति घत् । घात्यम् ॥ डुपचष् पाके । पाक्यम् ॥ रुज रोगे । रोग्यम् ॥ वच परिभाषणे । वाक्यम् ॥

( तत्त्वदी० )–ऋहसान्तादिति ॥ आ च हसश्च ऋहसं तस्मात् ॥ घो वित्कार्यार्थः । णो वृद्ध्यर्थः ।

**( घ्यणि क्वचित्कुत्वाभावः ) याज्यम् । याच्यम् । प्रवाच्यम् । रोच्यम् । अर्च्यम् ॥**

( सुबोधिनी )–घ्यणि क्वचित्कुत्वाभावः ॥ यज याच् प्रवच् रुच् ऋच् एषां कुत्वं न घ्यणि ॥ यज देवपूजादौ । याज्यम् ॥ टुयाचृ याच्ञायाम् । याच्यम् ॥ वच परिभाषणे प्रपूर्वः । प्रवाच्यं ग्रन्थविशेषः ॥ रुच दीप्तौ । रोच्यम् ॥ ऋच स्तुतौ । अर्च्यम् । अत एव ऋदुपधादिति क्यप्तु न भवति ॥

**ओरावश्यके ॥ उवर्णान्तादावश्यकेऽर्थे घ्यण् ॥**

( सुबोधिनी )–ओरावश्यके ॥ अवश्यमेवेत्यावश्यकं तस्मिन् ॥

( तत्त्वदी० )—ओरावश्यक इति ॥ अवश्यंभाव आवश्यकम् । अवश्यमाट्टिलोपस्तद्धिते अव्ययत्वात् ॥

**ओदौतोर्यः स्वरवत् ॥** ओकारौकारयोर्निमित्तं यः प्रत्ययः स्वरवत् ॥ "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः"॥ अवश्यं लाव्योऽवश्यलाव्यः । भोक्तुकामः । श्रोतुमनाः । सहितम्—संहितम् । सततम्-संततम् । मांसस्य पचनम् मांस्पचनम्-मांसपचनम् । मांसस्य पाकः मांस्पाकः-मांसपाकः ॥

( सुबोधिनी )—ओदौतोर्यः स्वरवत् ॥ यं प्रत्ययं निमित्तत्त्वेनाश्रित्य गुणेन यत्र ओकारो भवति वृद्ध्या च यत्र औकारो भवति स च प्रत्ययः स्वरवद्भवतीत्यर्थः ॥ "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि। समो वा हिततयोर्मांसस्य पचि युड्घञोः" अवश्यमो निपातस्यान्त्यं लुंपेत् लोपं कुर्यात् कृत्ये कृत्यसंज्ञके प्रत्यये परे । यथा अवश्यलाव्यः ॥ तुम्प्रत्ययस्यान्त्यं लुम्पेत् काममनसोः शब्दयोः परयोः । यथा भोक्तुकामः । श्रोतुमनाः ॥ समुपसर्गस्यान्त्यं वा लुम्पेत् हिततयोः शब्दयोः परयोः । यथा सहितं-संहितम् । सततं-संततम् ॥मांसशब्दस्यान्त्यं वा लुम्पेत् पचिप्रकृतिकयुड्घञ् प्रत्यययोः परयोः । यथा मांस्पचनं मांसपचनम् । मांस्पाकः । मांसपाकः ॥

( तत्त्वदी० )—ओदौतोरिति ॥ द्योतितार्थस्यापि क्वचित्प्रयोगो दृश्यते लाववं प्रत्यनादरादित्यत आह—अवश्यलाव्यम् ॥

**( हनो वधादेशो ये )** वध्यम् ॥

( सुबोधिनी )—हनो वधादेशो ये ॥ हन हिंसागत्योरस्मात् यप्रत्ययः स्याद्धातोर्वधादेशश्च । वध्यः । पक्षे घ्यणपि । हनो घदिति घत् । घात्यः ॥

**ऋदुपधात्क्यप् ॥** ऋकारोपधाद्धातोः क्यप ॥ कृती कृत्यम् । वृत्यम् ॥

( सुबोधिनी )—ऋदुपधात्क्यप् ॥ कित्त्वाद्गुणो न । पित्त्वाद्ध्रस्वस्य पितीति तुक् । कृती छेदने । कृत्यम् ॥ वृतु वर्तने वृत्यम् ॥ वृधु वृद्धौ । वृध्यम् ॥ तपरकरणं किम् । कृत संशब्दने । घ्यण् । कीर्त्यम् ॥

( तत्त्वदी० )—ऋदुपधादिति ॥ तपरत्वाद्दीर्घोपधान्न । तेन कृत इत्यस्य कीर्त्यम् ॥

**( कृपिचृत्योर्न )** कल्प्यम् । चृत दीप्तौ । चर्त्यम् ॥

( सुबोधिनी )—कृपिचृत्योर्न ॥ आभ्यां क्यप् न स्यात् ॥ घ्यण् । कृपू सामर्थ्ये । कल्प्यम् ॥ चृती हिंसायाम् । चर्त्यम् ॥

**( मृजो वा )** मृज्यम्-मार्ग्यम् ॥

( सुबोधिनी )-मृजो वा ॥ ऋदुपधादिति नित्यं प्राप्ते विकल्पार्थमारम्भः ॥ मृजूष् शुद्धौ । मृज्यम् । क्यबभावे ण्यण् । मृजेर्वृद्धिरिति वृद्धिः । चजोरिति गः । मार्ग्यम् ॥

**भुवो भावे** ॥ नाम्न्युपपदे भुवो भावे क्यप् ॥ ब्रह्मणो भावः ब्रह्मभूयम् । नाम्नि किम् । भव्यम् ॥

( सुबोधिनी )-भुवो भावे ॥ भू सत्तायाम् । ब्रह्मभूयम् ॥ नाम्न्युपपदे इति किम् । भव्यम् । स्वराद्य इति यः ॥

**( इण्स्तुभृदृवृशासुजुषूखनः क्यप् च )** इत्यः । स्तुत्यः । दृङ् आदरे दृत्यः । वृत्यः । शासेरिः शिष्यः । जुषी प्रीतिसेवनयोः जुष्यः ॥

( सुबोधिनी )-इण्स्तुभृदृशासुजुषूखनः क्यप् च ॥ एभ्यो धातुभ्यः क्यप् स्यात् ॥ इण् गतौ । इत्यः ॥ ष्टुञ् स्तुतौ । स्तुत्यः ॥ वृ इति वृञ् वरणे इत्यस्य ग्रहणम् । वृङ्संभक्तावस्मात्तु ण्यणेव । वार्यः ॥ दृङ् आदरे । दृत्यः ॥ भृञ् भरणे । भृत्यः कर्मकरः । भर्तव्य इत्यर्थः । क्रियाशब्दोऽयं न तु संज्ञा ॥ शासु अनुशिष्टौ शासेरितीत्वम् घसादेरिति षः । शिष्यः ॥ जुषी प्रीतिसेवनयोः । जुष्यः ॥

( तत्त्वदी० )-इण्स्तु ॥ वृ इति वृञ् न तु वृङ् । तस्य वार्या ऋत्विज इति ण्यणेव ॥ शासु-अनुशिष्टौ । शासु इच्छायामपीति कश्चित् । स्वरभेदार्थमेवे[१] ॥

**( खन इत्वं क्यपि )** खेयम् ॥

( सुबोधिनी )-खन इत्वं क्यपि ॥ खनु अवदारणे इत्यस्य नस्येत्वं स्यात्क्यपि ॥ खेयम् ॥

**( भिद्योद्ध्यौ नदे )** भिनत्ति कूलमिति भिद्यः । उज्झति जलमित्युद्ध्यः ॥

( सुबोधिनी )-भिद्योद्ध्यौ नदे ॥ भिदिर् विदारणे उज्झ त्यागे आभ्यां क्यप् स्यात्कर्तरि, उज्झेर्धत्वं च निपात्यते नदे वाच्ये ॥ भिनत्ति कूलमिति भिद्यः ॥ उज्झत्युदकमिति उद्ध्यः ॥ नदे किम् । भेत्ता उज्झिता तृप्रत्ययः ॥

( तत्त्वदी० )-भिद्योद्ध्यौ ॥ धत्वं निपात्यम् । नदे इति किम् । भेत्ता । उज्झिता ॥

**( कृवृषोर्वा क्यप् )** कृत्यम्-कार्यम् । वृष्यम्-वर्ष्यम् ॥

---

१ इच्छार्थके यस्मान्क्लो विधीयते तस्यैवेत्वमत एवाऽऽशास्त इत्यादौ नेति व्याख्यानादित्वाभावेन शास्यमित्यत्र क्यब्ण्यतो ( ण्यणो ) विशेषाऽभावात्तित्स्वरितमिति स्वरभेदार्थमेवेत्येवकारस्वारस्यम् ।

( सुबोधिनी )—कृवृषोर्वा क्यप् ॥ कर्तरि ॥ डुकृञ् करणे वृषु सेचने आभ्यां वा क्यप् स्यात् ॥ करोतेः क्यपोऽप्राप्तौ वृषस्तु ऋदुपधादिति नित्ये प्राप्ते विकल्पः । ह्रस्वस्य पितीति तुक् । कृत्यम् । वृष्यम् । क्यवभावपक्षे ण्यत् । कार्यम् । वर्ष्यम् ॥

**( पुष्यसिध्यौ नक्षत्रे ) पुष्णन्ति कार्याण्यस्मिन्निति पुष्यः । सिध्यन्ति कार्याण्यस्मिन्निति सिध्यः ॥**

( सुबोधिनी )—पुष्यसिध्यौ नक्षत्रे ॥ पुष पुष्टौ षिधु गत्याम् आभ्यामधिकरणेऽर्थे क्यप् निपात्यते ॥ पुष्यः । सिध्यः । नक्षत्रे किम् । पोषणम् । सेधनम् । साधनाधारयोरिति युट् ॥

**( राजसूयादयः ) राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः राजसूयः । सरत्याकाशे सूर्यः ॥**

( सुबोधिनी )—राजसूयादयः ॥ क्यबन्ताः शब्दाः निपत्यन्ते ॥ षुञ् अभिषवे । राज्ञा षोतव्य इति राजसूयः । अभिषवद्वारा निष्पादयितव्य इत्यर्थः ॥ यद्वा राजा सूयते कण्डयतेऽत्रेति राजसूयः । राजेऽत्र सोमः । अधिकरणे क्यप् । निपातनाद्दीर्घः । अर्द्धर्चादित्वात् पुन्नपुंसकः ॥ सृ गतौ । सरत्याकाशे इति सूर्यः । कर्तरि क्यप् । निपातनादुरादेशः । र्वो र्वि हसे इति दीर्घः । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि लोकं प्रेरयतीति सूर्यः । क्यपो रुट् निपातनात् ॥

( तत्त्वदी० )—राजसूयादय इति ॥ लतात्मकः सोमो राजा स सूयते कण्डयतेऽत्रेति अधिकरणे क्यप् । निपातनाद्दीर्घः । अर्द्धर्चादिरयम् ॥ **सूर्य** इति ॥ सरत्याकाशे सुवति कर्मणि लोकं प्रेरयतीति वा ॥

**( तव्यादयोऽर्हेऽर्थे विधौ शक्तौ च वक्तव्याः ) दर्शनार्हो द्रष्टव्यः दर्शनीयः दृश्यः ॥ स्वाध्यायोऽध्येतव्यः अध्ययनीयः अध्येयः ॥ श्रोतव्यः ॥ मन्तव्यः ॥ वोढव्यः ॥ तव्यादीनां कृत्यसंज्ञा ॥**

( सुबोधिनी )—तव्यादयोऽर्हेऽर्थे विधौ शक्तौ च वक्तव्याः ॥ दृशिर् प्रेक्षणे अस्मात्तव्यप्रत्यये गुणे कृते रारो झसे दृशामिति रः । छशषेति षत्वं ष्टुत्वम् । द्रष्टव्यः ॥ अनीयप्रत्यये तु दर्शनीयः । क्यपि तु दृश्यः ॥ इङ् अध्ययने अस्मात्तव्यप्रत्यये गुणे कृते अध्येतव्यः । अनीये तु अध्ययनीयः । यप्रत्यये अध्येयः ॥ श्रु श्रवणे । श्रोतव्यः ॥ श्रवणीयः । क्यपि तु श्रुत्यः ॥ मन ज्ञाने । मन्तव्यः । मननीयः ॥ वह प्रापणे अस्मात्तव्यप्रत्यये हो ढ इति ढत्वे तथोर्ध इति धत्वं ष्टुत्वं ढि ढो लोप इति ढलोपपूर्वदीर्घौ सह वहोरित्योत्वम् । वोढव्यः । वहनीयः ॥ कृत्यक्तखलर्थाः प्रत्ययाः भावकर्मणोर्भवन्ति ॥

इति कृत्यप्रत्ययाः ॥

**स्त्रियां यजां भावे ॥** यजादेर्धातोः स्त्रियां भावे क्यप् ॥ इज्या । व्रज्या । समज्या । निषद्या । निपत्या । मन्या । विद्या । सुत्या । शय्या । भृत्या । इत्या । कृत्या ॥

( सुबोधिनी )–स्त्रियां यजा भावे ॥ क्यप्प्रत्ययमाह–पित्त्वात्तुक् । कित्त्वाद्गुणः निषेधः संप्रसारणं च । यज देवपूजादौ । यजामिति संप्रसारणम् । यजनमिज्या ॥ व्रज गतौ । व्रजनं व्रज्या ॥ अज गतौ क्षेपणे च । समजन्त्यस्यामिति समज्या सभा । अजेः क्यपि वीभावो न निपातनात् ॥ षद्लृ विशरणादौ । निषीदन्त्यस्यामिति निषद्या आपणः । प्रादेश्चेति षत्वम् ॥ पत्लृ पतने । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः ॥ मन ज्ञाने । मन्यतेऽनयेति मन्या गलपार्श्वनाडी ॥ विद ज्ञाने । विदन्त्यनयेति विद्या ॥ षुञ् अभिषवे । ह्रस्वस्येति तुक् । सुत्या अभिषवः ॥ शीङ् स्वप्ने । शेरतेऽस्यामिति शीङोऽयङ् ये क्ङितीत्ययङ् । शय्या ॥ डुभृञ् धारणादौ । भृत्या जीविका ॥ इण् गतौ । ईयतेऽनयेति इत्या शिविका ॥ डुकृञ् करणे कृत्या ॥

( तत्त्वदी० )–स्त्रियां यजामिति ॥ बहुवचनमाद्यर्थम् । तेन यज शीङ् व्रज विद षुञ् श्रु मन विद भृञ् अटाव्य इण् समज निषद निपत कृञ् हन् एषां ग्रहणम् ॥ इज्येति ॥ कित्त्वात्संप्रसारणम् । समज्या सभा ॥ निषद्या आपणः ॥ निपत्या पिच्छिला भूमिः ॥ मन्यतेऽनया क्रुद्धादिरिति मन्या गलपार्श्वशिरा ॥ विद्यते ज्ञायतेऽर्थतत्त्वमनया विद्या ॥ सूयते सोमोऽत्रेति सुत्याऽभिषवदिवसः ॥ शय्यतेऽस्यां शय्या खट्वादि ॥ भरणं भृत्या वेतनम् । ईयते गम्यतेऽनयेति इत्या शिबिकादिः ॥ भृतिर्मतिरासूतिरिति तु सूत्रेषु निपातनात् ॥

**कृञो यग्वा ॥** अयकि क्रिया ॥ इषेरिच्छेति निपातः इषेः शः छत्वादेशः इच्छा । सर्तेर्गुणः परिसर्या । अटाट्या । आस्या । जागर्तेर्गुणः जागर्या ॥

( सुबोधिनी )–कृञो यग्वा ॥ करोतेर्यक् प्रत्ययो वा स्यात् यक्प्रत्ययाभावे शप्रत्ययो निपातनाद्भवति भावकर्मणोरर्थयोः ॥ यक्प्रत्यये अयकीति रिङ् आप् च । क्रिया ॥ इषु इच्छायामस्मात् शप्रत्ययो निपात्यते । शित्त्वाच्चतुर्वत्कार्यम् । तेन गमामिति छः । आवत इत्याप् । इच्छा ॥ सृ गतौ अस्मात् शप्रत्यययक्प्रत्ययौ निपात्येते धातोर्गुणश्च । शप्रत्यये यक्चतुर्ष्वेति यक् । यत इत्यलोपः । आप् । परिसरणं परिसर्या । यकि तु निपातनाद्गुणः।परिसर्या ॥ अट गतौ।अस्मादपि शयकौ निपात्येते। शप्रत्यये तु यक् चतुर्ष्वेति यक् । यत इत्यलोपः निपातनात् । टयशब्दस्य द्वित्वं पूर्वभागे यकारनिवृत्तिदीर्घावपि निपातनात् । आवत इत्याप् । अटाट्या । यकि तु टयशब्दस्य द्वित्वम् । यकारनिवृत्तिदीर्घौ पूर्ववदेव । अटाट्या । अन्ये तु अट गतावस्मात् सूचिसूत्रिमूत्र्यटीति यङ् । स्वरादेरिति टयशब्दस्य द्वित्वम् । आत इति वस्यात्वमूपू

अटाटचेत्यस्मात् प्रत्ययान्तादीत्यङ् प्रत्ययः । अनापि चेति यलोपः । यत इत्यलोपः आप् च । अटाट्या ॥ आस उपवेशने । निपातनाद्यक् । आस्या ॥ जागृ निद्राक्षये । अस्मात् शयगकारप्रत्यया निपातनाद्भवन्ति । शप्रत्यये शित्त्वाच्चतुर्वत्कार्यम् । तेन यक् चतुर्ष्विति यक् । जागर्तेर्वीण्णबुङिङ्घित्रेति गुणः आप् च । जागर्या । यकि तु जागर्तेरिति गुणः । जागर्या । आकारप्रत्यये गुणः । जागरा ॥

( तत्त्वदी० )–इच्छेति ॥ इच्छादयो निपात्याः ॥ **परिसर्येति** ॥ परिसरणम् ॥

**हनस्तः ॥ हत्या ॥**

( सुबोधिनी )–हनस्तः ॥ अनुपसर्गे नाम्न्युपपदे हन्तेर्भावे क्यप् स्याद्धातोर्नस्य तश्च ॥ ब्रह्मणो हननं ब्रह्महत्या ॥

**क्तिः ॥ धातोः क्तिः स्त्रियां भावे ॥ कृतिः । बुद्धिः । स्मृतिः ॥**

**ञमान्तस्येति दीर्घः । शान्तिः । दान्तिः । कान्तिः । क्षान्तिः ।**

**ह्वेञ् हूतिः । ऊढिः । स्फातिः ॥**

( सुबोधिनी )–क्तिः ॥ धातोः स्त्रीलिङ्गे भावादौ क्तिप्रत्ययः स्यात् ॥ घञोऽपवादः। डुकृञ् करणे । कृतिः ॥ बुध अवगमने । तथोर्ध इति तस्य धः । झबे जबा इति पूर्वधस्य दः । बुद्धिः ॥ स्मृ चिन्तायाम् । स्मृतिः ॥ शमु दमु उपशमे । कमु कान्तौ । क्षमूष् सहने । ञमान्तस्य कृङितीति दीर्घः । शान्तिः । दान्तिः । कान्तिः । क्षान्तिः ॥

( तत्त्वदी० )–क्तिः ॥ स्त्रियां यजामित्यतः स्त्रियामनुवर्तते ॥

**हबक्त्योर्नेट् ॥ सशांतिः ॥**

( सुबोधिनी )–हबक्त्योर्नेट् ॥ हबप्रत्याहारक्तिप्रत्यययोरिण्न स्यात् ॥ शीङ् स्वप्ने । संशीतिः ॥

( तत्त्वदी० )–हबक्त्योरिति ॥ हबप्रत्याहारः हबश्च क्तिश्च हबक्ती तयोरित्यर्थः ॥

**ग्रहादीनामिट् ॥ निगृहीतिः ॥**

( सुबोधिनी )–ग्रहादीनामिट् ॥ ग्रहादीनां क्तिप्रत्ययस्येट् स्यात् ॥ ग्रह उपादाने । ग्रहामिति संप्रसारणम् । ईटो ग्रहामिति दीर्घः । निगृहीतिः ॥ पठ व्यक्तायां वाचि । निपठितिः ॥

( तत्त्वदी० )–ग्रहादीनामिति ॥ पूर्वेण निषेधे प्राप्ते वचनम् । स्फायी स्फातिः । यवयोरिति यलोपः । न च स्फायः स्फीति क्तितीत्युक्तेस्त्रापि स्फीर्भविष्यतीति वाच्यम् । क्तक्तवत्वोरेव तत्राधिकृतत्वेन लाभात् नान्यस्य । स्फीतिकाम इत्यत्र क्तान्तात् णौ तत इप्रत्यये समाधेयम् ॥

**( ग्लादेर्निः ) ग्लानिः । म्लानिः । त्वरतेर्वस्योत्वम् तूर्णिः ॥**

( सुबोधिनी )–ग्लादेर्निः ॥ ग्लादेर्धातोर्निः प्रत्ययः स्यात् ॥ ग्लै म्लै हर्षक्षये । ग्लानिः । म्लानिः ॥ ञित्वरा संभ्रमे । ज्वरत्वरेत्यूः तूर्णिः ॥

**( ॠल्वादिभ्यः क्तेर्निः )** कीर्णिः । गीर्णिः । लूनिः । धूनिः ।

( सुबोधिनी )–ॠल्वादिभ्यः क्तेर्निः ॥ ॠदन्तात् ल्वादिभ्यश्च परस्य क्तेर्निः स्यात् ॥ कॄ विक्षेपे । ॠत इरितीर् । र्वो र्वि हसे इति दीर्घः । कीर्णिः ॥ गॄ निगरणे । गीर्णिः ॥ लूञ् छेदने । लूनिः ॥ धूञ् कम्पने । धूनिः ॥

**( संपदादेः क्विब्वा )** संपदनं संपत् । संपत्तिः कर्तरि क्तिः ॥

( सुबोधिनी )–संपदादेः क्विब्वा ॥ पक्षे क्तिः । पद गतौ । संपत् । विपत् । संपत्तिः । विपत्तिः । कर्त्तरि क्तिः ॥

**( संज्ञायाम् )** प्रकुरुते इति प्रकृतिः ॥

( सुबोधिनी )–संज्ञायाम् ॥ धातोः कर्त्तरि क्तिः स्यात्संज्ञायां वाच्यायाम् ॥ प्रकुरुते इति प्रकृतिः ॥

**षिद्भिदामङ् ॥** षितो धातोर्भिदादेश्च स्त्रियामङ् ॥ पचा । मृजा ॥

( सुबोधिनी )–षिद्भिदामङ् ॥ षितो धातोर्भिदादिभ्यश्च स्त्रियामङ् स्यात् ॥ डुपचष् पाके । आवत इत्याप् । पचा ॥ मृजूष् शुद्धौ । मृजा ॥ भिदिर् । विदारणेऽर्थे भिदा । अन्या भिद्यते इति भित्तिः कुड्यम् ॥ कथं तर्हि 'मधुसुरभिमुखाब्जगन्धलब्धेः' इति भावः ॥ 'प्रेक्षोपलब्धिश्चित्संवित्' इत्यमरश्च ॥ षित्त्वादिहाङ्प्रत्यय उचितः । सत्यम् । 'अनर्थकास्तु प्रतिवर्णमनुपलब्धेः' इति भाष्यप्रयोगाद्बाहुलकात् क्तिप्रत्ययोऽपि बोध्यः ॥

( तत्त्वदी० )–षिद्भिदामिति ॥ ष् इद्येषां ते षितः ते च भिदश्च तेषाम् ॥ भिदेति ॥ विदारणे एव । अन्यत्र भित्तिः छित्तिः ॥

**( ॠतोऽङि गुणः )** जरा । भिदा । छिदा । क्षिपा । गुहा ॥

( सुबोधिनी )–ॠतोऽङि गुणः ॥ ॠतो धातोर्गुणः स्यादङि परे ॥ जॄष्षिर् वयोहानौ । जरा ॥ छिदिर् द्वैधीकरणे छिदा । द्वैधीकरणे एवायम् । अन्यत्र तु छिद्यते इति छित्तिः छिद्रम् ॥ कृपेः संप्रसारणं च । कृप कृपायामस्य संप्रसारणं स्यादङि परे । कृपा ॥ क्षिप प्रेरणे । क्षिपा ॥ गुहू संवरणे । गुहा ॥

( तत्त्वदी० )–गुहेति । कन्दरौषध्योः । अन्यत्र गूढिः ॥

**गुरोर्हसात् ॥** गुरुमतो हसान्तात्स्त्रियामङ् । न क्तिः ॥ ईहा । ऊहा । कुण्डा ॥

( सुबोधिनी )—गुरोर्हसात् ॥ ईह चेष्टायाम् । ईहा ॥ ऊह वितर्के । ऊहा ॥ कुडि दाहे । कुण्डा ॥ गुरुमत इति किम् । भक्तिः ॥ हसान्तादिति किम् । नीतिः ॥

( तत्त्वदी० )—गुरोरिति ॥ हसेन धातोर्विशेषणात्तदन्तलाभ इत्याह—हसान्तादिति ॥ तथा च तादृशसमुदायो न गुरुर्भवितुमर्हतीति गुरुपदं तद्वल्लक्षकमित्याशयेनाह—गुरुमत इति ॥ प्रशंसायां रूप इत्यादिनिर्देशाद्विपर्ययोऽपि नाशंक्यः ॥

**प्रत्ययान्तात् ॥ स्त्रियामङ् ॥ चिकीर्षा । लोलूया । कण्डूया । पुत्रकाम्या ॥**

( सुबोधिनी )—प्रत्ययान्तात् ॥ प्रत्ययान्ताद्धातोरङ् प्रत्ययः स्यात्स्त्रियाम् ॥ डुकृञ् करणे । अस्मात् इच्छायामात्मन इति सप्रत्यये कृते 'वुः से' इतीण्न 'नानिटि से' इति न गुणः । से दीर्घ इति दीर्घे कृते ऋत इरितीर् । 'य्वो विं हसे' इति दीर्घः । द्वित्वादि पूर्ववत् । स धातुरिति धातुत्वादङ् । कर्तुमिच्छतीति चिकीर्षतीति चिकीर्षा ॥ लूञ् छेदने । अस्मादतिशये हसादेरिति यङ् द्वित्वं च । यङीति पूर्वस्य गुणः लोलूयते इत्यस्मादङ् प्रत्यये यत इत्यलोपः । अतिशयेन लुनातीति लोलूयते इति लोलूया ॥ कण्डूञ् गात्रविघर्षणे । अस्मात् कण्ड्वादिभ्य इति यक् । यगन्तादङि परे यत इत्यलोपः कण्डूयते इति कण्डूया ॥ पुत्रशब्दात्काम्यश्चेति काम्यप्रत्ययस्ततोऽङ्यत इत्यलोपः । पुत्रमिच्छतीति पुत्रकाम्यति पुत्रकाम्यतीति पुत्रकाम्या ॥

( तत्त्वदी० )—प्रत्ययान्तात् ॥ कण्डूयेति ॥ कण्ड्वादिपदान्तात्केवलात् क्तिरपि ॥ कण्डूतिः ॥

**( धात्वर्थनिर्देशे वुण् वक्तव्यः ) आशिका । शायिका ॥**

( सुबोधिनी )—धात्वर्थनिर्देशे वुण् वक्तव्यः ॥ आशिका । शायिका । काप्यत इतीत्वम् ॥

**( इक्श्तिपौ धातुनिर्देशे ) पचिः । पचतिः ॥**

( सुबोधिनी )—इक्श्तिपौ धातुनिर्देशे ॥ इक्श्तिपौ प्रत्ययावाह—कित्त्वाद्गुणो न । शित्त्वाच्चतुर्वत् । डुपचष् पाके । पचिः ॥ अप् कर्तरीत्यप् । पचतिः ॥ बहुलमित्यनुवृत्तेः क्वचिन्नैतौ भुवो वुगित्यादौ ॥

( तत्त्वदी० )—इक्श्तिपाविति ॥ निर्देशोऽनुकरणम् । बाहुलकत्वात्क्वचिन्न गुम्फ इत्यादौ ॥

**( ण्यन्तार्थासश्रन्थघट्टिवन्दिविदिइषिभ्यः स्त्रियां युः ) कारणा । अर्थना । आसना । श्रन्थना । घट्टना । वन्दना । वेदना । एषणा ॥**

२२

ण्यन्तार्थासश्रन्थघट्टिवन्दिविदिइषिभ्यः स्त्रियां युः ॥

( सुबोधिनी )—ण्यन्तार्थासश्रन्थघट्टिवन्दिविदिइषिभ्यः स्त्रियां युः । एभ्यो युः स्यात् ॥ अङोऽपवादः । युप्रत्ययमाह—युवोरित्यनादेशः । डुकृञ् करणे । णेरिति णिलोपः । कारणा ॥ हृञ् हरणे । हारयतीति हारणा ॥ अर्थ याच्ञायाम् । अर्थयतीति अर्थना ॥ त्रीण्यपि ण्यन्तोदाहरणानि ॥ आस उपवेशने । आस्यन्तेऽस्यामिति आसना । ण्यण्प्रत्यये तु आस्या ॥ श्रन्थ संदर्भे । श्रन्थना ॥ घट्ट चलने ॥ घट्टना वदि अभिवादनस्तुत्योः । वन्दना ॥ अत्र विद्लृ लाभे अयमेव गृह्यते । वेदना । ज्ञानार्थस्य विदेस्तु संवित्तिः ॥ अनिच्छार्थस्येषेरत्र ग्रहणम् । इष गतौ । अन्वेषणा ॥

( तत्त्वदी० )—ण्यन्ता ॥ घट्ट चलने भ्वादिः । चुरादेस्तु ण्यन्तत्वादेव सिद्धः ॥ विद्लृ लाभार्थः । ज्ञाने तु विद चेतनादिष्विति चुरादिण्यन्तस्यैव ॥ इषेस्तु गत्यर्थस्याभीक्ष्णार्थस्य च न त्विच्छार्थस्य ॥

( इञजादिभ्यः ) आजिः । आतिः ॥

( सुबोधिनी )—इञजादिभ्यः ॥ अजप्रभृतिभ्यो धातुभ्य इञ् स्यात् ॥ इञ्प्रत्ययमाह—ञित्त्वाद्वृद्धिः । अज गत्यादौ । बाहुलकादजेर्वीभावो न । आजिः संग्रामः ॥ अट गतौ । आटिः ॥ अत सातत्यगमने । आतिः ॥

( तत्त्वदी० )—इञजा ॥ञित्त्वाद्वृद्धिः ॥ आजिरिति ॥ वीभावस्तु न बाहुलकात् ॥

( विभाषाख्यानपरिप्रश्नयोरिञ् च आक्रोशे नञ्यनिः ) अकरणिः । अजननिः ॥

( सुबोधिनी )—विभाषाख्यानपरिप्रश्नयोरिञ् च॥परिप्रश्ने आख्याने च गम्ये धातोरिञ् वा स्याद्वुण् च ॥ यथाप्राप्तमन्येऽपि प्रत्यया भवन्ति । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः ॥ एवं गणिं गणिकां गणनाम् ॥ पाचिं पाचिकां पचां पक्तिम् ॥ आख्यानेऽप्येवम् ॥

( इक् कृष्यादिभ्यः ) कृषिः । गिरिः ॥

( सुबोधिनी )—इक् कृष्यादिभ्यः ॥ इक्प्रत्ययमाह—कित्त्वान्न गुणः । कृष विलेखने । कृषिः ॥ गॄ निगरणे । ऋत इरितीर् । गिरिः ॥ कॄ विक्षेपे । किरिः ॥ आवश्यकाधमर्ण्ययोर्णिनिः । अवश्यंकारी ॥ शतंदायी ॥ भविष्यदर्थेणिनिश्च । ग्रामं गामी ॥

( तत्त्वदी० )—इक् ॥ कित्त्वान्न गुणः॥ कृषिरिति ऋत इर् ॥ गिरिः ।

पूर्वकाले क्त्वा ॥ धातोः समानकर्तृके धातौ प्रयुज्यमाने पूर्वकालेऽर्थे क्त्वाप्रत्ययः ॥

( सुबोधिनी )—पूर्वकाले क्त्वा ॥ समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् ॥ पूर्वकाले इति बहुव्रीहिः । क्त्वा तु अव्ययकृतो भाव इति भावे ।

भावोऽपि घञादाविव नेह सिद्धावस्थापन्नः किं तु साध्यावस्थापन्नः । स च धातुनैव लब्धः । क्त्वाप्रत्ययार्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं भवति । क्त्वाप्रत्ययमाह—कित्त्वान्न गुणः । क्त्वाद्यन्तमित्यव्ययत्वाद्विभक्तेर्लुक् ॥

(तत्त्वदी०)—पूर्वकाले ॥ धातोरिति ॥ पूर्वकालक्रियावचनादित्यर्थः । समानकर्तृके धातौ प्रयुज्यमाने यस्माद्धातोः क्त्वा विधीयते तत्क्रियाकर्ता यस्य धातोः कर्ता तस्मिन्प्रयुज्यमाने क्त्वाप्रत्ययो भवतीत्यर्थः ॥ स्नात्वा भुंक्त इत्यत्र स्नानभोजनक्रिययोरेक एव कर्ता । स्नानक्रियायाः पूर्वभावित्वेन स्नाधातोः क्त्वा । यद्यपि शक्तिः कारकं सा च प्रतिक्रियं भिद्यते तथापि शक्तिशक्तिमतोरभेदादेककर्तृकत्वमुक्तम् । एवमेककर्तृकाणामपि नत्वा स्तुत्वा व्रजति । न तु चात्र सर्वपूर्वाया एव भविष्यति । यथामीषां विप्राणां पूर्वं आनीयतामित्युक्ते सर्वपूर्व एवानीयते । अत्र वदन्ति । आख्यातवाच्याया क्रियायाः प्राधान्यम् । तेन तामेव प्रति सर्वासां विशेषणत्वात्परस्परेण सम्बन्धः । न हि भिक्षुको भिक्षुकान्तरं याचते किं तु सर्व एव प्रभुमिति यथा तथा व्रजेरिह न स्तुत्यपेक्षं पौर्वकाल्यमिति । पूर्वं भुङ्क्ते ततो व्रजतीत्यत्र तु पूर्वशब्देनैव कालस्योक्तत्वान्न क्त्वा प्रत्ययः । आस्यते भोक्तुमित्यपि भवति । आसित्वा भोक्तुमिति न भवति । अनभिधानात् किं त्वासित्वा भुङ्क्त इत्येव ॥

**क्त्वा सेट् किन्न ॥** धातोः सेट् क्त्वा किन्न ॥ वर्तित्वा । शयित्वा ॥

(सुबोधिनी)—क्त्वा सेट् किन्न ॥ धातोः परः सेट् क्त्वा किन्न स्यात् ॥ वृतु वर्तने । कृत इतीट् । वर्तित्वा ॥ शीङ् स्वप्ने । शयित्वा ॥ सेट् किम् । कृत्वा । कित इतीण्न ॥

**( मृडमृदगुधकुषक्लिशवदवसरुदविदमुषग्रहिभ्यः कित् )** मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा ॥

(सुबोधिनी)—मृडमृदगुधकुषक्लिशवदवसरुदविदमुषग्रहिभ्यः कित् ॥ एभ्यो धातुभ्यः सेट् क्त्वा कित् ॥ मृड सुखे । मृद क्षोदे । गुध परिवेष्टने गुध रोषे च । कुष निष्कर्षे । क्लिश उपतापे दिवादिः क्लिशू विबाधने क्र्यादिः । वद व्यक्तायां वाचि । वस निवासे । रुदिर् अश्रुविमोचने । विद ज्ञाने । मुष स्तेये । ग्रह उपादाने । मृड मृडित्वा ॥ मृद मृदित्वा ॥ गुध गुधित्वा ॥ कुष कुषित्वा ॥ क्लिशू ऊदित्त्वाद्वेट् । क्लिशित्वा क्लिष्ट्वा ॥ वद यजामिति संप्रसारणम् । उदित्वा ॥ वस । वसतिक्षुधोरितीट् । यजामिति संप्रसारणम् । घसादेरिति षः । उषित्वा ॥ रुदिर् रुदित्वा ॥ विद विदित्वा ॥ मुष मुषित्वा ॥ ग्रह ग्रहामिति संप्रसारणम् । ईटो ग्रहामिति दीर्घः । गृहीत्वा ॥

**( नोपधात्थफान्ताद्वा )** ग्रन्थित्वा—ग्रथित्वा । गुम्फित्वा—गुफित्वा ॥

( सुबोधिनी )–नोपधात्थफान्ताद्वा ॥ नोपधाद्धातोः थफान्ताच्च परः सेट् क्त्वा वा कित्स्यात् ॥ ग्रन्थ संदर्भे । कित्त्वान्नो लोप इति नलोपः । ग्रथित्वा–ग्रन्थित्वा ॥ गुम्फ गुम्फने । कित्त्वात्पक्षे नलोपः गुफित्वा–गुम्फित्वा ॥ नोपधात्किम् । कोथित्वा । रेफित्वा । कुथ पूतीभावे । रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । इह इवर्णोपधादिति विकल्पोऽपि न भवति नोपधग्रहणसामर्थ्यात् ॥

**( अलंखल्वोः प्रतिषेधे ) अलंभुक्त्वा । खलुकृत्वा ॥**

( सुबोधिनी )–अलंखल्वोः प्रतिषेधे ॥ प्रतिषेधे धात्वर्थे अलंखल्वोरुपपदयोर्धातोः क्त्वा स्यात् ॥ भुज पालनादौ । अलंभुक्त्वा ॥ डुकृञ् करणे । कित इतीण्न । खलुकृत्वा ॥ अलंखल्वोः किम् । मा कार्षीत् । प्रतिषेधे किम् । अलंकारः ॥

**( उदितः क्त्वो वेट् ) एषित्वा–इष्ट्वा । भ्रमित्वा–भ्रान्त्वा ॥**

( सुबोधिनी )–उदितः क्त्वो वेट् ॥ उदितो धातोः परस्य क्त्वाप्रत्ययस्येड्वा स्यात् ॥ इषु इच्छायाम् । उदित्त्वाद्वेट् । इट्पक्षे क्त्वा सेडित्यकित्त्वाद् गुणः । एषित्वा । इडभावे ष्टुत्वम् । इष्ट्वा ॥ भ्रमु चलने । उदित्त्वाद्वेट् । भ्रमित्वा । इडभावे ऽमान्तस्येति दीर्घः । भ्रान्त्वा ॥

( तत्त्वदी० )–उदित इति ॥ उदिद्यस्य स तथा तस्मात् ॥

**( अदो जग्धः ) जग्ध्वा ॥**

( सुबोधिनी )–अदो जग्धः ॥ अद भक्षणे अस्य जग्धादेशः क्त्वाप्रत्यये तथोर्धइति धः । खसे चपा इति धस्य कः । झबे जबा इति कस्य गः । जग्ध्वा ॥

**समासे क्यप् ॥ समासे सति पूर्वकाले क्यप् समानकर्तृके धातौ प्रयुज्यमाने ॥ संभृत्य करोति । प्रणम्य यच्छति । अनञ्पूर्व इत्येके । अकृत्वा ॥**

( सुबोधिनी )–समासे क्यप् ॥ अव्ययपूर्वपदेऽनञ्समासे समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्यप् स्यात् ॥ क्यप्प्रत्ययमाह–कित्त्वाद् गुणो न । पित्त्वात् ह्रस्वस्य पितीति तुक् । डुभृञ् धारणादौ । णम् प्रह्वत्वे शब्दे च । सम्प्रशब्दौ नाम्नश्च कृतेति क्त्वान्तेन नित्यं समस्येते । संभृत्य । प्रणम्य ॥ अनञ् किम् । अकृत्वा ॥ अव्ययपूर्वपदे इति किम् । परमकृत्वा । मान्तानिटां धातूनां तु मस्य लोपो वा भवति क्यपि । वनतितनोत्यादीनां तु लोपस्त्वनुदात्ततनामिति नित्यं ऽमस्य लोपः । आगत्य–आगम्य । प्रणत्य–प्रणम्य । अन्यत्र तु नित्यम् । प्रहत्य । प्रमत्य । वितत्य ॥

( तत्त्वदी० )—समासे क्यप् ॥ समानकर्तृकत्व एव । यत्तु 'मत्प्रसूतिमनाराध्य' इत्यादिमहाकविप्रयोगाद्भिन्नकर्तृकेऽपि क्यबिति वासुदेवेनोक्तं तन्महान्तो न क्षमन्ते । स्थितस्येत्यध्याहारेणैव तत्र निर्वाहः । ओदनः पक्त्वा भुज्यत इत्यत्र प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत्प्रकाशते इति न्यायात्प्रधानक्रियया कर्मोक्तमतो गुणक्रियायाः प्राप्तिकर्मविभक्तिर्न भवति ॥

**( क्यपि लघुपूर्वात्परस्य ञेरय् )** परिणमय्य । लघुपूर्वात्किम् ? । संप्रधार्य ॥

( सुबोधिनी )—क्यपि लघुपूर्वात्परस्य ञेरय् ॥ लघुः पूर्वो यस्माद्वर्णात्तस्माल्लघुपूर्ववर्णात्परस्य ञेरयादेशः स्यादित्यर्थः ॥ णम् प्रह्वत्वे शब्दे च । अस्मात्प्रयोजकञिप्रत्यये जनीजृषित्यमन्तत्वान्मित्त्वम् । मितां ह्रस्व इति ह्रस्वस्ततो ञेरयादेशः । प्रणमय्य ॥ गण संख्याने चुरादिरदन्तः । अस्मात्स्वार्थे ञिप्रत्यये यत इत्यलोपः । नन्विह कृतस्याऽल्लोपस्य स्थानिवद्भावेन लघुपूर्वकवर्णात्परत्वं नास्ति कथमयादेशः स्यात् । उच्यते । अत्रायादेशे कर्तव्ये अल्लोपस्य स्थानिवत्त्वं भाष्यादौ न स्वीकृतमस्ति । विगणय्य लघुपूर्वादिति किम् । संप्रधार्य । संपूर्वात् धृ धारणे अस्मात्प्रयोजकञिप्रत्ययान्तात् क्यपि कृते ञेरिति ञिलोपः ॥

**( आप्नोतेर्वा )** प्रापय्य–प्राप्य ॥

( सुबोधिनी )—आप्नोतेर्वा ॥ आप्लृ व्याप्तावस्मात्परस्य ञेरयादेशो वा स्यात् ॥ अप्राप्तविभाषेयम् । तथा च श्रीहर्षः—'अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते' । इत्यत्रावाप्येत्यस्यावापय्येत्यर्थो बोध्यः ॥

**( क्यपीत्वाभावः )** प्रदाय । प्रधाय । प्रस्थाय । प्रसाय । मिनोतिमीनातीत्यात्वम् । प्रमाय । निमाय । एवं लिलीङोरात्वं वेत्यादि । विलीय–विलाय ॥

( सुबोधिनी )—क्यपीत्वाभावः ॥ दादेरितीत्वं स्थामीतीत्वं च प्राप्तमनेन निषिध्यते ॥ डुदाञ् दाने । प्रदाय ॥ ष्ठा गतिनिवृत्तौ । प्रस्थाय ॥ षोऽन्तकर्मणि । प्रसाय ॥ डुधाञ् धारणादौ । विधाय ॥ कथं तर्हि 'निपीय यस्य' इति श्रीहर्षप्रयोग इति चेदत्राहुः । दिवादिगणस्थस्य पीङ् पाने इत्यस्य रूपमिति ॥

**( अपूर्वकालेऽपि क्वचित् )** मुखं व्यादाय स्वपिति । नेत्रे निमील्य हसति ॥

( सुबोधिनी )—अपूर्वकालेऽपि क्वचित् ॥ क्यप् स्यात् ॥ डुदाञ् दाने । व्यादाय । यदैव स्वपिति तदैव मुखं व्यादत्ते ॥ मील निमीलने । निमील्य । यदैव हसति तदैव नेत्रे संमीलयतीत्यर्थः ॥

**पौनःपुन्ये णम्पदं द्विश्च ॥ समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले धातोर्णम् क्त्वा च णमन्तस्य द्विर्वचनम् ॥**
पायंपायं गच्छति । भोजंभोजम् । स्मारंस्मारम् ॥ मितां ञ्यन्तानामिणि णमि च वा दीर्घः ॥ गामंगामम्–गमंगमम् । लाभंलाभम्–लम्भंलम्भम् ॥

( सुबोधिनी )–पौनःपुन्ये णम्पदं द्विश्च ॥ पौनःपुन्ये द्योत्ये समानकर्तृकयोः पूर्वकाले धातोर्णम् स्याच्चकारात् क्त्वा णमन्तस्य द्वित्वं च ॥ णम्प्रत्ययमाह–णित्त्वाद्वृद्धिः । क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् । पा पाने । अस्मात् णमि कृते आतो युगिति युक् । पायंपायम् । पक्षे पीत्वापीत्वा । स्थामीतीत्वम् ॥ भुज पालनादौ । भोजभोजम् । भुक्त्वाभुक्त्वा ॥ स्मृ चिन्तायाम् । स्मारंस्मारम् । पक्षे स्मृत्वास्मृत्वा ॥ गम्लृ गतौ । ञ्यन्तादस्मात् णमि कृते जनीजॄषित्यमन्तत्वान्मित्संज्ञायां मितां ह्रस्व इति ह्रस्वे कृते मितां ञ्यन्तानामिणि णमि चेति वा दीर्घः । गामंगामम् । गमंगमम् । पक्षे गत्वागत्वा ॥ डुलभष् प्राप्तौ अस्मात् णमि कृते लभेरिण्णमोरिति वा नुम् । लम्भंलम्भम् । नुमभावे वृद्धिः । लाभंलाभम् । पक्षे लब्ध्वालब्ध्वा ॥

( तत्त्वदी० )–पौनःपुन्ये णम्पदं द्विश्च ॥ णमन्तस्य नामत्वात्स्यादौ पदत्वम् । **पाय**मिति ॥ आतो युगिति युक् ॥ **गाम**मिति ॥ अमान्तस्येति दीर्घः ॥ **लम्भ**मिति ॥ णमि वा नुम् । व्यवस्थितत्वादुपसृष्टे प्रलम्भमित्यादौ नित्यमेव ॥

**( कथमादिषु स्वार्थे कृञो णम् )** कथंकारम् । अन्यथाकारम् । एवंकारम् । इत्थंकारं पठति । इत्थं पठतीत्यर्थः ॥

( सुबोधिनी )–कथमादिषु स्वार्थेषु कृञो णम् ॥ कथमित्थमन्यथैवमित्यादिषूपपदेषु कृञो णम् स्याद्यदि कृञ् प्रयोगाऽनर्हः स्यात् ॥ कथंकारं पठति । कथं पठतीत्यर्थः ॥ अन्यथाकारं भुङ्क्ते । अन्यथा भुङ्क्ते इत्यर्थः ॥ एवंकारं करोति । एवं करोतीत्यर्थः ॥ इत्थंकारं वदति । इत्थं वदतीत्यर्थः ॥ प्रयोगाऽनर्ह इति किम् । शिरोऽन्यथा कृत्वा भुङ्क्ते ॥

**( अग्रेप्रथमपूर्वेषूपपदेषु क्त्वाणमौ वा )** अग्रेभोजं व्रजति–अग्रे भुक्त्वा । प्रथमंभोजम्–प्रथमं भुक्त्वा । पूर्वंभोजम्–पूर्वं भुक्त्वा । पक्षे प्रत्ययाभावः । अग्रे भुङ्क्ते ततो व्रजति । आभीक्ष्ण्ये तु पूर्वेण नित्यमेव णम् । अग्रेभोजंभोजं व्रजति ॥

( सुबोधिनी )–अग्रेप्रथमपूर्वेषूपपदेषु क्त्वाणमौ वा ॥ पौनःपुन्ये इति नानुवर्तते । एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमौ वा स्तः ॥ अग्रे इति सप्तम्यन्त-

स्यानुकरणम् । प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वाद्विभक्तेर्लुङ् न कृतः । अग्रेभोजम् अग्रेभुक्त्वा वा व्रजति । अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीत्यर्थः । पक्षे लडादयः । अग्रे भुङ्क्ते । पौनःपुन्ये तु नित्यमेव णम् क्त्वा च । अग्रे भोजंभोजम् भुक्त्वा भुक्त्वा वा व्रजति ॥

**( कर्मण्याक्रोशे कृञः खमुञ् ) चौरंकारमाक्रोशति । चौरशब्दमुच्चार्येत्यर्थः ॥**

( सुबोधिनी )—कर्मण्याक्रोशे कृञः खमुञ् ॥ कर्मण्युपपदे आक्रोशे गम्ये करोतेः खमुञ् ॥ खमुञ्प्रत्ययमाह—खित्त्वात्खिति पदस्येति मुम् । ञित्त्वाद्वृद्धिः । उकार उच्चारणार्थः । करोतिरुच्चारणेऽर्थे वर्तते । अत्र चौरंकारमाक्रोशति । चौरशब्दमुच्चार्येत्यर्थः ॥

( तत्त्वदी० )—चौरंकारमिति ॥ खित्त्वान्मुम् । करोतिरत्रोच्चारणार्थः । चौरादयश्च शब्दप्रधानाः । चौरशब्दमित्युच्चार्य क्रोशतीत्यर्थः । नात्र चोरत्वं करणं किं त्वाक्रोशसंपादनार्थमचोरोऽपि चोर इत्युच्यते ॥

**( स्वाद्वर्थेषु स्वाद्वर्थे कृञो णम्स्यादेककर्तृकयोः पूर्वकाले पूर्वपदस्य मान्तत्वं निपात्यते ) अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते । संपन्नंकारम् । लवणंकारम । संपन्नलवणशब्दौ स्वादुपर्यायौ । क्त्वापि । स्वादुंकृत्वा भुंक्ते ॥**

( सुबोधिनी )—स्वाद्वर्थेषु स्वाद्वर्थे कृञो णम् ॥ स्वादुपर्यायेषूपपदेष्वेककर्तृकयोः पूर्वकाले करोतेर्णम् स्यात्पूर्वपदस्य मान्तत्वं निपात्यते ॥

( तत्त्वदी० )—स्वाद्वर्थेषु स्वाद्वर्थे इति ॥ प्रकृतेन खमुना सिद्धेऽव्ययत्वान्मुम्न स्यादीपश्च निवृत्तिः स्यादित्याद्यर्थं निपातनम् । अस्वाद्वीं स्वाद्वीं कृत्वा यवागूं भुङ्क्ते स्वादुंङ्कारं यवागूं भुंक्ते ॥

**( यथातथयोरसूयाप्रतिवचने कृञः सिद्धाप्रयोगे णम् ) यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये किं तवानेन । सिद्धाप्रयोगे किम् । सिद्धं कृत्वा भुङ्क्ते ॥**

( सुबोधिनी )—यथातथयोरसूयाप्रतिवचने कृञः सिद्धाप्रयोगे णम् ॥ यथातथयोरुपपदयोः करोतेः सिद्धाप्रयोगे णम् स्यात् सिद्धः अप्रयोगोऽस्य एवंभूतश्चेत् कृञ व्यर्थत्वात् प्रयोगानर्ह इत्यर्थः गुणेषु दोषारोपणमसूया असूयया प्रतिवचनं असूयाप्रतिवचनं तस्मिन् वाच्ये सति ॥ यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये । यथा भोक्ष्येऽहं तथा भोक्ष्ये इत्यर्थः ॥

( तत्त्वदी० )–सिद्धाप्रयोगे इति ॥ सिद्धः अप्रयोगोऽस्य क्त्वो निष्प्रयोजनत्वात्प्रयोगानर्ह इत्यर्थः ॥

**( कर्मणि दृशिविदोः साकल्ये )** कन्यादर्शं वरयति । सर्वाः कन्या इत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति वा तं तं सर्वं भोजयतीत्यर्थः ॥

( सुबोधिनी )–कर्मणि दृशिविदोः साकल्ये ॥ कर्मण्युपपदे दृशिविदोर्णम् स्यात् साकल्ये ॥ सकलस्य भावः साकल्यं तस्मिन् ॥ दृशिर् प्रेक्षणे । विद ज्ञाने विद्लृ लाभे विद विचारणे इति त्रयाणां ग्रहणम् ॥

**( यावति विन्दजीवोः )** यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः ॥ यावज्जीवमधीते विप्रः ॥

( सुबोधिनी )–यावति विन्दजीवोः ॥ यावच्छब्दे उपपदे विद्लृ लाभे जीव प्राणधारणे आभ्यां णम् स्यात् ॥

( तत्त्वदी० )–यावदिति ॥ पूर्वकाल इतीह नास्ति । असाकल्यार्थमिदम् । साकल्ये दृशिविदोरित्येव सिद्धेः ॥

**( कर्मणोश्चर्मोदरयोः पूरेः )** चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ॥

( सुबोधिनी )–कर्मणोश्चर्मोदरयोः पूरेः ॥ चर्मोदरयोः कर्मणोरुपपदयोः पूरी आप्यायनेऽस्मात् णम् स्यात् ॥ चर्मपूरं स्तृणाति । आच्छादयतीत्यर्थः ॥

**( कर्मण्युपपदे पूरेरूलोपश्च वा वर्षप्रमाणे गम्ये )** गोष्पदप्रं वृष्टो देवः । गोष्पदपूरं वा । मूषिकाबिलप्रं वृष्टो देवः । मूषिकाबिलपूरं वा ॥

( सुबोधिनी )–कर्मण्युपपदे पूरेरूलोपश्च वा वर्षप्रमाणे गम्ये ॥ णम् स्यात् समुदायेन वर्षप्रमाणे वर्षस्य वृष्टेः प्रमाणं वर्षप्रमाणं तस्मिन् गम्ये । 'वृष्टिर्वर्षम्' इत्यमरः ॥

**( चैलार्थेषु कर्मसूपपदेषु क्नोपेर्वर्षप्रमाणे )** चैलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् ॥

( सुबोधिनी )–चैलार्थेषु कर्मसूपपदेषु क्नोपेर्वर्षप्रमाणे ॥ चैलमर्थो येषां तानि चैलार्थानि तेषु कर्मसूपपदेषु क्नूयी शब्दे उन्दे च ञ्यन्तादस्मात् णम् स्यात् ॥ क्नूय् धातोः प्रयोजके ञिप्रत्यये कृते ह्रीव्लीरीक्नूयीक्ष्मायीनामिति पुक् । यवयोर्वसे हकारे चेति यलोपः । पुकीति गुणः । क्नोपीति ञ्यन्ताण्णम् । ञेरिति ञिलोपः । चैलं क्नोपयत्यार्द्रीकरोतीति चैलक्नोपम् ॥

( निमूलसमूलयोः कषः कषादिषु यथाविध्यनुप्रयोगः प्रयोक्तव्यः )अत्र प्रकरणे पूर्वकाल इति न संबध्यते असंभवादप्रतीतेश्च॥ निमूलकाषं कषति।समूलकाषं कषति। निमूलं समूलं वा कषतीत्यर्थः॥

( सुबोधिनी )—निमूलसमूलयोः कषः ॥ निमूलसमूलयोः कर्मणोरुपपदयोः कष हिंसायामस्माद्धातोर्णम् स्यात् ॥

( तत्त्वदी० )—निमूल ॥ निमूलादिप्रकृतिधातोरेवं कषादेर्न त्वन्यधातुयोगेऽपीति बोध्यम् ॥ निमूलकाषमिति ॥ निर्गतं मूलमस्येति निमूलम् । एकस्यापि धात्वर्थस्य निमूलादिविशेषणसंबन्धाद्भेदे सति सामान्यविशेषभावेन विशेषणविशेष्यभावः । एवमग्रेऽपि ॥

( शुष्कचूर्णरूक्षेषु कर्मसूपपदेषु पिषः ) शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् ॥

( सुबोधिनी )—शुष्कचूर्णरूक्षेषु कर्मसूपपदेषु पिषः ॥ एषु कर्मसूपपदेषु पिष्लृ संचूर्णनेऽस्माद्धातोर्णम् स्यात् ॥

( समूलाकृतजीवेषु कर्मसु हन्कृञ्ग्रहां णम् ) समूलघातं हन्ति । समूलं हन्तीत्यर्थः । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवं गृह्णातीत्यर्थः ॥

(सुबोधिनी )—समूलाकृतजीवेषु कर्मसु हन्कृञ्ग्रहां णम् ॥ समूलादिषु कर्मसूपपदेषु हनादिभ्यो णम् स्यात् हनादीनामेव यथाविध्यनुप्रयोगश्च कर्तव्यः ॥ समूलोपपदाद्धन्तेर्णमि कृते हनो घदिति घत् । ततोऽत उपधाया इति वृद्धिः । समूलघातम् ॥ जीवोपपदाद् गृह्णातेर्णमि कृते वृद्धिः । जीवग्राहम् । जीवतीति जीवः । नाम्युपधादिति कः । जीवन्तं गृह्णातीत्यर्थः ॥

( करणे हनः ) पादघातं हन्ति । पादेन हन्तीत्यर्थः ॥

( सुबोधिनी )—करणे हनः ॥ करणकारकोपपदाद्धन्तेर्णम् स्याद्धन्तेरनुप्रयोगश्च ॥ नित्यसमासार्थमिदं सूत्रम् । भिन्नधातुसंबन्धे तु हिंसार्थानामिति वक्ष्यते ॥

( स्नेहने पिषः ) उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः ।

( सुबोधिनी )—स्नेहने पिषः ॥ स्नेहनकरणोपपदात् पिष्लृ संचूर्णनेऽस्माण्णम् स्यात् ॥ स्निह्यते येन तत् स्नेहनं तस्मिन् । पेषंवासवाहनधिषु परेषु उदकस्योदादेशो वक्तव्य इत्युदादेशः । उदपेषम् ॥

( हस्तार्थे करणे वर्तिग्रहोः ) हस्तवर्तं वर्तयति । करवर्त्तम् । हस्तेन गुटिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ॥

( सुबोधिनी )—हस्तार्थे करणे वर्तिग्रहोः ॥ हस्तार्थकरणकारकोपपदाभ्यां वर्ति-ग्रहिभ्यां णम् स्यादनयोर्यथाविध्यनुप्रयोगश्च ॥ वृतु वर्तने । ण्यन्तादस्माण्णमि कृते णेरिति णिलोपः । हस्तवर्तं वर्तयति हस्तग्राहं गृह्णाति । हस्तेन गृह्णातीत्यर्थः ॥

**( धनार्थे करणे पुषः )** धनपोषं पुष्णाति । स्वपोषम् । गोपोषम् ॥

( सुबोधिनी )—धनार्थे करणे पुषः ॥ धनस्य पर्यायेषु विशेषेषु चोपपदेषु पुष पुष्टावस्माण्णम् स्यादस्यानुप्रयोगश्च पूर्ववत् ॥

**( आधारे बन्धः )** चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः ॥

( सुबोधिनी )—आधारे बन्धः ॥ अधिकरणोपपदाद्बन्ध बन्धनेऽस्माण्णम् स्यादनु-प्रयोगश्च ॥

**( संज्ञायां बध्नातेः )** क्रौञ्चबन्धं बद्धः । मयूरिकाबन्धं बद्धः ॥ अट्टा-लिकाबन्धं बद्धः । बन्धविशेषाणां संज्ञा एताः ॥

( सुबोधिनी )—संज्ञायां बध्नातेः ॥ संज्ञायां वाच्यायामस्माण्णम् स्यात् ॥

**( कर्त्रोर्जीवपुरुषयोर्नशिवहोः )** जीवनाशं नश्यति । जीवो नश्य-तीत्यर्थः । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः ॥

( सुबोधिनी )—कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ जीवपुरुषकर्तृकोपपदाभ्यां णश् अदर्शने वह प्रापणे आभ्यां णम् स्याद्यथाविध्यनुप्रयोगश्च ॥

( तत्त्वदी० )—कर्त्रोरिति ॥ जीवनाशमिति ॥ जीवतीति जीवः । नाम्युपधादिति कः ॥

**( ऊर्ध्वे कर्तरि शुषिपूरोः )** ऊर्ध्वशोषं शुष्यति । ऊर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्व मुख एव पूर्यत इत्यर्थः ॥

( सुबोधिनी )—ऊर्ध्वे कर्तरि शुषिपूरोः ॥ ऊर्ध्वकर्त्रुपपदाभ्यां शुष शोषणे पूरी आप्यायने आभ्यां णम् स्याद्यथाविध्यनयोरनुप्रयोगश्च ॥ ऊर्ध्वशोषं शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठञ्छुष्यतीत्यर्थः ॥ ऊर्ध्वपूरं पूर्यते । ऊर्ध्वमुख एव घटादिर्वर्षोदका-दिना पूर्णो भवतीत्यर्थः ॥

**( उपमाने कर्मणि कर्तरि च )** घृतनिधायं निहितं जलम् । घृत-मिव सुरक्षितमित्यर्थः । अजकनाशं नष्टः । अजक इव नष्ट इत्यर्थः । कषादिषु यस्माण्णम् विहितः स एवानुप्रयोक्तव्यः । तथैवोदाहृतम् ॥

( सुबोधिनी )—उपमाने कर्मणि कर्तरि च ॥ उपमानवाचके कर्तरि कर्मणि चोपपदे धातोर्णम् स्यात्तस्यैव धातोरनुप्रयोगश्च ॥

**( उपदंशस्तृतीयायाम् )** इतः प्रभृति पूर्वकाल इति संबध्यते ॥ मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशम् । दृश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृतीया । यद्यप्युपदंशिना सह न शाब्दः संबन्धस्तथाप्यार्थोऽस्त्येव ॥

(सुबोधिनी )–उपदंशस्तृतीयायाम् ॥ तृतीयान्तोपपदादुपदंशतेर्णमुल् स्यात् ॥ मूलकोपदंशम् । वाक्यमपि । मूलकेनोपदंशम् ॥

( तत्त्वदी० )–उपदंशस्तृतीयायामिति ॥ मूलकोपदंशं भुङ्क्ते । मूलकेनोपदश्य भुङ्क्ते इत्यर्थः । अत्र मूलकस्य भुज्यपेक्षया करणत्वं शाब्दम् । मूलकेन भुङ्क्ते । किं कृत्वा । उपदश्य । किम् । अर्थान्मूलकमित्यैतदेव कर्म गम्यते ॥

**( हिंसार्थानां चानुप्रयोगधातुना समानकर्मकाणां तृतीयान्ते उपपदे )** दण्डोपघातं गाः कालयति दण्डेनोपघातम् । दण्डताडं दण्डेन ताडं वा । समानकर्मकाणां किम् दण्डेन चौरमाहत्य गाः कालयति ॥

( सुबोधिनी )–हिंसार्थानां चानुप्रयोगधातुना समानकर्मकाणां तृतीयान्ते उपपदे ॥ तृतीयान्तोपपदादनुप्रयोगधातुना सह समानकर्मकाद्धिंसार्थाण्णमुल् स्यात् ॥ हन्तेर्णमि कृते हनो घदिति घत् । वृद्धिः । दण्डोपघातं गाः कालयति । कल विक्षेपे चुरादिः । प्रेरयतीत्यर्थः ॥ दण्डताडम् । तड आघाते चुरादिः ॥

**( सप्तम्यां तृतीयायां चोपपदे उपपीडरुधकर्षः )** पार्श्वोपपीडं शेते । पार्श्वाभ्यामुपपीडं पार्श्वयोरुपपीडं वा । व्रजोपरोधं गाः स्थापयति व्रजेनोपरोधम् । पाण्युपकर्षं धानाः संगृह्णाति पाणावुपकर्षम् पाणिनोपकर्षम् ॥

( सुबोधिनी )–सप्तम्यां तृतीयायां चोपपदे उपपीडरुधकर्षः ॥ सप्तमीतृतीयान्तोपपदेभ्य उपपूर्वेभ्यः पीडादिभ्यो णमुल् स्यात् ॥ इह सूत्रे पीडादीनां समाहारद्वन्द्वं कृत्वा उपपूर्वः पीडारुधकर्ष इत्युत्तरपदलोपी समासः कर्तव्यः । सूत्रे पुंस्त्वं सौत्रं ज्ञेयम् । पञ्चम्यर्थे प्रथमा च ज्ञेया । पीड पीडायाम् । रुधिर् आवरणे । कृष विलेखने अयं भौवादिक एव गृह्यते । गुणसहितस्य कृषेरपा निर्देशात् । तत्फलं तुदादेर्व्युदासः । यद्यपि विलेखन एव तौदादिकोऽपि पठ्यते तथापि क्षेत्रविषयकविलेखने एव तौदादिकः प्रयुज्यते । एवं च तौदादिकात्कर्षेः क्यप् प्रत्यय एव भवति । क्षेत्रे उपकृष्य हलेनोपकृष्येति ॥

( तृतीयासप्तम्योरुपपदयोः संनिकर्षे धातोः ) केशग्राहं युध्यन्ते। केशेषु गृहीत्वा युध्यन्त इत्यर्थः । हस्तग्राहम् । हस्तेन गृहीत्वा ॥

( सुबोधिनी )—तृतीयासप्तम्योरुपपदयोः संनिकर्षे धातोः ॥ तृतीयासप्तम्युपपदाद्धातोर्णम् स्यात् ॥ सन्निकर्षः संबन्धः ॥

( तृतीयासप्तम्योः प्रमाणे गम्ये धातोः ) द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम् ॥

( सुबोधिनी )—तृतीयासप्तम्योः प्रमाणे गम्ये धातोः ॥ तृतीयासप्तम्युपपदाद्धातोर्णम् स्यात्प्रमाणे गम्ये ॥ द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम् । द्व्यङ्गुलोत्कर्षं द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थः खण्डिकां छिनत्ति । ह्रस्वः खण्डः खडिका ताम् ॥

( अपादाने द्वितीयां च त्वरायां गम्यमानायां धातोः ) शय्योत्थाय धावति । यष्टिग्राहं युध्यन्ते । लोष्टग्राहम् ॥

( सुबोधिनी )—अपादाने द्वितीयायां च त्वरायां गम्यमानायां धातोः ॥ पञ्चमीद्वितीयान्तोपपदाद्धातोर्णम् त्वरायां गम्यमानायाम् ॥ शय्योत्थायं धावति । शय्याया उत्थाय धावतीत्यर्थः । आतो युगिति युक् । उदः स्थास्तम्भोरिति सलोपः । यष्टिग्राहं युध्यन्ते । एवं खलु युद्धाय त्वरन्ते यष्ट्यादिकमपि गृहीत्वा धावन्ति नायुधं प्रतीक्षन्त इत्यर्थः ॥

( अपगुरोर्वा णम्योतः ) गुरी उद्यमे । अस्यपगारं युध्यन्ते अस्यपगोरं वा ॥

( सुबोधिनी )—अपगुरोर्वा णम्योतः ॥ गुरी उद्यमे इत्यस्योकारस्यात्वं वा स्याण्णमि प्रत्यये ॥ अस्यपगारं युध्यन्ते अस्यपगोरं वा । असिमुद्यम्येत्यर्थः ॥

( अध्रुवे स्वाङ्गे द्वितीयान्ते धातोः ) भ्रूविक्षेपं कथयति भ्रुवं विक्षेपम् । अध्रुवे किम् । शिर उत्क्षिप्य कथयति । येन विना न जीवनं तद ध्रुवम् ॥

( सुबोधिनी )—अध्रुवे स्वाङ्गे द्वितीयान्ते धातोः ॥ द्वितीयान्तादध्रुवस्वाङ्गोपपदाद्धातोर्णम् स्यात् ॥

( परिक्लिश्यमाने द्वितीयान्ते स्वांगे धातोः ) उरःप्रतिपेषं युध्यन्ते । कृत्स्नमुरः पीडयित्वेत्यर्थः । 'उरोविदारं प्रतिचस्करे नखैः' ध्रुवार्थमिदम् ॥

( सुबोधिनी )—परिक्लिश्यमाने द्वितीयान्ते स्वाङ्गे धातोः ॥ सर्वतो बाध्यमाने स्वाङ्गे द्वितीयान्ते उपपदे सति धातोर्णम् स्यात् ॥ पिष्लृ संचूर्णने । उरःप्रतिपेषम् ॥

( द्वितीयान्ते विशपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ) गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन संबन्धो व्याप्तिः । क्रियायाः पौनःपुन्यमासेवा । गेहानुप्रवेशमास्ते । गेहंगेहमनुप्रवेशम् । एवं गेहानुप्रपातम् । गेहानुप्रपादम् । गेहानुस्कन्दम् । असमासे गेहस्य णमन्तस्य च पर्यायेण द्वित्वम् । गेहंगेहमनुप्रवेशम् । गेहमनुप्रवेशमनुप्रवेशम् ॥

( सुबोधिनी )—द्वितीयान्ते विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ द्वितीयान्तोपपदेभ्यो विश्यादिभ्यो णमुल् स्याद्व्याप्तौ पौनःपुन्ये चार्थे गम्ये ॥ वीप्सायां पदं द्विरिति द्विः । क्रियासमभिहारे इति द्वित्वं तु न भवति समासेनैव वीप्सासमभिहारयोरुक्तत्वात् । यद्यपि पौनःपुन्ये णमुक्त एव तथापि द्वितीयान्तस्योपपदसंज्ञार्थमासेवायामिह पुनर्विधिः । समासे गेहानुप्रवेशम् । असमासे गेहंगेहमनुप्रवेशमिति च ॥

( क्रियान्तरेषु कालेषु द्वितीयान्तेषूपपदेषु क्रियाव्यवधाने वर्तमानयोरस्यतितृषोः ) द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासम् । द्व्यहतर्षम् । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते । अद्यपाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ॥

( सुबोधिनी )—क्रियान्तरेषु कालेषु द्वितीयान्तेषूपपदेषु क्रियाव्यवधाने वर्तमानयोरस्यतितृषोः ॥ क्रियामन्तरयंतिव्यवधानेनेति क्रियान्तरास्तेषु क्रियान्तरकालवाचिषु शब्देषु द्वितीयान्तेषूपपदेषु सत्सु क्रिया व्यवधाने वर्तमानाभ्यामसुक्षेपणे ञितृष् पिपासायामाभ्यां णमुल् स्यात् ॥

( नाम्नि द्वितीयान्ते आदिशिग्रहोः ) नामादेशमाचष्टे नामग्राहं कथयति ॥

( सुबोधिनी )—नाम्नि द्वितीयान्ते आदिशिग्रहोः ॥ द्वितीयान्तनामशब्दोपपदाभ्यामाङ्पूर्वकाभ्यां दिश अतिसर्जने ग्रह उपादाने आभ्यां णमुल् स्यात् ॥

( अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ वा ) अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य नीचैः कथनम् । उच्चैः प्रियस्य नीचैः कथनम् । उच्चैःकृत्य उच्चैःकृत्वा उच्चैःकारं वाऽप्रियमाचष्टे । नीचैःकृत्य नीचैःकृत्वा नीचैःकारं वा प्रियं ब्रूते ॥

( सुबोधिनी )—अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमौ वा ॥ अव्ययपूर्वपदात्करोतेः क्त्वाणमौ वा स्तोऽयथाभिप्रेताख्यानेऽर्थे ॥ यथाभिप्रेतं तथाख्यानमित्यर्थः । अप्रियस्य नीचैः कथनं यथाभिप्रेताख्यानं तद्विपरीतमयथाभिप्रेताख्यानमिति ॥

( तिर्यगुपपदे समाप्तौ कृञः क्त्वाणमौ वा ) तिर्यक्कृत्य गत इति तिर्यक्कृत्वा तिर्यक्कारम् । समाप्य गत इत्यर्थः । समाप्तौ किम् । तिर्यक्कृत्वा काष्ठं गतः ॥

( सुबोधिनी )—तिर्यगुपपदे समाप्तौ कृञः क्त्वाणमौ वा ॥ तिर्यक्छब्दोपपदात्करोतेः क्त्वाणमौ वा स्तः समाप्तौ गम्यमानायाम् ॥ समाप्तौ किम् । तिर्यक्कृत्वा काष्ठं गतः । अग्रतः स्थितं काष्ठं पार्श्वतः कृत्वा गत इत्यर्थः ॥

( स्वाङ्गे तस्प्रत्यये कृभ्वोः ) मुखतःकृत्य गतः । मुखतःकृत्वा । मुखतःकारम् । मुखतोभूय गत इति । मुखतोभूत्वा । मुखतोभावम् ॥

( सुबोधिनी )—स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ तस्प्रत्ययान्ते स्वाङ्गे उपपदे डुकृञ् करणे भू सत्तायामाभ्यां णम् स्यात् ॥ तस् प्रत्ययो यस्मात्तत् तस्प्रत्ययं तस्मिन् । तस्प्रत्यये किम् । मुखे तस्यतीति मुखतःकृत्वा गतः । तसु उपक्षये अस्मात् क्विपि कृते धातुत्वादिह अत्वसोः साविति दीर्घो न भवति ॥

( नाधार्थप्रत्ययान्ते च्व्यर्थे कृभ्वोः क्त्वाणमौ वा ) अनाना नानाकृत्य–नानाकृत्वा–नानाकारम् । विनाकृत्य–विनाकृत्वा–विनाकारम् । नानाभूय–नानाभूत्वा–नानाभावम् । अनेकद्रव्यमेकं कृत्वा एकधाकृत्य–एकधाकृत्वा–एकाधाकारम् । एकधाभूय–एकधाभूत्वा–एकधाभावम् । प्रत्ययग्रहणं किम् । हिरुक्कृत्वा । पृथग्भूत्वा ॥

( सुबोधिनी )—नाधार्थप्रत्ययान्ते च्व्यर्थे कृभ्वोः क्त्वाणमौ वा ॥ नाधार्थप्रत्ययान्ते च्व्यर्थे विषये उपपदे कृभूभ्यां क्त्वाणमौ वा स्तः ॥ विनञ्भ्यां नानाञाविति नानाञौ प्रत्ययौ । संख्यायाः प्रकारे धा इति धाप्रत्ययः । द्वित्रिभ्यामेधाधमुञौ चेति एधाधमुञाविति नाधार्थप्रत्ययाः । एवं द्वैधंकृत्येत्यादि ॥ प्रत्ययग्रहणं किम् । हिरुक् कृत्वा । पृथक् कृत्वा । 'हिरुङ् मध्ये विनार्थे च' इति रुद्रः ॥ 'हिरुगुक्तं च सामीप्ये' इत्यमरमाला ॥ 'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने' इत्यमरः ॥

( तूष्णींशब्दे भुवः क्त्वाणमौ ) तूष्णींभूय गतः । तूष्णींभूत्वा । तूष्णींभावम् ॥

( सुबोधिनी )– तूष्णींशब्दे भुवः क्त्वाणमौ ॥ तूष्णींशब्दे उपपदे भूधातोः क्त्वाणमौ स्तः ॥

**( अन्वक्छब्दे भुवः क्त्वाणमौ वा आनुकूल्ये गम्ये )** अन्वग्भूयास्ते–अन्वग्भूत्वा–अन्वग्भावम्। अग्रतः पार्श्वतः पृष्ठतो वानुकूलो भूत्वा आस्त इत्यर्थः॥ आनुकूल्ये किम् अन्वग्भूत्वा तिष्ठति पृष्ठतो भूत्वेत्यर्थः॥

( सुबोधिनी )–अन्वक्छब्दे भुवः क्त्वाणमौ वा ॥ अन्वक्छब्दे उपपदे भुवः क्त्वाणमौ वा स्तः ॥

**( वर्णात्कारः )** अकारः। इकारः। वकारः॥

( सुबोधिनी )–वर्णात्कारः ॥ वर्णनिर्देशे वाच्येऽक्षरात् कारप्रत्यः स्यात्॥ निर्देशोऽनुकरणम्। कारप्रत्ययमाह–बहुलग्रहणमत्र कर्तव्यम्। तेन क्वचिन्न ॥

( तत्त्वदी० )– **वर्णात्कार** इति ॥ प्रयोगस्थवर्णवाचिनः कारप्रत्ययः॥ अतः 'अः केशवे विरिञ्चे वा' इत्यादौ प्रयोगस्थवर्णप्रतिपादकत्वाभावात्कारप्रत्ययो नेति वासुदेवेनोक्तं तन्न 'अकारो वासुदेवः स्यात्' इत्यादौ हसस्वरसमुदायस्योच्चार्यमाणत्वात्कारप्रत्ययो न स्यात्। अतो वर्णनिर्देश इत्यनुवर्त्य वर्णमात्रानुकरण इत्यर्थे अकारस्योच्चारणार्थत्वाद्वर्णमात्रस्यैवानुकार्यत्वात्। लघुभाष्ये तु न एव नकार इत्यादौ समुदायात्कारप्रत्ययाभावेन करोतेरुच्चारणार्थत्वात् करणं कार इति व्युत्पत्त्यैव सिद्धेरेवमकारादिसिद्धौ वर्णात्कार इति वार्तिकं व्यर्थमित्युक्तम्। यत्तु कृष्णपण्डितेन अकारकरणं न सिद्ध्येत् करोतेः पौनरुक्त्यादित्येतदर्थं वार्तिकमित्युक्तम्। तत्रेदं वाच्यम्। अकारकरणमित्यत्र घञन्तकरोतेरुच्चारणार्थत्वेन पौनरुक्त्याभावात् ॥

**( रादिफो वा )** रेफः। रकारः॥

( सुबोधिनी )–रादिफो वा ॥ रकाराक्षराद्वा इफप्रत्ययः स्यात् ॥

**लोकाच्छेषस्य सिद्धिः ॥ यथा मातरादयः ॥**

**इति श्रीरामाश्रमविरचितायां सिद्धान्तचन्द्रिकायामुत्तरार्धं समाप्तम् ॥**

( सुबोधिनी )–लोकाच्छेषस्य सिद्धिः ॥ उक्तादन्यः शेषः अत्रानुक्तस्य सिद्धिः साधनं लोकादन्यव्याकरणाज्ज्ञातव्यम्। यथा माता च पिता चेति मातरपितरौ मातरेति निपातनादिति ॥

श्रीमत्पाठकधुर्यभक्तिविनया नन्दन्ति सद्विद्यया
नानाशास्त्रविचारजातपरमानन्दाः स्वभावोज्ज्वलाः ॥
संवेगादिगुणैर्वशीकृतजना विख्यातकीर्तिप्रभा–
स्तेषामस्ति विचक्षणो विनयवान् शिष्यः सदानन्दकः ॥ १ ॥

निधिनन्दार्वभूवर्षे १७९९ सदानन्दः सुधीमुदे ॥
सिद्धान्तचन्द्रिकावृत्तिं कृदन्ते कृतवानृजुम् ॥ २ ॥

इति श्रीसिद्धान्तचन्द्रिकाया व्याख्या सुबोधिनीसमाख्या सदानन्दी समाप्ता ॥

( तत्त्वदी० )—धातूनामानन्त्यात्तेभ्यश्चोत्पद्यमानानां कृतामप्यानन्त्यमतो न सर्वशः शब्दा व्युत्पादयितुं शक्या इत्याह—**लोकादिति** ॥ शेषस्य उक्तादन्यस्य शब्दस्य सिद्धिर्निष्पत्तिर्लोकादनादिवृद्धशब्दप्रयोगाद्व्याकरणान्तराच्च ज्ञेयेत्यर्थः ॥ सिद्धिशब्दो मङ्गलवाचक इत्यन्ते प्रयुक्तः । आदिमध्यावसानेषु मङ्गलमाचरणीयमित्युक्तेः । समंगलानि शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्यपुरुषकाराणि भवन्त्यध्येतारश्चास्य वर्द्धन्ते एवं चैतदध्येतॄणां कार्यसीद्धिः स्यादिति ध्वनितम् ॥

लोकेशाकरसंज्ञेन श्रीक्षेमकरसूनुना । मुदे भूयादुमाशंभ्वोर्विहिता तत्त्वदीपिका ॥ १ ॥
चन्द्रवेदहयभूमिसंयुते १७४१ वत्सरे नभसि मासि शोभने ।
शुक्लपक्षदशमीतिथावियं दीपिका बुधप्रदीपिका कृता ॥ २ ॥
श्रीचण्डिकायाश्चरणारविन्दप्रसादतो यल्लघुदीपिकाभूत् ।
मनीषयापीह भवत्यमुष्या अध्येतुरध्यापनहेतुराशु ॥ ३ ॥

इति श्रीमद्रामकरपौत्रश्रीक्षेमकरसूनुलोकेशकरविरचिता सिद्धान्तचन्द्रिकाव्याख्या तत्त्वदीपिका समाप्ता ॥



पुस्तक मिलनेका ठिकाना—
**खेमराज श्रीकृष्णदास,**
"श्रीवेङ्कटेश्वर" स्टीम्–प्रेसाध्यक्ष–मुंबई.